श्रीनारायणपण्डिताचार्य्यविरचितं

# सङ्ग्रहरामायणम्

[श्रीविश्वपतितीर्थकृतया भावार्थदीपिकया,
आचार्यगोविन्दकृतया सङ्ग्रहचन्द्रिकया च भूषितम्]

[प्रथमो भागः]

संशोधकः-सम्पादकः
डा. बन्नञ्जे गोविन्दाचार्यः

प्रकाशनम्
श्रीपेजावराधोक्षजमठः, जगद्गुरुश्रीमध्वाचार्यमहासंस्थानम्
उडुपी
२०१५

**SANGRAHA-RAMAYAṆAM [Samskṛtam], First part,**
**by Śrī Nārāyaṇa Paṇḍitācārya, with commentaries: Bhāvārtha dipikā of Viśvapati Tīthra and Saṇgraha cahndrikā of Dr. Bannañje Govindācārya.**

Critically Edited by : **Dr. Bannañje Govindācārya**
**Vidyāvācaspati, Vidyāratnākara, Padmashri awardee.**

Published by : **Śrī Pejāvara Adhokṣaja Maṭha**
**Jagadguru Śrī Madhwācārya Mahā Samsthāna**
**Udupi**
**Karnātaka, India**
**Mob : 9845468508**



First Edition : **2015**, (**Copies** :**500**)

Pages : **72+760**

Price : **₹1500 (complete set)**

Typeset : **Kaddi S. Badarinarayanachar**
Poornaprajna Vidyapeetha
E-Mail : bnkaddi@gmail.com

Printed at **Sri Anirudh Creations**
#144, 6th main, Gururaja Layout
Behind Vidyapeetha, Bengaluru-560028
Cell: 9880077876
E-Mail : srikanth.nsil@gmail.com:



प्रणतवान् प्राणिनां प्राणभूतं
प्रणतिभिः प्रीणये पूर्णबोधम् ॥

**H.H. Sri Vishveshatirtha Swamiji**
**Sri Pejavara Adhokshaja Matha**
Jagadguru Sri Madhwacharya Maha Samsthana
Udupi-576101, Karnataka
Mob : 98454 68508

श्रीश्रीविश्वेशतीर्थश्रीपादाः
श्रीपेजावराधोक्षजमठः
जगद्गुरुश्रीमध्वाचार्यमहासंस्थानम्
उडुपि-५७६१०१, कर्णाटक

# आशीर्वचनम्

जगद्गुरुः आचार्यमध्वगुरुवर्यः महाभारतस्य अद्भुतं संशोधनात्मकं महाभारत-तात्पर्यनिर्णयाभिधानं महोन्नतं ग्रन्थं व्यरीरचत् । विभिन्नप्रदेशगतान् मूलग्रन्थान् परिशील्य यथाह भगवान् व्यासः तादृशमधिकृतं महाभारतमन्विष्य तदनुसारेण महाभारतनिरूपितं वास्तवमितिहासं महाभारततात्पर्यग्रन्थरूपेण न्यरूरुपत् । संशोधनक्षेत्रे आचार्यमध्वप्रदत्तमिदमपूर्वमुपायनमिति निस्सङ्कोचं सङ्कथयामः । एवं भगवदवतारस्य श्रीरामस्य तथा श्रीकृष्णस्य विविधपुराणेतिहासेषु समीरितानि चरितानि परिशील्य श्रीरामकृष्णयोः वास्तवचरित्रचित्रणमप्यत्र ग्रन्थे समावेशितवान् श्रीमदाचार्यः ।

श्रीमदाचार्यवर्यात्यन्तप्रियान्तेवासिनः पण्डिताचार्यत्रिविक्रममहोदयस्य प्रियपुत्रः मध्व-विजयाभिधसुमधुरसुमहितमन्त्रसमानग्रन्थरचयिता पण्डिताचार्यः नारायणमहाभागः तात्पर्यनिर्णयग्रन्थमनुसृत्य सङ्ग्रहरामायणाभिधानं काव्यमिदं निबबन्ध । श्रीमदाचार्यकृतमध्वरामायणस्य विस्तरणं वाल्मीकिरामायणस्य सङ्ग्रहणं च विधायोभयोरपूर्वसमायोजनं समावेश्य विरचितं रुचिरललितं मधुररसधारास्यन्दि काव्यमिदम् । अस्य च हृद्यपद्यशैली सुन्दरपदबन्धुरता समावर्जयति समेषामपि मानसम् । अस्मत्पूर्वाचार्यश्रीविश्वपतितीर्थगुरुवरेण अस्य सरलसुन्दरव्याख्याऽपि समारचिता । सङ्ग्रहरामायणमध्वविजयादिबहुग्रन्थव्याख्यानेन विश्वपतितीर्थगुरुवर्यः सज्जनानां महान्तमुपकारं व्यतनोत् । तत्रतत्र स्खालित्यमप्यस्तीति पण्डितः बन्नञ्जे गोविन्दाचार्यः प्रतिपादयति । तस्य चर्चाऽत्र न मया विधीयते । तस्य विमर्शं

समयान्तरे वितनुमः । अस्माकं विशेषाभिमानभाजनीभूतः संशोधन-लेखन-प्रवचनादिष्वप्रतिमप्रतिभाशाली निरन्तरं ज्ञानसेवानिरतः आचार्यबन्नञ्जे गोविन्दमहाशयः सङ्ग्रहरामायणसंशोधनेन साकं तस्य नूतनां व्याख्यामपि विरचय्य विशेषतः मध्वमाधवसेवामतनोदिति तं सानन्दमभिनन्दामः ।

इतः पूर्वमप्यनेकैः सङ्ग्रहरामायणप्रकाशनं व्यधायि । समीचीनमूलकोशालाभेन तत्र केचन दोषा अपि सम्भवेयुः । अत्र मयाऽधिकचर्चा न विधीयते । एतादृशप्रकाशनैः ग्रन्थपरिरक्षणं कृतमिति तानप्यभिनन्दामः । सर्वथा शुद्धपाठसङ्ग्रहे आचार्य-गोविन्दपरिश्रमं तदीयसेवां च मुक्तकण्ठं प्रशंसामहे । तदीयज्ञानसेवा निरन्तरं निरन्तरायं प्रचलत्विति भगवन्तं सम्प्रार्थयामहे ।

एतान्मुद्रणकार्ये विशेषसहकारिणं अस्मात्प्रियशिष्यं कड्डीबदरीनारायणाचार्यम्, अस्मत्पियशिष्यान् विजयसिंह-कृष्णराज-हयवदनानपि तथा मुद्रणालयाध्यक्षं कल्याणिश्रीकान्तमपि भगवाननुगृह्णातु ॥

इत्यनेक नारायणस्मृतयः

श्रीश्रीविश्वेशतीर्थश्रीपादाः

# विषयानुक्रमणिका

## बालकाण्डम्

**पञ्चमः सर्गः** रामलक्ष्मणाभ्यां ब्राह्माद्यस्त्रदानम् । सिद्धाश्रमगमनम् । अत्र वामनावतार-कथनम् । विश्वामित्रयज्ञारम्भः । मारीचद्रावणम् । सुबाह्वादीनां संहारः । विदेहगमनम् । गङ्गावतरणेतिहासः ॥

**षष्ठः सर्गः** विशालराजचरितम् । वैशाल्यां सुमतिना सत्कारः । अहल्यावृत्तान्तः । अहल्याशापमोचनम् । जनकस्य यज्ञवाटं प्रति गमनम् । जनकपृष्टेन विश्वामित्रेण रामलक्ष्मणयोः परिचायनम् । शतानन्देन विश्वामित्रप्रशंसा ॥

**सप्तमः सर्गः** यागार्थं भूकर्षणे सीताप्राप्तिकथनम् । शिवधनुःप्राप्तिकथनम् । रामेण धनुर्भङ्गः । सीतया रामांसे मालार्पणम् ॥

**अष्टमः सर्गः** दूतमुखेन वार्तां श्रुत्वा दशरथस्याऽगमनम् । तत्परेद्युः कुशध्वजानयनम् । वर-वधूवंशवर्णनम् । नान्दीश्राद्धम् । भरतमातुलस्य युधाजित आगमनम् । चतुर्णां रघुकुमाराणां विवाहः । विश्वामित्रनिर्गमनम् । जनकेन परिबर्हदानम् । गृहेगृहे रामाभिनन्दनम् । दशरथेन स्नुषाभिः सह स्वपुरप्रस्थानम् । परशुरामागमनम् । रामेण वैष्णवधनुरारोपणम् । अतुलसंहारः । राज्ञः पुरीप्रवेशः । अयोध्यायां सीतारामयो रमणम् ॥

# अयोद्ध्याकाण्डम्

**प्रथमः सर्गः** रामाभिषेकसन्नाहः । प्रजाभिनन्दनम् ॥

**द्वितीयः सर्गः** अभिषेकसम्भारसम्पादनम् । रामाय राज्ञा स्वाशयनिवेदनम् । रामाभ्यनुज्ञा । अमङ्गलनिरासाय व्रतदीक्षार्थमादेशः । रामेणोपोषणपूर्वं दर्भशय्याशयनम् ॥

**तृतीयः सर्गः** मन्थराया अभिषेकवार्ताधिगमः । तया कैकेयीचित्तचालनम् । वरद्वयवरणार्थं चोदनम् । कैकेय्या क्रोधागारे शयनम् । दशरथेन तस्याः सान्त्वनम् । तया रामवनगमनार्थं भरताभिषेकार्थं च वरद्वययाचनम् । दशरथमोहः । वराग्रहत्यागार्थ-मभ्यर्थना । कैकेय्या हठः । एवं विवदमानयोस्तयोः जाता प्रभाता निशा ॥

**द्वादशः सर्गः** तैलद्रोणीगतं पितुर्देहं दृष्ट्वा भरतशोकः।अन्त्यसंस्कारः। रामानयनार्थं सपौरस्य भरतस्य प्रस्थानम्। भरतस्य शुद्धभावं विज्ञाय गुहेन गङ्गातारणम्। भरद्वाजाश्रमे सर्वेषां सत्कारः। यमुनां तीर्त्वा चित्रकूटगमनम्। रामसमागमः। भरतेन पितृमरणनिवेदनम्। रामेण जलाञ्जलिदानम्। पुरं प्रत्यागमनार्थं सपौरेण भरतेन मातृभिश्चानुरोधः। चतुर्दशवत्सरानन्तरमागमिष्यामीति रामेण दृढवचनम्। पादुकाप्रदानार्थं वसिष्ठनिवेदनम्। पादुकां सिंहासने निधाय भरतेन नन्दिग्रामे वासः। चित्रकूटे रामेण काकनेत्रनिग्रहः॥

# अरण्यकाण्डम्

**प्रथमः सर्गः** विश्रवसो जननम्। कुबेरजननम्। विद्युत्केशसन्ततिः। तया लोकपीडा। विष्णुना मालिवधः। सुमालिपुत्र्यां कैकस्यां विश्रवसः सकाशाद् रावणादिजननम्। रावणस्य ब्रह्मणाऽवध्यत्ववरदानम्। विभीषणेन भगवद्भक्तिवरणम्। कुम्भकर्णेन निद्रावरणम्। रावणेन लङ्काक्रमणम्। तस्य मण्डोदर्यां मेघनादजननम्। कुम्भकर्णस्य विद्युज्जिह्वया विवाहः। विभीषणस्य सरमया। रावणस्य वेदवतीशापः। अनरण्यशापः। रावणदिग्विजयः। कार्तवीर्यार्जुनेन रावणबन्धनम्। बलिना तत्पराजयः। बलिगृहे हरिणा तन्निरासः। रावणेन त्रिलोकसुन्दरीणामपहारः। तस्मिन् रामस्य कोपः। तदर्थं दण्डकारण्यगमनम्॥

**द्वितीयः सर्गः** रामेणात्रेराश्रमं प्रति गमनम्। सीतानसूयासंवादः। दण्डकारण्यप्रवेशः। शरभङ्गाश्रमगमनम्। शरभङ्गमुक्तिः। विराधमोचनम्। राक्षसार्दितानां मुनीनां शरणागतिः। जानकीरामयोर्लीलाविवादः। विविधाश्रमेषु वासः। अगस्त्याश्रमगमनम्। तेन वैष्णवकोदण्डादिसमर्पणम्। पञ्चवट्यां जटायुदर्शनम्। पर्णशालानिर्माणम्॥

**तृतीयः सर्गः** शूर्पणखामुखभङ्गः। चतुर्दशराक्षसानां रामेण हननम्। ततश्चतुर्दशसहस्राणां हननम्। दूषणवधः॥

# किष्किन्धाकाण्डम्

**षष्ठः सर्गः** हनुमता सुग्रीवबोधनम् । रामप्रेषितेन लक्ष्मणेन किष्किन्धागमनम् । तारया सौमित्रिसान्त्वनम् । कपीनामानयनम् । सुग्रीवेण रामप्रपदनम् ॥

**सप्तमः सर्गः** रामसन्निधौ कपीनां समवायः । चतुर्दिक्षु कपीनां प्रेषणम् । दक्षिणां दिशं प्रति हनुमत्प्रेषणम् । रामेण हनुमद्धस्ते सीताप्रत्ययायाङ्गुलीयकदानम् । इतरदिग्गतानां मासान्ते पुनरागमनम् । अङ्गदेन मारीचपुत्रहननम् । हनुमत्पुरोगानां मयगुहाप्रवेशः । स्वयम्प्रभया तेषां सत्कारः । तत्सहायेन गुहाया निर्गमनम् । अङ्गदनैराश्यम् । मारुतिना प्रबोधनम् ॥

**अष्टमः सर्गः** दक्षिणोदधितीरे कपिभिः प्रायोपवेशनिर्णयः । तै रामकथावर्णनम् । जटायुषो मरणं श्रुत्वा सम्पातिप्रश्नः । कपिभिः स्ववृत्तान्तकथनम् । जातपक्षेण सम्पातिना सीतास्थितिकथनम् । वानरैः समुद्रलङ्घने स्वस्वसामर्थ्यप्रकटनम् । जाम्बवता हनुमति लङ्घनार्थं विज्ञापनम् । हनुमता तदङ्गीकारः ॥



# सङ्ग्रहरामायणपीठिका....

अथ कलावस्मिन् भीमावतारसमाप्त्यनन्तरं चतुर्षु सहस्रेषु त्रिषु च शतेषु संवत्सराणामतिगतेषु, पञ्चत्रिंशे शतके, भगवान् श्रीमध्वोऽवततार, तौळवमण्डले, श्रीभार्गवनिर्मिततीर्थचतुष्टयपरिगते दुर्गाधिष्ठित-विमानगिरिपरिशोभिते पवित्रे पाजकक्षेत्रे । दिष्ट्या तस्मिन्नेव पुण्यतमेऽनेहसि, लिकुचान्वयजातः, अत एव **'ಪೆಜತ್ತಾಯ'**पदोपाह्वस्तौळवविपश्चित्, पवमानोपसेवनार्थमागतस्त्रिनयनइव त्रिविक्रमपण्डितः परिमण्डितपण्डितमण्डलः सम्प्रति **'कासरगोडु'** इति व्यवह्रियमाणे **'कबेनाडु'**विषये तौळवमण्डलाधिपतेः श्रीजयसिंहभूपतेरास्थानविद्वान् राजकविरास ।

स किल सप्ताष्टानि (सप्त वा अष्टौ वा) दिनानि श्रीमध्वेन सह वादं कृत्वा, उन्मीलितान्तर्नयनः स्वपूर्वतनैरनुसृतं मायावादं विहाय श्रीमध्वान्तेवासी भूत्वा तत्ववाददीक्षां बबन्ध । तस्य त्रयः पुत्राः । तृतीयोऽस्य सङ्ग्रहरामायणाख्यस्य पुराणकाव्यस्य प्रबन्धा नारायणपण्डितः । स्वजनकइव कविषु कविः, वेदान्तिषु वेदान्ती । समग्रः कुडुम्बोऽप्याचार्यमध्वानुग्रहपात्रम् । पण्डितः संसारः । तदनुग्रहस्यैव स्वादु फलमिदं सङ्ग्रहरामायणम् ।

श्रूयते भगवता श्रीवाजिवदनेन गदितं मूलरामायणमिति महारामायणमिति शतकोटिग्रन्थात्मकमासीदिति–**'मूलरामायणं चैव शतकोटिप्रविस्तरम्'** इति । सम्प्रत्ययं ग्रन्थो नोपलब्धः । प्रायो नष्ट एवापुनर्दर्शनाय । अथाप्यस्य प्रबन्धुः पिता त्रिविक्रमपण्डिताचार्यः परिचितमूलरामायणस्तत्र विहरन्नासेति चास्मादेव ग्रन्थाद् विज्ञायते–**'सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे । विहरन्तो महीयांसः प्रीयन्तां गुरवो मम'** (सं.रा.१.१.६) इति । अत्र गुरव इति स्वपितृनिर्देश इति सर्वेषामैककण्ठ्यम् । तेनोह्येत यदयमपि प्रबन्धा मूलरामायणार्णवे कृतस्नान इति ।

मूलरामायणस्य सङ्ग्रहो वाल्मीकिरामायणम् । उभयोः सारसङ्ग्रहो श्रीमहाभारततात्पर्यनिर्णयगतं मध्वरामायणम् । वाल्मीकिरामायणस्य मध्वरामायणस्य च सेतुबन्धः श्रीनारायणपण्डिताचार्यकृतमिदं सङ्ग्रहरामायणं नाम । मूलरामायणस्य वाल्मीकिरामायणस्य च सङ्क्षेपोऽयम् । सङ्ग्रहेण रामायणमिति सङ्ग्रहरामायणम् । सम्यक् गृह्यते अवबुद्ध्यते रामायणं मध्वरामायणं चानेनेति च सङ्ग्रहरामायणम् ।

तदिदं कथाविस्तराय वाल्मीकिरामायणमनुकरोति । वाल्मीकिरामायणेऽप्यस्फुटे चरितांशे प्रायो मूलरामायणम् । सन्दिग्धेषु च स्थलेषु येषु रामायणं महाभारतं पुराणानि च परस्परविरुद्धानीव भासन्ते तत्र निर्णयाय च मध्वरामायणम् ।

आचार्यमध्वेन किल भारतकथानिर्णयाय महाभारततात्पर्यनिर्णयः प्राणायि । तत्रैव च सङ्क्षेपतो रामायणकथा च निरणायि । तद्विस्तरोऽयं रामायणतात्पर्यनिर्णयः सङ्ग्रहरामायणं नाम ।

श्रूयते किंवदन्ती– दृष्ट्वा चेदं पौराणिकं महाकाव्यं स्वयमाचार्यमध्वः परं सन्तुतोषेति, सन्तुष्य च 'अहो सर्षपे कूष्माण्डप्रवेशोऽयम्' इति प्रशशंसेति । तेनाऽचार्यमध्वः प्रबन्धमिममवलोक्य प्रीत्या प्रबन्धारमनुजग्राह स्वयमाशीर्वचनैरिति ज्ञायते । तदिदमस्य ग्रन्थस्य प्रामाण्यं द्रढयति, प्रबन्धुश्चाऽप्ततमत्वम् ।

श्रीविश्वपतितीर्थस्तु आचार्यमध्वाभिमत्यैव पण्डिताचार्यो ग्रन्थमिमं प्रणिनायेत्याह–**'श्रीमदानन्दतीर्थानामभिमत्या वाल्मीकिरामायणस्य तात्पर्यार्थं वक्तुं प्रवृत्तो नारायणपण्डिताचार्यः'** इति, **'वाल्मीकेर्गौः–'**(१.१.७) इति श्लोकव्याख्यानावतरणिकायाम् ।

केचिदिदं नारायणपण्डिताचार्यस्य प्रथमा कृतिरित्यभिप्रयन्ति । तथाहि वैश्वनाथिर्नारायणाचार्यः शिवस्तुतिटीकायाम्–

> **'श्रीरामायण-पारिजातहरण-श्रीमध्वचारित्रिकाऽ-**
> **ख्यानं काव्यगणं विधाय विदधे दिव्यां शिवस्य स्तुतिम्'** इति ।

एतदनुसारेण सङ्ग्रहरामायणं प्रथमं व्यरीरचत् । ततः पारिजातहरणं नाम यमककाव्यम् । ततः श्रीमध्वविजयाभिधं श्रीमध्वचारित्रिकाख्यानम् । ततः मणिमञ्जरीशुभोदयप्रमुखं रामगीत्यादिकं यमकस्तोत्रात्मकं च खण्डकाव्यगणं विधायान्ते शिवस्तुतिं चकार । शिवस्तुत्या ग्रन्थरचनोपसंहारमनिच्छन् सर्वान्ते च श्रीनरसिंहस्तुतिं निबबन्धेति भाति ।

स्यान्नाम । शिवस्तुतिनरसिंहस्तुत्योरनुपमा प्रौढा शैली प्रबन्धुरपि प्रौढं वयः सूचयतीव । एवं सङ्ग्रह-रामायणेऽपाणिनीयानां छान्दसानां प्रयोगाणां प्राचुर्यं प्रबन्धुराचार्यप्रयोगानुकरणोत्साहं प्रदर्शयत् तस्य तरुणतां विवृणोतीव । एवं महाभारततात्पर्यनिर्णयेन सञ्जातस्फूर्तिः सङ्ग्रहरामायणं व्यरचयत् । महाभारततात्पर्येण (यमकभारतमिति प्रथितेन) प्राप्तस्फूर्तिः पारिजातहरणं व्यरचयत् । ततश्च यत्कृतिभ्यां जातस्फुरणः स्वयमेव प्रबन्धद्वयं प्रणिनाय, यत्प्रवचनमाधुरीमास्वादमास्वादं गलितगर्वः स्वतातः परम्परागतमद्वैतसम्प्रदायं विहाय मध्वस्यान्तेवासी बभूव, बभूव च तत्ववादबद्धदीक्षः, तस्य श्रीमध्वस्य जीवनवृत्तमद्भुतं गाढमभ्यस्य श्रीमध्वचरितं प्रबबन्धेत्यतिसुन्दरम् ।

एतया चापूर्वतमया गुरुसपर्यया परिचर्यया च पितेव पुत्रोऽपि भगवत्पादपरमानुग्रहभाजनं बभूवेति युक्त-मुत्पश्यामः । प्रायः सन्न्यासिशिष्येभ्योऽप्यधिकतरा सेवा पुनरेताभ्यां पितापुत्राभ्यां कृता ।

भगवत्पादकृतस्य श्रीमद्ब्रह्मसूत्रभाष्यस्यानुपमा व्याख्या तत्वप्रदीपाख्या श्रीत्रिविक्रमपण्डिताचार्यरचिता भाति माध्ववाङ्मयस्य कोटीरतामाटीकमाना । अथच श्रीब्रह्मसूत्रानुव्याख्यानस्य टीका नयचन्द्रिका, श्रीविष्णुतत्वनिर्णयस्य टीका तत्वमञ्जरी चेति द्वे कृतिरत्ने तत्ववादकर्णपूरायिते राराज्येते तत्तनयकृते । अनुव्याख्यानसम्बन्धदीपिका न्यायविवरणसम्बन्धदीपिका च केयूरायिते शङ्करपण्डिताचार्यकृते । एवं सर्वशास्त्रार्थसङ्ग्रहाख्यस्य सङ्ग्रहभाष्यस्य टीका नारायणपण्डिताचार्यतनयेन वामनपण्डिताचार्येण रचिता आनन्दमाला ग्रैवेयकायते, या पुनरध्यात्मचिन्तकानामानन्दमालैव । तदेवं गतं सूत्रप्रस्थानम् ।

अथचोपनिषत्प्रस्थाने षण्णामुपनिषद्भाष्याणां वामनपण्डिताचार्यकृताष्टीका वैदिकवाङ्मयस्यैवापूर्वतमा उपदाः । षड्यष्टिः कण्ठे मुक्तावलीव, पारिहार्याणीव करकमलयोः । भगवत्पादानुग्रहलब्धमपूर्वं वेदार्थ-परिज्ञानं लिकुचकुलजानाम् । तदेवं गतमुपनिषत्प्रस्थानम् ।

यद्यपि षण्णामेवोपनिषद्भाष्याणां टीकास्त्रैविक्रमार्यदासेन वामनपण्डितेन रचिताः सम्प्रत्युपलब्धाः । न दशानामपि । सम्भाव्यते पितामहस्य पितुश्चाऽज्ञया दशानामप्युपनिषद्भाष्याणां टीकास्तेन विरचिताः स्युरिति । किन्तु षडेव साम्प्रतमुपलभ्यन्ते । तावतैव सन्तोष्टव्यम्– यदाचार्याभिमतोऽपूर्वो वैदिकः पन्था-स्तेनाऽविष्कृत इति । मन्यामहे यदयमपि प्राय आचार्यमुखादेव बाल्ये श्रुतोपनिषत्कः स्यादिति । यदि तदीयमुपनिषद्व्याख्यानं नोपालप्स्यत दुष्करमेव तर्ह्यभविष्यदाचार्यमध्वाभिमतस्य वेदान्तरङ्गस्य चिन्तनम् । अधमर्णा वयं तत्रभवतस्त्रैविक्रमार्यदासस्य वामनपण्डिताचार्यस्य ।

प्रायः श्रीपद्मनाभतीर्थनरहरितीर्थाभ्यां स्फुटं विवृतचरमिति न लिकुचवंशीयैः गीताप्रस्थानविवरणाय प्रयतितमिति भाति । तदयं लिकुचवंशीयानां कृतिसङ्ग्रहः–

## त्रिविक्रमपण्डिताचार्यस्य

१. उषाहरणम् (कौमार एव रचितं महाकाव्यम्)

२. तत्वप्रदीपः (अपूर्वा चानुत्तरा च ब्रह्मसूत्रभाष्यटीका)

३. विष्णुस्तुतिः (अपूर्वमाशुकाव्यम्)

४. वायुस्तुतिः ('' '')

५. पूर्णबोधस्तोत्रम् (चतुर्दशस्तोत्रेषु अष्टमं स्तोत्रम्)

६. मध्वाष्टकम्

पूर्णबोधस्तोत्रं कल्याणीदेवीरचितमिति केचित् । भगवती भ्रान्तिरेवेयेम् । **'प्रणतवान् प्राणिनां प्राणभूतम्'** इति ध्रुवपदे पुल्लिङ्गेनाऽत्मनो निर्देशात् । श्रीविश्वपतितीर्थः स्तोत्रकृतो नाम न निर्दिदेश । अथापि **'कविवर्याः'** इति सबहुमानं व्याहरति । तेन कविकुलतिलकस्य त्रिविक्रमपण्डितस्य कृतिरियमिति निर्धार्येत ।

नरसिंहस्तुतिरप्येतत्कृतेति बहवो व्याख्यातारः । अथापि बहुप्रतनकोशानुसारेण तौळवदेशसम्प्रदायतश्च नारायणपण्डिताचार्यस्येयं कृतिरिति विज्ञायते ।

## शङ्करपण्डिताचार्यस्य

१. अनुव्याख्यानटीका सम्बन्धदीपिका ।

२. अनुव्याख्यानन्यायमाला-न्यायविवरण-सम्बन्धदीपिका ।

द्वौ शङ्करार्यौ लिकुचवंशोद्भवौ श्रीमध्वशिष्यौ श्रूयेते । तयोः कतरोऽनयोर्ग्रन्थयोः प्रणेतेति न स्फुटम् । तयोरेकः त्रिविक्रमपण्डितस्यानुजः श्रीमध्वगुरोर्ग्रन्थपाल आसीत् । प्रायः स एवानयोः प्रणेता स्यादिति सम्भाव्यते ।

अपूर्वा चेयं सम्बन्धदीपिकाख्या व्याख्यासरणिः । अनुव्याख्यानसम्बन्धदीपिकायां पूर्वोत्तरश्लोकयोरवतरणिकया केवलं सम्बन्धं दीपयति । न श्लोकान् व्याख्याति । एवमपरो ग्रन्थः केवलमनुव्याख्यानन्यायमालाया

न्यायविवरणस्य च परस्परं सम्बन्धं दीपयित्वा विरमति । विदुषां रसायनमिदं व्याख्यानं स्वप्रकाशनावकाशं निरीक्षमाणमास्ते ।

## नारायणपण्डिताचार्यस्य

१. सङ्ग्रहरामायणम् (पौराणिकं महाकाव्यम्)

२. श्रीमध्वविजयः (चारित्रिकं महाकाव्यम्, सुमध्वविजय इति वदन्तो नामभ्रान्ताः ।)

३. भावदीपः (श्रीमध्वविजयस्यापूर्वा लघुटिप्पणी, यां भावप्रकाशिकेत्यप्याहुः)

४. प्रमेयनवमालिका (श्रीमध्वविजयकथासङ्ग्रहः । अणुमध्वविजय इत्यर्वाचीनाः । दिष्ट्या अणुसुमध्वविजय इति नाम न कृतं तैः ।)

५. पारिजातहरणम् (यमककाव्यम् । सकृन्मुद्रितम्, नातिशुद्धम् ।)

६. नयचन्द्रिका (अनुव्याख्यानटीका)

७. तत्वमञ्जरी (विष्णुतत्वनिर्णयटीका)

८. मणिमञ्जरी (विवादपदं चारित्रिकं खण्डकाव्यम्)

९. शुभोदयम् (पौराणिकं खण्डकाव्यम्)

१०. कृष्णमाला (कृष्णचरितानुक्रमः)

११. योगदीपिका (अनुष्ठानपद्धतिः)

१२. शिवस्तुतिः (प्रबुद्धं स्तोत्रकाव्यम्)

१३. नरसिंहस्तुतिः( ’’ ’’ )

१४. दाशरथ्यष्टकम् (चतुर्दशस्तोत्रेषु एकादशम्)

१५. रामगीत्यष्टकम् ( ’’ द्वादशम्)

क्वचित् प्राचीनकोशेषु एतदष्टकद्वयं विना नामनिर्देशं ‘पूर्वसूरिकृतम्’ इतीयदेव पठ्यते । बहुषु कोशेषु नारायणपण्डिताचार्यकृतमिति ।

## तदीयत्वेन सम्भाविताः कृतयः

१६. ध्यानमाला (ध्यानप्रक्रिया)

१७. पूर्णबोधस्तुतिः (यमकस्तोत्रम्)

१८. गोविन्दस्तुतिः ( ’’ ’’)

अन्यानि च बहूनि यमकपद्यानि ताळपत्रकोशेषु दृश्यन्ते– तत्रतत्र पत्रपूरणार्थं लिखितानि । शैलीपरिशीलनेन तान्यपि नारायणपण्डिताचार्यकृतानि स्युरिति भाति ।

ऐतिह्यविदो वदन्ति– यमकभारतमिति प्रथितस्य महाभारततात्पर्यस्यापि व्याख्या नारायणपण्डिताचार्यकृताऽऽसीदिति । स्यादपि । स्वयं यमककाव्यकर्ता यमकप्रियः कविर्भगवत्पादकृतं यमककाव्यं व्याचख्याविति सुश्लिष्टम् । तेन विश्वसनीयेयं किंवदन्तीति भाति । तथाऽपि नैतावत्पर्यन्तमेकाऽपि तस्य हस्तलिखिता प्रतिकृतिर्दृष्टिपथमापपात ।

सुदिष्टमेतद् यत् स्वयं भगवत्पादमुखाच्छ्रुतयमकार्थस्य श्रीनरहरितीर्थस्य व्याख्या श्रीकृष्णप्रकाशिका सम्प्रति समुपलब्धा । तेन विश्वविस्मयस्य यमककाव्यस्य भगवत्पादाभिमता अपूर्वा अर्थाः सुरक्षिता अधुनाऽपि नः सुशक्यावगमा बभूवुः । अपव्याख्यानजम्बालजटिले अध्ययनपथकान्तारे पुनरियमेका मार्गदर्शिनी दीपाटिकेव दीप्यते । अथापि **‘देवानां पतयो नित्यं नो मतं यस्य जानते’** इति पद्ये कं बन्धविशेषं निबबन्धाऽऽचार्य इत्यस्फुटमेव । यदि नारायणपण्डिताचार्यस्य व्याख्यानमुपालप्स्यत नूनं स्फुटमभविष्यत् कोऽयमपूर्वो बन्ध इति ।

अन्ये त्वाहुः– मिथ्यात्वानुमानखण्डनस्य टीका पद्यमयी नारायणपण्डिताचार्यकृता श्रीपेजावरमठीयग्रन्थालये समुपलब्धेति । अदृष्टमूलकोशानामज्ञाततौळवलिपीनां भ्रमविलसितमेतत् ।

पेजावरमठीयग्रन्थालये समुपलब्धेति तथ्यम् । नारायणपण्डिताचार्यकृतिरिति न तथ्यम् । तस्याष्टीकाया रचयिता ग्रन्थादौ पद्मनाभतीर्थं प्रणमति । त्रिविक्रमपण्डिताचार्यस्योल्लेखोऽपि न दृश्यते । नायं लिकुचवंशीयानां सम्प्रदायः । तेन सा प्रतनाऽपि न लिकुचकुलजानां कृतिरिति निश्चीयेत । शैली च न लिकुचकविसंवादिनी । प्रायः श्रीपद्मनाभतीर्थस्यान्तेवासिष्वन्यतमेन रचिता स्यात् ।

कृष्णामृतमहार्णवटीकाऽपि नारायणपण्डिताचार्यकृताऽऽसीदिति श्रूयते किंवदन्ती । स्यात् तथ्यम्, नवा स्यात् । अनुपलब्धेर्न किमपि निर्णेतुं शक्यम् ।

अन्ये च केचन ग्रन्था नारायणपण्डिताचार्यरचिता इति वृथा केचिदाचक्षते । ते चेमे– १. अणुभाष्यटीका, २. मध्वामृतमहार्णवः, ३. अंशावतारः, ४. मध्वकवचम्, ५. अणुवायुस्तुतिः, ६. तारतम्यस्तोत्रम्, ७. महालक्ष्मीस्तुतिः– इति ।

नैते ग्रन्थाः पण्डिताचार्यकृताः । सङ्ग्रहभाष्य(अणुभाष्य)टीका त्रैविक्रमार्यदासेन नारायणपण्डिताचार्यतनयेन वामनपण्डिताचार्येण रचिता वर्वर्ति । नचैकं ग्रन्थं विना विशेषकारणं पितापुत्रावुभावपि व्याचिख्यासतः । अपिच भिन्नस्त्रैविक्रमार्यदासानुसृतः पाठः । भिन्नश्च नारायणपण्डिताचार्यकृतत्वेन कैश्चिदभिमतायां टीकायामुद्धृतः पाठः । नहि पितापुत्रयोर्मूलपाठे विवाद आसीदिति युक्तं वक्तुम् । मूलपाठानुगुणश्च त्रैविक्रमार्यदासपाठः । सर्वात्मना तद्विरुद्धश्चान्यपाठः । तेन निर्विवादं निश्चीयेत नेयं टीका नारायणपण्डिताचार्यकृतेति । तेनास्य ग्रन्थस्य प्रणेता वैश्वनाथिर्नारायणाचार्य इति विमर्शकानां मतमेव सुश्लिष्टतरम् । नह्यविमृश्य वदन्तो विदन्तो भवन्ति ।

मध्वामृतमहार्णवस्त्वसह्या कृतिः । अवमाननमिदं लिकुचकुलकवेः यदस्याप्रबुद्धस्य ग्रन्थस्य तत्कृतत्वकल्पनम् ।

अथांशावतारः । अत्र बहवो भाषादोषाः । छन्दोदोषाश्च । अत्रोदितानि कानिचन प्रमेयाणि महाभारततात्पर्यनिर्णयापरिज्ञानमूलानीति श्रीपलिमारुमठीयतत्वसंशोधनसंसदा प्रकाशितस्य म.भा.ता.निर्णयस्य पीठिकायां द्वितीयसम्पुटे विशदं विवृतमस्माभिः । अथापि ग्रन्थोऽयं समग्रतया म.भा.ता.निर्णयानुगुण इति रटन्तोऽद्भुता एव । क्षमतां पण्डिताचार्यस्तान् ।

अत्र सन्ति पददोषाः । सन्त्यर्थदोषाः । अस्ति च्छन्दोभङ्गः । अस्ति पुनरुक्तिः । अस्ति च व्यर्थपदता । न केवलं शास्त्रप्रमेयेषु, शब्दरूपेष्वपि यः स्खलति स कथं लिकुचान्वयः स्यात्? एवं स्थितेऽपि येंऽशावतारं लिकुचान्वयेन सम्बध्नन्ति तैः प्रथमं शब्दरूपावलिः प्रायोऽभ्यसनीया भवति ।

यच्चान्यत् पुनरगादि– बहुषु स्वसङ्गृहीतेषु हस्तलिखितेषु कोशेषु–'लिकुचनारायणपण्डितानां कृतिः' इत्येवोपसंहारवाक्यं पठ्यते, तेन लिकुचान्वयस्य नारायणपण्डिताचार्यस्यैवेयं कृतिरिति । नन्विदं गर्ते पतिष्यतः कुशकाशावलम्बनम् । यत्र मूलमेव सर्वमसङ्गतं तत्र का कथा अव्युत्पन्नजनलिखितस्य उपसंहारोल्लेखस्य । लिपिकृतामकृतमुखानां प्रमाद एवायम् । यथा मङ्गलाष्टकं श्रीवादिराजयतिकृतमिति । यथा

वाऽणुभाष्यव्याख्यानं लिकुचान्वयनारायणपण्डिताचार्यकृतमिति । नहि शतं लिपिकृतोऽलिखन्निति अतथ्यं तथ्यं भवति । नहि शतकृत्व आवर्तनेऽपि मिथ्या पुनरमिथ्या भवति । सर्व एते पिण्डीशूरा एव ।

आदौ तावदेको लिपिकारः प्रमाद्यति । अन्येऽक्षरजीवनास्तमनुसरन्ति । एवं कायस्थानां प्रमादपरम्परैव परप्रत्ययनेयबुद्धीनां विमर्शकम्मन्यानां प्रमाणपदवीं याति । दुरन्तं दिष्टमेतद् विमर्शनक्षेत्रस्य, यदेभिः शुद्धः सम्प्रदायो महता प्रयत्नेन प्रतनैः संरक्षितः क्षणेन कच्चरीक्रियते ।

सत्यधर्मतीर्थादिभिर्यथा स्वदृष्टहस्तलिखितकोशेषूपलब्धं तथैवोल्लिखितम्, न तत्र विशिष्य विमर्शने प्रयतितमिति तदप्यनिर्णायकम् । हस्तलिखितकोशाः प्रायोऽव्युत्पन्नैर्लिखिता इति तत्रापि कः साधुः कोऽसाधुरिति विम्रष्टव्यं भवति । तथाहि–**'नारायणं नमस्कृत्य–'** इत्येतद् भारताद्यपद्यमिति बहुकोशसंवादः । **'नारायणं सुरगुरुम्–'** इति कतिषुचिदेव कोशेषु । अथापि स एव मूलपाठ इत्याचार्यवचनादवसीयते ।

उक्तं चाऽचार्यैः मूलपाठनिर्णये सदा जागरूकैर्भाव्यमिति–**'क्वचिद् ग्रन्थान् प्रक्षिपन्ति क्वचिदन्तरितानपि । कुर्युः क्वचिच्च व्यत्यासं प्रमादात् क्वचिदन्यथा'** इति । यदि बहुषु हस्तलिखितकोशेषूपलब्धिरेव मानत्वे निर्णयनी तर्हीदमाचार्यवचनं निर्विषयमापद्येत ।

मध्वकवचमनिश्चितकर्तृकम् । अणुवायुस्तुतिरेका कल्याणीदेवीकृतेति प्रथा । अपरं च नन्दसूनुस्तोत्रं त्रिविक्रमपण्डिताचार्यशिष्येण केनचित् कृतमिति विश्वपतितीर्थः । स्यादपि नारायणपण्डिताचार्यकृतिः ।

तारतम्यस्तोत्रं च स्यान्नारायणाह्वेन केनचित् पण्डितेन रचितम् । न लिकुचकविना । तत्रेदमेकं स्फुटं गमकम्– सुपर्णस्य पत्नी सुपर्णीति सर्वत्र प्राचीनप्रयोगेष्वैककण्ठ्यम् । न क्वापि प्राचीनग्रन्थेषु सौपर्णीति प्रयोगो दृश्यते । दृश्यते च तारतम्यस्तोत्रे–**'सौपर्णी वारुणी पर्वतपतितनया'** इति । **'वरनिर्‌ऋतिनामा'** इति च्छन्दोभङ्गः । तस्मान्नेयं लिकुचपण्डितकृतिरिति निश्चीयेत ।

क्वचिद् व्याख्यातारोऽपि भ्राम्यन्ति । यथा **'पान्त्वस्मान्–'** इत्यादेः पद्यद्वयस्य नखस्तुतितां वदन्तः । यथा वायुस्तुतेः समग्राया अपि विष्णुपरतां वदन्तः । एतेन महालक्ष्मीस्तुतिं पण्डिताचार्यकृतां वदन्तोऽपि व्याख्याताः । वैश्वनाथेः नारायणाचार्यस्य कुलदेवता महालक्ष्मीः । तामयं तुष्टावेति स्फुटम् ।

एवमेतेषु बहवो ग्रन्थाः वैश्वनाथिना नारायणाचार्येण रचिता इति सम्प्रति निरणायि । सर्वत्रापि नारायणाचार्य इति नामसाम्यं विमर्शनप्रज्ञावैधुर्यं च भ्रममूलम् । तत्रापि नारायणाचार्यपदश्रवणे सर्वेषां माध्वानां

प्रथमप्रतिपत्तिः पण्डिताचार्यस्यैव । तस्मात् सर्वमिदं संशोधनप्रज्ञाविधुराणामप्रबुद्धं भ्रान्तिलसितम् । युक्तमिदं पाश्चात्यानामाभाणकम्–

'if a blind man follows another blind man both of them will fall into a pit'.

## नारायणपण्डिताचार्याग्रजस्य

१. रमेशगीतिः (चतुर्दशस्तोत्रेषु द्वितीयं स्तोत्रम्)

अस्या रचयितुर्नाम नोपलब्धम् । गीत्यन्ते चैवं पठ्यते–**'लिकुचकविनन्दनः सन्नुपान्त्यः'** इति । निरुपपदो लिकुचकविस्त्रिविक्रमपण्डिताचार्य एव । तस्य त्रयः पुत्राः । तृतीयो नारायणपण्डिताचार्यः । अयमुपान्त्य इति द्वितीयः पुत्र इति स्फुटम् । एतमागूर्य नान्यत् किमपि ज्ञायते । नामधेयमपि । तत्कृतित्वेन लब्धा चेयमेकैव स्तुतिः ।

## वामनपण्डिताचार्यस्य

नारायणपण्डिताचार्यः स्वकृतनयचन्द्रिकादिष्वात्मानं त्रैविक्रमार्यमाह । तत्तनयोऽयं वामनपण्डिताचार्यः पितुरेव पद्धतिमनुसरन्नात्मानं त्रैविक्रमार्यदास इत्येव टीकासु निर्दिशति । तस्य च सप्त टीकाः उपलब्धाः–

१. याज्ञीयमन्त्रभाष्यटीका
२. काठकोपनिषद्भाष्यटीका
३. तलवकारोपनिषद्भाष्यटीका
४. षट्प्रश्नोपनिषद्भाष्यटीका
५. आथर्वणोपनिषद्भाष्यटीका
६. माण्डूकोपनिषद्भाष्यटीका
७. आनन्दमाला (सङ्ग्रहभाष्यटीका)

अथचैका स्तुतिः (चतुर्दशस्तोत्रेषु प्रथमं स्तोत्रम्) वासुदेवगीतिरिति प्रथिता । तत्र **'लिकुचतिलकात्मजानां प्रसादादवरजनिना कृता'** इति श्रूयते । कोऽयमवरजनिरिति न स्फुटम् । लिकुचतिलकात्मजेषु त्रिषु योऽवरः नारायणपण्डिताचार्यः, तेन जन्यत इति व्याख्याने इयमपि वामनपण्डिताचार्यकृतिः स्यात् । एवं नृसिंह-गीतिरपि (चतुर्दशस्तोत्रेषु तृतीयं स्तोत्रम्) नारायणपण्डिताचार्यस्यान्तेवासिष्वन्यतमेन वा, तत्तनयेन वामन-पण्डिताचार्येण वा कृता स्यादिति भाति ।

## कल्याणीदेव्याः

एवं चतुर्दशस्तोत्रेषु पञ्चमं (अणुवायुस्तुतिः), षष्ठं (गोविन्दस्तोत्रम्), सप्तमं (मुकुन्दस्तोत्रम्) च कल्याणी-देवीरचितानीत्यैतिह्यम् । एवमैतिह्ये द्वे कल्याणीदेव्यौ श्रूयेते । एका श्रीमध्वभगिनी । अपरा लिकुचान्वयजा

त्रिविक्रमपण्डिताचार्यभगिनी । अनयोः कतरा पुनरेतानि जग्रन्थेति न स्फुटम् । प्रायः प्रायपाठात् लिकुचान्वयजैव स्यादिति भाति ।

एतावन्तः सम्प्रत्युपलब्धा लिकुचान्वयानां ग्रन्थाः । कालगर्भे निलीय घुणभुक्ताः प्रनष्टाः कियन्त इति न जानीमः । अथापि, सम्प्रत्युपलब्धा एतावन्त एव तत्ववादे लिकुचान्वयानां मूर्धन्यत्वं स्फुटमवगमयति । ऋते चैतेषामध्ययनात् न मध्वहृदयं शक्यं स्फुटमवगन्तुमिति ।

## पौराणिकमैतिहासिकं महाकाव्यम्: सङ्ग्रहरामायणम्

अस्ति तावद् रामायणसङ्गतं महाकाव्यं महाकविना काळिदासेन ग्रथितं रघुवंशं नाम । नूनं रमणीयं काव्यम् । अथापि तत्र रामकथाऽतिसङ्क्षिप्ता । क्वचिदननुगुणा च रामायणस्य । तथाहि तद्वचनम्–

**स तेजो वैष्णवं पत्न्योर्विभेजे चरुसञ्ज्ञितम् ।**
**द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवार्णवम् ॥**

**अर्चिता तस्य कौसल्या प्रिया केकयवंशजा ।**
**अतः सम्भावितां ताभ्यां सुमित्रामैच्छदीश्वरः ॥**

**ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः ।**
**चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥** (१०.५४-६)

इमं ग्रन्थभागं व्याख्यान् मल्लिनाथोऽप्याह–**'अयं च विभागो न रामायणसंवादी । किन्तु पुराणान्तरसंवादी द्रष्टव्यः'** इति ।

भरतो रामादनन्तरः । ततो लक्ष्मणशत्रुघ्नौ यमौ जाताविति बहूनां रामायणव्याख्यातॄणां भगवान् भ्रमः । काळिदासोऽपि नापवादः । अत आह–

**सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।** (१०.७१)

* * *

अथ भोजराजकृतं लक्ष्मणसूरिकृतयुद्धकाण्डोपेतं चम्पूरामायणं वाल्मीकीयं रामायणमविकलमनुकरोति । चित्रमेतत्, यत् पायसविभागे सोऽपि बभ्रामैव । तथाहि तद्वचनम्–

**कौसल्यायै प्रथममदिशत् भूपतिः पायसार्धं**
**प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।**
**एते देव्यौ तरळमनसः पत्युरालोच्य भावं**
**स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम् ॥** (१.२३)

व्याख्याता रामचन्द्रार्यश्चाऽह–

**'अयं विभागो न रामायणसम्मतः । तत्र चरोरर्धं कौसल्यायै, अवशिष्टार्धं सुमित्रायै, शिष्टार्धं कैकेय्यै, शिष्टं पुनः सुमित्रायै– इत्यभिधानात् । किन्तु पुराणान्तरसंवादो द्रष्टव्यः । उक्तं च नरसिंहसंहितायाम्– 'ते पिण्डप्राशने काले सुमित्रायै महामती । पिण्डाभ्यामल्पमल्पं तु स्वसपत्न्यै प्रयच्छतः' इति । एवमन्यत्रापि सति विरोधे पुराणान्तरात् समाधातव्यम्'** इति ।

✻ ✻ ✻

अथ हनुमन्नाटकं महानाटकमिति च प्रसिद्धमनाटकं काव्यम्, दशकण्ठवधसेतुबन्धादीनि बहूनि रसभव्यानि महाकाव्यानि कवयः प्रणिजगदुः । भासस्य यज्ञफलमभिषेकनाटकं प्रतिमानाटकं च, दिङ्नागस्य कुन्दमाला, भवभूतेर्महावीरचरितमुत्तररामचरितम्, शक्तिभद्रस्याऽश्चर्यचूडामणिः, मुरारेरनर्घराघवम्, राजशेखरस्य बालरामायणम्, जयदेवस्य प्रसन्नराघवमित्यादीनि च रम्याणि रूपकाणि । तत्र काव्यत्वस्यैव प्राधान्यम्, नेतिहासस्य । भट्टिकाव्यं पुनर्व्याकरणभारभुग्नम् । न तस्य कवेः स्वकृतेरैतिहासिकत्वे रामायणादिमूलत्वे वा भरः । नापि तत्र सर्वत्र समग्रस्य रामायणस्य सङ्ग्रहश्चेतीदं पण्डिताचार्योपज्ञमधिरामायणं समग्रमर्थतः शब्दतश्च यथामूलमिति महदिदमन्वर्थं पौराणिकमैतिहासिकं चेति शास्त्रीयं महाकाव्यम् ।

सन्ति चान्यानि रामायणानि शेषरामायणमिति, अद्भुतरामायणमिति, आनन्दरामायणमिति, अध्यात्मरामायणमिति, पौराणिकत्वेन प्रसिद्धानि । योगवासिष्ठमिति, वासिष्ठरामायणमिति च प्रसिद्धं चतुर्विंशतिसहस्रश्लोक-मयं रामायणान्तरं वाल्मीकिनैव रचितमिति किंवदन्ती । यद्यपि हृद्यानि । अथ पुराणगतान्यपि दर्शनभाषादिमयानि । अन्यानि च कानिचिद् वाल्मीकिरामायणादिविसंवादात् सन्दिग्धमूलानीति नान्ततः प्रमाणपदवीमर्हन्ति । वासिष्ठरामायणं तु केवलं वसिष्ठेन रामस्याद्वैतबोधनकथामयम् । नूनमद्वैतप्रसारायैव निर्मितो ग्रन्थः । चतुरः प्रबन्धा । न नूनं वाल्मीकिः । अर्वाक्तनोऽयं प्रबन्धा पुनराचार्यशङ्करादपि । यदि ततोऽपि प्रतनमिदमभविष्यत्, उदाहरिष्यदेव स्वमतसाधनाय प्रबलतमं प्रमाणमिदं **'मुनिवचनम्'** । नैकमपि पद्यमुज्जहार शङ्कराचार्यः । तेन ज्ञायते नेदं वासिष्ठं रामायणं तदानीमासीदिति ।

✻ ✻ ✻

अथ काव्यमिति किमुच्यते? ननु कविकर्म काव्यम् । सत्यम् । अथापि न सर्वाणि कविकर्माणि काव्यानि भवितुमर्हन्ति । **'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः'** । तत् काव्यमिति किमुच्यत इति? तदिदमुक्तमस्मत्कृतायां काव्यमीमांसायाम्–'शब्दबोध्यार्थप्रतिपादनद्वारा शब्दाबोध्यार्थद्योतकत्वं काव्यत्वम्' इति । मौनगर्भममौनमित्येत् । विस्तरस्तु तत्रैव द्रष्टव्यः ।

'ऐतिहासिकीं पौराणिकीं वा कथां विस्तारयत् शब्दतोऽर्थतश्च महत् काव्येषु महाकाव्यमित्युच्यते' इति च । अर्थतो महत्त्वमिति नायकत्वेन महापुरुषविशिष्टत्वम् । तदेतत् सर्वमत्र महाकाव्ये स्फुटम् ।

* * *

केचित्तु महाकाव्येऽष्टादश वर्णनीयानि परिगणयन्ति–

**'नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ।**
**'उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥**

**'विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।**
**'मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि ॥**

**'एतैरुपनिबद्धं यत् तन्महाकाव्यमुच्यते ।**
**'एवमष्टादशानां यैःकैश्चिन्न्यूनमपीष्यते'** इति ।

इदमप्यलक्षणम् । न्यूनमपीष्यते । अधिकमपीष्यते । गतमष्टादशत्वम् । महाकाव्ये वर्णनानि च सङ्ख्यया महान्ति भवन्तीत्येतावदेव ।

अथापि दृश्यन्ते कानिचन तान्यत्र । रामसीतयोर्महिमवर्णनलोलुपोऽयं कविः नगरादीनि वर्णयन्नपि क्वचित् श्लोकार्धेन, क्वचिदेकेन श्लोकेन द्वित्राभ्यां वा सङ्क्षेपत एव वर्णयति । न क्वापि वर्णनलौल्यम् । हितं मितं कथापूरकं च वर्णनम् । यथा बाणभट्टस्य कादम्बर्यामिव गहने वर्णनविपिने परिभ्रमन् मूलकथापथमेव न विस्मरेत् । यथा–

अर्णववर्णनम्– १.२.४४–६ तथा ५.१.१८.

सीतारामयोर्विवाहवर्णनम्–१.६.३१–६.

सीताविप्रयोगवर्णनम्– ३.६.३–१०

वर्षावर्णनम्– ४.५.४०.

शरद्वर्णनम्– ४.५.४५.

किष्किन्धावर्णनम्– ४.६.२१–४.

माहेन्द्रशैलवर्णनम्–५.१.९–१०.

लङ्कावर्णनम्–५.२.३५–६ तथा ५.२.४३–५.

मधुपान(शाला)वर्णनम्–५.३.१६–१७.

कपीनां मधुपानचापलम् ५.६.५९–६१.

रावणोद्यानवर्णनम्–५.३.३५–४०.

हनुमद्युद्धवर्णनम्– सुन्दरकाण्डे पञ्चमषष्ठसर्गयोः ।

युद्धवर्णनम्– युद्धकाण्डे तृतीयसर्गादारभ्य त्रयोदशसर्गपर्यन्तम् ।

युद्धार्थं लङ्कां प्रति प्रयाणम्– ६.१.६–१३.

रावणविभीषणमन्त्रालोचनम्– ६.१.३४–४५.

रामस्य कपिभिर्मन्त्रालोचनम्–६.२.४–२१.

समुद्रराजवर्णनम्– ६.२.४२–३.

रामाभिषेकाभ्युदयः–६.१६.

सीतारामयोः रतोत्सवः–७.१.१०–११ तथा ७.२.१८.

सूर्योदयवर्णनम्– ७.१.१७.

रामराज्यवर्णनम्–७.२.१७.

व्यङ्ग्यभङ्ग्या चन्द्रवर्णनम्–७.२.१९.

षड्तुवर्णनम्– ७.२.२१–२७.

श्रीरामस्य केशादिपादान्तवर्णनम्–७.७.१४–३३.

महाप्रयाणम्–७.७.३४–४७.

✻ ✻ ✻

महाकाव्येऽत्र रामायण इव श्रीरामचन्द्रो नायकः । सीता नायिका । हनूमल्लक्ष्मणभरतशत्रुघ्ना उपनायकाः । रावणः प्रतिनायक इत्यादि सर्वं स्फुटम् । न महाभारत इव किमप्यत्र सम्मुग्धं सन्दिग्धं वा ।

* * *

अथ कश्चात्र रसः? मोक्षार्थकाव्यत्वात् भक्तिरसः प्रधानः । हरिगुरू उभे अत्र प्रस्तुते राम इति हनुमानिति । तेन हरौ गुरौ च भक्तिः । अथ शान्तोऽपि समग्रकथानुस्यूतो रसः । भगवन्निष्ठैव हि मुख्यतः शान्तिर्नाम । तदर्थं बाह्यन्तःकरणयोर्विनिग्रहः । तेन निर्मलस्य मनसः पारदर्शकता, सर्वथाऽनुद्विग्नताजननी प्रसन्नता च ।

अथाष्टावप्यवान्तररसाः । सीतारामयोः शृङ्गारः, वियोगे विप्रलम्भशृङ्गारः । रामरावणयोर्युद्धे खरादिहनने हनुमत्पौरुषे च वीरः । कपिषु पक्षिषु श्वादिषु प्राणिमात्रे रामस्य करुणो रसः । कुम्भकर्णादिभिः कपीनां युद्धे रौद्रभयानकाद्भुताः । रामरावणयोर्युद्धेऽद्भुतश्च । हनुमता सागरतरणे छायाग्रहादिनिग्रहणे गन्धमादनानयने च । कुम्भकर्णकायात् कपीनामुत्पतने हास्यः । शूर्पणखाप्रसङ्गे हास्यश्च बीभत्सश्च । त्रिजटस्य गोदाने हास्यो रसः । एवं दशरसभरितं रामायणं नाम । सर्वमेतत् समानं मूलरामायणे च वाल्मीकिरामायणे च सङ्ग्रहरामायणे च ।

* * *

अथाऽचक्षते रीतिरात्मा काव्यस्येति । अत्र प्रबन्धस्याऽत्मा का नाम रीतिः? रसानुगुणा पदसङ्घटना हि रीतिः । यां शैलीमाचक्षते । अपरुषपदबन्धा नातिदीर्घसमासा च श्लक्ष्णा वैदर्भी रीतिः । स्यादियं शृङ्गारादौ । वीररससन्दर्भे न वैदर्भी चमत्कुर्यात् । अथ गौडीसमासबहुला परुषाक्षरा तीक्ष्णा । स्यादियं वीरादौ । नतरां शृङ्गारादौ । तदुभयात्मिका पाञ्चाली सर्वरसानुकूला । यैव पाञ्चली सैव कार्णाटी च । तदेवं कार्णाटी रीतिरस्य काव्यस्याऽत्मा ।

क्वचित् श्लक्ष्णा यथा–

> **जयजय जगतां पते नमस्ते भवतु जयाङ्कुर एष कल्पवृक्षः ।**
> **इति वददभिनन्दि नाकिवृन्दं कुसुमचयं प्रववर्ष राममौलौ** (१.४.५४) इति ।

तीक्ष्णप्राया यथा–

> **लालाटीं भ्रुकुटीं बिभ्रद् भ्रमद्भूररुणेक्षणः ।**
> **अमित्रघ्नोऽथ सौमित्रिः प्रोचे प्रेक्ष्यासिमात्मनः** (२.५.२१) इति ।

यथा वा–

**आखण्डलारातिशिरः प्रचण्डमुत्खण्डितं काण्डवरेण तेन ।**
**सम्मण्डितं कुण्डलमण्डलाभ्यां भूमण्डले भूधरवत् पपात** (६.११.७०) इति ।

कार्णाटी रीतिर्यथा–

**सम्भ्राम्यन्नक्रचक्रादिः सम्भ्राम्यन्नुदधिः स्वयम् ।**
**अर्हणं शिरसा बिभ्रद् रूपवान् प्रत्यदृश्यत'** (६.२.४२) इति ।

## इतिहासत्वेन सं.रामायणस्य निर्णिक्तता

यथामूलं तथैवैतन्न मनागप्यतिक्रमः । तथाऽप्यस्ति कश्चिद् विशेषः । रामायणे यदस्पष्टमिव, सन्दिग्धमिव, तदत्र स्फुटमुदितम् । यथा– लक्ष्मणभरतयोः को ज्यायानिति । बहवो भरत इति बभ्रमुः । अस्त्वन्येषां कथा । गोविन्दराजप्रभृतयः प्रायः सर्वेऽपि रामायणव्याख्यातारः भरतमेव ज्यायांसमाचक्षते । 'अस्त्येव मन्युर्भरताग्रजे मे' इति वदन् काळिदासोऽपि बभ्रामैवेत्युक्तम् । 'कौसल्ययाऽसावि सुखेन रामः प्राक् केकयीतो भरतस्ततोऽभूत्' इति वदन् भट्टिरपि ।

रामायणे वाल्मीकिराह–पुनर्वसुनक्षत्रे रामजननम्, पुष्ये भरतस्य, आश्लेषायां लक्ष्मणशत्रुघ्नयोरिति । तदिदं समेषां भ्रमकारणम् । नक्षत्रानुगुणं क्रमेण त्रिषु दिनेषु चतुर्णां जननमिति व्याख्यातारो बभ्रमुः । तेन लक्ष्मणशत्रुघ्नौ यमावित्यपरो भ्रममूलो भ्रमः । यदाह भगवत्पादः–'विपरीतज्ञानादपि विपरीतज्ञानान्तरं जायते' इति ।

लक्ष्मणजैष्ठ्यमिदमुपज्ञं भगवत्पादेन श्रीमहाभा.ता.निर्णये समार्थि । अथापि तद्वचनं नातीव स्फुटमिति तदेतत् सर्वमत्र स्पष्टमुदितं तात्पर्यनिर्णयानुसारेण लक्ष्मणो रामादनन्तरः, भरतस्तदनन्तर इति । तेनेदं विज्ञायते– न चतुर्णां क्रमेण त्रिषु दिनेषु जननम्, नापि सौमित्री यमाविति । कथमथ नक्षत्रव्यवस्था? ननु भोः नक्षत्राणि प्रतिमासं परिवर्तन्ते । तेन मेषे चैत्रे पुनर्वसौ रामजननम् । ततश्चतुर्थे मासि कर्काटके आषाढे आश्लेषायां लक्ष्मणजननम् । ततः पुष्यमासे प्रायो मकरे पुष्यनक्षत्रे, प्रायः पूर्णिमायां भरतजननम् । ततः परस्मिन् वत्सरे कर्काटके आश्लेषायां शत्रुघ्नजननमिति न कोऽपि विरोधः । तेन सौमित्री यमाविति भ्रान्तिरपि गर्भस्रावेण गलिता । तदुक्तं वाल्मीकिनाऽपि–**'राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक्'** इति । विवृतमेतद् विश्वपतितीर्थीयेऽस्मत्कृतव्याख्यायां च ।



यत्र रामायणे पाठश्चार्थश्च सन्दिग्धः, तत्र बहुषु स्थलेषु शक्यं निर्णेतुमनेन सङ्ग्रहकाव्येन, शुद्धः पाठश्चार्थश्च । तथाहि–रामायणे गजादिषु पञ्चसु वानरेष्वेकः शरभः पठ्यते–**'गजो गवाक्षो गवयः शरभो गन्धमादनः'** (४.६५.२) इति । नायं शरभः । किन्तु वृषभ इत्याह सङ्ग्रहकारः–**'गजो गवाक्षो गवयो वृषाख्यो गन्धमादनः'** (१.३.१९) इति। नहि शरभ इति वृषस्याऽख्या। किन्तु वृषभ इति। एवमुत्तरत्रापि–**'आबभाषे गजस्तत्र प्लवेयं दशयोजनम् । गवाक्षो योजनान्याह गमिष्यामीति विंशतिम् । शरभो वानरस्तत्र वानरांस्तानुवाच ह । त्रिंशतं तु गमिष्यामि योजनानां प्लवङ्गमाः । ऋषभो वानरस्तत्र वानरांस्तानुवाच ह । चत्वारिंशद् गमिष्यामि योजनानां न संशयः'** (६५.३-५) इति । स्फुटः पाठसङ्करः । अत्र गवयः शरभो बभूव । पूर्वं पञ्चस्वनुक्त ऋषभोऽत्र निरूपितः । तदिमां सर्वामसङ्गतिं परिहरिष्यन् सङ्ग्रहकार आह–**'योजनानि दश प्रोचे गजः प्लवनमात्मनः । विंशद्गवाक्षस्त्रिंशत्तु गवयो योजनान्यथ । चत्वारिंशच्च वृषभः'** (४.८.४८–९) इति । अन्यच्चेदं व्याहतमसङ्गतं वचनं रामायणे–**'सुषेणस्तु महातेजाः सत्ववान् कपि-सत्तमः । अशीतिं प्रतिजानेऽहं योजनानां पराक्रमे'** (९) इति । पूर्ववचनविरुद्धमेतत् । सुषेणो हि पश्चिमां दिशं जगाम । तदुक्तम्–**'–सुषेणं नाम वानरम् । तारायाः पितरं राजा श्वशुरं भीमविक्रमम् ।...प्रतीचीमदिशद् दिशम्'** (४.४२.१–५) इति । स कथमकस्मादिह दक्षिणां दिशमुत्पपात? सङ्ग्रहकारः शुद्धं पाठं दर्शयामास–**'सुषेणसूनुश्चाशीतिम्'** (४.८.५०) इति। नायं सुषेणः। किन्तु सुषेणसूनुस्तारः। तेन **'सुषेणस्तु महातेजाः'** इत्यसङ्गतः प्रचलितो रामायणपाठः । तामेतामसङ्गतिं प्रदर्श्य शुद्धपाठं सूचयामास पण्डिता-चार्यः । ततश्च **'सौषेणस्तु महातेजाः'** इति वा, **'सुषेणसूनुस्तु महासत्त्ववान्'** इति, **'तारस्तु सुमहातेजाः'** इति वा मूलपाठः स्यादिति विज्ञायते । एवं रामायणपाठे विद्यमानान् दोषान् प्रदर्श्य संशोधकानां सुपन्थानमाविष्कृतवतः पण्डिताचार्यस्याधमर्णाः सर्वेऽपि जिज्ञासवः ।

* * *

अयोध्याकाण्डे राममानेतुं भरतस्य वनप्रस्थाने चैवं पठ्यते–

**'नव नागसहस्राणि कल्पितानि यथाविधि ।**
**'अन्वयुर्भरतं यान्तमिक्ष्वाकुकुलनन्दनम् ॥**
**'षष्टी रथसहस्राणि धन्विनो विविधायुधाः ।**
**'अन्वयुर्भरतं यान्तं राजपुत्रं यशस्विनम् ॥'** (८३.३–४) इति ।

सङ्ग्रहे पुनरेवं पठ्यते–

**'अयुतेभं लक्षहयं सरथाष्टसहस्रकम्'** (१२.३०) इति ।

एतेन रामायणस्य प्राचीनः पाठः निर्धार्यते–

**'दश नागसहस्राणि..........'** इति ।

**'अष्टौ रथसहस्राणि......'** इति च ।

अधिकं सग्रहचन्द्रिकायां द्रष्टव्यम् ।

✻ ✻ ✻

क्वचिद् रामायणस्यार्थनिर्णये सङ्ग्रहकाव्यमिदं स्थाने सहकरोति ।

तथाहि रामायण एकं पद्यम्–

**'तपसा दिवमारूढाः कपालशिरसा सह'** (२.५४.३१)

अत्र **'कपालशिरसा सह'** इत्यस्फुटार्थम् । कपालप्रायशिरसा सहेति बहवो रामायणव्याख्यातारः । तस्य वास्तवमर्थं विववार पण्डिताचार्यः–

**'कपालशिरआदीनां सिद्धिभूमिं तपस्विनाम्'** (२.९.३१) इति ।

रामायणव्याख्यातॄणामज्ञातोऽयमर्थः कपालशिरा नाम कश्चनर्षिरासेति ।

✻ ✻ ✻

अन्यच्चेदं दशरथस्यान्त्येष्टिसंस्कारप्रसङ्गे–

**'क्रौञ्चीनामिव नारीणां निनादस्तत्र शुश्रुवे ।**
**'आर्तानां करुणं काले क्रोशन्तीनां सहस्रशः'** (रा.२.७६.२१) इति ।

अत्र नारीणां सहस्रमित्यस्फुटं वचनं स्फुटं व्याचख्यौ सङ्ग्रहे पण्डिताचार्यः–

**'चतुर्दशशतस्त्रीभिः समं राजपरिग्रहैः ।**
**'मातॄर्विलोक्य क्रोशन्तीर्विललाप पुनश्च सः'** (२.१२.९) इति ।

अत्र मातॄरिति पृथगुक्तेः परिग्रह इति न पत्नीवचनम् । तेन परिग्रहाः परिजनाः । सहस्रश इति चतुःशतोत्तरं सहस्रमिति स्फुटं विवृतम् ।

✻ ✻ ✻

इदमन्यद् रामायणगतं वचः–

**‘दशवर्षसहस्रं तु निराहारो दशाननः’** (७.१०.१०) इति ।

रावणः १,४०,००,००० वर्षेभ्योऽप्यधिकं कालं जिजीवेति सम्प्रदायविदः ।

यदाह भवभूतिः शूर्पणखामधिकृत्य–

**‘अनेकयुगजीविन्यास्त्रेता यस्यास्त्रयोदशी’** इति ।

तत्र दशावर्षसहस्राणीति पुनरत्यल्पो मासकल्पः कालः । नैतत् समीचीनं भाति । अत आह समीचीनां कालगणनां सङ्ग्रहे पण्डिताचार्यः–

**‘तपस्यतिष्ठन्नतनिष्ठवीर्याः सहोदरा दिव्यसमायुतं च’** (३.१.१६) इति ।

तथाच दिव्यानि दशावर्षसहस्राणि, मानुषमानेन ३६,००,०००वर्षाणि, रावणादीनां तपश्चर्याकालः । तथाच स्वायुषश्चतुर्थांशमीषदधिकं तेऽतपस्यन्निति सुन्दरम् ।

ननु कुतो मूलादेवं पण्डिताचार्योऽपि निश्चप्रचमुवाच? स्वयं कृपया सञ्जग्राह कविः श्रुतानि भगवत्पादप्रवचनेषु, गतानि मूलरामायणे, पठितानि पुराणान्तरेषु ।

निदर्शनमात्रमेतत् । विस्तरस्तु सङ्ग्रहचन्द्रिकायां द्रष्टव्य इत्युपरम्यते ।

* * *

उत्तरकाण्डे सारमेयन्यायदानकथा प्रक्षिप्तेति पाश्चात्यै रामायणव्याख्यातृभिः परित्यक्ता । एतस्य सर्गस्य प्रक्षिप्तताविषये प्रायः सर्वेषामैककण्ठ्यम् । श्रीमहाभा.ता.निर्णयेऽपि कथेयमनुदितेति आचार्यमध्वस्यापि प्रक्षिप्तत्वं सम्मतमिति पाश्चात्यानां भायात् । परन्तु सप्तशतकेभ्यः पूर्वतनेऽपि रामायणकोशपाठे कथेयमुपलब्धा । अतः प्रबन्ध्रा पण्डिताचार्येण साऽपि कथाऽत्र सङ्गृहीता । तेन भगवत्पादस्यापि सम्मतोऽयं कथाभाग इति तस्य प्रक्षिप्ततां वदन्तो भ्रान्ता एवेति च निश्चीयेत । तदेतदनुसृतं श्रीराघवेन्द्रयतिभिः रामचारित्रमञ्जर्यामपि–**‘आर्तश्वगदितकृत्’** इति ।

प्रक्षिप्तत्वं वदतामयमाशयः स्यात्–‘कथं सारमेयो नरभाषया रामसभायां सम्भाषेत? न शक्यमेतत् । तस्मादवश्यं प्रक्षिप्तम्’ इति । अहो, प्रायस्तैर्विस्मृतम्, यद्रामायणे कपयोऽपि व्याहरन्ति । पक्षी जटायुरपि व्याहरति । सम्पातिरपि । किमिति तपस्वी सारमेयो न व्याहरेत्?

ननु नायं व्याहरणमूलः प्रक्षिप्ततानिर्णयः । नरपतिसभायां नराणामेव न्यायनिर्णय इति साम्प्रतम् । नतु शुनां पशूनां वा । तदिदमपि निरस्तं रामचन्द्रेणैव कृतापराधं वानरं वालिनं शिक्षयता । स्यादपि नरपति-सभायामियं व्यवस्था । रामो न केवलं नरपतिः । किन्तु जीवजातपतिः । तदिदं तेनैवाऽविष्कृतम्– **'अश्वानां खादनेनाहमर्थी नान्येन केनचित्'** इति गुहं प्रति घोषयता, कुर्वता च जटायुषोऽपि संस्कारम् । ततो युक्ता रामस्य सभायां सारमेयस्य न्यायदानकथा ।

अपिच स्याद् वा, मा वा भूत् तस्यैतिहासिकता । अर्थवादत्वेनापि महतीं नीतिं बोधयन् स प्रसङ्गोऽवश्यं मूलगत इत्येव सुन्दरम् । भारतादिष्वपि श्रूयन्ते इतिसाहमध्ये तत्रतत्रार्थवादाः ।

* * *

रामायणे कुक्कुरकथानन्तरमेकस्मिन्नध्याये गृध्रोलूकन्यायदानकथा पठ्यते । सेयं प्रक्षिप्तेति पण्डिताचार्यस्यापि सम्मतम् । अतः सा कथा ग्रन्थकृता परित्यक्ता । तदेवं रामायणस्य पाठशुद्धिनिर्णयेऽपि सङ्ग्रहरामायणं महदुपकरोतीति महानयं संशोधकानां लाभः ।

* * *

एवं दभ्रातिदभ्रमपि प्रमेयं निरूपयन् पण्डिताचार्यः सीतापरित्यागकथां सर्वथा परितत्याजैव । रामचरिते महत्त्वपूर्णोऽयं प्रसङ्गः । किमिति सङ्ग्रहकारस्तमेतं न सञ्जग्राहेति विस्मयं नः परमादधाति प्रबन्धु-मौनम् । प्रायो जगन्मातुर्वियोगकथामतथ्यामपि निरूपयितुं नेयेष सर्वथा कविहृदयम् । अत्रानुक्तामपि कथां मणिमञ्जर्यां सञ्जग्राह–

**'सुराणकांस्तमो नेतुं तत्याजेव स जानकीम् ।**
**'व्याप्तत्वान्निरवद्यत्वात् तस्यास्त्यागः कथं भवेत्'** (२.२३) इति ।

* * *

ग्रन्थेऽस्मिन्नुत्तरकाण्डे चरमः सर्गः प्रबन्धुर्नूनमपूर्वतमं चोपहरणम्– हनुमच्चरितेनोपसंहारः । न रामायणे कथितम् । किन्तु महा.भा.ता.निर्णये द्वित्रैः श्लोकैः सङ्क्षिप्य कथितं कैम्पुरुषं हनुमच्चरितं वितस्तार । यत्र हनुमतोपास्यानां भगवतोऽनन्तरूपाणामुल्लेखः, तेन चापूर्वाणां शास्त्रप्रमेयाणामाविष्करणम्, श्रवणयोर्मनसश्च रसायनम् । नूनं साधकसज्जनलोकः अस्मायुपकाराय पण्डिताचार्यस्य निरन्तरं प्रणयगर्भां कार्तज्ञ्यभूयिष्ठां प्रणाममालां पादयोरुपहरति ।

## सं.रामायणे साङ्ख्यम्

महाकाव्येऽस्मिन् चतुःषष्टिः सर्गाः (बा.कां.८ सर्गाः; अयो.१२; अर.६; किष्कि.८; सुं.६; युद्ध.१६; उत्तर. ८; संहत्य ८+१२+६+८+६+१६+८=६४) । भगवत्यामृक्संहितायां चतुःषष्टिरध्यायाः । तदिदं सङ्ख्यासाम्यं रामायणस्य वेदतुल्यतां स्मारयतीव । तथाहि प्राचां वचनम्–

**'वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।**
**'वेदः प्राचेतसादासीत् साक्षाद् रामायणात्मना'** इति ।

अत्र वेद इत्यृग्वेद एव । तत्र चतुर्विंशतिः शाखाः । चतुर्विंशतिसहस्राणि च ग्रन्था रामायणे । सप्तमे पुनर्वसुनक्षत्रे दशावतारेषु सप्तमो रामावतार इति सूचयदिव काण्डसप्तकं वाल्मीकिरामायणसङ्ग्रहरामायणयोरुभयोरपि समानम् ।

अत्र समग्रा पद्यसङ्ख्या च ३४५६ । तदिदं पुनरध्यात्मसङ्ख्यायामेव पर्यवस्यति ३+४+५+६=१८ । अष्टादशेति पुराणसङ्ख्या । महाभारतपर्वसङ्ख्या । गीताध्यायसङ्ख्या च । समग्राध्यात्मरहस्यसर्वस्वसङ्ग्रहणी च सङ्ख्या । पञ्चदश कलाः । षोडशः कलावच्छिन्नो जीवः । तदुक्तं षट्प्रश्ने–**'स प्राणमसृजत । प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च'** इति । **'षोडशी कला जीवस्वरूपम्'** इति त्रैविक्रमार्यदासवचनम् । सप्तदशी बन्धनी चित्प्रकृतिः । अष्टादशो मोचकः परमपुरुषो नारायण इति ।

## सं.रामायणे छन्दोविलासः

अत्र त्रिविधाऽनुष्टुब् भवति–पथ्यावक्त्रं युग्मविपुला प्रमाणिका चेति । तथाहि पथ्यावक्त्रलक्षणम्–

**'सर्वपादेषु न स्यातां नसावाद्याक्षरात् परम् ।**
**'अब्ध्यक्षरेभ्यो यगणो वक्त्रमाहुरनुष्टुभि ।**
**'युजोरब्धेर्जकारश्चेत् पथ्यावक्त्रमुदाहृतम्'** इति ।

सर्वेषु पादेषु प्रथमाक्षरात् परं द्वितीयतृतीयतुरीयेष्वक्षरेषु नगणसगणौ न स्याताम् । एवं प्रथमतृतीययोः पादयोः चतुर्थाक्षरात् परं त्रिष्वक्षरेषु यगणः, द्वितीयतुरीययोः पादयोर्जगणश्च यदि स्यातां तत् पथ्यावक्त्रं नामानुष्टुप्प्रभेद इत्यर्थः ।

तथाच सर्वपादावच्छेदेन प्रथमाक्षरात् परं नगणसगणातिरिक्तगणोपेतत्वे सति समपादावच्छेदेन चतुर्थाक्षरात् परं जगणोपेतत्वे सति, विषमपादावच्छेदेन यगणोपेतत्वं पथ्यावक्त्रलक्षणमित्युक्तं भवति । यथाऽत्र–

**मुख्यप्राणाय भीमाय नमो यस्य भुजान्तरम् ।**
**नानावीरसुवर्णानां निकषाश्मायितं बभौ ॥** (१.१.४)

इयमिह गणव्यवस्था–

**मगणः यगणः तगणः जगणः**

**मु । ख्यप्राणा । यभीमा । य न । मोयस्य । भुजान्त । रम् ।**

**तगणः यगणः यगणः जगणः**

**ना । नावीर । सुवर्णा । नां नि । कषाश्मा । यितम्ब । भौ ।**

यथा वा–

**आहूता राजराजेन राजराजविभूतिना ।**
**उपायनान्युपानीय भूपा वैश्यवदाययुः ॥** (१.२.१४)

**मगणः यगणः जगणः जगणः**

**आ । हूतारा । जराजे । न रा । जराज । विभूति । ना ।**

**रगणः यगणः तगणः जगणः**

**उ । पायना । न्युपानी । य भू । पावैश्य । वदाय । युः ।**

अयुजोश्चतुर्थाक्षरात् परं यगणस्थाने भगणादिषु सत्सु युग्मविपुला नामानुष्टुप् । विषमपादावच्छेदेन यगणाति-रिक्तगणोपेतत्वमित्येतत् । विस्तरस्त्वस्मत्कृतच्छन्दोमीमांसायां द्रष्टव्यः ।

तद् यथा–

**कवयन्तं रामकीर्त्या हनूमन्तमुपास्महे ।** (१.१.३)

**यगणः रगणः तगणः जगणः**

**क । वयन्तं । रामकी । र्त्या ह । नूमन्त । मुपास्म । हे ।**

अत्र चतुर्थाक्षरात् परं यगणस्थाने रगणः ।

यथा वा–

**आत्मारामोऽपि रमया रममाणोऽभिरामया ।** (१.१.८)

**मगणः नगणः यगणः जगणः**

**आ । त्मारामो । पिरम । या र । ममाणो । भिराम । या ।**

अत्र यगणस्थाने नगणः ।

यथा वा–

**सङ्कर्षणाख्यः संहारी जयाजानिरजन्यसौ ।** (१.१.१२)

**रगणः मगणः तगणः जगणः**

**सं । कर्षणा । ख्यस्संहा । री ज । याजानि । रजन्य । सौ ।**

अत्र यगणस्थाने मगणः ।

यथा वा–

**मरीचिमुख्या मुनयः प्राणेभ्यः प्राणिनां गुरोः ।** (१.१.२५)

**रगणः भगणः तगणः जगणः**

**म । रीचिमु- । ख्यामुन । यः प्रा । णेभ्यःप्रा । णिनाङ्गु । रोः ।**

अत्र यगणस्थाने भगणः ।

ता इमा युग्मविपुला नामानुष्टुभः । एवमन्यत्रापि । तदिदं प्रकारद्वयमष्टाक्षरपादत्वेनैकीकृत्य अनुष्टुबिति श्लोक इति चैकयोक्त्या व्यवहरन्ति । अत्रापि तयोरेकत्वेनैव परिगणनं क्रियते । प्रमाणिका तु पृथक् परिगणिता । तस्या लक्षणमुपरिष्टाद् भवति ।

* * *

इन्द्रवज्रोपेन्द्रवज्रयोर्योगे उपेन्द्रमाला नामोपजातिः । त्रिष्टुप्प्रभेदोऽयम् । एकादशाक्षरपादत्वं त्रिष्टुप्त्वम् । ततजा गुरुद्वयं चेदिन्द्रवज्रा । जतजा गुरुद्वयं चेदुपेन्द्रवज्रा । सेयमुपजातिः पादव्यत्ययेन चतुर्दशभेदा भवति । विस्तरस्तु च्छन्दोमीमांसायाम् ।

यथाऽत्र–

**तामापतन्तीमवलोक्य पुंसां स्वधर्ममार्गं भगवान् विधित्सुः ।**
**उरःकवाटं खलु ताटकायाः स्वपाटवात् पाटितवाञ्छरेण ॥** (१.४.५३)

अत्र प्रथमपादे इन्द्रवज्रा । ततस्त्रिषूपेन्द्रवज्रा–

त त. ज. गु. गु.

**तामाप । तन्तीम । वलोक्य । पुं । साम् ।**

ज. त. ज. गु. गु.

**स्वधर्म । मार्गंभ । गवान्वि । धि-। त्सुः ।**

**उरःक । वाटंख । लुताट । का। याः ।**

**स्वपाट । वात्पाटि । तवाञ्छ । रे । ण ॥**

यथा वा–

**तां हारगौरीमतिचित्रयात्रां जह्नोश्च कन्यात्वमुपागतां सः ।**
**नीत्वा तदम्भःपरिषिक्तदेहं निनाय नाकं निजताततजातम् ॥** (१.५.५३)

अत्राऽदितस्त्रिषु पादेष्विन्द्रवज्रा । चरमे तूपेन्द्रवज्रा–

त. त. ज. गु. गु.

**तांहार । गौरीम । तिचित्र। गा। त्राम्।**

**जह्नोश्च । कन्यात्व । मुपाग । तां । सः ।**

**नीत्वात । दम्भःप । रिषिक्त। दे । हम् ।**

ज. त. ज. गु. गु.

**निनाय । नाकंनि । जतात । जा । तम् ।**

यथा वा–

**सज्ज्ञानरूपे जगदेकदीपे नाज्ञानलेशोऽपि घटेत रामे ।**
**प्रकाशमूर्तावहिमप्रकाशे नहि क्वचिद् ध्वान्तलवोऽपि लक्ष्यः ॥ (१.६.५७)**

अत्र पूर्वार्धे इन्द्रवज्रा । उत्तरार्धे चोपेन्द्रवज्रा–

त. त. ज. गु. गु.
**सज्ज्ञाज्ञान । रूपेज । गदेक । दी । पे ।**
**नाज्ञान। लेशोपि। घटेत । रा । मे ।**

ज. त. ज. गु. गु.
**प्रकाश । मूर्ताव । हिमप्र । का । शे ।**
**नहिक्व । चिद्ध्वान्त । लवोपि । ल। क्ष्यः ।**

यथा वा–

**ततः परस्मिन् दिवसे स राजा सराघवं कौशिकमात्मशालाम् ।**
**आनीय नत्वा परिपूर्णकामः सप्रश्रयो वाचमुवाच वाग्मी ॥ (१.७.१)**

अत्र पूर्वार्धे उपेन्द्रवज्रा । उत्तरार्धे इन्द्रवज्रा–

ज. त. ज. गु. गु.
**ततःप । रस्मिन्दि । वसेस । रा । जा ।**
**सराघ । वंकौशि । कमात्म । शा । लाम् ।**

त. त. ज. गु. गु.
**आनीय । नत्वाप । रिपूर्ण । का । मः ।**
**सप्रश्र । योवाच । मुवाच । वा । ग्मी ।**

यथा वा–

**यागाय गां गाधिज कर्षतो मे बभूव कन्या भुवनेषु धन्या ।**
**सीराग्रमार्गादत एव सीता महानिधिश्रीरिव निर्धनस्य ॥ (१.७.२)**

अत्र विषमयोरिन्द्रवज्रा । समयोरुपेन्द्रवज्रा–

त. त. ज. गु. गु.

**यागाय । गांगाधि । जकर्ष । तो । मे ।**

ज. त. ज. गु. गु.

**बभूव । कन्याभु । वनेषु । ध । न्या ।**

त. त. ज. गु. गु.

**सीराग्र । मार्गाद । तएव । सी । ता ।**

ज. त. ज. गु. गु.

**महानि । धिश्रीरि । वनिर्ध । न- । स्य ।**

अत्र पादान्त्यस्य लघोरपि गुरुत्वविवक्षया 'स्य' इत्यस्य 'स्या' इतिवद् गुरुत्वम् ।

एवं पादभेदेनान्येऽपि प्रकाराः द्रष्टव्याः ।

✻ ✻ ✻

केवलेन्द्रवज्रा यथा–

**आलोक्य केचिद् धनुराप्य केचिदन्ये परिस्पृश्य परे प्रचाल्य ।**
**वीरा अवीरत्वमवाप्य याताः केचिद् गतांस्तानवलोक्य भीताः ॥** (१.७.८)

केवलोपेन्द्रवज्रा यथा–

**इदं धनूरत्नमलाभि शम्भोः प्रसादितान्नस्तपसा चिरेण ।**
**विना पिनाकास्त्रमचालनीयं विना यथा भूतळमादिकोलम् ॥** (१.७.४)

✻ ✻ ✻

अत्र प्रायः सर्गा अनुष्टुब्बद्धाः । प्रथमकाण्डे सप्तमः सर्गः, द्वितीयतृतीयतुरीयेषु प्रथमः, पञ्चमे प्रथमषष्ठौ, षष्ठे तुरीयाष्टमद्वादशचतुर्दशषोडशाः सर्गाः, सप्तमे च काण्डे प्रथमद्वितीयौ सप्तमाष्टमौ चेति पञ्चदश सर्गा उपजातिबद्धाः, मध्ये केवलयेन्द्रवज्रयोपेन्द्रवज्रया च संसृष्टाः ।

द्वितीयकाण्डे दशमः सर्गः स्वागतच्छन्दोबद्धः । स्वागतमिति त्रिष्टुप्प्रभेदः–**'स्वागतं रो नभगगाः पादमध्ये यतिर्नहि'** इति हि तल्लक्षणम् । तथाहि–

**रामदेवविरहानलदूनास्तद्गुणान् जगुरथामृततुल्यान् ।**
**नागराः सवनिताः शिशुवृद्धा मातरोऽस्य जनकः स्वजनाश्च ॥** (२.१०.१)

र. न. भ. गु. गु.
**रामदे । ववविर । हानल । दू । नाः ।**

अवशिष्टा अष्टचत्वारिंशत् सर्गा अनुष्टुब्बद्धाः सर्गान्ते यथाकविसमयं भिन्नवृत्ताश्च । तत्रापि षष्ठे युद्धकाण्डे नवमैकादशौ सर्गावनुष्टुबुपक्रमावुपजात्युपसंहारौ । (९=अनु.६०+उप.२०; ११=अनु.५७+उप.१५.) ।

* * *

एवमत्र बहुलमनुष्टुभो भवन्ति । द्वितीया उपेन्द्रमाला नामोपजातिः । तत इन्द्रवज्रा । ततः स्वागतम् । तत उपेन्द्रवज्रा सङ्ख्यानुक्रमेण पञ्चमी । ततः षष्ठी वसन्ततिलका । शक्वरीप्रभेदोऽयम् । चतुर्दशाक्षरपादत्वं शक्वरीलक्षणम् । **'वसन्ततिलका प्रोक्ता तभजा जगगा यदि'** इति वसन्ततिलकालक्षणम् । अस्या एव नामान्तराणि– सिंहोद्धता, सिंहोन्नता, मधुमाधवी, चेतोहारी चेति ।

यथाऽत्र–

**यावन्न निर्दहति रावणनामवह्निर्विश्वं च दाशरथिरूपमुपेत्य तावत् ।**
**त्वं नाथ तं शमय वीर्यसमुद्रपूरैर्भक्ताननन्यशरणान् कुरु वीततापान् ॥** (१.२.५१)

त. भ. ज. ज. गु. गु.
**यावन्न । निर्दह । तिराव । णनाम । व-। ह्निः ।**

* * *

ततो मालिनी भवति सप्तमी । **'मालिन्युक्ता नन्मयया शिवमूर्तिस्वरैर्यतिः'** इति तल्लक्षणम् । अतिशक्वरीप्रभेदोऽयम् । पञ्चदशाक्षरपादत्वमतिशक्वरीलक्षणम् । यथाऽत्र–

**इति निजकनियोगान्मन्त्रिणाऽऽनीतमात्रान् नरपतिरवलोक्य ब्राह्मणान् ब्रह्मनिष्ठान् ।**
**अनमदनभिमानो भक्तिभारेण भूयो हृदि जगदभिरामं वासुदेवं दधानः ॥** (१.१.३७)

**न. न. म. य. य.**

**इतिनि । जकनि । योगान्मं । त्रिणानी । तमात्रान् ।**

शिवमूर्ति(८)स्वरै(७)र्यतिः–

**इति निजकनियोगात् । मन्त्रिणानीतमात्रान् ।**

मालिन्युपसंहारं चेदं काव्यम् । तथाहीदं चरमपद्यम्–

**इति पवनसुताय श्रेष्ठभक्ताय रामो हसितसितगुबन्धून् प्रेमपीयूषसिन्धून् ।**
**भुवनभवनरक्षाभङ्गलीलाप्रसङ्गान् वितरति कमलायै दत्तशेषानपाङ्गान् ॥** (७.८.३०)

✻ ✻ ✻

ततः प्रहर्षिणी भवत्यष्टमी । **'प्रहर्षिणी मनौ ज्रौ गो गङ्गाध्वककुभां यतिः'** इति च तल्लक्षणम् । अतिजगतीभेदोऽयम् । त्रयोदशाक्षरपादत्वमतिजगतीलक्षणम् । यथाऽत्र–

**गीर्वाणैरिति नुतिमद्भिरर्थ्यमानः प्रत्यक्षीभवति पुरा पुराणमूर्तिः ।**
**बालार्कप्रकररुचिः पिशङ्गवासाः स्वाकल्पस्फुरितमणिर्मनोभिरामः ॥** (१.२.५२)

**म. न. ज. र. गु.**

**गीर्वाणै । रितिनु । तिमद्भि । रर्थ्यमा । नः ।**

गङ्गाध्व(३)ककुभां(१०) यतिः–

**गीर्वाणै । रितिनुतिमद्भिरर्थ्यमानः ।**

✻ ✻ ✻

ततः पुष्पिताग्रा नामार्धसमवृत्तं नवमम् ।

सेयं प्रथमतृतीययोर्द्वादशाक्षरेति विषमपादयोर्जगती । द्वितीयतुरीययोस्त्रयोदशाक्षरेति समपादयोरतिजगती । तथाचेयं जगत्यतिजगत्योरुपजातिः । तथाहि लक्षयन्ति–**'पुष्पिताग्रा ननरया युक्ते तु नजजा रगौ'** इति । तथाह्यत्र–

**जयजय जगतां पते नमस्ते भवतु जयाङ्कुर एष कल्पवृक्षः ।**
**इति वददभिनन्दि नाकिवृन्दं कुसुमचयं प्रववर्ष राममौलौ ॥** (१.४.५४)

न. न. र. य.

**१. जयज । यजग । तांपते । नमस्ते ।**

**३. इतिव । ददभि । नन्दिना । किवृन्दम् ।**

न. ज. ज. र. गु.

**२. भवतु । जयाङ्कु । रएष । कल्पवृ- । क्षः ।**

**४. कुसुम । चयंप्र । ववर्ष । राममौ । लौ ।**

* * *

ततः स्रग्धरा भवति दशमी । **'मरभनया यौ मुनिमुनिमुनिभिः स्यात् स्रग्धरा विभिन्नाङ्गी'** इति च तल्लक्षणम् । प्रकृतिप्रभेदोऽयम् । एकविंशत्यक्षरपादत्वं प्रकृतिलक्षणम् । तथाह्यत्र–

**श्वेतद्वीपे यथाऽयं विहरति रमया राजमाने विमाने**
**श्रीमद्भोगीन्द्रभोगे गुणनिधिरधिकं भासमाने समाने ।**
**जम्बूद्वीपेऽत्र पुर्यां जनकतनयया राजयन्त्या जयन्त्या**
**देव्या रामोऽभिरेमे वृषभइव जगद् रञ्जयन्त्या जयन्त्या ॥** (१.८.८१)

म. र. भ. न य. य. य.

**श्वेतद्वी । पेयथा । यंविह । रतिर । मयारा । जमाने । विमाने ।**

मुनि(७)मुनि(७)मुनिभि(७)र्विभिन्नाङ्गी–

**श्वेतद्वीपे यथाऽयं । विहरति रमया । राजमाने विमाने ।**

* * *

तत इन्द्रमाला नामोपजातिर्भवत्येकादशी । वंशस्थेन्द्रवंशयोर्मेलनेनोपजातिरियम् । द्वादशाक्षरो जगती-प्रभेदोऽयम् । **'वंशस्थं स्याज्जतजरा गुहास्यऋतुभिर्यतिः'** इति, **'इन्द्रवंशा ततौ जरौ'** इति च तयो-र्लक्षणम् । यथाऽत्र–

**सुमन्त्रतन्त्रेषु मखेषु कोविदान् सुमन्त्र हन्ताऽनय शीघ्रमृत्विजः ।**
**गुरुं वसिष्ठं च समेधयेद् ध्रुवं क्षत्रं खलु ब्रह्म यथाऽनिलोऽनलम् ॥** (१.१.३६)

अत्र पादत्रये वंशस्थम् । तुरीय इन्द्रवंशा–

ज. त. ज. र.

**सुमन्त्र । तन्त्रेषु । मखेषु । कोविदान् ।**

त. त. ज. र.

**क्षत्रंख । लुब्रह्म । यथानि । लोनलम् ।**

गुहास्य(६)ऋतु(६)भिर्यतिः–

**सुमन्त्रतन्त्रेषु । मखेषु कोविदान् ।**

**क्षत्रं खलु ब्रह्म । यथाऽनिलोऽनलम् ।**

एकैव चात्र केवलेन्द्रवंशा पठ्यते । छन्दःसङ्ख्यया द्वादशी । यथा–

**सीताकृतिं दिव्यपरीक्षणच्छलात् सीतापतिर्हव्यवहे निधाय ताम् ।**

**कैलासशैलात् पुनरागतां प्रियां सीतां स्वयं प्रैक्षत पावकार्पिताम् ॥** (६.१४.४८)

वस्तुतः प्रचलितपाठे द्वितीयः पादः–**'सीतापतिर्हव्यवहे निधाय'** इत्येकादशाक्षरः पठ्यते । छन्दःशास्त्रानभिज्ञानां भ्रान्तिमूलोऽयं पाठः । अत एव **'तां रावणापहृतां सीताकृतिं सीताप्रतिकृतिम्'** इति तच्छब्दप्रतीकग्रहणपूर्वकं व्याचख्युर्विश्वपतितीर्थः श्रीनिवासाचार्यश्च ।

त. त. ज. र

**सीताकृ । तिंदिव्य । परीक्ष । णच्छलात् ।**

**सीताप । तिर्हव्य । वहेनि । धायताम् ।**

* * *

ततो मन्दाक्रान्ता त्रयोदशी । **'मन्दाक्रान्ता मभ्नतास्तो गावब्धिषडगैर्यतिः'** इति तल्लक्षणम् । अत्यष्टिभेदोऽयम् । सप्तदशाक्षरपादत्वमत्यष्टिलक्षणम् । यथा मङ्गलपद्यम्–

**वन्दे वन्द्यं विधिशिवमहेन्द्रादिवृन्दारकेन्द्रै-**
**र्व्यक्तं व्याप्तं स्वगुणगणतो देशतः कालतश्च ।**
**धूतावद्यं सुखचितिमयैर्मङ्गलैर्युक्तमङ्गैः**
**सानाथ्यं नो विदधदधिकं ब्रह्म नारायणाख्यम् ॥** (१.१.१)

म. भ. न. त. त. गु. गु.

**वन्देवं । द्यंविधि । शिवम । हेन्द्रादि । बृन्दार । के । न्द्रैः ।**

अब्धि(४)षड्(६)अगै(७)र्यतिः–

**सानाथ्यं नो । विदधदधिकं । ब्रह्म नारायणाख्यम् ।**

✻ ✻ ✻

ततः शालिनी चतुर्दशी । **'शालिनी मतता गौ च यतिः श्रुतितुरङ्गमैः'** इति तल्लक्षणम् । त्रिष्टुप्प्रभेदोऽयम् । यथाऽत्र–

**रामाभ्याशं प्राप्य रामानुजन्मा साकं वायोः सूनुना तं ववन्दे ।**
**सान्द्रानन्दी मन्दहासी मुकुन्दस्तं सौमित्रिं लालयन्नालिलिङ्गे ॥** (६.११.७३)

म. त. त. गु. गु.

**रामाभ्या । शंप्राप्य । रामानु । जन् । मा ।**

यतिः श्रुति(४)तुरङ्गमैः(७)–

**रामाभ्याशं । प्राप्य रामानुजन्मा ।**

✻ ✻ ✻

ततो रथोद्धता पञ्चदशी । एकादशाक्षरा त्रिष्टुबेवेयम् । **'रथोद्धता रनरला गो यतिर्न पदान्तरे'** इति तल्लक्षणम् । यथाऽत्र–

**गौतमात्मजगिरं स राघवः शुश्रुवानिति ददर्श कौशिकम् ।**
**तत्रतत्र हि कथाः शृणोत्यसौ सर्वविच्च जगतो विडम्बयन् ॥** (१.६.५६)

र. न. र. ल. गु.

**गौतमा । त्मजगि । रंसरा । घ । वः ।**

✻ ✻ ✻

ततो द्रुतविलम्बितं षोडशम् । द्वादशाक्षरतया जगतीप्रभेदोऽयम् । **'नभौ भरौ चेद् द्रुतविलम्बितं न यतिः पदि'** इति तल्लक्षणम् । यथाऽत्र–

**इति वसिष्ठगरिष्ठसभाजनैरभिहितः स्थिररामसभाजनैः ।**
**दशरथस्तनयाय महीमतः प्रतिददौ सुनयाय महीमतः ॥** (२.१.३२)

न. भ. भ. र.
**इतिव । सिष्ठग । रिष्ठस । भाजनैः ।**

* * *

ततः सप्तदशं शार्दूलविक्रीडितम् । अतिधृतिप्रभेदोऽयम् । एकान्नविंशत्यक्षरत्वमतिधृतिलक्षणम् । **'शार्दूल-विक्रीडितं तु यत्र मः सजसाः पुनः । ततगाः सूर्यऋषिभिर्विरतिस्तत्र कीर्तिता'** इति च । यथाऽत्र–

**रक्षोलक्षकुलाभिचारमखिलं त्रैलोक्यसौख्याकरं**
**भ्राम्यन् मन्दमनीषमण्डलमनोमोहार्णवोद्घूर्णनम् ।**
**तत्वज्ञानजुषां विडम्बनमहानाट्याग्ररङ्गं वचो**
**रामाणां परमा रमा स्वरमणं रामं बभाषे तदा ॥** (३.४.४४)

म. स. ज. स. त. त. गु.
**रक्षोल- । क्षकुला । भिचार । मखिलं । त्रैलोक्य । रक्षाक । रम् ।**

सूर्य(१२)ऋषि(७)भिर्विरतिः–

**तत्वज्ञानजुषां विडम्बनमहा । नाट्याग्ररङ्गं वचः ।**

* * *

तत एका प्रमाणिकाऽष्टादशी । अनुष्टुप्प्रभेदोऽयम् । **'प्रमाणिका जरौ लगौ'** इति तल्लक्षणम् । अथवा–**'लगौ लगौ लगौ लगौ प्रमाणिका निगद्यते'** । यथाऽत्र–

**खलावलेपखण्डनस्थिरावतारविभ्रमः ।**
**अवेक्षते स्म जानकीमुखेन्दुमिन्दिरापतिः ॥** (२.१२.१२०)

ज. र. ल. गु.
**खलाव । लेपखं । ड । न- ।**
**स्थिराव । तारवि-। भ्र । मः ॥**

* * *

तथाचेदमत्र छन्दसां सङ्ख्यानं भवति–

| | | |
|---|---|---|
| १. | अनुष्टुप् (श्लोकः) | २७०६ |
| २. | इन्द्रवज्रोपेन्द्रवज्राभ्यामुपजातिः | ४८१ |
| ३. | इन्द्रवज्रा | १०७ |
| ४. | स्वागतम् | ६१ |
| ५. | उपेन्द्रवज्रा | ३० |
| ६. | वसन्ततिलका | १६ |
| ७. | मालिनी | १५ |
| ८. | प्रहर्षिणी | ८ |
| ९. | पुष्पिताग्रा | ८ |
| १०. | वंशस्थेन्द्रवंशाभ्यामुपजातिः | ६ |
| ११. | स्रग्धरा | ५ |
| १२. | मन्दाक्रान्ता | ४ |
| १३. | शालिनी | ३ |
| १४. | रथोद्धता | २ |
| १५. | द्रुतविलम्बितम् | १ |
| १६. | शार्दूलविक्रीडितम् | १ |
| १७. | प्रमाणिका | १ |
| १८. | इन्द्रवंशा | १ |
| | | **संहत्य ३,४५६** |

एवमत्र संहत्याष्टादश च्छन्दांसि भवन्ति । कुतूहलपदमिदम्, यद्वैदिकीमिमां सङ्ख्यां कविर्द्वेधा छन्दस्सु योजयामास । अत्रोपयुक्तानि छन्दांसि १८ । सर्वच्छन्दसां सङ्कलितसङ्ख्याऽप्यष्टादश (३+४+५+६ =१८) । तत्रापि अनुष्टुप्, उपजातिः, मध्ये क्वचिदिन्द्रवज्रा चोपेन्द्रवज्रा च, स्वागतमिति पञ्चैव छन्दांसि प्रधानानि सर्गबद्धानि । अवशिष्टानि ग्रन्थारम्भे सर्गान्ते च निबद्धानि ।

## सं.रामायणे शब्दार्थालङ्काराः

उपमा रूपकं श्लेषः उत्प्रेक्षा स्वभावोक्तिरतिशयोक्तिरर्थान्तरन्यासो विरोधाभास इतीमे प्रधाना अर्थालङ्काराः । तत्प्रभेदाश्च शतशो भवन्ति । ते च सर्वेऽत्र यथासम्भवं निविष्टाः । विशेषतश्च प्रियश्लेषः कविरयं युवेव प्रियाश्लेषप्रियः ।

श्लेषगर्भोपमा यथा–

**वाल्मीकेर्गौः पुनीयान्नो महीधरपदाश्रया ।**
**यद्दुग्धमुपजीवन्ति कवयस्तर्णकाइव ॥** (१.१.७)

श्लेषगर्भं रूपकं यथा–

**स्वान्तस्थानन्तशय्याय पूर्णज्ञानसरार्णसे ।**
**उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः ॥** (१.१.५)

श्लेषो यथा–

**हाराणामिव शुभ्राणां भूपानां भूरितेजसाम् ।**
**सन्तत्यां नायकच्छायो राजा दशरथोऽभवत् ॥** (१.१.२८)

स्वभावोक्तिर्यथा–

**नमो नागेन्द्रशय्याय नमो नानाविलासिने ।**
**नमोऽनाद्यन्तमध्याय नमो नारायणाय ते ॥** (१.२.४८)

उत्प्रेक्षा यथा–

**अङ्गनानामनङ्गोऽयं त्वादृशानां तु किङ्करः ।**
**वैरिणां केवलं कालो योगिनां भगवान् हरिः ॥** (१.६.३४)

विरोधाभासो यथा–

**औदार्यसौन्दर्यविलासपूर्वान् सर्वान् गुणान् कः कथयेत देव्याः ।**
**यान् प्रब्रुवाणश्चतुराननोऽपि कुतूहलेनाचतुराननोऽभूत् ॥** (१.७.३०)

अतिशयोक्तिर्यथा–

**इत्थं लालप्यमानस्य कैकेय्या दारितात्मनः ।**
**सहस्रयामा तस्याऽसीत् सा त्रियामाऽपि शर्वरी ॥** (२.३.६७)

अर्थान्तरन्यासो यथा–

**माद्यन् प्रमाद्येत् सुजनोऽपि नूनम् ।** (४.१.१२)

**श्रेष्ठापराधा हि फलन्ति सद्यः ।** (४.१.१४)

**न विक्रिया धीरधियां भवेद्धि ।** (७.७.७)

एवमन्येऽप्यलङ्कारप्रभेदा यथासम्भवमभ्यूह्याः । अधिकमस्मत्कृतायामलङ्कारमीमांसायाम् ।

✻ ✻ ✻

अथ शब्दालङ्काराः । शब्दानामनुवर्तनेन प्रासनं शब्दानुप्रासः ।

तत्र अक्षरविशेषस्य आवृत्त्या वृत्त्यनुप्रासः । सोऽयं कविर्वृत्त्यनुप्रासप्रिय इति समग्रकाव्यव्यापी वृत्त्यनुप्रासो विराजते । यथा–

**एको नारायणोऽग्रेऽभूत् पूर्णागण्यगुणार्णवः ।**
**आत्मारामोऽपि रमया रममाणोऽभिरामया ॥** (१.१.८)

**निद्रामुद्राविलसितं भुक्त्वा विश्वमधीश्वरम् ।**
**तमवन्दन्त वेदान्ता नरेन्द्रमिव बन्दिनः ॥** (१.१.९)

**तस्य तीरमधिष्ठाय कञ्जोद्भवभवादयः ।**
**तुष्टुवुस्तुष्टमनसो विष्टरश्रवसं सुराः ॥** (१.२.४७)

**नमो नागेन्द्रशय्याय नमो नानाविलासिने ।**
**नमोऽनाद्यन्तमध्याय नमो नारायणाय ते ॥** (१.२.४८)

अयं पादादियमकोऽपि स्यात् । चतुर्ष्वपि पादेष्वादौ **'नमोना'** इत्यक्षरत्रयस्यानुवर्तनात् ।

**उर्व्यां सर्वे समासाद्य चापं वीरा वृथा गताः ।**
**रामो राजीवनयनः कोदण्डं समखण्डयत् ॥** (१.८.४)

**पुरा सुरासुररणे त्वां निशासु शरक्षतम् ।**
**अरक्षं ननु रक्षोभ्यो विद्यया विप्रदत्तया ॥** (२.३.३४)

**कोदण्डं कालदण्डाभं त्वद्दोर्दण्डैकमण्डनम् ।** (३.२.४५)

**अमित्राणाममित्रोऽयं सौमित्रे मित्रमेष नः ॥** (४.२.१३)

**अद्रयः कन्दुकायन्ते सिन्धवस्तस्य चान्धवः ।** (४.३.६)

**जयति जगति दिव्यश्रीतनूमान् हनूमानहितमवहितात्मा बाह्यमाभ्यन्तरं च ।**
**लसति वसतिभूते यस्य चित्ते विचित्रे भुवनभवनपूर्णे रामदेवः सदेति ॥** (५.१.२९)

**हनुमन् भूरिमहिमन् हताः सर्वाहितास्त्वया ।**
**खेचराः खे चरिष्यन्ति त्वां गायन्तो भयं विना ॥** (५.२.२८)

**जाज्वल्यमानोज्वलहेतिलीलो धूमायमानोद्धतधूलिधूम्रः ।**
**विसृत्वरः सैन्यमहौघसङ्घः सांवर्तको वह्निरिवोददीपि ॥** (६.१२.६)

**पूर्ववत् पर्वतश्रेष्ठं सर्वौषधिनिधिं प्रभुः ।**
**आनिनाय महातेजा वायुजो वायुवेगवान् ॥** (६.१३.३८)

**न जातु जातानि न नश्वराणि**
**न जातु दुःखीनि न दोषवन्ति ।** (७.८.२१)

आत्राऽदौ **'न जातु न जातु'** इति लाटानुप्रासोऽपि स्यात् । अर्थभेदे यमकम् । अर्थैक्ये लाटानुप्रास इति च भेदः ।

अन्यच्चेदं लाटानुप्रासस्य स्फुटमुदाहरणम्–

**तत्रोत्सवे मणिगणो रुचिभि<u>र्विरेजे</u> तेनैव भूषणगणो विविधो <u>विरेजे</u> ।**
**रामोऽथ तेन सह वल्लभया <u>विरेजे</u> भूम्रा चराचरमिदं सकलं <u>विरेजे</u> ॥** (२.३.६९)

* * *

कर्णाटानां प्रियो द्वितीयाक्षरप्रासः । यथा–

**मन्दचेष्टो मही यातो वन्दमानोऽपि चेतसा ।**
**इन्द्रसूनुरुवाचेदमिन्दिरेशं पुरोगतम् ॥** (४.४.३५)

यथा वा–

**ऋक्षवानरवीराणां वृक्षशैलप्रहारतः ।**
**लक्ष्मणस्य शरैश्चोग्रै रक्षसामभवत् क्षयः ॥** (६.११.२०)

सोऽयमनुप्रासः कर्णाटककविभिः कुमारव्यासलक्ष्मीशादिभिर्नियत्या समादृतः,कर्णानन्दकरश्चेति कर्णाटानुप्रासः कर्णानुप्रास इति वाऽन्वर्थाभिधानेनाभिधीयते ।

* * *

छेकानुप्रासोऽप्यत्र काव्यशोभाकृत् प्रचुरमुपलभ्यते । अव्यवधानेन समानवर्णद्वयस्य द्वित्राणां वा व्यञ्जनानामावर्तनं छेकानुप्रासः । छेका इति गृहशकुन्ता उच्यन्ते । **'गृह्याश्छेकाश्च गेहेषु संसक्ता मृगपक्षिणः'** इति वैजयन्ती । ते किलैकरूपं द्विस्त्रिः कूजन्ति चीश्चीमिति कुक्कुक्कू इति । तद्वदयमनुप्रास इति ।

विदग्धाश्छेका उच्यन्ते । तेषां प्रियोऽयमनुप्रास इति छेकानुप्रास उच्यते इति विश्वनाथः । **'अग्राम्ये सरळोदारविदग्धच्छेकदक्षिणाः'** इति वैजयन्ती । **'छेको विदग्धे गृह्ये च'** इति च । वस्तुतस्तूभयार्थविवक्षया छेकपदोपादानम् । अत एव गृह्यानुप्रास इति वा विदग्धानुप्रास इति वा न व्याजहुः ।

**'कठोरेण कुठारेण वैकुण्ठः कण्ठसङ्गिना ।** (१.८.५२)
**यान्तं यमन्वेति चमूश्चतुरं चतुरङ्गिणी ।** (२.६.३७)
**अङ्के लङ्केश्वरो बिभ्रत् ।** (३.५.३७)
**प्रतिभा प्रतिभाषते ।** (४.२.२)
**अङ्गदो भङ्गदोऽरीणाम् ।** (४.७.८९)
**लङ्कामलङ्कारवतीम् ।** (५.२.३५)

अत्र **'चतुरं चतुरङ्गिणीम्'** इति **'प्रतिभा प्रतिभाषते'** इति यमकमपि स्यात् । छेकानुप्रास इत्येव स्वरसम् ।

**ससार सारं हृदये प्रसादं बभार भारं करुणारसानाम् ।**
**निनाय नायं हनुमन्तमारादुवाच वाचं च रघुप्रवीरः ॥** (७.७.२)

अत्रान्तिमे पद्ये वृत्त्यनुप्रासोऽपि ।

✻ ✻ ✻

अथ यमकम् । पादान्त्ययमकं यथा–

**श्वेतद्वीपे यथाऽयं विहरति रमया राजमाने विमाने**
**श्रीमद्भोगीन्द्रभोगे गुणनिधिरधिकं भासमानेऽसमाने ।**
**जम्बूद्वीपेऽत्र पुर्यां जनकतनयया राजयन्त्या जयन्त्या**
**देव्या रामोऽभिरेमे वृषभइव जगद् रञ्जयन्त्या जयन्त्या ॥** (१.८.८१)

अत्र छेकानुप्रासोऽपि, वृत्त्यनुप्रासोऽपि ।

यथा वा–

**इति वसिष्ठगरिष्ठसभाजनैरभिहिताः स्थिररामसभाजनैः ।**
**दशरथस्तनयाय महीमतः प्रतिददौ तनयाय महीमतः ॥** (२.१.३२) इत्यादि ।

पादैक्येन यमकं यथा प्रथमतृतीययोः–

**प्रभाते जगदे कान्तस्सीताया मागधैरिति ।**
**प्रभा ते जगदेकान्तश्रिये राम रवेरिव ॥** (२.३.६८)

यथा वा–

**को वानरेन्द्रस्य समानतायां वर्तेत यस्यानिल एव तुल्यः ।**
**को वा नरेन्द्रस्य समानतायां रामस्य यो भाति कृपालुतायाम् ॥** (५.१.२८)

यथा वा–

**चतुरङ्गं तु कामं नो युद्धं स्यादिति गर्जितम् ।**
**चतुरं गन्तुकामं नो निद्रां सैन्यमवैक्षत ॥** (५.२.५८)

द्वितीयतुरीययोर्यथा–

**स्तवः सकलनाथस्य सुमनोभिरलं कृतः ।**
**भगवांस्तैर्विकीर्णाभिः सुमनोभिरलङ्कृतः ॥** (७.४.४१)

पादान्त्ययोर्यथा–

प्राप्ता दिवस्तत्र विमानकोटीः
मणिप्रवेकैर्लसमानकोटीः ।
प्राप्ता अपश्यंश्चलचामराणां
वृन्दं वधूनामिह चामराणाम् ॥ (७.७.४६)

सर्वपादान्त्ययमकं यथा–

रामाननाभं हनुमानयं तं
खे वीक्ष्य पूर्णेन्दुममानयन्तम् ।
नाथं ह सस्मार समा नयन्तं
भक्तान् सुखेनैव स मानयन्तम् ॥ (५.२.५९)

यथा वा–

एवंविधायाखिलशिक्षणाय
रामाय चेतोनयनक्षणाय ।
स्वामिन् पदाब्जानतरक्षणाय
तुभ्यं नमः शोभनलक्षणाय ॥ (७.८.२४)

आद्यन्तयोः सङ्कीर्णतया यथा–

युद्धे रिपूणां मुसलायमानौ
मालायमानौ जनकात्मजांसे ।
सन्मण्डले कल्पलतायमानौ
सत्यं करौ तस्य हि निस्समानौ ॥ (७.७.२४)

यथा वा–

भासा नखा लज्जितबन्धुजीवाः
एवं च नो लज्जितबन्धुजीवाः ।
पुनर्नवत्वं दधुरीक्षकाणा-
मनादिपुंसो न पुनर्नवत्वम् ॥ (७.७.३०)

पादाद्यावृत्तियकमं यथा–

**बद्धाञ्जलिर्मूर्धनि रञ्जितश्रीरामाय रामाय मनोरमाय ।**
**ब्रह्माऽथ वृन्दारकवृन्दजुष्टं तुष्टाव तुष्टावधिकं निमग्नः ॥** (७.७.४८) इत्यादि ।

* * *

## सं.रामायणे अपाणिनीयाः प्रयोगाः

साधवः शब्दा द्विविधा भवन्ति– पाणिनीया अपाणिनीयाश्च । अपाणिनीया इति पाणिनिना न निरूपिताः, व्याकरणान्तरसिद्धा इत्यर्थः । तेन पाणिनिनयोऽयमयोगव्यवच्छेदक एव । नान्ययोगव्यवच्छेदकः । तेन पाणिनीयाः प्रयोगाः साधव एवेति युक्तं वचः । नतु पाणिनीया एव साधव इति । श्रुतिपुराणादिषु प्रयोगदर्शनात्, व्याकरणान्तरसिद्धत्वाच्च । तानि च व्याकरणान्तराणि न सर्वाणि सम्प्रत्युपलभ्यन्ते । अतो वेदेषु वैदिकेषु च प्रयोगदर्शनादेव तेषां साधुत्वमवसीयते । अत एव विद्वद्भिस्तादृशाः प्रयोगाश्छान्दसा इत्येव परिगण्यन्ते ।

प्रबन्धा कविः पण्डिताचार्यः प्रचुरमत्रापाणिनीयानि पदानि प्रयुङ्क्ते । वाल्मीकिरपि रामायणे प्रयुङ्क्ते । भगवत्पादोऽपि मध्वरामायणे । एवं छान्दसप्रयोगे प्राचां मुनिपुङ्गवानां सरणिमनुसरन्नयं कविः स्वस्य छान्दसप्रयोगप्रियतामाघोषयतीव ।

अङ्कुरितश्मश्रुकूर्चः कविरयं प्रथमे वयसि प्रबन्धमिमं प्रणिनायेति प्रथाऽप्यत्र संवदते । यौवनोत्साहसहजं छान्दसप्रयोगलौल्यं कौतुकमादधाति तत्ववादरसिकानाम् । तेन वाल्मीकिरप्यनुसृतो भवति । भगवत्पादोऽप्यनुसृतो भवति । नार्थतः केवलम् । शब्दतोऽपि । वस्तुतः पुराणकाव्यानामियं छान्दसी परिभाषैव रुचिरा पुराणप्रियेभ्यो रोचते ।

पाणिनिमुग्धानां वैयाकरणपाशानामेतत् तथ्यमवगमयितुमेव च छान्दसं पन्थानमनुपपात पण्डिताचार्य इति च युक्तमुत्पश्यामः ।

तथाऽप्येकोऽश्रुतपूर्वः प्रयोगोऽस्माननिर्णये निमज्जयन् कौतुकमादधाति–

**अपि त्रैलोक्यजयिनं वत्सा वत्स्यामि वो रिपुम् ।** (१.३.२)

मणिमञ्जर्यामपि–

**वनं प्रति ययौ वत्स्यन्नशेषानपि राक्षसान् ।** (१.२७)

वत्स्यामीति किन्धातुरयं लकारः? वत्स्यन्निति कस्यायं धातोः शतुरागमः?

**'वत्स्यामि हनिष्यामि'** इति विद्याभूषणार्योऽर्थं वर्णयन्नपि धातुपाठं न पपाठ । **'वध सम्प्रहारे'** इति विश्वपतितीर्थीये काशीश्रीनिवासाचार्यकृतटीकायां च । अथापि न शङ्कापरिहारः । पाणिनिर्वधधातुमेव न पठति । तत्पक्षे हन्तेर्वधादेश एव । तदपि न लृटि । प्राचीना यद्यपि वधधातुं पेठुः । अथापि वधिष्यतीत्येव तद्रूपम् । न वत्स्यतीति । अथापि सर्वत्र हस्तलिखितकोशेषु टीकासु च 'वत्स्यामि' इत्येव पठ्यते । उपपत्तिर्मृग्या ।

सम्प्रत्युपलब्धधातुपाठानुसारेण द्वयोर्धात्वोः 'वर्त्स्यति' इति लृटि रूपं भवति । 'वृतु वर्तने' इत्यस्य, 'वृधु वृद्धौ' इत्यस्य च । अथापि संहारार्थकत्वं दुरुपपादमेव । यद्यपि चुरादिषु पठितस्य वृधुधातोः संहारार्थकत्वं सम्भवति । **'वृधु वर्धने'** इति हि धातुपाठः । **'वर्धनं छेदने वृद्धौ'** इति यादवप्रकाशः । तस्य 'वर्धयिष्यामि' इत्येव लृटि रूपम्, न तु वर्त्स्यामीति । तस्मात् साम्प्रतं संशीतिरेव नः शरणं किन्धातुरयं लकार इति । अचुरादेरपि संहारार्थकत्वाङ्गीकारे 'वर्त्स्यामि' इति, 'वर्त्स्यन्' इति च मूलपाठः स्यादिति भाति ।

* * *

अथाऽत्मनेभाषा धातवोऽत्र परस्मैभाषा भवन्ति । आवरणान्तर्निक्षिप्तानि पाणिन्याभिमतानि रूपाणि–

**यूयं तत्रानुमोदत** (१.२.२९) (अनुमोदध्वम्)

**मुमुदुस्तौ प्रजा वीक्ष्य** (१.४.२९) (मुमुदिरे)

**योत्स्यामि वो रिूपन्** (१.४.१९) (योत्स्ये)

**कपीन्द्रौ प्रत्ययुध्यताम्** (४.४.२७) (प्रत्ययुध्येताम्)

**युयोध पक्षिराजस्तम्** (४.८.१३) (युयुधे)

**आस्तां हि मन्त्रो योत्स्यामः** (६.५.१७) (योत्स्यामहे)

तदेतत् सर्वं सामान्यतः कविभिरभ्युपगतम् । बहुलमुपलभ्यन्ते पुराणेषु रामायणे भगवत्पादग्रन्थेषु चेदृशाः प्रयोगाः । अत एव च वदन्ति–'चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्' इति ।

तथाहि भगवत्पादप्रयोगाः–

**मुमोद सम्प्राप्य च तां स रामः** (म.भा.ता.नि.८.२२३)

**तप्ता हि भोजपतिना मुमुदुर्नितान्तम्** (१४.६)

**मुमोद सत्यभामया** (१७.२१७)

**योत्स्याव तेन नृपतिप्रियकाम्ययाऽऽवाम्** (१३.११८)

**'योत्स्याव'** इत्यपूर्वतमः प्रयोगः । **'अनेन प्रसविष्यध्वम्'** इति गीताप्रयोगवदयं लोलृट् ।

**तदन्येन तु युध्यतोऽपतत्** (१०.४४)

**युध्यन्तमीक्ष्य च रिपुम्** (१४.३७)

**युयोध शक्तितो बली** (१७.१९५)

**युयोध मन्दमेव सः** (१७.२०८)

**युयोध सेनया युतम्** (१७.२८८)

रामायणे च–

**'गच्छ युध्येत्यनुज्ञातः'** (अर.२०.६) इत्यादिः ।

*** 

क्वचिच्च सेटमनिटमाह–

**'रामाज्ञया व्यधात् तर्तुम्'** (२.९.३४) । 'तरितुम्' इति, 'तरीतुम्' इति च पाणिनीयाः । तर्तुमित्येव प्रतनाः प्रयुञ्जते । वाल्मीकिरपि ।

**शीघ्रं ननु शेष्यसे त्वम्** (६.४.११) । 'शयिष्यसे' इति पाणिनीयाः ।

सेटं च पूर्वं स्वयमेव प्रयुयोज–**'शयिष्येऽहं निराहारः'** (२.१२.१५) इति ।

एवमहन्निति वक्तव्ये अहनदित्येव प्रायः प्रयुङ्क्ते वैदिकः कविः–'वृत्रं हनति' इति वैदिकीं वाचमिव स्मरन्–

**सुग्रीवो न्यहनद् बली** (६.५.१०)

**सालेन न्यहनद् बली** (६.५.१२)

**सोऽङ्गदं गदयाऽहनत्** (६.५.३५)

**विभीषणोऽश्वान् न्यहनत् सुरारेः** (६.११.६३)

**न्यहनद् रावणानुगान्** (६.१३.२९)

**तत्तत् प्रत्यहनत् प्रभुः** (६.१३.६४)

तदिदमपि भगवत्पादप्रयोगानुसरणलौल्यमेव । तथाहि प्रयोगास्तात्पर्यनिर्णये–

**नैनमहनद् वचनाद्धरेश्च** (५.३९)

**तान्यहनच्च कंसः** (१२.१४) इत्याद्याः ।

* * *

एवं रिरक्षिषां रिरक्षामाह–

**पराद्रवन् प्राणरिरक्षयाऽथ** (६.१४.१७)

भगवत्पादोऽप्याह ता.निर्णये–

**तेनार्थितो यज्ञरिरक्षयैव** (४.५)

**स लोकधर्माभिरिरक्षया** (१०.५६)

**एष साक्षाद्धरेरंशो जातो यज्ञरिरक्षया** (भाग.४.१५.३) इति च बादरायणप्रयोगः ।

* * *

इदमन्यदिह च्छान्दसम् । विंशतिरिति वक्तव्ये विंशादित्याह । 'विंशत्या' इति वक्तव्ये विंशद्भिरित्याह । तेन ज्ञायते विंशच्छब्दो दशन्शब्दवन्नित्यबहुवचनान्तस्त्रिलिङ्गः प्रतनानामभिमत आसीदिति– विंशत्, विंशत्, विंशद्भिः, विंशद्भ्यः, विंशद्भ्यः, विंशताम्, विंशत्स्विति । तथाहि–

**विंशद् दशास्यस्य च लोचनानि रक्तानि दृष्ट्वा मदमन्युमन्ति ।**
**भुजांश्च विंशद् भुजगप्रकारान् कुतूहलं प्राप कुलं कपीनाम् ॥** (६.८.४)

अत्र हि विंशदिति द्वितीयाबहुवचनान्तं पदम् ।

**विंशद्भिरप्यात्मभुजैः** (६.८.२६)

**षोडशाष्टौ च दश च विंशत् त्रिंशत् तथाऽपरान् ।** (६.९.३९)

**अविध्यत् पञ्चविंशद्भिर्विशिखैरथ लक्ष्मणम् ।** (६.११.३७)

अत्र त्रिंशदित्यपि बहुवचनान्तं त्रिलिङ्गं पदं स्यादिति भाति । अपूर्वमिदमपाणिनीयमाविष्करणं प्रायो भगवत्पादमुखादधिगतनवव्याकरणनिष्पन्नरूपावतारम् ।

वाल्मीकिरप्येवमेवाऽह रामायणे–

**षोडशाष्टौ च दश च विंशत् त्रिंशत् तथैव च ।** (६.६७.७) इति ।

क्वचिद् विंशतिं त्रिंशतिमिति च प्रयुङ्क्ते वाल्मीकिः–

**विंशतिं त्रिंशतिं षष्टिं शतशोऽथ सहस्रशः ।** (६.१०७.४२)

एवं विंशत् विशतिर्विंश इत्यनियताः प्रतनानां प्रयोगा भवन्ति । तथाहि तात्पर्यनिर्णये–

**स पञ्चविंशत् पुनरब्दकानामस्त्राणि चाभ्यस्य पतेर्भृगूणाम् ।** (११.४८)

अत्र पञ्चविंशदिति द्वितीयाबहुवचनान्तम् ।

**अक्षोहिणीगणितमस्य बलं च विंशदासीत्** (१३.१०९)

अत्र विंशदिति प्रथमैकवचनम् ।

**अक्षोहिणीत्र्यधिकविंशयुतोऽतिवेलदर्पोद्धतः सपदि कृष्णपुरीं जगाम ।** (१४.१५)

अत्र विंशमिति विंशतिः ।

**हत्वा सेनां विंशदक्षोहिणीं ताम्** (१६.१९) इत्यादि ।

* * *

क्वचित् भगवत्पादप्रयुक्तानि प्रतनान्येव रूपाणि प्रयुङ्क्ते। तद् यथा–

**सङ्गपण्डितः** (६.१०.११)

**'एवमुक्त्वाऽर्जुनः सङ्ख्ये रथोपस्थ उपाविशत्'** इति गीतायाम् ।

**अक्षोहिणीनाम्** (६.१२.४) ।

अक्षौहिणीनामिति पाश्चात्यम्, 'अक्षादूहिन्यां वृद्धिर्वक्तव्या' इति वार्तिको-पज्ञम् ।

एवमुल्बणं प्रतना उद्बणमिति प्रायः प्रयुञ्जते । पण्डिताचार्योऽपि–

**उद्बणैः सर्ववानरैः** (६.११.१)

**त्रीन् बाणानुद्बणांस्तस्मै** (६.११.३९)

**उद्बणं बाणमादाय** (६.१३.२६)

**नागांश्चक्रे विषोद्बणान्** (६.१३.६३)

* * *

## इदमुपज्ञं शुद्धप्रायः पाठः

इतः पूर्वं सं.रामायणस्य पञ्चषाणि मुद्रणानि बभूवुरिति ज्ञायते । प्रथमं मुद्रणं १८१२तमे शा.शके (1890 A.D.) रामतत्वप्रकाशाह्वये मुद्रणालयेऽङ्कयित्वा रामचन्द्रसावन्तात्मजेन आबाजिसावन्तेन प्रकाशित-मभूत् । तस्मिन्नेव वत्सरे मम तातपादस्य जननमास । अतस्तस्मिन् प्रतनतमे प्रथमे मुद्रणे मम प्रीत्यति-शयः । मूलेन सह विद्याभूषणार्यरचिता सं.रा.टीकाऽपि तदुपक्रमं प्राकाशि ।

ततः दावणगेरेनगरे श्रीसर्वज्ञाचार्यसङ्घद्वारा सानुवादं बालकाण्डमात्रं प्रकाशितम् (1954 A.D) । तत्रानुवादकस्य नाम न निर्दिष्टम् । ततः बळ्ळारिनगरे श्रीमाध्वग्रन्थप्रकाशनद्वारा भीमसेनाचार्यकृतानुवादसहितं समग्रं सं.रामायणं प्रकाशितम् (1982 A.D.) ।

ततः परमतीवार्वाचीनं प्रकाशनद्वयं बेङ्गळूरुनगर एव प्रकाशितं व्यासमध्वसंशोधनप्रतिष्ठानद्वारा । एकं प्रभञ्जनाचार्यकृतकर्णाटकभाषानुवादेन सहितं कन्नडलिप्यां प्रकटितम् (2008 A.D.) । परस्मिन् वर्षे तदेव पुनर्मुद्रितम् (2009 A.D.) । अपरं च मूलमात्रं देवनागरीलिपिमयम् (2011 A.D.)।

सर्वमपपाठप्रचुरम् । नैकत्रापि शुद्धपाठे भरः । क्वचित् प्रक्षिप्ताः श्लोका अपि मूले निवेश्य मुद्रिताः । उदाहरणार्थमिमानि पर्याप्तानि (सुन्दरकाण्डे द्वितीयसर्गे ५५तमश्लोकादनन्तरं पठितानि) –

**वैष्णवं विष्णुगायन्तं सदा सत्यरतं ततः । (?)**
**विभीषणं लोकहिते रतं मङ्गलमैक्षत ॥**

**दुरुश्वासं गाढनिद्रमुन्मत्तं पर्वतोपमम् । (?)**
**कुम्भकर्णं समालोक्य शिरो धुन्वन् स मारुतिः ॥**

**ततो विग्रां स भगिनीं राक्षसेन्द्रस्य दुष्कृतिम् ।**
**विवासिनीं राक्षसानां पलपानाशनैर्युताम् ॥ (?)**

**नग्नां स्रस्तशिरःकेशां पानादुन्मत्तचेतसा(ना)म् । (?)**
**गायन्तीं विस्वरं हास्यां(स्याद्) दुर्भगां श्लक्षणेतराम् ॥ (?)**

**करोभयेन शिरसा धुन्वता प्रभयङ्करीम् ।(?)**
**अत्यन्तमिव नृत्यन्तीं सहितां पिशिताशिभिः ॥**

सर्वत्रापि एते श्लोकाः ईषत्पाठभेदेन मूलेन सह मुद्रिता इति विस्मयावहमिदम्। शब्दमञ्जरीपर्यन्तसंस्कृतभाषा-भिज्ञोऽपि नेदृशानप्रबुद्धान् श्लोकान् रचयति । किमुत पण्डिताचार्यः । नैतानि पद्यानि विद्याभूषणार्यो व्याचख्यौ । न विश्वपतितीर्थः । नापि काशीश्रीनिवासाचार्यः । (तस्य शुद्धः पाठः मन्निकटे वर्तते ।) अथापि मूले निवेशयन्ति । हास्यास्पदमिदम् ।

व्यासमध्वसंशोधनप्रतिष्ठानप्रकाशनं तु रामतत्वप्रकाशे मुद्रितमशोधितमशुद्धिप्रचुरं पाठमेव प्रायोऽक्षरशोऽनुकरोति, तत्रत्यान् मुद्रणदोषानपि प्रायश्चक्षुषी निमील्य । तेन 'बेळगावि'प्रकाशनस्य पिपीलिकालिपिरियम् । तत्र येऽपपाठाः, प्रायस्तेऽत्रापि । तत्र ये मुद्रणदोषाः, प्रायस्तेऽत्रापि । तस्मात् पारायणार्थं शुद्धपाठ-मन्वेषमाणानामनुपयुक्तान्येव सर्वाण्येतानि प्रकाशनानि ।

इदं निदर्शनमात्रम् । एवं सर्वत्रापपाठस्यैव साम्राज्यम् । तदर्थमत्र शुद्धपाठनिर्णयाय बहुधा प्रयतितम् । मठेषूपलभ्यमानाः प्राचीनहस्तलिखितकोशा आलोडिताः । अतोऽत्र प्रायेण शुद्धः पाठः इदमुपज्ञमुपहारी-क्रियते । अथापि सर्वात्मना शुद्धस्य मूलपाठस्यानुपलम्भात् क्वचित्क्वचिन्मूलपाठनिर्णयो दुःशक एव बभूव । तत्र साधुत्वेन सम्भावित एव पाठः समाद्रियत ।

स्पष्टत्वाय एकमुदाहरणं पर्याप्तम् । उत्तरकाण्डे अष्टमाध्याये सप्तदशं पद्यं बहुधा पेठुः–

**'अपान्तरप्राज्ञतमपुरोगान्'** इत्येके । अर्थदुष्टश्छन्दोदुष्टश्चायं पाठः । **'अपान्तरप्राज्ञतमःपुरोगान्'** इत्यन्ये । इदमप्यर्थतोऽसङ्गतम् । **'अपान्तरप्राग्र्यतमःपुरोगान्'** इत्यपरे । इदमपि नातिस्वरसम् । विश्वपतितीर्थीयेऽपि महान् पाठभेदः । लिपिकृतो बहुधा बभ्रमुः । विद्याभूषणभिक्षुव्याख्यायामपि तथा । काशीश्रनिवासाचार्यटीकायामपि तथा । सर्वत्राव्युत्पन्नानां लिपिकृतामेव साम्राज्यम् । अत्र तु **'अपान्तरप्राज्यतमःपुरोगान्'** इति सम्भावितः पाठोऽभ्यूह्य मुद्रितः । एवमन्यत्रापि ।

मूलपाठेन साकम्, व्याख्यानान्तरेषु, विशिष्य का.श्री. टीकासु येऽर्थविशेषा उक्ताः तेऽप्यत्राधष्टिप्पण्यां मुद्रिताः । सङ्क्षेपरामायणसम्बन्धि सर्वमत्र सङ्गृह्यैकत्र समावेशितम् । तथा यानियानि पाठान्तराण्युपलब्धानि, मुद्रितान्यमुद्रितानि च, तानि सर्वाण्यप्यत्र अधष्टिप्पण्यां सन्दर्शितानि । तेनाधिसङ्क्षेपरामायणं सर्वसङ्ग्रहोऽयम् ।

विश्वपतितीर्थीयानुसारी पाठः प्रायो मूलपाठतया स्वीकृत्य प्रकटितः । तदपि न सर्वथा । यत्र विश्वपतितीर्थादृतोऽपि पाठो नातिस्वरसोऽर्थतः, तत्र बहुव्याख्यानसम्मतः पाठः समादृत इति सुधीभिर्विभावनीयम् ।

## सं. रामायणस्य टीकाः

सङ्क्षेपरामायणस्योपाष्टादशाष्टीका आसन्निति किंवदन्ती । सम्प्रति तिस्रष्टीका मम दृष्टिपथं गताः । तत्रैका भावरत्नप्रदीपाख्या विद्याभूषणभिक्षुरचिता । प्रायः सङ्क्षेपरामायणटीकासु प्रथमा प्रतना । १८१२मिते शा.शके, (1890 A.D.) बेळगाविनगरे, मुद्रयित्वा प्रकाशिता चेयम् । द्वितीया श्रीविश्वपतितीर्थविरचिता भावार्थदीपिका सम्प्रतीदमुपक्रमं प्रकाश्यमाना । तृतीया काशीश्रीनिवासाचार्यकृता, अमुद्रिता च । मातृका चेयं लिपिकृत्प्रमादबहुला ।

तत्र विद्याभूषणभिक्षुः स्वगुरुपरम्परां किञ्चिदिवाऽविश्चकार । तथाहि तस्य प्रास्ताविकं पद्यम्–

> **शोभ(?)न्त्यम्भोजनाभप्रवणवरधियो वादिराजाभिधानाः**
> **श्रीमन्तं वेदगर्भं मनसि विदधतो वेदगर्भाभिधानाः ।**
> **श्रेष्ठा गोपीशपूज्या इति मम गुरवः सज्जनव्रातवन्द्याः**
> **सत्कारुण्यावलोकाः सततमपि शुभन्त्वञ्जसा(?) चाप्युदाराः ॥**

अत्र प्रथमचरणे–**'शोभन्त्यम्भोज–'** इति सर्वथा लिपिकृत्प्रमादः । **'शुम्भन्त्यम्भोज–'** इति वा, **'शोभन्तेऽम्भोज–'** इति वा मूलपाठः स्यात् ।

सर्वथाऽसङ्गतश्चतुर्थचरणः । एवं तु स्यात् सम्भावितः शुद्धः पाठः–

**सत्कारुण्यावलोकाः सुदृशमपि दिशन्त्वञ्जसा–'** इति ।

अयं व्याख्याताऽऽत्मानं विद्याभूषणार्यः इत्येवोल्लिखति–

**लिकुचककविवरार्यो मूलरामायणार्थानुदहरदथ विद्याभूषणार्योऽस्य टीकाम् ।**
**व्यधित बुधमनोज्ञां भावरत्नप्रदीप्तिम्–** इति ।

तेनायं यतिर्वा गृहस्थो वेति मूले न स्फुटम् । यतिरासेति तु प्रथा । मुद्रितमुपसंहारवाक्यं च तदेवाऽह– **'श्रीमद्विद्याभूषणयतिशिरोमणिभिर्विरचितभावरत्नटीकायाम्...'** इति । अथाप्यस्य क्वापि मठे वेदान्तसाम्राज्येऽनभिषिक्ततया नाम्नि तीर्थपदं नास्ति । तस्माद् विद्याभूषणतीर्थ इति वचनं भ्रान्तिमूलम् ।

उपरितनपद्ये चायमात्मनस्त्रीन् गुरूनुल्लिलेखेति भाति– **वादिराजाभिधाना** इति, **वेदगर्भाभिधाना** इति **गोपीशपूज्या** इति च ।

प्रायोऽत्र वादिराजाभिधाना वेदगर्भाभिधानानां गुरवः, वेदगर्भास्तच्छिष्या इति श्लिष्टम् । माध्वगुरुपरम्पारासु चत्वारो वेदगर्भाभिधानाः श्रूयन्ते । श्रीविष्णुतीर्थसंस्थाने (कुम्भासिमठे, सम्प्रति सोदेमठ इति प्रथिते) चतुर्थः, श्रीरामतीर्थसंस्थाने (सम्प्रति काणियूरमठ इति प्रथिते) अष्टमः, श्रीनरहरि(सिंह)तीर्थसंस्थाने (सम्प्रति अदमारुमठ इति प्रथिते) द्वादशः, श्रीमदधोक्षजतीर्थसंस्थाने (सम्प्रति पेजावरमठ इति प्रथिते) च त्रयोदशः ।

एतेष्वयं वेदगर्भाभिधानः कतमः स्यात्, यो वादिराजाभिधानादनन्तरः? नैतेष्वेकोऽपि प्रसिद्धस्य श्रीवादिराजयतेरनन्तराः । सर्वेऽपि श्रीवादिराजयतेः प्रतनाः ।

तत एतत् सम्भाव्यते– श्रीमदधोक्षजतीर्थसंस्थाने श्रुतो वेदगर्भः वादीन्द्रयतेः शिष्य इति गुरुपरम्पराश्लोकादवगम्यते । प्रायः स वादीन्द्रयतिरेवात्र वादिराजपदेनोल्लिखितः स्यादिति । तदानीमेव श्रीमदुपेन्द्रतीर्थसंस्थाने (सम्प्रति पुत्तिगेमठ इति प्रथिते) गोपीनाथतीर्थ इति यतिवर आसीत् । प्रायः स एवात्र गोपीशपदेनोल्लिखितः ।

त एते त्रयो विद्याभूषणस्य गुरव इति सोऽयं क्रिस्तीये पञ्चदशशतक आसीदिति शक्यमभ्यूहितुम् ।

मितमिदं धावद् व्याख्यानम् । व्याकरणादिविशेषजिज्ञासाविषये दीर्घं मौनं वहति । केवलं प्रायस्तत्रतत्र क्लिष्टशब्दार्थनिर्वर्णनमात्रेण निर्वृतः । अर्थनिर्वर्णनेऽपि क्वचित् स्खलनं दृश्यते । तदेतदुपरिष्टात् स्फुटमधष्टिप्पण्याम् ।

अथापि क्वचिदवश्यं वक्तव्यानि सङ्क्षिप्यापि स्फुटमभिधत्ते । यथा लक्ष्मणजनने **'कुळीरेऽभ्युदितौ रवौ'** इत्यस्य व्याख्यानम्–**'रवौ कुळीरे कर्काटके राशावभ्युदिते सति, आषाढमास इत्यर्थः'** इति । समीचीनमाह विद्याभूषणार्यः । रामायणव्याख्यातारो गोविन्दराजादयस्तु दशम्यां भरतजननम्, एकादश्यां लक्ष्मणशत्रुघ्नयोर्जननमिति विभ्रान्ताः **'कर्काटके लग्ने, मध्याह्नकाले'** इत्येव व्याचख्युः ।

अथापि **'उच्चस्थे ग्रहपञ्चके'** इत्येतदसङ्गतं व्याचख्यौ–**'ग्रहपञ्चके अङ्गारकबुधगुरुशुक्रशनिनामके स्वोच्चस्थानस्थिते सति, मकरकन्याकर्काटकमीनतुलानामकराशिषु यथाक्रमं स्थिते सतीत्यर्थः'** इति । वि.प.तीर्थीयेऽप्येवम् । का.श्री.टीकायामप्येवम् । विचित्रमिदं यत् सर्वेऽपि बभ्रमुरिति । सूर्याङ्गारकगुरुशुक्रशनिषूच्चस्थेष्विति वक्तव्यम् । **'मेषं पूषणि सम्प्राप्ते'** इति सूर्यस्य स्वोच्चस्थत्वं मूल एवोक्तम् । तं विहाय पुनः पञ्चग्रहाणां परिगणने ग्रहषट्कस्योच्चस्थत्वं स्यात् । न युक्ता च बुधस्य स्वोच्चे कन्याराशौ स्थितिः । रवेर्मेषस्थत्वात्, बुधस्य सदा रविसन्निहितत्वात् । एतदनुपपत्तिपरिहाराय विश्वपतितीर्थीये प्रयतितमिव । तथाहि तद्वचनम्– **'नच ज्योतिःशास्त्ररीत्या तादृशः कालः कदाऽप्यसम्भवीति वाच्यम् । ईश्वराचिन्त्यशक्त्यैतादृशकालसम्भवात्'** इति । नैतन्मनसि लगति । न परिहृतश्च षण्णामुच्चत्वप्रसङ्ग इत्यलम् ।

* * *

ततः प्रायः वर्षाणां द्वे शते अतिगते । अथ विश्वपतितीर्थः व्याख्यां विरचयामास । अधोक्षजतीर्थसंस्थाने (श्रीपेजावरमठे) गुरुपरम्परायामेकविंशोऽयं यतिः ।

अयं ग्रन्थादौ नारायणं मध्वं स्वसम्प्रदायमूलगुरुमधोक्षजतीर्थं च प्रणम्य ततो जयतीर्थं प्रणमति । ततो विजयध्वजम् । ततः श्रीवल्लभयतिं सगौरवं स्मरति । न श्रीवल्लभ इति कोऽपि यतिः पेजावरमठीयगुरुपरम्परायां पठ्यते ।

तथाहि विश्वपतितीर्थान्ता तन्मठीयगुरुपरम्परा–

| | | |
|---|---|---|
| १. अधोक्षजतीर्थः | २. कमलाक्षतीर्थः | ३. पुष्कराक्षतीर्थः |
| ४. अमरेन्द्रतीर्थः | ५. विजयतीर्थः[1] | ६. महेन्द्रतीर्थः |

१. क्वचिदयं यतिमालिकायां त्रयोदशत्वेन, विश्वेश्वरतीर्थस्य गुरुत्वेन पठ्यते । नैतत् समीचीनम् । यतोऽयं भागवततात्पर्यनिर्णयव्याख्याता विजयध्वजतीर्थस्य परमगुरुरित्येव विद्वत्सम्प्रदायः । स्मरति च विजयध्वजतीर्थभट्टारकस्तं स्वकृते भागवतव्याख्याने–**'अनन्ततीर्थविजयतीर्थौ प्रणम्य मस्करिवरवन्द्यौ । तत्कृतिमुपजीव्याहं प्रवच्मि भागवतपुराणम्'** इति ।

| | | |
|---|---|---|
| ७. विजयध्वजतीर्थः | ८. उत्तमतीर्थः[१] | ९. चिन्तामणितीर्थः[१] |
| १०. दामोदरतीर्थः | ११. वासुदेवतीर्थः | १२. वादीन्द्रतीर्थः |
| १३. वेदगर्भतीर्थः | १४. अणुप्रज्ञतीर्थः[२] | १५. विश्वप्रज्ञतीर्थः |
| १६. विश्वेश्वरतीर्थः | १७. विश्वभूषणतीर्थः | १८. विश्ववन्द्यतीर्थः |
| १९. विद्याराजतीर्थः | २०. विश्वमूर्तितीर्थः | २१. विश्वपतितीर्थः |

तेन श्रीवल्लभोऽयं कश्चिदन्य एव यतिर्यो विश्वपतितीर्थस्य विद्यागुरुरासेति ज्ञायते ।

विद्याभूषणीये न प्रतिपदमर्थवर्णनम् । न प्रतिश्लोकं व्याख्यानम् । तत इयं मन्दोपकारिणी व्याख्या, यत्र प्रतिपदमर्थाः कथ्यन्ते, प्रतिश्लोकं विवरणं क्रियते । धातुपाठाः कोशाश्चोद्ध्रियन्ते । तदुक्तं तत्रभवता व्याख्यात्रैव–

**लकारधातुलिङ्गानां विग्रहान्वययोस्तथा ।**
**प्रकाशनं हि क्रियते बालानां बोधसिद्धये** – इति ।

यत्र क्रियासमभिहारेण एकस्यैव लकारस्य निर्देशः, यथा त्रिषु पद्येषु निरन्तरम्– अभूदिति प्रयोगे, भू सत्तायाम्, लुङ् इति त्रिरप्याम्रेडनं व्यर्थप्रायमिति तदिह परित्यक्तम् । तदर्थं टीकाकृतं क्षमां याचे ।

सत्यं बालानां बोधसिद्धय इयं टीका । अथापि क्वचित्क्वचित् प्रौढानामपि मनो रमयति । तथाहि– लक्ष्मणभरतयोः को ज्यायानिति विवदमानानाम्, भरत एव ज्यायानिति भ्रान्तानाम्, म.भा.ता.नि.टीकायां भावप्रकाशिकायां प्रक्षिप्तं भरतज्यैष्ठ्यवचनं वादिराजीयमिति परिमूढानामप्रबुद्धतमानां समग्ररामायणपर्यालोचनेन सम्यगुत्तरं व्यतारि, निरासि च भरतज्यैष्ठ्यभ्रमः सयुक्तिकम् । अपूर्वोऽयं ग्रन्थभागः श्रीविश्वपतितीर्थस्य बहुदर्शितां दर्शयति । तत्रतत्र पाणिनिनये च पाटवं प्रादर्शि ।

अथापि काव्यस्वारस्याविष्करणे नातीव सफलेयं टीका । क्वचित्क्वचित् श्लोकार्थकथने धातुपाठोद्धरणेऽपि स्खलनं दुःखाकरोतीव जिज्ञासूनां चेतः ।

---

१. उत्तमतीर्थचिन्तामणितीर्थयोर्नामनी क्वचित् परम्पराश्लोके प्रमादाल्लुप्ते ।

२. क्वचित् **'चारुप्रज्ञतीर्थः'** इति पठ्यते । स भ्रान्तिमूलः पाठः । **'चाणुप्रज्ञः'** (च+अणुप्रज्ञः) इति श्लोकपाठस्त्वनभिज्ञानां मुखे **'चारुप्रज्ञः'** बभूव ।

अथच बहुषु स्थलेषु विद्याभूषणभिक्षुव्याख्याया अधमर्णोऽयम्। क्वचिदपि तदीयामेव व्याख्यानसरणिमविकल-मुद्धरति। तत्रेदमेकमुदाहरणं पर्याप्तम्। उत्तरकाण्डे **'स्निग्धस्वराः–'** (१.१३) इति पद्यस्य विद्याभूषणीयं व्याख्यानम्–

**'स्निग्धस्वराः रम्यस्वरवन्तः। स्निग्धत्वं नाम कण्ठगुणः। स्निग्धोऽरूक्षः, आर्द्रीभाववानित्यर्थः। तत्र स्वराः सप्त पूर्वोक्ताः। तत्र– 'षड्जं मयूरो वदति गावस्त्वृषभभाषिणः। अजाविकं तु गान्धारं क्रौञ्चः क्वणति मध्यमम्। पुष्पसाधारणे काले पिकः कूजति पञ्चमम्। धैवतं हेषते वाजी निषादं ब्रुवते गजाः' । पीडितपञ्चमाख्याः वशीकृतपञ्चमाख्यस्वरवन्तः। पञ्चमस्वरस्योषःकालानर्हत्वात् पञ्चमस्वरमल्पप्रयोगवन्तं कुर्वन्त इत्यर्थः। अत्र श्रुतिसमधिकत्वेनेत्यपि ग्राह्यम्। तत्र पञ्चमस्वरस्य श्रुतिसमधिकत्वं कथम्? इत्थम्–'षड्जश्चतुःश्रुतिर्ज्ञेय ऋषभस्त्रिश्रुतिः स्मृतः। द्विश्रुतिश्चापि गान्धारो मध्यमश्च चतुःश्रुतिः। चतुःश्रुतिः पञ्चमः स्याद् धैवतस्त्रिश्रुतिः स्मृतः। निषादो द्विश्रुतिश्चैव षड्जग्रामः स्वरान्तरम्' इति। तत्र यद्यपि षड्जमध्यमाभ्यां समानश्रुतित्वं पञ्चमस्य। तथाऽपि ऋषभगान्धारधैवतनिषादापेक्षया श्रुतिसमधिकत्वम्। ततादिवाद्यसहिततयेत्यपि ग्राह्यम्। चतुर्विधं तावद् वाद्यम्– ततमानद्धं घनं सुषिरमिति। ततं वीणादिकं वाद्यम्। आनद्धं मुरजादिकम्। घनं कांस्यतालादिकम्। सुषिरं वंशादिकम्। तद्युक्तं गायन्त इत्यर्थः। षड्जस्वरं षड्जनामकस्वरविशेषं भिन्नकतां स्वस्वरूपमात्रेणावस्थिततां नयन्तः प्रापयन्तः। तत्रायं विभेदः। त्रिप्रकारस्तावत् षड्जस्वरः– ऋषभरूपः, पञ्चमरूपः, स्वात्मरूपश्चेति। तत्र ऋषभरूपपञ्चमरूपे पृथक्कृत्य आत्मरूपेणैवावस्थितः षड्जो भिन्नक इत्युच्यते। षड्जं भिन्नकं कृत्वा, षड्जानुषक्तावप्यृषभपञ्चमौ त्यक्त्वा, स्वात्मरूपेण षड्जं प्रयुञ्जाना इत्यर्थः। अकाकितया श्रावकगुणयुक्तत्वेन चेत्यपि ग्राह्यम्। तत्र– 'श्रावकः कण्ठजो गुणः। यो दूराच्छ्रावयत्यन्ये त्वन्वर्थं मधुरादयः। काकीत्याद्याः कण्ठदोषास्तत्र काकी त्रिलिङ्गकः' इति वैजयन्ती। ऋषभाख्यं स्वरं विना तं त्यक्त्वा। अरुणोदयकाल ऋषभाख्यस्वरविशेषेण गानं कर्तुमनुचितत्वात् तं स्वरं च त्यजन्त इत्यर्थः। वन्दिगणाः स्तुतिपाठकसमूहाः। पुरान्ते अन्तःपुरे'** इति।

अथात्र विश्वपतितीर्थीयं व्याख्यानं दृश्यताम्–

**'स्निग्धो मनोहरः स्वरो येषां ते तथा। स्निग्धत्वं नाम कण्ठगुणः, स्निग्धः अशुष्कः अरूक्षः, आर्द्रीभाववानित्यर्थः। स्वरास्तावत् सप्त प्रसिद्धाः षड्ज ऋषभो गान्धारो मध्यमः पञ्चमो धैवतो निषादश्चेति। 'षड्जं मयूरा ब्रुवते गावस्त्वृषभभाषिणः। अजाविकं तु गान्धारं क्रौञ्चः क्वणति**

**मध्यमम् ।पुष्पसाधारणे काले पिकः कूजति पञ्चमम् । धैवतं हेषते वाजी निषादं ब्रुवते गजाः' । तन्मध्ये पिण्डितः अल्पीकृतः पञ्चमाख्यः स्वरो यैस्ते तथोक्ताः । सम्पूर्णपञ्चमाख्यस्वरोच्चारणस्योषः-कालानर्हत्वात् पञ्चमस्वरमल्पप्रयोगवन्तं कुर्वन्त इत्यर्थः । अत्र श्रुतिसमधिकत्वेनेत्यपि ग्राह्यम् । तत्र कथं पञ्चमस्य श्रुतिसमधिकत्वम्? इत्थम्– 'षड्जश्चतुःश्रुतिर्ज्ञेय ऋषभस्त्रिश्रुतिः स्मृतः । द्विश्रुतिश्चापि गान्धारो मध्यमश्च चतुःश्रुतिः । चतुःश्रुतिः पञ्चमः स्यात् धैवतस्त्रिश्रुतिः स्मृतः । निषादो द्विश्रुतिश्चैव षड्जग्रामः स्वरान्तरम्' इति । तत्र यद्यपि षड्जमध्यमाभ्यां समानश्रुतित्वं पञ्चमस्य । तथाऽपि ऋषभगान्धारधैवतनिषादापेक्षया श्रुतिसमधिकत्वम् । ततादिवाद्यविशेषेण सहिततयेत्यपि ग्राह्यम् । चतुर्विधं तावद् वाद्यम् । ततमानद्धं घनं सुषिरमिति । ततं वीणादि । आनद्धं मुरजादि । घनं कांस्यताळादि । सुषिरं वंशादि । तत्र ततादियुक्तं गायन्त इत्यर्थः । षड्जस्वरं षड्जनामकं स्वरविशेषं भिन्नकतां स्वरूपमात्रेणावस्थिततां नयन्तः प्रापयन्तः । तत्रायं प्रभेदः । त्रिप्रकारस्तावत् षड्जस्वरः– ऋषभरूपः पञ्चमरूपः स्वात्मरूपश्चेति । तत्र ऋषभरूपं पञ्चमरूपं च पृथक्कृत्याऽत्मरूपेणावस्थितः षड्जो भिन्नक इत्युच्यते । षड्जं भिन्नकं कृत्वा षड्जानुषक्तावप्यृषभपञ्चमौ त्यक्त्वा स्वात्मरूपेण षड्जं प्रयुञ्जाना इत्यर्थः । न विद्यते काकिः कण्ठदोषो यस्य स तथा तस्य भावस्तत्ता तया । श्रावकादिगुणयुक्तत्वेन चेत्यपि ग्राह्यम् । 'श्रावकः कण्ठजो गुणः । यो दूराच्छ्रावयत्यन्ये त्वन्वर्था मधुरादयः । काकीत्याद्याः कण्ठदोषास्तत्र काकी नृलिङ्गकः' इति वैजयन्ती । ऋषभ इति आख्या यस्य स तथा तं स्वरं विना त्यक्त्वा । अरुणोदयकले ऋषभाख्यस्वरविशेषेण गानं कर्तुमनुचितत्वात् तं वर्जयित्वेत्यर्थः । वन्दिगणाः स्तुतिपाठकानां समूहाः, पुरस्य अन्तं मध्यं तस्मिन्, अन्तःपुर इत्यर्थः, ववन्दिरे । वदि अभिवादनस्तुत्योर्लिट् ।'**

प्रायः प्रतनानामयं सम्प्रदायः, यत् किमप्यपूर्वं पूर्ववचनम्, तत् तथैव स्वप्रबन्धेषूज्जिहीर्षन्ति स्म । तदप्यनामनिर्देशम् । यत् ते मन्यन्ते स्म तदिदमुद्धरणं केवलम्, नापहरणमिति । अर्वाचीनास्तु उज्जिहीर्षा-मेवापजिहीर्षां मन्वानास्तदिदं कृतिचौर्यमाचक्षते ।

* * *

एवमाद्यं व्याख्यानद्वयं यतिभ्यां प्रणीतम् । अथ तृतीयं गृहस्थस्य काशीश्रीनिवासाचार्यस्य व्याख्यानम् । अदृष्टमुद्रणालयमेतत् । अस्य प्रबन्धुर्विषये सर्वमज्ञातम् । किङ्कालोऽयम्, किन्देशोऽयम्, किम्मठोऽयम्, किङ्गुरुरयम्, नैकमपि विज्ञायते । एकं देवनागरीलिपिबद्धं कोशमात्रमस्माभिरुपलब्धम् । तत्रोपसंहारे ग्रन्थकृदेवमाह–

**सीतारामप्रसादेन श्रीनिवासेन सूरिणा ।**
**सङ्ग्रहाख्यस्य विवृतिरकारि श्रीशतुष्टये ॥**

क्वचिदेवं पाठान्तरं दृश्यते –

**सीतारामप्रसादेन श्रीनिवासो यथामति ।**
**सङ्ग्रहाख्यस्य विवृतिमकार्षीच्छ्रीशतुष्टये ॥**

सर्वथा मौनमुवाह ग्रन्थकृत् स्वविषये । काशीश्रीनिवासाचार्य इति समग्रं नामापि समाप्तिवाक्यादेवावगम्यते–

**श्रीमत्सङ्ग्रहरामायणस्य टीकायां काशीश्रीनिवासाचार्यविरचितायाम्....।**

टीकानाम च सुन्दरकाण्डान्ते–**'इति श्रीमत्सङ्ग्रहरामायणटीकायां रामगुणरत्नप्रकाशिकायाम्.....'**

प्रायशोऽयं काश्यां समधिगतनवीनन्यायः । तेन काशीपदोपाह्वो बभूवेति भाति । अन्यत् सर्वं कालगर्भे निलीनम् । लिपिकृतामक्षरजीवनानामव्युत्पन्नतया तत्रतत्राशुद्धिबहुलः पाठः । सरळं व्याख्यानम् । प्रतिश्लोकं व्याख्याति । प्रायः प्रतिपदम् । समस्तपदेषु विग्रहवाक्यं दर्शयति । तेन बालोपकारिणी टीकेयम् ।

अथापि रमणीयं व्याख्यानम् । काव्यहृदयाविष्करणे पदानामर्थाविष्करणे व्याकरणविवरणे च व्याख्याताऽत्मनः कृतमुखत्वमवगमयति । स्यादयं परिचितपदवाक्यः । अथापि क्वचिद्रामायणाननुगुणं व्याख्याति । तद् यथा अरण्यकाण्डे–**'मधुं पुरस्कृत्य महच्चकार महेन्द्रमुख्यैरमरैः सुयुद्धम्'** (१.३०) इत्यत्र का.श्री.व्याख्यानम्– **'कार्यकारणयोरभेदोपचारान्मधुपुत्रो लवणासुरो मधुशब्देन गृह्यते'** इति । बालिशं व्याख्यनम् । न जानीमः, किमित्ययमधीती शास्त्रे, तत्रतत्र दर्शितप्रौढित्वोऽपि, साधुरपि युक्तायुक्तचिन्तने, अपठितरामायणकथ इवेत्थमहो विकत्थते । लवणपिता मधुरेव रावणेन साकं देवलोकं जिगीषुर्जगामेति स्फुटं रामायणे ।

अन्ते चाऽत्मनः चुचुन्दरीसाम्यमाह–

**सीतार्थं सेतुनिर्माणे शाखा(टो) मूषको यथा ।**
**सङ्ग्रहस्य तथा सेवामकरोदिन्दिराश्रयः–** इति ।

इन्दिराश्रय इत्यस्फुटं पदम् । प्रायो लक्ष्मीस्तस्य कुलदेवता स्यात् ।

## नवीना टीका सङ्ग्रहचन्द्रिका

अध्यगामिषत प्राचीनटीकानां गुणाः । अध्यगामिषत च दोषाः । तदेवं सतीष्वेतासु टीकासु किमप्यपूर्णमिव, क्वाप्यसमग्रविवरणमिव, क्वाप्यनुद्घाटितहृदयमिव भाति सङ्ग्रहरामायणम् । अकृतप्रायैवापाणिनीयप्रयोगेषु

शब्दसाधुत्वचर्चा । यथा **'वत्सा वत्स्यामि'** इति । विद्याभूषणटीकायां को धातुरिति न स्फुटम् । **'वत्स्यामि हनिष्यामि, वध सम्प्रहारे लृट्'** इति विश्वपतितीर्थीयम् । श्रीनिवासाचार्योऽपि निमील्य चक्षुषी प्राचां वचनमेवानूवाच– **'वत्स्यामि हनिष्यामि । वध सम्प्रहारे लृट्'** इति । एतावताऽपि न शङ्कापरिहारः । वधधातुरेव पाणिनिनये न पठ्यते । यद्यपि प्राचीना वधधातुं पठन्ति । तत्पक्षेऽपि वधिष्यतीत्याद्येव रूपम्, न वत्स्यामीत्यादि । अतो न शङ्काशङ्कुपरिहारः । न स्पृष्टमेव छन्दोलक्षणादिकम् । क्वचिदस्पष्टमिव । क्वचिदस्वरसमिव । अतः काव्यहृदयस्पृक् छन्दोव्याकरणादिविश्लेषणपरा काव्यरसिकानां पुराणकृषि-काणां च हृदयङ्गमा काचिदन्यैव टीकाऽपेक्षितेति बहवो मामभ्यर्थयामासुः । मयि च स एव भावो जजागार । तदर्थमेकां नवीनां टीकां सङ्ग्रहचन्द्रिकां नाम विरचय्यात्र समयोजयम् ।

सङ्ग्रहरामायणान्ते च पारायणप्रियाणां कृते वाल्मीकिरामायणान्तर्गतं मन्त्रतुल्यमादित्यहृदयमप्यत्र न्यवेशि । तद्गतापूर्वार्थप्रकटनार्थं च तस्यैका मदीया टीका 'हृदयचन्द्रिका' च सहैव समयोजि, येन जिज्ञासूनां मन्त्रार्थावबोधः सुकरः स्यादिति ।

ग्रन्थान्ते च शोधकानां जिज्ञासूनां सौकर्याय रामायणपात्राणां परिचयः, श्लोकानामकाराद्यनुक्रमणिका च न्यबध्येतामित्यलम् ।

## शोधनार्थमुपयुक्ता हस्तलिखितकोशाः

शुद्धपाठनिर्णयार्थं तालपत्रलिखिता आष्टौ मूलकोशाः परिशीलिताः । तिस्रो विश्वपतितीर्थटीकायाः । पञ्च मूलमात्रस्य ।

तिसृषु टीकामातृकासु एका श्रीपेजावरमठीयपुस्तकालयादानीता । अतिजीर्णं तालपत्रम् । अस्फुटान्यक्ष-राणि । प्रायः शुद्धः पाठः । आद्यन्तपत्राणि लुप्तानि ।

द्वितीया श्रीसोदेमठीया । समीचीना सुस्थितौ विद्यमाना । स्थूलान्यक्षराणि । तत्रतत्र लुप्तष्टीकाभागः । अशुद्धिबहुलः । विश्वपतितीर्थशिष्यो गोविन्दाचार्यनामा लिपिकार इत्यन्ते उल्लिखितम् ।

तृतीया कृष्णापुरमठीया । समीचीना सुरक्षिता । जनार्दनभट्टो लिपिकारः । शुद्धः पाठः । पाठभेदेषु शुद्धपाठनिर्णयाय बहुलमस्या एवावलम्बनं शरणमासीत् । सुखपठनीया रमणीया लिपिः । नातिस्थूला नातिसूक्ष्मा च ।

पञ्चसु च मूलमात्रमातृकासु द्वे श्रीपेजावरमठीये । एका श्रीसुब्रह्मण्यमठादानीता । द्वे पुनः श्रीसोदे-मठीये । अनयोरेका नागरीलिपिबद्धा । अन्याः सर्वास्तुळुलिपिबद्धाः ।

पेजावरमठीया सुब्रह्मण्यमठीया च मातृके पाठतः समाने । सोदेमठीयस्तुळुमातृकापाठः किञ्चिदिव भिन्नः । सोदेमठीया नागरीलिपिमातृका उत्तरकाण्डे भगवद्रूपवर्णनप्रसङ्गे विशेषतः समादृता । मुद्रितः पाठः सर्वात्मना भिन्नः । मुद्रिताः असङ्गताः प्रक्षिप्तश्लोका न क्वापि मातृकासु उपलब्धाः । परस्परं पाठभेदश्च तत्रतत्र क्वचिदेव । तेन शुद्धपाठनिर्णयाय बहूपकृतमाभिर्मातृकाभिः ।

मातृकाणां दानेन कृतमहानुग्रहेभ्यः सर्वेभ्योऽपि श्रीचरणेभ्यः सगौरवं नमोवाकं प्रशास्महे ।

मातृकातोलनादिना संशोधनकर्मणि दिवानिशं कृतपरिश्रमं श्रीमन्तं तोटन्तिल्लायकुलसम्भवं विजयसिंहाचार्यं श्रीरामचन्द्रश्चिरमनुगृह्णातु ।

अत्रोद्धृतानां रामायणश्लोकानां काण्डसर्गादिसङ्ख्या गोरखपुरे गीताप्रेसद्वारा प्रकटितपाठानुसारेण निरू-पिता । यद्यपि तत्र सन्ति पाठभेदाः । तदविवक्षित्वा केवलं सङ्ख्यामात्रमनुसृतमित्यवगन्तव्यम् ।

## लिपिलेखनक्रमः

प्राचीनादर्शे, विशिष्य श्रीहृषीकेशतीर्थेन लिखिते ग्रन्थे, कश्चन विशिष्टो लेखनक्रमोऽनुसृतो दृश्यते । तमेव क्रममत्राप्यनुससृम । तत्रेदं किञ्चिद् वक्तव्यं भवति ।

पाणिनिः सूत्रयामास- **'अचो रहाभ्यां द्वे'** (८.४.४६) इति । तेन अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवतः । तेन अर्क्कः, स्वर्ग्गः, अर्च्चनम्, अर्ज्जुनः, कर्ण्णः, पार्त्थः, अर्द्दनम्, अर्द्धम्, अर्प्पणम्, कर्म्म, सूर्य्यः, दुर्ल्लभः- इत्यादिरूपसिद्धिः ।

एवं हकारादुत्तरस्यापि । तेन ब्रह्मा ब्रह्म्मा भवति । वह्निः वह्न्निर्भवति । जाह्नवी जाह्न्नवी भवति ।

भागश एतदनुमतमाचार्यस्यापि । स रेफात् परस्य यरो द्विर्भावमनुमन्यते । तेन अर्क्कः, स्वर्ग्ग इत्यादि युक्तं रूपम् । अथापि हकारादुत्तरस्य यरो न द्वे भवतः । तेन ब्रह्मेत्येव । न ब्रह्म्मेति । वह्निरित्येव न वह्न्निरिति । जाह्नवीत्येव । न जाह्न्नवीति ॥

तथाच **'अचो राद् द्वे'** इत्येव पर्याप्तम् । तत्रापि क्वचिदपवाद इष्यते । वबयोर्भकारस्य च द्विर्भावो नेष्यते । तेन सर्वम्, अर्बुदम्, गर्भ इत्याद्येव साधु रूपम् । न सर्व्वम्, अर्ब्बुदम्, गर्ब्भ इत्यादि । तेन

**‘ऋते बभाभ्यां वाच्च’** इति वक्तव्यम् । **‘शरोऽचि’** (८.४.४९) इति पाणिनिनैवोक्तम् । तेन कर्षति, कर्श्यतीत्यादौ न द्विर्भाव इति स्थितम् ।

पुनश्च सूत्रयामास पाणिनिः–**‘अनचि च’**(८.४.४१) इति ।अनच्परस्य अच उत्तरस्य यरो द्वे भवतः । तेन दध्यङ् आथर्वणो दद्ध्यङ् आथर्वणो भवति । मध्वो मद्ध्वो भवति । अनुमतमेतदपि तत्ववादाचार्यस्य । परन्त्वत्र वपरस्य धकारस्य द्विर्भावे तल्लेखनाय संयुक्तं मुद्राक्षरं नास्ति । तेन ‘मद्ध्वः’, ‘अद्ध्वा’ इत्येव लिखितव्यं भवति । तदा पठितॄणामस्ति भ्रमावकाशः । **‘सहस्रशीर्षम्’** इत्यादिवदिदमपि विश्लिष्य पठनीयमिति विभ्रम्यासुः । एवङ्कारं मा नाम पठितॄणां विभ्रमो भूदिति द्विर्भावं विनैवात्र प्रकटितम्- **‘मध्वः, साध्वत्र’** इत्यादिषु **सर्वत्र ।**

## धन्यं मन्यतेऽयं जनः

आसीदाशा बलवती मम, यदशुद्धपाठैरसम्बद्धानुवादैश्च पङ्किलं सङ्ग्रहरामायणं नाम रामतीर्थं कतकक्षेपेण शोधनीयमिति । आसीदाशा, आसीत् तन्निर्वहणक्षमा प्रज्ञा, एवमुन्मीलितं चक्षुर्द्वयम् । अथापि क्रियाशक्तिरूपं तृतीयं चक्षुर्न विचकासामासैव । सम्प्रति स पुण्यकालः समुपस्थितः । श्रीमदधोक्षजतीर्थसंस्थानमारूढाः श्रीविश्वेशतीर्थश्रीचरणास्तृतीयमपि मे चक्षुरुदमीलयन्त । हन्त सिद्धं नः समीहितम् । करुणावरणाः श्रीचरणाः शुद्धपाठसंशोधने सव्याख्यानस्य ग्रन्थस्य सविमर्शं सम्पादने च दिष्ट्या मामेव न्ययोजयन् । श्रीपादानुग्रहभाजनमहमभवम् । पण्डितमूर्धन्यानां श्रीविद्यामान्यतीर्थश्रीचरणपरिचरणधन्यानां तत्ववादवदावदानां गुरुचरणानामाशीःपौरटकोटीरपरिमण्डितं मे पाण्डित्यम् । धन्योऽयं जनः ।

## कृतज्ञतामर्पयामः

श्रीलः साधुशीलः पण्डितः कङ्गी बदरीनारायणाचार्यः गणकयन्त्रेण लिप्यङ्कनं यथापूर्वमकल्पयत् । स्वयं निस्पृहः सन्नपि माध्वसमये बद्धस्पृहः श्रीविश्वेशतीथश्रीचरणानामन्तेवासी च । तस्यातुलायाः सन्ततसेवाया अपर्याप्तं नूनमस्माकं शब्दमात्रेण कार्तज्ञ्यसमर्पणम् ।

हस्तलिखतकोशानां परस्परं तोलनेन शोधयित्वा शुद्धपाठनिर्णये सपरिश्रमं बहु प्रयतितं विदुषा श्रीविजयसिंहेन । तथा मुद्रणे सम्भावितानां लिपिदोषाणां निवारणाय प्रत्यक्षरं चक्षुर्निक्षिप्य महता प्रयत्नेन परिशश्राम श्रीमान् कृष्णराजभट्टः, अनन्तशयनः, विशिष्य च श्रीहयवदनः । भगवतः सीताजानेरनुग्रहस्तेषां त्रयाणामपि रक्षाकवचमस्तु निरन्तरम् ।

हृद्यवर्णचित्ररेखाचित्राणां दानेन प्रकाशनस्यापूर्वां शोभामतिशाययामास चित्रकलापरिणतः स्वयं विदेशजोऽपि भारतमानसपुत्रः प्रीत्योरीकृततत्ववादपद्यः उक्रयीन् (**Ukraine**) देशसञ्जातः श्रील उज्ज्वलनीलमणिः । तमप्यनुगृह्णातां प्राणनारायणौ ।

मुद्रणकर्मणि सत्वरमोङ्कृत्य सुन्दरं मुद्रणकार्यं काले कृतवते 'अनिरुद्धक्रियेशन्स्' संस्थामधिकृताय कल्याणि-पदोपाह्वाय श्रीकान्तशर्मणे भूयोभूयः सहार्दं कार्तज्ञ्यमर्थयामः ।

इदमिदानीं तत्रभवतां सप्रश्रयमुपहरणम्–

मन्मथसं.चैत्र-शुक्ल-दशमी **डा. बन्नञ्जेपदोपाह्वः आचार्यगोविन्दः**

29.3.2015

# प्रथमः सर्ग्गः

ॐ ॥ वन्दे वन्द्यं [१]विधिशिवमहेन्द्रादिवृन्दारकेन्द्रै-
व्यक्तं व्याप्तं स्वगुणगणतो देशतः कालतश्च ।
धूतावद्यं [२]सुखचितिमयैर्म्मङ्गलैर्य्युक्तमङ्गैः
सानाथ्यं नो विदधदधिकं ब्रह्म नारायणाख्यम्[३] ॥ १ ॥

## भावार्थदीपिका

श्रीरामं पूर्णकामं गुणमणिघृणिभी रञ्जिताशेषलोकं[४]
सीताप्रेमावलोकं सुरमुनिनिकरैः सेव्यमानाङ्घ्रियुग्मम्[५] ।
पूर्णप्रज्ञांश्च नत्वा सकलसुरवरान् वेदविद्याप्रणेतॄन्
श्रीविष्णोः प्रीतयेऽलं किमपि [६]विरचये तत्प्रसादावलम्बात् ॥ * ॥

दुर्वादिमन्देहदुरन्तसन्ततिं विजित्य विष्णोः पदमाश्रितं सदा।
अनाद्यविद्याविनिवर्तनक्षमं वन्दे सदाऽधोक्षजभास्करं विदे ॥ * ॥

यः कृष्णसारथिर्ज्जिग्ये दुर्वादिनृपसन्ततिम्।
अक्षयामोघगोभिस्तु तं जयार्यं नतोऽस्म्यहम् ॥ * ॥

---

१. 'विधिभवमहे–' २. 'चितिसुखमयै–'

३. 'अस्य श्लोकस्यानेकार्थाः प्रतिपदमपि प्रतीयन्ते। सङ्गतिरपि प्रतिपदं नारायणपदव्याख्यानात्मिका च स्पष्टं प्रतीयते। तथाऽपि बालबोधनार्थं प्रवृत्तत्वात्, बहुकथनेन च बालानां व्याकुलचित्तत्वप्राप्तेर्न प्रपञ्चेन व्याख्यानं कृतम्' इति विद्याभूषणीयटीकायाम्।

४. 'रक्षिताशेषलोकम्' इति क्वचित् पाठान्तरम्। ५. '–मानाङ्घ्रिपद्मम्।' ६. 'हि रचये'

**अञ्जनासूनुसान्निध्याद् विजयेन विराजितम् ।**
**अजितप्रीतिजनकं भजेऽहं विजयध्वजम्** ॥ ✻ ॥

**श्रीवल्लभाख्यदुग्धाब्धिं वाक्तरङ्गोपशोभितम् ।**
**गुणरत्नैरभिव्याप्तं सन्नदीसेवितं भजे** ॥ ✻ ॥

**वाजिवक्त्रपदाम्भोजयुग्मदुर्गं समाश्रितान् ।**
**विद्याराजगुरून् वन्दे विजितारीन् स्वतेजसा** ॥ ✻ ॥

**श्रीविठ्ठलाङ्घ्रिसरसीरुहसक्तचित्तं श्रीवैष्णवालिपरिसेवितपादपद्मम् ।**
**श्रीमध्वशास्त्रनिरतं सदनुग्रहेशं श्रीविश्वमूर्त्तिगुरुमादरतो भजेऽहम्** ॥ ✻ ॥

**रामस्य सम्यक् स्मरणं हि सर्वदा धुनोति दोषानिति चिन्तयन्निदम् ।**
**समारभे संस्मरणाय केवलं सन्तो हि तन्वन्त्वधिकां दयां मयि** ॥ ✻ ॥

**लकारधातुलिङ्गानां विग्रहान्वययोस्तथा ।**
**प्रकाशनं हि क्रियते बालानां बोधसिद्धये** ॥ ✻ ॥

अथ श्रीमान् नारायणभट्टारको निखिलेष्टसाधनतयाऽविगीतशिष्टाचारपरम्पराद्यवगतं श्रीमन्नारायणस्य स्तवन-वन्दनरूपं मङ्गलं निर्विघ्नेन ग्रन्थपरिसमाप्त्यादिस्वाभिमतार्थसिद्धये कृत्वाऽसन्निहितशिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति– **वन्द** इत्यादिना । अहं ब्रह्म वन्द इत्यन्वयः । वन्दे नमामि स्तौमीति वा । वदि अभिवादनस्तुत्योरिति धातोर्लट् । 'ब्रह्माणि जीवाः सर्वेऽपि' इत्यादिश्रुतेः ब्रह्मशब्दस्य जीवेऽपि प्रसिद्धत्वात् तस्य वन्दनशङ्कां वारयितुमाह– **नारायणाख्यमि**ति । दोषारशब्दयोरेकार्थत्वान्नञश्च विरुद्धार्थत्वेनारविरुद्धा नारा गुणास्तेषा-मयनमाश्रयो नारायणः । नैकधेत्यादिवन्नसमासत्वान्नलोपाभावेन नुडभावः । 'पूर्वपदात्सञ्ज्ञायामगः' (अ.सू.८.४.३) इति णत्वम् । नारायण इति आख्या नाम यस्य ब्रह्मणस्तत्तथोक्तं तत् । वन्द्यत्वे हेतुभूतधर्मानाह– **वन्द्यमि**त्यादिना । वन्दितुं योग्यं वन्द्यम् । 'अर्हे कृत्यतृचश्च'(अ.सू.३.३.१६९) इत्यर्हार्थे ण्यः । कैर्वन्द्यमित्यत आह–**विधिशिवमहेन्द्रादिवृन्दारकेन्द्रैरि**ति । विदधातीति विधिर्ब्रह्मा । डु धाञ् (वि)धान[१] इति धातुः । स च, शङ्करत्वाच्छिवो रुद्रः स च, महांश्चासौ इन्द्रश्चेति वा महस्य यज्ञलक्षणोत्सवस्य इन्द्रः स्वामीति वा महेन्द्रः पुरन्दरश्च, ते आदयो येषां ते तथोक्ताः । शोभनं वृन्दं येषामिति वृन्दारका देवाः । 'शृङ्गवृन्दाभ्यामारकन्' (वार्तिकम्.५.२.१२२) इति प्रशंसालक्षणमत्वर्थे आरकन् । तेषामिन्द्राः

१. **'डु धाञ् दानधारणयोः'** इति क्षीरस्वाम्यभिमतः पाठः । **'धारणपोषणयोः'** इत्यन्यत्र ।

स्वामिनो वृन्दारकेन्द्राः । ततो विधिशिवमहेन्द्रादयश्च ते वृन्दारकेन्द्राश्चेति कर्मधारयः, तैः । एतैर्वन्द्यमित्यनेन वन्द्यत्वोपयुक्तविशिष्टत्वोपपादनादितरदेवतापरित्यागेन नारायणस्य वन्दनं कुतो वा कर्तव्यमिति शङ्का परास्ता । व्यक्तमिति व्यापनक्रियाविशेषणम् । व्याप्तमित्युक्ते किंविशिष्टं व्यापनमित्याकाङ्क्षायां[१] व्यक्तमित्यपेक्ष्यमाणत्वात् । एवं च व्यक्तं स्पष्टं यथा भवति तथा मुख्यतयेत्युक्तं भवति । क्रियाविशेषणानां नपुंसकलिङ्गता द्वितीयैकवचनान्तता च वाच्येति वचनात् सर्वत्रापि क्रियाविशेषणानि नपुंसकलिङ्गानि द्वितीयैकवचनान्तान्येव द्रष्टव्यानि । उक्तं च वृत्तरत्नाकरव्याख्याने– 'सुखसन्तानसिद्ध्यर्थं सुखस्य सन्तानः प्रवाहस्तस्य सिद्धिरर्थः प्रयोजनं यस्मिन् तत्तथा । इदं नमनक्रियाविशेषणम् । किंविशिष्टं नमनमित्यपेक्षायां सुखसन्तानसिद्ध्यर्थमित्यपेक्ष्यमाणत्वात् । नमनक्रियाविशेषणभूतं तत्पदमपि नपुंसकलिङ्गं द्वितीयैकवचनान्तं च' इत्यादिना । ननु नारायणाख्यं ब्रह्म सिद्धं वा न वा? न द्वितीयः, असिद्धस्य वन्दनाद्ययोगात् । सिद्धिश्च लक्षणप्रमाणाभ्यां भवति । तत्रापि प्रमाणं 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिलक्षणमुखेनैव ब्रह्म साधयतीत्यतस्तस्य प्रमाणं ब्रह्ममीमांसाशास्त्रम् । तद् ब्रह्ममीमांसाशास्त्राध्यायद्वयार्थभूतं लक्षणमाह– **स्वगुणगणत** इत्यादिना । स्वगुणगणतः स्वस्य गुणाः ज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभृतयः शुभधर्मास्तेषां गुणानां गणाः समूहास्तैरिति ततः, देशेनेति देशतः, कालेनेति कालतः । यद्यपि 'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः'(अ.सू.५.३.२) इति किमादिभ्य एव तसिल्प्रत्ययो विहितस्तथाऽपि 'सर्वप्रातिपदिकात् तसिल् इति केचित्' इति वचनाद्गुणादिशब्देभ्योऽपि सार्वविभक्तिकस्तसिल् । चशब्दः समुच्चये । व्याप्यत इति व्याप्तम् । कर्मणि क्तः । यद्वाऽत्र सर्वत्र द्वितीयार्थे तसिल् । तस्मिंश्च पक्षे व्यक्तं व्याप्नोतीति व्याप्तमिति गत्यर्थकत्वात् कर्तरि क्तः । 'गत्यर्थाकर्मक-श्लिष-शीङ्-स्थाऽऽस-वस-जन-रुह-जीर्यतिभ्यश्च' (अ.सू.३.४.७२) इत्यनुशासनात् । एवं च गुणतो व्याप्तत्वं नाम सर्वगुणपूर्णत्वम् । देशतो व्याप्तत्वं नाम सर्वगतत्वम् । कालतो व्याप्तत्वमनादिनित्यत्वम् । इयं च त्रिविधा व्याप्तिः श्रीनारायणस्यैव । तथाहि[२] श्रुतिः– 'देशतः कालतश्चैव गुणतश्च त्रिधा ततिः । सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणाः' इति । धूतावद्यं धूतानि निरस्तानि अनाद्यनन्तकालेऽप्य[३]स्पृष्टानीति यावत्, अवद्यानि अज्ञानपारतन्त्र्यकर्मलेपरागादिदूषणानि यस्मात् तत्तथोक्तं तत् । एताभ्यां च ब्रह्ममीमांसाशास्त्राध्यायद्वयार्थभूतलक्षणप्रतिपादकाभ्यां पदाभ्यां श्रीनारायणस्याधिकृतत्वं च वन्द्यत्वोपयुक्तं दर्शितम् । व्यक्तमिति ब्रह्मविशेषणं वा । स्वभक्तान् प्रति व्यक्तं प्रत्यक्षविषयीभूतमिति । ननु शरीररहितस्य ब्रह्मणः प्रत्यक्षविषयत्वमनुपपन्नम्, सशरीरत्वेऽनित्यत्वप्रसङ्ग इत्यत उक्तम्– **सुखचितीत्या**दिना । सुखचितिमयैः, सुखं च, चितिर्ज्ञानं सा च, तयोः स्वरूपाणि सुखचितिमयानि तैः । 'मयट् तद्रूप इति केचित्' इति वचनात् तत्स्वरूपार्थे मयट् । अत एव मङ्गलैः शोभनैः अङ्गैः

१. '–मित्याशङ्कायाम्' २. 'तथाच' ३. '–कालेभ्यः अस्पृष्टानीति'

हस्तपादाद्यवयवैः । 'अङ्गं प्रतीकोऽवयवः' इत्यमरः । युक्तम् अन्वितम् । तथाच सशरीरत्वात् प्रत्यक्षत्वं सम्भवति । सशरीरत्वेऽनित्यत्वप्रसङ्गो वा नास्ति । तस्य प्राकृतशरीरविषयत्वात्, भगवच्छरीरस्य तु दोष-गन्धविधुरपूर्णषाड्गुण्यरूपत्वात् । तथाहि श्रुतिः–'ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मकः' इत्यादिका । 'क्लेशकर्माद्यसंस्पृष्टपूर्णषाड्गुण्यविग्रहः' इत्यादिका स्मृतिश्च । नः अस्माकम् । अधिकमिति विधानक्रिया-विशेषणम्, अधिकं यथा भवति तथा, सानाथ्यम्, नाथेन स्वामिना सहिताः सनाथास्तेषां भावस्तत्त्वं तत्, विदधत् कुर्वाणम् । संसारे तप्यमानाननाथानस्मान् दृष्ट्वा केवलं कारुण्येनैवाभीष्टप्रदानेन सनाथान् कुर्वाणमिति भावः । अधिकं सर्वोत्कृष्टमिति ब्रह्मविशेषणं वा । 'अस्मद्युत्तमः' (अ.सू.१.४.१०७) इति सूत्रेणास्मद्युपपदे स्थानिन्यप्युत्तमपुरुषः स्यादित्युक्तत्वाद् वन्द इत्युत्तमपुरुषान्तप्रयोगादेवाहमिति कर्तृपदं लभ्यते । ननु 'कर्तृकरणयोस्तृतीया' (अ.सू.२.३.१८) इति[१] कर्तरि तृतीयाया विहितत्वात् कर्तृवाचकेन पदेन मयेति तृतीयान्तेन भाव्यम्, कथमहमिति प्रथमान्ततेति चेद् उच्यते । अत्र वदिधातोर्हि 'लः कर्मणि च भावे चाकर्मकेभ्यः'(अ.सू.३.४.६९) इति सूत्रेण कर्तरि लकारः, तस्य च 'तिप्-तस्-झि–' (अ.सू.३.४.७८)इत्यादिना तिबादयः । एवं च कर्तुस्तिङाऽभिधानात्, तिङाद्यनभिहिते च कर्त्रादौ तृतीया-विधानान्न तृतीयाप्राप्तिः । किं तर्हि 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (अ.सू.२.३.४६) इति प्रातिपदिकार्थमात्रे प्रथमैव । एवं प्रतिश्लोकं कर्तरिप्रयोग इयं रीतिर्द्रष्टव्या । अत एव हि कर्मणिप्रयोगे कर्तुस्तिङाऽनभिधानात् कर्तरि तृतीया सर्वत्र दृश्यते । कर्मणः 'कर्मणि द्वितीया'(अ.सू.२.३.२) इति सूत्रेण द्वितीया न दृश्यते कर्मणस्तिङाऽभिधानात् । कर्तरिप्रयोगे तु कर्मणि द्वितीया दृश्यते कर्मणस्तिङाऽनभिधाना-दिति । तथा चैवमन्वयः । अहं विधिशिवमहेन्द्रादिवृन्दारकेन्द्रैः वन्द्यम्, स्वगुणगणतः देशतः कालतश्च व्यक्तं व्याप्तम्, धूतावद्यम्, सुखचितिमयैः मङ्गलैः अङ्गैः युक्तम्, नः सानाथ्यं अधिकं विदधत्, नारायणाख्यं ब्रह्म वन्द इति । 'वन्देवं' इति त्रिगुरुत्वान्मगणः, भूमिर्देवता, ऐश्वर्यकरः । 'मद्ध्यान्ताद्यखिलेषु गा जसभमाः सूर्यानिलेन्दुक्षमा देवाः स्फीतरुगन्यदेशगमनप्रख्यातनामश्रियः । तद्वच्चेल्लघवोऽभवन् रतयना वह्न्यम्बराम्भोदिवो वृत्तादौ मृतिशून्यताजनसमृद्ध्यायूंषि ते तन्वते'[२] इत्युक्तेः । वृत्तं तु मन्दाक्रान्ता– 'मन्दाक्रान्ता जलधि-षडगैर्म्भौ नतौ ताद् गुरू चेत्' इत्युक्तेः ॥ १ ॥

१. बालानां व्युत्पत्तिशाणत्वाय केवलं व्याकरणविहरणमिदम् ।

२. अयमर्थः–मध्ये गो गुरुर्यत्र स जगणः । अन्ते चेत् सगणः । आदौ चेद् भगणः । अखिलेषु त्रिष्वपि गुरुश्चेन्मगणः । जगणस्य सूर्यो देवता । स्फीतरुग् रोगाधिक्यं फलम् । सगणस्यानिलो देवता । अन्यदेशगमनं फलम् । भगणस्य इन्दुर्देवता । प्रख्यातनाम नाम्ना ख्यातिः फलम् । मगणस्य भूमिर्देवता । श्रीः सम्पत्प्राप्तिः फलम् । तद्वत् मध्ये लघुश्चेद् रगणः । अन्ते लघुश्चेत् तगणः । आदौ चेद् यगणः । सर्वाण्यक्षराणि लघव-श्चेन्नगणः । रगणस्य वह्निर्देवता । मृतिः फलम् । तगणस्याऽकाशो देवता । शून्यता फलम् । यगणस्य जलं देवता । जनसमृद्धिः फलम् । नगणस्य द्यौर्देवता । आयुः फलमिति । वृत्तादौ यो गणस्तस्य वृत्तस्य ग्रन्थादौ प्रयोगे चैतानि फलानीति ।

## सङ्ग्रहचन्द्रिका

**ॐ ॥ नत्वा रघुपतिमीशं भुवनाचार्यं च दशधिषणम् ।**
**क्रियते ललिता सङ्ग्रहरामायणभावचन्द्रिका टीका ॥ ❊ ॥**

ॐ ॥ मध्वरामायणवाल्मीकिरामायणयोः सेतुबन्धोऽयम्, सङ्ग्रहरामायणं नाम । कथं सङ्ग्रहरामायणम्? रामायणस्य सङ्ग्रहः सङ्ग्रहेण वा रामायणम् । अथ रामकथां सञ्जिघृक्षुः कविरिष्टदेवतामभिष्टवीति– वन्दे वन्द्यमिति । वृन्दारका इति सर्वे देवाः । तेषामिन्द्रास्तत्त्वमानिनो विधिशिवमहेन्द्रादयः । देशतः कालतः स्वरूपगुणतश्च व्याप्तमनन्तम् । ज्ञानिनां हृदि व्यक्तम् । सगुणत्वेन साक्षात्कृतम् । कथं तर्हि निर्गुणत्व-वचनम्–'साक्षी चेता केवलो निर्गुणश्च' इति? आह– धूतावद्यम् । त्रिगुणमूलान्यवद्यानि । अयं त्रिगुण-वर्जितः । अत एव निर्गुण उच्यते । ननु निराकारं ब्रह्मेत्याचक्षते । तत् कथं ज्ञानिभिः साक्षात्कृतम्? आह– सुखचितिमयैः । मङ्गळैः, 'यत् ते रूपं कल्याणतमम्' इति श्रुतिः, अङ्गैर्युक्तम् । 'अङ्गं वपुर्वर्ष्म पुरं च पिण्डम्' इति, 'आहुः प्रतीकमवयवमपघनमङ्गम्' इति चाभिधानम् । तेन सर्वे नाथवन्त इत्याह–सानाथ्यं नो विदधत् । तत् तु सर्वाधिकम् । ब्रह्म नारायणाख्यम् । 'तदेव ब्रह्म परमं कवीनाम्' इति श्रुतिः । 'नारायणः परं ब्रह्म' इति च । नारा निर्दोषा रमा । तस्या अयमयन इति मङ्गळदेवता रमाऽपि वन्दिता । आद्यं पद्यद्वयं मन्दाक्रान्ताबद्धम् । मभनतता गौ च मन्दाक्रान्ता ॥ १ ॥

**भूषारत्नं भुवनवलयस्याखिलाश्चर्य्यरत्नं**
**लीलारत्नं जलधिदुहितुर्दैवतामौलिरत्नम् ।**
**चिन्तारत्नं जगति भजतां सत्सरोजद्युरत्नं**
**कौसल्याया लसतु मम हृन्मण्डले पुत्ररत्नम् ॥ २ ॥**

**(भा.दी.)** एतद्ग्रन्थप्रतिपाद्यं श्रीरामचन्द्रं प्रार्थयते– **भूषारत्नमिति** । भुवनवलयस्य भुवनानां वलयं मण्डलं तस्य, भुवनं वलयमिव कङ्कणमिव भुवनवलयं तस्येति वा । भूषाया अलङ्क्रियाया रत्नमिव भूषारत्नम् । 'भूषा च स्यादलङ्क्रिया' इत्यभिधानम्[१] । भूषार्थं विद्यमानं रत्नमिव भूषारत्नमिति वा । अखिलानां समस्तजनानाम् आश्चर्यरूपं रत्नमिव अखिलाश्चर्यरत्नम् । तादृशसौन्दर्यादिविशिष्टवस्त्वन्तराभावादिति भावः । जलधिदुहितुः, जलानि धीयन्तेऽत्रेति जलधिः समुद्रः, तस्य दुहिता सुता, तस्याः महालक्ष्म्याः सीताया इति यावत् । लीलायाः

१. 'इत्यभिधानात्'

क्रीडायाः रत्नमिव लीलारत्नम् । लीलार्थं विद्यमानं रत्नमिव लीलारत्नमिति वा । मौलेः शिरसो रत्नं (मौलिरत्नम्) । देवतानां मौलिरत्नमिव शिरोमणिरिव देवतामौलिरत्नम् । देवताश्रेष्ठमित्यर्थः । जगति लोके, भजतां सेवमानानाम्, जनानामिति शेषः । चिन्तायाः इच्छायाः पूरकं रत्नमिव चिन्तारत्नम्, चिन्तितार्थ-प्रदातृत्वाच्चिन्तामणिमिव वर्तमानमित्यर्थः । सन्तः सज्जना एव सरोजानि कमलानि तेषां बोधने द्युरत्नमिव सूर्य इव सत्सरोजद्युरत्नम् । 'द्युमणिस्तरणिर्मित्रः'[१] इत्यमरः । कौसल्यायाः कौसल्यादेव्याः पुत्ररत्नं पुत्राख्यं रत्नमिव, मम हृन्मण्डले हृदो हृदयस्य मण्डलं प्रदेशस्तस्मिन्, हृदयकमल इत्यर्थः । लसतु भातु क्रीडतु वा । लस श्लेषणक्रीडनयोः । लोट् ॥ २ ॥

**(सं.चं.)** इष्टं विशिष्टं ब्रह्मैव रामाख्यमजनीत्यधिकृततयाऽपि स्तौति । कौसल्यायाः पुत्ररत्नम् । रत्नशब्दः श्रेष्ठवचनः । श्रेष्ठः पुत्रः । भूषारत्नमित्यधिकं भूषणम् । आश्चर्यरत्नमित्याश्चर्यतमम् । जलधिदुहितुर्लीला-रत्नम् । रत्नाकरस्य दुहिता रमा स्वरमणाय रमणीयं स्वरमणं पुरुषरत्नं लेभ इत्यर्थः । 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी । देवतानां मौलिरत्नमिवोपरि स्थितम् । सर्वदेवोत्तमम् । भजतां चिन्तामणिरिव चिन्तितार्थप्रदम् । सत्सरोजानां द्युरत्नमिव सूर्य इव विकासहेतुः । 'तिमिररिपुर्द्युमणिरंशु-मानंशुः' इत्यभिधानम् । अनेन ग्रन्थस्य विषयादिकमपि सूचयाम्बभूव । रामाख्यं ब्रह्म विषयः । सन्तोऽधिकारिणः । मोक्षाद्यभीष्टप्राप्तिः फलम् । हृन्मन्दिरे विकसनं साक्षात् फलम् । यथायोग्यं च दातृदेयादिः सम्बन्धः ॥ २ ॥

**महाव्याकरणाम्भोधिमन्थमानसमन्दरम् ।**
**कवयन्तं रामकीर्त्या हनूमन्तमुपास्महे ॥ ३ ॥**

**(भा.दी.)** अथ सकलसुरवरगुरोः श्रीमुख्यप्राणस्य रूपत्रयं क्रमेण प्रणमति– **महाव्याकरणे**त्यादिश्लोक-त्रयेण । वयं महत् यद् व्याकरणं व्याकरणशास्त्रं [२]तदेवाम्भोधिरिव तस्य मन्थः मन्थनदण्डायितः । 'मन्था मन्थश्च मन्थानः' इति हलायुधः । मानसमेव मन एव मन्दरो मन्दरपर्वतो यस्य स महाव्याकरणाम्बोधि-मन्थमानसमन्दरः, तम् । भगवता सङ्कर्षणेन कृतमूलव्याकरणशास्त्रार्थविचारपरमित्यर्थः । रामकीर्त्या श्रीरामस्य यशसा । [३]कवयन्तं कवित्वं कुर्वाणम् । कव शब्द इति धातोः । गायन्तमिति वा । श्रीरामस्य[४] कीर्तिप्रतिपादक-

१. **'–तरणिर्भानुः'** २. **'तदम्भोधिरिव'**

३. पाणिनीयाः कवधातुं न पठन्ति । **'कुङ् शब्दे'** इति पठन्ति । **'कु शब्दे'** इति च । सर्वत्रापि **'कावयति, कावयन्तम्'** इत्येव रूपमिति पाणिनिनयज्ञाः।

४. **'श्रीरामकीर्तिप्रतिपादनपरमूलरामायणादिगान–'**

मूलरामायणगानपरमित्यर्थः । तनुतनूशब्दवद्धनुहनूशब्दौ पर्यायौ । एवं च हनुरस्यास्तीति हनुमान्, तम् । हनुशब्देन हन्ति चणकादिकमिति व्युत्पत्त्या कपोलयोः परभाग उच्यते । 'कपोलौ तत्परो हनुः' इत्यभिधानात् । हन्ति संसारमिति व्युत्पत्त्या ज्ञानं चोच्यते । 'हनुशब्दो ज्ञानवाची' इत्युक्तेः[१] । हनुमच्छब्दवद्धनूमच्छब्दोऽपि प्रसिद्धः । 'आञ्जनेयस्तु हनुमान् हनूमान् मारुतात्मजः' इत्यभिधानात् । उपास्महे सेवामहे । उपपूर्वादास उपवेशन इत्यस्माल्लट् । तद्विषयद्ध्यानादिकं कुर्म इत्यर्थः । ननु उपवेशनार्थस्यास्य धातोर्ध्यानार्थकत्वं कथमिति चेदुच्यते । धातूनामुपसर्गवशादनेकार्थत्वं प्रसिद्धम् । यथा आगच्छति अवगच्छति प्रभवति अनुभवति इत्यादिषु धातूनामनेकार्थत्वम् । उपसर्गास्तु तद्व्यञ्जकाः । यथा 'केशान् प्रशस्तान् करोति' इत्यर्थे 'केशान् करोति' इत्यादिषु । नचैवमर्थाव्यवस्था । 'धातवश्चोपसर्गाश्च निपाताश्चेति ते त्रयः । अनेकार्था इति ज्ञेयाः पाठस्तेषां निदर्शनम्' इति प्रयोगशरणैर्वैयाकरणैरेव समाहितत्वात् ॥ ३ ॥

**(सं.चं.)** यथा देवे तथा गुरावपि भक्तिः करणीयेति लोकगुरोः प्रथमावतारं स्तौति । रामायणस्योपनायकतया चायं नम्यः । महाव्याकरणाम्भोधेर्मथने यस्य मानसमन्दरो मन्थायते । मध्वरूपस्यापि समानमेतत् । 'सोऽयं नवव्याकरणार्थवेत्ता ब्रह्मा भविष्यति' इति वाल्मीकिवचनम् । रामकीर्त्या हेतुभूतया कवयन्तं गायन्तम् । कविवदाचरति कवयतीत्याचारार्थे क्विप् । हन्तीति हनुर्मतिरुच्यते । हन गतौ । गतिरवगतिः । तेन हनुमानिति मतिमानुच्यते । हनूमानिति दीर्घ आधिक्यवचनः । सर्वज्ञ इत्यर्थः । पाणिनीयास्तु 'शरादीनां च' (अ.सू.६.३.१२०) इति शरादित्वेन दीर्घमिच्छन्ति । तथाहि काशिका–'शरादीनां च मतौ दीर्घो भवति सञ्ज्ञायां विषये । शरावती । वंशावती । शर । वंश । धूम । अहि । कपि । मणि । मुनि । हनु । शरादिः' इति । अस्मिन् पक्षे सञ्ज्ञायां क्वचिद् दीर्घो नियतः । नहि शरावती शरवती भवति । न धूमावती धूमवती । अत्र तु न नियतः, यतः हनूमान् हनुमानपि भवति । उपास्महे शास्त्रोदितं तत्स्वरूपमभिज्ञाय ध्यायामः ॥ ३ ॥

**मुख्यप्राणाय भीमाय नमो यस्य भुजान्तरम् ।**
**नानावीरसुवर्ण्णानां निकषाश्मायितं बभौ ॥ ४ ॥**

**(भा.दी.) मुख्येति** । यस्य भीमस्य भुजान्तरं भुजयोरन्तरं मध्यं वक्षस्थलमित्यर्थः । नानाविधा ये वीरास्त एव सुवर्णानि तेषां निकषाश्मायितम् । निकषस्य घर्षणस्य अश्मा तद्वदाचरतीति तथोक्तम्[२] । स्वर्णपरीक्षापाषाणायितं सदित्यर्थः । बभौ शुशुभे । भा दीप्तौ लिट् । मुख्यश्चासौ प्राणश्च तस्मै । मुख्यप्राण-

१. **'हनशब्दो ज्ञानवाची'** इति प्राचीनः पाठः ।
२. इतः परम्, **'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् इत्यमरः'** इति क्वचित् ।

स्वरूपायेत्यर्थः । यद्वा मुख्यः श्रेष्ठः प्राणो बलं यस्य स तथोक्तस्तस्मै । 'प्राणस्तु प्रणवे जीवे जीविते परमात्मनि । इन्द्रिये वायुभेदे च बलान्तर्यामिणोरपि' इति वैजयन्ती । यत्तदोर्नित्यसम्बन्धाद्यस्येति यच्छब्द-बलात्तस्मै इति लभ्यते । भृता मा भगवद्विषयिणी पञ्चरात्रादिविद्या येन स भीमस्तस्मै । यद्वा भृता मा विद्याभिमानिनी द्रौपदी येनेति वा । 'मा च विद्या हरेः प्रोक्ता' इति हरिवंशे माशब्दस्य विद्यायां प्रयोगात् । नमः, अस्त्विति शेषः ॥ ४ ॥

**(सं.चं.)** द्वितीयावतारं प्रस्तौति– मुख्यप्राणावताराय भीमाय । एतेनावताररूपेष्वपि पूर्णाभिव्यक्ति-माह । भुजयोरन्तरं वक्षः । निकषाश्मा सुवर्णपरीक्षणपाषाणः । 'निकषः शाणफलके' इति मेदिनी । वीराः सुवर्णानीव तेषां सत्वपरीक्षणे वक्षो निकषाश्मेव बभौ । हनुमद्रूपस्यापि समानमेतत् ॥ ४ ॥

**स्वान्तस्थानन्तशय्याय पूर्ण्णज्ञानरसाण्र्णसे ।**
**उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः ॥ ५ ॥**

**(भा.दी.)** **स्वान्तरि**ति । स्वस्यान्तः स्वान्तः । अन्तरित्यव्ययम् । स्वहृदयमध्य इत्यर्थः । स्वान्तस्तिष्ठतीति स्वान्तःस्थः । स्वान्ते मनसि तिष्ठतीति वा तथोक्तः । सर्वदा मनोविषयीभूत इत्यर्थः । अनन्तः शेषः शय्या पर्यङ्को यस्य स तथोक्तः । ततः स्वान्तस्थोऽनन्तशय्यः श्रीनारायणो यस्य सः स्वान्तस्थानन्तशय्यस्तस्मै । ज्ञानस्य रसः सारो ज्ञानरसः, श्रेष्ठं ज्ञानमित्यर्थः । 'रसः सारो वरश्चेति शब्दा एकार्थवाचकाः' इत्युक्तेः । पूर्णः इतरजीवेभ्योऽतिशयितो यो ज्ञानरसः स अर्ण इव उदकमिव यस्य स तथा तस्मै । उत्तुङ्गाः उन्नताः विष्णोः सर्वोत्कृष्टत्वाद्युन्नतार्थप्रतिपादिका या वाचस्ता एव तरङ्गा यस्य स तथोक्तस्तस्मै । मध्वित्या-नन्दस्य सञ्ज्ञा । वमिति तीर्थमुच्यते । 'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्' इति वचनात् । तथाच मध्विति आनन्द इति वं तीर्थम् अवतारो[1] यस्य स मध्वः । यद्वा मधु आनन्दकरं वं तीर्थं शास्त्रं यस्मादिति तथोक्तः । 'तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि वाचने । पात्रोपायावतारेषु' इति वैजयन्ती । यद्वा मधु-शब्देनेन्द्रियमुच्यते । 'मधुरिन्द्रियनामा' इति हरिवंशेऽभिधानात् । तथाच मधुनाम्ना चक्षुरिन्द्रियेण वाति सर्वदाऽपरोक्षतोऽवगच्छति भगवन्तमिति वा मध्वः । स एव दुग्धाब्धिस्तस्मै नमः । क्षीरसमुद्रोऽपि द्वीपे भगवतोऽवस्थितत्वेन स्वान्तस्थानन्तशय्यः, परिपूर्णक्षीरसागरमयोदकः, उत्तुङ्गतरङ्गश्च भवतीत्यत आनन्दतीर्थानां क्षीरसमुद्रत्वेनोत्प्रेक्षा युक्तैव ॥ ५ ॥

---

१. नेदं स्वरसम् । नहि यावन्तस्तीर्थपदार्थास्तावन्तः सर्वे वकारस्याप्यर्था इति वक्तुं शक्यम् । तीर्थशब्दश्च न भूमाववतारवाचकः । किन्तु जलावतारस्थानवाचकः । **'स्नानघट्ट'** इति भाषायाम् । **'मधु सुखकरं वं तीर्थं शास्त्रं यस्मात् सः । निरुक्तत्वात् मधुशब्दे उकारलोपः'** इति काशीश्रीनिवासाचार्यटीका ।

**(सं.चं.)** अथ तृतीयावतारं साक्षाद् गुरुं नमति । अनन्तशयनः स्वस्य दुग्धाब्धेरन्तर्मध्ये तिष्ठति । मध्वस्य स्वान्ते मनसि तिष्ठति । 'खर्परे शरि वा लोपो वक्तव्यः' (अ.सू.८.३.३६) इति वार्तिकवचनात् विसर्जनीय-लोपः । पूर्णो ज्ञानरसः पूर्णा प्रज्ञा । उत्तुङ्गा भगवत्पारम्यवचनादुन्नता वाचः । उद्वेलास्तरङ्गाः ॥ ५ ॥

**सूक्तिरत्नाकरे रम्ये मूलरामायणार्ण्णवे ।**
**विहरन्तो महीयांसः प्रीयन्तां गुरवो मम　　　　॥ ६ ॥**

**(भा.दी.)** त्रिविक्रमार्यान् प्रार्थयते– **सूक्ती**ति । श्रीरामकथारूपत्वेन सु शोभना उक्तयस्ता एव रत्नानि तेषामाकर उत्पत्तिस्थानम्, आश्रय इत्यर्थः, तस्मिन् । 'आकरो निकरे खनौ' इति वैजयन्ती । रम्ये सतामति-मनोहरे । मूलम् आदिभूतं यद्रामायणम् । 'मूलं वशीकृतौ स्वीये शिफातारान्तिकादिषु' इति वैजयन्ती । तदेवार्णवस्तस्मिन् । विहरन्तः क्रीडन्तः तच्छ्रवणादिपरा इत्यर्थः । महीयांसः अतिशयेन पूज्याः मम गुरवः त्रिविक्रमपण्डिताचार्यनामका अस्मद्गुरवः पितरः प्रीयन्तां प्रीता भवन्तु । प्रीङ् प्रीणने लोट् ॥ ६ ॥

**(सं.चं.)** पितरं प्रीणयति– प्रीयन्तां गुरवस्त्रिविक्रमार्या ममेति । जनक इति ज्ञानद इति गौरवाद् बहु-वचनम् ॥ ६ ॥

**वाल्मीकेर्ग्गौः पुनीयान्नो[१] महीधरपदाश्रया ।**
**यद्दुग्धमुपजीवन्ति कवयस्तर्ण्णकाइव　　　　॥ ७ ॥**

**(भा.दी.)** श्रीमदानन्दतीर्थानामभिमत्या वाल्मीकिरामायणस्य तात्पर्यार्थं वक्तुं प्रवृत्तो[२] नारायणपण्डिताचार्य-स्तद्रामायणरूपवाचं प्रार्थयते– **वाल्मीके**रिति । कवयः ज्ञानिनः यद्दुग्धं यस्या वाल्मीकिवाचो दुग्धं साररूपं क्षीरं तत्, वाल्मीकिरामायणतात्पर्यार्थमित्यर्थः । तर्णकाइव सद्योजातवत्साइव । 'सद्योजातस्तु तर्णकः' इत्यमरः । उपजीवन्ति अनुसृत्य जीवन्ति, श्रीरामचरितं यद्बलात् ज्ञात्वा काव्यादिकं कुर्वन्तीत्यर्थः । जीव प्राणधारणे लट् । महीं भूमिं धरतीति महीधरः सर्वजगद्धारकः श्रीरामरूपी हरिस्तस्य पदं पादः, पद्यते ज्ञानिभिर्ज्ञायत इति पदं स्वरूपं वा । तदाश्रयो यस्याः सा तथोक्ता । 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । श्लेषार्थे तु महीधरः पर्वतस्तस्य पदं कटकादिस्थानमाश्रयो यस्याः सा तथोक्ता । वल्मीकादुत्पन्नो वाल्मीकिस्तस्य । रामायणग्रन्थरूपा गौः वाक् । 'दिग्-दृष्टि-दीधिति-स्वर्ग-वज्र-वाग्-बाण-वारिषु । भूमौ पशौ च गोशब्दः' इति हलायुधः । वः युष्मान् पुनीयात् पवित्रीकुर्यात् । पूञ् पवने लिङ् ॥ ७ ॥

---

१. **'पुनीयाद् वो–'** इति वि.ती.पाठः ।　　　२.**'प्रवृत्ता..चार्या..प्रार्थयन्ते'**

**(सं.चं.)** मूलग्रन्थकर्तारं स्मरति– वाल्मीकेः । गौरिति माहेयी । गौरिति वाणी । महीधरो नारायणः । मही हि तस्य महिळा रजोमानिनी । महीं च धत्ते वराहो भूत्वा । 'महीधरो महाभागः' इति विष्णुसहस्र-नामसु । तत्पादसङ्गिनी वाल्मीकिवाणी । क्षत्रियो भूत्वा महीं पालयामासेति रामोऽपि महीधरः । माहेयी च घासार्थं पर्वतप्रत्यन्तचारिणी । दुग्धं पयस्तुल्यमर्थजातम् । तर्णकाइव, वत्साइव । 'वत्सस्तु तर्णकः' इति वैजयन्ती । समस्तं चेदं पदम् । 'इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' इति वार्तिकात् (अ.सू.२.२.१८) ॥ ७ ॥

**एको नारायणोऽग्रेऽभूत् पूर्णागण्यगुणार्णवः ।**
**आत्मारामोऽपि रमया रममाणोऽभिरामया ॥ ८ ॥**

**(भा.दी.)** एवं स्वेष्टदेवतागुरुवन्दनादिकं विधाय श्रीरामस्य चरित्रं वर्णयितुकामस्तदुपयुक्ततया सूर्यवंशं सङ्क्षेपतो वर्णयितुमुपोद्घातसङ्गत्याऽऽदिसृष्टिं वक्तुं श्रीनारायण एव सर्वस्याप्यादिकारणं नान्य इत्यभिप्रायेण तस्य सर्गाद्यकालेऽवस्थितिमाह– **एक** इति । पूर्णा निरवधिकाः, अगण्याः गणयितुमशक्याः, ये गुणाः ज्ञाना-नन्दादयस्तैरर्णव इवार्णवः । एकः नारायणः । नारा आपः अयनमाश्रयो यस्य स तथोक्तः । 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इत्युक्तेः । आत्मारामः आत्मना स्वस्वरूपसुखेन आ सम्यक् रमत इति तथोक्तः । अपि तथाऽपि । अभिरामया मनोहरया रमया लक्ष्म्या रममाणः सन् क्रीडन् सन् । स्वयं स्वरमणत्वेन परानपेक्षोऽपि लक्ष्म्यां विद्यमानानुग्रहातिशयेन तया सह क्रीडन् सन्निति भावः । अग्रे आदिकाले । 'पुरोऽधिकमुपर्यग्राणि' इत्यमरः। अभूत् अवर्तत । भूसत्तायां लुङ् ॥८॥

**(सं.चं.)** अथ कथां प्रस्तौति– एकः । 'नारायणो वा इदमग्र आसीत्' इति श्रुतिः । 'लक्ष्मीभुजान्तरगतः स्वरतोऽपि चाग्रे' इति चाऽचार्यवचनम् ॥ ८ ॥

**निद्रामुद्राविलसितं भुक्त्वा विश्वमधीश्वरम् ।**
**तमवन्दन्त वेदान्ता नरेन्द्रमिव वन्दिनः[1] ॥ ९ ॥**

**(भा.दी.)** **निद्रे**ति । वेदान्ता उपनिषदः । विश्वं जगत् । 'विश्वं जगति सर्वस्मिन्' इति वैजयन्ती । भुक्त्वा संहृत्य । निद्रैव योगनिद्रैव मुद्रा चिह्नमात्रं[2] तया विलसितं विराजितम् । अधिकश्चासौ ईश्वरश्च तं हरिम् । वन्दिनः प्रबन्धस्तुतिपाठकाः नरेन्द्रमिव अवन्दन्त अस्तुवन् । वदि अभिवादनस्तुत्योः लङ् ॥ ९ ॥

---

१. **'बन्दिनः'**

२. **'निद्राया मुद्रा चिह्नम्, निमीलितनेत्रत्वादिकम्'** इति का.श्री.टीका ।

**(सं.चं.)** विश्वं भुक्त्वा जठरे निधाय। भोजनान्ते निद्राणमनुकुर्वाणमिव निद्रामुद्राविलसितम्। नाट्यमुद्रेव च निद्रामुद्रा। निद्रामुद्राणां नेत्रनिमीलनादीनामनुकरणमात्रम्। न वास्तवी निद्रेत्यर्थः। वेदान्ताः। अन्त-शब्दः स्वरूपवचनः। वेदरूपा मन्त्राः। तन्मानिनी स्वयं प्रकृतिः। 'श्रीर्भूमिरिति रूपाभ्यां प्रकृतिर्विष्णुना सह। शेते श्रुतिस्वरूपेण स्तौति ब्रह्मलये हरिम्' इति हि स्मरन्ति। प्रळये तं श्रुतिगीताभिरवन्दन्त तुष्टुवुरित्यर्थः। कुतः? अधीश्वरत्वात्। प्रकृतेरपीश्वरो हि सः॥ ९॥

**कृतकृत्योऽपि भक्तानां भूतये भगवानयम्।**
**सिसृक्षति स्म सकलं [१]सुरासुरनरादिकम् ॥ १० ॥**

**(भा.दी.)** उपनिषद्भिः स्तुतिपूर्वकं सृज्यवर्गस्य सृष्टिः कर्तव्येत्यर्थितेन हरिणा स्वप्रयोजनाभावात् किमुपेक्षा कृता, नेत्याह– **कृते**ति। भग इति षड्गुणानां सञ्ज्ञा। 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीरणा' इत्युक्तेः। भगोऽस्यास्तीति भगवान्। 'तदस्यास्त्यस्मिन्निति मतुप्' (अ.सू.५.२.९४)। 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः'(अ.सू.८.२.९) इत्यवर्णान्ताद् भगशब्दात् परस्य मतुपो मकारस्य वकारादेशश्च। अयं श्रीहरिः कृतं कृत्यं स्वप्रयोजनं येन स तथोक्तः। अपि तथाऽपि। भक्तानां ब्रह्मादीनां भूतये स्वरूपानन्दाविर्भावलक्षणसम्पदर्थम्। 'विभूतिर्भूतिरैश्वर्यम्' इत्यमरः। सुराः ब्रह्मादयस्ते च असुराश्च नराश्च त एव आदयो यस्य तथोक्तं तत्। 'शेषाद् विभाषा' (अ.सू.५.४.१५४) इति बहुव्रीहौ कप्। सकलं जगत् सिसृक्षति स्म स्रष्टुमैच्छत्। सृज विसर्गे लट्। तथाच 'सोऽयं विहार इह मे तनुभृत्स्वभावसम्भूतये भवति भूतिकृदेव भूत्याः' इत्युक्तेर्भगवतः स्वप्रयोजनाभावेऽपि सृष्ट्यादिके कृते सति (जीवाः) स्वस्वयोग्यसाधनसम्पत्त्या स्वस्वयोग्यमोक्षं प्राप्नुवन्त्यन्यथा तत्साधनाभावात् तेषां मोक्षो न स्यादित्यतः परप्रयोजनमुद्दिश्यैव भगवतः केवलं कृपापारवश्यादेव प्रवृत्तिरिति भावः॥ १०॥

**(सं.चं.)** कृतकृत्योऽपीति। 'स्वानन्दतुष्टवपुषोऽपि रमारमस्य। भूत्यै निजाश्रितजनस्य हि सृज्यसृष्टावीक्षा बभूव' इति भगवत्पादवचनम्॥ १०॥

**वासुदेवोऽभवद् देवो मायया प्रियया युतः।**
**सर्वमुर्वारुकमिव मोचयेद् यो निबन्धनात् ॥ ११ ॥**

१. 'सकलं देवासुरनरादिकम्'

**(भा.दी.)** तत्र भगवत्स्वरूपाणामाविर्भावलक्षणसृष्टिमाह– **वासुदेव** इत्यादिना । देवः क्रीडादिगुण-विशिष्टः श्रीहरिः मायया मायाख्यया प्रियया भार्यया युतः युक्तः, वसतीति वासुः, दीव्यतीति देवः, वासुश्चासौ देवश्च वासुदेवः, वासुदेवनामकः सन्नित्यर्थः । अभवत् प्रादुरभूत् । भू सत्तायां लङ् । तथाहि हरिवंशे नाम-निर्वचनम्– 'वसनाद् देवनादेव वासुदेवेति शब्दितः' इति । अवतारकृत्यं सदृष्टान्तमाह–**सर्वमि**ति । यः वासुदेवः सर्वं मोक्षयोग्यं चेतनजातं तत्, नितरां बन्धनं निबन्धनं तस्मात् अनादिकालमारभ्य बन्धनभूतात् संसारा-दित्यर्थः । निबद्धयते फलमनेनेति निबन्धनं वृन्तं तस्मात् उर्वारुकमिव उर्वारुकपक्कमिवेति निबन्धनपदस्याऽ-वृत्त्या योज्यम् । 'इवेन नित्यसमासो विभक्त्यलोपश्च'[१] (अ.सू.२.२.१८) इत्युक्तेर्नित्यसमासोऽयम् । मोचयेत् मोचनं कुर्यात् । मुच्लृ मोचने लिङ् ॥ ११ ॥

**(सं.चं.)** चतुर्मूर्तेर्भगवत आद्या मूर्ती रामो बभूव । अपरास्तिस्रस्त्रिषु रामभ्रातृषु सन्निहिता अभवन्निति वक्ष्यति । कास्ताश्चतुर्मूर्तय इतीदानीमाह । तत्राप्यादौ निजमुक्तिपदप्रदं प्रथमं वासुदेवरूपमाह । यदा नारा-यणो वासुदेवो बभूव तदा रमाऽपि माया बभूव । 'उर्वारुकमिव बन्धनात्' इति श्रुतिः । उर्वारुकम्– 'ꣁꣂꣃ' इति भाषायाम् । सर्वं सात्विकं जनम् । नियतं बन्धनं निबन्धनं संसाराख्यम् । नीचं बन्धनं निबन्धनम् । दुःखबहुलत्वात् । नितरां बन्धनं निबन्धनम् । अनादित्वात् । योनिबन्धनादिति वा । योनिरूपं बन्धनम्, योनेर्वा बन्धनम्, तस्मात् । 'योनेः शरीरम्' (३.१.२८) इति वेदान्तसूत्रम् ॥ ११ ॥

**सङ्कर्षणाख्यः संहारी जयाजानिरजन्यसौ ।**
**यत्रोरुज्वलनज्वाले जगदाज्यकणायितम् ॥ १२ ॥**

**(भा.दी.) समि**ति । असौ श्रीहरिः । संहर्तुं शीलं यस्याऽसौ संहारी । 'सुप्यजातौ णिनिस्ताच्छील्ये' (अ.सू.३.२.७८) इति णिनिः । ननु 'ताच्छीलिकणिनेः सुबुक्तिः प्रादिनिवृत्त्यर्था' इत्युक्तेः कथमेतदिति-वाच्यम् । वैयाकरणैरेव तस्य निरस्तत्वात् । [२]प्रसिद्धश्च प्राद्युपपदत्वेऽपि णिनिः–'स बभूवोपजीविनाम्', 'अनुयायिवर्गः' इत्यादौ । यद्वा संहरणं संहारः सोऽस्यास्तीति संहारी । मत्वर्थे 'अत इनिठनौ' (अ.सू.५.२.११५) इतीनिः । संहारकर्तेत्यर्थः । 'नच 'एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ स्मृतौ' इति निषेधादिनिप्रत्ययोऽपि कथं स्यादिति वाच्यम् । वैय्याकरणैरेव तस्य प्रायिकत्वाभ्युपगमात् । यद्वा 'बहुलमाभीक्ष्ण्ये' (अ.सू.३.२.८१)

१. **'इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्'** इति वार्तिकपाठो जयादित्यसम्मतः (अ.सू.२.२.१८) ।

२. **'सुपीति वर्तमाने पुनः सुब्ग्रहणमुपसर्गव्यावृत्त्यर्थम्'** इति काशिकाकारः । वार्तिकेऽप्येवम् । अत आह– प्रसिद्धश्चेति । अत्र भट्टोजिमनुसरति टीकाकारः । तथाहि तद्वचनम्– **'प्रसिद्धश्चोपसर्गेऽपि णिनिः । स बभूवोपजीविनाम् । अनुयायिवर्गः । पतत्यधो धाम विसारि । न वञ्चनीयाः प्रभवोऽनुजीविभिरित्यादौ'** इति ।

इत्याभीक्ष्ण्ये णिनिः । जया जयाख्या जाया भार्या यस्य स जयाजानिः । जायायाः 'जायाया निङ्' (अ,सू.५.४.१३४) इति निङादेशे सति, 'लोपो व्योर्वलि'(अ.सू.६.१.६६) इति यलोपश्च । सं सम्यक् कर्षति संहरतीति सङ्कर्षणः, सङ्कर्षण इत्याख्या यस्य स तथोक्तः सन् अजनि प्रादुर्भूतः । जनि प्रादुर्भावे लुङ् । संहर्तृत्वमेवोपपादयति– **यत्रे**ति । उरुरुत्कृष्टो यो ज्वलनोऽग्निस्तस्य ज्वालेव ज्वाला यस्य स तथोक्तस्तस्मिन् यत्र यस्मिन् सङ्कर्षणे । जगत्, गच्छति नश्यतीति कर्त्रर्थे 'द्युति-गमि-जुहोतीनां द्वे च' (अ.सू.३.१.१७८) इति वार्तिकेन क्विपि द्वित्वादिके सति निष्पन्नेन जगच्छब्देन कार्यजातमुच्यते। आज्य-कणायितम्, आज्यस्य घृतस्य कणो बिन्दुः । तद्वदाचरतीति तथोक्तम् ॥ १२ ॥

**(सं.चं.)** अथ संहारकारणं द्वितीयं रूपमाह– सङ्कर्षणाख्यः । तदा रमा जया भूत्वा तस्य जाया बभूव ॥ १२ ॥

**कृतिप्रकृतिरप्यासीत् प्रद्युम्नः सर्वसृष्टये ।**
**अवैकृतोऽप्राकृतोऽपि चित्रं चरितमीशितुः ॥ १३ ॥**

**(भा.दी.)** **कृती**ति । श्रीहरिः विकृतं विकारः, 'नपुंसके भावे क्तः' (अ.सू.३.३.११४) इति क्तः । विकृतमेव वैकृतम् । प्रज्ञादित्वात् स्वार्थेऽण् । न विद्यते वैकृतमुत्पत्तिविनाशादिविकारो यस्याऽसौ अवै-कृतः । प्राकृतं प्रकृतिविकारः गुणत्रयादि । 'तस्य विकारः' (अ.सू.४.३.१३४) इत्यण् । न विद्यते प्राकृतं प्रकृतिकार्यं सत्त्वादि यस्य सोऽप्राकृतः । अपि तथाभूतोऽपि, जन्मादिकारणीभूतप्रकृतिप्राकृतसम्बन्ध-रहितोऽपीत्यर्थः । कृतिः कृतिनाम्नी प्रकृतिर्महालक्ष्मीर्यस्य स तथोक्तः । महालक्ष्म्यवतारभूतकृत्याख्यभार्ययोपेत इत्यर्थः । प्रकृष्टं द्युम्नं पराक्रमो यस्य स तथोक्तः । प्रकृष्टं द्युम्नं धनं यस्य स तथेति (वा) । 'पराक्रमे धने द्युम्नम्' इति वैजयन्ती । सर्वसृष्टये, सर्वस्य स्रष्टुं योग्यस्य सृष्टिस्तस्यै आसीत् । अस भुवि लङ् । न तु लुङ् । लुङादौ 'अस्तेर्भूः' (अ.सू.२.४.५२) इति भू इत्यादेशविधानात् । ननु शरीरमात्रस्य प्राकृतत्वविकारित्वनियमात् तत्सम्बन्धरहितस्य वासुदेवादिरूपेण कथं प्रादुर्भाव इत्यत आह– **चित्रमि**ति । ईशितुः सर्वसमर्थस्य श्रीहरेः चरितं प्रादुर्भावादिलक्षणं चरित्रं चित्रमलौकिकम् । तथाच तस्य स्वतन्त्रत्वेनाचिन्त्यशक्तित्वादन्यत्रैवं नियमेऽपि तच्छरीरे नैतच्छङ्कावकाश इति भावः ॥ १३ ॥

**(सं.चं.)** सृष्टिकारणं तृतीयं रूपमाह– प्रद्युम्नः सर्वसृष्टये । तदा चित्प्रकृतिस्तस्य जाया कृतिर्बभूव । अवैकृतोऽप्यजनि । अप्राकृतोऽपि प्रकृतिजानिः ॥ १३ ॥

**शान्तिकान्तोऽनिरुद्धोऽथ जगतः स्थितयेऽभवत् ।**
**एवं पञ्चात्मनोऽप्यस्य पञ्चत्वं नातिशङ्कयताम् ॥ १४ ॥**

**(भा.दी.) शान्ती**ति । अथ प्रद्युम्नावतारानन्तरम्, श्रीहरिः शान्तिः शान्तिनाम्नी कान्ता भार्या यस्य स तथोक्तः । शान्तेः कान्तो भर्तेति वा । अनिरुद्धः, न निरुद्धयते शत्रुभिरित्यनिरुद्धनामकः सन्, जगतः चेतनाचेतनात्मकजगतः स्थितये पालनाय अभवत् अवतीर्णः । भू सत्तायां लङ् । प्रादुर्भूतानामेषां नाशोऽस्ति किम्? नेत्याह– **एवमि**ति । पञ्चात्मनः मूलरूपेण सह पञ्च आत्मानो रूपाणि यस्य स तथोक्तस्तस्य । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः । अपिरभिव्याप्तौ । पञ्चरूपवतोऽपीत्यर्थः । अस्य हरेः पञ्चानां पृथिव्यादिपञ्चमहाभूतानां भावः पञ्चत्वं मरणमित्यर्थः । 'मरणं पञ्चत्वमत्ययः कालः' इति हलः । तत् नातिशङ्कयतां सर्वथाऽपि न शङ्कयताम् । शकि शङ्कायां लोट् ॥ १४ ॥

**(सं.चं.)** अथ स्थितिहेतुं चतुर्थं रूपमाह– शान्तिकान्तः । शान्तिरस्य कान्ताऽभवत् । कान्तश्चायं शान्तेः । 'पञ्चत्वं मरणं मृत्युः' इति यादवप्रकाशः ॥ १४ ॥

**दशात्मा द्वादशात्माऽऽसीत् शतं दशशती च सः ।**
**एकोऽप्यनन्तश्चित्रं तद्योगैश्वर्य्यविजृम्भितम् ॥ १५ ॥**

**(भा.दी.) दशे**ति । सः श्रीहरिः एकोऽपि, (दशात्मा) दश आत्मानः स्वरूपाणि यस्य स तथोक्तः, मत्स्यादिदशरूप इत्यर्थः, आसीत् । अस भुवि लङ् । द्वयधिका दश द्वादश, 'द्वयष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः' (अ.सू.६.३.४७) इति द्विशब्देकारस्याकारादेशः । द्वादश आत्मानः स्वरूपाणि यस्येति तथोक्तः । केशवादिद्वादशरूप इत्यर्थः, आसीत् । शतं नारायणादिशतरूप इत्यर्थः, आसीत् । दशानां शतानां समाहारो दशशती । 'द्विगोः' (अ.सू.४.१.२१) इति ङीप् । विश्वादिसहस्ररूप इत्यर्थः, आसीत् । सः हरिः न विद्यते अन्तोऽवसानं सङ्ख्यातो यस्येत्यनन्तः, अजितादिरूपेणापरिमितसङ्ख्याकश्चेत्यर्थः, आसीत् । ननु परमार्थत एकस्वरूपस्य दशद्वादशादिरूपवत्त्वं विरुद्धमित्यतः किमनिर्वाच्यमायाकल्पितमिदम्? नेत्याह– **चित्रमि**ति । तस्य विष्णोर्योगैश्वर्यं योगसामर्थ्यम्, तस्य विजृम्भितं विकासः, प्रकटनमिति यावत् । चित्रमाश्चर्यभूतम् । तथाच परमार्थत एकस्वरूपस्यापि परमार्थत एव बहुरूपत्वमपि विष्णुस्वरूपभूतपारमार्थिकाचिन्त्यशक्तिविलासाद् युज्यते । नतु ब्रह्मव्यतिरिक्तानिर्वाच्यमायाशक्त्या । तत्र प्रमाणाभावात् । एवंविधविरुद्धार्थघटनार्थं ह्यनिर्वाच्यमाया कल्प्यते कैश्चित्, तस्याश्च पारमार्थिकब्रह्मरूपभूतशक्त्यैवोपपत्तौ

न तदतिरिक्तानिर्वचनीयमायाकल्पनासम्भावनाऽप्यस्ति । श्रुत्यादयश्चाचिन्त्यविष्णुशक्तित्वेनैवोपपन्ना इति भावः ॥ १५ ॥

**(सं.चं.)** चित्रमनीश्वराणाम् । भगवतस्तु न चित्रम् । योगैश्वर्यात् । तस्य योगैश्वर्यम् । तदिति भिन्नं वा पदम् । तद् एकस्याप्यनन्तरूपत्वम् । ज्ञाने कर्मणि च सर्वसमर्थता योगैश्वर्यम् । सर्वज्ञता सर्वकर्तृता च । योगेश्वरं हि कृष्णमामनन्ति– 'यत्र योगेश्वरः कृष्णः' इति । विजृम्भितं लीला ॥ १५ ॥

**ज्ञानानन्दस्वतन्त्रत्वविश्वैश्वर्य्यादयो गुणाः ।**
**अत्रैगुण्यस्य चागण्याः सर्वे गात्रीभवन्ति हि ॥ १६ ॥**

**(भा.दी.)** ननु प्रकृतितत्कार्यसम्बन्धरहितस्य कथं वासुदेवाद्यवतारेष्वतिसुन्दरशरीरेन्द्रियादिकमित्यत आह– **ज्ञाने**ति । ज्ञानं च, आनन्दश्च, स्वतन्त्रस्य भावः स्वतन्त्रत्वं तच्च, विश्वं परिपूर्णं यदैश्वर्यं तच्च, तानि आदयो येषां ते तथोक्ताः । 'पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम्' इत्यमरः । गणयितुं सङ्ख्यातुं योग्या गण्याः । गण्या न भवन्तीत्यगण्याः, सङ्ख्यातुमशक्या इत्यर्थः । सर्वे गुणा ज्ञानशक्त्यादयो धर्माः । त्रयश्च ते गुणाश्च त्रिगुणाः, त्रिगुणा एव त्रैगुण्यम् । 'चतुर्वर्णादिभ्यः स्वार्थे ष्यञ्'[1] इति चतुर्वर्णादिराकृतिगणत्वेन स्वार्थे ष्यञ् । न विद्यते त्रैगुण्यं यस्येति तथोक्तस्तस्य । चोऽप्यर्थे । सत्वरजस्तमोलक्षणत्रिगुणसम्बन्धरहितस्यापीत्यर्थः । गात्रीभवन्ति हि शरीराणि भवन्ति हि । अभूततद्भावे च्विः । वासुदेवाद्यवताररूपाणि भवन्ति हीत्यर्थः । भू सत्तायां लट् । हिशब्देन 'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः । ज्ञानज्ञानः सुखसुखः स विष्णुः परमाक्षरः' इत्यादिश्रुतिप्रसिद्धिरुक्तार्थे दर्शिता ॥ १६ ॥

**(सं.चं.)** विश्वैश्वर्यं सर्वनियामकत्वम् । विश्वस्य तेन सानाथ्यम् । लोके किल गुणा गात्रे भवन्ति । अस्य तु गात्रीभवन्ति । अन्यत्राभूतस्य तस्मिन् भावश्च्वेरर्थः ॥ १६ ॥

**क्लेशो नाशश्च वैवश्यं जन्मादिरपरोऽपि वा ।**
**नाऽदीनवोऽस्त्यदीनस्य तस्य क्वापि कथञ्चन ॥ १७ ॥**

**(भा.दी.)** चिदानन्दात्मकशरीरत्वादेव क्लेशादिकमपि नाऽशङ्कनीयमित्याह– **क्लेश** इति । दीयते क्षीयत इति दीनः, दीनो न भवतीत्यदीनस्तस्य, अक्षीणस्येत्यर्थः । सर्वदैकप्रकारस्येति यावत्[2] । तस्य हरेः, क्लेशो

---

१. **'चातुर्वर्ण्यादीनां स्वार्थ उपसङ्ख्यानम्'** इति वार्तिकम् (अ.सू.५.१.१२४) ।

२. **'निर्दोषस्येति यावत्'**

दुःखम्, नाशो मृत्युः । 'नाशः पलायने मृत्यौ' इति वैजयन्ती । विवशस्य भावो वैवश्यम्, पराधीनत्वमित्यर्थः । जन्म जननमादिर्यस्य स तथोक्तः । अपरः अन्योऽपि वा । आदीनवः दोषः । 'दोष आदीनवः प्रोक्तः' इत्यभिधानम्[1] । क्वापि देशे काले वा । कथञ्चन केनापि निमित्तेन, स्वतो वा कर्मादिनिमित्तेन वेत्यर्थः, नास्ति ॥ १७ ॥

**(सं.चं.)** अपरोऽपि वा आदीनवस्तस्य नास्ति । 'दोषे त्वादीनवाश्रवौ' इत्यभिधानम् । कथमादीनवः? आदीनं दैन्यम् । दीङ् क्षये । आदीनं वाति गच्छत्यनेनेति । आशां द्यति इष्टं न वापयतीति वा । आदीनं सन्तं वाजयति विधूनयति वा । 'वा गतौ' इत्यस्य विधूननेऽर्थे जुक् । 'वो विधूनने जुक्' (७.३.३८) इति पाणिनिः । अत एव निर्वचनसाम्याद् रोषं क्लेशं च केचिदादीनवमाहुः । कुतो दोषो नास्ति? अदीनत्वात्, सदाऽप्यक्षीणगुणपूर्णत्वात् । दोषो हि दैन्यं जनयति ॥ १७ ॥

**वेदवेदान्तसहिताः सपुराणेतिहासकाः ।**
**पञ्चरात्रसुतर्काद्या एतेष्वर्थेषु साक्षिणः ॥ १८ ॥**

**(भा.दी.)** किमत्र प्रमाणमित्याशङ्कायामतीन्द्रिये भगवत्यसहायशूर आगम एव प्रमाणमित्याह– वेदेति । वेदा ऋगादयस्ते च, वेदान्ता उपनिषदस्ते च । तैः सहिताः, पुराणानि भागवतादीनि तानि च, इतिहासो भारतं स च, तैः सहिताः सपुराणेतिहासकाः । पञ्चरात्रं पञ्चरात्राख्यो मूलरूपिणा श्रीनारायणेन कृतः श्रुतिव्याख्यानात्मकः स च, एवं सुतर्को मूलरूपिणा श्रीनारायणेनैव कृतो ब्रह्मतर्काख्यः स च पञ्चरात्रसुतर्कौ, तौ आद्यौ प्रधानौ येषां ते तथोक्ताः । 'आद्यो मुख्ये धातृपूर्वेषु' इति वैजयन्ती । सर्वे सम्बद्धाः, एतेषु उक्तेषु अर्थेषु, (ये) हरेः क्लेशराहित्यादयोऽर्थास्तेषु, साक्षिणः साक्षिभूताः, उक्तार्थप्रतिपादका इत्यर्थः । वेदवेदान्तादिसकलसच्छास्त्रेषु विष्णोर्निर्दोषत्वविशिष्टगुणपूर्णत्वप्रतिपादनादिति भावः ॥ १८ ॥

**(सं.चं.)** वेदान्ता ब्रह्मसूत्राणि । इतिहासः महाभारतं मूलरामायणं च । वेदार्थनिर्णायको ब्रह्मतर्कः सुतर्कः ॥ १८ ॥

**अव्यक्तोऽव्यक्तमसृजद् गुणान् विषमतां नयन् ।**
**महान्तमप्यहङ्कारं त्र्याख्यं भूतेन्द्रियामरान् ॥ १९ ॥**

---

१. **'दोष आदीनवो मत इत्यभिधानम्'** इति वि.तीर्थश्रीनिवासाचार्यौ । अर्वाचीनास्तु रोषमादीनवं पठन्ति । क्लेशमपरे ।

**(भा.दी.)** भगवदवताराणां प्रादुर्भावलक्षणस्वरूपसृष्टिमभिधाय सदैवतानां चतुर्विंशतितत्वानामण्डात्[१] प्राक् सृष्टिमाह– **अव्यक्त** इति । व्यक्तो न भवतीत्यव्यक्तः । स्वानुग्रहमन्तरेणानपरोक्ष इत्यर्थः । श्रीहरिः, गुणान् सत्वरजस्तमोगुणान्, विषमस्य भावो विषमता ताम् । 'तस्य भावस्त्वतलौ' (अ.सू.५.१.११९) इति भावार्थे तल् । तदन्तशब्दस्य 'त्वान्तं क्लीबं तलन्तं स्त्रियाम्' इति वचनात् स्त्रीलिङ्गता । नयन् प्रापयन् सन् । गुणत्रयमद्ध्ये रजोगुणस्याधिक्यावस्थां प्रापयन्नित्यर्थः । गुणानां साम्यावस्था प्रळयो नाम । तेषां मद्ध्ये एकैकस्य वैषम्यावस्थायां सृष्ट्यादयो भवन्तीत्येतेन विषमतां नयन्नित्युक्तम् । अव्यक्तं जडप्रकृतिस्तत् असृजत् । सृष्ट्याद्यभिमुखमकरोत् । सृज विसर्गे लङ् । तत इति शेषः, ततः अव्यक्ततत्वात् महान्तं महत्तत्वमसृजत् । ततः महत्तत्वात्, तिस्रः वैकारिकस्तैजसस्तामस इत्याख्या नामानि यस्य स तम्, अहङ्कारम् अहङ्कारतत्वमपि असृजत् । ततस्त्रिविधाहङ्कारात् भूतानि पृथिव्यादिपञ्चमहाभूतानि तानि च, इन्द्रियाणि ज्ञानेन्द्रियकर्मेन्द्रियभेदेन दशेन्द्रियाणि तानि च, अमरा भूतेन्द्रियाभिमानिनो देवास्ते च, तान् असृजत् इति सम्बन्धः । पञ्चमहाभूतानि तामसाहङ्कारात्, मनोव्यतिरिक्तदशेन्द्रियाणि तैजसाहङ्कारात् , मनोलक्षणेन्द्रियं तत्वाभिमानिनां देहांश्च[२] वैकारिकाहङ्कारादिति विभागो द्रष्टव्यः । 'महत्तत्वादहङ्कारं ससर्ज शिवविग्रहम् । दैवान् देहान् मनः खानि खं च स त्रिविधात् ततः' इति स्वेनैवान्यत्र[३] स्पष्टमभिधानात् ॥ १९ ॥

**(सं.चं.)** अव्यक्तो भगवानव्यक्तं प्रधानमसृजत् । कथं नित्यस्य सृष्टिः? गुणसाम्यं हि प्रळयः । गुणवैषम्येण च सृष्टिः । त्रिगुणात्मकस्य प्रधानस्य गुणवैषम्येण रजसि सृष्ट्युन्मुखः कम्प एव प्रधानस्य सृष्टिः । महान्तं महत्तत्वशरीरं महत्तत्वमानिनं चतुर्मुखम् । अहङ्कारमानिनं शिवम् । अहङ्कारस्य गुणभेदेन तिस्र आख्याः । त्रीणि रूपाणि । तामसाहङ्कारो राजसाहङ्कारः सात्विकाहङ्कारश्चेति । चरमो वैकारिक इति चोच्यते । तामसाहङ्कारेण साभिमानिनां खादीनां पञ्चभूतानां सृष्टिः । राजसाहङ्कारेण ज्ञानकर्मणोरिन्द्रियाणि दश । वैकारिकाहङ्कारेण मनस इन्द्रियस्य, इन्द्रियमानिनामिन्द्रादीनाममराणां च देहसृष्टिः ॥ १९ ॥

**सदैवतानि तत्वानि तानि सर्वाणि यत्नतः ।**
**अण्डसृष्टावपाण्डित्याच्छार्ङ्गिणं शरणं ययुः ॥ २० ॥**

**(भा.दी.)** सदैवतानां चतुर्विंशतितत्वानां सृष्टत्वादण्डसृष्टिस्तेभ्य एव जाता किमित्यत आह– **सदैवतानी**ति । सदैवतानि, दैवतैः अभिमानिदेवताभिः सहितानि सर्वाणि तानि हरिसृष्टानि तत्वानि महदादीनि

---

१. **'–मण्डात् ब्रह्मसृष्टि–'** २. **'तत्वाभिमानिनो देवांश्च'** ३. अन्यत्र मणिमञ्जर्याम् (१.३) ।

तत्वानि । यत्नादिति यत्नतः, यत्नं कृत्वाऽपीत्यर्थः । अण्डसृष्टौ ब्रह्माण्डस्य सृष्टौ । पण्डितस्य समर्थस्य भावः पाण्डित्यम् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (अ.सू.५.१.१२४) इति भावे ष्यञ् । न पाण्डित्यमपाण्डित्यं तस्मात् । असामर्थ्यादित्यर्थः । शार्ङ्गोऽस्यास्तीति शार्ङ्गी तम्, श्रीहरिं शरणं ययुः । या प्रापणे लिट् ॥ २० ॥

**(सं.चं.)** स्वप्रयत्नतः सृष्टावपाण्डित्यादसामर्थ्यात् । तत्वानि शरणं ययुरित्यालङ्कारिकं वचः । तत्वमानीनि दैवतानि शरणं ययुः ॥ २० ॥

**आत्माविष्टैर्व्यधात् तत्वैः स आयतनमीदृशम् ।**
**परिपूर्णस्य नाथस्य करुणैवात्र कारणम् ॥ २१ ॥**

**(भा.दी.)** अण्डसृष्टिमाह– **आत्मेति** । सः श्रीहरिः, आत्माविष्टैः, आत्मना स्वात्मना आविष्टानि प्रविष्टानि तैः, तत्वैः महदादितत्वैः, ईदृशं ब्रह्माण्डात्मकम् आयतनं देवानामावासस्थानम् । 'आयतनं देवानामन्येषां धनवतां हर्म्यम्' इति हलः । व्यधात् चकार । डु धाञ् धारणपोषणयोर्लुङ् । ननु श्रीहरिः सृष्ट्यादिकं प्रयोजनमुद्दिश्य करोत्यनुद्दिश्य वा? न द्वितीयः । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् प्रयोजनानुद्देशे यत्किञ्चिद्विषयकप्रवृत्तेरेवायोगात् । प्रयोजनोद्देशे तु प्रयोजनस्य पूर्वमभावादपूर्णत्वप्रसङ्ग इत्याशङ्क्याऽह– **परिपूर्णस्येति** । परितः सर्वतः पूर्णस्य पूर्णकामस्य । तत्र हेतुः– **नाथस्येति** । सर्वाधीश्वरस्येत्यर्थः, श्रीहरेः, अत्र ब्रह्माण्डादिनिर्माणे करुणैव ब्रह्मादिषु विद्यमाना दयैव कारणं निमित्तम्, नत्वन्यत् प्रयोजनम् । सर्वदेशकालेषु सकलाभीष्टैः पूर्णस्य श्रीहरेः स्वप्रयोजनाभावेऽपि केवलं कृपापारवश्याद् ब्रह्माण्डसृष्ट्यादौ प्रवृत्तिरिति भावः ॥ २१ ॥

**(सं.चं.)** ईदृशं ब्रह्माण्डाख्यं स्वस्य देवतानां चाऽयतनम् ॥ २१ ॥

**पुरुषः स [1]सहस्राक्षश्चतुरं चतुराननम् ।**
**स्रष्टारं सृष्टवान् सोऽपि सुरासुरनरादिकान्[2] ॥ २२ ॥**

**(भा.दी.)** अण्डान्तः सृष्टिमाह– **पुरुष** इति । चतुरः जगत्सर्जने समर्थः । 'चतुरौ दक्षधीमन्तौ' इति वैजयन्ती । सहस्राङ्गः अत्र सहस्रशब्दोऽनन्तार्थकः । सहस्राणि अनन्तानि अङ्गानि शीर्षाद्यवयवा यस्य स

१. **'सहस्राङ्गश्चतुरश्चतु–'** इति वि.ती. सम्मतः पाठः । २. **'सोऽपि देवासुरनरान् व्यधात्'** इति, **'देवासुरनरादिकान्'** इति च क्वचित् ।

तथोक्तः । सहस्राक्ष इति पाठे सहस्राणि अक्षीणि यस्य स तथोक्तः । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' (अ.सू.५.४.११३) इति षच् । पूर्षु सर्वप्राणिशरीरेषु शेत इति पुरुषः । 'पूः स्यान्नगरदेहयोः' इति वैजयन्ती । नियमनार्थं सर्वप्राणिदेहेष्ववस्थित इत्यर्थः । सः श्रीहरिः, स्रष्टारं सृष्टिकर्तारम्, चत्वारि आननानि मुखानि यस्य स तथोक्तस्तं ब्रह्माणं सृष्टवान् । सोऽपि चतुर्मुखोऽपि सुराश्च असुराश्च नराश्च ते आदयो येषां ते तथोक्तास्तान् । बहुव्रीहौ कप् । सृष्टवान् ॥ २२ ॥

**(सं.चं.)** पुनश्चतुर्मुखद्वारा सृष्टिमाह । सहस्राक्षः । उपलक्षणमेतत् । अनन्तशिरआद्यवयवः । सृष्टिकर्मणि चतुरम् । सोऽपि चतुराननोऽपि सुरासुरनरादिकान् सृष्टवान् ॥ २२ ॥

**सनकादीन् मुनीन् सृष्ट्वा योगिनोऽतिविरागिणः ।**
**सृष्टावनुद्यमान् दृष्ट्वा चुक्रोधोरुक्रमप्रियः ॥ २३ ॥**

**(भा.दी.)** क्रुद्ध्यतश्चतुर्मुखाद् रुद्रो जात इति वक्तुं क्रोधनिमित्तमाह–**सनकेति** । उरवः क्रमाः पादविन्यासाः यस्य स उरुक्रमः (विष्णुः), तस्य प्रियः चतुर्मुखः । अत्यन्तं यो विरागः स एषामस्तीति (अतिविरागिणः) तान् । विषयभोगविरक्तानित्यर्थः । योगिनः हरिद्ध्यानपरानित्यर्थः । भक्तिलक्षणमोक्षोपायवत इति वा । 'योगः संनहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । मुनीन् मननशीलान् । सनक आदिर्येषां ते सनन्दन-सनत्सुजातसनत्कुमरास्ते तथोक्तास्तान् । सृष्ट्वा, सृष्टौ सर्जनविषये न विद्यते उद्यमः प्रयत्नो येषां ते तथोक्तास्तान्, नैष्ठिकब्रह्मचारिण इत्यर्थः । दृष्ट्वा चुक्रोध । क्रुध कोपे लिट् । प्रजासर्जनार्थं सृष्टान् सनकादीन् तत्रानुद्यमान् दृष्ट्वा कोपो जात इति भावः ॥ २३ ॥

**(सं.चं.)** उरुक्रमस्य विष्णोः प्रियः पुत्रः । विष्णोरिच्छयैव चुक्रोधेत्येतत् ॥ २३ ॥

**क्रुद्ध्यतो ध्यायतस्तस्य ललाटादुदभूत् सुतः ।**
**योऽभिमानमयो रुद्रः सर्ग्गमार्ग्गमबृंहयत् ॥ २४ ॥**

**(भा.दी.)** ततः किं जातमित्यत आह– **क्रुद्ध्यत** इति । क्रुद्ध्यतः कोपं कुर्वतः, ध्यायतः तच्छान्त्यर्थं हरिध्यानं कुर्वतः, सृष्ट्युद्यमं ध्यायत इति वा । तस्य चतुर्मुखस्य ललाटं ललाटप्रदेशस्तस्मात् सुतः शिवः उदभूदुत्पन्नः । अभिमानेनाहङ्कारेण प्रधानोऽभिमानमयः । 'गर्वोऽभिमानोऽहङ्कारः' इत्यमरः । प्राधान्यार्थे मयट् । 'प्राधान्येऽपीत्येके' इत्युक्तेः । अहङ्कारतत्वाभिमानीत्यर्थः । यः रुद्रः, सर्ग एव यो मार्गस्तम्, अबृंहयत् अपूरयत् । बृहि वृद्धौ लङ् । चतुर्मुखाज्ञया यथेष्टं प्रजासर्जनं चकारेत्यर्थः ॥ २४ ॥

**(सं.चं.)** अभिमानमयोऽहङ्कारमानी । सर्गस्य मार्गं प्रक्रियाम्, अबृंहयत् विस्तारयामास ॥ २४ ॥

**मरीचिमुख्या मुनयः प्राणेभ्यः प्राणिनां गुरोः ।**
**अजायन्त प्रजावृद्ध्यै बीजानीव वनस्पतेः ॥ २५ ॥**

**(भा.दी.)** प्रजेश्वराणां सृष्टिमाह– **मरीची**ति । मरीचिनामको मुनिः मुख्यः प्रधानो येषां मुन्यादीनां ते तथोक्ताः, मुनयः– 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः' इति प्रसिद्धा मुनयः । प्राणा एषां सन्तीति प्राणिनस्तेषाम्, समस्तजीवानामित्यर्थः, गुरोः पितुः । 'गुरू गीष्पति-पित्राद्यौ' इत्यमरः । गुरोः हितोपदेष्टुरिति वा, चतुर्मुखात्, प्राणेभ्यः इन्द्रियेभ्यः । 'प्राणस्तु प्रणवे जीवे जीविते परमात्मनि । इन्द्रिये वायुभेदे च' इति वैजयन्ती । वनस्पतिर्वृक्षस्तस्मात् बीजानीव । प्रजानां वृद्धिस्तस्यै । अजायन्त उत्पन्नाः । जनी प्रादुर्भावे लङ् ॥ २५ ॥

**(सं.चं.)** मरीचिमुख्याः । मरीचिरत्रिरङ्गिराः पुलस्त्यः पुलहः क्रतुर्वसिष्ठो भृगुर्दक्ष इति नव प्रजापतयः । प्राणिनां गुरोर्जनकस्य विद्योपदेष्टुश्च चतुर्मुखस्य प्राणेभ्यः इन्द्रियेभ्यः । 'दक्षोऽङ्गुष्ठात् स्वयम्भुवः । प्राणाद् वसिष्ठः सञ्जातो भृगुस्त्वचि करात् क्रतुः । पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोरृषिः । अङ्गिरा मुखतोऽ-क्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत्' इति भागवते । तेन प्राणेभ्य इति प्राणोपलक्षितेभ्योऽवयवेभ्यः ॥ २५ ॥

**मरीचेः काश्यपो जज्ञे बीजं सर्वजगत्तरोः ।**
**विवस्वांश्च ततोऽदित्यामरण्यामिव पावकः ॥ २६ ॥**

**(भा.दी.)** तत्र ज्येष्ठपुत्रस्य मरीचेरन्वयमाह– **मरीचे**रिति । मरीचेः मरीचिमुनेः । सर्वं यज्जगद्देवासुर-नरादि तत्तरुरिव तस्य बीजं कारणीभूतः । 'हेतुर्ना कारणं बीजम्' इत्यमरः । काश्यपः काश्यपनामकः पुत्रः जज्ञे । जनी प्रादुर्भावे लिट् । ततः काश्यपात् अदित्याम् अदितिनाम्न्यां भार्यायां विवस्वान् सूर्यश्च अरण्याम् अग्निमथनकाष्ठे । 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः । पावक इव अग्निरिव जज्ञे ॥ २६ ॥

**(सं.चं.)** मरीचेः काश्यपो जज्ञे । यं मारीचमाहुः । कश्यप इति तस्यैव नामान्तरम् । 'पश्यकः कश्यपो भवति' इति श्रुतिः । काश्यं प्रकाश्यं पातीति काश्यपः । कश्यप एव वा काश्यपः । प्रज्ञादिषु पठनीयम् । 'निर्मन्थकाष्ठमरणिः' इत्यभिधानम् ॥ २६ ॥

**श्राद्धदेवाह्वयो देवो मनुः सूनुर्विवस्वतः ।**
**इक्ष्वाकुमुख्या यत्तन्तौ नरेन्द्रमणयो बभुः ॥ २७ ॥**

**(भा.दी.)** तद्वंशं वर्णयति–**श्राद्धेति** । श्राद्धदेव इति आह्वयो नाम यस्य स तथोक्तः । 'स्यादथाऽह्वयः । आख्याह्वे अभिधानं च' इत्यमरः । देवः क्रीडादिगुणविशिष्टः मनुः, विवस्वतः सूर्यस्य (सूनुः) सुतः अभवत् । यत्तन्तौ यस्य वैवस्वतमनोस्तन्तुः सन्ततिस्तस्मिन् । इक्ष्वाकुर्मुख्यः प्रधानो येषां ते तथोक्ताः, नरेन्द्रा राजान एव मणयः, नरेषु श्रेष्ठाः इत्यर्थः, बभुः अशोभन्त । भा दीप्तौ लिट् ॥ २७ ॥

**(सं.चं.)** मनुरेतन्मन्वन्तराधिपः । इक्ष्वाकुमुख्याः । अजान्ताः । यत्तन्तौ नरेन्द्रमणयो बभुः । तन्तौ प्रोता हि मणयो भवन्ति । नरेन्द्रमणयोऽपि मनुतन्तुप्रोताः । मणिशब्दः प्रधानवचनश्च । राजश्रेष्ठाः सम्राजः ॥ २७ ॥

**हाराणामिव शुभ्राणां भूपानां भूरितेजसाम् ।**
**सन्तत्यां नायकच्छायो राजा दशरथोऽभवत् ॥ २८ ॥**

**(भा.दी.)** एवं सङ्क्षेपतो वैवस्वतमनोर्वंशं वर्णयित्वा दशरथस्योत्पत्तिमाह– **हारेति** । हाराणामिव हारा मौक्तिकमणिसरास्तेषामिव शुभ्राणां शुद्धानाम् । भूरि बहु तेजः प्रभावो येषां ते तथोक्तास्तेषाम् । 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि' इत्यमरः । भूपानां ककुत्स्थप्रभृतिपार्थिवानां सन्ततिर्गोत्रं तस्याम् । 'सन्ततिर्गोत्रजननकुलानि' इत्यमरः । नायकवत् हारमद्ध्यस्थरत्नवत्, 'हारमद्ध्यस्थितं रत्नं नायकम्' इति हलायुधः, च्छाया कान्तिर्यस्य स तथोक्तः । 'च्छाया सूर्यप्रिया कान्तिः' इत्यमरः । दशदिक्षु रथो यस्य सः, दशरथनामक इत्यर्थः । राजाऽभवत् । भू सत्तायां लङ् । यथा हारमद्ध्ये नायकमणिः श्रेष्ठस्तद्वत् सूर्यवंशोत्पन्नभूपानां मद्ध्ये श्रेष्ठो दशरथनामको राजा अजचक्रेश्वरादिन्दुमत्यामभवदिति भावः ॥ २८ ॥

**(सं.चं.)** एकैको नरेन्द्रो मणिरिव । ते ग्रथिता हारा बभूवुः । हाराणामिव । हाराः शुभ्रा धवळाः । भूपाः शुद्धचरिताः । हाराणां तेजः प्रभा । भूपानां प्रभावस्तेजः । पराक्रमस्तेजः । अधिक्षेपादेरसहनं तेजः । नायकच्छायः । हारमध्यमणिर्नायकः । स च्छाया उपमानं यस्य । नायकस्य मणेरिव छाया कान्तिरस्येति वा । खट्वाङ्गाद् दीर्घबाहुः । ततो रघुः । ततोऽजः । ततो दशरथोऽभवत् ॥ २८ ॥

**अयोद्ध्यां नाम नगरीमद्ध्युवास स पार्त्थिवः ।**
**अत्रायतैकच्छत्रो यः सप्तद्वीपवतीं महीम्[१] ॥ २९ ॥**

१. '–वतीं भुवम्'

**(भा.दी.)** श्रीरामपितुः दशरथस्य कथां विस्तरतो वर्णयति– **अयोद्ध्यामि**त्यादिना । पृथिव्याः ईश्वरः पार्थिवः । 'तस्येश्वरः' (अ.सू.५.१.४२) इत्यण् । सः दशरथः । शत्रुभिर्योद्धुमशक्यत्वादयोद्ध्या । नामेत्यव्ययं प्रसिद्धार्थकम् । अयोद्ध्यां नाम अयोद्ध्येति प्रसिद्धामित्यर्थः । नगरीम् अद्ध्युवास न्यवसत् । 'उपान्वध्याङ् वसः' (अ.सू.१.४.४८) इति सूत्रेणाधिपूर्वस्य वसेरधिकरणस्य कर्मत्वानुशासनात् 'कर्मणि द्वितीया' (अ.सू.२.३.२) इति द्वितीया । वस निवासे लिट् । यः दशरथः, (सप्तद्वीपवतीम्), सप्त च ते द्वीपाश्च तेऽस्यां सन्तीति तथोक्ता तां, महीं भूमिम् । एकं छत्रं श्वेतच्छत्रं यस्य स तथोक्तः सन् । सर्वभूपानामधीश्वरः सन्नित्यर्थः । अत्रायत अपालयत । त्रैङ् पालने लङ् ॥ २९ ॥

**(सं.चं.)** पृथिव्या अयमीश्वरः पार्थिवः । पृथिव्यां सर्वत्र विदितः ख्यातः पार्थिवः । तथाहि पाणिनिः– 'तस्येश्वरः' (५.१.४२) इति, 'तत्र विदित इति च' (४३) इति च । एकमसाधारणं छत्रं राजचिह्नं यस्य । अविभक्तं यस्याऽधिपत्यम् ॥ २९ ॥

**तस्मिन् पालयति क्षोणीमर्त्थकामविषाणवान् ।**
**धर्म्मश्चतुष्पाद् ववृधे साक्षान्मोक्षधुरन्धरः ॥ ३० ॥**

**(भा.दी.)** तत्सौभाग्यं पालनं च वर्णयति–**तस्मिन्नि**ति । तस्मिन् दशरथे । क्षोणीं भूमिं पालयति सति । अर्थश्च कामश्च तावेव विषाणौ अस्य स्त इति तथोक्तः । चतुष्पात् चत्वारः पादाः, तपः शौचं दया सत्यमित्याख्यचरणा यस्य स तथोक्तः । 'सङ्ख्यासुपूर्वस्य' (अ.सू.५.४.१४०) इति सङ्ख्यापूर्वत्वात्पाद-शब्दान्तलोपः । साक्षात् प्रत्यक्षतः । 'साक्षात् प्रत्यक्षतुल्ययोः' इत्यमरः । मोक्ष एव धूर्भारस्तां धारयतीति[1] तथोक्तः । 'धूः स्याद् यानमुखे भारे' इति वैजयन्ती । 'सञ्ज्ञायां भृ-तॄ-वृजि-धारि-सहि-तपि-दमः'(अ.सू.३.२.४६) इति खचि सति, 'इच एकाचोऽम्प्रत्ययवच्च' (अ.सू.६.३.६८) इति पूर्वपदादम्-प्रत्ययः । धर्मः ववृधे अभिवृद्धोऽभूत् । वृधु वृद्धौ लिट् । दशरथकाले धर्मार्थ-काम-मोक्षाख्यचतुर्विध-पुरुषार्थानामप्यभिवृद्धिरभूदिति भावः ॥ ३० ॥

**(सं.चं.)** धर्मो वृष उच्यते । चतुष्पाद् वृषः । तेन धर्ममपि चतुष्पात्त्वेन रूपयति– धर्मश्चतुष्पादिति । 'कृते प्रवर्तते धर्मश्चतुष्पात् तज्जनैर्धृतः । सत्यं दया तपो दानमिति पादा विभोर्नृप' इति भागवते । वृषभोऽपि धुरं भारं यानमुखं वा धारयतीति धुरन्धर उच्यते । साक्षादनुपचारतः ॥ ३० ॥

१. 'धरतीति'

**वदान्येन प्रवीरेण तेन कश्चिन्न लक्षितः ।**
**प्रतिग्रहार्थी विमुखो विग्रहार्थी तथोन्मुखः ॥ ३१ ॥**

**(भा.दी.) वदान्येने**ति । दानशूरेण, 'वदान्यो वल्गुदात्रोः' इति वैजयन्ती । प्रवीरेण पराक्रमिणा तेन दशरथेन प्रतिग्रह आदानं तमर्थयितुं शीलं यस्य स प्रतिग्रहार्थी । 'प्रतिग्रहः क्रियाकारे चमूपृष्ठे पतद्ग्रहे । दानद्रव्ये स्वीकृतौ च' इति वैजयन्ती । कश्चित्पुरुषः, विमुखः पराङ्मुखः, न लक्षितः न दृष्टः । प्रतिग्रहा-पेक्षया कश्चिदागतश्चेत् तदपेक्षितं ददात्येवेति भावः । विग्रहं कलहमर्थयितुं शीलं यस्य स विग्रहार्थी युद्धार्थीत्यर्थः । 'सुप्यजातौ णिनिस्ताच्छील्ये' (अ.सू.३.२.७८) इति णिनिः । कश्चित्पुरुषः । तथा प्रतिग्रहार्थिवत् । उन्मुखः अभिमुखः न लक्षितो न दृष्टः । सर्वेषां मण्डलाधिपतीनां स्वाधीनत्वात् कोऽपि प्रतिपक्षभूतो राजा दशरथेन न दृष्ट इति भावः ॥ ३१ ॥

**(सं.चं.)** वदान्य इति दानशौण्ड उच्यते । वदान्य इति मधुरवागुच्यते । वीरेषु प्रमुखः प्रवीरः । प्रतिग्रहार्थी न विमुखः, वदान्यत्वात् । विग्रहार्थी च नोन्मुखः, प्रवीरत्वात् ॥ ३१ ॥

**अपुत्रत्वं विना राज्ञः किञ्चिन्नावैक्षि दूषणम् ।**
**लोकाभिनन्दिनो यद्वच्छशाङ्कस्य शशं विना ॥ ३२ ॥**

**(भा.दी.) अपुत्रे**ति । राज्ञो दशरथस्य, न विद्यते पुत्रो यस्य स तथा, तस्य भावस्तत्त्वं तत्, पुत्राराहित्यमित्यर्थः । विना, लोकानभिनन्दयितुं शीलमस्यास्तीति लोकाभिनन्दी तस्य । शशस्य अङ्को लाञ्छनं यस्य स तथा, तस्य चन्द्रस्येत्यर्थः, शशः शशाकारो बिन्दुस्तं विना यद्वत् तथा किञ्चित् दूषणं दोषो न अवैक्षि अदर्शि, जनैरिति शेषः । ईक्ष दर्शनाङ्कनयोर्लुङ् ॥ ३२ ॥

**(सं.चं.)** लोकानभितः नन्दयत्यानन्दयतीति वर्धयतीति वा लोकाभिनन्दी राजा च शशाङ्कश्च । शश-वदङ्कोऽस्येति शशाङ्कः । शशमङ्कं विना ॥ ३२ ॥

**सोऽप्राप्य तन्तुं भार्य्यासु तिसृष्वप्यन्वचिन्तयत् ।**
**तत्वनिर्ण्णयमप्राप्य त्रय्यां मीमांसको यथा ॥ ३३ ॥**

**(भा.दी.) स** इति । सः राजा, तिसृष्वपि भार्यासु कौसल्यासुमित्राकैकयीनाम्नीषु, तन्तुः सन्ततिस्तं पुत्र-मित्यर्थः, अप्राप्य अन्वचिन्तयत् । चिन्तामवाप । चिति स्मृत्यां लङ् । तत्र दृष्टान्तमाह– **तत्वे**ति । त्रय्यां

वेदत्रये । 'त्रयो वेदास्त्रयी स्मृता' इति हलः । तत्वानां परापरतत्वानां निर्णयो निश्चयस्तम्, अप्राप्य मीमांसकः वेदार्थविचारकः पुरुषः यथा येन प्रकारेण तथा अन्वचिन्तयदित्यन्वयः । निर्णायकब्रह्मसूत्राद्यभावे यथा मीमांसकस्त्रय्यां विचारं कृत्वाऽपि भगवत्स्वरूपादिनिर्णयमप्राप्य केन वा वेदार्थनिर्णयो भवेदिति चिन्तयेत् तथा तिसृष्वपि भार्यासु पुत्रानप्राप्य केन कर्मणा पुत्रप्राप्तिर्भवेदिति मनसा विचारितवानिति भावः ॥ ३३ ॥

**(सं.चं.)** तन्तुं पुत्रसन्तानम् । यस्तनोति वंशवृक्षम् । अन्वहं चिन्ताकुलो बभूव । अथच पुत्रप्राप्त्यनुकूल-मुपायमचिन्तयत् आलोचयामास । यथा मीमांसकस्तत्वावगमानुगुणमर्थं पर्यालोचयति । यथा पूर्व-मीमांसकस्त्रय्यामधीतायामपि भगवन्तमलब्ध्वा शोचनीयो बभूव, एवं दशरथस्तिसृष्वपि भार्यास्वधिगतासु पुत्रमलब्ध्वा शोकाकुलो बभूवेति ध्वनिः ॥ ३३ ॥

**मन्त्रिणः स सुमन्त्रादीनाहूयेत्थममन्त्रयत् ।**
**[1]अपुत्रत्वज्वरोत्तप्तः सर्वत्रारुचिमान्नृपः ॥ ३४ ॥**

**(भा.दी.)** विचिन्त्य किं कृतवानित्याह– **मन्त्रिण** इति । न विद्यते पुत्रो यस्य सोऽपुत्रस्तस्य भावस्तत्त्वं तदेव ज्वरस्तेन उत्तप्तः सन्तप्तः । अत एव सर्वत्र राज्यादौ रुचिः स्पृहा साऽस्यास्तीति रुचिमान्, रुचिमान्न भवतीत्यरुचिमान्, स्पृहारहित इत्यर्थः । 'रुचिः कान्त्यर्चिषोर्भासि तिन्त्रिणीके स्पृहाश्रियोः' इति वैजयन्ती । सः नृपः, सुमन्त्रः सुमन्त्रनामको मन्त्री आदिर्येषां ते तथोक्तास्तान् मन्त्रिणः आहूय । इत्थं वक्ष्यमाणप्रकारेण अमन्त्रयत् आलोचयामास । मन्त्र आलोचने[2] लङ् ॥ ३४ ॥

**(सं.चं.)** अमन्त्रयत् । यद्यपि मत्रिरात्मनेभाषः । तथाऽपि 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादिवत् साधुत्व-मवगन्तव्यम् । अथवा नामधातुरयम्– मन्त्रं करोति मन्त्रयति । मत्रि गुप्तभाषणे । सुमन्त्राद्यान् मन्त्रिणः । 'धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः । अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत्' (बा.कां.७.३) इति वाल्मीकीये । रुचिः प्रीतिः । रसग्रहणपाटवं च । ज्वरोत्तप्तः नष्टजिह्वारुचिः सर्वत्र भोज्येष्वरुचिमान् भवति । अपुत्रो राजा सर्वत्र भोगेष्वरुचिमान् बभूव ॥ ३४ ॥

**अश्वमेधेन यक्ष्यामि विश्वनाथं सुताप्तये ।**
**ईश्वरे नः प्रसन्ने किं दुर्लभं भक्तवत्सले ॥ ३५ ॥**

---

१. **'अपुत्रत्वज्वरात् तप्तः'**

२. वैय्याकरणास्तु **'मत्रि गुप्तपरिभाषणे'** इति धातुपाठं पठन्ति ।

**(भा.दी.) अश्वे**ति । अश्वमेधः अश्वमेधाख्ययज्ञः तेन विश्वनाथं सर्वजगत्स्वामिनं श्रीहरिम्, सुतानामवाप्तिः प्राप्तिस्तस्यै यक्ष्यामि यजनं करिष्यामि । यज देवपूजासङ्गतिकरणदानेषु लृट् । ननु 'पुत्रकामः पुत्रकामेष्ट्या यजेत' इति श्रुतेः पुत्रप्राप्त्यर्थं यागान्तरविधानात् किमश्वमेधेनेत्यत आह– **ईश्वर** इति । नः अस्माकम् ईश्वरे सर्वस्वामिनि, भक्तेषु वत्सलः स्निग्धस्तस्मिन् । 'स्निग्धस्तु वत्सलः' इत्यमरः । श्रीहरौ प्रसन्ने सति दुर्लभम् अलभ्यं वस्तु किमस्ति? न किञ्चिदपीत्यर्थः । तथा च विशेषत ईश्वरप्रसादस्यैवापेक्षितत्वात्, 'अश्वमेधः क्रतुश्रेष्ठः' इति स्मृत्या सर्वयज्ञाधिकतयाऽवगतो हरिप्रसादहेतुरश्वमेधस्तावत् क्रियत इति भावः ॥ ३५ ॥

**(सं.चं.)** अश्वमेधेनेश्वरप्रसादः । प्रसादेन पुत्रलाभः । त्रिषु पादेषु कर्णाटानां प्रियो द्वितीयाक्षरप्रासः ॥३५॥

**सुमन्त्रतन्त्रेषु मखेषु कोविदान्**
**[1]सुमन्त्र हन्ताऽनय शीघ्रमृत्विजः ।**
**गुरुं वसिष्ठं च समेधयेद् ध्रुवं**
**क्षत्रं खलु ब्रह्म यथाऽनिलोऽनलम्** ॥ ३६ ॥

**(भा.दी.) सुमन्त्रे**ति । हे सुमन्त्र, मन्त्राः तत्तद्देवतोपस्थानमन्त्रास्ते च, तन्त्राणि यज्ञोपयुक्तव्यापारास्तानि च मन्त्रतन्त्राणि, शोभनानि मन्त्रतन्त्राणि येषां ते तथोक्तास्तेषु । 'तन्त्रं स्वराष्ट्रव्यापारे तन्तुवाने परिच्छदे । शास्त्रौषधान्त्रमुख्येषु प्रयोगेऽध्वरकर्मणाम्' इति वैजयन्ती । मखेषु यज्ञेषु कोविदान् कुशलान्, ऋत्विजः अध्वर्यूद्गातृहोतृप्रभृतीन् षोडश ऋत्विजः, शीघ्रं यथा भवति तथा, आनय आकारय । णीञ् प्रापणे लोट् । गुरुं स्वकुलगुरुं वसिष्ठं च आनय । हन्त हर्षे । क्षत्रियाभिवृद्धौ ब्राह्मणानामनुग्रह एव कारणमिति सदृष्टान्तमाह– **ब्रह्मे**त्यादिना । ब्रह्म ब्राह्मणकुलम्, क्षत्रं क्षत्रियकुलं कर्म । अनिलः वायुः अनलम् अग्निं यथा समेधयेदभिवर्द्धयेत् तथा (ध्रुवं) समेधयेदभिवर्धयेत् खल्वित्यन्वयः । एध वृद्धौ लिङ् ॥ ३६ ॥

**(सं.चं.)**कथानिरूपणे गद्यसमानयोगक्षेमयाऽनुष्टुभा कथामुपक्षिप्याथ छन्दोऽन्तरेण सर्गमुपसंहरति । सुविहितैर्मन्त्रैस्तन्त्रैश्च सम्पादितेषु मखेषु । तन्त्रमितिकर्तव्यता । शास्त्रोक्ता प्रक्रिया । ऋत्विज आनय । गुरुं वसिष्ठं चाऽनय । यतो ब्रह्मवर्णः क्षत्रवर्णं शक्तिसमेधितं कुर्यात् । यथाऽनिलोऽनलं वर्धयेत् । यद्यप्यनलः स्वयं परन्तपः । एवं क्षत्रियोऽपि । अथाप्यनिलस्तेजःप्रज्वलनेनानलं समेधयति । एवं ब्राह्मणः क्षत्रियमित्याशयः । जतौ जरौ वंशस्थम् । ततौ जराविन्द्रवंशा । उभयोरुपजातिः ॥ ३६ ॥

---

१. **'सुमन्त्र तानानय'**

**इति निजकनियोगान्मन्त्रिणाऽऽनीतमात्रान्**
**नरपतिरवलोक्य ब्राह्मणान् ब्रह्मनिष्ठान् ।**
**अनमदनभिमानो भक्तिभारेण भूयो**
**हृदि जगदभिरामं[1] वासुदेवं दधानः ॥ ३७ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते**
**रामाङ्के सङ्ग्रहरामायणे बालकाण्डे प्रथमः सर्ग्गः ॥**

—०—

**(भा.दी.)** दशरथस्य ब्रह्मण्यतां दर्शयति– **इती**ति । नरपतिः राजा दशरथः । इति निज एव निजकः, तस्मै स्वकीयो नियोग आज्ञा तस्मात् । मन्त्रिणा सुमन्त्रेण तदैव आनीता आनीतमात्रास्तान्, ब्रह्मणि वेदे निष्ठा आसक्तिर्येषां ते तथा तान्, वेदार्थविचारकानित्यर्थः । 'ब्रह्मा रुद्रेन्द्रभृग्वादिविप्रर्त्विग्यज्ञधातृषु' इति वैजयन्ती । ब्रह्मणि परिपूर्णे श्रीहरौ निष्ठा आसक्तिर्येषां ते तथा तानिति वा, तद्ध्याने तात्पर्यवत इत्यर्थः । तथाहि हरिवंशे– 'बृहत्त्वाद् बृंहणत्वाच्च तस्माद् ब्रह्मेति शब्दितः' इति । अथ ब्राह्मणान् ब्रह्म वेदं परं ब्रह्म वा अणन्ति जानन्तीति ब्राह्मणशब्दवाच्यान् वसिष्ठादीन् अवलोक्य । न विद्यतेऽभिमानोऽहङ्कारो यस्य स तथा सन् । एते तु मद्विषयवासिनोऽहं तु सार्वभौमो राजेत्यभिमानरहितः । जगत् अभिरमयति सुखयतीति जगदभिरामस्तम् । जगति अभिरामो मनोहरस्तमिति वा । वासुदेवम्, वाति अवगच्छति सर्वमिति वाः सर्वज्ञः । वाश्चासावसुश्च वासुः, सर्वज्ञो मुख्यप्राणः, तस्मिन् दीव्यतीति तथोक्तम् । मुख्यप्राणान्तर्यामिणमित्यर्थः । श्रीहरिं हृत् स्वहृदयं तस्मिन्, मुनीनां हृदय इति वा, दधानः सन्, सर्वान्तर्यामित्वेन स्मरन् सन्नित्यर्थः । भक्तेर्भारोऽतिशयस्तेन भक्तिभारेण । 'भारोऽतिशयभारयोः' इति रत्नमाला । भूयः पुनःपुनः, अनमत् नमश्चकार । णमु प्रह्वत्वे शब्दे च लङ् । स्वान्तर्यामितया श्रीहरिः स्वात्मना मुनीनां नमनादिसत्कर्मकारयिता, स्वाभिमतयज्ञादिकं च तैः कारयित्वा स्वाभीष्टप्रदाता चेत्यनुसन्धानपूर्वकं परमभागवतो दशरथो वसिष्ठादीन् ननामेति भावः । श्रीमन्नारायणपण्डिताचार्यः सर्गान्ते सर्वत्र श्रीरामनामाङ्कितश्लोककरणादात्मनोऽनवरतं श्रीरामचरणप्रवणान्तःकरणतां प्रकटयति ॥ ३७ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां**
**भावार्थदीपिकायां बालकाण्डे प्रथमः सर्गः ॥**

—०—

१. 'जगदभिरामो'

**(सं.चं.)** निजकः स्वको नियोगः । मन्त्रिणा सुमन्त्रेण । साक्षात्कृतब्रह्माणो ब्राह्मणाः । ब्रह्मनिष्ठा नारायणपरायणाः । अनभिमानो गलिताहङ्कारः । हृदि वासुदेवं दधानः । अत एव वासुदेवो रामात्मनाऽवततार । 'जगदभिरामः' इति पाठे स्वयं सर्वजगतामभिरामो मनोज्ञः । ननमययैरियं मालिनी ॥ ३७ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां बालकाण्डे प्रथमसर्गविवरणं समाप्तम् ॥**

—०—

# द्वितीयः सर्ग्गः

**सुयज्ञो वामदेवश्च जाबालिरुत काश्यपः ।**
**वसिष्ठश्चाग्नयइव पञ्चैते तत्र रेजिरे ॥ १ ॥**

**(भा.दी.)** श्रीरामपित्रा दशरथेन मानितान् मुनीन् सदृष्टान्तं वर्णयति– **सुयज्ञ** इति । सुयज्ञः सुयज्ञनामकः, वामदेवश्च, जाबालिरुत जाबालिनामकोऽपि, काश्यपः, वसिष्ठश्च इतीमे[१] मुनयः पञ्च गार्हपत्य-आहवनीय-अन्वाहार्य्यपचन-सभ्य-आवसथ्यनामकाः पञ्चसङ्ख्याकाः अग्नयइव तत्र सभायां रेजिरे अशोभन्त । राजृ दीप्तौ लिट् ॥ १ ॥

**(सं.चं.)** पञ्चाग्नयइव पञ्चैते तत्र रेजिरे । 'सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् । पुरोहितं वसिष्ठं च ये चान्ये द्विजसत्तमाः' (१२.५) इति वाल्मीकीये ॥ १ ॥

**तेषां[२] सपरिवाराणां प्राज्ञानामभ्यनुज्ञया ।**
**सम्बभाराथ सम्भारान् वाजिमेधस्य भूपतिः ॥ २ ॥**

**(भा.दी.)** अथ दशरथेन किं कृतमित्यत आह– **तेषामि**ति । अथ भूपतिर्दशरथः, परिवाराः शिष्यगणास्तैः सहिताः सपरिवारास्तेषाम्, प्राज्ञानां ज्ञानिनाम्, तेषां सुयज्ञादिमुनीनामभ्यनुज्ञया वाजिमेधोऽश्वमेधस्तस्य सम्भारान् साधनद्रव्याणि सम्बभार सम्पादितवान् । भृञ् भरणे लिट् ॥ २ ॥

**(सं.चं.)** अन्ये द्विजसत्तमाः के? आह– तेषां सपरिवाराणाम् । परिवाराः परिजनाः शिष्यादयः । सम्भारान् सम्भरणीयानि द्रव्याणि । सम्बभार सञ्जग्राह ॥ २ ॥

---

१. 'एतदनुसारेण–**'पञ्चेमे तत्र रेजिरे'** इत्यपि मूलपाठः स्यात् ।

२. **'तेषां स समवेतानामृषीणामभ्यनुज्ञया'**

**एकान्तेऽकान्तवदनं[1] राजानं पुत्रलालसम् ।**
**सुमन्त्रो मन्त्रतत्वज्ञः प्रणिपत्येदमब्रवीत् ॥ ३ ॥**

**(भा.दी.)** सुमन्त्रदशरथयोरेकान्तवृत्तामाख्यायिकामाह– **एके**ति । मन्त्रस्य आलोचनस्य यत्तत्वं रहस्यं तज्जानातीति तथोक्तः सुमन्त्रः । एकान्त एकान्तप्रदेशस्तस्मिन्, कान्तं मनोहरं वदनं यस्य स तथा तम्, पुत्रेषु लालसमौत्सुक्यं यस्य स तथा तम् । 'लालसे प्रार्थनौत्सुक्ये' इत्यमरः । पुत्रप्राप्तौ लोलुपमित्यर्थः । राजानं दशरथं प्रणिपत्य नमस्कृत्य इदं वक्ष्यमाणं वचः अब्रवीत् । ब्रूञ् व्यक्तायां वाचि लङ् । न तु लुङ् । 'ब्रुवो वचिः' (अ.सू.२.४.५३) इति लुङादौ वच्यादेशविधानात् ॥ ३ ॥

**(सं.चं.)** पुत्रे विषये लालसः लोलुपः । उत्सुक इत्येतत् । 'लोलुपे लोलुभो लोलो लम्पटो लालसोऽपि च' इति यादवप्रकाशः । लालसा प्रार्थना, लालसं वा । औत्सुक्यं च । तद्वान् लालसः । पुत्रे पुत्रदर्शने लालसमत एवाकान्तवदनं म्लानवदनम् । कदा पुत्रवदनं द्रक्ष्यामीति कातर्येण । मुनीनामभ्यनुज्ञया लब्धप्रत्ययतया कान्तवदनं वा । गुप्तं कर्तव्यचिन्तना मन्त्रः ॥ ३ ॥

**अवधारय राजेन्द्र कत्थ्यमानां कथां मया ।**
**सनत्कुमारो भगवानाऽह स्म[2] मुनिसंसदि ॥ ४ ॥**

**(भा.दी.)** सुमन्त्रः किमाहेत्यत आह– **अवे**ति । हे राजेन्द्र राज्ञामीश्वर, 'इन्द्रो वृषात्मशक्रार्केष्वीश्वरे' इति वैजयन्ती । त्वम्, भगवान् पूज्यः, 'भगवान् बुद्धे पूज्ये हरे हरौ' इति वैजयन्ती । सनत्कुमारनामको मुनिः । मुनीनां संसत् सभा तस्यां यां कथां आह स्म अब्रवीत् । ब्रूञ् व्यक्तायां वाचि लट् । 'ब्रुवः पञ्चानामादित आहो ब्रुवः' (अ.सू.३.४.८४) इति आहादेशः । मया कथ्यमानां उच्यमानां तां कथां अवधारय सावधानतया शृणु । धृञ् धारणे लोट् ॥ ४ ॥

**(सं.चं.)** अवधारय अवधाय शृणु । धृञो णिचि रूपम् । इतिवृत्तं कथा । विष्णुपुत्रः काम एव ब्रह्मणा जातो जितकामः सनत्कुमारो बभूव । स एव शिवतनयः सेनानीः स्कन्दो बभूव । सनत्कुमारः पुनर्भगवदवतारेण सनत्कुमारेण विशेषत आविष्टश्चेति भगवानित्याह । भगवदनुग्रहभाग्यवान् लोकपूज्यो भगवानुच्यते ।

---

१. **'एकान्ते कान्तवदनम्'** इति वि.ती. पाठः। विद्याभूषणीयेऽपि तथा–**'कान्तवदनं प्रसन्नमुखम्'** इति। **'क्षान्तवदनम्'** इति का.श्री. पाठ इति भाति। तदपि रमणीयम्।
२. **'भगवान् यामाह मुनि–'**

सनत्कुमार एव च रामायणे भरतो भविष्यति । अत एव भाविकार्यसिद्धये सुमन्त्रं श्रावयामास । आह स्म जगाद ॥ ४ ॥

**[1]विभाण्डकश्चण्डतपाः काश्यपस्यास्ति नन्दनः ।**
**भविष्यत्यृश्यशृङ्गोऽस्माच्छ्रीमानग्निरिवारणेः ॥ ५ ॥**

**(भा.दी.)** मुनिसंसदि सनत्कुमारोक्तां कथामाह– **विभण्डक** इत्यादिना । चण्डं क्रूरं तपो यस्य स तथोक्तः, विभण्डकः विभण्डकनामको मुनिः, काश्यपस्य काश्यपाख्यस्य मुनेः नन्दनः पुत्रः अस्ति । अस भुवि लट् । अस्माद् विभण्डकात् । श्रीरस्यास्तीति श्रीमान् ऋश्यस्य एणस्य शृङ्गमिव शृङ्गं विषाणं यस्य स तथोक्तः । 'गोकर्णपृषतैणर्श्यरोहिताः' इत्यमरः । अत एव ऋश्यशृङ्गनामको मुनिः, अरणिः अग्निनिर्मन्थनकाष्ठं तस्मात् अग्निरिव भविष्यति । भू सत्तायां लृट् । विभण्डकेन चण्डतपस्यानुष्ठीयमाने सति तत्तपोभीतेनेन्द्रेण तद्विघातार्थं काञ्चनाप्सरसः प्रेषितास्तासां विलोकनेन मनोविकारे सति रेतः समीपस्थतीर्थे पपात । तच्च तेन उदकेन सह कयाचिन्मृग्या दैवयोगेन पीतमभूत् । अमोघत्वाच्च (मुनिरेतसो) मृग्या प्रसूतस्यास्य मुनेरेणशृङ्गवच्छृङ्गमभूदत एव तन्नामकोऽभवदिति हि पौराणिकी प्रसिद्धिः ॥ ५ ॥

**(सं.चं.)** अत्र द्वेधा पाठं पठन्ति –'विभण्डकश्चण्डतपाः' इति, 'विभाण्डकश्चण्डतपाः' इति । वाल्मीकीयेऽपि तथा– 'काश्यपस्य तु पुत्रोऽस्ति विभण्डक इति श्रुतः' (९.३) इति, 'विभाण्डक इति श्रुतः' इति च पाठान्तरम् । कश्यपः काश्यपो भवति । विभण्डको विभाण्डकः । विभण्डते इति विभण्डकः । 'भडि परि-भाषणे' । परितो भाषणं वादकथा । 'भडि परिहासे' इत्येके । विभण्डयतीति वा । भडि कल्याणे । पश्यतीति पश्यकः कश्यपः । कश्यप एव काश्यपः । दैर्घ्यमवधारणे । कश्यपस्यायं वंशजात इति च काश्यपः । ऋश्य इति हरिणप्रभेदः । ऋश्यस्येव शृङ्गमस्याऽसीदित्यृश्यशृङ्गः । विभाण्डकरेतसा हरिणीगर्भे जातः ॥ ५ ॥

**ब्रह्मवर्चससम्पन्नं ब्रह्मचर्य्यरतं मुनिम् ।**
**लोमपादोऽङ्गराजस्तं स्वराज्यं प्रति नेष्यति ॥ ६ ॥**

**(भा.दी.)** **ब्रह्मे**ति । अङ्गानां अङ्गविषयाणां राजा अङ्गराजः । 'राजाहस्सखिभ्यष्टच्' (अ.सू.५.४.९१) इति टच् । लोमपादः लोमपादनामको राजा, ब्रह्मवर्चसेन शुभवर्त्तनवेदाद्ध्ययनादिना सम्पन्नं युक्तम्, 'ब्रह्मवर्चसं वृत्ताद्ध्ययनर्द्धिः' इत्यमरः । ब्रह्मचर्ये समस्तेन्द्रियनिग्रहे रतमासक्तम् । 'ब्रह्मचर्यं बुधाः प्राहुः

१. **'विभण्डक–'** इति वि.ती.पाठः । **'विभाण्डक'** इत्येव विद्याभूषणश्रीनिवासाचार्यौ । तथैव च प्रचुरो व्यवहारः ।

समस्तेन्द्रियसंयमम्' इति हलायुधः । तं ऋश्यशृङ्गनामकं मुनिम् । स्वस्य यद्राज्यं तत् प्रति नेष्यति नेता । णीञ् प्रापणे लृट् ॥ ६ ॥

**(सं.चं.)** 'वृत्ताध्ययनसम्पत्तिरिष्यते ब्रह्मवर्चसम् । ब्रह्मचर्यं बुधाः प्राहुः समस्तेन्द्रियसंयमम्' इत्यभिधानम् । लोकमहितौ पादावस्येति लोमपादो नाम । नेष्यति वृष्ट्यर्थम् ॥ ६ ॥

**सारङ्गशृङ्गमानेष्यन्त्यङ्गना मुनिवेषतः ।**
**संवञ्चयन्त्योऽत्र यदा तदा वृष्टिर्भविष्यति ॥ ७ ॥**

**(भा.दी.)** केन प्रकारेण स्वनगरं प्रति तमृषिमानीतवान् । तदागमने च स्वस्य किं प्रयोजनमित्यत आह– **सारङ्गे**ति । अङ्गना वेश्यास्त्रियः, मुनीनां वेषोऽलङ्कारः तस्मादिति ततः, संवञ्चयन्त्यः सत्यः । यदा यस्मिन् काले, '–किंयत्तदोः[1] काले दा' (अ.सू.५.३.१५) इति दाप्रत्ययः, सारङ्गशृङ्गं ऋष्यशृङ्गमुनिं आनेष्यन्ति, तदा (अत्र अङ्गराज्ये) वृष्टिर्भविष्यति । अङ्गविषयाधीशो लोमपादाख्यो राजा स्वदेशे कस्माच्चिन्निमित्तादनावृष्टौ सत्याम्, सुवृष्टिः कथं भविष्यतीति मुनीन् प्रति विचारिते सति, ऋश्यशृङ्गं स्वदेशं प्रत्यानीय शान्ताख्यां तव सुतां यदि दास्यसि तर्हि सुवृष्टिर्भविष्यतीति तद्वाक्यं श्रुत्वा, तपस्येवाभिरतो मुनिः प्रार्थनादिना नाऽयास्यतीति मन्त्रिभिः सम्मन्त्र्य, यथाकथञ्चिदानयत इति वाराङ्गनाः प्रैषयत् । ताश्च, मुनिव्यतिरिक्तपुरुषाणां स्त्रीणां वाऽवलोकनं जन्मत आरभ्य तेन न कृतमिति जानन्त्यः शापभीताः मुनिवेषं धृत्वा, तद्विलोभनार्थमपूपभक्ष्यादिकं च गृहीत्वा, तदाश्रमं प्रति गतास्तेन च मुनिबुद्ध्या अर्घ्यादिना सम्भाविताः सत्यस्तस्मा इमान्यपूर्वाणि फलानीति दत्तवत्यस्तद्भुक्त्वाऽपूर्वफलानीमानि कुतो वर्तन्त इत्यनेन विचारिते सत्यस्मदाश्रम एतादृशफलान्यनवरतं सन्तीति ताभिरुक्ते, तर्हि मामपि तत्र नयतेति[2] तदनुज्ञयाऽङ्गदेशं प्रत्यानीतः, तत्समय एव तत्र सुवृष्टिरभूदिति हि पौराणिकी प्रसिद्धिः ॥ ७ ॥

**(सं.चं.)** तदेवाऽह– सारङ्गशृङ्गः । 'सारङ्ग ऋश्यः पृषतो रुरुश्च' इत्यभिधानम् । अङ्गैरेव विवृतैर्वशं नयन्ति पुरुषानित्यङ्गनाः । मुनिवेषेण स्वं रूपं सङ्गोप्य वञ्चनं संवञ्चनम् । सम्मोह्य वञ्चनं संवञ्चनम् ॥ ७–८ ॥

**अनावृष्टिभयोद्विग्नो वृष्टिं लब्ध्वा ततो नृपः ।**
**दास्यत्ययं मूल्यमिव शान्तां नाम निजात्मजाम्[3] ॥ ८ ॥**

---

१. **'सर्वैकान्यकिंयत्तदोः काले दा'** इति समग्रं सूत्रम् । २. **'तर्ह्यहमपि तत्र नेय इति'**

३. शान्ता वस्तुतः दशरथात्मजा । अनपत्याय लोमपादाय दत्ता । तेन सा लोमपादस्य दत्तपुत्री । तेनान्तत ऋश्यशृङ्गो दशरथस्यापि जामातेति वदन्ति । तथाहि भवभूतिः–**'कन्यां दशरथो राजा शान्तां नाम व्यजीजनत् । अपत्यकृतिकां तस्मै रोमपादाय तां ददौ'** इति । गोविन्दराजोऽपि **'दशरथस्यौरसी शान्ता । दत्ता रोमपादाय'** इत्याह ।

**(भा.दी.) अनावृष्टी**ति । सम्यग्वृष्टिरावृष्टिः आवृष्टेरभावोऽनावृष्टिः । अनावृष्टेर्यद् भयम् , अनावृष्टिनिमित्तं भयमित्यर्थः, अनावृष्टिलक्षणं भयमिति वा । तेन उद्विग्नः खिन्नः, अयं लोमपादनामा नृपः । ततः ऋश्यशृङ्गागमनात् वृष्टिं लब्ध्वा, शान्तां नाम शान्तेति प्रसिद्धाम्, निजा स्वकीया या आत्मजा पुत्री ताम्, 'निजमात्मीयनित्ययोः' इति वैजयन्ती । मूल्यमिव वृष्टेर्वेतनद्रव्यमिव । 'मूल्यं वेतनवस्नयोः' इति वैजयन्ती । दास्यति दाता, डु दाञ् दाने लृट् ॥ ८ ॥

**मुनिमेनमुपानीय राजा दशरथाभिधः ।**
**यक्ष्यत्यधोक्षजस्तस्य पुत्रो रामो भविष्यति ॥ ९ ॥**

**(भा.दी.) मुनिमि**ति । दशरथ इति अभिधा नाम यस्य स तथोक्तः राजा एनं मुनिं ऋश्यशृङ्गं उपानीय आकारयित्वा यक्ष्यति यज्ञं करिष्यति । यज देवपूजासङ्गतिकरणदानेषु लृट् । तस्य कृतयज्ञस्य दशरथस्य, अक्षेभ्य इन्द्रियेभ्यो जातानि अक्षजानि इन्द्रियजन्यज्ञानानि, अधःकृतानि अक्षजानि येन स तथोक्तः । स्वानुग्रहमन्तरा तत्वत इन्द्रियजन्यज्ञानाविषय इत्यर्थः । श्रीहरिः रामः रामनामकः पुत्रः भविष्यति ॥ ९ ॥

**(सं.चं.)** अधोक्षजो भगवान् राम इति पुत्रो भविष्यति ॥ ९ ॥

**रमणीयतरस्तस्य राघवस्य यशोविधुः ।**
**निरसिष्यत्युरु तमो लोकानानन्दयिष्यति ॥ १० ॥**

**(भा.दी.)** तस्य वैभवमाह– **रमणीये**ति । रघोर्गोत्रापत्यं पुमान् राघवस्तस्य । 'तस्यापत्यम्' (अ.सू.४.१.९२) इत्यण् । तस्य श्रीरामस्य रमणीयतरः अतिशयो रमणीयः । यश एव विधुश्चन्द्रः । 'विधुः सुधांशुः' इत्यमरः । कीर्तिलक्षणश्चन्द्र इत्यर्थः । उरु वरादिना उत्कृष्टं तमः रावणादिराक्षसरूपान्धकारस्तत् । यद्वा उत्कृष्टं तमः सतां पापं दुःखं वा तत्, 'तमो राहुस्तमोऽघम्' इति वैजयन्ती । निरसिष्यति संहरिष्यति । असु क्षेपणे लृट् । लोकान् सज्जनान् आनन्दयिष्यति सन्तोषयिष्यति । टु नदि हर्षे लृट् ॥ १० ॥

**(सं.चं.)** लोकानामुरु तमः रावणादिरक्षोजनितमुत्कटं शोकं निरसिष्यति । निरस्य लोकानानन्दयिष्यति । 'ध्वान्ते राहौ गुणे शोके तमः' इति मङ्खः । विधुस्तु ध्वान्तं निरसिष्यति ॥ १०–१२ ॥

**इदं सनत्कुमारोक्तं देवगुह्यं श्रुतं मया ।**
**तस्मात् त्वं लोमपादस्य गेहादानय तं मुनिम् ॥ ११ ॥**

**(भा.दी.)** सनत्कुमारेण मुनिसंसदि कथनवेलायां स्वेन श्रुतेतिहासकथनस्य प्रयोजनं तदुपसंहरन्नाह– **इदमि**ति । सनत्कुमारेण उक्तमभिहितम्, इदं देवानां गुह्यं रहस्यम्, 'रहस्योपस्थयोर्गुह्यम्' इत्यमरः, मया श्रुतम् । तस्मात् कारणात् त्वं तं मुनिं ऋश्यशृङ्गाख्यमुनिं लोमपादस्य लोमपादाख्यस्य राज्ञः, गेहं मन्दिरं तस्मात्, आनय स्वयं गत्वा आकारय । णीञ् प्रापणे लोट् ॥ ११ ॥

**आकर्ण्य वर्णितं तेन वसिष्ठस्याभ्यनुज्ञया ।**
**कोसलेन्द्रः स्वयं गत्वा तं मुनीन्द्रं समानयत्[१] ॥ १२ ॥**

**(भा.दी.)** दशरथश्च तथा चकारेत्याह– **आकर्ण्ये**ति । कोसलानां कोसलाख्यविषयाणामिन्द्रः स्वामी दशरथः तेन सुमन्त्रेण वर्णितं प्रोक्तं तत् देवगुह्यं आकर्ण्य, वसिष्ठस्य अभ्यनुज्ञया स्वयं दशरथः गत्वा मुनीन्द्रं तं ऋश्यशृङ्गं समानयत् । स्वमन्दिरं प्रत्यानीतवान् ॥ १२ ॥

**क्षोणीं प्रदक्षिणीकृत्य समानीते तुरङ्गमे ।**
**सरय्वा उत्तरे तीरे स राजा समदीक्षत ॥ १३ ॥**

**(भा.दी.)** **क्षोणीमि**ति । स राजा, तुरङ्गमे अश्वे, '–तुरङ्गाश्वतुरङ्गमाः' इत्यमरः, क्षोणीं भूमिं प्रदक्षिणीकृत्य प्रदक्षिणं कारयित्वा समानीते सति, सरसो यातीति सरयूस्तस्याः, कैलासे विद्यमानसरो हि सरयूनद्यास्तस्या मूलमिति पौराणिकी प्रसिद्धिः । उत्तरे उत्तरभागस्थिते, 'पूर्वादिभ्यो नवभ्यो वा' (अ.सू.७.१.१६) इति सर्वनामसञ्ज्ञाया अनित्यत्वात् नाऽश्रितेति भावः । तीरं तटं तस्मिन् समदीक्षत यज्ञदीक्षामकरोत् । दीक्ष मौण्ड्ययज्ञोपनयननियमव्रतादेशेषु लङ् ॥ १३ ॥

**(सं.चं.)**'सरय्वा उत्तरे तीरे स राजा समदीक्षत' इति सकारानुवर्तनेन श्रुतिसुभगोऽनुप्रासः । प्रायोऽनुप्रासप्रचुरोऽयं प्रबन्धः । 'सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्धत' (१४.१) इति च ॥ १३ ॥

**आहूता राजराजेन राजराजविभूतिना ।**
**उपायनान्युपानीय भूपा वैश्यवदाययुः ॥ १४ ॥**

**(भा.दी.)** **आहूता** इति । राजराजस्येव वैश्रवणवद् विभूतिरैश्वर्यं यस्येति तथोक्तस्तेन । 'राजराजो धनाधिपः । किन्नरेशो वैश्रवणः' इत्यमरः । राज्ञां राजा राजराजस्तेन दशरथेन आहूताः यज्ञार्थमागन्तव्यमित्या-

१. 'मुनीन्द्रमुपानयत्'

कारिताः भूपाः । उपायनानि उपायनद्रव्याणि उपानीय परिगृह्य, वैश्यवत् वैश्या इव आययुः । या प्रापणे लिट् ॥ १४ ॥

**(सं.चं.)** राज्ञामपि  राजा राजराजः सम्राट् । राजराजस्य कुबेरस्येव विभूतिरस्य । 'कुबेरो नरवाहनः । गुह्यको राजराजश्च' इत्यभिधानम् । गौरवेण प्रीत्या वा दीयमानमुपायनम् ।  '**ಉಡುಗೊರೆ, ಹೊರೆಕಾಣಿಕೆ**' इति भाषायाम् ॥ १४ ॥

**आजग्मुर्य्यज्ञवाटं तं प्रजाः सर्वाः प्रजापतेः ।**
**महोत्सवोत्सुकदृशः प्रशंसन्त्योऽस्य विक्रमान् ॥ १५ ॥**

**(भा.दी.) आजग्मुरि**ति ।  महान् य  उत्सवस्तस्मिन् उत्सुकाः कुतूहलयुक्ताः दृशो दृष्टयो यासां तास्त-थोक्ताः । महोत्सवदर्शने कौतुकयुक्तदृष्टय इत्यर्थः । अस्य दशरथस्य विक्रमान् प्रशंसन्त्यः संस्तुवन्त्यः सर्वाः प्रजा जनाः, प्रजापतेः राज्ञः दशरथस्य, यज्ञस्य वाटः शाला तं आजग्मुः । गम्लृ गतौ लिट् ॥ १५ ॥

**(सं.चं.)** यज्ञवाटं यज्ञार्थं वृत्यादिना निर्मितं क्षेत्रम् । 'वाटो मार्गे वृतिस्थाने' इति मेदिनी । प्रजानां पालनात् प्रजापती राजा – प्रजाः पातीति । अस्य दशरथस्य विक्रमान् प्रशंसन्त्य आजग्मुः । न केवलं महोत्सवदिदृक्षया, किन्तु दशरथे गौरवगर्भया प्रीत्या चाऽजग्मुरित्यर्थः ॥ १५ ॥

**आस्यतां भुज्यतां भूयः पीयतां परिधीयताम् ।**
**इत्यत्र सन्तताः शब्दा जातु नो दीयतामिति ॥ १६ ॥**

**(भा.दी.) आस्यतामि**ति । आस्यतामुपविश्यताम् । आस उपवेशने लोट् । भूयः पुनःपुनः भुज्यतां भोजनं क्रियताम् । भुज पालनाभ्यवहारयोः लोट् । पीयतां पानं क्रियताम् । पा पाने लोट् । परिधीयतां सुवस्त्रैरा-च्छादनं क्रियताम् । डु धाञ् धारणपोषणयोः लोट् । अत्र दशरथयज्ञे इति सन्तताः सार्वकालिकाः अव्युच्छिन्ना इत्यर्थः, शब्दा आसन् । जातु कदाचिदपि दीयतामिति प्रदीयतामिति शब्दः नो नाऽसीत् । डु दाञ् दाने लोट् । इदं मह्यं दातव्यमिति जनानां कथनापेक्षया पूर्वमेव यथेष्टं तदिष्टानां प्रदानाद् दीयतामिति शब्दस्तस्य यज्ञे न प्रवृत्त इति भावः । आदीयतामिति पदच्छेदे सन्धिकरणानुपपत्तेः । नो दीयतां न दीयतामिति शब्दो नो नाऽसीदित्यावृत्त्या वा योज्यम् ॥ १६ ॥

**(सं.चं.)** केनापि याचकेनोच्यमानो 'दीयताम्' इति शब्दः न जातु श्रुतः । जातु कदाचिदपि ॥ १६ ॥

**पण्डितौ कर्म्मकाण्डेषु [१]वैभाण्डकविधातृजौ ।**
**ऋत्विग्भिर्ग्गुणसम्पन्नैः क्रतुराजं प्रचक्रतुः ॥ १७ ॥**

**(भा.दी.)** **पण्डिताविति** । कर्मणां काण्डा वर्गास्तेषु, 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः, पण्डितौ कुशलौ, विभण्डकस्यापत्यं पुमान् वैभण्डकः स च, विधातुर्ब्रह्मणो जातो विधातृजः स च, तौ ऋश्यशृङ्गवसिष्ठावित्यर्थः । गुणाः शमादिगुणास्तैः सम्पन्ना युक्तास्तैः, ऋत्विग्भिर्याज्ञिकैः, 'ऋत्विजो याज्ञिकाश्च ते' इत्यमरः । सहेति शेषः । क्रतूनां राजा क्रतुराजस्तम्, क्रतुश्रेष्ठमश्वमेधमित्यर्थः, प्रचक्रतुः । डु कृञ् करणे लिट् ॥ १७ ॥

**(सं.चं.)** कर्मकाण्डेषु कर्मप्रतिपादकवेदभागेषु । कर्मप्रयोगेषु वा । विधातृजो वसिष्ठः । प्रचक्रतुः विधानानतिक्रमः समृद्धता च प्रकर्षः ॥ १७ ॥

**मन्त्रतन्त्रोपकरणकर्त्तृवह्निषु केशवम् ।**
**देशे काले च मन्वानाश्चक्रुस्ते कर्म्म निर्म्मलम् ॥ १८ ॥**

**(भा.दी.)** 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुतौ ज्ञानिकृतकर्मणो महाफलहेतुत्वावगमादिदं ज्ञानपूर्वकमासीदित्याह– **मन्त्रे**ति । मन्त्रा वेदमन्त्रास्ते च, तन्त्राणि अध्वरकर्मणां प्रयोगास्तानि च, उपकरणानि स्रुक्स्रुवस्फ्यकपालादिसाधनानि च, कर्तारः षोडश ऋत्विजस्ते च, वह्नयः आहवनीयगार्हपत्यादयस्ते च तेषु, देशो क्षेत्रं प्रदेशस्तस्मिन्, कालः उत्तमकालस्तस्मिंश्च । कश्च ईशश्च केशौ चतुर्मुखरुद्रौ वर्त्तयतीति केशवः तम् । 'को ब्रह्मेति समुद्दिष्ट ईशोऽहं सर्वजन्तुषु । आवां तवाङ्गसम्भूतौ ततः केशवनामवान्' इति हरिवंशोक्तेः । मन्वानाः सन्तः, मन्त्रादिषु प्रतिपाद्यत्वादिना स्मरन्तः सन्तः, अत एव निर्मलं निर्गतं मलं न्यूनातिरिक्ततादिदोषो यस्मात् तत्तथोक्तम्, तत् कर्म चक्रुः ॥ १८ ॥

**(सं.चं.)** तमेव प्रकर्षं स्फुटमाह– मन्त्रेति । तन्त्रमाहुतिक्रिया । उपकरणान्याज्यादीनि । कर्ता यजमानः । उक्तं हि भगवता–'ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्' इति । सर्वत्र विष्णुदर्शनान्निर्मलम् ॥ १८ ॥

**इष्टिभेदैः प्रवर्ग्यैश्च सोमानां सवनैस्त्रिभिः ।**
**देवा अमाद्यन् वाय्वाद्याः पशुभिर्विविधैरपि ॥ १९ ॥**

---

१. **'वैभण्डक–'** इति वि.ती.पाठः ।

**(भा.दी.) इष्टी**ति । वायुराद्यो येषां ते तथोक्ताः देवा इन्द्रादयः, प्रधानयज्ञाङ्गभूता यागविशेषा इष्टयस्तासां भेदाः प्रभेदास्तैः, प्रवर्ग्या प्रवर्ग्यनामकाहुतिविशेषास्तैश्च, सोमाः सोमलतारसाः, तेषां त्रिभिः सवनैः प्रातस्सवनमाद्ध्यन्दिनसवनसायंसवनाख्याहुतिभिश्च, 'अभिषवः सवनं सवः' इत्यमरः । विविधैः, विविधा अजादयो ये पशवस्तैरपि, अमाद्यन् हर्षं प्रापुः । मदी हर्षे लङ् ॥ १९ ॥

**(सं.चं.)** अश्वमेधाङ्गत्वेन क्रियमाणैरिष्टिभेदैः । 'ज्योतिष्टोमायुषी चैवमतिरात्रौ च निर्मितौ । अभिजिद् विश्वजिच्चैवमाप्तोर्यामो महाक्रतुः' (१४.४२) इति वाल्मीकीये । प्रवर्ग्यैश्च । प्रवर्ग्या नाम यज्ञस्य पूर्णाङ्गत्वाय क्रियमाणाः कर्मविशेषाः । यत्र देवानामन्नं घर्माख्यं हविः प्रव्रज्यते । अधिकमस्मत्कृतायां श्रीमध्वविजयतत्वचन्द्रिकायाम् । सोमानां सवनैस्त्रिभिः । सोममभिषुत्य हवनं सवनम् । तानि च त्रीणि भवन्ति त्रिसन्ध्यम्– प्रातःसवनम्, माध्यन्दिनं सवनम्, सायंसवनमाहो तृतीयं सवनमिति । देवा अमाद्यन् वाय्वाद्याः । सोमग्रहे त्रीनंशान् वायुर्भजति । चतुर्थमंशमिन्द्र इति सोमपेषु देवेष्विन्द्रादिषु वायोः प्राधान्यम् । विवृतं चैतदैतरेयब्राह्मणे–'देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन् । अहं प्रथमः पिबेयमहं प्रथमः पिबेयमित्येवाकामयन्त । ते सम्पादयन्तोऽब्रुवन् । हन्ताऽजिमयाम स यो न उज्जेष्यति स प्रथमः सोमस्य पास्यतीति । तथेति त आजिमयुः । तेषामाजिं यतामभिसृष्टानां वायुर्मुखं प्रथमः प्रत्यपद्यत । अथेन्द्रोऽथ मित्रावरुणावथाश्विनौ । सोऽवेदिन्द्रो वायुमुद् वै जयतीति । तमनु परापतत् सह नावथोज्जयाव हेति । स नेत्यब्रवीदहमेवोज्जेष्यामीति । तृतीयं मेऽथोज्जयावेति । नेति हैवाब्रवीदहमेवोज्जेष्यामीति । तुरीयं मेऽथोज्जयावेति । तथेति तं तुरीयेऽत्यार्जत । तत् तुरीयभागिन्द्रोऽभवत् । त्रिभाग् वायुः' इति । अधिकं मध्वविजयटीकायाम् । पशुभिर्विविधैरपि । 'शामित्रे तु हयस्तत्र तथा जलचराश्च ये । ऋत्विग्भिः सर्वमेवैतन्नियुक्तं शास्त्रतस्तदा । पशूनां त्रिशतं तत्र यूपेषु नियतं तदा' (१४.२९-३०) इति वाल्मीकीये ॥ १९–२० ॥

**यजमानो दशरथो याजको ब्रह्मनन्दनः ।**
**रामोदयः फलं यस्य को नु तं वर्ण्णयेत् क्रतुम् ॥ २० ॥**

**(भा.दी.) यजे**ति । यस्य यज्ञस्य यजमानः यज्ञकर्ता, 'यष्टा च यजमानः स्यात्' इति हलायुधः, दशरथः, यस्य यज्ञस्य याजकः यज्ञकारयिता ब्रह्मनन्दनः, ब्रह्मणो नन्दनः पुत्रो वसिष्ठः, यस्य यज्ञस्य फलं साद्ध्यं रामोदयः श्रीरामप्रादुर्भावः, तं क्रतुं को नु वर्णयेत्, साकल्येन वर्णनं कुर्यात्, न कोऽपीत्यर्थः । वर्ण वर्णक्रियाविस्तारगुणवचनेषु लिङ् । कर्तृकारयितृसाद्ध्यप्रयोजनानामतिविशिष्टत्वादस्य वर्णनं को वा साकल्येन कुर्यात्? न कोऽपीति । मया किञ्चिन्मात्रवर्णनं कृतमिति भावः ॥ २० ॥

**दिशः प्रत्यर्प्पिता दृष्ट्वा दत्ता अप्यात्मनाऽखिलाः ।**
**रुग्मार्बुदं स ऋत्विग्भ्यो गवां लक्षाणि चादिशत् ॥ २१ ॥**

**(भा.दी.) दिश** इति । सः दशरथः, अखिलाः दिशः आत्मना स्वेन दत्ता अपि प्रदत्ता अपि, ऋत्विग्भिः प्रत्यर्पिताः परावृत्य दत्ताः दृष्ट्वा । तपस्स्वाद्ध्यायाभिरतानामस्माकं किं राज्याधिपत्यक्लेशेन, राज्यं तवैवास्त्विति 'अस्माकं तु यागार्थं धनं देहि' इत्युक्त्वा दिशः परावृत्य दत्ता इति भावः । ऋत्विग्भ्यः षोडशयाजकेभ्यः रुग्मानां सुवर्णानामर्बुदं तत्, अर्बुदमिति सङ्ख्याविशेषः, 'शतं सहस्रमयुतं नियुतं प्रयुतं तथा । कोटिरर्बुद-बृन्दौघा ज्ञेया दशगुणोत्तराः' इत्युक्तेः । गावो धेनवस्तासां लक्षाणि च अदिशत् प्रददौ । दिश अतिसर्जने लङ् ॥ २१ ॥

**(सं.चं.)** दिशः प्रत्यर्पिता दृष्ट्वा । 'प्राचीं होत्रे ददौ राजा दिशं स्वकुलवर्द्धनः । अध्वर्यवे प्रतीचीं तु ब्रह्मणे दक्षिणां दिशम् । उद्गात्रे च तथोदीचीं दक्षिणैषा विनिर्मिता' (१४.४३–४) इति, 'ऋत्विजस्त्वब्रुवन् सर्वे राजानं गतकल्मषम् । भवानेव महीं कृत्स्नामेको रक्षितुमर्हति । न भूम्या कार्यमस्माकं नहि शक्ताः स्म पालने' (१४.४४–५) इति च वाल्मीकीये । रुग्मार्बुदम् । रुग्मरूप्यकाणामर्बुदं दशकोटयः । गवां लक्षाणि दश ॥ २१ ॥

**वर्ण्णनाथः सुवर्ण्णेभ्यो दुर्वर्ण्णौघं चतुर्ग्गुणम् ।**
**प्रदाय प्रणनामोर्व्यां विष्णुर्न्नः प्रीयतामिति ॥ २२ ॥**

**(भा.दी.) वर्णे**ति । वर्णानां ब्राह्मणादिचतुर्वर्णानां नाथः स्वामी दशरथः, सुवर्णानि कनकानि तेभ्यः, चत्वारो गुणाः आवृत्तयो यस्य स तथोक्तस्तम्, 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । दुर्वर्णौघम्, दुर्वर्णानि रजतानि, 'दुर्वर्णं रजतं रूप्यम्' इत्यमरः, तेषामोघं समूहम्, प्रदाय दत्वा, विष्णुः नः अस्माकं प्रीयतां प्रीतो भवतु, प्रीङ् प्रीतौ लोट्, इति बुद्ध्या उर्व्यां भूमौ प्रणनाम नमश्चकार । णमु प्रह्वत्वे शब्दे च लिट् ॥ २२ ॥

**(सं.चं.)** चतुर्वर्णनाथः । सुवर्णरूप्येभ्यश्चतुर्गुणं दुर्वर्णरूप्याणामोघं पुञ्जम् । दुर्वर्णमिति रजतम् । चत्वारिंशत्कोटिमितं दुर्वर्णरूप्यचयं ददावित्यर्थः । 'गवां शतसहस्राणि दश तेभ्यो ददौ नृपः । दश कोटीः सुवर्णस्य रजतस्य चतुर्गुणम्' (१४.४८)इति च ॥ २२ ॥

**तदा राघवमेघेन कोटिहाटकवर्षिणा ।**
**तर्पितः[1] सकलो लोकः पुनर्न्नवइवाऽबभौ ॥ २३ ॥**

**(भा.दी.) तदे**ति । कोटिसङ्ख्याकानि यानि हाटकानि सुवर्णानि तानि वर्षितुं शीलमस्यास्तीति तथोक्तस्तेन, रघोर्गोत्रापत्यं पुमान् राघवो दशरथः स एव मेघइव,[2] तेन तर्पितः, सकलः समस्तः लोकः जनः । पुनः नवइव नूतनइव आबभौ आङ्पूर्वभा दीप्तौ लिट् । दशरथदत्तापूर्ववस्त्राभरणगवादिसमस्तवस्तुलाभात् पूर्वापेक्षया द्रष्टॄणां नूतनइवाऽबभाविति भावः । पुनर्न्नव इत्युक्तत्वादत्र नौषधिविशेषो दृष्टान्तत्वेन वक्तुमुचितः, तद्वाचिनो नित्यस्त्रीलिङ्गत्वात् ॥ २३ ॥

**(सं.चं.)** दशरथमेघेन । कोटिमितं हाटकं सुवर्णम् । 'जाम्बूनदं कोटिसङ्ख्यं ब्राह्मणेभ्यो ददौ तदा' (१४.५१)इति च । ब्राह्मणेभ्य इत्युपलक्षणम् । सर्ववर्णेभ्यश्च ददौ । नहि मेघोऽग्रहार एव वर्षति । अत एव वर्णनाथ इति पूर्वमुक्तम् । अतः सकलो लोकः पुनर्नवइवाबभौ । अपूर्वसम्पत्तिलाभेन नवं जीवनं प्राप्त इव ॥ २३ ॥

**याचमानाय विप्राय दरिद्रायाङ्गदं ददौ ।**
**हसन्नुन्मुच्य राजा तं ब्रह्मण्यं जनताऽऽर्च्चयत् ॥ २४ ॥**

**(भा.दी.) याचमानाये**ति । राजा दशरथः दरिद्राय, अत एव याचमानाय याचनं कुर्वते विप्राय । अङ्गदं बाहुभूषणं तत्, उन्मुच्य त्यक्त्वा, हसन् मन्दहासं कुर्वन् सन् ददौ । दाण् दाने लिट् । जनानां समूहो जनता, जनसमूह इत्यर्थः । 'ग्रामजनबन्धुसहायेभ्यस्तल्' (अ.सू.४.२.४३) इति समूहार्थे तल् । ब्रह्मणि साधुः ब्रह्मण्यः, तम् । 'तत्र साधुः' (अ.सू.४.४.९८) इति साध्वर्थे यत् । ब्राह्मणप्रियमित्यर्थः । तं दशरथं आर्चयत् । अर्च पूजायां लङ् ॥ २४ ॥

**(सं.चं.)** याचमानाय विप्राय । 'दरिद्राय द्विजायाथ हस्ताभरणमुत्तमम् । कस्मैचिद् याचमानाय ददौ राघवनन्दनः' (१४.५४) इति च । 'केयूरमङ्गदं प्रोक्तं बाहुमूलविभूषणम्' इत्यभिधानम् । बाहुमूलादुन्मुच्य ददौ । दाणो दाञो वा लिट् । ब्रह्मण्यं प्रियब्राह्मणवर्णम् ॥ २४ ॥

---

१. **'तर्पिताः सकला लोकाः'** २. इतः परम्– **'उपमितं व्याघ्रादिभिः सामान्याप्रयोग इत्युपमानोत्तरपदसमासः'** इत्यधिकं क्वचित् ।

**अश्वमेधाग्निनिर्दग्धपाप्मनः पार्थिवस्य ते ।**
**उदारस्य सदारस्य प्रणतस्याऽशिषोऽवदन् ॥ २५ ॥**

**(भा.दी.)** **अश्वे**ति । ते वसिष्ठाद्या मुनयः, अश्वमेधस्य योऽग्निस्तेन निर्दग्धः पाप्मा पापं यस्य स तथोक्त-स्तस्य । 'अस्त्री पङ्कं पुमान् पाप्मा' इत्यमरः । उदारस्य दानशीलस्य, 'उदारो दातृमहतोः' इत्यमरः । दारैर्भार्याभिः सहितः सदारस्तस्य, प्रणतस्य प्रह्वीभूतस्य, पार्थिवस्य राज्ञः दशरथस्य, आशिषः 'श्रीहरिः प्रसन्नः सन् सुपुत्रान् ददातु' इत्यादिशुभवाक्यानि ताः, 'आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः' इति वैजयन्ती, अवदन् । वद व्यक्तायां वाचि लङ् ॥ २५ ॥

**(सं.चं.)** ते ब्रह्मविदो ब्राह्मणाः । ऋत्विजो वा । उदारो वदान्यः ख्यातः सुकृती विदग्धो वा । 'उदारो महति ख्याते दक्षिणे दानशौण्डके' इति, 'उदारोदीर्णधन्यास्तु महात्मा सुकृतीति च' इति, 'अग्राम्ये सरळोदारविदग्धच्छेकदक्षिणाः' इति च यादवप्रकाशः ॥ २५ ॥

**आथर्वशिरसैर्म्मन्त्रैरिष्टिं कर्म्मविमुक्तये ।**
**पुत्रीयां च क्षितीन्द्रस्य व्यधाद् [१]वैभाण्डको मुनिः ॥ २६ ॥**

**(भा.दी.)** अत्यावश्यकतया प्रार्थनापूर्वमाकारितेन ऋश्यशृङ्गेण किमकारीत्यत आह– **आथर्वे**ति । विभण्डकस्या-पत्यं पुमान् वैभण्डकः मुनिः ऋश्यशृङ्गः, अथर्वशिरसि अथर्ववेदोपनिषदि विद्यमनाः आथर्वशिरसास्तैः मन्त्रैः क्षितीन्द्रस्य दशरथस्य पुत्रीयां पुत्रप्रदां इष्टिं इ(ष्टया)ख्ययागं (च) पुत्रप्राप्तौ प्रतिबन्धकीभूतं यत्कर्म तस्य विमुक्तिर्विनाशस्तस्यै व्यधाच्चकार । डु धाञ् धारणपोषणयोर्लुङ् ॥ २६ ॥

**(सं.चं.)** अध्यात्मप्रचुरत्वादथर्वणः शिर इव । अथर्वणः सारभूतो भागः । उपनिषद्वा । तत्रोक्ता आथर्वशिरसा मन्त्राः । 'इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् । अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः' (१५.२) इति च । पुत्रप्राप्तिप्रतिबन्धकात् प्राक्तनकर्मणो विमुक्तये ॥ २६ ॥

**ऋश्यशृङ्गस्तदा योगी हविर्भागार्थमागतान् ।**
**सुरान् सवासवान् दृष्ट्वा प्राञ्जलिः प्रत्यभाषत ॥ २७ ॥**

---

१. **'वैभण्डको–'** इति वि.ती.पाठः ।

**(भा.दी.)** **ऋश्ये**ति । योगः भगवति मनोयोगः अस्यास्तीति योगी, औत्पत्तिकयोगसामर्थ्यवानिति वा, ऋश्यशृङ्गः, तदा पुत्रेष्टियागकरणसमये, हविषो ये भागास्तेभ्य इति तदर्थम्, हविर्भागस्वीकरणार्थमित्यर्थः, आगतान् सवासवान् इन्द्रसहितान् सुरान् दृष्ट्वा, प्रकृष्टः अञ्जलिः निबद्धहस्तौ यस्य स प्राञ्जलिस्तथा सन्, 'तौ युतावञ्जलिः पुमान्' इत्यमरः, प्रत्यभाषत प्रोवाच । भाष व्यक्तायां वाचि लङ् ॥ २७ ॥

**(सं.चं.)** प्राञ्जलिः प्रबद्धाञ्जलिः । प्रत्येकमामन्त्र्याभाषत ॥ २७ ॥

**[१]अयं राजा विधायेष्टिं मेधावी हयमेधकृत् ।**
**शरणं पुत्रकामो वः प्राप्तः प्रीयध्वमञ्जसा ॥ २८ ॥**

**(भा.दी.)** देवान् प्रति किमाहेत्यत आह–**अयमि**ति । मेधा अवगतार्थधारणसमर्था बुद्धिरस्यास्तीति मेधावी । 'धीर्धारणावती मेधा' इत्यमरः । 'अस्-माया-मेधा-स्रजो विनिः' (अ.सू.५.२.१२१) इति मत्वर्थे विनिः । हयमेधाख्यं यागं कृतवानिति तथोक्तः । पुत्रेषु काम इच्छा यस्य तथोक्तः । 'इच्छामनोभवौ कामौ' इत्यमरः । अयं राजा इष्टिं इष्ट्याख्ययागं विधाय वः युष्मान् शरणं प्राप्तः । यूयं अञ्जसा सम्यक् प्रीयध्वं प्रीतिं कुरुध्वम् । प्रीङ् प्रीतौ लोट् ॥ २८ ॥

**(सं.चं.)** वो युष्मान् शरणमाश्रयं प्राप्तः । अञ्जसा आशु । 'अह्नाय सत्वरं च क्षिप्रं द्रुतमञ्जसा झटिति' इत्यभिधानम् ॥ २८ ॥

**इच्छत्यसावनुपमान् पुत्रांस्त्रैलोक्यविश्रुतान् ।**
**देवकार्य्यस्य भावित्वाद् यूयं तत्रानुमोदत[२] ॥ २९ ॥**

**(भा.दी.)** **इच्छती**ति । असौ दशरथः, त्रयो लोकास्त एव त्रैलोक्यम्, तस्मिन् विश्रुतान् प्रख्यातान्, अत एव न विद्यते उपमा येषां ते तथोक्तास्तान्, पुत्रान् इच्छति, इषु इच्छायां लट् । यूयं देवानां भवतां यत्कार्यं रावणादिहननलक्षणं प्रयोजनं तस्य भावित्वाद् भविष्यमाणत्वात् (?) । देवेन क्रीडादिगुणविशिष्टेन श्रीहरिणा कार्यस्य कर्तुं योग्यस्य रावणादिहननस्य भावित्वादिति वा । तत्र दशरथपुत्रजन्मनि अनुमोदत । अनुमतिं कुरुध्वम् । अनुपूर्वः मुद हर्षे लोट् ॥ २९ ॥

१. **'यजमानोऽयमिष्ट्वा वो मेधावी'** २. **'भावित्वादपि तत्रानुमोद्यताम्'**

**(सं.चं.)** तदर्थं न केवलम्, किन्तु भवदर्थं च दशरथेन पुत्रवता भाव्यमित्याह मुनिः– देवकार्यस्य रावणवधादिरूपस्य भावित्वात् । देवानां कार्यम् । देवस्य वा नारायणस्य कार्यम् । स किल जयविजययोर्वरं ददौ– त्रिष्वपि जन्मसु मयैव वध्यौ भवतमिति । 'यूयं तत्रानुमोदत' इति परस्मैभाषा कशायते । सत्यं पाणिनीया मुदधातुमात्मनेभाषं भाषन्ते । कवयस्तूभयतोभाषम् । प्रार्थयतीत्यादिवन्मोदति, मुमोदेत्यादिप्रयोगदर्शनात् । 'मुमुदुस्तौ प्रजा वीक्ष्य विश्वामित्रानुयायिनौ' (४.२९) इति चोपरि । 'सर्वस्मादुभयं पदम्' इति तु सर्वत्र समं समाधानम् । 'अनुमोद्यताम्' इति केचित् पठन्ति । तदपि चिन्त्यम् । मुदधातोर्भावे 'मुद्यते' इति रूपं स्यात्, न मोद्यत इति । मोदयते रूपमिति कथञ्चिदुपपादनीयं स्यात् ॥ २९ ॥

**प्रार्त्थिताः पार्त्थिवार्त्थं ते तापसेनेति निर्ज्जराः ।**
**वरं प्रदाय तं तस्मै ब्रह्मलोकमुपाययुः[१] ॥ ३० ॥**

**(भा.दी.) प्रार्थिता** इति । तापसेन तपःस्थितेन ऋश्यशृङ्गेण पार्थिवायेति पार्थिवार्थम्, दशरथप्रयोजनार्थमित्यर्थः, इति एवमादिप्रकारेण प्रार्थिताः ते निर्जराः तं पुत्रावाप्तिलक्षणं वरं तस्मै दशरथाय प्रदाय ब्रह्मणश्चतुर्मुखस्य यो लोकस्तं उपाययुः । या प्रापणे लिट् ॥ ३० ॥

**(सं.चं.)** तस्मै पार्थिवाय दशरथाय । निर्जरा हविर्भागार्थमागताः सवासवाः सुराः । ब्रह्मलोकं सत्यलोकम् ॥ ३० ॥

**जगदुस्ते जगद्योनिं नत्वा प्राञ्जलयः सुराः ।**
**नाथानाथाः प्रजाः पाहि रक्षोभ्यां[२] समुपद्रुताः ॥ ३१ ॥**

**(भा.दी.)** ब्रह्मलोकं प्रति मिलित्वा किमर्थं गता इत्यत आह– **जगदुरि**ति । ते इन्द्राद्याः सुराः, जायते गच्छतीति जगत् स्थिरचरात्मकं समस्तम्, तस्य योनिः कारणं तम् । 'योनिः स्त्रीणां भगे स्थाने कारणे' इति वैज-यन्ती । नत्वा प्राञ्जलयः सन्तः, हे नाथ स्वामिन्, न विद्यते नाथो यासां ता अनाथाः, अत एव रक्षोभ्यां रावणकुम्भकर्णाख्यराक्षसाभ्यां समुपद्रुताः सम्यक् पीडिताः प्रजाः पाहि । पा रक्षणे लोट् । इति एवमादि प्रकारेण जगदुः प्राहुः । गद व्यक्तायां वाचि लिट् ॥ ३१ ॥

**(सं.चं.)** जगतो योनिः कारणं चतुर्मुखः । रक्षोभ्यां समुपद्रुताः । अथाप्यनाथा अपालकाः प्रजा रक्षोभ्यां रावणकुम्भकर्णाभ्यां पाहि ॥ ३१ ॥

---

१. **'ब्रह्मलोकमथो ययुः'** २. **'रक्षोभ्यः समुपद्रुताः'**

**सुतौ विश्रवसोऽश्रान्तं तपस्तप्त्वा प्रतापिनौ ।**
**वरं हि प्रापतुस्त्वत्तः सर्वलोकैरवद्ध्यताम् ॥ ३२ ॥**

**(भा.दी.)** लोकपालत्वाद् भवद्भिः कुतो दानवा न वध्यन्त इत्यतः स्वावध्यत्वे हेतुभूतवरादिकं विज्ञापयन्ति– **सुतावि**त्यादिना । विश्रवसः विश्रवा इति नामवतः मुनेः सुतौ । प्रतापः पौरुषमनयोरस्तीति तथोक्तौ । 'प्रतापौ पौरुषातपौ' इति वैजयन्ती । रावणकुम्भकर्णौ, श्रान्तं मद्ध्ये विच्छिन्नं न भवतीत्यश्रान्तम्, निरन्तरमित्यर्थः, तपस्तप्त्वा, त्वत्तः सर्वे ये लोका जनास्तैः वद्ध्यो न भवतीत्यवद्ध्यः तस्य भावः तत्ता तां अवध्यत्व-लक्षणमित्यर्थः, वरम्, 'दैवाद् वृते वरः श्रेष्ठे त्रिषु' इत्यमरः । प्रापतुः लब्धवन्तौ हि । प्रपूर्वः आप्लृ व्याप्तौ लिट् ॥ ३२ ॥

**(सं.चं.)** विश्रवसः कैकस्यां जातौ सुतौ रावणकुम्भकर्णौ । कुम्भकर्णः पुरातने जन्मनि हिरण्याक्षत्वे वरं प्राप– 'अहं ब्रह्मसृष्टैरवध्यः सदा स्याम्' इति । स वरो जन्मान्तरेऽप्यन्ववर्तत । रावणस्तु तस्मिन्नेव जन्मनि । नरान् वानरांश्चर्ते सर्वलोकैः । प्रतापिनौ प्रतापवन्तौ । परानुत्थानहेतुः प्रतापः । परेषां तापकौ च ॥ ३२ ॥

**कुम्भकर्णाग्रजोऽत्युग्रो रावणो लोकरावणः ।**
**दिशो दश दशास्योऽसावजयत् खलु लीलया ॥ ३३ ॥**

**(भा.दी.)** **कुम्भे**ति । कुम्भकर्णाग्रजः कुम्भकर्णज्येष्ठः, अत्युग्रः अत्यन्तं क्रूरः, लोकान् जनान् रावयति आक्रोशयतीति तथोक्तः । दश आस्यानि मुखानि यस्य स दशास्यः । असौ रावणः, रावयति आक्रोशयति सर्वान् जनानिति हेतोः रावणशब्दवाच्यः । दश दशसङ्ख्याकाः दिशः, दिक्ष्ववस्थितजनानित्यर्थः, लीलया अजयत् खलु । जि जये लङ् ॥ ३३ ॥

**(सं.चं.)** लोकान् रावयतीति लोकरावणः । दश दिशोऽजयत् । जनविजयं हि दिग्विजयमाचक्षते ॥ ३३ ॥

**विंशद्भिर्बाहुमुसलैरवहत्य जघास सः ।**
**भयाग्निभर्जितान् देहिव्रीहीन् पृथुकवत् खलः[1] ॥ ३४ ॥**

१. 'पृथुकवत् सदा'

**(भा.दी.) विंशदिति** । खलः दुष्टः सः रावणः, भयमेवाग्निस्तेन भर्जितान् सन्तप्तान् देहिनः प्राणिन एव व्रीहयस्तान्, विंशद्भिर्विंशत्सङ्ख्याकैः, विंशतिशब्दपर्यायोऽयं विंशच्छब्दः, बाहव एव मुसलास्तैः । 'अयोग्रो मुसलोऽस्त्री स्यात्' इत्यमरः । अवहत्य अवहननं कृत्वा पृथुकवत् पृथुकतण्डुलानीव जघास अभक्षयत् । अद भक्षणे लिट् । 'अदेर्घस्लृ' इति घस्लादेशः[1] ॥ ३४ ॥

**(सं.चं.)** विंशद्भिरिति । प्रतनैराचार्यैर्विंशतिपदवत् विंशत्पदमपि प्रचुरं प्रयुज्यते । विवृतमेतदस्मत्कृतायां प्रत्नप्रयोगमीमांसायाम् । एवमपि स्यात्– कविना विंशत्या बाहुमुसलैरित्येव प्रायोजि । लिपिकृत्प्रमादेन पश्चात् विंशद्भिरिति पाठान्तरं जातमिति । उत्तरत्राप्येतादृशाः प्रयोगाः प्रचुरं दृश्यन्ते । मुसल इति तुषावहननहेतु-रयःशिरा दारुमयः साधनविशेषः । '**ಒನಕೆ**' इति भाषायाम् । पृथुकाश्चिपिटाः ।'**ಅವಲಕ್ಕಿ**' इति भाषायाम् । व्रीहयो हि मुसलावहता अग्निभर्जिता पृथुका भवन्ति । जघास आद ॥ ३४ ॥

**देवोपदेवभूदेवनरदेवानुतेतरान् ।**
**मारयन् दारयन्[2] भ्राम्यत्यहो सिंहो मृगानिव ॥ ३५ ॥**

**(भा.दी.) देवेति** । देवा इन्द्रादयस्ते च, उपदेवा गन्धर्वादयस्ते च, भूदेवा ब्राह्मणास्ते च, नरदेवाः पार्थिवास्ते च तान्, इतरान् उत मृगपक्ष्यादींश्च, मृगान् सिंह इव मारयन् संहरन् सन्, दारयन् विदारयन् सन्, भ्राम्यति सञ्चरति । अहो आश्चर्यम् । भ्रमु चलने लट् ॥ ३५ ॥

**(सं.चं.)** उपदेवाः, यक्षगन्धर्वादयः, येये देवानुपसेवन्ते । भूदेवा विप्राः । नरदेवाः क्षत्रियाः । इतरानपि मनुष्यान् स्त्रीबालादीन् पशूंश्च गवादीन् । भ्राम्यति देशाद् देशान्तरं चलति ॥ ३५ ॥

**यद्यच्चारुतरं घोरः पश्येद् भुवनमण्डले ।**
**धनं जीवधनं वाऽपि तत्तल्लङ्कामयापयत् ॥ ३६ ॥**

**(भा.दी.) यदिति** । घोरः भयङ्करो रावणः, भुवनस्य मण्डलं प्रदेशस्तस्मिन्, अतिशयेन चारु चारुतरं तत् धनं रत्नादिरूपं धनम्, जीवरूपधनं जीवधनं तद् वाऽपि, गजाश्वादिकं वेत्यर्थः । यद्यद् वस्तु पश्येत् । दृशिर् प्रेक्षणे लिङ् । तत्तद् वस्तु लङ्कां प्रति अयापयत् प्रापयामास । या प्रापणे लङ् ॥ ३६ ॥

---

१. अदेर्धातोः '**लिट्यन्यतरस्याम्**' (अ.सू.२.४.४०) घस्लृ इत्ययमादेशो भवतीति वचनाद् घस्लादेश इत्यर्थः । अतोऽत्र '**अदेर्लिटि घस्लादेशः**' इत्येव स्वरसो मूलपाठः ।

२. '**मारयन् द्रावयन्**'

**(सं.चं.)** जीवरूपं धनं वनितादिकम् । आह भवभूतिरपि–'रत्नं चेत् क्वचिदस्ति तत्परिणमत्यस्मासु शक्रादपि' इति महावीरचरिते ॥ ३६–७ ॥

**स्त्रीरत्नानां सरत्नानां नृशंसः पश्यतोहरः ।**
**दूषणं च कुलस्त्रीणां भूषणं स्वस्य मन्यते ॥ ३७ ॥**

**(भा.दी.)** **स्त्री**ति। रत्नैः सहितानि सरत्नानि तेषाम्, स्त्रीषु रत्नानि तेषाम्, 'रत्नं स्वजातिश्रेष्ठेषु' इत्यमरः । पश्यतः हरतीति पश्यतोहरः, जनेषु पश्यत्स्वपि बलाद्धरतीत्यर्थः । '–वाग्दिक्पश्येभ्यो युक्तिदण्डहरेषु–'[१] इति षष्ठ्या अलुक् । नृशंसः क्रूरः रावणः सत्कुलप्रसूतस्त्रियः कुलस्त्रियस्तासां दूषणं पातिव्रत्यदूषणम्, तत् स्वस्य भूषणं आभरणम्, तत् मन्यते जानाति । मन ज्ञाने लट् ॥ ३७ ॥

**तपःस्वाद्ध्याययज्ञानामन्तरायं निरन्तरम् ।**
**देवर्षिविप्रियापेक्षी दुराचारश्चरत्ययम् ॥ ३८ ॥**

**(भा.दी.)** **तप** इति। दुष्ट आचारो यस्य स दुराचारः, अयं रावणः। देवा इन्द्रादयस्ते च, ऋषयो वसिष्ठाद्यास्ते च, तेषां यद्विप्रियमप्रियं तदपेक्षितुं शीलमस्यास्तीति तथोक्तः सन्। तपश्च स्वाध्यायो वेदश्च यज्ञाश्च तेषाम्। निर्गतमन्तरं व्यवधानं यथा भवति तथा निरन्तरम्, सर्वदेत्यर्थः। अन्तरायो विघ्नस्तम्। चरति आचरति, करोतीत्यर्थः । चर गतिभक्षणयोः लट् ॥ ३८ ॥

**(सं.चं.)** ब्रह्मचर्यादिकं तपः । गाढं तत्वचिन्तनं च तपः । स्वाध्यायो वेदाध्ययनम् ॥ ३८ ॥

**लोकपालान् महेन्द्रादीनस्मान् विस्मयविक्रमः ।**
**अजान्[२] गजाधिपइव प्राद्रावयदतिद्रुतम् ॥ ३९ ॥**

**(भा.दी.)** **लोके**ति । विस्मय आश्चर्यकरो विक्रमः पराक्रमो यस्य स तथोक्तः रावणः, महेन्द्रः पुरन्दरः आदिर्येषां ते तथोक्तास्तान् लोकपालान्, अस्मान्, अजान् छागान् गजाधिपइव गजश्रेष्ठइव अत्यन्तं द्रुतं यथा भवति तथा अतिद्रुतं प्राद्रावयत् । युद्धे पराजित्य व्यद्रावयत् । द्रु गतौ लङ् ॥ ३९ ॥

---

१. **'षष्ठ्या आक्रोशे'** (अ.सू.६.३.२१) इत्यत्रेदं वार्तिकम्–**'षष्ठीप्रकरणे वाग्दिग्पश्यद्भ्यो युक्तिदण्डहरेषु यथासङ्ख्यमलुग् वक्तव्यः'** इति।

२. **'अजानजाधिपइव'**

**(सं.चं.)** विस्मयजनको विक्रमो यस्य । 'विस्मेयविक्रमः' इत्यपि मूलपाठः सम्भाव्यते ॥ ३९ ॥

**वधोपायोऽनपायस्य यदि नास्य निरूप्यते ।**
**प्राप्यते प्रळयः स्वामिन् रुद्रकालान्तकान् विना ॥ ४० ॥**

**(भा.दी.)** **वधेति** । स्वामिन् चतुर्मुख, त्वया, न विद्यते अपायो नाशो यस्य सोऽनपायस्तस्य, अस्य रावणस्य, वधे संहारे उपायः वधोपायः, यदि न निरूप्यते नोच्यते । निपूर्वः रूप रूपक्रियायां लट् । तर्हि रुद्रश्च, कालो मृत्युः स च, 'कालो मृत्यौ यमे च' इति वैजयन्ती, अन्तको यमः स च, तान् विना । प्रळयः सर्वनाशः, जगत इति शेषः, प्राप्यते । प्रपूर्वः आप्लृ व्याप्तौ लट् । रावणश्चेज्जीवति तर्हि संहर्तृत्वेन प्रसिद्धान् रुद्रादीन् विनाऽपि संहारः प्राप्यते । अतः तद्वधोपायोऽवश्यं निरूप्य इति भावः ॥ ४० ॥

**(सं.चं.)** अनपायस्य वरबलात् पराजयमरणाद्यपायरहितस्य । काला इति तन्नामानो मृत्युदेवताः । काल इति मरणकालो वा । अन्तको यमः ॥ ४० ॥

**इति देववचः श्रुत्वा देवः स्मितमुखोऽब्रवीत् ।**
**यो योगक्षेमदाता नस्तेन हीदं[१] विधित्सितम् ॥ ४१ ॥**

**(भा.दी.)** एवं प्रार्थिते ब्रह्मणा किं निरूपितमित्यत आह– **इतीति** । देवश्चतुर्मुखः, देववचः देवानामिन्द्रादीनां वचस्तत्, श्रुत्वा स्मितं मन्दहासोपेतं मुखं यस्य स तथा सन्, यः श्रीहरिः नः अस्माकम्, अप्राप्तस्य प्राप्तिर्योगः स च, प्राप्तस्य परिरक्षणं क्षेमं तच्च तयोर्दाता दानशीलः, तेन हरिणा इदं भवदुक्तं रावणहननलक्षणं कार्यं विधित्सितं विधातुमिष्टं हि इति अब्रवीत् । ब्रूञ् व्यक्तायां वाचि लङ् । अन्येषां तद्वधे सामर्थ्याभावात्तेनैवेदं कर्तव्यमिति भावः ॥ ४१ ॥

**(सं.चं.)** योगक्षेमदाता । आह हि भगवानेव–'योगक्षेमं वहाम्यहम्' इति । को योगः? अपूर्ववस्तुसंयोगो योगः । कः क्षेमः? अक्षीणो भोगः । 'जानीयान्मङ्गलं क्षेमं क्षेमं लब्धार्थरक्षणम्' इत्यभिधानम् । इदं तथा वरदानम्, तेन तस्य दौरात्म्यं चेतीदं सर्वं तेन भगवता विधित्सितम् । तदिच्छया विहितम् ॥ ४१ ॥

**यस्मै बलिं हरामोऽङ्ग विश्वेऽपि विवशा वयम् ।**
**विद्धनासा यथा गावः स शार्ङ्गी शं विधास्यति ॥ ४२ ॥**

---

१. 'नस्तेन हार्दं विधित्सितम्'

**(भा.दी.)** अन्यैः कर्त्तुमशक्यमिदं कार्यं श्रीहरिः कथं वा कुर्यादित्यतस्तन्महिमानमाह– **यस्मा** इति । अङ्गेत्यव्ययं प्रियसम्बोधने । अङ्ग हे प्रियाः देवाः, वयं विश्वेऽपि सर्वेऽपि, विद्धा च्छिद्रीकृता नासा नासिका येषां ते तथोक्ताः, गावः यथा परवशाः तथा विवशाः परवशाः सन्तः यस्मै श्रीहरये बलिं करं पूजाम्, 'करोपहारयोः पुंसि बलिः' इत्यमरः । हरामः दद्मः समर्पयामो वा । हृञ् हरणे लट् । सः शार्ङ्गी श्रीहरिः शं सुखम्, 'शमव्ययं च सौख्यार्थे' इति रत्नमाला । विधास्यति करिष्यति । विपूर्वः डु धाञ् धारण-पोषणयोर्लृट् ॥ ४२ ॥

**(सं.चं.)** विद्धनासाः पाशबद्धनासाः । बलिः पूजा । पूजायां ह्रियमाणं हविरादिकं च । सुखं वा दुःखं वा तदधीनम् । नास्मद्वशं किमपि । सम्प्रति दुर्दिनान्यतीतानि । अतः स शं विधास्यति सुखं दास्यति । 'शर्म जोषं च शं सुखम्' इत्यभिधानम् ॥ ४२ ॥

**एतावदुक्त्वा भगवान् सभवः कञ्जसम्भवः[१] ।**
**सवृन्दारकवृन्दोऽथ तीरं क्षीराम्बुधेर्य्ययौ ॥ ४३ ॥**

**(भा.दी.)** एवमभिधाय किमकारीत्यत आह– **एतावदि**ति । अथ भगो भगवज्ज्ञानमस्यास्तीति भगवान्, 'भगो यत्ने यशोवीर्यार्कभूतिषु । कान्तीच्छाज्ञानवैराग्यधर्मैश्वर्यतपस्सु च' इति वैजयन्ती । भवेन रुद्रेण सहितः सभवः, पङ्कजात् श्रीहरिनाभिकमलाद् उद्भव उत्पत्तिर्यस्यासौ पङ्कजोद्भवः ब्रह्मा, एतावत् वचः उक्त्वा, वृन्दारकाणां देवानां वृन्दानि समूहास्तैः सहितः सवृन्दारकवृन्दस्तथा सन्, क्षीरमयानि अम्बूनि धीयन्ते पूर्यन्तेऽत्रेति क्षीराम्बुधिस्तस्य तीरं तटं तत् प्रति ययौ । या प्रापणे लिट् ॥ ४३ ॥

**(सं.चं.)** कञ्जसम्भवभवनेतृकं वृन्दावरकवृन्दम् । 'गीर्वाणा ऋभवोऽमराश्च मरुतो वृन्दारका निर्जराः' इत्यभिधानम् ॥ ४३ ॥

**प्रतिबिम्बमिवापश्यन् भगवत्कीर्त्तिवारिधेः ।**
**पीयूषवारिधिं हारगौरं पीयूषभोजनाः ॥ ४४ ॥**

**(भा.दी.)** समुद्रादिवर्णनस्य काव्यलक्षणत्वात् तं वर्णयति– **प्रतिबिम्बमिवे**त्यादिना । पीयूषममृतं भोजनं येषां ते तथोक्ताः देवाः, हारवत् मुक्तामणिमालावद् गौरः श्वेतः तम्, पीयूषमयानि क्षीरमयानि वारीणि धीयन्तेऽत्रेति पीयूषवारिधिस्तम् । 'पीयूषोऽभिनवं पयः' इत्यमरः । भगवतः श्रीनारायणस्य या कीर्तिः सैव

१. **'सभवः पङ्कजोद्भवः'** इति वि.ती.सम्मतः पाठः ।

वारिधिः समुद्रस्तस्य प्रतिबिम्बमिव प्रतिरूपमिव । 'प्रतिबिम्बं प्रतिरूपं प्रतिमानं प्रतिकृतिः' इति हलायुधः । अपश्यन्, दृशिर् प्रेक्षणे लङ् । क्षीरसमुद्रस्य श्वेतवर्णत्वात् कीर्तेश्च श्वेतत्वेन कविभिर्वर्ण्यमानत्वात् बिम्बप्रतिबिम्बभाव इति भावः ॥ ४४ ॥

**(सं.चं.)** पीयूषवारिधिः क्षीरसागरः । 'दुग्धं स्तन्यं पयश्च पीयूषम्' इति च । कीर्तिर्धवळेति कविसमयः । यशसा धवळिता दिश इत्याचक्षते । तेन धवळस्य क्षीरसागरस्य तत्प्रतिबिम्बत्वमुत्प्रेक्ष्यते । पीयूषभोजना इत्यमृताशनाः । 'अमृतं त्रिदशाहारः सुधा पीयूषमिष्यते' इति, 'अमृताशना अनिमिषा देवाः' इति च ॥ ४४ ॥

**पुरायितं मुररिपोर्म्मणिराजिविराजितम् ।**
**सालायमानैरुत्तुङ्गैस्तरङ्गैरुपशोभितम्[1] ॥ ४५ ॥**

**(भा.दी.) पुरेति** । मुरस्य मुरनामकदैत्यस्य रिपोः श्रीहरेः पुरवदाचरतीति पुरायितस्तम्, क्षीराम्बुधौ भगवतोऽवस्थानादिति भावः । मणीनां रत्नानां राजयः पङ्क्तयस्ताभिर्विराजितं शोभितम् । '[2]श्रेणी लेखास्तु राजयः' इत्यमरः । रत्नाकरत्वात् समुद्रस्येति भावः । सालवत्प्राकारवद्वर्तन्त इति सालायमानास्तैः, 'प्राकारो वरणः सालः' इत्यमरः, उत्तुङ्गैरुन्नतैः तरङ्गैरुपशोभितं पीयूषवारिधिं अपश्यन्निति पूर्वेणान्वयः ॥ ४५ ॥

**(सं.चं.)** उदधिः मुक्तामणिराजिविराजितः । पुरं तु मरतकादिसर्वविधमणिराजिविराजितम्, कन्यामणिभिश्च विराजितम् । स्वजातिश्रेष्ठं सर्वं रत्नमिति मणिरिति चोच्यते । 'अश्मगर्भं मरतकं हरिन्मणिरिति स्मृतम् । शोणाश्मा पद्मरागः स्याद् वैडूर्यं वाळवायजम् । स्फटिकः सूर्यकान्तः स्यादर्काश्मा दहनोपलः । रत्नं वसु मणिः सर्वम्' इति च । 'राजिः पङ्क्तौ' इति वैजयन्ती । सालः दुर्गप्राकारः ॥ ४५ ॥

**गम्भीरस्तोत्रनिनदं लोलमन्तः कुतूहलात् ।**
**अत्यन्तमिव नृत्यन्तं भक्तं भक्तानुरागिणः ॥ ४६ ॥**

**(भा.दी.) गम्भीरेति** । देवाः, गम्भीरमर्थतोऽगाधं यत् स्तोत्रं तद्वत् निनदो ध्वनिर्यस्य स तथोक्तस्तम् । 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः' इति श्रुतौ समुद्रघोषादेरपि भग-

---

१. **'–स्तरङ्गैः परिशोभितम्'**

२. श्रेणीति पूर्वान्वयि –**'वीथ्यालिरावलिः पङ्क्तिः श्रेणी'** इति । **'लेखास्तु'** इति तुशब्देन पृथक्करणात् । तेन नेदमत्र स्वरसमुदाहरणम् ।

वद्गुणप्रतिपादकत्वोक्तेः भगवद्विषयकस्तोत्रस्यापि तद्गुणप्रतिपादकत्वात् तयोरुपमानोपमेयभाव इति भावः । अन्तः कुतूहलात् कौतुकादिव, 'कौतुकं तु कुतूलहम्' इत्यमरः, लोलं चञ्चलम् । भक्तपक्षे तु लोलं लोलुपम्, 'लोलं चले लोलुपे च' इति वैजयन्ती । अत एव अत्यन्तं नृत्यन्तमिव स्थितं क्षीरसमुद्रम्, भक्तेषु अनुरागो दया अस्यास्तीति तथोक्तस्तस्य, श्रीनारायणस्य भक्तमिव, अपश्यन्निति पूर्वेण समन्वयः ॥ ४६ ॥

**(सं.चं.)** भक्तः स्तोत्रेण निनदति । उदधेर्निनिद एव स्तोत्रायते । 'सर्वे घोषाः' इति समुद्रघोषादयोऽपि हि भगवद्गुणवाचकाः । अन्तरभिमानाज्ज्ञामातृविषयकात् कुतूहलादिव बहिर्लोलं पारिप्लवम् । उत्प्रेक्षैव ह्यपठ्यमानमपीवशब्दमावर्तयति । लोकेऽपि ह्यन्तः कुतूहलेन भ्रमन्मना बहिरपि तूष्णीकां स्थातुमप्रभवन्नितस्ततः परिभ्रमति । भक्तस्तु कुतूहलादेव पुनःपुनरधिकमधिकं भगवद्गुणजातं ज्ञातुं लोलः सतृष्णः । 'लोलश्चले सतृष्णे च' इति हैमः । अशक्यनियन्त्रणः कश्चनौत्सुक्यातिशयः, उत्प्लवनमिव मनसः काचिदुत्कता कुतूहलम् । परिप्लवैस्तरङ्गैरत्यन्तं पानमत्तमिव नृत्यन्तं वारिधिम् । इवेन समासस्य प्रायिकत्वादत्र 'अत्यन्तमिव' इति भिन्ने पदे । भक्तं च भक्तिविवशतयाऽत्यन्तमुत्प्लुत्योत्प्लुत्य नृत्यन्तम् । कस्य भक्तम्? भक्तानुरागिणो हरेः । भक्तवत्सलो हि भगवान् । अथ च भक्तानुरागिणः भगवद्भक्तेषु प्रीतिमन्तः सन्तः यथा भक्तं बहुमानेन पश्यन्ति तथा क्षीरवारिधिं देवा अपश्यन् ॥ ४६ ॥

**तस्य तीरमधिष्ठाय कञ्जोद्भवभवादयः ।**
**तुष्टुवुस्तुष्टमनसो विष्टरश्रवसं सुराः ॥ ४७ ॥**

**(भा.दी.)** **तस्येति** । [१]कादुदकाज्जायत इति कञ्जं कमलम्, तस्मादुद्भवो यस्य चतुर्मुखस्य स कञ्जोद्भवः, स च, भवो रुद्रः स च, तौ आदी येषां ते तथोक्ताः सुराः । तस्य क्षीरसमुद्रस्य तीरं तटं तत् अधिष्ठाय आश्रित्य, तुष्टं मनो येषां ते तथा सन्तः, विष्टरं व्यापनशीलं श्रवः कीर्तिर्यस्य स तथोक्तस्तं श्रीहरिं तुष्टुवुः स्तुतवन्तः । ष्टुञ् स्तुतौ लिट् ॥ ४७ ॥

**(सं.चं.)** तुष्टमनसः । तुष्टं प्रीतियुक्तं मनो येषां ते । विष्टरश्रवसम् । देवेष्विव दैत्येष्वपि विष्टो रमत इति श्रवः कीर्तिर्यस्य तम् । अन्तःस्थित्वा रमणकृदन्तरः । अन्तर्विष्ट्वा रमणकृद् विष्टरः । अथाप्याहुः– विष्टरो वृक्षः । 'पलाशी विष्टरः स्थिरः' इत्यभिधानात् । विष्टरे अश्वत्थवृक्षे श्रूयत इति विष्टरश्रवाः । 'अश्वत्थः सर्ववृक्षाणाम्' इति स्मरणात् । विष्टरो दर्भमुष्टिरिव श्रवसी कर्णावस्येति विष्टरश्रवा इत्यन्ये ॥ ४७ ॥

---

१. कमित्यव्ययम् । तेन **'कमुदकात्'** इति युक्तम् ।

**नमो नागेन्द्रशय्याय नमो नानाविलासिने ।**
**नमोऽनाद्यन्तमद्ध्याय नमो नारायणाय ते ॥ ४८ ॥**

**(भा.दी.)** स्तुतिप्रकारमाह–**नम** इत्यादिना । नागेन्द्रः शेषः शय्या पर्यङ्को यस्य स तथोक्तस्तस्मै नमः । अस्त्विति शेषः । नानाविधा ये विलासा सृष्ट्यादिरूपाः क्रीडास्तस्य सन्तीति तथोक्तस्तस्मै, ते तुभ्यं नमः । आदिरुत्पत्तिः स च, अन्तो विनाशः स च, मध्यं मध्यावस्था तच्च, न विद्यन्ते तानि यस्य स तथोक्तस्तस्मै, आद्यन्तयोरभावात् तन्निरूप्यं मध्यं च नास्तीति भावः, नमः । नराणां सम्बन्धि नारं ज्ञानं तस्य अयनमाश्रयो नारायणस्तस्मै, ज्ञानस्य विषयतया आश्रयायेत्यर्थः, ते नमः । अस्त्विति प्रत्येकं सम्बन्धः ॥ ४८ ॥

**(सं.चं.)** विलासो लीलाभिव्यञ्जनम् । 'सृष्टिसंहारलीलाविलासाततम्' इत्याचार्यवचनम् । स्वयमादिमध्यान्त-रहितः । अनस्य प्राणतत्वस्याप्याद्यन्तमध्यः । अनोपलक्षितस्य सर्वस्य जगतः । भगवत आद्यन्तौ न स्त इति न मध्यं च । इतरत्र आद्यन्तयोरुत्पत्तिसंहारयोर्मध्यमिति स्थितिः । 'नान्तं न मध्यं न पुनस्तवादिं पश्यामि' इति गीतासु । 'त्वमादिरन्तो जगतोऽस्य मध्यम्' इति भागवते । नराणामिमे तत्वमानिन इति नाराः देवाः । तेषामयनः । नाराया रमाया अपि । क्षराक्षरपुरुषाभ्यामुत्तमायेत्येतत् ॥ ४८ ॥

**विपत्त्युत्पत्तिनियतिस्थितिज्ञप्तिसमावृतीः ।**
**सृतिं मुक्तिं च जगतः[१] स्वामिन्नेकः करोत्यहो ॥ ४९ ॥**

**(भा.दी.)** **विपत्ती**ति । जगतः विपत्तिः संहारः सा च, उत्पत्तिः सृष्टिः सा च, नियतिः प्रेरणा सा च, स्थितिः पालनं सा च, ज्ञप्तिर्ज्ञानं सा च, समावृतिरज्ञानं सा च ताः, सृतिं संसारम्, मुक्तिं मोक्षं च, हे स्वामिन्, एकः भवान् करोति । डु कृञ् करणे लट् । अहो आश्चर्यम् ॥ ४९ ॥

**(सं.चं.)** विपत्तिः संहारः । समावृतिरज्ञानम् । करोति भवान् । 'करोष्यहो' इत्यापि मूलपाठः स्यात् । अहो त्वदृते कोऽन्यः प्रभवेत्? न कोऽपि ॥ ४९ ॥

**नैकैकशोऽपि गणशस्तवानन्तान् गुणान् वयम् ।**
**समापयामः सततं गायन्तोऽप्यपरे कुतः ॥ ५० ॥**

१. 'जगतां स्वामि–'

**(भा.दी.)** **ने**ति । एकं च एकं च एकैकशः । 'सङ्ख्यैकवचनाच्च वीप्सायाम्' (अ.सू.५.४.४३) इति शस् । एकैकगुणमपीत्यर्थः । गणशः समूहात्मकान्, गुणसमूहात्मकान् । गुणानां प्रत्येकं परिपूर्णगुणत्वादिति भावः । न विद्यते अन्तो विनाशो येषां ते तथोक्तान् । तव गुणान् वयं सततं गायन्तोऽपि वर्णयन्तोऽपि न समापयामः समाप्तिं न गच्छामः । समाङ्पूर्वः आप्लृ व्याप्तौ लट् । अपरे अस्मद्व्यतिरिक्ता ऋष्यादयः कुतः समापयेयुः? न कुतोऽपीत्यर्थः । ज्ञानादिगुणैरस्मत्तोऽवराणां तेषां गुणानां वर्णयित्वा समापनमत्यन्तमसम्भावितमिति भावः ॥ ५० ॥

**(सं.चं.)** एकैकशोऽप्यनन्तान् । गणशोऽप्यनन्तान् । 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' इति हि भागवते । गणशो गायन्तोऽपि । सर्वे वयं सम्भूय गायन्तोऽपि न समापयामः नान्तं गच्छामः । सम्पूर्व आपिः पूर्णतावचनः ॥ ५० ॥

**यावन्न निर्दहति रावणनामवह्नि-**
**र्विश्वं च दाशरथिभूयमुपेत्य[1] तावत् ।**
**त्वं नाथ तं शमय वीर्य्यसमुद्रपूरै-**
**र्भक्ताननन्यशरणान् कुरु वीततापान्** ॥ ५१ ॥

**(भा.दी.)** एवं भगवतः स्तुतिं कृत्वा स्वाभिप्रेतं निवेदयन्ति– **यावदि**ति । हे नाथ स्वामिन् हरे, त्वं यावत् यतः पूर्वं, रावण इति नाम यस्य स रावणनामा स चासौ वह्निश्च, सः । विश्वं जगत् न निर्दहति न भस्मीकरोति, न विनाशयतीत्यर्थः । दह भस्मीकरणे लट् । तावत् ततः पूर्वं दशरथस्यापत्यं पुमान् दाशरथिः तत्त्वेन भवनं दाशरथिभूयं तत्, दशरथपुत्रत्वमित्यर्थः । भूयमिति भावार्थे क्यप्प्रत्ययान्तो नपुंसकलिङ्गोऽयं शब्दः । उपेत्य सम्प्राप्य, वीर्यं बलम्, प्रभावो वा वीर्यम् । 'वीर्यं बले प्रभावे च' इत्यमरः । तदेव समुद्रस्तस्य पूरा उदकवृद्धयस्तैः । 'पूरः स्यादम्भसो वृद्धिः' इति हलायुधः । तं रावणाख्यं वह्निं शमय विनाशय । शमु उपशमे लोट् । न विद्यते अन्यः शरणं रक्षको येषां ते तथोक्तास्तान् । 'शरणं गृहरक्षित्रोः' इत्यमरः । भक्तान् अस्मान् । वीतो विहतस्तापो येभ्यस्ते तथोक्तास्तान् । कुरु च ॥ ५१ ॥

**(सं.चं.)** दाशरथेर्भावो दाशरथिभूयम् । दशरथपुत्रत्वम् । विश्वं च समग्रं विश्वम् । पूरैरुद्वेलैरम्भोभिः । 'पूरस्तु जलबृंहणम्' इति यादवप्रकाशः । तभजजैर्गाभ्यां च वसन्ततिलका ॥ ५१ ॥

---

१. 'दाशरथिरूपमुपेत्य'

गीर्वाणैरिति नुतिमद्भिरर्थ्यमानः
प्रत्यक्षीभवति पुरा पुराणमूर्त्तिः ।
बालार्कप्रकररुचिः पिशङ्गवासाः
स्वाकल्पस्फुरितमणिर्म्मनोभिरामः ॥ ५२ ॥

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे बालकाण्डे द्वितीयः सर्ग्गः ॥**

—०—

**(भा.दी.)** ब्रह्मादिभिरेवमर्थितो भगवान् प्रत्यक्षोऽभूदित्याह– **गीर्वाणैरि**ति । इति एवमादिरीत्या नुतिः स्तुतिः एषामस्तीति नुतिमन्तस्तैः, स्तुतिं कुर्वद्भिरित्यर्थः, गीर्वाणैः देवैः इति अर्थ्यमानः प्रार्थ्यमानः, पुरा आदिकाले अनिति चेष्टत इति पुराणी प्रळयकालेऽपि विद्यमानेत्यर्थः, पुराणी मूर्त्तिः शरीरं यस्य स तथा । 'मूर्त्तिः काठिन्यकाययोः' इत्यमरः । बाला उद्यन्तो येऽर्काः सूर्यास्तेषां यः प्रकरः समूहस्तस्य रुचिरिव रुचिर्दीप्तिर्यस्य स तथोक्तः । पिशङ्गं पीतं वासो यस्य स तथोक्तः । शोभन आकल्पो भूषणं यस्य स तथोक्तः । स्फुरितः प्रकाशमानो मणिः कौस्तुभरत्नं यस्येति तथोक्तः । ततश्च स्वाकल्पश्चासौ स्फुरितमणिश्चेति कर्मधारयः । मनसोऽभिरामो मनोहरः । श्रीनारायणः प्रत्यक्षीभवति पुरा प्रत्यक्षोऽभूत् । 'यावत् पुरानिपातयोर्लट्' (अ.सू.३.३.४) इति भूतार्थे लट्[१] । 'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः' (अ.सू.५.४.५०) । तथा च पूर्वमप्रत्यक्षो भगवान् ब्रह्मादिभिः स्तुतिपूर्वकं रावणादिराक्षसहननं कर्त्तव्यमिति विज्ञापितः सन् तेषामाश्वसनार्थं प्रत्यक्षोऽभूदिति भावः ॥ ५२ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां बालकाण्डे द्वितीयः सर्गः ॥**

—०—

१. यद्यपि सूत्रमिदं न भूतार्थे लड्विधायकम् । किन्तु भविष्यदर्थे । यदाह जयादित्यः– **'यावत्पुराशब्दयोर्निपातयोरुपपदयोर्भविष्यति काले धातोर्लट्प्रत्ययो भवति'** इति । तेन **'प्रत्यक्षीभवति पुरा'** इत्यस्य प्रत्यक्षीभविष्यतीत्यर्थः स्यात् । नतु **'प्रत्यक्षोऽभवत्'** इति । अथापि **'भविष्यति गम्यादयः'** (३.३.३) इति पूर्वसूत्रेण **'भविष्यति'** इति पदं यथाऽनुवर्तते तथा **'भूतेऽपि दृश्यन्ते'** (३.३.२) इति पूर्वसूत्रेण **'भूतेऽपि'** इत्यप्यनुवर्तनीयमिति ग्रन्थकृदाशयः । तथाच भूते भविष्यति च यावत्पुरानिपातयोरुपपदयोर्लट् प्रत्ययो भवतीति सूत्रार्थः । वस्तुतस्तु 'पुरि लुङ् चास्मे' (३.२.१२२) इति सूत्रस्य विषयोऽयम् । न 'यावत्पुरानिपातयोर्लट्' इत्यस्य ।

**(सं.चं.)** नुतिः स्तुतिः । प्रत्यक्षीभवति पुरा प्रत्यक्षीबभूव । 'पुरि लुङ् चास्मे' (३.२.१२२) इति पुराशब्द उपपदे भूतानद्यतनेऽर्थे विभाषा लुङ् लट् च प्रत्ययौ भवत इति विधानात् । स्वभावतः सर्वदाऽप्रत्यक्षो भगवान् गगनवदिति च्विः । 'आकाशशरीरं ब्रह्म' इति हि श्रुतिः । पुराऽपि नवः पुराणः । पिशङ्गं कपिलवर्णं वासोऽस्य । पिशङ्गे पीतस्याधिक्यात् तदेवात्र मुख्यत उच्यते । शोभनाकल्पः । 'आकल्पो मण्डनं वेषः' इत्यभिधानम् । तत्रापि विशिष्य वक्षसि स्फुरितकौस्तुभमणिः । 'स्वाकल्पः स्फुरितमणिः' इति भिन्ने पदे इत्येव सुन्दरम् । भिन्नपदत्वेऽपि 'स्वाकल्प स्फुरितमणिः' इति भवति सांहितं रूपम् । यथा गीतायाम्–'नित्यः सर्वगत स्थाणुः' इति । तथाहि वार्तिकम्–'खर्परे शरि वा लोपो वक्तव्यः' (अ.सू.८.३.३६) इति । मनजरगैः प्रहर्षिणीयम् ॥ ५२ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां बालकाण्डे द्वितीयसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– ३७+५२=८९]

# तृतीयः सर्ग्गः

**मन्दहासेन्दुमहसा नन्दयन् देवता हरिः ।**
**साध्वसं साध्वशमयन्मेघगम्भीरया गिरा ॥ १ ॥**

**(भा.दी.)**. श्रीरामावतारार्थमर्थितेन हरिणा कृतानुग्रहप्रकारं दर्शयति– **मन्दहासे**त्यादिना । हरति सर्वानिष्टमिति वा, हरति आहरति सम्पादयति भक्ताभीष्टमिति वा हरिः श्रीनारायणः, मन्दः स्वल्पो यो हासः स एवेन्दुस्तस्य यन्महः कान्तिस्तेन, देवता देवान् नन्दयन् हर्षयन् सन्, मेघवन्मेघगर्जनवद् गम्भीरया गिरा साध्वसं भयं तत्, 'भीतिर्भीः साध्वसं भयम्' इत्यमरः, साधु सम्यक् यथा भवति तथा, अशमयत् शमनं चक्रे, शम उपशमे लङ् ॥ १ ॥

**(सं.चं.)** मन्दहास एव मुखेन्दोर्महः कान्तिश्चन्द्रिका । साधु सामस्त्येन । गम्भीरा या कर्णकुहरं निर्भिद्येव बलात् प्रविश्यान्तर्गर्भमालोडयति ॥ १ ॥

**निर्ज्जरा विज्वराः स्वस्थाः स्वस्था भवत माचिरम्[1] ।**
**अपि त्रैलोक्यजयिनं वत्सा वत्स्यामि[2] वो रिपुम् ॥ २ ॥**

**(भा.दी.)** वचनप्रकारमेव दर्शयति–**निरि**ति । वत्साः बालकाः । 'वत्सो ना कुटजे वर्षे तर्णके तनया-दिके । बाले च' इति वैजयन्ती । न विद्यते जरा येषां ते निर्जराः, निर्गता जरा येभ्य इति वा, हे देवाः, स्वस्थाः स्वास्थ्यवन्तः भवत, भुवो लोट् । अत एव विगतः ज्वरो मानसतापो येषां ते विज्वराः सन्तः स्वः स्वर्गेषु तिष्ठन्तीति स्वस्थाः । 'स्वरव्ययं स्वर्गनाक–' इत्यमरः । 'वा शरि' (अ.सू.८.३.३६) इति विसर्गलोपे[3]

१. वि.ती.पाठे **'मा चिरम्'** इति पदद्वयम् । २. **'वेत्स्यामि वो रिपुम्'** इति क्वचित् पठ्यते । साधुरयं शब्दः । अर्थस्तु नानुगुणः ।

३. **'वा शरि'** इति सूत्रविवरणाय प्रवृत्तेन **'खर्परे शरि वा लोपो वक्तव्यः'** इति वार्तिकेन विसर्गलोपे सतीत्यर्थः । विसर्गस्य लोपेन तत्स्थाने सकारादेशे **'स्वस्स्थाः'** इति रूपं सम्पद्यत इति वा ।

स्वर्लोकस्थिता इत्यर्थो भवति । चिरं विळम्बः मा माऽस्तु । 'दीर्घकाले चिराच्चिरम्' इति वैजयन्ती । अस्मत्पीडके रावणे जीवति सति कथं स्वास्थ्यमित्यत आह– **व** इति । वः युष्माकं रिपुं रावणम्, त्रैलोक्यं जेतुं शीलमस्यास्तीति त्रैलोक्यजयी तमपि, वत्स्यामि हनिष्यामि, वध सम्प्रहारे[1] लृट् ॥ २ ॥

**(सं.चं.)** 'वृन्दारका निर्जराः' इत्यभिधानम् । विज्वरा निश्चिन्ताः । स्वः स्वर्गे स्थिताः । अथच स्वस्थाः स्वे पदे स्थिताः, स्वेस्वे भावे च स्थिताः । स्वीय इन्द्रादिपदे स्थिताः स्वभावसहजं वर्तमानाः निर्भयं स्वकर्म-निरता भवतेत्यर्थः । माचिरं स्वस्था भवत । यतो माचिरमचिरेणैव वो रिपुं वो युष्माकमर्थे वत्स्यामि । वैयाकरणानामपरिचितमिदं पदं किम्मूलमिति मृग्यम् । 'वध सम्प्रहारे' इति धातोर्लृटि रूपमिति साम्प्र-दायिकाः । न वधधातुं पाणिनीयाः पठन्ति । नतरां तस्यानिट्त्वं स्ये । अथापि वधधातुस्तावत् प्रतनैः पठ्यते । यदाहुः केशिनं वधतीति केशव इति । पाणिनेरप्येतत् सम्मतमवगम्यते –'जनिवध्योश्च' (अ.सू.७.३.३५) इति सूत्रे वधिधातोः स्फुटमुल्लेखात् । इदमिदानीं प्रतनानां वचनप्रामाण्यादभ्यूह्यते– यद् वधेः लृटि सेट्त्वं विभाषा भवतीति– तेन वधिष्यति वत्स्यति इति रूपद्वयम् । स यथा वृतुधातोः वर्तिष्यते वर्त्स्यतीति रूप-द्वयम् । यथावा वृधुधातोर्वर्धिष्यते वर्त्स्यतीति । 'वर्त्स्यामि' इत्येव वा मूलपाठः स्यात् । 'वृधु वृद्धौ' इति धातुपाठः । 'छेदने च' इति पठनीयम् । 'छेदे वृद्धौ च वर्धनम्' इति यादवप्रकाशः । णिचि वर्धयति छिनत्तीति प्रसिद्धम् । अणिचि च स एवार्थः स्यात् ॥ २ ॥

**आकर्ण्य कर्णपीयूषमुत्तमश्लोकजल्पितम् ।**
**कृतकृत्यास्ततो जग्मुस्त्रिदिवं त्रिदिवौकसः ॥ ३ ॥**

**(भा.दी.) आकर्ण्येति** । त्रिदिवः स्वर्ग ओक आवासो येषां ते तथोक्ताः, देवाः । कर्णयोः पीयूषमिव कर्णपीयूषं तत्, अत्यन्तश्रवणीयमित्यर्थः । उत्तमः श्लोकः कीर्तिर्यस्य स तथोक्तस्तस्य जल्पितं वचनं तत् । उत्तमश्लोकेन जल्पितं प्रोक्तं वच इति वा । आकर्ण्य कृतं कृत्यं प्रयोजनं येषां ते तथा सन्तः, ततः क्षीराब्धेः, त्रिदिवः स्वर्गस्तम्, जग्मुः । गम्लृ गतौ लिट् ॥ ३ ॥

**(सं.चं.)** पीयूषममृततुल्यमानन्दावहम् । 'त्रिदशावासस्त्रिविष्टपं त्रिदिवम्' इत्यभिधानम् ॥ ३ ॥

**राज्ञ इष्टिसमिद्धाग्नेर्नारायणनियोगतः ।**
**उदतिष्ठन्महद् भूतं[2] प्राजापत्यं रुचा ज्वलत् ॥ ४ ॥**

---

१. सौत्रो धातुरयम् । केचिद् **'वध हिंसायाम्'** इति धातुपाठं पठन्ति । अधिकं सङ्क्षहचन्द्रिकायाम् द्रष्टव्यम् ।

२. **'उदतिष्ठन्महद् रूपम्'**

**(भा.दी.)** **राज्ञ** इति । राज्ञः दशरथस्य इष्टेः इष्टिनामकस्य यागस्य समिद्धः सम्यगभिवृद्धो योऽग्निस्तस्मात्, नारायणस्य नियोगो आज्ञा तस्मादिति ततः, प्रजापतेः सम्बन्धि प्राजापत्यम्, ब्रह्माख्यदेवताधिष्ठितमित्यर्थः, रुचा कान्त्या, ज्वलत् प्रकाशमानम्, महत् गिरिशृङ्गवदत्युच्चं पूज्यं वा, भूतं दैवम्, उदतिष्ठत् प्रादुर्बभूव । ष्ठा गतिनिवृत्तौ लङ् ॥ ४ ॥

**(सं.चं.)** पुत्रीयायामिष्टौ समिद्धाग्नेः । प्राजापत्यं प्रजापतिनिसृष्टम्, प्रजापतिदेवत्यं वा । 'साऽस्य देवता' (४.२.२४) इति पाणिनिः । महद् भूतम् । नारायणः प्रजापतिं नियुयोज । प्रजापतिर्भूतम् । महत् बृहदाकारम् । भूतमिति देवयोनिविशेषः पुरुषः । वस्तुतः 'महद् भूतम्' इति विष्णोरेव नाम । 'एको विष्णुर्महद् भूतम्' इति स्मृतेः । 'अस्य महतो भूतस्य' इति श्रुतेश्च । तद् व्यावर्तनाय प्राजापत्यमित्याह प्रजापतिना निसृष्टमिति । नारायणनियोगत इति च स्फुटम् । अथापि महतो भूतस्य विष्णोः विशेषसन्निधानयुक्तम् । अत एव रुचा देहदीप्त्या ज्वलदुज्ज्वलम् । 'रुक् स्याद् दीप्त्यभिलाषयोः' इति मङ्खः । 'ततो वै यजमानस्य पावकादतुल-प्रभम् । प्रादुर्भूतं महद् भूतं महावीर्यं महाबलम्' (१६.११) इति, 'प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप' (१६.१६) इति च वाल्मीकीये । 'महद् भूतम्' इति श्रवणाद् विष्णुरेवाऽगत इति तिलककृत् । तदयुक्तमिति द्योतयितुं च नारायणनियोगत इत्याह ॥ ४ ॥

**[1]सुवर्ण्णपात्रे सम्पूर्ण्णं पायसं पार्त्थिवाय तत् ।**
**दत्वेदं पुत्त्रीयमिति[2] तत्रैवान्तर्द्दधे द्रुतम्[3] ॥ ५ ॥**

**(भा.दी.)** प्रादुर्भूतेन तेन किं कृतमित्यत आह– **सुवर्णेति** । तद्धृतं सुवर्णमयं यत्पात्रं तस्मिन् सम्पूर्णं तत् पायसं पार्थिवाय दशरथाय दत्वा, इदं पायसं पुत्रीयं पुत्रप्रदं इति, उक्त्वेति शेषः, तत्रैव इष्ट्यग्रा-वेव अन्तरधीयत तिरोहितमभूत् । अन्तःपूर्वाद् 'धीङ् आधारे' इत्यस्माल्लङ् । 'अन्तर्दधे द्रुतम्' इति वा पाठः ॥ ५ ॥

**(सं.चं.)** इदं पुत्रीयं पुत्रसन्तानदं पायसमित्युक्त्वा पायसं दत्वा । 'पुत्राच्छ च'(५.१.४०) इति पाणिनिः । तत्रैव तस्मिन्नेव समिद्धाग्नौ । पयसि पक्वमन्नं पायसम्, क्षीरान्नमित्येतत् ॥ ५ ॥

**कौसल्यामथ कल्याणीमाहूय महिषीं प्रियाम् ।**
**परमान्नाद् ददावर्द्धं परं तस्यै नराधिपः ॥ ६ ॥**

---

१. **'सुवर्णपात्रसम्पूर्णम्'** २. **'पुत्रियमिति'** इति केचित् । अपाणिनीयं तत् । ३. **'तत्रैवान्तरधीयत'** इति वि.ती.सम्मतः पाठः ।

**(भा.दी.)** अथ दशरथेन किमकारीत्यत आह– **कौसल्यामि**ति । अथ पायसलाभानन्तरम्, नराधिपः दशरथः कौसल्यां कौसल्यानाम्नीं कल्याणीं शोभनां महिषीं पट्टाभिषिक्ताम्, 'कृताभिषेका महिषी' इत्यमरः, प्रियां भार्यां आहूय तस्यै कौसल्यायै, परमान्नं पायसं तस्मात्, परं मुख्यम्, 'परं दूरान्यमुख्येषु' इति वैजयन्ती, अर्द्धं समांशस्तत्, 'पुंस्यर्द्धोऽर्धं समांशके' इत्यमरः, ददौ दाण् दाने लिट् ॥ ६ ॥

**(सं.चं.)** अथ पायसस्वीकारसमनन्तरमेव सम्भ्रमादविलम्बितम् । कल्याणीं भगवदवतारपात्रतासम्पादकशुभगुणभरिताम् । महिषीं पट्टाभिषेकसमये राज्ञा सहाभिषिक्ताम् । अत एव प्रियाम् । अस्यां युवराजो जनिष्यत इति प्रीतिविषयाम् । 'कृताभिषेका महिषी भट्टिन्य इतराः स्मृताः' इत्यभिधानम् । परं सन्ततिदानदक्षम् । परमान्नं क्षीरान्नम् । 'क्षैरेयं पायसं प्रोक्तं परमान्नं च सूरिभिः' इत्यभिधानम् ॥ ६ ॥

**अर्द्धादर्द्धं ततो भक्तं विभक्तं भक्तिमान् हरौ ।**
**पवित्रं स सुमित्रायै सुस्मितायै ददावथ ॥ ७ ॥**

**(भा.दी.)** **अर्द्धा**दिति । अथ हरौ भक्तिमान् सः दशरथः । ततः कौसल्यायै दत्तावशिष्टात् अर्द्धं समांशस्तस्मात् । विभक्तं द्विधा विभागीकृतम् । पवित्रं अर्द्धं भक्तं परमान्नरूपमन्नम् । 'अन्धः कूरं भक्तं दीदिविरन्नम्' इति हलायुधः । सु शोभनं स्मितं यस्याः सा तथा तस्यै सुमित्रायै सुमित्रानाम्न्यै द्वितीयमहिष्यै ददौ ॥ ७ ॥

**(सं.चं.)** ततस्तस्मात् अवशिष्टादर्धादर्धं चतुर्थांशम् । अर्धादर्धं यथा स्यात् तथा विभक्तमिति वा । भक्तमन्नम् । 'अन्धः कूरं भक्तं दीदिविरन्नं तथौदनं भिस्सा' इति च । पायसदानकालेऽपि हरिः प्रीयतामित्येव मनसि निधाय ददावित्याह– भक्तिमान् हरौ । अत एव हरावतिभक्तिमान् लक्ष्मणो जज्ञे । देवप्रेषितमिति पवित्रम् । यत्प्राशनेन राजदारा अपि पवित्रा बभूवुः । तेन दिव्यसन्ततिभरणयोग्या बभूवुः । यदा सपत्न्यौ कलहायेते तदापीयं ते सान्त्वयन्ती सुस्मितैव तस्थावित्याह–सुस्मिताया इति । अथ कौसल्यायै पायसदानानन्तरम् । नन्वथेत्यवक्तव्यम् । अनुक्तावप्यानन्तर्यं ज्ञायत एव । अस्ति किञ्चिद् वक्तव्यम् । बहवो विपश्चित एवमभिप्रयन्ति– दारेषु द्वितीया कैकेयी । अत एव तां मध्यमामाह वाल्मीकिः । तृतीया सुमित्रेति । एवं स्थिते कौसल्यायै दानानन्तरं कैकेय्यै दातव्यम् । अथापि क्रमं भङ्क्त्वा सुमित्रायै ददावित्यथेत्याह ॥ ७ ॥

**तस्मादर्द्धादसावर्द्धं कैकेय्यै प्रतिदत्तवान् ।**
**परमर्द्धं सुमित्रायै पुनरेव प्रदत्तवान् ॥ ८ ॥**

**(भा.दी.) तस्मादि**ति । असौ दशरथः तस्मात् सुमित्रायै दत्तावशिष्टात् अर्द्धात् अर्द्धम्, परमान्नमिति शेषः, कैकेय्यै कैकेयीनाम्न्यै तृतीयमहिष्यै प्रतिदत्तवान् प्रदत्तवान् । परं कैकय्यै दत्तादन्यत् अर्द्धं परमान्नं सुमित्रायै पुनरेव (प्र)दत्तवानिति योजना ॥ ८ ॥

**(सं.चं.)** तस्मादवशिष्टादर्धात् चतुर्थांशादर्धमष्टमांशं कैकेय्यै प्रतिदत्तवान् । किमिदं प्रतिदानं नाम? तया पुनरितराभ्यामधिकं रतिसुखं दत्तम् । तत् प्रतिकर्तुं पायसस्याष्टमांशं ददौ । नतु तस्यामपि तनयो मे जायतामिति । यदि तस्यामपि तनयो जायेत, तस्यैव राज्यं दातव्यं प्रसज्यते । कैकेयीपरिणयप्रसङ्गे तत्तनयस्यैव राज्यदानप्रतिज्ञानात् । अतः विमना एव केवलमियं प्रणयपत्नीति, अन्यथा वृथा कुप्येदिति, तेन सर्वथा तत्प्रणयवश्चितः स्यामिति भिया ददौ । नचेदवशिष्टं सर्वं पायसं तस्या एवादास्यत् । किमिति पुनरष्टमांशमवशेषयामास । वाल्मीकिनाऽप्येतत् सूचितमिव । स्फुटमुपरिष्टात् । परमवशिष्टमर्धमित्यष्टमांशं सुमित्राया एव पुनः प्रदत्तवान्, तात्पर्यपूर्वं दत्तवान् । सर्वमेतत् स्फुटमगादि वाल्मीकिना– 'कौसल्यायै नरपतिः पायसार्धं ददौ तदा । अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः । कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् । प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् । अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः' (१६.२७–८) इति । पुत्रार्थकारणादिति वाल्मीकेः साकूतं वचः– पुत्रलाभरूपोऽर्थः प्रयोजनम्, तस्मात् कारणादिति प्रातीतिकोऽर्थः । निवृत्तिवचनश्चार्थशब्दः पठ्यते । मा भूदस्यां पुत्र इत्यन्तराशया पुत्रनिवृत्तिकारणाद् ददाविति गुह्यम् । अत एवावशिष्टं सर्वमदत्वा तदर्धमेव ददौ । अर्धमात्रप्राशनेन राज्यानर्हो दुर्बलः पुत्रः पुत्री वा स्यादिति । पुनरनुचिन्त्य, कैकेय्या बलिष्ठपुत्रजननाद् वरं सुमित्रायाः पुत्रद्वयमित्यनुचिन्त्य, 'चत्वारस्ते सुता भविष्यन्ति' इत्यृश्यशृङ्गवचनं चानुचिन्त्य पुनरेव सुमित्रायै प्रददाविति ॥ ८ ॥

**तान् पायसांशान् भुक्त्वा ता देव्यः शुशुभिरेऽधिकम् ।**
**मधुकालगुणान् भुक्त्वा माधव्यइव सल्लताः[१] ॥ ९ ॥**

**(भा.दी.) तानि**ति । ताः कौसल्याद्याः देव्यः कृताभिषेकाः राजभार्याः । 'देवी कृताभिषेकायाम्' इत्यमरः । तान् दशरथदत्तान्, पायसांशान् भुक्त्वा, मधुनामककालो मधुकालः, वसन्तकाल इत्यर्थः, तस्य गुणान् धर्मभूतान् पुष्परसादीन् । 'मौर्व्यां द्रव्याश्रिते सत्वशौर्यसन्ध्यादिके गुणः' इत्यमरः । भुक्त्वा । मुदा हर्षेण

१. **'मुन्मनाः'** इति वि.ती.पाठः । अत्र महान् पाठभ्रंशः । **'माधव्यइव सल्लताः'** इति प्रचुरः पाठः । स्यादपि । परन्तु न केनापि व्याख्यात्रा समादृतोऽयंपाठः । **'माधव्यइव सन्मनाः'** इति क्वचित् । सर्वथाऽसङ्गतम् । **'माधव्यइव सन्मदाः'** इति क्वचित् । प्रायः **'सम्मदाः'** इति साधुः पाठ इति भाति । **'सन्तुष्टाः'** इति विद्याभूषणस्य काशी श्री. आचार्यस्य च व्याक्यानमेतमेव पाठं कटाक्षयति । **'माधव्यः भ्रमरस्त्रियः'** इति तु सर्वेषां व्याख्यातॄणामैककण्ठ्यम् । माधवी लतेति प्रसिद्धार्थं विहाय तथा व्याख्याने कारणं तु मृग्यम् ।

युक्तं मन आसामस्तीति मुन्मनाः सन्तुष्टा इत्यर्थः । 'तद्धिताः' (अ.सू.४.१.७६) इति मत्वर्थे घः(?) । अत एवाकारान्ताच्छब्दात् स्त्रीत्वविवक्षायां टाप् । माधव्यइव भ्रमरस्त्रियइव अधिकं यथा भवति तथा शुशुभिरे अशोभन्त । शुभ दीप्तौ लिट् ॥ ९ ॥

**(सं.चं.)** माधवी वासन्ती । मधुमासे वसन्ते पुष्यतीति । 'ಇರುವಂತಿಗೆ' इति भाषायाम् । सत्यः पुष्पवत्यो लताः । अनतिशीतः हितो मन्दश्च पवनः, क्रमेण प्रखरीभवन्नादित्यः, कोकिलानां कूजितम्, भ्रमराणां गुञ्जितं च मधुकालगुणाः । मधुमास इति विशिष्य चैत्रः । अत्र तु वसन्तमासः । 'सम्मदाः' इति पाठे भ्रमरगुञ्जनादिना सन्तुष्टाः फुल्लकुसुमा इत्येतत् ॥ ९ ॥

**राघवान्निरघाद् गर्भं लेभिरे ता वरस्त्रियः[1] ।**
**पूर्वपक्षादिव दिशश्चन्द्रमानन्दकारणम्[2] ॥ १० ॥**

**(भा.दी.) राघवादिति** । ताः कौसल्याद्याः वरस्त्रियः पातिव्रत्यादिना उत्तमाः स्त्रियः । निर्गतं अश्वमेधादि-सत्कर्मणा विनष्टं अघं पुत्रप्राप्तौ प्रतिबन्धकीभूतं कर्म यस्मात् स तथोक्तस्तस्मात् । राघवात् दशरथात् । गर्भम्, 'गर्भो भ्रूण इमौ समौ' इत्यमरः । लेभिरे डु लभष् प्राप्तौ लिट् । तत्र दृष्टान्तमाह– **पूर्वेति** । पूर्वो यः पक्षस्तस्मात् शुक्लपक्षादित्यर्थः । आनन्दस्य कारणं हेतुभूतम् । नित्यनपुंसकत्वाच्चन्द्रविशेषणत्वेऽपि नपुंसकलिङ्गोऽयं शब्दः । चन्द्रम्, दिशः दिगभिमानिन्यो देवता इव, गर्भं लेभिर इत्यन्वयः ॥ १० ॥

**(सं.चं.)** निरघात् प्रतिबन्धकदुरितविरहेण निष्कल्मषात् । शुक्लपक्षोऽपि निरभ्रतया निरघः । गर्भोऽप्या-नन्दकारणम् । चन्द्रोऽपि ॥ १० ॥

**अवगम्य गदापाणेरवतारं नृपालये ।**
**स्वयम्भूः स्वयमाहूय विबुधानिदमब्रवीत् ॥ ११ ॥**

**(भा.दी.) अवगम्येति** । स्वयम्भूश्चतुर्मुखः स्वयम्, गदा पाणौ यस्य स तथोक्तस्तस्य श्रीहरेः, अवतारः प्रादुर्भावस्तम्, नृपस्य दशरथस्य आलयो गृहं तस्मिन्, अवगम्य ज्ञात्वा, विबुधान् इन्द्रादिदेवान् आहूय इदं वक्ष्यमाणं वचः अब्रवीत् । ब्रूञ् धातोर्लङ् ॥ ११ ॥

**(सं.चं.)** स्वयमेवाऽब्रवीत् सतात्पर्यम् । नतु दूतमुखेन ॥ ११ ॥

---

१. 'लेभिरेऽथ वरस्त्रियः' २. '–कारिणम्'

**अपि पूर्णोऽवतीर्णो नः [१]प्रसादाय दयाकरः ।**
**सेवध्वं सेवनीयं तमवतीर्य्य भुवस्तळे ॥ १२ ॥**

**(भा.दी.)** तदेव दर्शयति– **अपीत्या**दिना । दयाकरः दयाया आकर आश्रयः श्रीहरिः पूर्णोऽपि पूर्णकामोऽपि, नः अस्माकं प्रसादोऽनुग्रहस्तस्मै अवतीर्णः अवतारं कर्तुमारब्धवान् । 'आदिकर्मणि क्तः कर्तरि च' (अ.सू.३.४.७१) इति कर्तरि क्तः । 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (अ.सू.८.२.४२) इति तस्य नः । स्वप्रयोजनाभावेऽपि केवलं अस्मदनुग्रहपारवश्यादेवावतारार्थमुपक्रान्तवानित्यर्थः । तत्रास्माभिः किं कर्तव्यमित्यत आह– **सेवध्वमि**ति । यूयम्, भवत्यस्यां सर्वमिति भूस्तस्याः तळं प्रदेशस्तस्मिन् अवतीर्य स्वांशावतरणं कृत्वा, सेवितुं योग्यः सेवनीयस्तं श्रीहरिं सेवध्वं सेवां कुरुध्वम् । षेवृ सेवायां लोट् ॥१२॥

**(सं.चं.)** पूर्णोऽपि, भूमाववतारेण स्वप्रयोजनरहितोऽपि । कौसल्यागर्भे रूपविशेषेणावतीर्णः ॥ १२ ॥

**उत्पादयध्वमृक्षीषु वानरीष्वपरासु च[२] ।**
**उत्पद्यध्वं स्वतनयाः स्वयमेव च सद्गुणाः ॥ १३ ॥**

**(भा.दी.)** देवगन्धर्वादिभ्यः पराजयो मा भूदिति गृहीतवराणां राक्षसानां वधार्थम्, दक्षाध्वरे हरानादरनिमित्तात् कपयो भवतेति नन्दीशदत्तशापमोक्षार्थं च कप्यादियोनौ भवद्भिरंशावतरणं कर्तव्यमित्याह– **उदि**ति । यूयं ऋक्षीषु ऋक्षस्त्रीषु, वानरीषु वानरस्त्रीषु, अपरासु च मनुष्यादिस्त्रीषु वा, देवादीन् उत्पादयध्वं जनयध्वम् । उत्पूर्वपद गतौ लोट् । स्वयमेव सन्तो गुणा येषां ते सद्गुणास्तथा सन्तः, स्वेषां तनयाः पुत्राः सन्तः, उत्पद्यध्वं उत्पन्ना भवत । तत एव लोट् ॥ १३ ॥

**(सं.चं.)** अपरासु मानुषीषु च । स्वयमेव स्वतनया भूत्वा चोत्पद्यध्वम् । क्वचित् 'उत्पत्स्यध्वम्' इति पठ्यते । न स्यान्मूलपाठः । अथापि रुचिरः प्रयोगः । पाणिनीयाः कुप्येयुः । अथापि वैदिकाः प्रीयन्ते । लृटा लोटः समागमेन लोलृडयम् । तथाहि प्रयोगो गीतासु– 'अनेन प्रसविष्यध्वम्' इति । भगवत्पादश्च लकारद्वययोगेन सम्पन्नान्येतादृशानि रूपाणि बहुधा प्रायुङ्क्त ॥ १३ ॥

**जृम्भमाणस्य मे वक्त्राज्जाम्बवानुदपद्यत ।**
**ऋक्षो रक्षोविनाशार्थं धर्म्मो धर्म्मधरः पुरा ॥ १४ ॥**

---

१. 'वः प्रसादाय'                                                                   २. 'वानरीषु परासु च'

**(भा.दी.)** स्वपुत्रः कश्चन जात एवेत्याह– **जृम्भमाणस्ये**ति । धर्मं धारयतीति धर्मधरः । धर्मः यमः । 'धर्मोऽस्त्री सुकृते साम्ये स्वभावे ना तु सोमपे । न्यायाचारयमाहिंसासु' इति वैजयन्ती । पुरा जृम्भमाणस्य जृम्भणं कुर्वतो मे मम, उच्यतेऽनेनेति वक्त्रं मुखं तस्मात्, जाम्बवान् जाम्बवन्नामकः ऋक्षः सन्, रक्षसो विनाशस्तस्मै उदपद्यत उत्पन्नः । पद गतौ लङ् ॥ १४ ॥

**(सं.चं.)** धर्म इति यमस्यैव रूपान्तरम् । स एव पुनर्विवस्वता जातो वैवस्वतो यमो बभूव ॥ १४ ॥

**उदपद्यन्त सद्यस्ते तं विधातुं विधेर्विधिम् ।**
**गोलाङ्गूलाः केचिदृक्षा वानरा अपरे नराः[1] ॥ १५ ॥**

**(भा.दी.)** एवं ब्रह्मणा निरूपिते सति देवैस्तदाज्ञाऽनुष्ठितेत्याह– **उदपद्यन्ते**ति । ते देवाः । विदधातीति विधिश्चतुर्मुखः तस्य तं विधिं नियोगं विधातुं सद्यः उदपद्यन्त उत्पन्नाः । केचिद्देवाः गोलाङ्गूलाः कृष्णवर्णमुख-मर्कटाः, 'गोलाङ्गूल इति प्रोक्तः कृष्णवक्त्रस्तु मर्कटः' इति हलायुधः, आसन् । (केचिद्देवा ऋक्षा भल्लूकजातय आसन् ।) केचिद्देवाः वानरा आसन् । अपरे शेषादयो देवाः नरा आसन् ॥ १५ ॥

**(सं.चं.)** विधिमाज्ञां विधातुमनुष्ठातुम् । केचिद् गोलाङ्गूलाः । केचिद् वानराः । गोलाङ्गूला इति वानर-प्रभेदाः । गोर्लाङ्गूलमिवाग्रे लम्बमानवालपुञ्जं पुच्छं यस्य, कृष्णवर्णं चाऽस्यं यस्य, पिङ्गलोमावृतः स गोलाङ्गूलः । 'ಮುಜ್ಜು' इति भाषायाम् । अपरे नराः । नात्र सद्य इत्यन्वेति ॥ १५ ॥

**बभूव हनुमान् नाम[2] मुख्यप्राणः प्रभञ्जनः ।**
**उत्तमश्लोकभक्तानामुत्तमो योऽखिलोत्तमः ॥ १६ ॥**

**(भा.दी.)** एतदेव विशदयति– **बभूवे**ति । उत्तमः श्लोकः कीर्तिर्यस्य स तथोक्तस्तस्य ये भक्तास्तेषाम्, हरिभक्तानामित्यर्थः, मध्ये उत्तमः । अखिलैर्गुणैरुत्तमः । मुख्यानिन्द्रियाभिमानिनो देवान् प्रकर्षेण नयति प्रेरयतीति मुख्यप्राणः । मुख्यान् श्रेष्ठान् ज्ञानादिगुणान् प्रकर्षेण तत्तज्जीवेषु नयतीति वा मुख्यप्राणः । यः प्रभञ्जनः वायुः सः हनुमानिति नाम प्रसिद्धः वानरः बभूव ॥ १६ ॥

**(सं.चं.)** उत्तमश्लोकभक्तानां प्रभञ्जनः, संसारं प्रभनक्तीति । अत एव तेषां मध्ये उत्तमः श्रेष्ठः । अभक्तानां तमसि पातनेन सुखभञ्जनात् प्रभञ्जनः । अखिलजीवोत्तमः । देवतातारतम्यक्रमेणेदमुदितम् । न जननक्रमेण ॥

१. **'अपरे अन्ये नराः सन्त उदपद्यन्त । लक्ष्मणाद्यास्त्रय एव नरा रामादनन्तरमुत्पन्नाः । इतरे रामावतारात् पूर्वमेवोत्पन्ना इति ज्ञेयम्'** इति काशी.श्री. टीकायाम् ।

२. **'हनुमान् नाम्ना'**

**वासवो वालिनामाऽऽसीदिन्दुस्तत्तनयोऽङ्गदः ।**
**रविः [1]सुग्रीवनामाऽभूदनलो नीलनामकः ॥ १७ ॥**

**(भा.दी.)** **वासव** इति । वसून्यस्य सन्तीति वासवः, वालीति नाम यस्य स तथोक्तः आसीत् । इन्दुः तस्य वालिनः तनयः अङ्गदः अङ्गदनामक आसीत् । रूयते स्तूयते ज्ञानिभिरिति रविः । सुग्रीव इति नाम यस्य स तथोक्तः सन् अभूत् । अनलः अग्निः नील इति नाम यस्य स तथोक्तः अभूत् ॥ १७ ॥

**(सं.चं.)** वासव इन्द्रः, वसूनां देवानामयं पतिः । इन्दुश्चन्द्रः अङ्गदनामा वालितनय आसीत् । यद्यपि तारतम्यक्रमेणानलो वरुणादनन्तरः । अथापि सोमसूर्याग्नीनां ज्योतिषां सहोक्तिसौकर्याय क्रमव्यत्ययः । तेषु हि त्रिषु भगवानुपास्यः । 'अष्टपत्रे हृत्पद्ममध्ये सूर्येन्दुवह्निगम्' इति ओन्तत्सत्प्रणवकल्पे । पितापुत्रयोः सहोक्तिसौकर्यायाङ्गदस्य पूर्वमुक्तिः । सेनापतित्वाच्च नीलस्य सुग्रीवेण सहोक्तिः ॥ १७ ॥

**वरुणश्च सुषेणोऽभूद् विश्वकर्म्मा नळोऽजनि ।**
**अभूतां मैन्दविविदावश्विनौ सेवितुं विभुम् ॥ १८ ॥**

**(भा.दी.)** **वरुणश्चे**ति । पाशैर्दैत्यान् वृणोतीति वरुणः । चः समुच्चये । विभुं समर्थं श्रीरामं सेवितुं सुषेणः सुषेणनामको वानरः अभूत् । विश्वकर्मा विश्वकर्मनामको देववर्धकिः नळः नळनामको वानरः सन् अजनि उदभूत् । जनी प्रादुर्भावे लुङ् । प्रशस्तावश्वौ अनयोः स्त इति अश्विनौ अश्विनामकौ देवौ । मैन्दश्च विविदश्च तौ, मैन्दविविदनामकावित्यर्थः, अभूताम् ॥ १८ ॥

**(सं.चं.)** यद्यपि विश्वकर्माणमश्विनोरनन्तरमेकान्नविंश्यां कक्ष्यायां पठन्ति । वस्तुतस्तु त्वष्टा किल विश्वकर्मा । 'विश्वकर्मा द्युवर्धकिः । त्वष्टा नाम स देवानाम्' इति यादवप्रकाशाचार्यः । स तु द्वादशादित्येष्वेकोऽष्टाविंश्यामेव कक्ष्यायां पठित इत्यश्विसमानकक्ष्य एव । तत्र वानरवर्धकिरिति विश्वकर्मणः पूर्वमुद्देशः । असुराविष्टाविति मैन्दविविदयोः पश्चात् । विश्वकर्मा देववर्धकिर्नळनामा कपिः सन्नजनि स्वयं स्वतनयो भूत्वा । सेवितुं विभुमिति सर्वत्रान्वेति ॥ १८ ॥

**प्राणाद्याः पञ्च मरुतो धनदादत्र जज्ञिरे ।**
**गजो गवाक्षो गवयो वृषाख्यो गन्धमादनः ॥ १९ ॥**

१. 'सुग्रीवनामाऽऽसीदनलो–'

**(भा.दी.) प्राणे**ति । प्राण आद्यो येषां ते तथोक्ताः पञ्च मरुतः प्राणापानव्यानोदानसमानाख्या वायवः, धनं दयत इति धनदो वैश्रवणस्तस्मात् अत्र भूमौ गजः गजनामकः गवाक्षः गवाक्षाख्यः गवयः गवयाख्यः वृष इति आख्या यस्य स तथोक्तः, गन्धमादनः गन्धमादननामकः इति वानराः जज्ञिरे । जनी प्रादुर्भावे लिट् ॥ १९ ॥

**(सं.चं.)** प्राणाद्या अनुक्रमेण । अत्र भूमौ । धनदात् कुबेरात् । न स्वतनया एते । किन्तु धनदतनयाः । वृषाख्यो वृषभः । अष्टादशकक्ष्यागता एते ॥ १९ ॥

**पनसाख्यः शतवलिर्ज्ञातौ[१] वस्वंशसम्भवौ[२] ।**
**[३]मरुच्छ्रेष्ठावजायेतां श्वेतसम्पातिनामकौ ॥ २० ॥**

**(भा.दी.) पनसे**ति । पनस इति आख्या यस्य स तथोक्तः शतवलिः शतवलिनामकः इति ज्ञातौ वानरौ वस्वंशसम्भवौ वसुनामकावतारौ जातावित्यर्थः । वसूनां मद्धये प्रधानयोर्द्वयोरंशजाताविति वा । वस्वंशनामकदेवद्वयजाताविति वा । मरुत्सु एकोनपञ्चाशन्मरुत्सु श्रेष्ठौ द्वौ मरुतौ श्वेतश्च सम्पातिश्च[४] श्वेतसम्पाती (इति) नामनी ययोस्ताविति तथोक्तौ अजायेताम् । जनी प्रादुर्भावे लङ् ॥ २० ॥

**(सं.चं.)** पनसः शतवलिरित्युभावपि वस्वंशसम्भवौ । वसवोऽष्टौ श्रूयन्ते । इमौ तेषु कौ? प्रथमपरित्यागे कारणाभावात् द्रोणप्राणौ स्याताम् । भगवत्पादेन न स्फुटमुदितमिति पण्डिताचार्योऽपि तमनुससार । तथाहि निर्णये– 'शतवलिपनसाख्यौ तत्र वस्वंशभूतौ' इति । तस्मादनिर्णय एव शरणम् । अथेतस्तारतम्यक्रममपहा-याऽह । श्वेतसम्पातिनामकौ मरुच्छ्रेष्ठौ । कौ स्याताम्? 'पवनगणवरांशौ श्वेतसम्पातिनौ च' इति निर्णये । पण्डिताचार्योऽपि तथैव सम्मुग्धमाह– 'मरुच्छ्रेष्ठौ' इति । मरुत्सु प्रवरोऽहम्प्राणः केसरी । तदनन्तरो गणवर एकः प्रवहः । 'मरीचिर्मरुतामस्मि' इत्युक्तो मरीचिरपरः । उभावपि भूतवायुमानिनाविति तावत्र विवक्षितौ स्याताम् । अत्राप्यनिर्णय एव शरणम् । सम्पातिरिति जटायुभ्राता पतत्री । सम्पातीति कपिः ॥ २० ॥

**बृहस्पतिर्बृहद्बुद्धिस्तारो नाम व्यजायत ।**
**शची महेन्द्रमहिषी तारा तारस्वसाऽभवत् ॥ २१ ॥**

---

१. **'शतवलिर्ज्ञातौ'** इति. वि.ती. पाठः । **'शतबलिः'** इत्यपपाठः । शतं वलयो देहेऽस्येति हि शतवलिः ।

२. **'अष्टवसूनामंशेभ्यः सम्भूतौ'** इति स्वपक्षमुक्त्वा पक्षान्तरं चोल्लिखितं विद्याभूषणीये– **'वसु अंशनामकदेवद्वयजाताविति केचित् । वसूनां मध्ये प्रधानयोर्द्वयोरंशजातावित्यपरे'** इति । **'वस्वोरंशौ सम्भवौ उत्पादकौ ययोस्तौ'** इति का.श्री.आचार्यः ।

३. **'मरुच्छ्रेष्ठः वायूनां मध्ये प्रधानः, प्रभञ्जनातिरिक्तः कश्चित्'** इति विद्याभू. । **'एकोनपञ्चाशन्मरुतां मध्ये द्वौ प्रधानौ'** इति का.श्री. ।

४. **'श्वेतश्च सम्पाती च श्वेतसम्पातिनौ'** इति स्वरसम् ।

**(भा.दी.) बृहदि**ति । बृहती बह्वर्थविषयिणी बुद्धिर्यस्येति तथोक्तः । बृहति परिपूर्णे ब्रह्मणि बुद्धिर्यस्य स तथेति वा । बृहतां महतां ब्रह्मर्षीणां बृहत्या वा पतिर्बृहस्पतिः । 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च'[1] इति सुडागमतलोपौ । तारो नाम तार इति प्रसिद्धः वानरः सन् व्यजायत । महेन्द्रस्य महिषी शची तारस्य स्वसा भगिनी तारा तारानाम्नी अभवत् ॥ २१ ॥

**(सं.चं.)** शची तारा नाम वानरी जाता । या ताराख्यस्य वानरस्य स्वसाऽभवत् । उभावपि नवमकक्ष्यागतौ । मूलरूपे कक्ष्यासाम्यमवतारे समानजनकत्वं च सहोक्तिबीजम् । ॥ २१ ॥

**वित्तपः कत्थनाख्योऽभून्निरृतिर्दुर्म्मुखाभिधः ।**
**मरुच्छ्रेष्ठः पूर्वमेव केसर्य्याख्यो व्यजायत ॥ २२ ॥**

**(भा.दी.) वित्तप** इति । निधिरूपं वित्तं पातीति वित्तपः वैश्रवणः । कत्थन इति आख्या यस्य स तथा सन् अभूत्, भवतेर्लुङ् । निरृतिः दुर्मुख इति अभिधा यस्य स तथा सन् अभूत् । मरुत्सु एकोनपञ्चाशन्मरुत्सु श्रेष्ठः पूर्वमेव हनुमदवतारात् पूर्वमेव केसरीति आख्या यस्य स तथा सन् व्यजायत । जनी प्रादुर्भावे लङ् ॥ २२ ॥

**(सं.चं.)** वित्तपस्त्रयोदश्यां कक्ष्यायां पठितः । निरृतिः सप्तदश्याम् । अथ नवमकक्ष्यागतो मरुच्छ्रेष्ठः अहम्प्राण इति प्राचीनम् । ध्रुव इत्यन्ये । कोऽयं ध्रुव इति त एव प्रष्टव्याः ॥ २२ ॥

**पर्ज्जन्यः शरभो जज्ञे प्रायस्ते स्वसुताः स्वयम् ।**
**ऋषिगन्धर्वसिद्धाद्या अपि जाताः सहस्रशः ॥ २३ ॥**

**(भा.दी.) पर्जन्य** इति । पर्जन्यः पर्जन्यनामको देवः शरभः शरभनामकः सन् जज्ञे । जनी प्रादुर्भावे लिट् । देवाः प्रायः स्वसुताः स्वेषां सुताः, चन्द्रादिनिवृत्त्यर्थं प्राय इत्युक्तम्, जाताः । सहस्रशः सहस्रसङ्ख्याकाः ऋषयश्च गन्धर्वाश्च सिद्धाश्च ते आद्या येषां यक्षादीनां तथोक्ताः, तेऽपि वानरादिरूपेण जाताः ॥ २३ ॥

**(सं.चं.)** पर्जन्यो विंश्यां कक्ष्यायां पठितः । प्रायो बाहुल्येन स्वयमेव स्वसुतत्वेन जाताः । केचन न तथा । यथा प्राणादयो धनदाज्जाताः । अतः प्राय इत्याह ॥ २३ ॥

---

१. **'पारस्करप्रभृतीनि च सञ्ज्ञायाम्'** (अ.सू.६.१.१५७) इत्यत्र पठितं वार्तिकमिदम् ।

**क्रुद्धा धरां ते [१]विभिन्द्युरुद्धरेयुर्धराधरान् ।**
**नखदन्तायुधा युद्धे नागायुतबलोद्धताः ॥ २४ ॥**

**(भा.दी.)** एतेषां पराक्रममाह– **क्रुद्धा** इति । ते कपयः क्रुद्धाः सन्तः धरां भूमिं विभिन्द्युः विदारयेयुः । भिदिर् विदारणे लिङ् । धरां भूमिं धारयन्तीति धराधराः पर्वतास्तान् उद्धरेयुः उद्धरणं कुर्युः । हृञ् हरणे लिङ् । ते कपयः युद्धं सङ्ग्रामस्तस्मिन् नखाश्च दन्ताश्च त एव आयुधानि येषां ते तथोक्ताः । नागानां गजानां यद्युतं दशसहस्राणि तस्य सदृशं बलं तेन उद्धताः अभिवृद्धाः ॥ २४ ॥

**(सं.चं.)** 'क्रुद्धा धरां विभिन्देयुः' इति सार्वत्रिकः कोशपाठः प्रामादिकः । तथा पाठे 'ते'पदस्यानवसराच्चैतदवसीयते । व्याख्यातं च तद् विश्वपतितीर्थीये 'ते कपयः' इति । नखाश्च दन्ताश्च नखदन्तम् । तदेवाऽयुधं येषाम् । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (अ.सू.२.४.२) इति प्राण्यङ्गत्वादेकवद्भावः । केचिन्नखदन्तयोः स्थिराङ्गत्वाभावादेकवद्भावं नेच्छन्ति ॥ २४ ॥

**नानायोनिषु सञ्जाता नानायुद्धविशारदाः ।**
**नानाविधमसेवन्त नानावीर्य्यं रमापतिम् ॥ २५ ॥**

**(भा.दी.)** **नाने**ति । नानाविधा ये योनयः ऋक्षादियोनयस्तासु सञ्जाताः, नानाविधानि यानि युद्धानि तेषु विशारदाः कुशलाः वानरादयः । नानाविधं वीर्यं प्रभावो यस्य स तथा तं रमापतिं श्रीरामम्, नाना अनेका विधा प्रकारो यथा भवति तथा, 'विधा विधौ प्रकारे च' इत्यमरः, असेवन्त । षेवृ सेवने लङ् ॥ २५ ॥

**(सं.चं.)** 'अनेकार्थे भवेन्नाना' इत्यभिधानम् । ऋक्षवानराद्यनेकयोनिषु । नानाविधमनेकधा । नानावीर्यमनेकवीर्यमनन्तवीर्यम् ॥ २५ ॥

**अच्छिन्नपक्षैरपरैः पर्वतैरिव सर्वतः ।**
**घनाघनैरिव घनैस्तैः समस्कारि भूरियम् ॥ २६ ॥**

**(भा.दी.)** अच्छिन्नेति । तैः वानरैः, छिन्ना न भवन्तीत्यच्छिन्नाः, तादृशाः पक्षाः पतत्राणि येषां ते तथा तैः, अपरैः पर्वतैरिव । घनैः निबिडैः घनाघनैरिव वर्षणशीलमेघैरिव, मत्तगजैरिवेति वा । 'घनाघनो मत्तगजे

---

१. **'क्रुद्धा धरां विभिन्द्येयुः'** इति, **'विभिन्देयुः'** इति च पठन्ति । पाठद्वयमपि भ्रान्तिमूलम् । **'भिदिर् विदारणे । भिन्देत्, भिन्देताम्, भिन्देयुः, लिङ्'** इति का.श्रीव्याख्यानमपि धातुपाठापरिज्ञानमूलम् । **'भिन्द्यात् भिन्द्याताम् भिन्द्युः'** इति हि भिदेर्लिङि रूपम् ।

वासवे वार्षुकाम्बुदे' इति वैजयन्ती । इयं भूः सर्वतः सर्वत्र समस्कारि अलङ्कृताऽभूत् । संपूर्वाड्डुकृञ् करणे इत्यस्माल्लुङ् । 'सम्पर्युपेभ्यः करोतौ भूषणे'(अ.सू.६.१.१३७) इति सूत्रेण 'अडभ्यासव्यवायेऽपि'[१] (अ.सू.६.१.१३६) इत्युक्तेरड्व्यवायेऽपि करोतेः सुट् ॥ २६ ॥

**(सं.चं.)** घ्नन्तीति घनाघनाः । हन्तेर्द्वित्वं घत्वं च । यदाह वार्तिककारः–'हन्तेर्घत्वं च' (वा.६.१.१२) इति । तैः निरन्तरं वर्षणशीलैः घनैर्मेघैरिव । तैः वानरादियोनिषु सञ्जातैर्देवयोनिभिः । समस्कारि अलमकारि । पर्वतैर्निम्नोन्नता हि भूमिः कामिनीव शोभते । मेघैश्च सस्यश्यामला । भुवि स्थितास्ते पर्वता इव । उपर्युत्प्लवमाना अप्यच्छिन्नपक्षाः पर्वताइव मेघाइव च ॥ २६ ॥

**वैवस्वतेऽन्तरे प्राप्ते त्रेतायामुत्तरायणे ।**
**चैत्रे नवम्यां प्राक्पक्षे दिवा पुण्ये पुनर्वसौ ॥ २७ ॥**

**उदये गुरुगौरांश्वोर्लग्ने कर्कटकाह्वये ।**
**मेषं पूषणि सम्प्राप्ते स्वोच्चस्थे ग्रहपञ्चके[२] ॥ २८ ॥**

**(भा.दी.) वैवस्वत** इति । वैवस्वतस्य मनोः सम्बन्धी वैवस्वतः, तस्मिन् । तस्येदमित्यण् । अन्तरे मन्वन्तरे प्राप्ते सति, त्रेतायां त्रेतायुगे, उत्तरायणमुदगयनं तस्मिन्, चैत्रः चैत्रमासस्तस्मिन्, प्राक् पूर्वो यः पक्षस्तस्मिन्, शुक्लपक्ष इत्यर्थः, नवम्यां तिथौ, पुण्ये अनेकसुयोगयुक्तत्वेन शोभने । 'पुण्यं धर्मे जले हेम्नि पुष्पेऽस्त्री सुन्दरे त्रिषु' इति वैजयन्ती । दिवा अहनि, पुनर्वसुः पुनर्वस्वाख्यनक्षत्रं तस्मिन्, गुरुर्बृहस्पतिः स च, गौरा अंशवो यस्य स गौरांशुश्चन्द्रः स च, तयोः उदयः उदयकालस्तस्मिन्, कर्कटक इति आह्वयो नाम यस्य तत्तथोक्तं तस्मिन्, लग्ने राश्युदये । 'राशीनामुदयो लग्नम्' इत्यमरः । पूषणि सूर्ये मेषो मेषराशिस्तं सम्प्राप्ते सति, ग्रहाणां[३] अङ्गारकबुधबृहस्पतिशुक्रशनिनामकानां यत्पञ्चकं तस्मिन् । स्वस्यस्वस्य यदुच्चं स्थानं तस्मिन् तिष्ठतीति स्वोच्चस्थं तस्मिन् सति, उक्तपञ्चकेषु मकरकन्याकर्कटकमीनतुलानामकराशिषु यथाक्रमं स्थितेषु

---

१. केचिदिदं वार्तिकवचनं मन्यन्ते ।

२. **'ग्रहपञ्चके अङ्गारकबुधगुरुशुक्रशनिनामके स्वोच्चस्थे सति मकरकन्याकर्काटकमीनतुलानामकराशिषु यथाक्रमं संस्थिते सति'** इति विद्याभू. । **'ग्रहाणामङ्गारकबुधबृहस्पतिशुक्रशनीनां पञ्चके स्वोच्चस्थे मकरकन्याकर्काटकमीनतुलानामकराशिषु यथाक्रमं स्थिते सति'** इति काशी.श्री. । सर्वमपि ज्योतिःशास्त्राननुगुणमिति नोपादेयम् । अधिकमुपरितनटिप्पण्याम् ।

३. नेदं सङ्गतम् । बुधस्य उच्चस्थत्वाभावात् । रवेरुच्चस्थस्यापरिग्रहाच्च । य उच्चस्थः स नोक्तः, यो नोच्चः स उक्त इति । एतामसङ्गतिं जानता टीकाकृता कथञ्चित् तत्परिहाराय ईश्वराचिन्त्यशक्त्या घटयितुं प्रायत्यत । स्वपूर्वव्याख्यातृभिस्तथा व्याख्यातत्वात् टीकाकृताऽपि तदनुसरणाय कथञ्चिदेवं व्याख्यायीत्यवगम्यते । अधिकं तु सङ्ग्रहचन्द्रिकायां स्फुटम् । अत्र यद् वक्तव्यं तत् पीठिकायां द्रष्टव्यम् ।

सत्स्वित्यर्थः । नच ज्योतिःशास्त्ररीत्या तादृशः कालः कदाऽप्यसम्भवीति वाच्यम् । ईश्वराचिन्त्यशक्त्यैतादृश-कालसम्भवात् । यथा भारतयुद्धसमयेऽनिष्टसूचकत्वेन त्रयोदश्या एव पञ्चदशीत्वम् । यथा वा श्रीकृष्णस्य कैलासे तपश्चरणविडम्बनसमये एकस्मिन्नेव दिने बृहस्पतेर्द्वादशराशिषु सञ्चारः, तद्वदेव श्रीरामस्यैतादृश-कालेऽवतरिष्यामि सज्जनरक्षार्थमिति सङ्कल्पवशादेवैतादृशः कालः सम्भवतीत्यनवद्यम् ॥ २७–८ ॥

**(सं.चं.)** अथ रामावतारमाह– वैवस्वतेऽन्तरे प्राप्ते । तत्रापि चतुर्विंश्यां त्रेतायाम् । प्राक्पक्षे नवम्यां शुक्लनवम्याम् । पुण्ये रामावतारपात्रत्वात् पूते च सुन्दरे च । 'पूतसुन्दरयोः पुण्यम्' इति ह्यभिदधति । पुनर्वसौ तुरीयपादे । आद्यस्य पादत्रयस्य मिथुनगतत्वात् । तेन चन्द्रः कर्कटे स्थित इत्याह– उदये गुरुगौरांश्वोर्लग्ने कर्कटकाह्वये । गौरांशुश्चन्द्रः । 'प्रालेयांशुः श्वेतरोचिः शशाङ्कः' इत्यभिधानम् । षष्टिघटिकात्मके दिवसे द्वादशराशयः क्रमेणोदयन्ते । अत्रोदयो नाम पूर्वाचलसंयोगः । मेषमास इति सूर्योदये मेषलग्नमिति स्फुटम् । तेन कर्कटके लग्न इति मध्याह्नकाल इत्युक्तं भवति । मेषं पूषणि सम्प्राप्ते । मेषो रवेरुच्चस्थानमिति सोऽप्युच्चस्थः । स्वोच्चस्थे ग्रहपञ्चक इति । सूर्यो गुरुश्चोच्चस्थाविति कथितम् । अपरे त्रयः के? न तावच्चन्द्रः । तस्य कर्कटे स्थित्युक्तेः । वृषभो हि तस्योच्चस्थानम् । नापि बुधः । तस्य सदा रविसन्निहिततयोच्च-स्थत्वासम्भवात् । मेषो हि रवेरुच्चस्थानम् । कन्या बुधस्य । तत्कथं रविसङ्गतो बुधः कन्यागतः स्यात् । अवशिष्टा अङ्गारकशुक्रशनैश्चरास्त्रयः । अङ्गारकस्य मकरः, शुक्रस्य मीनः, शनैश्चरस्य तुला चोच्चस्थानानि । तथाहि वाल्मीकीये–'ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः । ततश्च द्वादशे मासि चैत्रे नावमिके तिथौ । नक्षत्रेऽदितिदेवत्ये स्वोच्चसंस्थेषु पञ्चसु । ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह । प्रोद्यमाने जगन्नाथं सर्व-लोकनमस्कृतम् । कौसल्याऽजनयद् रामं सर्वलक्षणसंयुतम्'(बाल.कां.१८.८–१०) इति । राममिति श्यामवर्णमित्यर्थः ॥ २७–८ ॥

**आविरासीत् स्वकलया कौसल्यायाः परः पुमान् ।**
**दिव्यव्रतैर्विशुद्धायाः साक्षात् तत्वमतेरिव ॥ २९ ॥**

**(भा.दी.)** परः सर्वोत्तमः पुमान् पुरुषः श्रीनारायणः स्वस्य कलया अंशेन दिव्यानि यानि व्रतानि पयोव्रतादीनि तैः विशुद्धायाः सुपुत्रावाप्तिप्रतिबन्धकदोषरहितायाः कौसल्यायाः, साक्षात् प्रत्यक्षम्, तत्वमतेरिव श्रीनारायणाख्य-तत्वविषयज्ञानादिव, आविरासीत् प्रादुर्बभूव । आविःपूर्वः अस भुवि लङ् ॥ २९ ॥

**(सं.चं.)** स्वकलया वासुदेवाख्येनांशेन । भगवतोंऽशा अपि पूर्णा एव । 'पूर्णमदः पूर्णमिदम्' इति श्रव-णात् । तत्वमतेः तत्वज्ञानाद् यथा परः पुमानाविर्भवति ॥ २९ ॥

**सन्तोऽगच्छन् प्रसन्नत्वमसन्तोऽपि विषण्णताम् ।**
**जायमाने त्वजे तस्मिन्[1] जगदासीदनाकुलम् ॥ ३० ॥**

**(भा.दी.) सन्त** इति । न जायत इत्यजस्तस्मिन्, उत्पत्तिरहित इत्यर्थः, तस्मिन् श्रीरामे जायमाने सति प्रादुर्भवति सति, सन्तः प्रसन्नत्वं मनःप्रसन्नतां अगच्छन् । गम्ल् गतौ लङ् । असन्तोऽपि दुष्टा अपि विषण्णतां भीतत्वं अगच्छन् । जगत् अनाकुलं असम्भ्रान्तम्, आसीत् । अस्तेर्लङ् ॥ ३० ॥

**(सं.चं.)** आकुलं दुर्जनपीडाव्याध्यादिभिर्व्याकुलं न भवतीत्यनाकुलम् ॥ ३० ॥

**ब्रह्मादीनां सुरेन्द्राणां रम्याः कुसुमवृष्टयः ।**
**जयशब्दास्तूर्य्यशब्दा अप्ययोद्ध्यामपूरयन् ॥ ३१ ॥**

**(भा.दी.) ब्रह्मेति** । ब्रह्मा आदिर्येषां ते तथा तेषां सुरेन्द्राणां रम्याः कुसुमवृष्टयः, जयजय इति शब्दा जयशब्दाः । तूर्याणां भेरीणां शब्दाः अपि अयोध्यां पुरीं अपूरयन् । पॄ पालनपूरणयोः लङ्[2] ॥ ३१ ॥

**(सं.चं.)** तूर्यते सत्वरमवगम्यते सन्तोषवार्ताऽनेनेति तूर्यम् । 'ಡಂಗುರ' इति भाषायाम् । तूरी गतित्वरणहिंसनयोः । तूर्यन्ते हिंस्यन्ते रिपवोऽनेनेति च । अयोध्यामपूरयन् । अयोध्यावासिभिर्जनैः स्फुटमश्रूयन्तेत्यर्थः ॥ ३१ ॥

**अनन्तोऽनन्तपर्य्यङ्कः परिचर्य्यार्त्थमीशितुः ।**
**सर्प्पभेऽजनि सौमित्रिः कुळीरेऽभ्युदिते रवौ ॥ ३२ ॥**

**(भा.दी.) अनन्ते**ति । न विद्यतेऽन्तो देशाकालगुणैः परिच्छेदो यस्य सोऽनन्तः श्रीहरिस्तस्य पर्यङ्कः शय्याभूतः अनन्तः शेषः, ईशितुः स्वामिनः श्रीरामस्य परिचर्यार्थं सेवार्थम्, सर्पस्य भं नक्षत्रं सर्पभं तस्मिन्, सर्पदेवत्ये नक्षत्रे, आश्लेषायामित्यर्थः । रवौ कुळीरे कर्काटकराशौ, 'स्यात् कुळीरः कर्कटकः' इत्यमरः । अभ्युदिते सति, आषाढमास इति यावत् । सुमित्राया अपत्यं पुमान् सौमित्रिः । 'बाह्वादिभ्यश्च' (अ.सू.४.१.९६) इत्यपत्यार्थे इञ् । लक्ष्मणः अजनि उत्पन्नः । जनी प्रादुर्भावे लुङ् ॥ ३२ ॥

**(सं.चं.)** सर्पदेवत्यं भं नक्षत्रमाश्लेषा । कुळीरेऽभ्युदिते रवौ । कर्काटकमासे । मेषे चैत्रे रामजननम् । ततश्चतुर्थे मासि लक्ष्मणजननम् । एतेन चैत्र एवैकादश्यां लक्ष्मणशत्रुघ्नयोर्जननमिति वदन्तो दत्तोत्तराः ॥३२॥

---

१. **'जायमाने जगन्नाथे'** २. **'पूरी आप्यायने'** इति वक्तव्यम् । पॄधातोः पाणिनीयाः **'अपारयन्'** इति रूपं पठन्ति ।

**चक्रायुधस्य यच्चक्रं दैत्यचक्रविदारणम् ।**
**तत् कामरूपं कैकेय्याः पुष्ये पुत्रत्वमाययौ ॥ ३३ ॥**

**(भा.दी.)** **चक्रे**ति । चक्रमायुधं यस्य स तथा तस्य श्रीहरेः, दैत्यानां चक्रं समूहस्तद्विदारयतीति तथोक्तम्, कामस्य मन्मथस्य रूपं स्वरूपभूतम्, कामाभिमानिकमित्यर्थः । यत् चक्रं सुदर्शनं तत् । पुष्ये पुष्य-नक्षत्रे । 'पुष्यस्तिष्यः स्यात्' इति हलायुधः । कैकेय्याः पुत्रत्वं तत् आययौ । यातेर्लिट् ॥ ३३ ॥

**(सं.चं.)** पुष्ये नक्षत्रे, प्रायः पुष्ये मासि च । तेन पूर्णिमायामित्युक्तप्रायम् । 'पुष्यः कलियुगे स्मृतः । नक्षत्रमासयोर्भेदे' इति मेदिनी । लक्ष्मणजननाद् षण्मासानन्तरं भरतो जज्ञे । कामः प्रद्युम्न इति च यस्य रूपं तच्चक्रम् । भगवच्चक्रमानी प्रद्युम्नो भरतो बभूव ॥ ३३ ॥

**देवद्विड्जनजन्यघ्नः पाञ्चजन्योऽप्यजन्यथ[1] ।**
**सुमित्रायाः सुतत्वेन स्वामिनः सेवनेच्छया ॥ ३४ ॥**

**(भा.दी.)** **देवे**ति । अथ देवान् द्विषन्तीति देवद्विषस्ते च ते जनाश्च दैत्यजना इत्यर्थः । तेषां जन्यं युद्धं तद्घ्नन्तीति तथोक्तः । 'जन्यं स्यादभिसम्मर्दो विग्रहः कलहः स्मृतः' इति हलायुधः । पाञ्चजन्योऽपि पाञ्चजन्या-ख्यशङ्खोऽपि स्वामिनः श्रीरामस्य सेवनेच्छया सुमित्रायाः सुतत्वेन अजनि । जनी प्रादुर्भावे लुङ् ॥ ३४ ॥

**(सं.चं.)** देवद्विड्जना दैत्याः । जन्यो जननार्हो यो गर्भस्तमेव हन्ति । जाताः किल द्विष्युः । अयं जननमेव वारयति । तथाहि स्मरन्ति– 'गर्भा देवारिनारीणां विशीर्यन्ते सहस्रधा । तव नादेन पाताळे पाञ्चजन्य नमोऽस्तु ते' इति । पाञ्चजन्यः पाञ्चजन्यमानी अनिरुद्धः । सुमित्रायाः द्वितीयसुतत्वेन । 'सर्पभेऽजनि सौमित्रिः कुळीरेऽभ्युदिते रवौ' इति पूर्ववचनमत्राप्यनुवर्तते । अतो न न्यूनता । यस्मिन्नब्दे कर्कटमासे आश्लेषानक्षत्रे लक्ष्मणो जातः ततः परस्मिन्नब्दे तस्मिन्नेव मासे तस्मिन्नेव नक्षत्रे शत्रुघ्नो जात इति । 'पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः । सार्पे जातौ तु सौमित्री कुळीरेऽभ्युदिते रवौ' (बा.कां.१८.१५) इति वाल्मीकीये । एतेन भरतो लक्ष्मणाग्रजः, लक्ष्मणशत्रुघ्नौ यमळाविति वदन्तो दत्तोत्तराः ॥ ३४ ॥

**चतुर्म्मूर्त्तेर्म्मुकुन्दस्य मूर्त्तिराद्याऽग्रतोऽभवत् ।**
**अन्येषु त्रिषु तिस्रोऽन्या आविशन्निति सन्मतम् ॥ ३५ ॥**

---

१. 'पाञ्चजन्योऽप्यजायत'

**(भा.दी.)** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यविष्णुरूपाणि श्रीरामादिरूपेण चतुर्धाऽवतीर्णानीत्यर्थप्रतिपादक-प्रमाणान्तरस्य तात्पर्यमाह– **चतुरि**रिति । वासुदेवादिभेदेन चतस्रो मूर्तयः स्वरूपाणि यस्य स तथा तस्य, मुकुं मोक्षं ददातीति मुकुन्दस्तस्य श्रीहरेः । आदौ भवा आद्या वासुदेवमूर्तिः अग्रतः प्रथमतः श्रीरामावतार-त्वेनेत्यर्थः, अभवत् । भुवो लङ् । अन्येषु लक्ष्मणादिषु त्रिषु वासुदेवादन्याः तिस्रः सङ्कर्षणप्रद्युम्नानिरुद्धाख्या मूर्तयः आविशन् प्राविशन् । विश प्रवेशने लङ् । इति सन्मतं सतां देवर्ष्यादीनां मतं सिद्धान्तः । एवं च लक्ष्मणादयः शेषकामानिरुद्धाख्याः श्रीहर्यन्तरङ्गभक्ता देवा एव । तेषु च सङ्कर्षणादीनामावेशमात्राभिप्रायेण ग्रन्थान्तरे भगवदवतारत्वेनोक्तिरिति भावः । ननु वाल्मीकिरामायणादौ श्रीरामावतारानन्तरं भरतोत्पत्तिकथनात् तदनन्तरं च लक्ष्मणशत्रुघ्नयोरुत्पत्तिकथनाल्लक्ष्मणस्य भरतज्येष्ठत्वाङ्गीकारे तद्विरोध इति चेन्न । भिन्नमातृकयोः श्रीरामभरतयोरुत्पत्तिकथनानन्तरमेकमातृकयोः लक्ष्मणशत्रुघ्नयोरुक्तिसौकर्याय जननकथनेऽपि तथोत्पत्तिक्रमो न विवक्षित इति ज्ञायते । अन्यथा 'ततो लक्ष्मणमासाद्य वैदेहीं च परन्तपः । अभ्यवादयत प्रीतो भरतो नाम कीर्तयन्' इति युद्धकाण्डान्तिमभागस्थवाल्मीकीयवाक्येनैव विरोधात् । 'इति लोकसमाक्रुष्टः पादेष्वस्य प्रसादयन् । रामस्य निपतिष्यामि सीताया लक्ष्मणस्य च' (अ.कां.९९.१७) इत्ययोध्याकाण्डस्थभरत-वाक्यविरोधाच्च । लवणासुरहननार्थं गमनसमये श्रीरामलक्ष्मणभरतानां क्रमेण शत्रुघ्नकृतप्रणामलक्षण-वाल्मीकीयसिद्धलिङ्गविरोधाच्च । किञ्च यदि भरतो लक्ष्मणज्येष्ठः स्यात् तर्हि श्रीरामेण लक्ष्मणं प्रति युवराजो भवेत्यभिधाय तेन च त्वत्पादसेवनादन्यन्नाऽकाङ्क्षितमित्युक्ते सति कथं भरतोऽभिषिच्यते? नहि ज्येष्ठे सति कनिष्ठं प्रति तथा प्रश्नो युक्तः । लक्ष्मणप्रतिवचनं वा तथा युक्तम् । किञ्च पायसांशदानक्रमेणोत्पत्ति-र्वक्तव्या । पायसांशस्य च कौसल्यायै प्रदानानन्तरमेव सुमित्रायै दशरथेन प्रदत्तत्वाल्लक्ष्मणज्येष्ठत्वमवश्यम-भ्युपेयम् । उपक्रमोपसंहारानुसारेण मध्यस्थवाक्यार्थस्य निर्णेयत्वान्न वाल्मीकीयरामायणविरोधः । यत्तु दशरथेन पायसांशौ कौसल्यायै कैकेय्यै च साक्षाद् दत्तौ ताभ्यां चानन्तरमागतायै सुमित्रायै स्वांशौ विभज्यांशद्वयं दत्तमिति; तत्तु, 'कौसल्यायै नरपतिः पायसार्धं ददौ तदा । अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः । कैकेय्यै चापि शिष्टार्धं ददौ पुत्रार्थकारणात् । प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम्' (बा.कां.१६. २७–८) इति वाल्मीकीयाननुसार्येव । यच्च लक्ष्मणशत्रुघ्नौ यमळावित्यतो न भरतस्य ज्यैष्ठ्यमित्युच्यते तच्च, 'राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् । गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः' (बा.कां.१८.१६) इति तत्रत्य-वाक्याननुसार्येव । न च लक्ष्मणस्य भरतज्येष्ठत्वे पुष्ये भरतजन्मोक्तिविरोधः । मासभेदेनोपपत्तेः । नच पृथग्-जन्मत्वे शत्रुघ्नस्य नक्षत्रानुक्तिदोषः । मासान्तराश्लेषायामेवोत्पन्न इत्युक्तिसम्भवात् । नचात्र ज्ञापकाभावः । 'सार्पे जातौ तु सौमित्री' (१८.१५) इत्युक्तेः । नचैवं 'वसिष्ठऋश्यशृङ्गाभ्यामनुज्ञानाद् ददौ हविः । कौसल्यायै सकैकेय्यै ह्यर्धमर्धं प्रयत्नतः । ततः सुमित्रा सम्प्राप्ता जगृहे पौत्रिकं चरुम् । कौसल्या तु स्वभागार्धं

ददौ तस्यै मुदान्विता । कैकेयी च स्वभागार्धं ददौ प्रीतिसमन्विता । दशमे मासि कौसल्या सुषुवे पुत्रमद्भयम् । कैकेयी चाथ भरतमसूत कमलेक्षणम् । सुमित्रायां यमौ जातौ पूर्णेन्दुसदृशाननौ' (अ.रा. बा.कां.३.३५–८) इत्यध्यात्मरामायणवाक्येन एतत्समानार्थपाद्मपुराणवाक्येन च विरोधो वाल्मीकीयवाक्यानामिति वाच्यम् । वाल्मीकीयोक्तस्यार्थस्य बहुकल्पानुसारित्वादन्यत्रोक्तस्यार्थस्य कल्पविशेषानुसारित्वादविरोध इति सर्वमनवद्यम् । एवञ्च ग्रन्थकारैराचार्यमतानुसारेण वाल्मीकीयरामायणानुसारेण यल्लक्ष्मणस्य भरतज्येष्ठत्वं बहुषु स्थलेषूच्यते तद् युक्तमेव[1] ॥ ३५ ॥

**(सं.चं.)** आद्या मूर्तिर्वासुदेवाख्या अग्रतो रामोऽभवत् । अन्येषु त्रिषु तिस्रोऽन्याः । हरिपर्यङ्कस्य सङ्कर्षणस्यावतारे लक्ष्मणे सङ्कर्षणाख्या भगवन्मूर्तिः । हरितनयस्य प्रद्युम्नस्यावतारे भरते प्रद्युम्नाख्या । अनिरुद्धावतारे शत्रुघ्ने चानिरुद्धाख्या । इत्येतत् सतां ज्ञानिनां मतम् ॥ ३५–८ ॥

**[2]अपुत्रः प्राप्य सत्पुत्रान् मग्न आनन्दवारिधौ[3] ।**
**कृत्यान्तरं नृपो नावैन्निधिं लब्ध्वेव निर्द्धनः ॥ ३६ ॥**

**(भा.दी.) अपुत्र** इति । न विद्यते पुत्रो यस्य सोऽपुत्रः, नृपः दशरथः, सन्तो ये पुत्रास्तान् श्रीरामादीन् प्राप्य लब्ध्वा, आनन्द एव वारिधिस्तस्मिन् मग्नः सन्, अन्यत् कृत्यं कृत्यान्तरं कार्यान्तरं तत्, न विद्यते धनं यस्य स निर्द्धनः पुरुषः निधिर्निहितद्रव्यं तं लब्ध्वेव, नावैत् न ज्ञातवान् । इण् गतौ लङ् ॥३६॥

**पाल्यमानाः प्रजाः सर्वाः प्रजानाथेन पुत्रवत् ।**
**अवेत्य तन्तुमन्तं तं तुष्यन्ति स्म गृहेगृहे ॥ ३७ ॥**

**(भा.दी.) पाल्यमाना** इति । प्रजानाथेन राज्ञा पुत्रा इव पुत्रवत् पाल्यमानाः रक्ष्यमाणाः सर्वाः प्रजाः, तं दशरथम्, तन्तुः सन्ततिरस्यास्तीति तन्तुमान् तम्, पुत्रवन्तमित्यर्थः, अवेत्य ज्ञात्वा, गृहेगृहे प्रतिगृहम्, 'गृहं भवनम्' इति हलायुधः, तुष्यन्ति स्म सन्तोषमगच्छन् । तुष तुष्टौ लट् ॥ ३७ ॥

---

१. सङ्गहरामायणगता इमे च श्लोका अत्रानुसन्धेयाः– **'यापयामास भगवानग्रतो भरताग्रजम् । रामः स्वयं पृष्ठतोऽयाज्जानकी मध्यतो ययौ'** (९.३८) इत्ययोध्याकाण्डे । **'सीताया लक्ष्मणस्यापि ववन्दे चरणावसौ'** (१५.५२) इति युद्धकाण्डे । उत्तरकाण्डे च–**'शत्रुघ्नः प्राञ्जलिः प्रोचे प्रसीद पुरुषोत्तम । आर्यो मे मध्यमो धन्यस्त्वच्छुश्रूषां वनेऽकरोत् । भरतेन ममाऽर्येण मयि जीवति किङ्करे । चतुर्दश समास्तप्तं त्वत्प्रीत्यै भूमिशायिना । ब्रह्मघ्नं लवणं हत्वा त्वत्प्रसादेन केवलम् । सार्था शत्रुघ्नता स्यान्मे प्रोच्येति प्रणनाम सः'** (३.३२–४) इति च ।

२. इतः पूर्वमेकं पद्यमधिकं क्वचित् पठ्यते–**'शत्रुघ्नस्त्वनिरुद्धोऽसौ प्रद्युम्नो भरतोऽभवत् । 'सङ्कर्षणस्तु संहारी लक्ष्मणोऽभवदत्र च ॥ 'शत्रुघ्न अनिरुद्धोऽसौ'** इति तु सर्वथा संस्कृतानभिज्ञानां पाठः ।

३. **'आनन्दसागरे'**

**नराणामुत नारीणामयोद्ध्यायां महोत्सवः ।**
**अभूदभूतपूर्वो[१]ऽत्र सेवका ननृतुर्ज्जगुः ॥ ३८ ॥**

**(भा.दी.) नराणामि**ति । नराणां पुरुषाणां नारीणामुत स्त्रीणामपि, अयोध्यायाम्, अत्र अस्मिन् काले, पूर्वं भूतो भूतपूर्वः, भूतपूर्वो न भवतीत्यभूतपूर्वः । पूर्वं कदाप्येवमजात इत्यर्थः । महोत्सवः अभूत् । भूधातोर्लुङ् । सेवका दशरथभृत्यजनाः । ननृतुः सन्तोषातिशयान्नर्तनमकुर्वन् । नृती गात्रविक्षेपे लिट् । केचिज्जगुः । गै शब्दे लिट् ॥ ३८ ॥

**सुताननेन्दुरानन्दं निन्ये राज्ञीकुमुद्वतीः ।**
**मनोरथार्ण्णवं राज्ञः पूर्ण्णतां तूर्ण्णमानयत् ॥ ३९ ॥**

**(भा.दी.) सुते**ति । सुतानां श्रीरामप्रभृतीनां यान्याननानि तान्येवेन्दुः । राज्ञ्यो राजभार्या एव कुमुद्वत्यः कुमुदाकराः, ता एव सरांसीत्यर्थः । ताः आनन्दः सन्तोषस्तं निन्ये प्रापयामास, णीञ् प्रापणे लिट् । राज्ञः दशरथस्य मनोरथ एवार्णवस्तं तूर्णं शीघ्रं यथा भवति तथा पूर्णतां आनयत् अगमयत् । णीञ् प्रापणे लङ् । श्रीरामादीनां मुखावलोकनेन कौसल्यादीनां सन्तोषातिशयोऽभूत् । राज्ञश्च कदा नु पुत्रा जायेरन्नित्यभिलाषः सफलोऽभूदिति भावः ॥ ३९ ॥

**(सं.चं.)** कुमुद्वत्यः कुमुदवत्यः सरस्यः । 'कुमुद्वती कुमुदिनी बुधैः कैरविणी मता' इत्यभिधानम् । राज्ञ्य एव कुमुद्वत्यः । सुताननमेवेन्दुः । इन्दुर्हि कुमुदबान्धवः । कुमुदम्–'ನೈದಿಲೆ' इति भाषायाम् ॥ ३९ ॥

**जातान् कुमारानभ्येत्य पुराऽन्यालम्भतो नृपः ।**
**पुरोधसं पुरोधाय जातकर्म्माकरोच्छुचिः ॥ ४० ॥**

**(भा.दी.) जातानि**ति । नृपः शुचिः शुद्धः सन् जातान् कुमारान् बालकान् अभ्येत्य पुरोधसं वसिष्ठं पुरोधाय पुरस्कृत्य । अन्यालम्भतः अन्येन पुरुषेण आलम्भः स्पर्शस्तस्मादिति ततः । 'आलम्भः स्पर्शहिंसयोः' इति वैजयन्ती । पुरा पूर्वम्, जातस्य कर्म जातकर्म, जननानन्तरं क्रियमाणजातकर्माख्यकर्मेत्यर्थः, अकरोत् । डु कृञ् करणे लङ् । जननानन्तरं अन्यपुरुषस्पर्शात् पूर्वं जातकर्म कर्तव्यमिति स्मृतिसिद्धमित्यतोऽन्यालम्भतः पुरेत्युक्तम् ॥ ४० ॥

१. **'पूर्वं अभूतः अभूतपूर्वः । आहिताग्न्यादिवत् पूर्वनिपातः'** इति का.श्री. ।

**(सं.चं.)** अन्यैरालम्भः स्पर्शः । ततः पूर्वम् । 'आलम्भौ स्पर्शनवधौ' इति मङ्खः । तथाहि स्मरन्ति– 'कुमारं जातं पुराऽन्यैरालम्भात् सर्पिर्मधुनी हिरण्यनिकाशं हिरण्येन प्राशयेत्' इति । जातस्य जाते सति वा कर्म जातकर्म । तथाहि क्रममाचक्षते सम्प्रदायविदः– 'पुत्रे जाते पिता 'नाभिं मा कृन्तत, स्तनं च मा दत्त' इत्यभिधाय कृतस्नानः कृतवृद्धिश्राद्धः प्रक्षाळितशिलायां ब्रह्मचारिणा कुमार्या गर्भवत्या वा श्रुतस्वाध्यायशीलब्राह्मणेन वा अनावृतलोष्टपिष्टे ब्रीहियवौ वा दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा मन्त्रेण कुमारस्य जिह्वां मार्ष्टि । ततस्तथैव सुवर्णेन घृतं गृहीत्वा मन्त्रेण तथैव कुमारस्य जिह्वां मार्ष्टि । ततो 'नाभिं कृन्तत, स्तनं च दत्त' इति पिता ब्रूयात्' इति । विधिज्ञं पुरोधसं वसिष्ठं पुरोधाय । शुचिः कृतस्नानः ॥ ४० ॥

**यथैवासङ्ख्यतां याता[1] विप्रैरुक्ताः सुताशिषः ।**
**तथैव राज्ञा दत्तानि वित्तानि ब्रह्ममण्डले ॥ ४१ ॥**

**(भा.दी.) यथे**ति । विप्रैः (उक्ताः) सुतानां रामादीनामाशिषः शुभवाचः 'आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः' इति वैजयन्ती । यथैव न विद्यते सङ्ख्या यासां ताः तथा, तासां भावस्तत्ता तां याताः प्राप्ताः । तथैव राज्ञा ब्रह्मणां ब्राह्मणानां मण्डलं समूहस्तस्मिन् दत्तानि वित्तानि असङ्ख्यतां यातानीति सम्बन्धः । असङ्ख्यातं वित्तं ब्राह्मणेभ्यो ददावित्यर्थः ॥ ४१ ॥

**(सं.चं.)** ब्रह्ममण्डले ब्राह्मणकुले ॥ ४१ ॥

**सहितः स्वहितै राजा ब्राह्मणैर्ब्रह्मवादिभिः ।**
**अनन्तनाम्नश्चक्रेऽथ नाम नारायणस्य सः ॥ ४२ ॥**

**(भा.दी.) सहित** इति । अथ जातकर्मानन्तरम्, स्वस्य हिता आप्तास्तैः, ब्रह्म वेदं वक्तुं शीलमेषामस्तीति वा, ब्रह्म परमात्मानं वक्तुं जगत्कर्तृत्वादिना प्रतिपादयितुं शीलमेषामस्तीति वा ब्रह्मवादिनस्तैः, ब्राह्मणैर्वसिष्ठादिभिः सहितः राजा, अनन्तानि असङ्ख्यानि नामानि यस्य स तथा तस्य श्रीरामरूपस्य नारायणस्य नाम चक्रे कृतवान् । डु कृञ् करणे लिट् ॥ ४२ ॥

**(सं.चं.)** ब्रह्मणा वेदेन परं ब्रह्मैव वदितुं शीलमेषामिति ब्रह्मवादिनः । अनन्तनाम्नः यस्यानामभूतं पदमेव नास्ति तस्य नाम चक्र इति विस्मयते ॥ ४२ ॥

---

१. '–तां प्राप्ता विप्रै–'

**रामः सर्वाभिरामत्वादात्मारामत्वतोऽपि वा ।**
**देवो [1]मरतकश्याम इति वा रामनामकः ॥ ४३ ॥**

**(भा.दी.)** पुत्राणां राम इत्यादिनामकरणे क्रमेण निमित्तान्याह– **राम** इत्यादिना । देवः श्रीरामरूपी हरिः सर्वान् सज्जनान् अभिरमयति अभितः सुखयतीत्यभिरामस्तस्य भावस्तत्त्वं तस्मात् रामः रामनामकः । अनेन रमयति सज्जनान् सुखयतीति राम इत्युक्तं भवति । आत्मना स्वस्वरूपेण आरमत इत्यात्मारामस्तस्य भावस्तत्त्वं तस्मादिति तत इत्यतोऽपि वा रामः । तथा च रमते स्वस्वरूपेणेति राम इत्युक्तं भवति । मरतकवत् मरतकरत्नवत् श्यामः श्यामलवर्ण इति वा इति हेतोर्वा राम इति नाम यस्य स रामनामकः । तथाच रामत्वाच्छ्यामलत्वाद् राम इत्युक्तं स्यात् । 'रामश्चारौ सितेऽसिते' इति वैजयन्ती ॥ ४३ ॥

**(सं.चं.)** रामः सर्वाभिरामत्वात् । सर्वानभीक्ष्णं रमयतीति रामः । आत्मारामत्वतोऽपि वा । स्वयमेव स्वस्मिन् रमत इति रामः । देवो मरतकश्याम इति हेतोर्वा रामनामकः । 'श्यामं तु श्यामलं रामम्' इत्यभिधानम् ॥ ४३ ॥

**नित्यं रमाभिसम्बन्धाद् दानं श्रीस्तस्य हीति वा ।**
**रामाणां हृद्यभावाद्वा रामं तं सज्जना विदुः ॥ ४४ ॥**

**(भा.दी.)** **नित्यमि**ति । सज्जनाः वसिष्ठाद्याः, नित्यं सर्वदा रमया लक्ष्म्याऽभिसम्बन्धः पतित्वादिना सम्बन्धस्तस्मात् तं रामं रामनामकं विदुः जानन्ति । विद ज्ञाने लट् । न तु लिट् । विदो लटि णलादेशविधानात् । अनेन रमाया अयमिति राम इति व्युत्पत्तिरुक्ता भवति । तस्येदमित्यण् । षष्ठ्यर्थश्च सम्बन्धो जायापतित्वादिरूपो द्रष्टव्यः । हि यस्मात् तस्य कुमारस्य दानं मोक्षादिप्रदानम्, मा श्रीः लक्ष्मीः इति वा रामं विदुः । एवं च रा दान इति धातोः सत्वात् राः मोक्षादिदानं मा श्रीः सम्पदस्येति राम इत्युक्तं भवति । रामाणां स्त्रीणां हृद्यस्य भावो धर्मस्तस्माद्वा, मनोहरत्वाद्वेत्यर्थः[2], रामं विदुरिति सम्बन्धः । अनेन रमणीयत्वाद् राम इत्युक्तं भवति । रामाणामिति योग्यतया सम्बन्धः कृतः ॥ ४४ ॥

**(सं.चं.)** नित्यं रमाभिसम्बन्धात् । रमाया अयं पती रामः । दानं श्रीस्तस्य हीति वा । 'रा दाने' इत्यतो राणं दानम् । आद्याक्षरग्रहणेन समस्तं पदं गृह्यते । तद्यथा अ इत्यज उच्यते । आ इत्यानन्द उच्यते । तेन राणं रा । मानं मा । 'सा हि श्रीरमृता सताम्' । 'वाचो मा मातरः स्मृताः' । रमा वा मा । रा

---

१. **'मरकतश्याम–'** इति भ्रान्तः पाठः ।
२. **'मनोहरत्वाच्चेत्यर्थः'**

च मा चास्य स्त इति रामः । भक्तानां सर्वाभीष्टदः, वेदवेद्यो रमापती राम इत्यर्थः । रामाणां हृद्यभावाद् वा । लोकोत्तरेण सौन्दर्येण रामाणामयं चित्तचोर इति च रामः । 'रामा वामा वामनेत्रा पुरन्ध्री नारी भीरुर्भामिनी कामिनी च' इत्यभिधानम् । रामाणामयं राम इत्येव विग्रहः ॥ ४४ ॥

**साधुलक्ष्मगुणोपेतो लक्ष्मणो नामतोऽभवत् ।**
**सौमित्रिरग्रजो लोके शत्रुघ्नोऽवरजो मतः ॥ ४५ ॥**

**(भा.दी.) साध्विति** । सुमित्राया अपत्यं सौमित्रिः अग्रजः ज्येष्ठः पुत्रः, यतः लोको भुवनं तस्मिन् साधूनां सात्विकानां लक्ष्मभूताश्चिह्नभूता ये गुणास्तैरुपेतो युक्तः, अतः नाम्नेति नामतः लक्ष्मणः अभवत् । भू धातोर्लङ् । अनेन, लक्ष्मणा सज्जनचिह्नभूतगुणजातेन नीयते प्राप्यत इति लक्ष्मण इत्युक्तं भवति । अवरजः लक्ष्मणानुजः सौमित्रिः शत्रुघ्नः शत्रूणां लवणादीनां हन्ता हननशीलस्तस्य भावस्तत्वं तस्मात्[१] । शत्रुघ्न इति सतां मतः सम्मतः अभवत् ॥ ४५ ॥

**(सं.चं.)** साधूनां यानि लक्ष्माणि लक्षणानि सौशील्यादयो गुणास्तदुपेतत्वाल्लक्ष्मणः । लक्ष्माण्यस्य सन्तीति लक्ष्मणः । मत्वर्थे नः । पाणिनीयास्तु लक्ष्मीरस्यास्तीति लक्ष्मण इति व्युत्पादयन्ति । तत्पक्षे लक्ष्म्या अत्वं नश्च । अग्रजः सौमित्रिर्लक्ष्मणः । अवरजः सौमित्रिः शत्रुघ्नः । मुखत एव स्फुटोऽर्थ इति न निरवाचि ॥४५॥

**कैकेयीतनयं[२] प्राहुर्भरतं भरितं गुणैः ।**
**कुमारास्ते कुमाराभा एवं नामानि भेजिरे ॥ ४६ ॥**

**(भा.दी.) कैकेयीति** । गुणाः शौर्यादयस्तैः भरितं पूरितं कैकयीतनयं सन्तं भरतं प्राहुः प्रवदन्ति । ब्रूञ् व्यक्तायां वाचि लट् । न तु लिट् । एवं गुणैर्भरितत्वात्पूर्णत्वाद् भरत इत्युक्तं भवति । कुमारस्य षण्मुखस्य आभेव आभा कान्तिर्येषां ते तथोक्ताः कुमाराः बालकाः । 'कुमारः स्याद् गुहे बाले' इति वैजयन्ती । एवं नामानि भेजिरे । भज सेवायां लिट् ॥ ४६ ॥

**(सं.चं.)** भक्तिं भरतीति भरतः । 'भृञ् भरणे' इत्यस्मादतच् । भरित एव वा भरतो वर्ण-विपर्ययेण । कुमाराभाः । कुमार इति देवसेनानीः स्कन्दः । पौरुषेण तत्सदृशाः ॥ ४६ ॥

---

१. शत्रूणां हन्तृत्वादिति पदं मूले न पठ्यते । वि.ती.पाठे श्लोकार्धमधिकं स्यादिति भाति । तच्चार्धमेवं स्यादपि–**'सौमित्रिरथ शत्रूणां हन्तृत्वाच्च सतामिति'** इति ।

२. **'कैकेयीनन्दनम्'** । **'कैकेय्या नन्दनं'** इति क्वचित् ।

**संस्कारान् कारयामास ब्राह्मणैर्ब्रह्मपारगैः[१] ।**
**अप्यन्नप्राशनादीन् स नन्दनानां नराधिपः ॥ ४७ ॥**

**(भा.दी.) समिति** । सः नराधिपः, ब्रह्मणो वेदस्य पारमवसानं गता इति तथोक्तास्तैः, साङ्गवेदज्ञैरित्यर्थः, ब्राह्मणैः वसिष्ठादिभिः, नन्दनानां श्रीरामादीनाम्, अन्नप्राशनं अन्नप्राशनाख्यः संस्कार आदिर्येषां ते तथा तान् संस्कारानपि कारयामास अकारयत् । डु कृञ् करणे लिट् ॥ ४७ ॥

**(सं.चं.)** संस्कारान् । जातकर्म नामकरणं चोक्ते । उपनयनं वक्ष्यति । तेनात्र विवक्षिताः संस्काराः, अन्नप्राशनम्, उपनिष्क्रमणम्, चूडाकरणं च । नन्दनानां तनयानाम् । 'नन्दनं वासवोद्याने नन्दनो हर्षके सुते' इति मेदिनी ॥ ४७ ॥

**उपनीता विनीतास्ते जगृहुः साङ्गमागमम् ।**
**अस्त्राणि च समस्तानि धनुर्वेदपराः कलाः ॥ ४८ ॥**

**(भा.दी.) उपेति** । उपनीता कृतोपनयनाः, विनीताः विनयवन्तः, ते श्रीरामाद्याः, शिक्षा कल्पो व्याकरणं च्छन्दो ज्योतिषं निरुक्तमिति प्रसिद्धैः षडङ्गैः सहितः साङ्गस्तम्, आगमं वेदं जगृहुरधीतवन्तः । ग्रह उपादाने लिट् । समस्तानि अस्त्राणि ब्राह्माद्यस्त्राणि च जगृहुः । धनुर्वेदः परः श्रेष्ठः यासां तास्तथोक्ताः कलाः चतुःषष्टिकलाविद्याश्च जगृहुरित्यन्वयः ॥ ४८ ॥

**(सं.चं.)** अस्त्राणि मन्त्रप्रयोज्यानि ब्रह्मशिरआदीनि । धनुर्वेदः शस्त्रविद्या । स परोऽन्यासां कलानां नृत्तगीतादीनाम् ॥ ४८ ॥

**शान्ता दान्ताः पराक्रान्ताः कान्तिमन्तो गुणाधिकाः ।**
**ह्रीमन्तः[२] कीर्त्तिमन्तश्च देवास्ते धरणीं गताः ॥ ४९ ॥**

**आत्मानइव[३] तातस्य गुरूणां किङ्कराइव ।**
**जगतामिव दैवानि मातॄणामिव बालकाः ॥ ५० ॥**

---

१. 'ब्राह्मणैर्वेदपारगैः' २. 'श्रीमन्तः' ३. 'आत्मजाइव'

**(भा.दी.) शान्ता** इति । शान्ताः शान्त्योपेताः, विषयासक्तिरहिता इत्यर्थः, अत एव दान्ताः निगृहीतेन्द्रियाः, पराक्रान्ताः पराक्रमिणः, कान्तिरेषामस्तीति कान्तिमन्तः, गुणाधिकाः बलशौर्यादिगुणैरधिकाः, ह्रीर्लज्जा निषिद्धकरणेषु एषामस्तीति ह्रीमन्तः, कीर्तिरेषामस्तीति कीर्तिमन्तः । धरणीं गताः देवाः (ते) श्रीरामादयः तातस्य पितुः दशरथस्य आत्मानइव बहिश्चरप्राणाइव आसन् । गुरूणां वसिष्ठादीनां किङ्करा-इव आसन् । जगतां चतुर्दशजगतां दैवानीव देवता इव आसन् । मातॄणां कौसल्यादीनां बालका इव आसन्नित्यन्वयः ॥ ४९–५० ॥

**(सं.चं.)** शान्ता अध्यात्मनिष्ठाः । अक्रूरस्वभावा वा । दान्ता निगृहीतेन्द्रियाः । कान्तिमन्तः कमनीय-कायाः । वर्चस्विनो वा । अकार्यकरणे ह्रीमन्तः । कीर्तिमन्तः यद्गुणानेव जनाः सदा कीर्तयन्ति ।आत्मान इव । स्वस्यैव रूपान्तराणीव । 'आत्मा वै पुत्रनामाऽसि' इति हि श्रुतिः ॥ ४९–५० ॥

**शयानमासीनमथ स्थितं गतं**
**प्रक्रीडितं [१]प्रस्तुतमग्रजं हरिम् ।**
**क्षणं च नामुञ्चत लक्ष्मणो गुरुं**
**शत्रुघ्न एवं भरतं निजाग्रजम् ॥ ५१ ॥**

**(भा.दी.)** अनुजस्य ज्येष्ठानुवृत्तिप्रकारं दर्शयति– **शयानमि**ति । लक्ष्मणः शयानं शय्यायां कृतविश्रमणम्, आसीनं पीठादावुपविष्टम्, अथ स्थितं अवस्थितम्, गतं गच्छन्तम् । 'गत्यर्थ–' (अ.सू.३.४.७२) इत्यादिना कर्तरि क्तः । प्रक्रीडितं प्रकर्षेण क्रीडां कुर्वन्तम्, प्रस्नुतं स्तनपानं कुर्वन्तम्, गुरुं स्वस्य मुख्यगुरुम्, अग्रजं ज्येष्ठं हरिं श्रीरामं क्षणः क्षणकालः तं च । 'कालाध्वनोरत्यन्तसंयोगे' (अ.सू.२.३.५) इत्यधिकरणे द्वितीया, क्षणमात्रकालेऽपीत्यर्थः । न अमुञ्चत न मुक्तवान् । मुच्लृ मोक्षणे लङ् । शतुघ्नश्च एवं लक्ष्मणवत् निज आत्मीयोऽग्रजस्तम्, भरतमित्यर्थः । क्षणश्च नामुञ्चतेति सम्बन्धः ॥ ५१ ॥

**(सं.चं.)** प्रस्तुतं कस्मिंश्चित् कार्यविशेषे प्रवृत्तम् । गुरुमग्रजम् । वंशस्थेन्द्रवंशाभ्यामुपजातिः ॥ ५१ ॥

**लीलाभिः [२]स्मितलसितैरपाङ्गभृङ्गै-**
**र्वाणीभिः प्रमुषितवाणिनीमनोभिः ।**

---

१. **'प्रस्नुतमग्रजम्'** इति वि.ती.पाठ इति भाति । **'प्रस्तुतं स्तवं कुर्वन्तम्'** इति वि.भू.,का.श्री. च । २. **'स्मितलळितै–'**

**आनन्दं निजजनवृन्दमिन्दिरेशो**
**रामात्मा समगमयत् सुमङ्गलाङ्गः ॥ ५२ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे बालकाण्डे तृतीयः सर्ग्गः ॥**

—०—

**(भा.दी.)** श्रीरामस्य बाललीलां सङ्क्षेपतो वर्णयति– **लीलाभि**रिति । सुमङ्गलानि अङ्गानि अवयवा यस्य स तथोक्तः, राम इति आत्मा स्वरूपं यस्य स तथोक्तः, इन्दिरेशः लक्ष्मीशः श्रीहरिः, लीलाभिः क्रीडाभिः, स्मितलसितैः मन्दहासेन शोभितैः, अपाङ्गा नेत्रान्ता भृङ्गा इव तैः, वाणीं वाचं नयति प्रेरयतीति वाणिनीः वागभिमानिनी सरस्वती, प्रमुषितं चोरीकृतं वाणिन्याः सरस्वत्याः मनश्चित्तं याभिस्तास्तथोक्तास्ताभिः, 'वाणिनीर्नर्तकीमत्ताविदग्धवनितासु च' इति विश्वः[१], वाणीभिः वाग्भिः, सरस्वतीचित्ताकर्षकत्वेन सरस्वतीवचनेभ्योऽप्यतिमनोहरवाग्भिरित्यर्थः[२] । निजाः स्वकीया ये भक्तजनास्तेषां वृन्दं समूहस्तत् आनन्दः सन्तोषस्तं समगमयत् सम्प्रापयामास । गम्लृ गतौ लङ् । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकानामणि कर्ता सणौ' (अ.सू.१.४.५२) इति सूत्रेणाण्यन्तगमिधातोः कर्तुः सण्यन्ततायां कर्मसञ्ज्ञाविधानात् द्विकर्मकत्वोपपत्तिः ॥ ५२ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां बालकाण्डे तृतीयः सर्गः ॥**

—०—

**(सं.चं.)** प्रहर्षिण्योपसंहरति । स्मितस्य लसितं मोहको विन्यासविशेषः । 'ಮೋಡಿ' इति भाषायाम् । 'नयनोपान्तमपाङ्गः' इत्यभिधानम् । अपाङ्गा एव भृङ्गाः । 'अपाङ्गभङ्गैः' इति वा पाठः स्यात् । प्रमुषितं वाणिनीनां माद्यत्कामिनीनां मनो यैस्तैः स्मितविलसितैरपाङ्गभृङ्गैश्च । प्रमुषितं वाणिनीमनो यैस्ताभिः लीलाभिर्वाणीभिश्च । 'स्त्री विदग्धा च मत्ता च वाणिनीत्यभिधीयते' इति च । उक्तं च हि– 'रामाणां हृद्यभावाद् वा' इति । रामात्मा रामरूपेणावतीर्णः ॥ ५२ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां बालकाण्डे तृतीयसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– ८९+५२=१४१]

---

१. प्रकृतार्थाननुगुणमिदं कोशवचनम् ।

२. वि.भू.का.श्री.टीकयोरप्येवम् । नातीव स्वरसम् ।

# चतुर्थः सर्ग्गः

[१]अथो दशरथो राजा पुत्राणां पुत्रवत्सलः ।
चिन्तयामास दारार्थं सामात्यः स महीपतिः[२] ॥ १ ॥

**(भा.दी.)** श्रीरामस्य विश्वामित्ररक्षणाद्यवतारकथां वक्तुमुपोद्घातमारभते– **अथो** इति। अथो उपनयनाद्यनन्तरं पुत्रवत्सलः पुत्रेषु स्निग्धः, महीपतिः राजा सः दशरथः, अमात्यैर्मन्त्रिभिः सहितः सामात्यस्तथा सन्, पुत्राणां श्रीरामादीनां दारार्थं अनुकूलभार्यावाप्त्यर्थं चिन्तयामास विचारयामास । चिति स्मृत्यां लिट् ॥ १ ॥

**(सं.चं.)** अथो इति पूर्ववृत्तादानन्तर्यम्, उत्तरवृत्तस्य माङ्गलिकत्वं चाऽह । अत्र कश्चन पाठविप्लवो भाति– 'सामात्यः स महीपतिः' इति पठन्ति । तदा 'महीपती राजा दशरथः' इति पुनरुक्तमिव भवति । केचिदेवं व्याचक्षते–'महीपतिभिः खण्डेश्वरैः माण्डलिकैः सहितः समहीपती राजा दशरथः' इति। तदपि न श्लिष्यति । नहि महीपतिपदेन माण्डलिकाः क्वापि व्यपदिश्यन्ते । नहि कवयस्तथा प्रयुञ्जते । तर्हि– 'अथो दशरथो राजपुत्राणाम्' इति स्याद् वा? परिहृतं तु पुनरुक्तम् । अथापीदृशः प्रयोगो नातीव श्लिष्यति । तेन सम्भाव्यते–'सामात्यः स महामतिः' इति लिखितव्ये 'महीपतिः' इति लिखन्तो लिपिकृतः प्रायो बभ्रमुरिति ॥ १ ॥

चिरं चिन्तयता तेन समाजे समदृश्यत ।
विश्वामित्रः सतां मित्रं कार्य्यस्येव विनिर्ण्णयः ॥ २ ॥

**(भा.दी.)** चिरमिति। समाजः सभा तस्मिन् चिरं चिरकाले चिन्तयता विचारयता तेन राज्ञा सतां सज्जनानां मित्रं मित्रभूतः, विश्वामित्रः विश्वामित्राख्यो मुनिः, पुत्राणां भार्यावाप्तिलक्षणं यत्कार्यं तस्य विनिर्णयइव समदृश्यत । दृशिर् प्रेक्षणे लङ् । विश्वामित्रेण सह गतस्य श्रीरामस्य सीतावाप्तेर्भावित्वात् कार्यस्य विनिर्णय इवेत्युक्तम् ॥ २ ॥

---

१. **'अथो राजा दशरथो पुत्राणाम्'**

२. **'महीपतिभिः खण्डेश्वरैः सहितः समहीपतिः'** इति का.श्री.।

**(सं.चं.)** समाजे राजसदसि विश्वामित्रः समदृश्यत । 'समाजः संसदास्थानी सभा स्यात् परिषत् सदः' इत्यभिधानम् । अमात्यैः सह चिरं चिन्तयित्वाऽपि न निर्णय आस । तदा कार्यनिर्णय इव स्वयं विश्वामित्र आजगाम । स किल दारकार्यं विनिर्णेष्यति ॥ २ ॥

**प्रत्युत्थाय नृपः प्रीतः प्रदाय परमासनम् ।**
**सवसिष्ठो मुनिश्रेष्ठमभिपूज्येदमब्रवीत् ॥ ३ ॥**

**(भा.दी.) प्रती**ति । प्रीतः मुनिदर्शनात् सन्तुष्टः, सवसिष्ठः वसिष्ठसहितः, नृपः प्रत्युत्थाय परमुत्तमं यदासनं तत् प्रदाय, मुनिश्रेष्ठं विश्वामित्रं अभिपूज्य अर्घ्यादिना पूजयित्वा, इदं वक्ष्यमाणं वचः अब्रवीत् । ब्रुवो लङ् ॥ ३ ॥

**(सं.चं.)** अतिथेः स्वागतपूर्वमातिथ्यप्रतिपादनायोत्थानं प्रत्युत्थानम् । सादरं दानं प्रदानम् । परं परमं वाऽऽसनम् । अभिगम्य पूजनमभिपूजनम् । अभिमतं च पूजनमभिपूजनम् ॥ ३ ॥

**भगवन् भगवद्भक्ताः परिपूर्णाः स्वभावतः ।**
**तथाऽपि वयमात्मार्थं कुर्म्मो वः कर्म्म वाञ्छितम् ॥ ४ ॥**

**(भा.दी.) भगवन्नि**ति । हे भगवन् पूज्य विश्वामित्र, भगवद्भक्ताः श्रीहरिभक्ताः, स्वभावतः स्वे स्वतन्त्रे भगवति भावतो भक्तितः, यदृच्छालाभेनेति वा, परिपूर्णाः परिपूर्णमनोरथाः । तथाचार्थादीच्छया भवदागमनमसाम्प्रतं पश्याम इति भावः । निष्प्रयोजनप्रवृत्त्यनुपपत्तेः, भवदागमनेन यत्किञ्चित् प्रयोजनमस्तीत्यनुमीयते । तच्च स्वकीयकर्तव्यतयाऽवश्यं कुर्म इत्याह– **तथाऽपी**ति । तथाऽपि परिपूर्णाभीष्टत्वेऽपि वयं वः युष्माकं वाञ्छितम् अभीष्टं कर्म, आत्मार्थं स्वप्रयोजनार्थं कुर्मः । कृञो लट् ॥ ४ ॥

**(सं.चं.)** स्वभावतः स्वरूपभूतया योग्यतया । भक्त्यैव पूर्णकामाः नान्यत् किमपि वाञ्छन्ति स्वार्थम् । तथाऽप्यस्मदनुग्रहाय यदि किमपि कर्म वाञ्छितम्, तद् वः कुर्मः । स ह्यस्माकं महान् स्वार्थः ॥ ४ ॥

**ननु नारायणपरास्तद्भक्तानुग्रहार्थिनः ।**
**जगत्यटन्ति नाऽत्मार्थं भास्कराइव भास्वराः ॥ ५ ॥**

**(भा.दी.)** यद्वा आत्मप्रयोजनाभावेऽपि भगवत इव भगवद्भक्तानामपि केवलं कृपापारवश्यादेवास्मत्पावनाद्यर्थं प्रवृत्तिः सम्भवतीत्याह– **नन्वि**ति । नारायणः परः सर्वोत्तमो येषां ते तथोक्ताः, नारायणे परं तात्पर्यं येषां

ते तथेति वा, पुरुषाः, तस्य श्रीहरेर्ये भक्तास्तेषां योऽनुग्रहः स एवार्थः प्रयोजनम्, स एषामस्तीति तथोक्ताः सन्तः, जगति भास्वराः प्रकाशशीलाः, भास्कराइव अटन्ति सञ्चरन्ति ननु । अट गतौ लट् । आत्मार्थं स्वप्रयोजनार्थं न अटन्ति । यथा द्वादशाऽदित्याः क्रमेण प्रतिमासं परोपकारार्थमटन्ति न स्वप्रयोजनार्थं तथैव सज्जना अपीति भावः ॥ ५ ॥

**(सं.चं.)** भक्तानुजिघृक्षयैव केवलं जगत्यटन्ति । न क्वापि स्वप्रयोजनाय । भास्कराइव निःस्वार्थं लोक-भासकाः । आकाशे त्वेको भास्करः । भुवि भवादृशा बहवो भास्कराः ॥ ५ ॥

**महीपालवचः श्रुत्वा महीदेवोऽभ्यभाषत ।**
**महावंश्यस्य महतो युक्तमेतत् तवोदितम् ॥ ६ ॥**

**(भा.दी.)** **मही**ति । मह्यां देवइव महीदेवः, ब्राह्मण इत्यर्थः, विश्वामित्रः, महीपालवचः दशरथवचः श्रुत्वा, महान् प्राज्यो यो वंशः इक्ष्वाकुवंशस्तस्मिन् भवो महावंश्यस्तस्य, महतः स्वरूपतो महाधिकारिणः तव, एतत् प्रोक्तं उदितं वचनम्, 'नपुंसके भावे क्तः' (अ.सू.३.३.११४) इति क्तः, अत एव तवेति नपुंसके भावे क्तस्य च योगे शेषविवक्षायां च षष्ठी, युक्तं न्याय्यम् ॥ ६ ॥

**(सं.चं.)** महीदेवो विश्वामित्रः । महावंश्यः महति ख्याते वंशे भवो न केवलम् । स्वयं च महान् । महामना महाभागः । महावंश्य इति तत्र भव इत्यर्थे 'दिगादिभ्यो यत्' (अ.सू.४.३.५४)इति यत् प्रत्ययः । वंशशब्दो दिगादिगण- पठितः । तदनुगुणं तवोदितम् ॥ ६ ॥

**रक्षोभ्यामतिरूक्षाभ्यां विहता मे मुहुर्मुहुः ।**
**यज्ञास्तद्रक्षणोद्देशी त्वामहं शरणं गतः ॥ ७ ॥**

**(भा.दी.)** इदानीमागमनप्रयोजनमाह– **रक्षोभ्यामि**त्यादिना । अत्यन्तं रूक्षे क्रूरे ताभ्यां रक्षोभ्यां रावणकुम्भकर्णाभ्यां मे यज्ञाः मुहुर्मुहुः बहुवारं विहताः नाशिताः । अहं तेषां यज्ञानां यद्रक्षणं तस्मिन् उद्देशः सङ्कल्पोऽस्यास्तीति तथा सन्, त्वां शरणं अरणं ततु, गतः प्राप्तः । अस्मीति शेषः ॥ ७ ॥

**(सं.चं.)** रक्षोभ्यां सुबाहुमारीचाभ्याम् । त्वामहं शरणं रक्षितारमाश्रयं वा गत आश्रितः । त्वमाश्रयं दत्वा रक्षेरित्याशयाऽऽगतः ॥ ७ ॥

**अवद्ध्ययोः शम्भुवरादवद्ध्यानकृतोः सताम् ।**
**मच्छापोऽपि [१]तयोर्म्मोघः स्यादग्निर्ह्रदयोरिव ॥ ८ ॥**

**(भा.दी.) अवद्ध्ययोरि**ति । शम्भ्वोर्ब्रह्मरुद्रयोर्यो वरस्तस्मात्, 'शम्भुर्ब्रह्मत्रिलोचनौ' इत्यमरः, अवद्ध्ययोः वधानर्हयोः, सतां सज्जनानां अवद्ध्यानमवज्ञां कुरुत इति तथोक्तौ, तयोः रावणकुम्भकर्णयोर्विषये मच्छापोऽपि ह्रदयोः अगाधजलाधारयोः जलाशययोः, 'जलाशयो जलाधारः' इत्यमरः, अग्निरिव मोघः निष्फलः स्यात् । अस्तेर्लिङ् ॥ ८ ॥

**(सं.चं.)** शम्भोरीशानस्य वरादवध्यः सुबाहुः । शम्भोर्विरिञ्चस्य वरादवध्यो मारीचः । 'सुबाहुमीशानगिरा विमृत्युम्' इति, 'शरेण मारीचमथार्णवेऽक्षिपद् वचो विरिञ्चस्य तु मानयानः । अवध्यता तेन हि तस्य दत्ता' (४) इति च निर्णये । 'शम्भुः स्वयम्भूर्द्रुहिणश्चतुर्वक्त्रः प्रजापतिः' इति , 'शर्वः शम्भुरुमापतिश्च गिरिशः' इति चाभिधानम् । अवध्यानमवहेळनम् । अवमन्तुं ध्यानमवध्यानम् । अवमतया ध्यानमवध्यानम् । सतामवमन्त्रोः । सतामवधीरणैव ययोर्जीवनधर्मः । शम्भुवरबलयोस्तयोर्मच्छापोऽपि मोघो विफलः । यथाऽगाधजलयोर्ह्रदयोर्निक्षिप्तस्तनुतरोऽग्निर्न ह्रदौ शोषयति । किन्तु स्वयमेव शाम्यति ॥ ८ ॥

**ज्येष्ठं श्रेष्ठं तव सुतं रामं राजीवलोचनम् ।**
**नियुङ्क्ष्व तद्वधायाऽशु श्रेयस्ते भविता ध्रुवम् ॥ ९ ॥**

**(भा.दी.)** तत्र मया किं कार्यमित्यत आह– **ज्येष्ठमि**ति । हे दशरथ, त्वं ज्येष्ठं श्रेष्ठं सर्वोत्तमम्, राजीववत् कमलवल्लोचने यस्य स तथा तम्, तव सुतं श्रीरामम्, तयोः रावणकुम्भकर्णयोर्वधस्तस्मै, आशु नियुङ्क्ष्व प्रेषय । युजिर् योगे लोट् । ते तव ध्रुवं शाश्वतं श्रेयः भविता भविष्यति । भू सत्तायां लुट् ॥ ९ ॥

**(सं.चं.)** तव ज्येष्ठं सुतम् । सर्वतः श्रेष्ठम् । रक्षसोर्वरदाभ्यां शम्भुस्वयम्भूभ्यामपि श्रेष्ठम् । तयोरवध्ययोर्वधाय ॥ ९ ॥

**वेदाहं वेदसंवेद्यं तेजो राजन् सुतस्य ते ।**
**सुरासुरैरप्रधृष्यं वसिष्ठाद्याश्च ते द्विजाः[२] ॥ १० ॥**

**(भा.दी.)** श्रीरामश्चेत् तद्वधे समर्थ इत्याशयेन तन्महिमानमाह– **वेदे**ति । हे राजन्, अहं ते तव सुतस्य श्रीरामस्य वेदैः सम्यक् वेद्यं सम्यग्वेत्तुमर्हं तत्, सुराश्च असुराश्च तैः अप्रधृष्यं प्रधर्षितुमशक्यम्, अभिभवितुम-

१. **'तयोः सुबाहुमारीचयोः'** इति का.श्री. । २. **'वसिष्ठाद्या इमे द्विजाः'** । **'ते तव सम्बन्धिनः वसिष्ठाद्याः'** इति का.श्री. ।

शक्यमित्यर्थः, तेजः सामर्थ्यं बलं वा, 'तेजो बले प्रभावेऽग्ने ज्योतिषि' इति वैजयन्ती, वेद जानामि। विद ज्ञाने लट्। न तु लिट्। न केवलमहमेव जानामि, किन्तु वसिष्ठाद्याश्च जानन्तीत्याह– **वसिष्ठे**ति। वसिष्ठ आद्यो येषां ते तथोक्ताः ते द्विजाश्च विदुरिति सम्बन्धः ॥ १० ॥

**(सं.चं.)** श्रेष्ठमित्युक्तं स्फुटं विवृणोति– वेदाहम्। तेजो दुष्टदलनदक्षं सत्वम्। पौरुषेयैरपौरुषेयैश्च वेदैः सतात्पर्यं वेद्यम्। 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति, 'तेजस्तेजस्विनामहम्', 'महाक्रमो महातेजाः' इत्यादि च। ते तव, त्वदीयाः वसिष्ठाद्याश्च। यदि न ते मयि विस्रम्भः, पृच्छ वसिष्ठम्। 'अहं वेद्मि महात्मानं रामं सत्यपराक्रमम्। वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः' (१९.१४) इति च ॥ १० ॥

**इति तस्य वचः श्रुत्वा मुमोह स महीपतिः।**
**वित्रस्तो निजपुत्रस्य विरहानलशङ्कया ॥ ११ ॥**

**(भा.दी.)** **इती**ति। महीपतिः सः दशरथः तस्य विश्वामित्रस्य इति एवमादि वचः श्रुत्वा, निजः स्वकीयो यः पुत्रस्तस्य श्रीरामस्य विरहो वियोगः स एव अनलोऽग्निस्तस्य शङ्कया, वित्रस्तः भीतः सन्, मुमोह मूर्च्छितोऽभूत्। मुह वैचित्ये लिट् ॥ ११ ॥

**(सं.चं.)** मुमोह कर्तव्यमूढः स्तब्धः स्थाणुरिव तस्थौ। विरहानलशङ्कयैव। का कथा विरहानले प्राप्ते सति ॥ ११ ॥

**लब्धसञ्ज्ञो मुहूर्त्तेन मुहुरार्त्तो नरेश्वरः।**
**विनिश्वस्य मुनिश्रेष्ठं दीनन्दीनमभाषत[1] ॥ १२ ॥**

**(भा.दी.)** **लब्धे**ति। मुहूर्तो मुहूर्तकालस्तेन लब्धा सञ्ज्ञा प्रज्ञा येन स तथोक्तः, मुहुः भृशं आर्तः, नरेश्वरः राजा दशरथः, विनिश्वस्य शोकवशाद् दीर्घमुच्छ्वस्य, मुनिश्रेष्ठं विश्वामित्रं प्रति, दीनः खिन्नः यथा भवति तथा दीनम्, दीनः खिन्नः यथा भवति तथेत्युभयमपि (क्रिया)विशेषणम्। दीनं यज्ञानां विघातेन खिन्नमित्येकं विश्वामित्रविशेषणं वा, अभाषत। भाष व्यक्तायां वाचि लङ् ॥ १२ ॥

**(सं.चं.)** मुहूर्तेनेति न कालमानवचनम्। किन्तु साप्यवचनम्। सपदि लब्धसञ्ज्ञः। मुहुः पुनरप्यार्तः दुःखितः। राममहिमपरिज्ञानाददीनं मुनिश्रेष्ठं दीनन्दीनं अतितरां भयगद्गदं यथा स्यात् तथाऽभाषत। स्वीकारे रामविरहभयम्। अस्वीकारे मुनिकोपाद् भयमित्युभयतःपाशेयं कष्टा दशेत्याह– दीनन्दीनमिति ॥ १२ ॥

१. **'दीनोऽदीनमभाषत' 'दीनो दीनमभाषत'** इति केचित् पदं छिन्दन्ति। **'दीनन्दीनं अत्यन्तदैन्ययुक्तं यथा भवति तथा'** इति का.श्री.।

**सुकुमारं कुमारं मे सुतं सुखविवर्द्धितम्[१] ।**
**अनस्त्रज्ञमयुद्धज्ञं[२] न रामं नेतुमर्हसि[३] ॥ १३ ॥**

**(भा.दी.)** वचनप्रकारं दर्शयति–**सुकुमारमि**ति ।सुकुमारं कोमळम्, कुमारं बालकम्, सुखेन विवर्द्धनं विवृद्धिर्यस्य स तथोक्तस्तम् । सुखविवर्द्धितमिति क्वचित्पाठः । युद्धज्ञो न भवतीत्ययुद्धज्ञस्तम्, अस्त्राणि जानातीत्यस्त्रज्ञः न भवतीत्यनस्त्रज्ञस्तम्, मे सुतं श्रीरामं नेतुं नार्हसि न योग्योऽसि । अर्ह पूजायां लट् ॥ १३ ॥

**(सं.चं.)** सुकुमारः कोमलाङ्गः । स कथं रूक्षै रक्षोभिर्युध्येत? महता यत्नेन लब्धं सुतम् । कथं तं विरहय्य जीवेयम्? सुखेन विवर्धितमदुःखज्ञम् । कथं तमहं रक्षःक्षपणसङ्कटे क्षिपेयम्? तत्रापि कुमारमप्राप्तवयसमनस्त्रज्ञमयुद्धज्ञं च । ते च राक्षसाः परिणतवयसः शस्त्रास्त्राभिज्ञा मायायुद्धकुशलाश्च ॥ १३ ॥

**नववर्षसहस्राणि परितप्तः सुताशया ।**
**रामाननेन्दुनेदानीमहमानन्दितो मुने ॥ १४ ॥**

**(भा.दी.) नवे**ति । हे मुने विश्वामित्र, वर्षाणां सहस्राणि वर्षसहस्राणि । नव च तानि वर्षसहस्राणि च तानि । निरन्तरनववर्षसहस्रेष्वित्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे' (अ.सू.२.३.५) इति द्वितीया । सुताशया सुतानां प्राप्त्याशया परितप्तः अहं इदानीं श्रीरामस्य यदाननं तदेवेन्दुस्तेन आनन्दितः सन्तोषितः अस्मि ॥१४॥

**(सं.चं.)** नववर्षसहस्राणि । सम्प्रति रामायणे तु पठ्यते–'षष्टिवर्षसहस्राणि जातस्य मम कौशिक । दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि' (२०.१०) इति । 'नववर्षसहस्राणि मम जातस्य–' इत्येव प्राचीनो रामायणपाठः । काळिदासोऽप्याह रघुवंशे–'पृथिवीं शासतस्तस्य पाकशासनतेजसः । किञ्चिदूनमनूनर्धेः शरदामयुतं ययौ' (१०.१) इति । सुताशया सुतनिरीक्षया । परितप्तः बहुविधैराधिभिः परिभूतः । सम्प्रति निरीक्षितं लब्धं बहोः कालात् । कथं तत् सहसा त्यजेयम् ॥ १४ ॥

**सोऽहं मुहूर्त्तमप्येनं हित्वा न स्थातुमुत्सहे ।**
**मम प्राणानिव ब्रह्मन् तस्माद् रामो न नीयताम् ॥ १५ ॥**

**(भा.दी.) स** इति । हे ब्रह्मन् ब्राह्मण, सः एवं सन्तोषं प्राप्तः अहम्, यतः कारणात् एनं श्रीरामं मम प्राणानिव हित्वा त्यक्त्वा मुहूर्तो मुहूर्तकालस्तमपि मुहूर्तकालेऽपीत्यर्थः, स्थातुं न उत्सहे न सोढुं शक्तोऽस्मि । षह मर्षणे लट् । तस्मात् श्रीरामः न नीयताम् । णीञो लोट् ॥ १५ ॥

---

१. **'सुखविवर्द्धनम्'** इति वि.ती.पाठः । २. **'अयुद्धज्ञमनस्त्रज्ञम्'** इति वि.ती.पाठः । ३. **'–ज्ञं रामं नेतुं नचार्हसि'**

**(सं.चं.)** मुहूर्तं लवकालमपि । नोत्सहे । उत्साहः सज्जीभवनम् । पुत्रं हातुं नाहं सज्जः सिद्ध इत्यर्थः । प्राणा इन्द्रियाणि । यदि रामं नयसि निरिन्द्रियो निश्चेष्टः स्याम् । एडमूकोऽन्धोऽमनाः । अथच प्राणा इति बहुवचनान्तं जीवचैतन्यवचनम् । यदि नयसि रामम्, नूनमुत्क्रामन्ति मे प्राणाः । न जीवेयं विना रामम् ॥ १५ ॥

**मायिभी राक्षसैर्योद्धुं मां मुहुर्जितकाशिनम्[1] ।**
**चतुरं चतुरङ्गेण चक्रेण सहितं नय ॥ १६ ॥**

**(भा.दी.) मायिभिरि**ति । माया अदृश्यत्वादिशक्तिः एषामस्तीति मायिनस्तैः । व्रीह्यादित्वादिनिः । राक्षसैः योद्धुं मुहुः बहुवारं जितेन जयेन काशितुं प्रकाशितुं शीलमस्यास्तीति जितकाशी तम्, जितयुद्धमित्यर्थः, चतुरं निपुणम्, चत्वारि अङ्गानि गजतुरगरथपदातिलक्षणावयवा यस्य तत्तेन (चक्रेण सैन्येन) । 'चक्रं सैन्ये जलावर्ते रथाङ्गे चयराष्ट्रयोः' इति वैजयन्ती । सहितं मां नय । णीञ् प्रापणे लोट् ॥ १६ ॥

**(सं.चं.)** मायिभिः । 'व्रीह्यादिभ्यश्च' (अ.सू.५.२.११६) इतीनिः । तेन त्रीणि रूपाणि मायी,मायिकः, मायावान् । मायिभी राक्षसैः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (अ.सू.६.३.१११) इति रलोपे पूर्वस्येकारस्य दीर्घः । मुहुरनेकवारम् । 'जितकाशी जिताहवः' इत्यभिधानम् । चतुरं प्रवीणं युद्धतन्त्रे । परिचितयुद्धतन्त्रोऽहम् । विजित्य च शत्रून् बहुधा लब्धानुभवः कृतहस्तोऽहम् । तस्मान्नय माम् । चक्रं चमूः । 'चक्रं सेनारथाङ्गयोः' इति मङ्खः । चत्वारि च चक्रस्याङ्गानि भवन्ति– पदातयः, अश्वाः, गजाः, रथा इति ॥ १६ ॥

**यदि रावणमाश्रित्य युष्मान् निघ्नन्ति राक्षसाः ।**
**प्राप्तः सर्वविनाशो नो जगत् स्यादधरोत्तरम् ॥ १७ ॥**

**(भा.दी.) यदी**ति । यदि राक्षसाः खरादयः रावणं आश्रित्य युष्मान् निघ्नन्ति संहरन्ति । हन हिंसागत्योर्लट् । तर्हि नः अस्माकं सर्वविनाशः सर्वस्य नाशः प्राप्तः । न केवलं सर्वविनाशः । किन्तु जगत् अधरं च तदुत्तरं च अधरोत्तरम्, अव्यवस्थितमित्यर्थः, स्यात् । अस्तेर्लिङ् ॥ १७ ॥

**(सं.चं.)** अथापि यदि रावणमाश्रित्य निघ्नन्ति सुबाहुमारीचादयः न तर्हि जयाशा । नापि जीविताशा । भवन्तश्च वयं च सर्वे नष्टा भवेम । अधरमुत्तरम्, उत्तरं चाधरमिति सर्वं जगद् विप्लुतमस्तव्यस्तं स्यात् । '**ಅಡಿಮೇಲು**' इति भाषायाम् ॥ १७ ॥

---

१. 'मुहुर्जितमायिनम्'

**सवासवाः सुरगणा यन्नाम्नैव प्रदुद्रुवुः ।**
**वैरं स्वैरं कथं यामस्तेन तच्चानुचिन्त्यताम्[1] ॥ १८ ॥**

**(भा.दी.) सवासवा** इति । सवासवाः सेन्द्राः सुरगणाः देवसमूहाः यस्य रावणस्य नाम तेनैव, नामश्रवणमात्रेणेत्यर्थः, प्रदुद्रुवुः पलायितवन्तः । द्रु गतौ लिट् । तेन रावणेन वयं वैरं विरोधस्तत्, स्वैरं स्वेच्छा यथा भवति तथा । 'मन्दस्वच्छन्दयोस्स्वैरम्' इत्यमरः । निष्कारणमिति यावत् । कथं यामः प्राप्नुमः । या प्रापणे लट् । तच्च तादृशरावणेन विरोधाचरणं च, अनुचिन्त्यतां त्वयैव विचार्यताम् । तादृशरावणेन विरोधाचरणमस्माकं युक्तमयुक्तं वेति त्वयैव विचार्यतामिति भावः ॥ १८ ॥

**(सं.चं.)** नाम्नैव श्रुतेन । न दृष्ट्वा नतरां पुरः स्थित्वा । प्रदुद्रुवुः भीताः पलायन्त । सत्वरं गमनं द्रवणम् । भयेन धावनं प्रद्रवणम् । स्वैरं स्वेच्छया । स्वस्य ईरः इच्छा प्रेरणं वा यथा भवति तथा । 'स्वादीरेरिण्योर्वृद्धिर्वक्तव्या' इति वार्तिकम् (अ.सू.६.१.८९) । न तत्र जीविताशेति ज्ञात्वाऽपि तेन वैरकरणं मौर्ख्यस्य परा काष्ठेत्यर्थः । तच्च रावणेन सह विरोधस्यासम्भवात्, अनर्थसम्भवाच्चाप्रायोगिकत्वं च अनु सहैव चिन्त्यताम् । 'अनु हीने सहार्थे च' इति मेदिनी । एतत्सङ्कटनिवारणानुकूलं च किमपि चिन्त्यताम् । रावणवैरमन्तरा कथं यज्ञरक्षा स्यादिति ॥ १८ ॥

**गोब्राह्मणार्त्थं देहोऽयं धार्य्यते क्षत्त्रबन्धुना[2] ।**
**तस्माद् यावन्मम प्राणास्तावद् योत्स्यामि वो[3] रिपून् ॥ १९ ॥**

**(भा.दी.)**तर्हि जीवनेच्छुना त्वयाऽपि नाऽगम्यते किम्? नेत्याह– **गोब्राह्मणे**ति । यतः क्षत्त्रबन्धुना क्षत्त्रियेण, गावश्च ब्राह्मणाश्च तदर्थम्, गोब्राह्मणानां रक्षणार्थमित्यर्थः, अयं देहः धार्यते । धृञ् धारणे लट् । तस्मात् कारणात् मम यावत् यावत्कालपर्यन्तं प्राणाः सन्ति तावत् तावत्पर्यन्तं ते रिपून् राक्षसान् प्रति योत्स्यामि । युध सम्प्रहारे लृट् ॥ १९ ॥

**(सं.चं.)** गोब्राह्मणरक्षार्थम् । क्षत्रबन्धुना । क्षत्रयोनौ जातमात्रेण, क्षत्रियाधमेनापि । योत्स्यामि वो रिपून् । अकर्मको युधिः । आत्मनेभाषश्च । 'प्रति' इत्यध्याहारेण रिपून् प्रति योत्स्यामीति सकर्मकत्वं कथञ्चिद् योजयन्ति । मोदतीतिवत् युद्ध्यतीति बहुलं प्रयोगादुभयपदित्वविवक्षया परस्मैपदत्वमपि सङ्गमनीयम् ॥१९॥

---

१. **'याम तेन तत्रानुचिन्त्यताम्'** । **'यामस्तेन तत्रैव चिन्त्यताम्'** इति च कचित् । २. **'क्षत्रबन्धुना क्षत्रियाभासेन मया'** इति का.श्री. ।
३. **'ते रिपून्'** इति वि.ती.पाठः ।

**इति तद्वचनाज्येन प्राज्वलत् तापसानलः ।**
**निशाचरापराधाख्यैः शुष्कवृक्षैः पुरा ज्वलन् ॥ २० ॥**

**(भा.दी.)** **इतीति** । निशायां रात्रौ चरन्तीति निशाचराः राक्षसास्तेषां येऽपराधास्त इति आख्या नाम येषां ते तथोक्तास्तैः, शुष्कवृक्षैः नीरसवृक्षैः, पुरा पूर्वमेव ज्वलन् तापसो मुनिरेवाग्निः, विश्वामित्राख्याग्निरित्यर्थः, इति एवमादि तस्य दशरथस्य यद्वचनं तदेव आज्यं तेन प्राज्वलत् प्रजज्वाल । ज्वल दीप्तौ लङ् । पूर्वं रक्षसां यज्ञविघ्नाद्यपराधेन क्रुद्धः पुनः स्ववाक्यप्रतिकूलवचनं श्रुत्वाऽत्यन्तं क्रुद्धोऽभूदिति भावः ॥ २० ॥

**(सं.चं.)** शुष्कैः वृक्षैः वृक्णैर्वृक्षखण्डैरिन्धनैः जज्वाल पुरा । इदानीमाज्यसिक्तः प्रजज्वाल ॥ २० ॥

**कोपाटोपं मुनेर्वीक्ष्य वसिष्ठो नृपमब्रवीत् ।**
**प्रतिश्रुतं त्वया राजन् कुर्य्यामिष्टमिति ध्रुवम् ॥ २१ ॥**

**(भा.दी.)** **कोपेति** । वसिष्ठः मुनेः विश्वामित्रस्य कोपस्य आटोपः सम्भ्रमस्तं वीक्ष्य, नृपं दशरथं प्रति, हे राजन् दशरथ, त्वया इष्टं मुन्यभीष्टं तत् कुर्याम् करवाणि, कृञो लिङ्, इति ध्रुवं निश्चितं यथा भवति तथा प्रतिश्रुतम्, इति अब्रवीत् । ब्रुवो लङ् ॥ २१ ॥

**(सं.चं.)** कोपस्याऽटोप आवेगः । औत्कट्यम् । यत् तवेष्टं तद् ध्रुवमविशङ्कितं कुर्यामिति त्वया प्रति-ज्ञातम् । नतु यदि शक्यं तर्हि कुर्यामिति । मा स्म प्रतिश्रुत्य वितथवचनो भवः ॥ २१ ॥

**अभ्यागताय[१] विप्राय श्रोत्रियाय यियक्षवे ।**
**वैष्णवाय प्रतिश्रुत्य नाकर्त्तुं राघवार्हसि ॥ २२ ॥**

**(भा.दी.)** ततः किमित्यत आह– **अभीति** । राघव दशरथ, अभ्यागताय सम्प्राप्ताय, विप्राय ब्राह्मणाय, श्रोत्रियाय वेदाध्ययनशीलाय, यियक्षवे यष्टुकामाय, वैष्णवाय विष्णुभक्ताय विश्वामित्राय । प्रतिज्ञातार्थस्यावश्यं करणीयत्वे हेतुगर्भानीमानि विशेषणानि । प्रतिश्रुत्य त्वदभीष्टं करवाणीति प्रतिज्ञाय, अकर्तुं नार्हसि न योग्योऽसि । अर्ह पूजायां लट् ॥ २२ ॥

१. **'एकैकमपि विशेषणमकरणे प्रत्यवायापादकमिति ज्ञेयम्'** इति का.श्री. ।

**(सं.चं.)** अभ्यागताय यस्मैकस्मैचन प्रतिश्रुत्याकरणमेव दोषः। किमुत विप्राय। किमुत तेष्वपि श्रोत्रियाय। अथ किमुत यियक्षवे। उत्तरोत्तरमधिकाधिको दोषः। सर्वेषां शिखरायितं पुनर्वैष्णवत्वम्। विश्वामित्रे पुनरेतेषां सर्वेषां महागुणानामेकत्र समवायः। तस्मात् करोमीति प्रतिज्ञायाकर्तुं नार्हसि ॥ २२ ॥

**महिमा हि महानस्य त्वत्पुत्रस्यास्ति संवृतः।**
**येनायं कुपितो लोकान्निर्दहेच्च[1] चतुर्दश ॥ २३ ॥**

**(भा.दी.)** अयुक्तेऽनेनार्थिते सति कथं कुर्यामित्यतस्त्वत्पुत्रस्य राक्षसहनने महासामर्थ्यमस्तीत्यतोऽनेनायुक्तं नाभिहितमिति भावेनाऽह– **महिमे**ति। त्वत्पुत्रस्य अस्य श्रीरामस्य महान् महिमा संवृतः गूढः सन् अस्ति हि। अस्तेर्लट्। महत्त्वमेव दर्शयति– **येने**ति। येन महिम्ना अयं श्रीरामः कुपितः सन् क्रुद्धः सन्, चत्वार अधिका दश चतुर्दश, (तान्) लोकान् निर्दहेत्। दह भस्मीकरणे लिङ् ॥ २३ ॥

**(सं.चं.)** संवृतः पिहितः। चतुर्दश लोकानपि निर्दहेत्। हीति ज्ञानिलोकप्रसिद्धमेतदित्याह ॥ २३ ॥

**विश्वामित्रोऽपि तेजस्वी नारायणपरायणः।**
**समर्थस्यापि ते सूनोः सहायत्वं गमिष्यति ॥ २४ ॥**

**(भा.दी.)** विश्वामित्रमहिमानमप्याह– **विश्वे**ति। नारायण एव परं केवलमयनमाश्रयो यस्य स तथोक्तः, अत एव तेजः पराभिभवलक्षणसामर्थ्यमस्यास्तीति तेजस्वी, ब्रह्मवर्चस्वीति वा, विश्वामित्रोऽपि राक्षसहनने समर्थस्यापि ते सूनोः श्रीरामस्य सहायत्वं गमिष्यति। गम्लृ गतौ लृट् ॥ २४ ॥

**(सं.चं.)** विश्वामित्रोऽपि तेजस्वी। क्षात्रं ब्राह्मं चेत्युभयमपि तेजस्तस्मिन् हि सम्भृतम्। नारायणे परायणः तत्परः। नारायणः परायणं परमाश्रयो यस्येति च। नारायणपराणामप्ययमयनः। वैष्णवाग्रणीः। 'परायणमभिप्रेते तत्परे परमाश्रये' इति यादवप्रकाशः। नारायणः परायणः सर्ववेदार्थत्वेनाभिप्रेतो यस्येति वा। यज्ञरक्षकतयाऽभिमतो वा। सहायत्वं महिमाभिव्यक्तावुपकरणत्वम् ॥ २४ ॥

**जयासुप्रभयोः पूर्वं जातं यद् दक्षकन्ययोः।**
**तदस्त्रशतकं वेद सोऽन्यच्चाग्रे महारथः[1] ॥ २५ ॥**

---

१. **'निर्दहेच्च भस्मीकुर्यादेव'** इति का.श्री.।

१. **'महीसुरः'। 'महारथः–'आत्मानं सारथिं चाश्वान् रक्षन् युध्यति यो नरः। महारथ इति ज्ञेयः' इत्युक्तलक्षणः'** इति का.श्री.।

**(भा.दी.)** अनस्त्रज्ञः कथं युद्धसाहाय्यं करिष्यतीत्यत आह– **जये**ति । अग्रं पूर्वं तस्मिन्, विश्वामित्रस्य क्षत्रियत्वावस्थायामित्यर्थः, महान् रथो यस्य स तथोक्तः सः विश्वामित्रः, दक्षकन्ययोः दक्षप्रजेश्वरस्य पुत्र्योः, जया च सुप्रभा च तयोः, जयासुप्रभाख्ययोरित्यर्थः, यत् अस्त्राणां शतकं पूर्वं जातमुत्पन्नं तद् वेद जानाति । विद ज्ञाने लट् । अन्यच्च अस्त्रजातं वेदेति सम्बन्धः । दक्षकन्ययोः जयासुप्रभयोः अस्त्रशतकमुत्पन्नं तच्चायं विश्वामित्रो वेदेति रामायणे प्रसिद्धम् ॥ २५ ॥

**(सं.चं.)** ब्रह्मर्षित्वादग्रे पूर्वं स किल महारथः क्षत्रिय आस । जयासुप्रभयोरिति । 'जया च सुप्रभा चैव दक्षकन्ये सुमध्यमे । ते सुवातेऽस्त्रशस्त्राणि शतं परमभास्वरम् । पञ्चाशतं सुतान् लेभे जया नाम परान् पुरा । वधायासुरसैन्यानाममेयान् कामरूपिणः । सुप्रभाऽजनयच्चापि पुत्रान् पञ्चाशतं पुनः । संहारान् नाम दुर्धर्षान् दुराक्रामान् बलीयसः । तानि चास्त्राणि वेत्त्येष यथावत् कुशिकात्मजः । अपूर्वाणां च जनने शक्तो भूयः स धर्मवित्' (२१.१५–८) इति वाल्मीकीये । अन्यच्चापूर्वमस्त्रजातम् ॥ २५ ॥

**तस्माद् रामेण राजेन्द्र गन्तव्यं मुनिना सह ।**
**हन्तव्यं राक्षसकुलं[१] त्रातव्यं यज्ञकर्म्म तत् ॥ २६ ॥**

**(भा.दी.)** **तस्मा**दिति । हे राजेन्द्र दशरथ, तस्मात् श्रीरामस्यातिसमर्थत्वाद् विश्वामित्रसाहाय्याच्च श्रीरामेण मुनिना विश्वामित्रेण सह गन्तव्यम् । राक्षसकुलं राक्षससमूहः हन्तव्यम् । तत् विश्वामित्रसम्बन्धि यज्ञकर्म त्रातव्यं रक्षणीयम् ॥ २६ ॥

**(सं.चं.)** तस्मात् विश्वामित्रस्य नारायणपरायणत्वात्, रामस्य च नारायणत्वादित्यान्तरो हेतुः । त्वत्प्रतिज्ञातस्य कर्तव्यत्वात्, रामस्य समर्थत्वात्, अस्त्रशतकज्ञस्य विश्वामित्रस्य तत्सहायत्वाच्चेति बाह्यः । गन्तव्यम्, गत्वा च हन्तव्यम्, हत्वा च त्रातव्यं यज्ञकर्म । तत् विश्वामित्रेण चिकीर्षितम् ॥ २६ ॥

**वासिष्ठं वाक्यमाकर्ण्य राघवो रामलक्ष्मणौ ।**
**प्रेषयामास सुप्रीतः कौशिकाय समर्प्पयन् ॥ २७ ॥**

**(भा.दी.)** **वासिष्ठमि**ति । राघवः दशरथः, वसिष्ठेन प्रोक्तं वासिष्ठं तत् वाक्यं आकर्ण्य सुप्रीतः सन्, रामलक्ष्मणौ, कुशिकस्य कुशिकनाम्नो राज्ञो गोत्रे भवः कौशिकः, तस्मै समर्पयन् सन्, त्वदीयाविति तद्वशे ददत् सन् प्रेषयामास । ईष गतिहिंसादर्शनेष्वित्यस्माल्लिट्[२] ॥ २७ ॥

१. **'राक्षसबलम्'**

२. **'अप्रेषयत्'** इत्यादिप्रयोगदर्शनात् **'प्रेषृ गतौ'** इति च स्यात् ।

**(सं.चं.)** वसिष्ठवाक्यमाकर्ण्य जातविस्रम्भः, पूर्वं भीतः सम्प्रति सुप्रीतः संहृष्टः । समर्पयन् प्रेषयामास । प्रेषणाय समर्पयामासेत्यर्थः ॥ २७ ॥

**दोर्दण्डार्प्पितकोदण्डौ शुभालापौ कलापिनौ ।**
**किशोरावपि शूरौ तौ सुस्मितौ मुनिमीयतुः ॥ २८ ॥**

**(भा.दी.)** श्रीरामलक्ष्मणयोः विश्वामित्रेण सह गमनं वर्णयति– **दोरि**ति । दोषोर्हस्तयोर्दण्डौ[१] तयोरर्पिते निक्षिप्ते कोदण्डे धनुषी याभ्यां तौ तथोक्तौ, शुभः आलापः परस्परभाषणं ययोस्तौ तथोक्तौ, 'आलापो भाषणं मिथः' इत्यमरः, कलापौ इषुधी अनयोः स्त इति तथोक्तौ, किशोरावपि किशोरवयस्कावपि, नववर्षादारभ्य षोडशवर्षपर्यन्तं किशोरवय इत्युच्यते, शूरौ पराक्रमिणौ, सु शोभनं स्मितं ययोस्ताविति तथोक्तौ, तौ रामलक्ष्मणौ मुनिं विश्वामित्रं ईयतुः अनुजग्मतुः । इण् गतौ लिट् ॥ २८ ॥

**(सं.चं.)** मधुरालापौ । 'कार्मुकं तु चतुर्हस्तं कोदण्डं त्र्यङ्गुलं विना' इति यादवप्रकाशः । अत्र तु धनुःसामान्यवचनम् । कोदण्डं बाणसापेक्षमिति कलापिनावित्याह । अंसपृष्ठे निषङ्गिणौ । 'बाणाश्रयः कलापः' इत्यभिधानम् । अथच कलापिनौ कट्यां काञ्चीदामविभूषितौ । 'कलापः संहतौ बर्हे काञ्च्यां भूषण-तूणयोः' इति मेदिनी । अथच कलापो भूषणम् । कलापिनौ भूषणैरलङ्कृतौ । 'धनुष्पाणी स्वलङ्कृतौ' इति वाल्मीकीये । किशोरौ परिचतुर्दशौ । आषोडशं कैशोरमाहुः । 'ऊनषोडशवर्षो मे रामो राजीवलोचनः' (२०.२) इति च । अप्राप्तयौवनावपि शूरौ । सु सहजम्, नत्वाहितम्, अकृत्रिमं स्मितम् । 'ईषच्च हसितं स्मितम्' इत्यभिधानम् ॥ २८ ॥

**मुमुदुस्तौ प्रजाः प्रेक्ष्य[२] विश्वामित्रानुयायिनौ ।**
**वागीशमनुगच्छन्ताविन्द्राविष्णूइवामरौ[३] ॥ २९ ॥**

**(भा.दी.)** **मुमुदु**रिति । प्रजाः, विश्वामित्रं अनुयातुं अनुगन्तुं शीलमनयोरस्तीति तथौक्तौ तौ श्रीराम-लक्ष्मणौ । वागीशं बृहस्पतिं अनुगच्छन्तौ (अमरौ) देवौ इन्द्रश्च विष्णुश्च ताविव । 'देवताद्वन्द्वे च' (अ.सू.६.३.२६) इत्यानङ् । प्रेक्ष्य मुमुदुः । मुद हर्षे लट् ॥ २९ ॥

---

१. **'दोषौ भुजौ दण्डाविव'** इति का. श्री. । २. **'प्रजा वीक्ष्य'** ३. **'इवामलौ'**

**(सं.चं.)** प्रजा आयोध्यकाः। मुमुदुः। आत्मनेभाषमपि मोदतिं परस्मैभाषं बहुलं भाषन्ते कवयः। विश्वामित्रानुयायिनावपि तत उत्तमौ स्वरूपतः। तदेतद् दृष्टान्तेनावगमयति– वागीशमिति। स्वतोऽवरं वागीशं बृहस्पतिं देवगुरुत्वेनोपाधिनाऽनुगच्छान्ताविन्द्राविष्णूइव ॥ २९ ॥

**अद्ध्यर्द्धयोजनाध्वानं गत्वा गतिविदां वरः।**
**सरय्वा उत्तरे तीरे केशवं कौशिकोऽब्रवीत् ॥ ३० ॥**

**(भा.दी.) अधी**ति। गतिं मोक्षोपायं विदन्तीति गतिविदस्तेषां मध्ये, 'दशोपायगमे गतिः' इति वैजयन्ती, वरः श्रेष्ठः कौशिकः विश्वामित्रः। अधिकमर्द्धं यस्य तदध्यर्द्धम्, अध्यर्द्धं योजनं यस्य स तथोक्तः, स चासौ अध्वा च तं गत्वा, सरय्वाः सरयूनद्याः उत्तरं उत्तरदिक्स्थं तस्मिन् तीरे। प्रशस्ताः केशाः अस्य सन्तीति केशवस्तम्, 'केशाद्वोऽन्यतरस्याम्' (अ.सू.५.२.१०९) इति मत्वर्थे वः, श्रीरामं प्रत्यब्रवीत्। ब्रुवो लङ् ॥ ३० ॥

**(सं.चं.)** अर्धमधिकं यस्मिन् तदध्यर्धं योजनं यस्य तावन्तमध्वानं गत्वा। दुर्गमेऽपि बन्धुरेऽपि काननपथे सलीलं गच्छतीति गतिविदां वरः। सरय्वा उत्तरे तीरे। ननु रामायणेऽन्यथा पठ्यते– 'अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे। रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत' इति। युक्तं चैतत्। सरय्वा दक्षभागे ह्ययोध्या भवति। तथाहि मानसाचलकन्दराद् दक्षिणामभि दिशं सरन्ती सरयूर्गङ्गासङ्गता पूर्वां दिशमभिगच्छति। गङ्गासङ्गमात् पूर्वं दक्षिणवाहिन्याः सरय्वाः दक्षभागे गोमत्याः पूर्वतः पश्चिमतश्च सरय्वा अयोध्या प्रतिष्ठिता। तत् किमिदमुच्यते 'सरय्वा उत्तरे तीरे' इति? मुनेः प्रयाणपथापेक्षया उत्तरदिगवच्छिन्ने देश इत्यर्थः। स हि सरयूतीर एव उत्तरस्या दिशः दक्षिणाभिमुखं ययौ यावद् गङ्गासरयूसङ्गमनम्। 'सरय्वा दक्षिणे तीरे' इत्येव स्यादपि मूलपाठः। कथं सरयूः? मानसाचलकन्दरात् सरतीति। 'सर्तेरयूः' इति भोजकातन्त्रौ। 'सर्तेरयुः' इति तु दशपादिका। केशवं केशवावतारं प्रशस्तकेशवन्तं च रामम्। कौशिकः कुशिकपौत्रः। कुशिकस्य गाधिस्तनयः। गाधेर्विश्वामित्रः ॥ ३० ॥

**तात मन्त्रौ प्रवक्ष्यामि बलामतिबलामपि।**
**क्षुत्पिपासादिशमनौ ब्रह्मोक्तौ सर्वकामदौ ॥ ३१ ॥**

**(भा.दी.) तात**ेति। हे तात श्रीराम, क्षुत् क्षुधा सा च पिपासा पानेच्छा सा च ते आदी येषां श्रमादीनां ते तथोक्तास्तेषां शमनं शान्तिर्याभ्यां तौ तथोक्तौ, ब्रह्मणा उक्तौ उपदिष्टौ, सर्वे ये कामा अभीप्सितपदार्थाः

तान् दत्त इति तथोक्तौ, बलां बलाख्यां अतिबलामपि अतिबलाख्यामपि मन्त्रौ, ऋग्रूपमन्त्रौ प्रवक्ष्यामि उपदेक्ष्यामि । वच परिभाषणे लृट् ॥ ३१ ॥

**(सं.चं.)** तातेत्यनुकम्पामृदु सम्बोधनम् । 'तातोऽनुकम्प्ये जनके' इति मेदिनी । मन्त्रौ प्रवक्ष्यामीति । तथाहि वाल्मीकिः– 'मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा' (२२.१३) इति, 'बला त्वतिबला चैव सर्वज्ञानस्य मातरौ । क्षुत्पिपासे न ते राम भविष्येते नरोत्तम' (२२.१७–८) इति, 'पितामहसुते ह्येते विद्ये तेजःसमन्विते' (२२.१९) इति च । 'सर्वकामस्य मातरौ' इत्यपि ग्रन्थकृत्सम्मतो रामायणपाठः स्यात् । क्षुत्पिपासादिशमनौ । आदिपदेन श्रमज्वरादि । 'न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः' (२२.१३) इति च ॥ ३१ ॥

**इति ब्रुवाणाद् विप्रेन्द्रान्मन्त्रौ शुश्राव राघवः[१] ।**
**सर्वज्ञः पूर्णकामोऽपि शिष्टाचारानुशिक्षकः ॥ ३२ ॥**

**(भा.दी.) इती**ति । सर्वं जानातीति सर्वज्ञः राघवः श्रीरामः, पूर्णः कामो मनोरथो यस्य स तथाऽपि, शिष्टानां सत्पुरुषाणां य आचारः गुरुवचनानुपालनादिः तदनुशिक्षयतीति तथोक्तः, तथा सन् इति एवमादि वचः ब्रुवाणात् वदतः (विप्रेन्द्रात्) मुनीन्द्रात् विश्वामित्रात् मन्त्रौ प्रागुक्तमन्त्रौ शुश्राव। श्रु श्रवणे लिट् । सर्वज्ञत्वेनाज्ञातमन्त्रादेरभावेऽपि परिपूर्णमनोरथत्वेन मन्त्रलभ्यप्रयोजनाभावेऽपि शिष्येण सता गुरूपदिष्टेन भाव्यमिति लोकशिक्षार्थं मुनेर्मन्त्रौ जग्राहेति भावः ॥ ३२ ॥

**(सं.चं.)** 'शुश्राव माधवः' इति पाठे माः प्रमाः प्रमाणवचनानि च । मानां धवो माधवः । न विद्यतेऽन्यो धवोऽस्येति च । सर्वज्ञोऽपि सर्वेश्वरोऽपि विप्रेन्द्राच्छुश्राव । पूर्णकामोऽपि सर्वकामदौ शुश्राव । कुतः? शिष्टाचारानुशिक्षणाय । शिष्टचारस्येत्थम्भावशिक्षणमनुशिक्षणम् । 'अनु हीने सहार्थे च पश्चात्सादृश्ययोरपि । लक्षणेत्थम्भूताख्यानभागवीप्सास्वनुक्रमे' इति मेदिनी । पुनःपुनः शिक्षणं वाऽनुशिक्षणम् ॥ ३२ ॥

**मुनिना लाळितौ कामं नरदेवकुमारकौ ।**
**निशां तां सरयूतीरे रेमाते रामलक्ष्मणौ ॥ ३३ ॥**

**(भा.दी.) मुनिने**ति । मुनिना विश्वामित्रेण लाळितौ मानितौ, नरदेवस्य राज्ञो दशरथस्य कुमारकौ बालकौ श्रीरामलक्ष्मणौ तां निशाम्, तस्यां रात्र्यामित्यर्थः, सरय्वाः तीरं तटं तस्मिन् कामः इच्छा यथा भवति तथा कामं रेमाते । रमु क्रीडायां लिट् ॥ ३३ ॥

---

१. 'शुश्राव माधवः'

**(सं.चं.)** तां प्रथमां निशां सरयूतीरे तृणशयने सुप्तावपि रेमाते ॥ ३३ ॥

**सान्ध्यं कृत्यं ततः कृत्वा प्रभाते सुप्रभा ययुः ।**
**आश्रमं सरयूगङ्गासङ्गमेऽनङ्गवल्लभम् ॥ ३४ ॥**

**(भा.दी.) सान्ध्यमि**ति । शोभना प्रभा येषां ते सुप्रभाः, श्रीरामाद्याः, प्रभाते प्रभातः कालस्तस्मिन्, सन्ध्यायाः सम्बन्धि सान्ध्यम्, प्रातःसन्ध्यायां कर्तव्यमित्यर्थः, कृत्यं कर्म तत् कृत्वा । ततः सरयूतीरात् सरयूश्च गङ्गा च तयोः सङ्गमः समागमः तस्मिन् स्थितमिति शेषः । अनङ्गस्य कामस्य वल्लभः प्रियस्तम्, आश्रमं मुनिस्थानम् । 'आश्रमोऽस्त्री मुनिस्थाने ब्रह्मचर्यादिके मठे' इति वैजयन्ती । ययुः । यातेर्लिट् ॥३४॥

**(सं.चं.)** ततः प्रभाते सान्ध्यं कृत्यं कृत्वा, तीर एव दक्षिणाभिमुखमागत्य सायं सरयूगङ्गासङ्गमे स्थितं कामदेवाश्रमं ययुः ॥ ३४ ॥

**यत्र हैमवतीकान्तलोचनानलजिह्वया ।**
**अनङ्गोऽनङ्गतां प्राप्तस्तां रात्रिं तत्र तेऽवसन् ॥ ३५ ॥**

**(भा.दी.) यत्रे**ति । यत्र यस्मिन् आश्रमे अनङ्गः कामः, हिमवतोऽपत्यं स्त्री हैमवती गौरी, तस्याः कान्तो भर्ता रुद्रस्तस्य लोचनं तृतीयनेत्रं तस्य योऽग्निस्तस्य जिह्वा ज्वाला तया, 'जिह्वा वाग्रसनार्चिषु' इति वैजन्यती, न विद्यतेऽङ्गं शरीरं यस्यासावनङ्गस्तस्य भावस्तत्ता ताम्, भस्मीभावमित्यर्थः, प्राप्तः तत्राऽश्रमे, ते श्रीरामाद्याः तां रात्रिं तस्यां रात्र्याम्, अकर्मकधातुभिर्योगे देशकालस्वभावेभ्यो वा द्वितीयेति केचिदिति वचनादधिकरणे द्वितीया, अवसन् । वसेर्लङ् ॥ ३५ ॥

**(सं.चं.)** अत्रैव मदनो हरनेत्रदहनदग्धोऽनङ्गतामापेत्याह– यत्रेति । हैमवत्या उमायाः कान्तो हरः । तस्य लोचनानलस्य जिह्वया ज्वालया । अनलं हि सप्तजिह्वमाहुः । पूर्वमनङ्ग इति निरूढनामा सम्प्रत्यन्वर्थामनङ्गतां प्राप्तः । न विद्यतेऽङ्गं शरीरमस्येति । ननु सर्वाण्यपि रूढपदानि मूलतो योगवन्ति भवन्ति । सत्यमासीदेव योगार्थः पूर्वमपि नास्त्यङ्गमस्येति । अथापि न रूढार्थेन सम्बन्धः । अङ्गवन्तमेव ह्यनङ्गमाहुः, अदृश्याङ्गः सन् यूनः पीडयतीति । सम्प्रति वस्तुतोऽनङ्गो बभूवेति । अथच अनङ्गमिति मन उच्यते । 'अनङ्गो मदनेऽनङ्गमाकाशमनसोरपि' इति मेदिनी । तेनानङ्गं मनोऽस्य सदनमित्यनङ्गः । मनसिज इत्यर्थः । पूर्वं मनोजत्वादेनमनङ्गमाचक्षत । सम्प्रति त्वङ्गविरहादप्यनङ्गो बभूवेति ॥ ३५ ॥

**कौतूहलेन महता महामुनिगणा हरिम् ।**
**अर्चयाञ्चक्रिरे तत्र रामनामानमागतम् ॥ ३६ ॥**

**(भा.दी.) कौतूहलेने**ति । तत्राऽश्रमे महान्तो ये मुनयस्तेषां गणाः, आगतम्, राम इति नाम यस्य स तथा तम्, श्रीहरिम्, महता कौतूहलं कौतुकं तेन अर्चयाञ्चक्रिरे पूजितवन्तः । अर्च पूजायां लिट् ॥ ३६ ॥

**(सं.चं.)** महता भगवद्दर्शनजनितेनादम्येन कौतूहलेन आनन्दगर्भेण विस्मयेन । यद्दर्शनार्थं जन्मसुजन्मसु तपः क्रियते स इदानीं पुर आस्त इति ॥ ३६ ॥

**मुनयो विनयोपेताः पश्यन्तो राघवाननम् ।**
**[1]सुप्रातं न इति प्रीताः सन्ध्योपास्तिं प्रचक्रिरे ॥ ३७ ॥**

**(भा.दी.) मुनय** इति । विनयः प्रश्रयस्तेन उपेताः, राघवस्य यदाननं तत् पश्यन्तः मुनयः, नः अस्माकं एतद्दिनं सुप्रातं शोभनं प्रातः यस्य तत् तथोक्तम् । 'सुप्रात-सुश्व-सुदिव-शारिकुक्ष-चतुरश्र-एणीपद-अजपद-प्रोष्ठपदाः' (अ.सू.५.४.१२०) इति सूत्रे बहुव्रीहौ अच्प्रत्ययान्तत्वेन निपातनान्नपुंसकलिङ्गोऽयं शब्दः । इति प्रीताः सन्तः । सन्ध्याया उपास्तिरुपासनं तां प्रचक्रिरे । कृञो लिट् ॥ ३७ ॥

**(सं.चं.)** स्वभावतो विनयोपेताः । विशेषतो महामुनिना सह महापुरुषदर्शनेन । सुप्रातं न इति प्रीताः । राघवसमागमहेतुरिदं दिनं सुप्रातम्, दिवसः सुप्रातः, शोभनं प्रातरस्येति बहुव्रीह्यन्तोऽच् प्रत्ययः । 'सुप्रातादयो बहुव्रीहिसमासा अच्प्रत्ययान्ता निपात्यन्ते । अन्यदपि च टिलोपादिकं निपातनादेव सिद्धम् । शोभनं प्रातरस्य सुप्रातः । शोभनं श्वोऽस्य सुश्वः । शोभनं दिवाऽस्य सुदिवः' इति काशिका । प्रचक्रिरे । भगवत्पुरतः क्रियमाणा सन्ध्योपास्तिरियमिति प्रकर्षः ॥ ३७ ॥

**उपस्थितामुपारुह्य[2] नावं नरवरात्मजौ ।**
**सविप्रौ तेरतुर्गङ्गां सस्वनां सरयूजलैः ॥ ३८ ॥**

**(भा.दी.) उपे**ति । सविप्रौ विप्रेण विश्वामित्रेण सहितौ, नरवरस्य राज्ञः आत्मजौ पुत्रौ श्रीरामलक्ष्मणौ, उपस्थितां समीपस्थां नावं समारुँह्य, सरय्वाः जलानि तैः सस्वनां स्वनेन ध्वनिना सहिताम्, सरयूसङ्गतामित्यर्थः, गङ्गां तेरतुः तरणं चक्रुः । तॄ प्लवनतरणयोः लिट् ॥ ३८ ॥

---

१. **'सुप्रभातमिति प्रीताः'** । **'सुभातं न इति प्रीताः' 'सुप्रातर्न इति प्रीताः'** इति च । २. **'उपस्थितां समारुह्य'** इति वि.ती.पाठः स्यात् ।

**(सं.चं.)** मुनिभिः सराजपुत्रस्य विश्वामित्रस्योपयोगाय सज्जितां पुरःस्थितां नावम् । मुनिभिरुपचरित-योरारोहणमुपारोहणम् । सरयूजलैरुत्तरतः सङ्गताम् । अत एव जलसम्प्लवेन सस्वनां गर्जन्तीम् । तथाहि वाल्मीकीये– 'कैलासपर्वते राम मनसा निर्मितं सरः । ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः । तस्मात् सुस्राव सरसः साऽयोध्यामुपगूहते । सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता । तस्यायमतुलः शब्दो जाह्नवीमभि-वर्तते । वारिसङ्क्षोभजो राम प्रणामं नियतः कुरु' (२४.८–१०) इति ॥ ३८ ॥

**वनं दृष्ट्वा ततो घोरं गच्छन् पप्रच्छ राघवः ।**
**मुनिशार्दूल कस्येदं वनं घोरमहो इति ॥ ३९ ॥**

**(भा.दी.)** **वनमिति** । ततः गङ्गातरणानन्तरं गच्छन् राघवः, घोरं भयङ्करं तत् वनं दृष्ट्वा, हे मुनिशार्दूल मुनिश्रेष्ठ, 'स्युरुत्तमपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः' इत्यमरः, विश्वामित्र, घोरं इदं वनं कस्य सम्बन्धि? अहो अद्भुतम् । इति एवमादि पप्रच्छ । प्रच्छ जिज्ञासायां लिट् ॥ ३९ ॥

**(सं.चं.)** गङ्गाया दक्षिणतीरे घोरं वनम् । श्वापदै रक्षोभिरभ्रङ्कषैर्वृक्षैश्च । कस्येदम्? केन रक्षितम्? केन वाऽधिष्ठितम्? अहो इति । घोरमिति न बिभाय । किन्तु कैशोरसहजं विस्मयं दर्शयामास ॥ ३९ ॥

**इत्युक्तः प्रोक्तवान् विप्रो रामैते विषयाः पुरा ।**
**मलदाश्च करूशाश्च स्फीता इन्द्रप्रसादतः ॥ ४० ॥**

**(भा.दी.)** ताटकावनमिति वक्तुमितिहासमाह– **इतीति** । इति श्रीरामेणोक्तः विप्रः विश्वामित्रः प्रोक्त-वान् । हे राम, पुरा इन्द्रस्य प्रसादोऽनुग्रहस्तस्मादिति ततः, स्फीताः पुष्टाः एते विषयाः मलदाश्च मलद-नामकाश्च करूशाश्च करूशनामकाश्च । इन्द्रेण वृत्रवधे कृते सति तन्निमित्तकमलस्यास्मिन् देशे मुनिभिर्देवैश्च कलशस्नापनपूर्वकं मार्जितत्वात् सन्तुष्टेनेन्द्रेण 'इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः । मलदाश्च करूशाश्च ममाङ्गमलधारिणौ' इति वरो दत्त इति रामायणे प्रसिद्धम् ॥ ४० ॥

**(सं.चं.)** विषया ग्रामाणां समुदायाः । 'विषयो ग्रामसञ्चयः' इत्यभिधानम् । स्फीता धनधान्यसमृद्धाः । स्फायी वृद्धौ । मलदाश्च करूशाश्च । इयमत्र रामायणे कथा– पुरा किल वृत्रं जघान सहस्राक्षः । तेन वृत्रहत्यामलेन करूशाख्यया क्षुधा चाऽविष्टं तं देवा ऋषयश्चात्र स्नापयामासुः । स्नापयित्वा चास्य मलं प्रामोचयन् । अकुर्वंश्च निष्करूशम् । निर्मलो निष्करूशः कृत इन्द्रः प्रीत इदमाह– 'इमौ जनपदौ स्फीतौ

ख्यातिं लोके गमिष्यतः । मलदाश्च करूशाश्च ममाङ्गमलधारिणौ' (२४.२२) इति । दत्तस्य मलस्याऽदानान्मलदाः । मलस्य खण्डनाद् वा । दो अवखण्डने । करूशमेषामासीदिति करूशाः कारूशा वा । 'यूष–शूष–अर्कलूष–कारूष–कोरदूष–आटरूष–शैलूषादयः' इत्यूषन् प्रत्ययान्तं कारूषशब्दं निपातयन् सरस्वतीकण्ठाभरणकारो बभ्राम । कथं तर्हि करूशम्? यत्प्रशमाय नराः करांसि कर्माणि उशन्ति चिकीर्षन्ति तत् करूशं बुभुक्षा । पुराऽयं करूशदेशः । रामायणकाले ताटकावनम् । पुनः पाण्डवानां काले करूशो देशो बभूव, यं दन्तवक्रो शशास, यं पुनरतः कारूशमुशन्ति ॥ ४० ॥

**सुकेतुनाम्नो यक्षस्य ताटका तनया पुरा ।**
**अवद्ध्या ब्रह्मवरतो नागायुतबलाऽभवत् ॥ ४१ ॥**

**(भा.दी.) सुकेतुरिति** । सुकेतुरिति नाम यस्य स तथोक्तस्तस्य (यक्षस्य) तनया । ब्रह्मणो यो वरस्तस्मादिति ततः अवध्या वधानर्हा । नागानां गजानां यदयुतं दशसहस्रं तस्य बलमिव बलं यस्याः सा तथोक्ता, ताटका ताटकानाम्नी यक्षिणी पुरा अभवत् । भुवो लङ् ॥ ४१ ॥

**(सं.चं.)** तानिमान् विषयान् ताटका नाशयामास । केयं ताटका नाम? आह– सुकेतुनाम्नः यक्षस्यानपत्यस्य ब्रह्मवरतस्ताटका तनया बभूव । सा च ब्रह्मवरत एव नागायुतबलाऽभवत् । 'ददौ नागसहस्रस्य बलं चास्याः पितामहः' ( २५.६)इति प्रचलितो रामायणपाठः । 'दशनागसहस्रस्य' इति ग्रन्थकृत्सम्मतः पाठ इति भाति । 'वराद् विधातुस्तदनन्यवध्याम्' इति निर्णयवचनाद् ब्रह्मवरत एवावध्या च ॥ ४१ ॥

**भार्य्या सुन्दस्य मारीचमाता साऽगस्त्यशापतः ।**
**रक्षस्त्वं ससुता प्राप्य नरानत्राति निर्दया[1] ॥ ४२ ॥**

**(भा.दी.) भार्येति** । सुन्दस्य सुन्दनाम्नो यक्षस्य भार्या, मारीचस्य मारीचनाम्नो यक्षस्य माता । सा ताटका । अगस्त्यस्य शापस्तस्मादिति ततः रक्षसो भावो रक्षस्त्वं तत्, सुतेन मारीचेन सहिता ससुता सती, प्राप्य (अत्र) अस्मिन् वने, निर्गता दया यस्याः सा तथा सती, नरान् अत्ति भक्षयति । अदेर्लट् । ताटकानाम्नी यक्षिणी दैवमोहिता सती अगस्त्यभक्षणार्थमुद्यता । तां दृष्ट्वाऽगस्त्येन राक्षसी भवेति शप्ता सती मारीचेन सह राक्षसी बभूवेति शापकारणं रामायणे प्रसिद्धम् ॥ ४२ ॥

१. 'नरानत्त्यतिनिर्दया'

**(सं.चं.)** अगस्त्यशापतः । 'सुन्दे तु निहते राम साऽगस्त्यं मुनिपुङ्गवम् । ताटका सह पुत्रेण प्रधर्षयितुमिच्छति । भक्षार्थं जातसंरम्भा गर्जन्ती साऽभ्यधावत । आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः । राक्षसत्वं भजस्वेति मारीचं व्याजहार सः । अगस्त्यः परमक्रुद्धस्ताटकामपि शप्तवान् । पुरुषादी महायक्षी विरूपा विकृतानना । इदं रूपं विहायाथ दारुणं रूपमस्तु ते' (२५.१०–१३) इति वाल्मीकिवचनम् ॥ ४२ ॥

**पश्य गोब्राह्मणगणकपालास्थिकलापकम् ।**
**त्वादृशानां सुदुर्दर्शं मान्य किं मन्यते भवान् ॥ ४३ ॥**

**(भा.दी.) पश्ये**ति । हे मान्य पूज्य श्रीराम, त्वमिव दृश्यन्त इति त्वादृशास्तेषां त्वादृशानामित्यर्थः, सुदुर्दर्शं अत्यन्तं द्रष्टुमनर्हम्, गावश्च ब्राह्मणाश्च तेषां गणः तस्य यानि कपालानि शिरःकपालानि अस्थीनि च तेषां कलापः समूहस्तं पश्य । दृशेर्लोट् । भवान् किं मन्यते निरूपयति । मन ज्ञाने लट् । किमत्र कर्तव्यं मन्यस इत्यर्थः । यद्वा भवान् मन्यते किं एतादृशताटकाकर्म मानयति किमिति वा योज्यम् ॥ ४३ ॥

**(सं.चं.)** कपालानि च, अन्यानि चास्थीनि । तेषां कलापको राशिः । 'शरीरस्यास्थि कङ्कालं तथा स्यादस्थिपञ्जरम् । शिरसोऽस्थि करोटिः स्यात् कपालं शकलं च तत्' इत्यभिधानम् । विशेषतो गोब्राह्मणगणस्य । 'गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम्' (२५.१५) इति हि वाल्मीकिः । त्वादृशानां सुखवर्धितानां किशोराणाम्, सुतरां सर्वात्मना दुर्दर्शम् । अथापि क्षत्रियत्वात् युध्यमानानामनिवार्यतया सुदर्शं च । मादृशानामृषीणामसह्यमिति कनैवाऽह कलापकमिति । बालत्वेऽपि मयाऽपि मान्य मानार्ह । किं सा द्रष्टव्येति मन्यते भवान् । अथ च तामन्तरेण किं मन्यते भवान्? किमीदृश्यपि जीवितुं योग्येति मन्यते भवान्? ॥ ४३ ॥

**उक्त्वेति मुनितां याते मुनौ मुनिजनप्रियः[१] ।**
**प्राविशत् सहितस्ताभ्यां ताटकाभवनं वनम् ॥ ४४ ॥**

**(भा.दी.) उक्त्वे**ति । मुनौ विश्वामित्रे इति एवमादि उक्त्वा मुनेर्भावो मुनिता ताम्, मौनमित्यर्थः, (याते) गते सति, ताभ्यां विश्वामित्रलक्ष्मणाभ्यां सहितः, मुनयश्च ते जनाश्च तेषां प्रियः श्रीरामः, ताटकाया भवनं गृहभूतं तत् वनं प्राविशत् । विश प्रवेशने लङ् ॥ ४४ ॥

---

१. 'मुनिगणप्रियः'

**(सं.चं.)** इत्युक्त्वा मननशीले मुनौ मुनितां मौनं याते आश्रिते सति । 'मुनिर्वाचंयमो मतः' इत्यभिधानम् । 'स मुनिर्भूत्वा समाचिन्तयत्' इति श्रुतिः । ताभ्यां सहागताभ्यां विश्वामित्रलक्ष्मणाभ्याम् । यद् वनं ताटकाया भवनमिव ॥ ४४ ॥

**चापं चापधरश्रेष्ठे जृम्भयत्यदहत्[१] क्षणात् ।**
**स्फुलिङ्गवत् स विष्फारस्ताटकाकर्ण्णकोटरम् ॥ ४५ ॥**

**(भा.दी.)** तात किं मन्यते भवानिति मुनिनाऽभिहिते सति सज्जनहितार्थं ताटकावधः कार्य इति मुन्यभिप्रायं हृदि निधाय तद्वधार्थं श्रीरामेण चापविजृम्भणमकारीत्याह– **चापमि**ति । चापं धरन्तीति चापधरास्तेषु श्रेष्ठे श्रीरामे चापं धनुस्तत् जृम्भयति सति विष्फारयति सति । सः विष्फारः धनुर्ध्वनिः । 'विष्फारो धनुषो ध्वनौ'[२] इत्यमरः । ताटकायाः कर्णः स एव कोटरं वृक्षबिलं तत् स्फुलिङ्गवत् अग्निकणवत् क्षणः क्षणकालस्तस्मात् अदहत् । दह भस्मीकरणे लङ् ॥ ४५ ॥

**(सं.चं.)** किं मन्यते भवानिति मुनिप्रश्नस्योत्तरं धनुष्टङ्कारेणैव ददौ राम इत्याह– चापम् । जृम्भयति दण्डमानम्य ज्यामारोप्याऽस्फालयति सति । स विष्फारो धनुष्टङ्कारः । 'विष्फारो धनुषां ध्वनौ' इत्यभिधानम् । स्फुलिङ्गा अग्निकणा इव क्षणात् सपदि कर्णकुहरमदहत् । प्रविश्य तापं जनयामास । कोटरः कोटरमिति च महीरुहकुहरमुच्यते । तेन राक्षस्या अतिमात्रं गात्रं ध्वनयति ॥ ४५ ॥

**यावद् विष्फारसन्त्रस्ता वने[३] मृगखगादयः ।**
**नोत्थिताः प्रोत्थिता तावदापपात[४] क्षपाचरी ॥ ४६ ॥**

**(भा.दी.) यावदि**ति । यावत् यतः पूर्वं विष्फारेण धनूरवेण सन्त्रस्ताः भीताः मृगाश्च खगाः पक्षिणस्ते च ते आदयो येषां ते तथोक्ताः, वने न उत्थिताः न संस्थिताः, तावत् ततः पूर्वमेव, प्रोत्थिता अपूर्वः शब्दः कुतो वा श्रुत इति सन्नद्धतया स्थिता, क्षपायां रात्रौ चरतीति क्षपाचरी, राक्षसीत्यर्थः, ताटका आपपात अभ्याजगाम । पत्लृ गतौ लिट् ॥ ४६ ॥

**(सं.चं.)** नोत्थिताः । भयादुच्चलितुमप्यप्रभवन्त उत्थातुं सन्निनत्सन्तीव । ततः पूर्वमेव स्वस्थानात् प्रसभमुत्थिता निशाचरी रामस्य पुर आजगाम ॥ ४६ ॥

---

१. **'जम्भयत्यगमत्'**
२. **'विस्फारो धनुषः स्वानः'** इति प्रचलितः अमरकोशपाठः ।
३. **'बनान्मृग–'**
४. **'प्रोत्थिता बेगादापपात'**

**महाकायां महावीर्य्यां व्यात्ताननमहागुहाम् ।**
**अवेक्ष्योद्यतहस्तां तां रामस्तस्थावनाकुलः ॥ ४७ ॥**

**(भा.दी.) महे**ति । श्रीरामः, महान् कायः शरीरं यस्याः सा तथा ताम्, महद् वीर्यं बलं पराक्रमो वा यस्याः सा तथा ताम्, व्यात्तं विवृतं आननं महागुहेव यस्याः सा तथा ताम्, उद्यतौ प्रहर्तुं सन्नद्धौ हस्तौ यस्याः सा तथा तां ताटकां अवेक्ष्य, आकुलः सम्भ्रान्तो न भवतीत्यनाकुलः सन् तस्थौ । स्थाधातोर्लिट् ।।४७।।

**(सं.चं.)** अवेक्ष्याऽप्यनाकुलोऽसम्भ्रान्तः ॥ ४७ ॥

**वात्येवात्यन्तसंवेगा भूयः कोलाहलस्वना ।**
**राक्षसी रजसां वर्षं राजपुत्रे ववर्ष सा[१] ॥ ४८ ॥**

**(भा.दी.) वात्ये**ति । वात्येव चक्रवातइव । 'वात्या वातस्य मण्डली' इति हलायुधः । अत्यन्तं संवेगो यस्याः सा तथा । भूयः पुनःपुनः कोलाहलः कलकलायमानः स्वनो ध्वनिर्यस्याः सा तथा । 'कोलाहलः कलकलस्तुमुलो व्याकुलो रवः' इति हलः । सा राक्षसी रजांसि पांसवस्तेषां वर्षं वृष्टिस्तत् राजपुत्रे श्रीरामे ववर्ष । वृष सेचने लिट् ॥ ४८ ॥

**(सं.चं.)** वात्या वृत्ताकारं भ्रमन् वातः । 'ಸುಂಟರಗಾಳಿ' इति भाषायाम् । संवेग आटोपः । कोलाहलः कर्ण-कर्कशस्तुमुलः स्वनोऽस्याः ॥ ४८ ॥

**पुनर्म्मायाविनीं दृष्ट्वा शिलाजालाभिवर्षिणीम् ।**
**चकर्त्तास्याः करौ घोरौ [२]पत्रिभिः पत्रिकेतनः ॥ ४९ ॥**

**(भा.दी.) पुनरि**ति । पत्री पक्षी गरुडः केतने ध्वजे यस्य स तथा श्रीरामः, माया तत्कालसर्जनशक्तिरस्या अस्तीति मायाविनी ताम् । 'मायाया विनिः'[३] इति मत्वर्थे विनिः । अत एव पुनः पांसुवर्षानन्तरं शिलानां पाषाणानां यज्जालं समूहस्तदभिवर्षितुं शीलमस्या अस्तीति तथोक्तां तां ताटकां दृष्ट्वा, अस्याः घोरौ करौ पत्रिभ्यां शरभ्याम्, 'पत्रिणौ शरपक्षिणौ' इत्यमरः, चकर्त अच्छिनत् । कृती च्छेदने लिट् ॥ ४९ ॥

---

१. **'राक्षसी सा रजोवर्षं राजपुत्रे ववर्ष ह'** । **'राक्षसी–'** इत्यत्र **'राजसी'** इति पाठं पठतः वि.भू.का.श्री च । **'राजसी रजोगुणसम्बन्धिनी'** इति वि.भू.टीकायाम् । का. श्री. टीकायां च–**'राजसी रजोगुणसम्बन्धिनी । ताटकाया उर्वशीत्वात्(?) राजसीत्युक्तम्'** इति व्याख्यातम् ।

२. **'पत्रिभ्यां पत्रिकेतनः'** इति. वि.ती.पाठः ।

३. **'अस्मायामेधास्रजो विनिः'** (५.२.१२१) इति समग्रं सूत्रम् ।

**(सं.चं.)** पत्रिभिः बाणैः करौ बाहू चकर्त पत्रिकेतनो गरुडध्वजः । 'शिलावर्षं महत् तस्याः शरवर्षेण राघवः । प्रतिहत्योपधावन्त्याः करौ चिच्छेद पत्रिभिः' (२६.१७) इति च ॥ ४९ ॥

**सौमित्रिणा विवृक्णोष्ठनासिका कामरूपिणी ।**
**अन्तर्हिता साध्वहिता शस्त्रवृष्टिमवाकिरत्[१] ॥ ५० ॥**

**(भा.दी.) सौमित्री**ति । सौमित्रिणा लक्ष्मणेन विवृक्णे च्छिन्ने ओष्ठश्च नासिका च ते यस्याः सा तथा, कामेन इच्छया रूपमपेक्षितस्वरूपमस्या अस्तीति तथोक्ता, अत एवान्तर्हिता अन्तर्द्धानं गता, अदृश्यतां प्राप्तेत्यर्थः, साधूनां सज्जनानां अहिता ताटका, शस्त्राणां गदाद्यायुधानां वृष्टिस्तां अवाकिरत् ववर्ष । किर विक्षेपे लङ् ॥ ५० ॥

**(सं.चं.)** क्षुरप्रेण विवृक्णं छिन्नं ओष्ठनासिकं यस्याः । व्रश्चू च्छेदने । कर्णयोरप्युपलक्षणम् । 'ततश्छिन्नभुजां श्रान्तामभ्याशे परिगर्जतीम् । सौमित्रिरकरोत् क्रोधाद् हृतकर्णाग्रनासिकाम्' (२६.१८) इति वाल्मीकीये । 'कर्णोष्ठनासिकाम्' इति ग्रन्थकृत्सम्मतो रामायणपाठः स्यात् । साधूनामहितकारिणी । शस्त्रवृष्टिमवाकिरत् । रामायणे तु 'अन्तर्धानं गता यक्षी मोहयन्तीव मायया । अश्मवर्षं विमुञ्चन्ती भैरवं विचचार ह' (२६.१९) इति पठ्यते । 'शस्त्रवर्षं विमुञ्चन्ती' इत्येव प्राचीनपाठः स्यात् ॥ ५० ॥

**मुनिरूचे तदा रामं वनितावधलज्जितम् ।**
**वत्स सज्जनकृत्येयं हन्यतांहन्यतामिति ॥ ५१ ॥**

**(भा.दी.) मुनिरि**रिति । तदा वनितायाः स्त्रियास्ताटकाया वधस्तस्मिन् लज्जितं सञ्जातलज्जम्, 'तदस्य सञ्जातं तारकादिभ्य इतच्' (अ.सू.५.२.३६) इति इतच् । श्रीरामं प्रति, हे वत्स श्रीराम, सज्जनानां कृत्येव सज्जनकृत्या, सज्जनमारिकेत्यर्थः, कृत्येति भूतविशेषः । एषा ताटका हन्यतां हिंस्यतां हिंस्यताम् । सम्भ्रान्तौ द्वे वाच्ये इति द्विरुक्तिः । इति (मुनिः) ऊचे । वच परिभाषणे लिट् ॥ ५१ ॥

**(सं.चं.)** वनितावधलज्जितम् । तथाहि रामायणे विश्वामित्रवचनम्–'नहि ते स्त्रीवधकृते घृणा कार्या नरोत्तम । चातुर्वर्ण्यहितार्थाय कर्तव्यं राजसूनुना' (२५.१७) इति । तथैव रामवचनं च– 'पितुर्वचननिर्देशात्

१. **'शस्त्रवृष्टीरवाकिरत्'** इति का. श्री. पाठः ।

पितुर्वचनगौरवात्। वचनं कौशिकस्येति कर्तव्यमविशङ्कया' (२६.२) इति। सज्जनानामियं कृत्या। मारयित्री दुष्टशक्तिः कृत्येत्युच्यते। हन्यतांहन्यतामिति हनने त्वरातिशयमाह ॥ ५१ ॥

**चक्रवत् परिवृत्तां तां चक्रभृत् प्रहसन्निव।**
**अप्रयासः क्षणेनैव चकार शरपञ्जरे ॥ ५२ ॥**

**(भा.दी.) चक्रवदि**ति। चक्रं बिभर्तीति चक्रभृत् श्रीरामः, चक्रवत् चक्रमिव परिवृत्तां परिभ्रमन्तीं तां ताटकाम्, प्रहसन्निव अपहसन्निव, न विद्यते प्रयासो यस्य स तथा सन्, क्षणः क्षणकालस्तेनैव शराणां पञ्जरः पेटी तस्मिन् चकार। कृञो लिट् ॥ ५२ ॥

**(सं.चं.)** चक्रवत् परितो रामं वृत्ताकारेण भ्रमन्तीम् ॥ ५२ ॥

**तामापतन्तीमवलोक्य पुंसां**
**स्वधर्म्ममार्ग्गं भगवान् विधित्सुः।**
**उरःकवाटं खलु ताटकायाः**
**स्वपाटवात् पाटितवाञ्छरेण ॥ ५३ ॥**

**(भा.दी.) तामि**ति। पुंसां सत्पुरुषाणां स्वकीयो यो धर्मः स एव मार्गस्तम्। 'स्वोऽस्त्री धने त्रिषु स्वीय आत्मनि स्वजने' इति वैजयन्ती। विधातुमिच्छति विधित्सति, विधित्सतीति विधित्सुः। 'सनाशंसभिक्ष उः' (अ.सू.३.२.१६८) इति सन्नन्तत्वात् ताच्छीलिक उप्रत्ययः। भगवान् श्रीरामः आपतन्तीं सर्वतः शरपञ्जरेण बद्धत्वादन्यतो गन्तुमशक्यत्वादभिमुखमागच्छन्तीम्, तां अवलोक्य, ताटकायाः उर एव कवाटं तत्, स्वस्य पाटवं कौशलं तस्मात्, शीर्यतेऽनेनेति शरस्तेन पाटितवान् विदारितवान्। यथा खलु केनापि दुष्टात्मना सन्मार्गे कवाटेन पिहिते सति कश्चित्पुरुषः परोपकारतत्परस्तत्कवाटं विवृणोति तद्वदयं श्रीरामोऽपि मुनीनां तीर्थगमनादिस्वधर्मलक्षणमार्गप्रतिबन्धकतया कवाटसदृश्यां राक्षस्यां उरसो विदारणमेव कृतवानिति भावः ॥ ५३ ॥

**(सं.चं.)** सतां धर्ममार्गनिरोधाय निहितं पिहितमिव कवाटम्। दुष्टदमने शस्त्रास्त्रविद्यायां च पाटवं कौशलम्। इन्द्रवज्रोपेन्द्रवज्राभ्यामुपजातिः। ततजैर्गाभ्यां प्रथमपाद इन्द्रवज्रा। जतजैर्गाभ्यामवशिष्टेषूपेन्द्र-वज्रा ॥ ५३ ॥

जयजय जगताम्पते नमस्ते भवतु जयाङ्कुर एष कल्पवृक्षः[१] ।
इति वददभिनन्दि नाकिवृन्दं कुसुमकुलं प्रववर्ष राममौलौ ॥ ५४ ॥

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**बालकाण्डे चतुर्त्थः सर्ग्गः ॥**

—०—

**(भा.दी.)** जयेति । जगतां भूतभविष्यद्वर्तमानचेतनाचेतनात्मकसर्वजगतां पते श्रीराम जयजय । उत्कृष्टतया वर्तस्ववर्तस्व । जि जये लोट् । आदराद् द्विरुक्तिः । ते तुभ्यं नमः । एषः रामाख्यः कल्पवृक्षः जय एव अङ्कुरो यस्य स तथोक्तः भवतु । भुवो लोट् । इति वदत् स्तुवत् । अभिनन्दितुं शीलमस्यास्तीति अभिनन्दि । ताटकाहननेन सन्तोषवदित्यर्थः । नाकिनां देवानां वृन्दं समूहः, श्रीरामस्य मौलिर्मूर्धा तस्मिन्, कुसुमानां कुलं समूहस्तत् प्रववर्ष । वृष सेचने लिट् ॥ ५४ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां**
**भावार्थदीपिकायां बालकाण्डे चतुर्थः सर्गः ॥**

—०—

**(सं.चं.)** ताटकावधरूपोऽयं रामविजयाङ्कुरः क्रमेण परिवर्द्धमानः कल्पवृक्षो भवतु । अभिनन्दनशीलं देववृन्दम् । मौलिरिति शिर उच्यते । मौलिरिति केशपाश उच्यते । मौलिरिति किरीटमुच्यते । अत्र मौलिरिति शिरः केशपाशो वा । प्रहर्षेण ववर्ष । प्रकामं ववर्ष । पुष्पिताग्रा च्छन्दः । अयुजि नौ रयौ । युजि नजौ जरौ गश्च ॥ ५४ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां**
**बालकाण्डे चतुर्थसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १४१+५४=१९५]

---

१. **'एषः प्रत्यक्षसिद्धः जयः ताटकापराभव एवाङ्कुरः कल्पवृक्षः कल्पस्थायी वृक्षो भवतु'** इति का. श्री. टीकायाम् ।

# पञ्चमः सर्ग्गः

**सानुजः स जगन्नाथो मानितो मुनिना भृशम् ।**
**उषितस्तत्र तां रात्रिं प्रभाते नियमं व्यधात् ॥ १ ॥**

**(भा.दी.)** श्रीरामेणानन्तरं तत्र किमकारीत्यत आह– **सानुज** इति । मुनिना विश्वामित्रेण भृशं मानितः सत्कृतः, अनुजेन सहितः सानुजः, जगतां नाथः सः श्रीरामः, तत्र वने तां रात्रिं उषितः अवस्थितः सन्, प्रभातं प्रातःकालस्तस्मिन्, नियमं सन्ध्यावन्दनादिनियतकर्म, 'नियमो निश्चये व्रते' इति वैजयन्ती । व्यधात् चक्रे ॥ १ ॥

**(सं.चं.)** ताटकासंहारहृष्टेन मुनिना मानितो भृशम् । नियमं सान्ध्यं नित्यकर्म ॥ १ ॥

**ऋषी रहसि रामाय[1] ददावस्त्राणि सर्वशः ।**
**वैष्णवं ब्राह्ममस्त्रं च शैवाग्नेयादिकानि च ॥ २ ॥**

**(भा.दी.) ऋषी**ति । ऋषिषु वर्यः श्रेष्ठः । (सः) विश्वामित्रः श्रीरामाय विष्णुर्देवता अस्येति वैष्णवं तत् । 'साऽस्य देवता' (अ.सू.४.२.२४) इत्यण् । ब्रह्मा देवता अस्येति ब्राह्मं तत्, शिवः देवता अस्येति शैवं तच्च, अग्निर्देवता अस्येत्याग्नेयं तच्च, ते आदी येषां तानि तथोक्तानि तानि । सर्वशः समस्तानि अस्त्राणि ददौ । दाणो लिट् । ऋषी रहसीति क्वचित्पाठः ॥ २ ॥

**(सं.चं.)** सर्वशः सर्वाण्यस्त्राणि ददौ ॥ २ ॥

**[2]अपि संहाररूपाणि जृम्भकास्त्राण्युपादिशत् ।**
**स्वकीयकर्त्तव्यतया सर्वज्ञाय जगद्भृते ॥ ३ ॥**

---

१. **'ऋषिवर्यः स रामाय'** इति वि.ती.पाठः ।

२. **'उपसंहाररूपाणि'**

**(भा.दी.) अपी**ति । संहारः रूपं स्वभावो येषां तानि संहाररूपाणि । शत्रुसंहारेऽत्यन्तं प्रशस्तानीत्यर्थः[१] । 'रूपं शब्दे पशौ श्लोके श्रद्धावृद्धौ सितादिषु । सौन्दर्ये च स्वभावे च' इति वैजयन्ती । जृम्भयन्तीति जृम्भकाणि तानि च तान्यस्त्राण्यपि, शत्रूणां जृम्भणसम्मोहोन्मादादिकरणेऽत्यन्तं प्रशस्तानीत्यर्थः, सर्वज्ञाय जगत् बिभर्तीति जगद्भृत् तस्मै श्रीरामाय । स्वकीया स्वसम्बन्धिनी या कर्तव्यता तया[२] । सर्वज्ञस्यापि सर्वजगद्धारणपोषणकर्तुरपि श्रीरामस्य स्वकीया सेवा काचिल्लोकरीत्या भूयादित्यभिप्रायेणेति भावः । उपादिशत् उपदिष्टवान् । दिशेर्लङ् ॥ ३ ॥

**(सं.चं.)** अस्त्रप्रयोगमूलमन्त्रानुपदिश्य प्रयुक्तस्योपसंहारोपयुक्तानपि मन्त्रानुपदिदेशेत्याह– अपि । प्रयुक्तस्य प्रत्युपसंहाररूपाण्यपि । जृम्भयन्त्युपशमयन्तीति जृम्भकाण्यस्त्राणि । बहुवचनमाद्यर्थे वा । जृम्भकादीन्यस्त्राणि । तत्तद्देवतामन्त्रानिति यावत् । स्वकीयकर्तव्यतया। तादृशी भगवदिच्छा– अनेनोपदेष्टव्यम् । मया स्वीकर्तव्यम् । तेन तस्य भवतु महत् पुण्यमिति । सर्वज्ञोऽपि विश्वामित्रादस्त्रज्ञानमाप । जगतो रक्षिताऽपि अस्त्रैः स्वरक्षामचकाङ्क्ष । सेयं लीला भगवतः ॥ ३ ॥

**[३]ब्रह्मादयोऽस्त्ररूपास्तं परिवार्य्यार्य्यसम्मतम् ।**
**प्रोचुः प्राञ्जलयः स्वामिन् [४]किङ्करास्ते वयं त्विति ॥ ४ ॥**

**(भा.दी.) ब्रह्मे**ति । अस्त्राणि रूपाणि अभिमन्यमानत्वात् स्वरूपाणि च येषां ते तथा ब्रह्मादयो देवाः । आर्यैः साधुभिः सम्यक् मतं ज्ञातम् । 'आर्यः साधुकुलीनयोः' इति वैजयन्ती । (तं) श्रीरामं परिवार्य, प्रकृष्टा अञ्जलयो येषां ते तथा सन्तः, हे स्वामिन्, वयं तु विशेषेण किङ्कराः स्मः भवामः । अस्तेर्लङ् । इति एवमादि वचः प्रोचुः । वचेर्लिट् ॥ ४ ॥

**(सं.चं.)** अस्त्ररूपा अस्त्रमानिनः । अस्त्राणि च तेषां रूपाणि प्रतिमाः । मूर्तिमत्योऽस्त्रदेवताः । आर्याणां ज्ञानिनां सम्मतम् । तेषां सम्यङ् मतमवगतं च ॥ ४ ॥

**सौमित्रिरप्यमित्रच्छिद् विश्वामित्रादवाप्तवान् ।**
**समस्तानि महास्त्राणि ब्राह्मादीनि बृहन्मनाः[५] ॥ ५ ॥**

---

१. **'संहाररूपाणि उपसंहाररूपाणि नाशकानीति वा'** इति का.श्री. ।

२. **'समर्थस्यापि ते सूनोः सहायत्वं करिष्यतीति वसिष्ठोक्तदिशा च स्वकीयकर्तव्यतयोपदिदेश'** इति का.श्री. ।

३. **'ब्रह्मादयो ह्यस्त्ररूपा परि–'** ४. **'किङ्कराः स्मो वयं त्विति'** ५. **'महामनाः'**

**(भा.दी.) सौमित्रिरि**ति । अमित्राणि शत्रून् छिनत्तीति अमित्रच्छित् । बृहति पूर्णे विष्णौ मनो यस्य स तथा[1], मनस्वीति वा, सौमित्रिरपि, ब्रह्मा देवता अस्येति ब्राह्मं तदादिर्येषां तानि तथोक्तानि समस्तानि महास्त्राणि विश्वामित्रात् अवाप्तवान् जग्राह । नच तात्पर्यनिर्णये ताटकावधात् पूर्वमेवास्त्रग्रहणोक्तेस्तद्विरोधः । तत्र बलातिबलाख्यमन्त्रोपदेशप्रसङ्गेनास्त्रोपदेशस्य तात्पर्यकथनार्थं युगपदुक्तत्वात् क्रमस्याविवक्षितत्वाद्वा, आचार्योक्तेः बहुकल्पानुसारित्वाद् वा, वाल्मीकिरामायणानुसारिग्रन्थकारोक्तेश्च कल्पविशेषानुसारित्वेनैवोपपत्तेरिति ॥ ५ ॥

**(सं.चं.)** रामायणे स्फुटमनुक्तं प्रमेयान्तरमाह– सौमित्रिरपि । भगवदवतारकार्ये शत्रुक्षपणेऽङ्गतामाप्तुं तस्यापि ह्यपेक्षितान्यस्त्राणीत्याह– अमित्रच्छिदिति । 'अनुग्रहार्थं स ऋषेरवाप सलक्ष्मणोऽस्त्रं मुनितो हि केवलम्' (४.६) इति निर्णये ॥ ५ ॥

**ताननुज्ञाप्य काकुत्स्थो गच्छन् पप्रच्छ सर्ववित् ।**
**पश्यन्नाश्रममारात् स कोऽयं देश इति द्विजम् ॥ ६ ॥**

**(भा.दी.) तानि**ति । ककुत्स्थगोत्रे भवः काकुत्स्थः श्रीरामः, तान् अस्त्ररूपान् ब्रह्मादीन्, अनुज्ञाप्य कार्यकाले प्रकटा भवत, इदानीं गम्यतामित्यनुज्ञां दत्वा, गच्छन् सर्ववित् आरात् समीपे आश्रमो मुनिवासस्तं पश्यन् सः श्रीरामः, अयं समीपस्थः देशः कः किन्नामकः इति एवमादिप्रकारेण द्विजं विश्वामित्रं प्रति पप्रच्छ । प्रच्छ जिज्ञासायां लिट् ॥ ६ ॥

**(सं.चं.)** सर्वविदपि पप्रच्छ ॥ ६ ॥

**तमब्रवीत् गाधिसुतस्तातायं परमाश्रमः ।**
**अधिष्ठितः पुरा साक्षाद् विष्णुना प्रभविष्णुना ॥ ७ ॥**

**(भा.दी.) तमि**ति । गाधेः गाधिनाम्नो राज्ञः सुतः विश्वामित्रः । हे तात श्रीराम, प्रकृष्टतया अनाद्यनन्तकालेऽप्येकप्रकारतया भवितुं शीलमस्यास्तीति प्रभविष्णुस्तेन, यद्वा शत्रून् पराभवितुं शीलमस्यास्तीति तथा तेन विष्णुना,(पुरा) साक्षात् प्रत्यक्षं अधिष्ठितः आवासीकृतः अयं देशः परमाश्रमः अत्युत्तमाश्रमः इति तं श्रीरामं अब्रवीत् । ब्रूञो लङ् ॥ ७ ॥

**(सं.चं.)** विष्णुना वामनरूपेण ॥ ७ ॥

१. **'बृहत् विशालं बह्वर्थविषयकं मनो यस्य सः'** इति का.श्री. ।

**बह्वोऽत्र तपस्यन्तः सन्तः सिद्धत्वमाययुः ।**
**तस्मात् सिद्धाश्रमो नाम सिद्धेर्दाता ह्यधोक्षजः[१] ॥ ८ ॥**

**(भा.दी.)** किमस्य नामेत्यतस्तत्प्रवृत्तिनिमित्तकथनपूर्वकं तन्नामाऽह– **बहव** इति । अत्र अस्मिन् आश्रमे तपस्यन्तः तपः कुर्वन्तः बहवः सन्तः सज्जनाः यस्मात् सिद्धत्वं तपःसिद्धिं आययुः । यातेर्लिट् । हि यस्मात् सिद्धेः तपःफलस्य दाता, अक्षमिन्द्रियमधःकृतं यैस्ते (अधोक्षाः काश्यपादयः ), तेभ्यो जातः प्रादुर्भूतः इत्यधोक्षजः, अक्षजमिन्द्रियजन्यज्ञानमधःकृतं येनेति वा तथोक्तः, केवलप्रत्यक्षाविषय इत्यर्थः, श्रीहरिः, तस्मात् सिद्धाश्रम इति नाम प्रसिद्धः । एवं च सिद्धानां तपस्सिद्धानां मुनीनामाश्रम इति वा, सिद्ध्यत्यस्मात् फलमिति व्युत्पत्त्या तपःफलदातृत्वेन सिद्धशब्दवाच्यस्य विष्णोराश्रम इति वा व्युत्पत्तिरुक्ता भवति ॥ ८ ॥

**(सं.चं.)** तपस्यन्तः तपश्चरन्तः । तपःशब्दात् चरणार्थे क्यङ् । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' (अ.सू. ३.१.१५) इति हि पाणिनिः । 'तपसः परस्मैपदं च' इति वार्तिकम् । तेन तपश्चरति तपस्यति । सिद्धत्वं तपःसिद्धिमाययुः । तपसा साक्षात्कृतब्रह्माणो मुक्तिमाप्नुवन् । तस्मात् सिद्धानामयमाश्रम इति सिद्धाश्रमो नाम । सिद्धेर्दातुर्नित्यसिद्धस्याऽयमाश्रम इति च ॥ ८ ॥

**बलेर्बलेन सन्त्रस्तैर्देवैरत्रार्थितो[२] हरिः ।**
**काश्यपेनापि तपसा[३] ततोऽदित्याः सुतोऽभवत् ॥ ९ ॥**

**(भा.दी.)** बहवोऽत्र तपस्यन्त इत्युक्तं विशदयति– **बलेरि**ति । बलेः बलिचक्रवर्तिनः यद् बलं तेन सन्त्रस्तैः भीतैः देवैः, अत्राऽश्रमे अर्थितः बलिनिग्रहार्थमवतारः कर्तव्य इति प्रार्थितः हरिः, काश्यपेन मुनिना, कृतेनेति शेषः, तपसा अवतारार्थकतपोनिमित्तादपि, ततः काश्यपात् अदित्याः सुतः अभवत् । भुवो लङ् ॥ ९ ॥

**(सं.चं.)** कथं सिद्धस्यायमाश्रमः? बलेर्बलेन । देवैरर्थितः काश्यपेनापि तपसाऽर्थितः । अत्राऽश्रमेऽभवत् । ततोऽर्थितत्वादेव हेतोः काश्यपेनादित्याः सुतोऽभवद् वामन इति ॥ ९ ॥

**वामनो वामनेत्रोऽसौ वाम एवामरद्विषाम् ।**
**अयाचत बलेस्त्रीणि पदानि किल लीलया ॥ १० ॥**

---

१. **'यद्यपि अधोक्षजो नारायण एव सिद्धेर्मुक्तेर्दाता । तथाऽपि आश्रमं निमित्तीकृत्य सिद्धिदातृत्वादाश्रमस्यापि सिद्धिदातृत्वमुपचारेणोच्यत इति ज्ञातव्यम्'** इति का.श्री. ।

२. **'देवैरप्यर्थितो–'**

३. **'काश्यपेनात्र तपसा'**

**(भा.दी.) वामन** इति वामे मनोहरे नेत्रे यस्य स तथा, अमरान् द्विषन्तीत्यमरद्विषस्तेषां दैत्यानां वाम एव शत्रुरेव अभूत्। 'वामौ वल्गुप्रतीपयोः'[1] इत्यमरः। असौ वामनः बलेः सकाशात् त्रीणि पदानि लीलया अयाचत किल । याचृ याच्ञायां लङ् । किलेत्यपरमार्थे । सर्वाधीश्वरस्यान्यस्माद् याचनस्य लीलामन्तराऽसम्भवादिति भावः ॥ १० ॥

**(सं.चं.)** वामे चारुणी नेत्रे अस्य। 'वल्गु चारु सुषमं वामं शुभं पेशलम्' इत्यभिधानम्। चक्षुषि सन्निधाय वामस्य सौन्दर्यस्य नेतृत्वाच्च वामनेत्रः। सुरद्विषां वामः प्रतिकूलः। 'वामः प्रतिकूलेऽपि' इति च ॥१०॥

**दत्तमात्रे बलीन्द्रेण भूतळे त्रिपदाह्वये ।**
**अणोरणीयान् महतो महीयान् भगवानभूत् ॥ ११ ॥**

**(भा.दी.) दत्ते**ति। बलीन्द्रेण, त्रीणि च तानि पदानि च त्रिपदानि त्रिपदानीति आह्वयो नाम यस्य तत्तथा तस्मिन् भूतळे भूप्रदेशे दत्तमात्रे केवलं दत्ते सति, अणुपरिमाणात् जीवात् अतिशयेन अणुरणीयान् भगवान् वामनरूपी विष्णुः महतः परममहत्परिमाणादाकाशादेः महीयान् अतिशयेन स्थूलः अभूत्। भुवो लुङ् ॥११॥

**(सं.चं.)** त्रिपदाह्वये । भूतळे त्रीणि पदानीति नाममात्रम् । वस्तुतस्तु त्रयोऽपि लोकाः ॥ ११ ॥

**तस्य त्रिविक्रमस्यायमाश्रमश्चित्रविक्रमः ।**
**वयं चान्ये च मुनयो वसामोऽत्र महामते[2] ॥ १२ ॥**

**(भा.दी.) तस्ये**ति। त्रयो लोकाः विक्रमेषु पादविन्यासेषु यस्य स तथोक्तस्तस्य, तस्य वामनरूपिणो विष्णोः अयं आश्रमः, चित्र आश्चर्यभूतः विक्रमः शीघ्रं तपःसिद्धिहेतुत्वादिलक्षणसामर्थ्यं यस्य स तथोक्तः। महती स्वपरगताखिलविशेषविषयिणी मतिर्यस्य तत्सम्बुद्धिः, श्रीराम, अत्राऽश्रमे वयं वसामः, वस निवासे लट्। अन्ये च मुनयः वसन्तीत्यन्वयः ॥ १२ ॥

**(सं.चं.)** त्रयो विक्रमाः पादविक्षेपा यस्य । चित्रविक्रमः विश्वविस्मयावहमहिमाऽयमाश्रमः ॥ १२ ॥

**इत्यालपन्तः स्वालापांस्ते[3] तमाश्रममाविशन् ।**
**उत्सवो मुनिनेत्राणि[4] भास्करोऽप्यब्धिमाविशत् ॥ १३ ॥**

---

१. **'वामौ वल्गुप्रतीपौ द्वौ'** इति प्रचलितः पाठः। २. **'महीपते'** ३. **'स्वालापास्ते'** इति वि.ती.पाठः।

४. **'मुनिनेत्राणाम्'** इति क्वचित्। अस्वरसः पाठः। का.श्री.आचार्यस्तु-**'मुनिनेत्राणां उत्सवः सन्तोषः आसीत्'** इति यथाकथा च व्याख्याति। अप्रबुद्धं व्याख्यानम्।

**(भा.दी.)** **इती**ति । ते, शोभन आलाप आभाषणं येषां ते तथा । 'स्यादाभाषणमालापः' इत्यमरः । (इति एवमादिप्रकारेण) आलपन्तः सन्तः तं आश्रमं सिद्धाश्रमं आविशन् । विश प्रवेशने लङ् । तदा मुनीनां नेत्राणि तानि उत्सवः आविशत् । भास्करः सूर्योऽपि आपो धीयन्तेऽत्रेत्यब्धिः समुद्रस्तं आविशत् । सूर्यास्तमयश्चाजायत इत्यर्थः ॥ १३ ॥

**(सं.चं.)** भगवद्विषयत्वात् सु सुखकराः पूजनीयाः शोभनाश्चाऽलापाः । स्वस्य स्वतन्त्रस्य भगवतो वाऽऽलापाः । ते तमाश्रममाविशन् । मुनिनेत्राणि उत्सव आविशत् । तेषामागमनेन मुनीनां नेत्रोत्सवः समजनीत्यर्थः । भास्करोऽप्यब्धिमाविशत् । अस्तङ्गतः ॥ १३ ॥

**सप्तर्षिभिः समेतोऽथ [1]षडहैः परिकल्पितम् ।**
**कौशिकः कोसलेन्द्रस्य यज्ञमारभताऽज्ञया ॥ १४ ॥**

**(भा.दी.)** **सप्ते**ति । अथ कौशिकः विश्वामित्रः । सप्त च ते ऋषयश्च तैः । 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजा एते सप्तर्षयः स्मृताः' इति प्रसिद्धसप्तर्षिभिरित्यर्थः । समेतः सहितः सन् । षट्सङ्ख्याकानि च तानि अहानि च तैः परिकल्पितो विहितस्तम्, षड्भिर्दिनैः परिसमाप्यमित्यर्थः, यज्ञम्, कोसलानां कोसलविषयाणामिन्द्रस्य स्वामिनः श्रीरामस्य आज्ञया आरभत प्रारम्भं चक्रे । आङ् पूर्वः रभि राभस्ये लङ् ॥ १४ ॥

**(सं.चं.)** षडहैः षड्भिर्दिनैः परिकल्पितम्, परिसमापनीयत्वेन विहितम्, षळहाख्यं यज्ञम् 'राजाहःसखिभ्यष्टच्' (अ.सू.५.४.९१) इति समासान्तष्टच् । कोसलेन्द्रस्याऽज्ञयेति वास्तवम् । अनुज्ञयेति व्यावहारिकम् । कोसलेन्द्रस्य यज्ञमिति च । स एव हि सर्वयज्ञाराध्यः । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति हि भगवद्वचनम् ॥ १४ ॥

**ततः षष्ठेऽह्नि भूयिष्ठे सम्प्रवृत्ते क्रतूत्तमे[2] ।**
**जज्वाल वेदिः सकला हाहाकारो महानभूत् ॥ १५ ॥**

---

१. **'षडहःपरिकल्पितम्' इति, षडहं परिकल्पितम्' इति च क्वचित् । 'षडहोभिः परिकल्पितं षडहःपरिकल्पितम् । समासान्तविधेरनित्यत्वात् टच्प्रत्ययो नाऽश्रितः । षडहैः परिकल्पितमिति पाठे न क्लेशः'** इति का.श्री. ।

२. **'भूयिष्ठे प्रवृत्ते च क्रतूत्तमे'** इति वि.ती.पाठः स्यात् ।

**(भा.दी.) तत** इति । षट्त्वसङ्ख्यापूरणं षष्ठं तस्मिन् अह्नि दिने, भूयिष्ठे महत्तमे, क्रतुषूत्तमस्तस्मिन् यज्ञे प्रवृत्ते सति प्रवर्तमाने सति, सकला समस्ता, देवाः पूजां विन्दन्ति प्राप्नुवन्त्यत्रेति वेदिः संस्कृतभूमिः । 'वेदिः परिष्कृता भूमिः' इत्यमरः । जज्वाल । ज्वल दीप्तौ लिट् । तदा महान् हाहेति आकारः प्रकारो यस्य स तथोक्तः ध्वनिः अभूत् । भुवो लुङ् ॥ १५ ॥

**(सं.चं.)** परिकरभूयिष्ठे । वेदिर्यज्ञभूमिः सकला । नेदमनिष्टसूचकं शकुनम्[१] । किन्तु रक्षसां माया । हाहेति ध्वनिकरणम्, उच्चैर्विलपनमित्येतत्, हाहाकारः ॥ १५ ॥

**आकर्ण्य खे कलकलं दृष्ट्वा धृष्टौ च राक्षसौ ।**
**उद्यच्छ लक्ष्मणेत्युक्त्वा चापमादत्त[२] राघवः ॥ १६ ॥**

**(भा.दी.) आकर्ण्येति** । राघवः खे आकाशे । 'अनन्तं सुरवर्त्म खम्' इत्यमरः । (कलकलः) कलकल-ध्वनिः । 'कोलाहलः कलकलः' इति हलायुधः । तं आकर्ण्य, धृष्टौ राक्षसौ मारीचसुबाहुनामानौ दृष्ट्वा च । हे लक्ष्मण, उद्यच्छ सन्नद्धो भव । उत्पूर्वः यम उपरमे लोट् । इति वचः उक्त्वा चापो धनुस्तं आदत्त जग्राह । आङ्पूर्वः डु दाञ् दाने लङ् ॥ १६ ॥

**(सं.चं.)** धृष्टौ अकर्मकरणे निर्लज्जौ । उद्यच्छ । यम उपरमे । 'उपरमो निवृत्तिः' इति क्षीरस्वामी । उपसर्गयोगेनार्थान्तरम् । उद्यतो भव । प्रतिकर्तुं सज्जो भव ॥ १६ ॥

**न प्रादूषयतां यावत् तौ शोणितवपाद्रवैः[३] ।**
**यज्ञं यज्ञेश्वरस्तावत् घोरं शरममुञ्चत ॥ १७ ॥**

**(भा.दी.) नेति** । यज्ञेश्वरः यज्ञानां मुख्यतो भोक्तृत्वेन वा फलदातृत्वेन वेश्वरः श्रीरामः, तौ राक्षसौ, यावत् यतः पूर्वम्, शोणितं रक्तं तच्च, नाभिसमीपदेश उप्यत इति वपा वसा सा च, तयोः द्रवास्तैः । 'हृन्मेदस्तु[४] वपा वसा' इत्यमरः । तं यज्ञं न प्रादूषयतां नादूषयताम् । दुष वैकृत्ये लङ् । तावत् ततः पूर्वमेव घोरो भयङ्करस्तं शरं अमुञ्चत । मुच्लृ मोक्षणे लङ् ॥ १७ ॥

**(सं.चं.)** वपा मेदः । '**ಕೊಬ್ಬು**' इति भाषायाम् ॥ १७ ॥

---

१. **'वह्निमन्तरेण ज्वालायुक्तत्वं भाव्यनिष्टसूचकम् । 'अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत् तदप्येवमेव विद्यात्' इति श्रुतिः'** इति का.श्री. ।

२. **'चापं चाऽदत्त'**

३. **'शोणितवसाद्रवैः'** । **'शोणितवपयोः द्रवाः बिन्दवः'** इति का. श्री. ।

४. हृदिति पूर्वान्वयि । तेनात्र न वक्तव्यम् । **'मेदस्तु वपा वसा'** इति पर्याप्तम् ।

**राममुक्तेषुवीर्य्येण विद्रुत्य शतयोजनम् ।**
**मारितोऽस्मीति मारीचो ममज्ज लवणार्ण्णवे　　　　　　　　　॥ १८ ॥**

**(भा.दी.) रामे**ति । मारीचः, रामस्य शितो निशितो य इषुस्तस्य वीर्यं सामर्थ्यं तेन[1], शतानां योजनानां समाहारः शतयोजनं तत् विद्रुत्य विद्रावणं कृत्वा, मारितः घातितः, अस्मि इति, वदन्निति शेषः, लवणमयो योऽर्णवस्तस्मिन् ममज्ज । टु मस्जो शुद्धौ लिट् ॥ १८ ॥

**(सं.चं.)** मारितोऽस्मीति भीत्या मन्वानः । इषुवीर्येण पीडितो हतमेवाऽत्मानं मेने । दिष्ट्या न हतः । जीवन्नेवोन्ममज्ज लवणार्णवात् ॥ १८ ॥

**ज्वलनज्वालमादाय स पुनः सायकान्तरम् ।**
**सुबाहुं च [2]महाबाहुर्न्निन्ये यमनिकेतनम्[3]　　　　　　　　　॥ १९ ॥**

**(भा.दी.) ज्वलने**ति । सः श्रीरामः, (पुनः) ज्वलनस्य वह्ने(र्ज्वाले)व (ज्वाला)यस्य तत् तथा तत् सायकान्तरं आदाय, महान्तौ बाहू यस्य स तथा तम्, सुबाहुं सुबाहुनामकं राक्षसं च, यमस्य निकेतनं गृहं प्रति निन्ये, प्रेषितवान् । णीञो लिट् ॥ १९ ॥

**(सं.चं.)** ज्वलनी ज्वलन्ती, ज्वलनस्येव वा, ज्वाला यस्य तत् ज्वलनज्वालम् । अन्यः सायकः सायकान्तरम् ॥ १९ ॥

**पुनश्चापातयद् बाणैः शिरांसि पिशिताशिनाम् ।**
**तालानामिव पक्वानि रामः केचित् पराद्रवन्　　　　　　　　　॥ २० ॥**

**(भा.दी.) पुन**रिति । श्रीरामः, पिशितं मांसमत्तुं शीलमेषामस्तीति पिशिताशिनस्तेषाम्, राक्षसानामित्यर्थः, 'पिशितं तरसं मांसम्' इत्यमरः, शिरांसि, तालाः तालवृक्षास्तेषां पक्वानीव फलानीव, बाणयन्ति विरावयन्ति शत्रूनिति बाणास्तैः, पुनश्च अपातयत् । पत्लृ पतने लङ् । तत्र केचिद् राक्षसाः पराद्रवन् पलायनं चक्रुः । द्रु गतौ लङ् ॥ २० ॥

---

१. एवं व्याख्याने **'रामशितेषुवीर्येण'** इति पाठः स्यात् । तच्च न युक्तम्, छन्दोभङ्गात् । किन्तु विद्याभूषणीयेऽपि एवमेव पाठः पठ्यते– **'रामशितेषुवीर्येण रामनिशितबाणवीर्येण'** इति । न स्वरसमेतत् ।

२. **'महाबाहुं निन्ये'** इति वि.ती.पाठः ।　　　　３. **'यमनिकेतनं यमपुरं नरकमिति यावत्'** इति का.श्री. ।

**(सं.चं.)** पिशिताशिनां सुबाहुमारीचानुयायिनाम् । 'मांसं पलं पिशितमामिषम्' इत्यभिधानम् । पक्वानि जीर्णफलानि । केचिद् रामपौरुषं दृष्ट्वैव भीताः पराद्रवन् ॥ २०–२ ॥

**द्विज उद्वास्य यजनं[१] द्विजमण्डलसंवृतः[२] ।**
**प्रशशंस भृशं राममाशीर्भिरभिपूरयन्[३] ॥ २१ ॥**

**(भा.दी.)** **द्विज** इति । द्विजः विश्वामित्रः यजनं यज्ञस्तत् उद्वास्य समाप्य, द्विजानां मण्डलं समूहस्तेन मण्डितः अलङ्कृतः सन्, श्रीरामं आशिषः शुभवाचस्ताभिः अभिपूरयन् सन्, भृशमत्यन्तं प्रशशंस तुष्टाव । शंसु स्तुतौ लिट् ॥ २१ ॥

**तस्यां रात्र्यां व्यतीतायां मुनीन्द्रो मुनिसंसदि ।**
**सानुजं प्रत्युवाचेदं मधुरं मधुसूदनम् ॥ २२ ॥**

**(भा.दी.)** **तस्यामि**ति । मुनीन्द्रः विश्वामित्रः, तस्यां रात्र्यां व्यतीतायां अतीतायां सत्याम्, मुनीनां संसत् सभा तस्याम्, सानुजं अनुजेन सहितम्, मधुं मधुनामकदैत्यं सूदितवान् संहृतवान् इति मधुसूदनस्तं श्रीरामं प्रति, इदं वचः मधुरं मनोहरं यथा भवति तथा उवाच ॥ २२ ॥

**स्वयंवरो वरो राम जानक्या भुवि घोष्यते ।**
**महोत्सवोत्सुकाः सर्वे विदेहान् यान्त्यहो जनाः ॥ २३ ॥**

**(भा.दी.)** **स्वयमि**ति । हे श्रीराम, जानक्याः जनकपुत्र्याः सीतायाः वरः श्रेष्ठः स्वयंवरः सर्वस्यां भुवि घोष्यते आघोष्यते । घुषिर् शब्दे लट् । तत्र ज्ञापकमाह– **महे**ति । महान् य उत्सवस्तस्मिन् उत्सुकाः आसक्ताः सर्वे जनाः विदेहान् विदेहविषयान् यान्ति । यातेर्लट् । अहो आश्चर्यम् ॥ २३ ॥

**(सं.चं.)** स्वयंवरो वरः । अयोनिजास्वयंवरत्वाद् वरः । शैवधनुरारोपणपणत्वाद् वा । घोष्यते । घोषयते रूपमिदम् । महोत्सवदर्शनोत्सुकाः ॥ २३ ॥

**तामिच्छन्तो हि गच्छन्ति राजानो राजनन्दन ।**
**यास्यामो [३]वयमप्यत्र द्रक्ष्यामस्तं महोत्सवम् ॥ २४ ॥**

---

१. **'उदवस्य द्विजो यज्ञम्'** इत्येके । **'उदवस्य समाप्य'** इति वि.भू. । का.श्री. च । किन्धातुकमिदं रूपमिति चिन्त्यम् ।

२. **'–मण्डलमण्डितः'** इति वि.ती.पाठः । ३, **'–रभिपूजयन्'** ४. **'अहं च त्वं च एते च वयम्'** इति का.श्री. ।

**(भा.दी.) ताम**िति । हे राजनन्दन, राज्ञः पुत्र श्रीराम, तां सीतां इच्छन्तः राजानः गच्छन्ति हि । गम्लृ गतौ लट् । वयमपि यास्यामः तत्र गमिष्यामः । यातेर्लृट् । अत्र अस्मिन् विदेहदेशे तं महोत्सवं द्रक्ष्यामः । दृशेर्लृट् ॥ २४ ॥

**(सं.चं.)** राजानस्तामिच्छन्तो गच्छन्ति । वयं तु महोत्सवं द्रष्टुमिच्छन्तः । सीतारामविवाहमहोत्सवमित्य-न्तरङ्गम् ॥ २४ ॥

**एवमुक्त्वा मुनिवरो मुनिभिः परिवारितः ।**
**सरामलक्ष्मणः प्रायादुत्तरां दिशमुत्तमाम् ॥ २५ ॥**

**(भा.दी.) एवम**िति । मुनिवरः मुनिश्रेष्ठः विश्वामित्रः एवमुक्त्वा मुनिभिः परिवारितः परिवृतः सन्, सरामलक्ष्मणः रामलक्ष्मणाभ्यां सहितः सन्, उत्तमां उत्कृष्टां उत्तरां दिशं प्रायात् । यातेर्लङ् ॥ २५ ॥

**(सं.चं.)** उत्तमाम् देवभूमित्वात् ॥ २५–७ ॥

**नदराजस्य शोणस्य प्राप्य प्रान्तं महामुनिः ।**
**[1]उवास तत्र तां रात्रिं सह शिष्यैः सराघवः ॥ २६ ॥**

**(भा.दी.) नद**ेति । सराघवः राघवाभ्यां सहितः (महामुनिः) विश्वामित्रः, शिष्यैः सह । पुरुषदेवताकाः सरितो नदा इत्युच्यन्ते । नदानां राजा नदराजस्तस्य, 'राजाहस्सखिभ्यष्टच्' (अ.सू.५.४.९१) इति टच्, शोणस्य शोणनामकस्य नदस्य प्रान्तं समीपं तत् प्राप्य, तत्र शोणतीरे तां रात्रिं उवास निवासमकरोत् । वस निवासे लिट् ॥ २६ ॥

**पुरा कुशिकपुत्त्राणां देशांस्तानवलोकयन् ।**
**कथां स कथनीयानां कथयामास तापसः ॥ २७ ॥**

**(भा.दी.) पुर**ेति । तापसो मुनिर्विश्वामित्रः, पुरा कुशिकस्य कुशिकनाम्नो राज्ञो ये पुत्रास्तेषां तान् शोणनदतीरस्थान् देशान् अवलोकयन् श्रीरामाय प्रदर्शयन् सन्, कथयितुं स्तोतुं योग्याः कथनीयास्तेषाम्, पुण्यकीर्तीनामित्यर्थः, कुशिकपुत्राणां कथां कथयामास । कथ वाक्यप्रबन्धे लिट् ॥ २७ ॥

---
१. 'उषितस्तत्र'

**कुशनाभसुताद् भूपात् कुशपौत्रान्महाबलात् ।**
**गाधिनाम्नो निजं जन्म रामायाऽह स्म[१] कौशिकः ॥ २८ ॥**

**(भा.दी.) कुशेति** । कुशिकस्य गोत्रोद्भवः कौशिकः विश्वामित्रः, कुशस्य कुशनाम्नो राज्ञो यः पौत्रस्तस्मात्, कुशनाभस्य कुशनाभाख्यभूपस्य सुतात्, महद्बलं यस्य स तथा तस्मात्, गाधिरिति नाम यस्य स तथा तस्मात् भूपात् निजं स्वकीयं जन्म उत्पत्तिं श्रीरामाय आह स्म अवदत् । ब्रूञो लट् । ननु कुशध्वजपुत्रो गाधिरिति भागवते कथनाद् विरोध इति चेन्न । कुशनाभकुशध्वजयोः सोदरत्वेन कुशध्वजपुत्रस्यापि गाधेः स्वपुत्रत्वेन कुशनाभपरिगृहीतत्वादिना तत्पुत्रत्वोपपत्तेरित्याद्यभिप्रायेण प्रवृत्तवाल्मीकिरामायणानुसारेणास्य ग्रन्थस्य प्रवृत्तत्वादिति ॥ २८ ॥

**(सं.चं.)** गाधिः कुशपौत्रः । कुशनाभस्य कुशिकापरनाम्नः पुत्रः । गाधेर्विश्वामित्रः ॥ २८ ॥

**प्रातिष्ठन्त ततः प्रातर्ब्राह्मणा राघवान्विताः ।**
**अह्नाय जाह्नवीं प्राप्ता[२] मध्याह्ने विश्रमं ययुः ॥ २९ ॥**

**(भा.दी.) प्रातिष्ठन्तेति** । राघवेण अन्विताः युक्ताः ब्राह्मणाः विश्वामित्राद्याः प्रातः प्रभाते ततः शोणनद-प्रान्तात् प्रातिष्ठन्त अगच्छन् । ष्ठा गतिनिवृत्तौ लङ् । ते च ब्राह्मणाः अह्नां मध्यं मध्याह्नस्तस्मिन् । जह्नोः जह्नुनाम्नो राजर्षेरपत्यं स्त्री जाह्नवी गङ्गा ताम्, अह्नाय वेगेन, 'शीघ्रार्थे झटिति प्राक् द्राक् मङ्क्ष्वह्नाय सपद्यपि' इति वैजयन्ती । प्राप्ताः सन्तः । विश्रमो विश्रमणं तम्, ग्लानिपरिहारार्थमवस्थानमित्यर्थः, ययुः । यातेर्लिट् ॥ २९ ॥

**(सं.चं.)** 'अह्नाय सत्वरं च क्षिप्रं द्रुतमञ्जसा झटिति' इति च । राघवाभ्यामन्विताः ॥ २९ ॥

**सानुजस्तत्र काकुत्स्थो हविर्भुक्त्वाऽमृतोपमम् ।**
**जानंश्च पप्रच्छ मुनिं विज्ञानाय[३] सतां विभुः ॥ ३० ॥**

**(भा.दी.) सानुज** इति । अनुजेन सहितः सानुजः, ककुत्स्थगोत्रोद्भवः काकुत्स्थः, विभुः श्रीरामः, तत्र गङ्गातीरे, अमृतस्य उपमा सादृश्यं यस्य तथा तत् हविः अन्नं भुक्त्वा, जानंश्च सर्वं जानन्नपि, सतां

१. **'स कौशिकः'** २. **'जाह्नवीं प्राप्य मध्याह्ने'**

३. **'ज्ञापनाय सतां विभुः'** इति वि.ती.पाठः । **'सतां प्रभुः'** इति, **'सतां पतिः'** इति च क्वचित् ।

सज्जनानां ज्ञापनं वक्ष्यमाणप्रमेयज्ञापनं तस्मै मुनिं विश्वामित्रं प्रति पप्रच्छ । प्रच्छ जिज्ञासायां लिट् । गङ्गोत्पत्त्यादिके स्वेन पृष्टे मुनिना चाभिहिते तत्रत्यैरन्यैर्मुनिभिः सम्यक् ज्ञातं स्यादित्यभिप्रायेण च कृपाळुना श्रीरामेण गङ्गोत्पत्त्यादिकं विश्वामित्रं प्रति विचारितम्, न त्वज्ञानेनेति भावः ॥ ३० ॥

**(सं.चं.)** यज्ञशिष्टं हविरन्नम् । 'प्राश्य चामृतवद् हविः' इति रामायणे । सतां विभुः सतां विज्ञानाय पप्रच्छ । तेऽपि सामान्यतो जानन्त्येव । विशेषज्ञानाय पप्रच्छ ॥ ३० ॥

**इयं गङ्गा कुतो जाता गां जगाम कथं पुनः ।**
**राघवेणेत्यभिहितो हितायोचे सतामृषिः[१] ॥ ३१ ॥**

**(भा.दी.) इयमि**ति । इयं गङ्गा कुतः कस्मात् पुंसः जाता । पुनः गां भूमिं कथं जगाम । गम्लृ गतौ लिट् । राघवेण इति एवमादिप्रकारेण अभिहितः ऋषिः विश्वामित्रः सतां हितमिष्टं तस्मै ऊचे । वच परिभाषणे लिट् । सर्वज्ञेन श्रीरामेण सज्जनहिताय विचार्यत इति ज्ञात्वैव मुनिनाऽपि सज्जनहितार्थमेव गङ्गोत्पत्त्यादिकं श्रीरामं प्रति प्रोक्तमिति भावः ॥ ३१ ॥

**(सं.चं.)** गां गता गङ्गेति लोकप्रथामाश्रित्य पृच्छति– गां जगाम कथं पुनः? सतां हिताय इत्यभिहितः पृष्टः, सतां हितायैवोचे ॥ ३१ ॥

**अभूतामद्भुतगुणे उभे हिमवतः सुते ।**
**गङ्गाऽगमद् द्युसिन्धुत्वमुमा गिरिशदारताम् ॥ ३२ ॥**

**(भा.दी.) अभूतामि**ति । अद्भुता आश्चर्यभूता गुणा ययोस्ते तथोक्ते, हिमं प्राचुर्येणास्मिन्नस्तीति हिम-वान्, तस्य हिमवत्पर्वतस्येत्यर्थः, उभे सुते अभूताम् । भुवो लुङ् । तयोर्मद्ध्ये गङ्गा दिवः स्वर्गस्य सिन्धुर्नदी, तस्या भावस्तत्त्वं तत्, अगमत् । गम्लृ गतौ लुङ् । उमा पार्वती, गिरौ कैलासे शेत इति गिरिशो रुद्रस्तस्य दारा भार्या तेषां भावस्तत्ता ताम्, 'भार्या जायाऽथ पुम्भूम्नि दाराः' इत्यमरः । अगमदित्यन्वयः ॥ ३२ ॥

**(सं.चं.)** तयोर्ज्येष्ठा गङ्गाऽगमद् द्युसिन्धुत्वम् स्वर्णदीत्वम् । 'स्त्री नद्यां ना नदे सिन्धुः' इत्यभिधानम् ॥

**शिवस्य शिवया सार्द्धं रतियोगोऽन्ववर्त्तत ।**
**दिव्यवर्षसहस्रं च नैकत्रापि पराजयः[२] ॥ ३३ ॥**

१. 'सतां मुनिः'

१. 'पराभवः'

**(भा.दी.) शिवस्ये**ति। (शिवस्य) शिवया पार्वत्या सार्द्धं रतिलक्षणो रमणलक्षणो योगः सम्बन्धः रतियोगः अन्ववर्तत प्रावर्तत। वृतु वर्त्तने लङ्। दिवि भवं दिव्यं वर्षाणां सहस्रं तत्, निरन्तरं दिव्यवर्षसहस्रमित्यर्थः, एकत्राऽपि शिवे शिवायां वा पराजयः वीर्यपातलक्षणः न जातः ॥ ३३ ॥

**(सं.चं.)** रतियोगो मैथुनम्। दिव्यवर्षसहस्रमिति। शतमिति न शतम्। सहस्रमिति न सहस्रम्। शब्दोऽयं प्रायो बहुत्ववचनः। तेन न विरोधः। नैकत्रापि शिवे शिवायामपि पराजयः। रिरंसैव ववृधे नोपरिरंसेत्यर्थः ॥ ३३ ॥

**तद्वीर्य्यभीरुभिर्द्देवैः सुरते विहते हरः।**
**विससर्ज्ज निजं वीर्य्यं जाह्नवीवह्निभूमिषु ॥ ३४ ॥**

**सर्वैरधार्य्यं तद्वीर्य्यं सम्भूतं[1] भूतिदं सताम्।**
**श्रीमान् कुमारः स्कन्दोऽभूच्छिवयोर्न्नन्दनः प्रियः ॥ ३५ ॥**

**(भा.दी.) तदि**ति। तस्य रुद्रस्य यद्वीर्यं रेतस्तस्माद् भीरुभिर्भयशीलैः, उमायास्तद्धरणविषये भयशीलैरित्यर्थः, देवैः इन्द्रादिभिः, सुरतं सुरतिस्तस्मिन् विहते सति, वह्निं प्रेषयित्वा विघातिते सति। शिवायाः सुरतसमये तद्विघातार्थं देवैर्वह्निः प्रेषितः। स च तयोः समीपं जगाम। तं दृष्ट्वा लज्जितयोमया रमणं परित्यज्यावस्थितमिति पौराणिकी प्रसिद्धिः। हरः निजं स्वकीयं तत् वीर्यं रेतः, जाह्नवी गङ्गा सा च वह्निश्च भूमिश्च तासु विससर्ज विसृष्टवान्। सृज विसर्गे लिट्। **सर्वैरि**ति। सर्वाणि समस्तभूतानि तैः अधार्यं धर्तुमशक्यम्, सतां सज्जनानाम्, सम्बन्धमात्रे षष्ठी, भूतिमैश्वर्यं ददातीति भूतिदम्, त्रिधा विभक्तं विभिन्नं तत् वीर्यम्, सम्भूतं सत् मिळितं सत्। श्रिया कान्त्या नित्ययुक्तः श्रीमान्। शिवश्च शिवा च शिवौ तयोः। 'पुमांस्त्रिया' (अ.सू.१.२.६७) इत्येकशेषः। प्रियः नन्दनः पुत्रः कुमारः (स्कन्दः) षण्मुखः अभूत्। भुवो लुङ् ॥ ३४–५ ॥

**(सं.चं.)** वीर्यं रेतः प्रभावश्च। शिवरेतःप्रभावभीतैः। शिवयो रतप्रभावभीतैर्वा। सुरते विहते। 'त्रैलोक्यहितकामार्थं तेजस्तेजसि धारय' (रामा.३६.११) इति, देवैः प्रार्थितो हरः स्वरेतो भूमावुत्ससर्ज। तत्तेजसा भूमिर्जज्वाल। पुनर्देवैरर्थितो वह्निस्तत् स्वीचकार। पुनस्ते तमाहुः– जाह्नव्यामेतत् तेज उत्सृजेति।

१. **'सर्वैरधार्यं सम्भूतं विभक्तं भूतिदम्'** इति वि.ती.पाठः स्यात्।

गङ्गास्रोतोभ्यः प्रसृतमेकत्र सम्भूतं तत् तेजः श्रीमान् कुमारः स्कन्दोऽभूत् । स्कन्दनात् स्कन्दः । 'स्कन्द इत्यब्रुवन् देवाः स्कन्नं गर्भपरिस्रवात्' (३७.२७) इति च । षड्भिराननैः कृत्तिकानां पयः पीत्वा सुकुमारः कुमारो बभूव ॥ ३४–५ ॥

**तं कार्त्तिकेयमाग्नेयं[1] गाङ्गेयं च प्रचक्षते ।**
**सेनापतिं सुरपतिर्य्यं कृत्वा न्यहनद्[2] रिपून् ॥ ३६ ॥**

**(भा.दी.) तमिति** । ज्ञानिनः तं षण्मुखं कृत्तिकानामपत्यं पुमान् कार्त्तिकेयस्तम्, षट् कृत्तिकाभिः स्तनपानस्य कारितत्वात् कृत्तिकापुत्रम्[3] , अग्नेरपत्यं पुमानाग्नेयस्तम्, पार्वतीवियोजनेन क्रुद्धरुद्रेण स्ववदने निक्षिप्तरेतसो धारणासामर्थ्येन गङ्गायां निक्षेपादग्निपुत्रम्, गङ्गाया अपत्यं पुमान् गाङ्गेयस्तम्, अग्निना स्वस्मिन्निक्षिप्तवीर्यधारणासामर्थ्येन गङ्गया शरकानने प्रक्षेपाद् गङ्गापुत्रं च प्रचक्षते प्रवदन्ति । चक्षिङ् व्यक्तायां वाचि लट् । सुरपतिः पुरन्दरः यं षण्मुखं सेनायाः देवसेनायाः पतिं नायकं कृत्वा (रिपून्) तारकादिशत्रून् न्यहनत्[4] जघान । हन हिंसागत्योर्लङ् ॥ ३६ ॥

**(सं.चं.)** एवं तमाग्नेयं गाङ्गेयं कृत्तिकाभिः स्तन्यदानेन वर्धित इति कार्तिकेयमाहुः । सुरपतिर्यं तारकासुरसङ्ग्रामे सेनापतिं कृत्वा रिपूनसुरान् न्यहन् । कोशेषु सर्वत्र न्यहनदित्येव पठन्ति । कथं न्यहनत्? पुरातना मन्त्रद्रष्टार ऋषय एवं प्रायुक्षत । ततः कश्चित् कालं वैयाकरणैर्निराकृतम्, मैवं लोकाः प्रयुक्षतेति । ततः पुनः कतिचन धीराः परावरज्ञा एवं प्रयोक्तुमारेभिरे । स यथा– 'नैनमहनद् वचनाद्धरेश्च' इत्यादि । ततः परेऽपि तेन पूर्वाचार्य-प्रयोगेण प्रभाविताश्छान्दसा बुभूषवस्तमनुसस्रुरिति ॥ ३६ ॥

**वासुदेवप्रसादाय शिवाभ्यां तपसि स्थितम् ।**
**एवंविधा महादेवी गङ्गावतरणं शृणु ॥ ३७ ॥**

**(भा.दी.) वासुदेवेति** । शिवश्च शिवा च शिवौ ताभ्यां वासुदेवस्य प्रसादोऽनुग्रहस्तस्मै, तपसि तपोविषये स्थितं अवस्थितम् । महादेवस्य स्त्री महादेवी गौरी । महती च सा देवी चेति वा । एवं विधा प्रकारो यस्याः सा एवंविधा एतादृशमहिमोपेतेत्यर्थः । गङ्गायाः यदवतरणं स्वर्गाद् भुवं प्रत्यागमनम्, तत् शृणु । श्रु श्रवणे लोट् ॥ ३७ ॥

---

१. **'तं कार्तिकेयं गाङ्गेयमाग्नेयं च'**

२. **'न्यहनद् रिपून्'** इति । छान्दसप्रयोगोऽयम् ।

३. **'कृत्तिकापुत्रस्तम्'**

**(सं.चं.)** विहतमिदं सुरतम् । किं पुनरपि तौ सुरते निरतौ? नेत्याह– वासुदेवप्रसादाय । 'स गत्वा तप आतिष्ठत् पाश्र्वे तस्योत्तरे गिरेः । हिमवत्प्रभवे शृङ्गे सह देव्या महेश्वरः' (३६.२६) इति रामायणे । एवम्प्रभावा महादेवजायोमा । उभयोर्हिमवतः सुतयोरेकस्याः कथा श्रुता । अथ ज्येष्ठसुताया गङ्गाया भूमाव-वतरणकथां शृणु यामपृच्छः ॥ ३७ ॥

**पुरा पादोदकं गङ्गा चक्रिणो विक्रमत्रये ।**
**कुतश्चित्[१] कारणाज्जाता गिरेर्भूयो दिवं गता ॥ ३८ ॥**

**(भा.दी.)** **पुरे**ति । पुरा पूर्वं विक्रमाणां पादविन्यासानां त्रयं तस्मिन् क्रियमाणे सति । चक्रमस्यास्तीति चक्री तस्य विष्णोः पादस्य दक्षिणपादस्य उदकं उदकभूता, विष्णुपादोत्पन्नेत्यर्थः, गङ्गा कुतश्चित् कस्माचित् कारणं निमित्तं तस्मात्, गिरेः हिमवतः जाता सती, कुतश्चित् कारणात् भूयः दिवं स्वर्गम्, 'द्यौर्दिवौ द्वे स्त्रियाम्' इत्यमरः, गता प्राप्ता ॥ ३८ ॥

**(सं.चं.)** पुरा पादोदकं गङ्गा । यदा विष्णुर्बलिनिग्रहाय त्रिविक्रमो बभूव । तदा चक्रिणा हरिणा पादन्यास-त्रये क्रियमाणे एकः पादो द्यामावृत्य ब्रह्माण्डकटाहं बिभेद । तत उद्गता गङ्गा विष्णुपादोदकमित्युच्यते । तथाहि भागवते– 'विष्णोर्विक्रमतो वामपादाङ्गुष्ठनखनिर्भिण्णोर्ध्वाण्डकटाहविवरेणान्तः प्रविष्टा या बाह्यजल-धारा तच्चरणपङ्कजावनेजनारुणकिञ्जल्कोपरञ्जिताऽखिलजगदघमलापहोपस्पर्शनाऽमला साक्षाद् भगवत्पदी-त्यनुपलक्षितवचोभिरभिधीयमानाऽतिमहता कालेन युगसहस्रोपलक्षणेन दिवो मूर्धन्यवततार' इति । ततः कुतश्चित् कारणात् भगवत्सङ्कल्परूपात् हिमवतो गिरेर्दुहिता जाता । पुनर्नदीरूपेण दिवं गता स्वर्गङ्गेत्येव प्रथामाप ॥ ३८ ॥

**भूपोऽभूत् सगरो नाम नारायणपरायणः ।**
**पूर्वजो भवतां पूर्वं तपस्तेपे सुतेच्छया ॥ ३९ ॥**

**(भा.दी.)** पुनः भुवं प्रति भगीरथेनाऽनीतेति वक्तुमुपोद्घातमाचरति– भूप इति । भवतां युष्माकम्, इदं श्रीरामं प्रति विश्वामित्रेणोच्यते, वंश इति शेषः, पूर्वमुत्पन्नः पूर्वजः, नारायण एव परायणं परमाश्रयो यस्य स तथोक्तः । 'परायणमभिप्रेते तत्परे परमाश्रये' इति वैजयन्ती । गर्भावस्थायां सपत्नीदत्तविषेण सहोत्पन्न-त्वात् सगर इति नाम प्रसिद्धः नृपः अभूत् । स सगरः पूर्वं सुतेषु इच्छया पुत्रोत्पत्तीच्छयेत्यर्थः, तपः तेपे चक्रे । तप सन्तापे लिट् ॥ ३९ ॥

१. **'कारणस्य रहस्यत्वात् कुतश्चिदित्युक्तम्'** इति का.श्री. ।

**(सं.चं.)** भवतां पूर्वजः सगरः, पूर्वं गङ्गावतरणादपि पूर्वम्, यदा भुवि न गङ्गाऽऽस, तपस्तेपे ॥ ३९ ॥

**एकस्यां तस्य पुत्रोऽभूदेको वंश्योऽसमञ्जसः ।**
**अपरस्यां पराक्रान्तं पुत्त्रषष्टिसहस्रकम् ॥ ४० ॥**

**(भा.दी.) एकस्यामि**ति । तस्य सगरस्य एकस्यां केशिनीनाम्न्यां भार्यायां वंशं करोतीति वंश्यः, वंशप्रवर्तक इत्यर्थः, असमञ्जसः असमञ्जसनामकः एकः पुत्रः अभूत् । अपरस्यां अन्यस्यां सुमतिनाम्न्यां भार्यायां पराक्रान्तं पराक्रमयुक्तं षष्टीनां[१] सहस्राणां समाहारः षष्टिसहस्रम्, षष्टिसङ्ख्याकं सहस्रमिति वा । पुत्राणां षष्टिसहस्रम्, तदेव सहस्रकम्, अभूत् ॥ ४० ॥

**(सं.चं.)** तपसा तुष्टो नारायणो भृगुद्वारा वरं ददौ । तत एकस्यां ज्यायस्यां केशिन्याख्यायामेकः पुत्रोऽभूदसमञ्जसनामा ए भगवत्येव समञ्जस इति । यो वंश्यो वंशधरो बभूव । अपरस्यां कनीयस्यां भार्यायां सुमत्याख्यायां पुत्राणां षष्टिसहस्रकम् ॥ ४० ॥

**स योगी सङ्गसंविग्नो नृशंसत्वं प्रकाशयन् ।**
**एकः[२] पुत्त्रो जातपुत्त्रः पित्रा त्यक्तोऽगमद् वनम् ॥ ४१ ॥**

**(भा.दी.) स** इति । योगः भगवति मनोयोग अस्यास्तीति योगी, श्रीहरिध्यानशील इत्यर्थः[३] । अत एव सङ्गाद् विषयसंसर्गात् संविग्नो भीतः । विषयसंसर्गस्य संसारहेतुत्वात् तत्रानासक्त इत्यर्थः । जातः पुत्रो यस्य स तथोक्तः । एकश्चासौ पुत्रश्च एकपुत्रः सः असमञ्जसः, नृशंसस्य क्रूरस्य भावो नृशंसत्वं तत्, 'नृशंसो घातकः क्रूरः' इत्यमरः, प्रकाशयन् प्रकटयन् सन् । स्वस्य सत्स्वभावत्वेऽपि राज्यकोशादिकम-नवरतं भगवत्स्मरणादेर्विरोधीत्यतः परित्यक्तव्यमिति मनीषया स्वात्मानं पित्रा परित्यक्तं कर्तुं नागरिकबालकानां नद्यां प्रक्षेपादिना स्वस्य क्रूरत्वं प्रकटितमिति भावः । अत एव स्वपुत्राभिप्रायानभिज्ञेन पित्रा सगरेण त्यक्तः, क्रूरकर्मकृदयं राज्यभाक् न भवतीति नगरान्निस्सारितः सन्, परं परमात्मानम्, 'परोऽरिः परमात्मा च' इति वैजन्यती, अगमत् । गम्लृ गतौ लुङ् । निरन्तरभगवद्ध्यानेन सम्पादितपरमप्रसादेन श्रीनारायणलोकं प्रापेत्यर्थः ॥ ४१ ॥

---

१. **'षष्टेः सहस्राणाम्'** इति युक्तम् । २. **'एकपुत्रो जातपुत्रः पित्रा त्यक्तोऽगमत् परम्'** इति वि.ती.पाठः ।

३. **'योगी अणिमादियोगवान् । जातिस्मरणयोगवानिति वा'** इति का.श्री. ।

**(सं.चं.)** यः स एकः पुत्रो जातः । जातः अंशुमान्नाम पुत्रो यस्य । बालान् गृहीत्वा सरय्वा जले प्रक्षिप्य प्रहसन्, स्वस्य मृषैव नृशंसत्वं प्रकाशयन् । कुतः? यतः सङ्गसंविग्नः । विषयसङ्गात् संविग्नो भीतः । ओ विजी भयसञ्चलनयोः । 'नृशंसः क्रूरकर्मकृत्' इत्यभिधानम् । केवलं भगवत्येव मनोयोगी ॥ ४१ ॥

**अदीक्षताश्वमेधेन सगरः स कदाचन ।**
**शतक्रतुरदृश्योऽस्य मेद्ध्यं हयमपाहरत् ॥ ४२ ॥**

**(भा.दी.) अदीक्षते**ति । सः सगरः, कदाचन कस्मिंश्चित् काले, अश्वमेधोऽश्वमेधयज्ञस्तेन, अदीक्षत दीक्षामकरोत् । दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु लङ् । शतं क्रतवो यस्य स तथा इन्द्रः अदृश्यः सन् अस्य सगरस्य मेद्ध्यो यज्ञीयस्तं[१] अश्वं शततमाश्वं अपाहरत् अपहृतवान् । हृञ् हरणे लङ् । यथेन्द्रः शतक्रतुरेवमहमपि शतक्रतुः स्यामित्यभिप्रायेण मखेषु क्रियमाणेषु शतक्रतुरिति स्वनामरक्षणार्थमन्तिममखाश्व इन्द्रापहृत इति भावः ॥ ४२ ॥

**(सं.चं.)** यागाङ्गतया मेध्यम् । 'शुचि मेध्यं पवित्रं च पुण्यं पावनमुच्यते' इति च ॥ ४२ ॥

**मेद्ध्यमश्वमभीप्सन्तः सागरा अखनन् भुवम्[२] ।**
**आ समुद्रादहो तस्मात् सागरः[३] सागरोऽभवत् ॥ ४३ ॥**

**(भा.दी.) मेद्ध्यमि**ति । मेद्ध्यो यज्ञीयस्तं अश्वं अभीप्सन्तः प्राप्तुकामाः सगरस्य अपत्यानि पुमांसः सागराः षष्टिसहस्रसङ्ख्याकाः पुत्राः समुद्रात् आ पर्यन्तं भुवं भूमिं अखनन् । खनु अवदारणे लङ् । अहो तस्मात् कारणात् सागरः समुद्रः सागरः सगरपुत्रः अभवत् । सगरो यज्ञार्थमश्वस्य भूप्रदक्षिणीकरणसमये समुद्रतीरेऽ-श्वमपहृतं श्रुत्वा स्वपुत्रैस्तं खानयामास । अतः सगरपुत्रकृतबहुप्रदेशवत्त्वात् सागरनामधेयः समुद्रोऽभूदिति हि पौराणिकी प्रसिद्धिः ॥ ४३ ॥

**(सं.चं.)** सागराः सगरपुत्राः षष्टिसहस्राणि । आ समुद्रात् समुद्रादारभ्य । भुवमखनन् । तेन समुद्रः पुनरपि विस्तृतो बभूव । तदेतत् सगरपुत्रैः खाततत्वमेव सागरस्य सागरत्वम् ॥ ४३ ॥

**कपिलाख्यं परञ्ज्योतिरश्वचोरोऽयमित्यमी ।**
**अभिपेतुर्जिघांसन्तः पतङ्गाइव पावकम् ॥ ४४ ॥**

---

१. **'मेध्यं पवित्रम् । मेधो यज्ञः । मेधस्य साधनं मेध्यम् । यज्ञसाधनमिति वा'** इति का.श्री. ।

२. **'अखनन्महीम्'**

३. **'सागरैः सागरोऽभवत्'**

**(भा.दी.) कपिलेति** । अमी सगरात्मजाः, कपिल इति आख्या यस्य स तथा तत् परं सर्वोत्तमं ज्योतिः तेजोरूपं ब्रह्म, अयं पुरुषः अश्वचोर इति बुद्ध्या जिघांसन्तः हन्तुकामाः सन्तः, पावकं वह्निं पतङ्गाइव शलभाइव अभिपेतुरभिजग्मुः । पत्लृ पतने लिट् ॥ ४४ ॥

**(सं.चं.)** खनित्वा भुवं रसातळं प्रविष्टाः सागरास्तत्र कपिलाख्यं वासुदेवमपश्यन्, तपस्यन्तमिव चक्षुषी निमील्य स्थितम् । नातिदूरे च मेध्यमश्वम् । तेनायमश्वचोर इति भ्रान्ताः ॥ ४४ ॥

**वासुदेवस्य देवस्य लोचनोन्मीलनानलः ।**
**अदहत् तान्न तच्चित्रं सर्वसंहारिणो हरेः ॥ ४५ ॥**

**(भा.दी.) वासुदेवस्येति** । देवस्य वासुदेवस्य कपिलाख्यस्य विष्णोः लोचनयोः यदुन्मीलनं विकसनं तस्मात् सञ्जातोऽनलोऽग्निः, तान् सगरपुत्रान् अदहत् । दह भस्मीकरणे लङ् । एतच्च न तस्य चित्रमित्याह– **न तदिति** । सर्वं संहर्तुं शीलमस्यास्तीति तथोक्तस्तस्य हरेः तत् नेत्रोन्मीलनमात्रेण किञ्चिद्रुषा षष्टिसहस्रसगरपुत्राणां भस्मीकरणम्, न चित्रमाश्चर्यम् । सगरपुत्राणां सकलजगन्मद्धये किञ्चिन्मात्रत्वादिति भावः ॥ ४५ ॥

**(सं.चं.)** कपिलवासुदेवस्य लोचनोन्मीलनेन प्रकटः कटाक्षानलः । सहुङ्कारः । 'रोषेण महताऽऽविष्टो हुङ्कारमकरोत् तदा । ततस्तेनाप्रमेयेन कपिलेन महात्मना । भस्मराशीकृताः सर्वे काकुत्स्थ सगरात्मजाः' (४०.३०) इति रामायणे ॥ ४५ ॥

**अश्वान्वेषी गतः पार्श्वमंशुमानासमञ्जसिः ।**
**ननाम तस्मै नाथाय क्षम्यतां भगवन्निति[१] ॥ ४६ ॥**

**(भा.दी.) अश्वेति** । अश्वमन्वेष्टुं विचारयितुं शीलमस्यास्तीति तथोक्तः, असमञ्जसस्यापत्यं पुमानासमञ्जसिः, अंशुमान् अंशुमन्नामकः, पार्श्वं कपिलसमीपं तत् गतस्सन्, हे भगवन् कपिल, क्षम्यतां क्षमा क्रियताम् । क्षमूष् सहने लोट् । इति वदन् सन् नाथाय सर्वस्वामिने (तस्मै) कपिलाय ननाम । णमु प्रह्वत्वे शब्दे च लिट् ॥ ४६ ॥

**(सं.चं.)** कपिलवासुदेवस्य पार्श्वं गतः । आसमञ्जसिः, असमञ्जसस्यापत्यमंशुमान् ॥ ४६ ॥

**अनुग्रहादनुग्रां गां करुणामृतवर्षिणीम् ।**
**ऊचे देवो हयस्तात यज्ञीयो नीयतामिति ॥ ४७ ॥**

---

१. 'क्षम्यतांक्षम्यतामिति'

**(भा.दी.) अन्वि**ति । देवः कपिलः, अंशुमति योऽनुग्रहः तस्मात्, उग्रा न भवतीत्यनुग्रा ताम्, करुणैवामृतं तद्वर्षितुं शीलमस्या अस्तीति तथोक्ता ताम्, दयापूर्णामित्यर्थः, तात अंशुमन्, यज्ञसम्बन्धी यज्ञीयः हयः नीयताम्, इति गां वाचं ऊचे । वच परिभाषणे लिट् ॥ ४७ ॥

**(सं.चं.)** हितकरणेच्छा अनुग्रहः । अनुग्रां शान्तामक्रोधां गां वाचमूचे कपिलदेवः । किमिति– तात वत्स, यज्ञीयो हयो नीयतामिति ॥ ४७ ॥

**आश्वानीय कुमारोऽश्वं पितामहमखं महान् ।**
**साधयामास शान्तात्मा [1]शमी हि स्यात् पराक्रमी ॥ ४८ ॥**

**(भा.दी.) आश्वि**ति । कुमारः कुमारवयस्कः, शान्तः शमोपेत आत्मा मनो यस्य स तथोक्तः, महान् गुणतः श्रेष्ठः अंशुमान्, पूर्वमपहृतो योऽश्वस्तम्, आशु आनीय पितामहस्य पितुः पितुः सगरस्य यो मखस्तं साधयामास । राध साध संसिद्धौ लिट् । अंशुमतः यज्ञसाधकत्वे हेतुभूतमसाधारणगुणमाह– **शमी**ति । शमोऽस्यास्तीति शमी, क्षमावानित्यर्थः, पराक्रमोऽस्यास्तीति पराक्रमी, प्रारब्धकार्यपर्यवसानवानित्यर्थः, स्याद्धि भवेद्धि । अस्तेर्लिङ् । क्षमालक्षणगुणोपेतत्वादेव स्वपितामहयज्ञमश्वमानीय साधितवानिति भावः । शमी भगवद्ध्यानशील इति वा ॥ ४८ ॥

**(सं.चं.)** महान् देवतोषणेन महाकार्यसाधनात् । तत्रार्थान्तरं न्यस्यति– शमी हि स्यात् पराक्रमी । 'शमः क्रोधाद्यनुत्थितिः' इत्यभिदधति । अक्रुध्यन् हि पराक्रमी स्यात् । स हि पराक्रमी यः प्रतिकूलमपि प्रसङ्गं स्वानुकूलतया परिवर्तयति । क्रोधेन जनितशक्तिह्रासो दुर्बलः स्वकार्यसाधनेऽक्षमो भवति । शान्तमनाः सर्वं साधयति । क्रोधः सर्वं विपर्यासयति । एवं शमी पराक्रमी भवति । पराक्रमी च शमी ॥ ४८ ॥

**स्वर्ग्गमार्ग्गं गमयितुं ब्रह्मदण्डहतान् पितॄन् ।**
**स द्विजेन्द्राज्ञया तेपे तपो गङ्गावतारणम् ॥ ४९ ॥**

**(भा.दी.) स्वर्गे**ति । सः अंशुमान् ब्रह्मणो ब्राह्मणस्य कपिलस्य यो दण्डः दण्डनलक्षणं शासनं तेन निमित्तेन हतान् । 'दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे दमे' इति वैजयन्ती । कपिलद्रोहनिमित्तेन हतानि-

१. 'क्षमी हि स्यात् पराक्रमी'

त्यर्थः । पितॄन् स्वपितृभूतान् सगरपुत्रान् स्वर्गस्य मार्गस्तं गमयितुं प्रापयितुं द्विजानां पक्षिणामिन्द्रो गरुडस्तस्य आज्ञया, गङ्गाया अवतरणमागमनं येन तथोक्तं तत्, भुवं प्रति गङ्गावतरणहेतुभूतमित्यर्थः, तपस्तेपे चक्रे । तप सन्तापे लिट् । ब्रह्मदण्डहतानां तेषां जलक्रियां कर्तुकाम आश्रमे जलाशयं नापश्यत् । तदा– 'विसार्य निपुणां दृष्टिं ततोऽपश्यत् खगाधिपम् । पितॄणां मातुलं राम सुपर्णमचलोपमम् । स चैनमब्रवीद् वाक्यं वैनतेयो महाबलः । मा शुचः पुरुषव्याघ्र वधोऽयं लोकसम्मतः । कपिलेनाप्रमेयेन दग्धा हीमे महाबलाः । सलिलं नार्हसि प्राज्ञ दातुमेषां हि लौकिकम् । गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ । तस्यां कुरु महाबाहो पितॄणां तु जलक्रियाम्'(४१.१६–१९) इत्यादिरामायणवाक्यमनुरुद्ध्य सुमतिपुत्राणां सागराणां मातुलेन गरुडेन गङ्गावतरणार्थं तपः कुर्वित्युक्तत्वावगमाद् द्विजेन्द्राज्ञयेत्यस्य गरुडाज्ञयेत्यर्थः । यद्वा 'अश्वोऽयं नीयतां वत्स पितामहपशुस्तव । इमे च पितरो दग्धा गङ्गाम्भोऽर्हन्ति नेतरत्' इति भागवतवाक्यानुसारेण द्विजेन्द्राज्ञया कपिलाज्ञयेति वाऽर्थः । अविरोधस्तु कल्पभेदेनैकत्रोभयानुक्त्या वेत्यवगन्तव्यम् ॥ ४९ ॥

**(सं.चं.)** ब्रह्मदण्डः कपिलकृता शिक्षा । द्विजेन्द्रस्य कपिलस्य वैनतेयस्य चाऽज्ञया । काश्यपतनया हि सुमतिर्वैनतेयभगिनी । तेन स मातुलोंऽशुमतः । सोऽपि स्वभागिनेयान् षष्टिसहस्राणि कपिलनेत्राग्निदग्धानुद्दिधीर्षुः कृपयांऽशुमन्तं तेषां तरणोपायं गङ्गावतरणमाचष्ट । गङ्गाम्भसा पितॄंस्तर्पयेति कपिलदेव उवाचेति पुराणेषु । वैनतेय इति रामायणे । उभयसङ्गमनाय द्विजेन्द्राज्ञयेत्याह । पक्षीन्द्र इति वैनतेयो द्विजेन्द्रः । कपिलोऽपि देवहूत्यां कर्दममुनेर्जात इति द्विजेन्द्रः । द्विजेन्द्रयोराज्ञया । उभावप्यूचतुः । तेन न विरोध इत्यर्थः । गङ्गामवतारयतीति तादृशं तपः ॥ ४९ ॥

**कालधर्म्मं गते तस्मिन्नकृतार्त्थे नरेश्वरे ।**
**तत्सुते च दिलीपाख्ये तस्थौ तपसि तत्सुतः ॥ ५० ॥**

**(भा.दी.) कालेति** । अकृतः अनिष्पादितः अर्थः गङ्गावतरणलक्षणं प्रयोजनं येन स तथा तस्मिन् नरेश्वरे राज्ञि अंशुमति, कालधर्मं मरणम्, 'स्यात्पञ्चत्वं कालधर्मो दिष्टान्तम्' इत्यमरः, गते सति, तत्सुते अंशमत्सुते दिलीपाख्ये च कालधर्मं गते सति, तस्य दिलीपस्य सुतस्तत्सुतः भगीरथः तपसि तस्थौ । स्थाधातोर्लिट् ॥ ५० ॥

**(सं.चं.)** नरेश्वरेंऽशुमति । अत तत्सुतो दिलीपो गङ्गावतारणं तपस्तेपे । तस्मिन्नप्यकृतार्थे कालधर्मं गते तत्सुतो भगीरथस्तपसि तस्थौ ॥ ५० ॥

**प्रसादाद् ब्रह्मणो गङ्गां प्राप्य[१] राजा भगीरथः ।**
**तस्याः पतन्त्या भर्त्तारं त्रिलोक्यां नाभ्यपद्यत ॥ ५१ ॥**

**(भा.दी.) प्रसादा**दिति । भगीरथः भगीरथनामा राजा, ब्रह्मणश्चतुर्मुखस्य प्रसादोऽनुग्रहस्तस्मात्, गङ्गां प्राप्य, स्वर्गादधोऽवतरणलक्षणं वरं प्राप्येत्यर्थः, स्वर्गादधः पतन्त्याः तस्याः गङ्गायाः भर्तारं धारकं पुरुषं त्रिलोक्यां नाभ्यपद्यत न लब्धवान् । पद गतौ लङ् ॥ ५१ ॥

**(सं.चं.)** भर्तारं वेगं निरुध्य धारयितारम् ॥ ५१ ॥

**विष्णुपद्या धृतौ योग्यं वैष्णवाग्रेसरं हरम् ।**
**तोषयित्वैव तपसा तामवातारयन्नदीम् ॥ ५२ ॥**

**(भा.दी.) विष्ण्वि**ति । भगीरथः विष्णुपद्याः गङ्गायाः धृतौ धारणे योग्यम्, विष्णोर्भक्ताः वैष्णवास्तेषु अग्रेसरः श्रेष्ठस्तम्, 'अग्रेसरमुत्तमं सत्तमं च' इति हलः, हरं रुद्रम्, तपसा (एव) तोषयित्वा तां नदीं गङ्गां अवातारयत् स्वर्गादवतारयामास । तॄ प्लवनतरणयोः लङ् ॥ ५२ ॥

**(सं.चं.)** विष्णुपद्या गङ्गाया धृतौ धारणे । वैष्णवाग्रेसर एव हि विष्णुपादोदकं शिरसि धर्तुमलम् ॥५२॥

**तां हारगौरीमतिचित्रयात्रां जह्नोश्च[२] कन्यात्वमुपागतां सः ।**
**नीत्वा तदम्भःपरिषिक्तदेहं निनाय नाकं निजतातजातम् ॥ ५३ ॥**

**(भा.दी.) तामि**ति । सः भगीरथः, हारवत् मुक्तामालेव गौरीं श्वेताम्, अत्यन्तं चित्रा आश्चर्यभूता यात्रा गतिर्यस्याः सा तथा ताम्, जह्नोर्जह्नुनामकस्य राजर्षेः, कन्यात्वं सुतात्वं च उपागतां तां गङ्गाम्, नीत्वा यत्र सगरपुत्राणां देहपातो जातस्तद्देशं प्रति प्रापयित्वा[३], तस्या गङ्गाया यदम्भस्तेन परिषिक्ताः प्लाविताः

---

१. **'अनेन भगीरथः प्रथमं तपः कृत्वा चतुर्मुखं प्रसाद्य तत्प्रसादात् गङ्गां प्राप्य 'त्वमागच्छ' इति गङ्गां प्रत्युक्तवान् । गङ्गायाश्चाधः पतन्त्याः 'मम धारकं पुरुषं सम्पादय' इत्युक्तं पुरुषं त्रिलोक्यां नाभ्यपद्यतेत्युक्तं भवति'** इति का.श्री. ।

२. अत्र वि.भू.च का.श्री चेत्युभावपि व्याचक्षते– **'भीमस्तु विजयस्याथ काञ्चनो होतृकस्ततः। तस्य जह्नुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत्'** (९.१३.३) **इति श्रीमद्भागवते राजवंशकथनसमये कथनात् जह्नुरिति ब्रह्मर्षिर्न भवत्येव'** इति । तेन, केनापि पूर्वव्याख्यात्रा ब्रह्मर्षिरिति कथितं स्यादिति भाति ।

३. **'प्रापय्य'** इति युक्तम् ।

देहा यस्य तत्तथा तत्, निजाः स्वकीयाः ये ताताः पितरस्तेषां जातम्, जातं समूहस्तत्, नाकः स्वर्गस्तं प्रति निनाय प्रेषयामास । नीञो लिट् । भगीरथेन स्वपितृपितामहाभ्यामारब्धं कार्यमवश्यं साधनीयमित्यभि-निवेशेन ब्रह्माणं प्रति महत्तपोऽकारि । ततो गङ्गावतरणलक्षणं वरं लब्ध्वा तस्याः पातेन यथा भूभेदो न स्यात् तथा गङ्गाधारणसमर्थं रुद्रं च प्रसाद्य रुद्रेण तद्धारणे कारिते सति तज्जटाजूटादधः पतन्ती प्रसभं भगीरथ-मनुससार । तदा सदश्वयुक्तेनातिशीघ्रगामिना रथेन भगीरथो जह्न्वाश्रमसमीपे जगाम । तदा स्वयज्ञवाटं गङ्गयोन्मज्यमानं दृष्ट्वाऽसहिष्णुना जह्नुना भगवदनुद्ध्यानजनितयोगसामर्थ्येन तत्पानमकारि । तदा भगीरथादिभिः प्रसादितो जह्नुः स्वदक्षिणकर्णेन[१] गङ्गां विसर्जितवानिति जह्नुकन्यात्वं प्राप्तेति पौराणिकी प्रसिद्धिः ॥ ५३ ॥

**(सं.चं.)** मुक्ताहारगौरीं धवळगङ्गाम् । जह्नोश्च कन्यात्वमुपागताम् । 'यतो भगरीथो राजा ततो गङ्गा यशस्विनी । जगाम सरितां श्रेष्ठा सर्वपापविनाशिनी । ततो हि यजमानस्य जह्नोरद्भुतकर्मणः । गङ्गा सम्प्लावयामास यज्ञवाटं महात्मनः । तस्यावलेपनं ज्ञात्वा क्रुद्धो यज्वा तु राघव । अपिबच्च जलं सर्वं गङ्गायाः परमाद्भुतम् । ततो देवाः सगन्धर्वा ऋषयश्च सुविस्मिताः । पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् । गङ्गां चापि नयन्ति स्म दुहितृत्वे महात्मनः । ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत् पुनः । तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च' (४३.३३–८) इति हि रामायणे । भस्मतामापन्नं देहम् । पादत्रये इन्द्रवज्रा । तुरीयपादे चोपेन्द्रवज्रेत्युपजातिश्छन्दः ॥ ५३ ॥

**हरिचरणसरोजसङ्गिनीयं हरति महच्च मलं न चित्रमेतत् ।**
**श्रवणमननकीर्त्तनानि विष्णोः परमपदाय मनोभिराम राम ॥ ५४ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**बालकाण्डे पञ्चमः सर्गः ॥**

—०—

**(भा.दी.) हरीति** । मनसः अभिराम मनोहर, श्रीराम, हरेश्चरणः सरोजमिव तस्य सङ्गोऽस्या अस्तीति तथोक्ता, इयं गङ्गा, महत् (च) मलं पापम्, 'मलं किट्टाघयोश्चास्त्री' इति वैजयन्ती, हरति नाशयति । हृञो लट् । इति यत्, एतत् महापापहरणं[२] चित्रमाश्चर्यं न भवति । यतः विष्णोः श्रीनारायणस्य श्रवणं

१. **'जह्नुः ऊरुं भित्त्वा गङ्गां विससर्ज'** इति का.श्री. ।
२. **'–पापापहरणम्'**

तन्माहात्म्यश्रवणं तच्च, मननं तद्विचारणं[1] तच्च, कीर्तनं तन्नामादिकथनं तच्च तानि। परममुत्तमं यत्पदं स्थानं तस्मै, मोक्षायेत्यर्थः, भवन्तीति शेषः। अतो न चित्रमित्यन्वयः ॥ ५४ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां बालकाण्डे पञ्चमः सर्गः ॥**

—०—

**(सं.चं.)** महच्च मलमान्तरम्। विष्णोर्गुणानां श्रवणमननकीर्तनानि। विष्णोः परमपदाय परमपदप्राप्तये साधनानि भवन्ति। इयं तु संसारमेव हरतीति हरेः चरणसङ्गिनी मलं हरतीति किमु चित्रम्? मनस्यभिमुखीभूय रमयतीति मनोभिरामः। पुष्पिताग्रा छन्दः ॥ ५४ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां बालकाण्डे पञ्चमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १९५+५४=२४९]

१. 'तद्विचारः'

## षष्ठः सर्ग्गः

**इत्थं कथासङ्कथनैः पुण्यश्लोकानुवर्त्तिनाम् ।**
**क्षणदाऽभूत् क्षणसमा सरामाणां द्विजन्मनाम् ॥ १ ॥**

**(भा.दी.)** श्रीरामसन्निधौ तद्भक्तकीर्त्यनुकीर्तनपराणामृषीणां सा रात्रिः क्षणसमा बभूवेत्याह–**इत्थमि**ति । पुण्यः शोभनः श्लोकः कीर्तिर्यस्य रामस्य स पुण्यश्लोकः, तमनुवर्तितुं शीलमेषामस्तीति तथोक्तास्तेषाम्, रामेण सहिताः सरामास्तेषाम्, द्विजन्मनां ब्राह्मणानाम्, इत्थं कथायाः गङ्गावतरणादिकथायाः सङ्कथनैः, क्षणदा रात्रिः, क्षणेन समा तुल्या अभूत् । समग्राऽपि सा रात्रिः कथासङ्कथनलोलुपानां क्षण इवातीतेति भावः ॥ १ ॥

**(सं.चं.)** पुण्यश्लोको भगवान् । तदनुवर्तिनां भगवद्भक्तानां कथासङ्कथनैः । ज्ञानसाधनं कथनं सङ्कथनम् । प्रसङ्गसङ्गतं कथनं सङ्कथनम् । पुण्यश्लोकानुवर्तिनां द्विजन्मनां विश्वामित्रादीनाम् । क्षणदा निशा । 'क्षपा त्रियामा क्षणदा निशीथिनी' इत्यभिधानम् ॥ १ ॥

**नानामुनियुतौ नावा कोसलेन्द्रौ सकौशिकौ ।**
**उत्तरं तीरमुद्दिश्य तेरतुः सुरनिम्नगाम् ॥ २ ॥**

**(भा.दी.) नाने**ति । नानाविधतपोयुक्तत्वान्नानाविधा ये मुनयस्तैः युतौ युक्तौ, सकौशिकौ विश्वामित्रसहितौ, कोसलानां कोसलविषयाणामिन्द्रौ श्रीरामलक्ष्मणौ, उत्तरं उत्तरभागस्थं तत् तीरं उद्दिश्य नावा द्रोण्या सुरनिम्नगां गङ्गां तेरतुः । तॄ प्लवनतरणयोर्लिट्[1] ॥ २ ॥

**(सं.चं.)** दक्षिणतीरादुत्तरतीरं गन्तुम् । पूर्ववाहिनीं गङ्गां तेरतुः ॥ २–३ ॥

**वैशालीं नाम नगरीं विशालेन पुरा कृताम् ।**
**चारुशालां विशालां च विविशुस्ते महोदयाम् ॥ ३ ॥**

---

१. 'तरतेर्लिट्'

**(भा.दी.) वैशालीमि**ति । ते श्रीरामाद्याः, विशालेन विशालनामकभूपेन पुरा कृतां कारिताम्, चारवः शालाः गृहाणि यस्यां सा तथा ताम्, 'शाला वेश्म निवेशनोदवसिते प्रोक्ते' इति हलः, विशालाम्, महानुदयः ऐश्वर्याद्यभ्युदयो यस्यां सा तथा (ताम्), विशालेन कृतत्वाद्वैशालीं नाम प्रसिद्धां नगरीं विविशुश्च । विशतेर्लिट् ॥ ३ ॥

**विशालस्य नृपस्याऽदिं राघवायाभ्यधान्मुनिः ।**
**तस्य वंशं च यद्वंश्यैर्वैशाली शुशुभे पुरी ॥ ४ ॥**

**(भा.दी.) विशालस्ये**ति । मुनिः विश्वामित्रः, विशालस्य विशालनाम्नो नृपस्य, आदिः उत्पत्त्यादिपूर्वोदन्तस्तम्, श्रीराघवाय अभ्यधात् अकथयत् । धाधातोर्लुङ् । तद्वंशकथनस्य का सङ्गतिरित्यत आह– **यदि**ति । यस्य विशालस्य वंशस्तस्मिन् भवाः यद्वंश्यास्तैः नृपैः, वैशाली वैशालीनाम्नी पुरी शुशुभे, शुभ दीप्तौ लिट्, तस्य विशालस्य वंशस्तं च अभ्यधात् । अभिपूर्वो धारणाद्यर्थकोऽपि कथनार्थकः ॥ ४ ॥

**(सं.चं.)** आदिमुत्पत्तिकथाम् ॥ ४ ॥

**ममन्थुरम्बुधिं दौग्धं[१] पूर्वं सर्वे सुरासुराः ।**
**तत्राऽसीन्मन्दरो मन्था नेत्रं नेत्रश्रुतीश्वरः ॥ ५ ॥**

**(भा.दी.)** विशालस्योत्पत्तिं वक्तुं तदुपयुक्तमितिहासमाह– **ममन्थु**रित्यादिना । पूर्वं सर्वे सुरासुराः दुग्धानां सम्बन्धी दौग्धस्तं अम्बुधिं ममन्थुः । मन्थ विलोडने[२] लिट् । तत्र मथनकर्मणि मन्दरः मन्दराख्यपर्वतः मन्थाः मथनदण्डः आसीत् । अस्तेर्लङ् । नेत्रं चक्षुरेव श्रुतिः श्रोत्रं येषां ते सर्पाः ते तथोक्तास्तेषामीश्वरः वासुकिः, 'श्रुतिर्वेदे श्रवस्यपि' इति वैजयन्ती, नेत्रं मथनदण्डपाशः, 'नेत्रं नाड्यां तरोर्मूले वस्त्रे दृशि मथो गुणे' इति च, आसीत् ॥ ५ ॥

**(सं.चं.)** नेत्रश्रुतयश्चक्षुःश्रवसः सर्पाः । तेषामीश्वरो वासुकिर्नेत्रं मन्थानरज्जुः । 'नेत्रं पट्टे मन्थगुणे तरुमूले विलोचने' इति मङ्खः ॥ ५ ॥

**सहस्रहस्तो भगवान् स्थिरीचक्रेऽद्रिमुद्गतम् ।**
**अधस्तादपि गच्छन्तं कच्छपः करुणाकरः ॥ ६ ॥**

---

१. **'–रम्बुधिं दोग्धुम्'**

२. मन्थतिर्भ्वादौ पठ्यते– **मन्थति । ममन्थ ।** क्र्यादावपि – **मथ्नाति । ममन्थ ।**

**(भा.दी.) सहस्रे**ति । सहस्रसङ्ख्याका हस्ता यस्य स तथा भगवान् अजितनाम्नाऽवतीर्णो हरिः, ऊर्ध्वं गत उद्गतस्तम्, अद्रिं मन्दरं स्थिरीचक्रे । मथनसमये यथोर्ध्वदेशं न गच्छति तथा गृहीतवा-नित्यर्थः । अधस्तादपि अधोभागेऽपि गच्छन्तं मन्दरं करुणाया आकर आश्रयः श्रीहरिः कच्छपः कूर्मरूपी सन् स्थिरीचक्र इत्यन्वयः । देवेषु विद्यमानकरुणावशादेव कच्छपाद्यनेकरूपं धृत्वाऽद्रिवहनादिकं लीलया करोतीति भावः ॥ ६ ॥

**(सं.चं.)** सहस्रहस्तोऽनन्तबाहुर्नारायणोऽजितात्मा उपरि स्थिरीचक्रे । कच्छपोऽधस्तात् स्वपृष्ठे दधत् स्थिरीचक्रे ॥ ६ ॥

**सुरासुरेषु श्रान्तेषु सङ्गृह्याहिमिहाजितः ।**
**मन्दरं [1]स ममन्थाथ चलत्कङ्कणकुण्डलः[2] ॥ ७ ॥**

**(भा.दी.) सुरे**ति । अथ इह मथनकर्मणि सुरासुरेषु श्रान्तेषु सत्सु, अजितः अजितनाम्नाऽवतीर्णः श्रीहरिः, अहिर्वासुकिस्तं सङ्गृह्य, कङ्कणानि करभूषणानि तानि च कुण्डले च कङ्कणकुण्डलानि चलन्ति तानि यस्य स तथा सन्, मन्दरं ममन्थ परिवर्तयामास । मन्थ विलोडने लिट् ॥ ७ ॥

**(सं.चं.)** अजितश्चाक्षुषमन्वन्तरीय उपेन्द्रः । स्वयमहिं सङ्गृह्य मन्दरं ममन्थ ॥ ७ ॥

**चन्द्रेन्दिरादयो जाताः सरसोऽप्सरसां गणः[3] ।**
**हरिर्धन्वन्तरिस्तत्र सुधाकलशवानुदैत् ॥ ८ ॥**

**(भा.दी.) चन्द्रे**ति । चन्द्रश्च इन्दिरा च आदी येषां कामधेन्वादीनां ते तथा तत्र समुद्रे जाताः । रसेन रूपलावण्यादिना सहितः सरसः । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । अप्सरसां अप्सर-स्त्रीणां गणः समूहः जातः । 'गणाः' इति पाठे सरसः समुद्ररूपात् सरस इत्यर्थः । 'सरसामस्मि सागरः' इत्युक्तेः । समुद्रोदकादिति वा । 'सरोऽप्सु च' इति वैजयन्ती । हरति आहरति भक्ताभीष्टमिति हरिः श्रीनारायणः, सुधापूर्णो यः कलशः सोऽस्यास्तीति तथोक्तः धन्वन्तरिः धन्वन्तरिनामकः सन् उदैत् अव-तीर्णः । इण् गतौ लङ् ॥ ८ ॥

१. **'मन्दरं स ममन्थात्र'** इति **'मन्दरं च ममन्थाथ'** इति च क्वचित् । २. **'चलत्कङ्कणभूषणः'**
३. **'सरसोऽप्सरसां गणाः'** इति, **'सरसाप्सरसां गणाः'** इति च क्वचित् ।

**(सं.चं.)** सरसः शृङ्गारशीलोऽप्सरसां गणः । अथच सरसः सविषः अप्सरसां गणः । न केवलं चित्तमोहनोऽप्सरसां गणः । विषमपि तत एव जातम् । मोहकत्वसाम्यादप्सरोभिः सहोक्तिः । 'ब्रह्मपुत्रः शौक्लिकेयो दारदश्च प्रदीपनः । रसः सौराष्ट्रिकः क्ष्वेळस्तीक्ष्णश्च विषमुच्यते' इत्यभिधानम् ॥ ८ ॥

**अमृतं हरतो मोहादसुरानसुरान्तकः ।**
**मोहयन् महिळारूपी हृत्वा स्वेभ्यो ददौ सुधाम् ॥ ९ ॥**

**(भा.दी.)** **अमृतमि**ति । असुराणामन्तको मृत्युः श्रीहरिः, अमृतं पीयूषं तत्, अमृतकलशमित्यर्थः, मोहो मौर्ख्यं तस्मात्, 'मोहाः क्लुन्मौर्ख्यमूढताः' इति वैजयन्ती, हरतः धन्वन्तरिहस्तादेव हरतः असुरान्, महिळायाः स्त्रियाः रूपं महिळारूपं तदस्यास्तीति तथोक्तः, नारायणीरूपेणावतीर्णः सन्नित्यर्थः, 'अबला महिळा ललना' इति हलः, असुरान् मोहयन् सन्, सुधां असुरेभ्यः हृत्वा अपहृत्य स्वे स्वकीया देवास्तेभ्यः ददौ । डु दाञ् दाने लिट् । अमृतकलशमन्यायेनापहृतं दृष्ट्वा श्रीहरिः स्त्रीरूपं बभार । तद्रूपं दृष्ट्वा मोहिताः सन्तः इदममृतं देवानामस्माकं च विभज्य परिवेषयेति स्वयमेव तद्वशे ददुः । सा च तामसप्रकृतीनां जरामरणहार्यमृत-पानमनुचितमिति मत्वा देवासुरान् पृथक् पङ्क्तिषु स्थापयित्वा देवानामेव परिवेषणं कृत्वाऽन्तर्दध इति हि पौराणिकी प्रसिद्धिः ॥ ९ ॥

**(सं.चं.)** मोहः स्वेयत्तापरिज्ञानवैधुर्यम्, युक्तायुक्तविवेचनशक्तिवैधुर्यं च । अमृतममृताश्रयं कलशम् । असुरेभ्यः कलशं हृत्वा आहृत्य स्वेभ्यः स्वभक्तेभ्यो देवेभ्यः सुधां ददौ ॥ ९ ॥

**पुनः सुरासुररणे हतपुत्रा दितिः पतिम् ।**
**विलोभ्य गर्भं लेभे यं तं चकर्त्त च वज्रभृत् ॥ १० ॥**

**(भा.दी.)** **पुनरि**ति । सुरा इन्द्रादयस्ते च असुरा बल्यादयस्ते च तेषां यो रणस्तस्मिन् । 'रणोऽस्त्री युधि ना ध्वनौ' इति वैजयन्ती । हताः पुत्राः यस्याः सा तथा दितिः दैत्यमाता पतिं भर्तारं काश्यपं विलोभ्य वञ्चयित्वा, स्वकृतातिशयितसेवातुष्टेन काश्यपेनाभीप्सितं वरं प्रदद्यामिति प्रतिज्ञाते सति 'यदि मह्यं तुष्टोऽसि तर्हीन्द्रहणं पुत्रं देहि' इत्युक्तवरेण वञ्चयित्वेत्यर्थः, पुनः यं गर्भं लेभे, डु लभष् प्राप्तौ लिट्, तं गर्भं वज्रभृदिन्द्रः चकर्त च । कृती च्छेदने लिट् । दित्या उत्पत्स्यमानं पुत्रं वरबलात् स्वहन्तारं ज्ञात्वा तच्छेदनार्थं तन्निकटे ब्रह्मचारिस्वरूपेण तस्याः सेवां कुर्वन् पुरन्दरः, संवत्सरं चेन्मदुपदिष्टं वैष्णवं व्रतं निर्विघ्नं चरिष्यसि

तर्हीन्द्रहन्ता पुत्रो भविष्यतीति काश्यपोक्तं व्रतं चरन्त्याः कदाचिद् व्रतच्छिद्रं दृष्ट्वा गर्भं चिच्छेदेति भावः ॥ १० ॥

**(सं.चं.)** पुनः सुधावञ्चितैरसुरैः सम्प्रवृत्ते सुरासुररणे । स्त्रीसहजेन हावेन निरन्तरपरिचर्यया च पतिं काश्यपं विलोभ्य मृदुतया स्वानुकूलं कृत्वा । वज्रभृत् वज्रेण चकर्त गर्भम्, एकोनपञ्चाशच्छकलात्मना ॥ १० ॥

**मा रोदीरिति सोऽवादीद् यद्गर्भदळनाद्धरिः[1] ।**
**तस्मात् ते मरुतो नाम महेन्द्रस्याभवन् प्रियाः ॥ ११ ॥**

**(भा.दी.)** **मे**ति । (यत्) यस्मात् स हरिः इन्द्रः । 'अर्कमर्कटमण्डूकविष्णुवासववायवः । तुरङ्गसिंहशीतांशु-यमाश्च हरयो दश' इति हलः । गर्भस्य दळनात् विभागात्, मा+रोदीरिति पदच्छेदः, रोदनं मा कुरु । रुदिर् अश्रुविमोचने लुङ् । 'न माङ् योगे' (अ.सू.६.४.७४) इत्यडभावः । इति एवमादिप्रकारेण अवा-दीत् । वद व्यक्तायां वाचि लुङ् । तस्मात् रुत् रोदनं मा इत्युक्तत्वात् ते गर्भविदळाः मरुत इति प्रसिद्धाः । महेन्द्रस्य पुरन्दरस्य प्रियाः सन्तः अभवन् उत्पन्नाः ॥ ११ ॥

**(सं.चं.)** गर्भदळनाद्धेतोः मा रोदीरिति तं गर्भं हरिरिन्द्रोऽवादीत् सान्त्वयामास । मा न विद्यते रुत् रोदनं येषां ते मरुतो नाम । आद्यक्षरस्य ह्रस्वता । 'इन्द्रो दुश्च्यवनो हरिः सुरपतिः' इति च । हरिरिति मुख्यतो विष्णुरेव । 'हरिं हृषीकेशमुदाहरन्ति' इति ह्यभिदधति । तेनेन्द्रगतो विष्णुरेवैतच्चकारेति गम्यते । तदेतन्म-हेन्द्रपदेनाप्याह– विष्णोः सन्निधानविशेषेण महानिन्द्र इति ॥ ११ ॥

**उत्तमश्लोकभक्तानामुत्तमाः स्युर्हि सम्पदः ।**
**अन्येषामन्यथा दृष्टा[2] दृष्टान्तास्तत्र हीदृशाः ॥ १२ ॥**

**(भा.दी.)** दैत्यैरमृतार्थं यत्ने कृतेऽप्यमृतं न लब्धम्, इन्द्रेण दित्या गर्भच्छेदे कृतेऽपि ते पुनरिन्द्रप्रियाः सन्तो जाता इत्यत्र किं निमित्तमित्यत आह– **उत्तमे**ति । उत्तमः श्लोकः कीर्तिर्यस्य स तथा तस्य हरेर्ये भक्ता देवादयस्तेषां उत्तमाः सम्पदः स्युः भवेयुर्हि । अस्तेर्लिङ् । अन्येषां विष्णवभक्तानां अन्यथा अन्यप्रकारेण, फलानीति शेषः, स्युः । तत्र इत्येतस्मिन्नर्थे ईदृशाः एवंविधा दृष्टान्ताः निदर्शनानि दृष्टा हीत्यन्वयः । देवानां

१. **'गर्भदलनाद् गर्भविदारणात् रुदतः जीवान् 'मा रोदीः' इति प्रत्येकमवादीत्'** इति का.श्री. ।

२. **'दृष्टान्ताः निर्णीतस्थलानि'** इति च ।

विष्णुभक्तत्वात् दित्या चातियत्नेन वैष्णवव्रतस्य पत्युरनुज्ञया करणात् स्वाभीष्टावाप्तिर्जाता न दैत्यानामिति भावः ॥ १२ ॥

**(सं.चं.)** दित्यां जाता दैत्या स्युः । कथं देवा बभूवुः? इन्द्रेण गर्भदलनादिन्द्रशत्रवः स्युः? कथमिन्द्रप्रिया बभूवुः? भगवद्भक्तेषु सर्वं सङ्गच्छत इत्याह– उत्तमश्लोकभक्तानाम् ॥ १२ ॥

**तासामप्सरसां मद्ध्ये रम्यामाहुरलम्बुसाम् ।**
**तस्यामयं विशालोऽभूदिक्ष्वाकोस्तव पूर्वजात् ॥ १३ ॥**

**(भा.दी.)** प्रकृतमनुसरति– **तासामिति** । तासाममृतमथने उत्पन्नानां अप्सरसां मद्ध्यं मण्डलं तस्मिन् अलम्बुसां अलम्बुसानाम्नीं रम्यां आहुः, जना इति शेषः । ब्रूञ्धातोर्लट् । तस्यां अलम्बुसायां, हे राम, तव पूर्वमुत्पन्नः पूर्वजस्तस्मात् इक्ष्वाकोः इक्ष्वाकुनाम्नो राज्ञः अयं एतन्नगरकर्ता विशालः अभूत् ॥ १३ ॥

**(सं.चं.)** तासां दुग्धाब्धिमथने जातानामप्सरसां मध्ये । अलम्बुसायामिक्ष्वाकोर्जातोऽयं विशालः । न केवलमेतत् । अयं स देशो यत्रेन्द्रो दितिं परिचचार, यत्रैकोनपञ्चाशन्मरुतोऽजायन्त । अत एव मरुत्कथामपि सञ्जग्राह । विशालेन निर्मिता नगरी वैशाली ॥ १३ ॥

**इत्थमालपतो दृष्ट्वा प्रविष्टान् पुरुषर्षभान् ।**
**सुमतिर्म्मतिमान् पुर्य्यां [1]वैशालिस्तानपूजयत् ॥ १४ ॥**

**(भा.दी.) इत्थमिति** । विशालगोत्रभवो वैशालिः[2] मतिमान् ज्ञानी अत एव सुमतिः सुमतिनामको राजा इत्थं एवमादिप्रकारेण आलपतः, आभाषणं कुर्वतः, प्रविष्टान् स्वपुरीं प्रत्यागतान्, पुरुषर्षभान् पुरुषश्रेष्ठान्, तान् श्रीरामादीन् दृष्ट्वा पुर्यां अपूजयत्, अर्घ्याद्युपचारैः पूजितवान् । पूज पूजायां लङ् ॥ १४ ॥

**(सं.चं.)** वैशालिः विशालवंशजः सम्प्रति वैशालीपतिः सुमतिः ॥ १४ ॥

**विजानन् विप्रवचनाद् राजा तौ[3] रामलक्ष्मणौ ।**
**अलाळयज्जगल्लाल्यौ[4] भूयो भुवनसुन्दरौ ॥ १५ ॥**

---

१. **'वैशालस्तानपूजयत्'** २. **'वैशालः'** ३. **'राजानौ रामलक्ष्मणौ'**

४. **'लाल्यौ वाचा पूजनीयौ अलालयत् वाचा पूजयामास । 'लल पूजने'** इति का.श्री. ।

**(भा.दी.) विजानन्निति** । विप्रस्य विश्वामित्रस्य यद्वचनं तस्मात् विजानन् इमौ दशरथपुत्रावित्यादिप्रकारेण जानन् राजा सुमतिनामकः जगति लाल्यौ प्रशंस्यौ भुवने सुन्दरौ तौ श्रीरामलक्ष्मणौ भूयः पुनःपुनः अलाळयत् अमानयत् । लल ईप्सायां[१] लङ् ॥ १५ ॥

**(सं.चं.)** अलाळयत् प्रीत्योपचचार । लड लळ उपसेवायाम् । प्रीतिपूर्वं सेवनमुपसेवनम् ॥ १५ ॥

**निर्वर्त्त्य शर्वरीं तत्र प्रभाते निर्ग्गतः पुरात् ।**
**मिथिलोपवनं मन्दपवनं प्राप राघवः ॥ १६ ॥**

**(भा.दी.) निर्वर्त्येति** । तत्र तस्यां पुर्यां तां शर्वरीं निशां निर्वर्त्य निर्गमयित्वा[२], प्रभातः प्रातःकालस्तस्मिन् पुरं वैशालीनगरं तस्मात् निर्गतः निःसृतः श्रीराघवः, मन्दः स्वल्पः पवनो यस्मिन् तत्तथा तत्, मिथिलायाः जनकनगर्या उपवनं आरामम्, 'आरामः स्यादुपवनं कृत्रिमं वनमेव यत्' इत्यमरः, प्राप ॥ १६ ॥

**(सं.चं.)** मिथिलाया उप समीपे यद् वनम् । मिथिलाया उपवनमिव च ॥ १६ ॥

**मिथिलोपवनप्रान्ते[३] दर्शयन्नाश्रमान्तरम् ।**
**गाधिसूनुरुवाचेदं मधुरं मधुसूदनम् ॥ १७ ॥**

**(भा.दी.) मिथिलेति** । मिथिलाया उपवनं तस्य प्रान्तः समीपं तस्मिन्, अन्य आश्रम आश्रमान्तरं तत्, श्रीरामाय दर्शयन् गाधेः सूनुः विश्वामित्रः, मधुं मधुनामकदैत्यं सूदितवान् संहृतवानिति मधुसूदनस्तं श्रीरामं प्रति मधुरं यथा भवति तथा इदं वक्ष्यमाणं वचः उवाच । वच परिभाषणे लिट् ॥ १७ ॥

**(सं.चं.)** मधु रातीति मधुरमानन्ददम्, असतां मधु सूदयतीति मधुसूदनं मधुरमुवाच ॥ १७ ॥

**अतिरिक्तं तपो हर्त्तुं गौतमस्याऽश्रमे त्विह[४] ।**
**सुरकार्य्यं सुरपतिः कुर्वन् भार्य्यां समस्पृशत् ॥ १८ ॥**

**(भा.दी.) अतीति** । सुराणां कार्यं गौतमतपोहानिलक्षणं तत् कुर्वन् सुरपतिः पुरन्दरः गौतमस्य मुनेः स्वयोग्यतायाः अतिरिक्तं अधिकं तत् तपः, तु विशेषेण हर्तुं शापदापनेनापहर्तुं इह अस्मिन् आश्रमो मुनिवासस्तस्मिन् भार्यां अहल्यां समस्पृशत् धर्षितवान् । स्पृशतेर्लङ् ॥ १८ ॥

---

१. **'लड उपसेवायाम्'** इत्युचितम् । २. **'निर्गमय्य'** इति युक्तम् । ३. **'मिथिलोपवनस्यान्ते'** ४. **'गौतमस्याऽश्रमेऽरिहा'**

**(सं.चं.)** समस्पृशत् सम्बुभुजे ॥ १८ ॥

**ऋषिराश्रममाश्रित्य[1] तज्ज्ञात्वा कुपितोऽशपत् ।**
**विफलः स्यादुपपतिरुपला[2] भव पुंश्चलि ॥ १९ ॥**

**(भा.दी.)** **ऋषिरि**ति । ऋषिः गौतमः आश्रमं आविश्य (तत्) इन्द्रकृतं कर्म ज्ञात्वा कुपितः क्रुद्धः सन्, उपपतिः जारः इन्द्रः विगतं फलं वृषणलक्षणं बीजं यस्य स तथोक्तः स्यात् । अस्तेर्लिङ् । 'लाभनिष्पत्तिभोगेषु बीजे फाले धने फलम्' इति वैजयन्ती । हे पुंश्चलि व्यभिचारिणि अहल्ये, उपला शिला भव, इति अशपत् । शप आक्रोशे लङ् ॥ १९ ॥

**(सं.चं.)** आश्रित्य, आगत्य प्रविश्येति यावत् । तत् इन्द्रकृतं स्वदारधर्षणम् । उपपतिरहल्याजारः । 'जारो ह्युपपतिः स्मृतः' इति च । विफलो विगतवृषणः षण्ढः । 'शापमोक्षेण महता तपोऽस्यापहृतं मया' इति रामायणे । उपलीभव शिलीभव । अनुपलस्योपलवद् भाव उपलीभावः । अभूतस्य तद्भद्भावो हि तद्भावो नाम । नहि पूर्वमभूतः पश्चात् स एव क्वापि भवति । नहि चेतनस्य जडता जडस्य चेतनता वा सम्भवति । विकारिभावस्तु स्यात् । यथा– घटीकरोति मृदम् । 'उपला भव' इति प्रायो लिपिकृतां प्रमादः । 'पुंश्चल्यसती कुलटेत्वरी' इति यादवप्रकाशः । बहुभिः पुम्भिः सह चलति क्रीडतीति पुंश्चली । चल विलसने । पुंसः पत्युः सकाशादन्यत्र चलति वा ॥ १९ ॥

**रामावलोकनाद् रामा भवेति च कृपाकरः ।**
**शापमोक्षं स्वजायायै सोऽहल्यायै प्रदत्तवान् ॥ २० ॥**

**(भा.दी.)** स्वकीयरूपधारिणेन्द्रेण वञ्चितामहल्यां ज्ञात्वा तयाऽर्थितेनानुग्रहश्च कृत इत्याह– **रामे**ति । कृपाया आकर आश्रयः सः गौतमः, श्रीरामस्य अवलोकनं दर्शनं तस्मात् रामा स्त्रीभावा भव, इति स्वस्य जायायै स्वभार्यायै अहल्यायै शापस्य मोक्षस्तं (च) प्रदत्तवान् ॥ २० ॥

---

१. **'–श्रममाविश्य'**

२. **'उपला भव'** इति सर्वत्रोपलब्धः पाठः । नहि शिला उपलेत्युच्यते । किन्तूपल इति । शर्करामुपलामाहुः । तस्मादयं पाठः प्रामादिक इति भाति । **'उपलीभव'** इत्येव साधुपाठः स्यात् । **'प्रधर्षणादिन्द्रकृताच्छिलीकृताम्'** इति निर्णयवचनं चानेन संवदते । का.श्री. टीकायां तु– **'यद्यप्युपलशब्दः पुल्लिङ्गः । तथाऽपि स्त्रीलिङ्गेऽप्युपलाशब्दोऽस्तीति 'उपला भव' इति पाठस्य साधुत्वम् । 'शिला भव च पुंश्चलि' इति पाठे तु न क्लेशः'** इत्युक्तम् । नातिरुचिरमेतद् विवरणम् ।

**(सं.चं.)** रामा रमणीया योषित् । प्रदत्तवान् । प्रेति विष्णुवचनम् । 'अकयप्र–' इत्यादिस्मरणात् । स्वस्मिन्नाविष्टेन विष्णुनैव प्रेरितो दत्तवान् ॥ २० ॥

**पितृदेवाः सुरेन्द्राय ददुरुत्कृत्य योगतः ।**
**[1]निजमेषस्य वृषणं स मेषवृषणोऽभवत्[2] ॥ २१ ॥**

**(भा.दी.)** **पित्रिति** । [3]पितरश्च देवाश्च पितृदेवाः, मेषोऽजस्तस्य निजं देहसम्बन्धि तत् वृषणं योगतः योगसामर्थ्यात् उत्कृत्य यतः सुरेन्द्राय ददुः, डु दाञ् दाने लिट्, ततः कारणात् सः शचीपतिः मेषस्य वृषणमेव वृषणं यस्य स तथा अभवत् ॥ २१ ॥

**(सं.चं.)** योगतः भगवति मनोयोगेन लब्धसिद्धिबलात् । '–पितृदेवाः समागताः । उत्पाट्य मेषवृषणौ सहस्राक्षे न्यवेशयन् । इन्द्रस्तु मेषवृषणस्तदाप्रभृति राघव' (४९.९–१०) इति रामायणे ॥ २१ ॥

**महेन्द्रस्य मनःशल्यं त्वद्भक्तस्य समुद्धर ।**
**करुणां कुरु कल्याण्यां भवान् हि करुणाकरः ॥ २२ ॥**

**(भा.दी.)** **महेन्द्रस्येति** । हे राम, त्वं तव भक्तस्त्वद्भक्तस्तस्य महेन्द्रस्य मनसः शल्यमिव मनःशल्यं तत्, मन्निमित्तमियं शिलाऽभूदहो इति मनोव्यथामित्यर्थः, समुद्धर विनाशय । [4]धृञ् धारणे लोट् । कल्याण्यां पातिव्रत्यादिगुणैः शोभनायां करुणां कुरु । करुणाशीलं त्वां प्रति बहुधा न विज्ञापनीयमित्याह– **भवानिति** । भवान् करुणाकरो हि ॥ २२ ॥

**(सं.चं.)** मन्निमित्तमहल्या शापमापेति मनःशल्यम् । कल्याण्यामशुभलेपरहितायाम्, तपसा क्षालिताघायां च । करुणाकरः । भवानेव हि मुनौ सन्निधाय तं कृपाकरं विधाय शापमेक्षं ददौ ॥ २२–३ ॥

**कौशिकेनैवमुदितो मुदितो गत आश्रमम्[5] ।**
**प्रैक्षत प्रेक्षणीयेन तामपाङ्गेन शार्ङ्गभृत् ॥ २३ ॥**

**(भा.दी.)** **कौशिकेनेति** । कौशिकेन विश्वामित्रेण एवं उदितः, तद्वचनं श्रुत्वा मुदितः सन्तुष्टः, गौतमस्य य आश्रमस्तं गतः, शार्ङ्गं बिभर्तीति शार्ङ्गभृत् श्रीरामः, प्रेक्षणीयेन मनोहरेण अपाङ्गो नेत्रान्तस्तेन तां शिलाभूतां अहल्यां प्रैक्षत । ईक्षतेर्लङ् ॥ २३ ॥

१. **'निजं मेषस्य वृषणं'** इति वि.ती.पाठः । २. **'मेषवृषणस्ततः'** इति च । ३. **'गौतमपितरश्च देवाश्च पितृदेवाः'** इति.का.श्री. ।
४. **'हृञ् हरणे'** इति समुचितम् । ५. **'गौतमाश्रमम्'**

**सा तद्दर्शनमात्रेण कान्ता कान्तप्रिया बभौ ।**
**न तच्चित्रं हरौ विश्वं यद्भ्रूविभ्रमसम्भवम् ॥ २४ ॥**

**(भा.दी.) सेति** । सा शिलाभूता अहल्या तस्य श्रीरामस्य दर्शनमात्रं तेन कान्तस्य भर्तुः प्रिया प्रीतिविषया कान्ता स्त्री सती बभौ । भातेर्लिट् । एतच्च श्रीरामस्य न चित्रमित्याह– **न तदिति** । विश्वं सकलं जगत् यस्य श्रीरामस्य भ्रूस्तस्या विभ्रमश्चलनं तेन सम्भवतीति तथोक्तम्, तस्मिन् श्रीरामे शिलाभूतायाः स्त्रीभावकरणं चित्रं न ॥ २४ ॥

**(सं.चं.)** सा शिलीभूताऽहल्या । कान्ता कमनीया बभौ । कान्तस्य शान्तकोपस्य गौतमस्य प्रिया च । विभ्रमो विलासः ॥ २४ ॥

**उदारचरितं रामं सदारः पर्य्यपूजयत् ।**
**गौतमो भक्तिभरितो विश्वामित्रं च मानयन्[1] ॥ २५ ॥**

**(भा.दी.) उदारेति** । भक्त्या भरितः पूरितः गौतमः, उदारमुत्कृष्टं चरितं चरित्रं यस्य स तथा तम्, श्रीरामं दारैर्भार्यया सहितः सभार्यस्तथा सन्, अहल्यासहितः सन्नित्यर्थः, विश्वामित्रं च मानयन् सन्, पर्यपूजयत् अर्घ्यादिनाऽपूजयत् । पूज पूजायां लङ् ॥ २५ ॥

**(सं.चं.)** तदैव तत्राऽगतो गौतमः रामं पर्यपूजयत् । माहात्म्यपरिज्ञानपूर्वकं परदेवतात्वेनापूजयत् । 'सम्यग् गुणगणज्ञानादुपासा पर्युपासना' इति गीतातात्पर्यनिर्णये । विश्वामित्रं च गौरवेण मानयन् सम्भावयन् ॥ २५ ॥

**ततः प्रागुत्तरां प्राप्तो दिशं देशे विशङ्कटे ।**
**यज्ञवाटं स यज्ञेशो जनकस्य समैक्षत ॥ २६ ॥**

**(भा.दी.) तत इति** । ततः गौतमाश्रमात् प्राच्याः पूर्वस्याः उत्तरस्याश्च अन्तराळा दिक् सा प्रागुत्तरा ताम्, ऐशानीमित्यर्थः, दिशं प्राप्तः यज्ञानां फलदातृत्वेनेशः यज्ञेशः (सः) श्रीरामः विशङ्कटे विशाले, 'विशङ्कटं पृथु बृहद् विशालम्' इत्यमरः, देशः प्रदेशस्तस्मिन् जनकस्य जनकनाम्नो राज्ञः, निमेर्देहमथनाज्जातत्वान्निमिपुत्रस्य, तद्वंशजानां जनका इति साधारणी सञ्ज्ञा, यज्ञस्य वाटः शाला तं समैक्षत । ईक्षतेर्लङ् ॥ २६ ॥

---

१. **'विश्वामित्रममानयत्'**

**(सं.चं.)** 'विशङ्कटं विशालं स्यात्' इति च । यज्ञवाटो यज्ञार्थमावेष्टिता भूमिः । 'वाटो मार्गे वृतिस्थाने' इति मेदिनी । यज्ञेशो भगवान् रामः ॥ २६ ॥

**जनतापरिपूर्णस्य यज्ञवाटस्य राघवः ।**
**नातिदूरे विविक्ते स्म स्थल आस्ते सकौशिकः ॥ २७ ॥**

**(भा.दी.) जनते**ति । कौशिकेन विश्वामित्रेण सहितः सकौशिकः राघवः, जनानां समूहो जनता, तया परिपूर्णस्य, यज्ञस्य वाटः शाला तस्य, अतिदूरं न भवतीति नातिदूरं तस्मिन्, समीप इत्यर्थः, नसमासत्वान्नैकधेत्यादिवन्नलोपाभावः, विविक्ते जनसम्मर्दरहिते स्थले आस्ते स्म समास्थितः ॥ २७ ॥

**(सं.चं.)** विविक्ते निर्जने निर्मले च । 'विविक्तौ पूतविजनौ' इति मङ्खः ॥ २७ ॥

**अपूर्वपुरुषोपेतं विश्वामित्रमुपागतम् ।**
**जनकोऽभिययौ श्रुत्वा शतानन्दादिभिर्युतः[१] ॥ २८ ॥**

**(भा.दी.) अपूर्वे**ति । पूर्वमदृष्टोऽपूर्वः स चासौ पुरुषश्च तेन उपेतं सहितम्, श्रीरामसहितमित्यर्थः । विश्वामित्रं उपागतं श्रुत्वा । शतानन्दः शतानन्दनामकमुनिरादिर्येषां ते तथा तैः (युतः) युक्तः जनकः, अभिययौ प्रत्युत्थानमकरोत् । यातेर्लिट् ॥ २८ ॥

**(सं.चं.)** अपूर्वो दुर्लभदर्शनः परमपुरुषो रामः । तेनोपेतम् । अथच अपूर्वाभ्यामदृष्टपूर्वाभ्यां पुरुषपुङ्गवाभ्यामुपेतम् । शतानन्देनाऽदिमद्भिरन्यैश्च ऋत्विग्भिः । अतिथ्यभिमुखं ययौ । तदिदमातिथ्यस्य प्रथममङ्गं यदभियानम् । 'ಎದುರುಗೊಳ್ಳುವುದು' इति भाषायाम् ॥ २८ ॥

**[२]मखोत्सवमुपायाता नानाजनपदा[३] जनाः ।**
**द्रष्टुमभ्यापतन्[४] रामं सस्त्रीबालाश्च नागराः ॥ २९ ॥**

**(भा.दी.) मखे**ति । मखलक्षणो य उत्सवस्तं प्रति उपायाताः समागताः, नानाविधाः जनपदाः प्रसिद्धराष्ट्राणि येषां ते तथोक्ताः जनाः, श्रीरामं द्रष्टुं अभ्यापतन् अभितः प्रापुः । स्त्रियश्च बालाश्च तैः सहिताः सस्त्रीबालाः नगरे विद्यमाना नागराः जनाश्च अभ्यापतन् ॥ २९ ॥

---

१. **'शतानन्दादिभिर्वृतः'** २. **'महोत्सव–'**

३. **'नाना जनपदाः क्षुद्रग्रामा येषां ते नानाजनपदाः'** इति. का.श्री. । ४. **'द्रष्टुमभ्याययू रामम्'**

**(सं.चं.)** मखोत्सवं समीपत आस्वादयितुमागताः । नानाजनपदाः । कुरुपञ्चालादिभ्यः नानादेशेभ्यः आगताः । नागरा विदेहपुरवासिनश्च ॥ २९ ॥

> **परिपूज्य[1] यथान्यायं परिवारयुतं मुनिम् ।**
> **लोकनाथं विलोक्येदं वाक्यमूचे मुनिं नृपः ॥ ३० ॥**

**(भा.दी.) परी**ति । नृपः जनकःस परिवाराः शिष्यजनास्तैर्युतं मुनिं विश्वामित्रम्, न्यायमनतिक्रम्य यथा-न्यायम्, यथोचितमित्यर्थः । 'युक्तं स्यादुचितं न्यायम्' इति हलः । परिपूज्य लोकनाथं श्रीरामं विलोक्य इदं वक्ष्यमाणं वचः मुनिं विश्वामित्रं प्रति ऊचे । वचेर्लिट् ॥ ३० ॥

**(सं.चं.)** परिपूज्य यथान्यायं लोकनीत्या यथोचितम् । शिष्यपरिवारयुतम् ॥ ३०–१ ॥

> **श्रीमान् मरतकश्यामः पद्मपत्रनिभेक्षणः ।**
> **नवयौवनसम्पन्नः क एष पुरुषर्षभः ॥ ३१ ॥**

**(भा.दी.) श्रीमानि**ति । श्रिया कान्त्यादिना युक्तः श्रीमान् । नित्ययोगे मतुप् । मरतकवत् मरतकरत्न-वत् श्यामः । पद्मस्य पत्रे तयोर्निभे सदृशे ईक्षणे चक्षुषी यस्य स तथा । नवं नूतनं यद् यौवनं तेन सम्पन्नः युक्तः, एषः त्वन्निकटस्थः, पुरुषर्षभः पुरुषश्रेष्ठः कः? कस्य पुत्रः किन्नामकः स्वरूपतः कश्च ॥ ३१ ॥

> **सिंहस्कन्धो महोरस्कः पूर्णचन्द्रनिभाननः ।**
> **गम्भीरनाभिः को न्वेष कम्बुग्रीवो महाभुजः ॥ ३२ ॥**

**(भा.दी.) सिंहे**ति । सिंहस्य स्कन्धाविव स्कन्धौ यस्य स तथा, महदुन्नतं विशालं च उरो वक्षो यस्य स तथा, पूर्णो यश्चन्द्रः तस्य निभं समानमाननं यस्य स तथा, गम्भीरो निम्नो नाभिर्यस्य स तथा, कम्बुवत् मथितशङ्खवत् ग्रीवा यस्य स तथा, (महान्तौ भुजौ यस्य स तथा), एषः पुरुषर्षभः को नु को वा? ॥ ३२ ॥

**(सं.चं.)** स्कन्धः '**ಹೆಗಲು**' इति भाषायाम् । महद् विशालमुन्नतमुरोऽस्येति महोरस्कः । 'उरःप्रभृतिभ्यः कप्' (अ.सू.५.४.१५१) इत्युरोन्ताद् बहुव्रीहेः कप् प्रत्ययः । गम्भीरा निम्ना नाभिरस्य । 'रेखात्रयाङ्किता ग्रीवा कम्बुग्रीवेति कथ्यते' इत्यभिधानम् । 'कम्बुः शङ्खः क्षुल्लकाः क्षुद्रशङ्खाः शम्बूकास्ते स्युः कपर्दो वराटः' इति च । महाभुजः बाहुषाळी ॥ ३२ ॥

---

१. '**अभिपूज्य**'

**अविस्मितः[१] स्मितमुखो गजराजगतिः कविः ।**
**मुने कोऽयं विनयवानमितार्थं मितं वदन् ॥ ३३ ॥**

**(भा.दी.) अवी**ति । न विद्यते विस्मितं विस्मयो यस्य स तथा । स्मितयुक्तं मुखं यस्य स तथा । स्वभावत एव हासोपेतमुख इत्यर्थः । गजानां राजा गजराजस्तस्य गतिरिव गतिर्गमनं यस्य स तथा, कविः सर्वज्ञः, विनयोऽस्यास्तीति विनयवान्, अमिता अनेका अर्था यस्य तत्तथोक्तं तत्, मितं अक्षरतः परिमितं वचः वदन्, अयं पुरुषर्षभः, हे मुने, कः? ॥ ३३ ॥

**(सं.चं.)** विस्मयदर्शनेऽप्यविस्मितः । असम्भ्रान्तः । कविर्विपश्चित् । 'बुधः सुधीः कृती कृष्टिः कविर्व्यक्तो विशारदः' इति च । यत्र रूपं गुणास्तत्रेति स्मरणादस्य लोकोत्तरं रूपमेव कवित्वं कथयतीति भावः । अथापि विनयवान् । नहि रूपमदेन कवित्वमदेन वा दृप्तः । विद्या ददाति विनयमित्यतश्च विद्वानयं गम्यते । तेन जानाति वक्तुम् । अथापि वाचंयमस्य मुनेः सहवासादिव मितं वदन् । मितं वदति, अथाप्यमितार्थं वदति, कवित्वादेव । कोऽयम्? किन्देशोऽयम्? कावस्य मातरपितरौ? ॥ ३३ ॥

**अङ्गनानामनङ्गोऽयं त्वादृशानां तु किङ्करः ।**
**वैरिणां केवलं कालो योगिनां भगवान् हरिः[२] ॥ ३४ ॥**

**(भा.दी.) अङ्गने**ति । अङ्गनानां स्त्रीणां अनङ्गः कामः, कामसदृश इत्यर्थः, त्वमिव दृश्यन्त इति त्वादृशास्तेषां त्वत्सदृशानां ज्ञानिनामित्यर्थः, ज्ञानिनां (तु) विशेषेण किङ्करः, भृत्यसदृश इत्यर्थः, वैरमेषामस्तीति वैरिणस्तेषां केवलं निरुपचारेण कालः मृत्युः, मृत्युसम इत्यर्थः, योगिनां सनकादीनां भगवान् हरिः श्रीनारायणः, अयं कस्य पुत्रः? ॥ ३४ ॥

**(सं.चं.)** अङ्गानामनङ्गइवायम् । स्फुटमेतच्चक्षुष्मताम् । त्वादृशानां साक्षात्कृतब्रह्मणां किङ्करइव । सिद्धमेतत् त्वदुपसेवनेन । वैरिणां केवलमसन्दिग्धं कालइव । 'वैवस्वतः कृतान्तः कालिन्दीसोदरः कालः' इत्यभिधानम् । स्पष्टमेतदाचष्टे कोदण्डवान् दोर्दण्डः । तेनाभ्यूहामहे नूनमयं योगिनामिष्टदेवता भगवान् हरिरिवेति । आहो किमयं प्रसन्नो भगवान् हरिरेव? ॥ ३४ ॥

---

१. **'न विद्यते विस्मितमाश्चर्यं यस्य सः । सर्वेषामपि स्वयमाश्चर्यकरः । तस्याऽश्चर्यकरं किमपि नास्तीति यावत्'** इति का.श्री. ।

२. **'अनेन, 'मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान् गोपानां स्वजनोऽसतां क्षितिभृतां शास्ता स्वपित्रोः शिशुः । मृत्युर्भोजपतेर्विधातृविहितस्तत्वं परं योगिनां वृष्णीनां कुलदेवतेति शुशुभे रङ्गं गतः साग्रजः' इति भागवतार्थ उक्तो भवति'** इति का.श्री. ।

**सुकुमारः कुमारोऽयं जनानां नयनोत्सवः ।**
**पादपल्लवयोरस्य भूस्पर्शं न सहामहे ॥ ३५ ॥**

**(भा.दी.) सुकुमार** इति । जनानां नयनानां उत्सवइव नयनोत्सवः, अत्यन्तं दर्शनीय इत्यर्थः, अयं कुमारः यतः सुकुमारः सुकोमळाङ्गः, तस्मात् अस्य पादौ पल्लवाविव तयोः भुवो यः स्पर्शस्तम्, पद्भ्यां गमनमित्यर्थः, न सहामहे न तितिक्षामहे । षह मर्षणे लट् ॥ ३५ ॥

**(सं.चं.)** सुकुमारः कोमलतरतनुः ॥ ३५ ॥

**अस्य पार्श्वेऽपरः कोऽयमस्य सादृश्यवान् स्थितः ।**
**प्रतिबिम्बवदन्वेति बिम्बोष्ठो यमिमं सदा ॥ ३६ ॥**

**(भा.दी.) अस्ये**ति । अस्य पुरुषर्षभस्य पार्श्वं समीपं तस्मिन् स्थितः, बिम्बवत् बिम्बपक्वदोष्ठौ यस्य स तथा, अत एव अस्य पुरुषर्षभस्य सादृश्यमस्तीति सादृश्यवान् अपरः अयं पुरुषः यमिमं पुरुषर्षभं प्रतिबिम्बवत् च्छायावत् अन्वेति अनुसृत्य वर्तते, इण् गतौ लट्, अयं क इति लक्ष्मणविषयकः प्रश्नः॥३६॥

**(सं.चं.)** प्रतिबिम्बवत् छायेव । बिम्बं तुण्डी । '**ತೊಂಡೆ**' इति भाषायाम् ॥ ३६ ॥

**पृच्छति स्वच्छहृदये राजन्येवं जनान्तरे ।**
**किञ्चित् स्मित्वाऽवदद् वाणीं प्रवीणो गाधिनन्दनः ॥ ३७ ॥**

**(भा.दी.) पृच्छती**ति । स्वच्छं रागादिदोषरहितं हृदयं मनो यस्य स तथा तस्मिन्, राजनि जनके, जनानामन्तरं मद्ध्यम् तस्मिन्, (एवं) पृच्छति विचारयति सति, प्रवीणः प्रत्युत्तरदाने कुशलः गाधेर्नन्दनः कौशिकः किञ्चित् स्मित्वा वाणीमवदत् । वद व्यक्तायां वाचि लङ् ॥ ३७ ॥

**(सं.चं.)** स्वच्छो भगवान् हृदयेऽस्य । अत एव स्वच्छं च हृदयमस्य । अत एवायं भगवान् हरिरिति दर्शनमात्रेणास्य मनसि पुस्फोर । जनान्तरे परिवारजनमध्ये । दिदृक्षापरिगतजनमध्ये च । 'अन्तरं त्वन्यभेदयोः । अवकाशेऽवधौ मध्ये' इति मङ्खः । प्रवीणः समयोचितवचनचतुरः । 'दक्षः कुशलोऽभिज्ञो निष्णातः शिक्षितः प्रवीणश्च' इत्यभिधानम् । कुशान् लातीति कुशलवनचातुर्यं पदार्थः । चातुर्यमात्रे रूढिः । एवं वीणया प्रगायतीति वीणावादनचातुर्यं पदार्थः । चातुर्यमात्रे रूढिः ॥ ३७ ॥

**अयं दशरथस्याङ्ग नन्दनः पुरुषोत्तमः ।**
**चिकीर्षुः सुरकार्य्याणि रामो नाम मनोरमः ॥ ३८ ॥**

**(भा.दी.)** **अयमि**ति । हे अङ्ग, प्रिय जनक, अयं पुरुषर्षभः दशरथस्य नन्दनः पुत्रत्वेनावतीर्णः, सुराणां कार्याणि राक्षसहननादिकार्याणि तानि चिकीर्षुः कर्तुमिच्छावान्, मनोरमः मनोहरः, राम इति नाम प्रसिद्धः, पुरुषोत्तमः क्षराक्षरपुरुषाभ्यामुत्तमः श्रीहरिः इति कोऽयमिति प्रश्नस्य प्रत्युत्तरम् ॥ ३८ ॥

**(सं.चं.)** अङ्ग जनक । 'अङ्गेत्यामन्त्रणे हंहो भोभो इति च कथ्यते' इति च । अङ्गनन्दनः औरसः पुत्र इति वा । 'अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे' इति हि श्रुतिः । 'भगवान् हरिः' इत्युक्तमनुमोदते– पुरुषोत्तम इति । क्षराक्षरपुरुषोत्तमः । 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति हि गीतासु । 'उत्तमः पुरुषस्त्वन्यः परमात्मा–' इति च । सुरकार्याणि चिकीर्षुर्भुवमागतः । मिथिलां च । मनोरमत्वादन्वर्थं रामो नाम ॥ ३८ ॥

**अयमस्यानुजः[१] प्रेष्ठो लक्ष्मणः शुभलक्षणः ।**
**अयोद्ध्याया मयाऽनीतावेतौ सिद्धाश्रमं प्रति ॥ ३९ ॥**

**(भा.दी.)** **अयमि**ति । अयमपरः पुरुषः अस्य श्रीरामस्य प्रेष्ठः अतिशयेन प्रियः, शुभानि लक्षणानि अङ्गसम्पदो यस्य स तथा, अत एव लक्ष्मणः लक्ष्मणनामकः अस्य अनुजः । इदं च 'अस्य पार्श्वेऽपरः कोऽयम्' इत्यस्योत्तरम् । त्वया सहागमने को हेतुरित्यत आह– **अयोद्ध्याया** इति । एतौ अयोद्ध्यायाः मया विश्वामित्रेण सिद्धाश्रम इति प्रसिद्धो य आश्रमस्तं प्रति आनीतौ ॥ ३९ ॥

**(सं.चं.)** अस्य प्रेष्ठः प्रियतमोऽनुजः ॥ ३९ ॥

**रक्षो निहत्य यज्ञं मे लीलयाऽयमपीपलत्[२] ।**
**अपाङ्गेन मुनेः शापादहल्यामप्यमूमुचत् ॥ ४० ॥**

**(भा.दी.)** तत्र तत्कृतप्रयोजनमाह– **रक्ष** इति । अयं श्रीरामः रक्षः सुबाहुनामकं रक्षस्तत्, राक्षससमूहमिति वा । लीलया निहत्य मे यज्ञो यागस्तं अपीपलत् अरक्षत् । पाल रक्षणे लुङ् । गौतमाश्रमेऽपि महत्कर्म

१. 'अयं तस्यानुजः श्रेष्ठो–'
२. 'लीलयाऽयमपालयत्'

तेन कृतमित्याह– **अपाङ्गेने**ति । अपाङ्गो नेत्रान्तस्तेन । मुनेः गौतमस्य शापः अहल्यायै दत्तशाप-स्तस्मात्, अहल्यां अमूमुचदपि । मुच्लृ मोक्षणे लुङ् ॥ ४० ॥

**(सं.चं.)** रक्षो मारीचाख्यं निहत्य निरस्य । सुबाहुनामकं सपरिवारं निहत्य तमसि पातयित्वा । मुनेर्गौतमस्य शिलीभावशापात् ॥ ४० ॥

**धन्विनामग्रणीरेष धनुस्तव दिदृक्षते ।**
**धानुष्कहाटकानां [१]तन्निकषाश्मायितं किल ॥ ४१ ॥**

**(भा.दी.)** अत्राऽगमने निमित्तमाह– **धन्विनामि**ति । धनुरेषामस्तीति धन्विनः, तेषाम् अग्रणीः श्रेष्ठः एषः श्रीरामः तव धनुः दिदृक्षते द्रष्टुमिच्छति । दृशिर् प्रेक्षणे लट् । आरोपयितुमिच्छतीत्यर्थः । कुतोऽस्य धनुषः श्रीरामदर्शनविषयत्वमित्यतस्तत्सामर्थ्यमाह– **धानुष्के**ति । धानुष्का धनुर्धरा एव हाटकानि सुवर्णानि तेषाम्, तत् त्वत्सम्पादितं धनुः, निकषस्य य अश्मा तद्वदाचरतीति तथोक्तम्, स्वर्णपरीक्षापाषाणायित-मित्यर्थः । किलेति परोक्षे ॥ ४१ ॥

**(सं.चं.)** एषः रामः । धानुष्का हाटकानीव हेमानीव । धनुश्च तत् तेषां सत्वपरीक्षणे निकषोपलायत इति किल वार्ता श्रूयत इत्यनुनयते । 'किलशब्दस्तु वार्तायां सम्भाव्यानुनयार्थयोः' इति मेदिनी ॥ ४१ ॥

**समस्तगुणसम्पन्नमेनं[२] जामातरं कुरु ।**
**वीर क्षीराम्बुधिरिव पुराणपुरुषं पुरा ॥ ४२ ॥**

**(भा.दी.)** सीताया अनादितः सिद्धो वरः श्रीराम एवेत्यतः श्रीरामाय सीता देयेत्याह– **समस्ते**ति । हे वीर जनक, समस्ता ये गुणाः शौर्यादयस्तैः सम्पन्नं युक्तं एनं श्रीरामम्, पुरा पूर्वम्, पुरा आदिकाले अनिति चेष्टत इति पुराणः स चासौ पुरुषश्च तम्, श्रीनारायणम्, क्षीराम्बुधिरिव जामातरं पुत्रीभर्तारं कुरु । डु कृञ् करणे लोट् ॥ ४२ ॥

**(सं.चं.)** 'महाधनुषि जिज्ञासां कर्तुमागमनम्' इति रामायणवचनभावमाह– एनं जामातरं कुरु ॥ ४२ ॥

**गामित्थं गाधिपुत्रस्य श्रुत्वा गौतमनन्दनः ।**
**शतानन्दो महानन्दो रघुनन्दनमब्रवीत् ॥ ४३ ॥**

१. '–हाटकानां च निकषा–' २. '–सम्पूर्णमेनम्'

**(भा.दी.) गामि**ति । गाधेः पुत्रस्य नन्दनस्य विश्वामित्रस्य इत्थं गां वाचं श्रुत्वा, महानानन्दो यस्य स तथा, शतानन्दः शतानन्दनामकः गौतमनन्दनः, रघून् रघुगोत्रभवान् नन्दयतीति रघुनन्दनस्तं श्रीरामं अब्रवीत् । ब्रूञ् धातोर्लङ् ॥ ४३ ॥

**(सं.चं.)** विश्वामित्रवचसा मातुः शापमोक्षस्य पित्रा समागमस्य च श्रवणेन, रामदर्शनेन च जनित-महानन्दः ॥ ४३ ॥

**राम देव जगन्नाथ स्वागतं सानुजस्य ते ।**
**दिष्ट्या मे जीविता माता भवता करुणावता ॥ ४४ ॥**

**(भा.दी.) रामे**ति । जगन्नाथ (जगतां) स्वामिन्, देव हे राम, सानुजस्य ते स्वागतं शोभनागमनं अस्तु । करुणा अस्यास्तीति करुणावान् तेन, दयाशीलेनेत्यर्थः, भवता मे माता अहल्या जीविता उज्जीविता । इदं दिष्ट्या अत्युत्तममभूत् । 'दिष्ट्या स्यान्मङ्गळादिषु' इति वैजयन्ती ॥ ४४ ॥

**(सं.चं.)** रामदेवेति समस्तं वा पदम् ॥ ४४ ॥

**मन्ये धन्यमिमं लोके विश्वामित्रं महामुनिम् ।**
**अन्तेवासिवदन्वेति [1]यद् भवान् पुरुषोत्तमः ॥ ४५ ॥**

**(भा.दी.) मन्य** इति । (यत्) यतः पुरुषोत्तमः क्षराक्षरपुरुषाभ्यामुत्तमः भवान् । अन्ते समीपे वस्तुं शीलमस्यास्तीत्यन्तेवासी शिष्यस्तद्वत् । 'हलदन्तात् सप्तम्याः सञ्ज्ञायाम्'(अ.सू.६.३.९) इति सप्तम्या अलुक् । अन्वेति अनुगच्छति । इण् गतौ लट् । तस्मात् लोको भुवनं तस्मिन्, महामुनिं इमं विश्वामित्रं धन्यं पुण्यवन्तं मन्ये जानामि । मन ज्ञाने लट् ॥ ४५ ॥

**(सं.चं.)** धन्यः कृतकृत्यः । पुरुषोत्तमोऽपि अन्तेवासिवत् शिष्यवदन्वेति ॥ ४५ ॥

**एष राजा पुरा राम गाधिसूनुर्म्महाबलः ।**
**वसिष्ठस्य वरिष्ठस्य गां कामदुहमाहरत् ॥ ४६ ॥**

**(भा.दी.)** राजर्षिभूतस्य विश्वामित्रस्य ब्रह्मर्षित्वावाप्तिं श्रीरामं प्रत्यनुवर्णयति– **एष** इति । हे राम, गाधेः सूनुः, महत् बलं यस्य स तथा, पुरा राजा एषः विश्वामित्रः, वरिष्ठस्य मुनिश्रेष्ठस्य वसिष्ठस्य काम-

१. **'यं भवान् पुरुषोत्तमः'** इति, **'यं भवान् पुरुषोत्तम'** इति च क्वचित् ।

मभीष्टं दोग्धीति कामधुक् तां कामदुहम्, कामितार्थप्रदामित्यर्थः, गां कामधेनुं आहरत् आजहार । हृञ् हरणे लङ् ॥ ४६ ॥

**(सं.चं.)** ऋषिषु वरिष्ठस्य । कामदुहं गां कामधेनुम् ॥ ४६ ॥

**शबला सा शकम्लेच्छयवनैर्वल्लवादिभिः ।**
**आत्मनोऽवयवोद्भूतैर्जघान नृपतेर्बलम् ॥ ४७ ॥**

**(भा.दी.) शबलेति** । सा शबला कामधेनुः, 'घातयित्वा मुहूर्तेन यत्सैन्यं शबला बलात् । अन्तर्धानं गता देवी ययौ शक्रान्तिकं क्षणात्' इति पाद्मे शबलाशब्दः कामधेनौ प्रसिद्धः । आत्मनः स्वस्याः अवयवेभ्यः मुखपुच्छादिभ्यः उद्भूतैरुत्पन्नैः शकाश्च म्लेच्छाश्च यवनाश्च तैः, वल्लवाः गोपाला आदयो येषां ते तथा तैः, नृपतेः गाधिपुत्रस्य विश्वामित्रस्य बलं सैन्यं तत्, 'बलं रूपेऽस्थनि स्थौल्ये शक्तिरेतश्चमूषु च' इति वैजयन्ती, जघान । हन हिंसागत्योः लिट् । चतुरङ्गबलेन सह राजा गाधिपुत्रो देशान् सञ्चरन् कदाचिद् वसिष्ठाश्रमं जगाम । वसिष्ठेन च निमन्त्रितस्तत्र कामधेनुमहिम्ना राजतदमात्यादीनामतिविचित्रतत्तदुचितोपचारे कृते सति गोरत्नमिदं राजार्हं मह्यं देहि, तुभ्यं गवां कोटीर्दास्यामीति तेनोक्तेन वसिष्ठेन, 'तुभ्यमियं न दातुमुचिता, मुनीनां होमधेनुत्वेन श्रीहरिणा निर्मितत्वादस्याः' इति प्रत्युक्तो राजा तां बलादाहर्तुं सैन्यमाज्ञापयामास । तदानीं च कामधेनुः स्वाङ्गसम्भूतैः पुरुषैस्तद्बलं पराजित्य स्वमोक्षणं चकारेति पौराणिकी प्रसिद्धिः ॥४७॥

**(सं.चं.)** शबला चित्रवर्णा नन्दिनी । 'आजुहाव ततः प्रीतः कल्माषीं धूतकल्मषः । एह्येहि शबले क्षिप्रं शृणु चापि वचो मम' (५२.२०) इति हि वाल्मीकिः । 'कामधेनुं वसिष्ठोऽपि यदा न त्यजते मुनिः । तदाऽस्य शबलां राम विश्वामित्रोऽन्वकर्षत' (५४.१)) इति च । 'तस्या हुम्भारवोत्सृष्टा वल्लवाः शतशो नृप । नाशयन्ति बलं सर्वं विश्वामित्रस्य पश्यतः' (५४.१८) इति च । 'पह्लवाः शतशो नृप–' इत्यर्वाचीनाः पठन्ति । 'योनिदेशाच्च यवनाः शकृद्देशाच्छकास्तथा । रोमकूपेषु च म्लेच्छा हारीताः सकिरातकाः' (५५.३) इति च । शकादयो वर्णबाह्या अन्त्यजातयो भटाः ॥ ४७ ॥

**नरदेवो महादेवं प्रसाद्यास्त्राण्यवाप्तवान् ।**
**सब्रह्मास्त्राणि सर्वाणि[1] वसिष्ठं तैर्युयोध सः ॥ ४८ ॥**

---

१. 'सब्राह्माणि च सर्वाणि'

**(भा.दी.) नरे**ति । नरदेवः राजा सः विश्वामित्रः, क्षिप्रप्रसादतया महान् पूज्यो यो देवस्तं रुद्रमित्यर्थः, तपसा प्रसाद्य प्रसन्नीकृत्य, ब्रह्मास्त्रेण सहितानि सब्रह्मास्त्राणि सर्वाणि अस्त्राणि अवाप्तवान् । तैः रुद्रलब्धैरस्त्रैः सः राजा वसिष्ठं युयोध । युध सम्प्रहारे लिट् ॥ ४८ ॥

**(सं.चं.)** महादेवं शिवं तपसा प्रसाद्य । 'महादेवप्रसादार्थं तपस्तेपे महातपाः' (५५.१२) इति च । ब्रह्मास्त्रसहितानि सर्वाण्यस्त्राणि । युयोध युयुधे ॥ ४८ ॥

**ब्रह्मजो ब्रह्मदण्डेन वैष्णवेन तमभ्ययात् ।**
**अग्रसत् तानि सोऽस्त्राणि परब्रह्मप्रसादतः ॥ ४९ ॥**

**(भा.दी.) ब्रह्मे**ति । ब्रह्मणश्चतुर्मुखाज्जातो ब्रह्मजो वसिष्ठः । विष्णुर्देवता अस्येति वैष्णवस्तेन ब्रह्मदण्डेन ब्रह्मदण्डाख्यास्त्रेण तं गाधिसुतं अभ्ययात् युद्धे अभिजगाम । या प्रापणे लङ् । स वसिष्ठः, परं सर्वोत्कृष्टं यत् ब्रह्म विष्ण्वाख्यं तस्य प्रसादोऽनुग्रहस्तस्मादिति ततः, तानि गाधिसुतप्रयुक्तास्त्राणि अग्रसत् तिरश्चकार । ग्रसु ग्लसु अदने लङ् ॥ ४९ ॥

**(सं.चं.)** ब्रह्मजो वसिष्ठः । ब्रह्मदण्डेन । स्वहस्तगते दण्डकाष्ठे वैष्णवं मन्त्रमभिमन्त्र्य प्रयुयोजेत्यर्थः । सः ब्रह्मदण्डः । तानि विश्वामित्रप्रयुक्तानि । परं ब्रह्म नारायणाख्यम् । 'तदेव ब्रह्म परमं कवीनाम्' इति हि श्रुतिः ॥ ४९ ॥

**वैष्णवेनैष[१] तपसा समर्थो गाधिनन्दनः ।**
**चण्डालितं च वासिष्ठैस्त्रिशङ्कुं स्वर्गमानयत् ॥ ५० ॥**

**(भा.दी.) वैष्णवेने**ति । विष्णोः सम्बन्धि वैष्णवं तेन तपसा समर्थः एषः गाधेर्नन्दनः विश्वामित्रः वसिष्ठस्यापत्यं पुमांसो वासिष्ठास्तैः, वसिष्ठपुत्रैरित्यर्थः, चण्डालितं चण्डालावस्थां प्रापितम्, त्रिशङ्कुं त्रिशङ्कुनामकं राजानम्, स्वर्गः स्वर्गलोकस्तं आनयत् अगमयत् । णीञ् प्रापणे लङ् । त्रिशङ्कुर्हि सकायः सन् स्वर्गमारुहेयमिति सङ्कल्प्य तदर्थं यागः कर्तव्य इति स्वगुरुपुत्रान् वासिष्ठान् प्रत्यब्रवीत् । तैश्चेदमयुक्तमस्मत्तो न भवतीत्युक्ते तर्ह्यन्यं गुरुं वरिष्य इति त्रिशङ्कुनोक्ते सति, अयुक्तं सङ्कल्प्य पुनरस्मद्वचनमशृण्वंश्चण्डालो भवेति शप्तस्तत्क्षण एव काककृष्णवपुश्चण्डालो भूत्वाऽत्यन्तं खिन्नो विश्वामित्रं गत्वा स्वावस्थां न्यवेदयत् । स च तव यथा सकायस्य स्वर्गः स्यात् तथा यागं करिष्य इति प्रतिज्ञाय वासिष्ठव्यतिरिक्तब्राह्मणान्

१. **'वैष्णवेनैव'**

बलादाहूय यज्ञे क्रियमाणे सति हविर्भागग्रहणार्थमनागतान् देवान् दृष्ट्वा क्रुद्धः सन् मदाज्ञयैव त्वं सकायः सन् स्वर्गमारोहेति वाङ्मात्रेणैव स्वर्गद्वारपर्यन्तं गतोऽथ देवैरुन्नमितशिराः सन् पतन् 'देवैः पातितोऽस्मि' इति रुराव । अथ तिष्ठतिष्ठेत्युक्तिमात्रेण यत्रस्थितस्तत्रैव स्वर्गान्तरं निर्माय तं स्थापयित्वा जगदन्तरमेव स्रक्ष्य इति सङ्कल्प्य स्रष्टुमारब्धे सति देवैः प्रसादितः उपररामेति पौराणिकी प्रसिद्धिः ॥ ५० ॥

**(सं.चं.)** वासिष्ठैः वसिष्ठपुत्रैः । चाण्डालितमिति पाठः सम्भाव्यते । चण्डालस्येदं कर्म भावो वा चाण्डालम् । तदस्य सञ्जातमिति चाण्डालितः । चण्डालितमिति पाठे चण्डालवदाचरतीति चण्डालति । भावप्रधानो वा निर्देशः । प्राप्तचण्डालत्वम् । इयमत्र कथा– त्रिशङ्कू राजा कुलगुरुं वसिष्ठमेत्य प्रार्थयामास– याजय माम्, येन सशरीरः स्वर्गं यायामिति । न शक्यं तदित्याह वसिष्ठः । अथच वसिष्ठपुत्रानेत्य प्रार्थयामास- भवतां तातेन प्रत्याख्यातः सम्प्रति भवतः शरणमागतः । याजयन्तु माम्, येन सशरीरः स्वर्गं याया- मिति । न शक्यं तदित्याहुस्तेऽपि, गुरुणा प्रत्याख्यातं कथमस्माभिश्चिकीर्षसीति । अथापि स हठादाह– तर्हि केनचिदन्येन पुरोहितेन मदीहितं सिषाधयिषामि, स्वस्ति वोऽस्त्विति । तदा कुपिता वसिष्ठपुत्रास्तं शेपुः– 'अनया गुर्ववज्ञया त्वं चण्डालत्वं गमिष्यसि' इति । स विश्वामित्रमेत्य प्रार्थयामास– याजय माम्, येन सशरीरः स्वर्गं यायामिति, प्रत्याख्यातोऽस्मि गुरुणा च गुरुपुत्रैश्चेति । स विश्वामित्रस्तं स्वतपस्तेजसा स्वर्गमनयत् । देवैः स्वर्गात् प्रच्याविते त्रिशङ्कौ स्वर्गमन्यं निर्माय तत्र तं स्थापयामासेति ॥ ५० ॥

**मखे क्लृप्तं[1] पशुत्वेन शुनःशेपमपालयत् ।**
**पुनश्चोरुतपस्तेपे वासुदेवमसौ स्मरन् ॥ ५१ ॥**

**(भा.दी.) मख** इति । (असौ) मखो हरिश्चन्द्रयज्ञस्तस्मिन् पशुत्वेन क्लृप्तं सङ्कल्पितम्, शुनःशेपः शुनः- शेपनामकमुनिस्तं अपालयत् । पाल रक्षणे लङ् । पुनश्च वासुदेवं स्मरन् सन् उरु च तत्तपश्च तत् तेपे । तप सन्तापे लिट् । अनपत्यो हरिश्चन्द्रः पुत्रश्चेदुत्पत्स्यते तर्हि तेनैव त्वां यक्ष्यामीति वरुणं प्रार्थयित्वा[2] तदनुग्रहेण रोहिताख्यपुत्रे जाते सत्यनन्तरं पुत्रेण मां यजेति वरुणेन बहुवारमुक्तेऽपि पुत्रस्नेहादयाजिनं वरुणो महोदरव्याधिग्रस्तं चकार । तद् दृष्ट्वा प्राणप्रेप्सू रोहितो वनं जगाम । स्वनिमित्तेन च व्याधिग्रस्तं तातं ततो मोचयितुं नरमेधयज्ञार्थं स्वप्रतिनिधित्वेन शुनःशेपं भार्गवादजीगर्तात् गोशतसहस्रेण क्रीत्वा पितरमा- जगाम । स च हरिश्चन्द्रः शुनःशेपं यूपे निबबन्ध । तदा जीवनार्थं शुनःशेपप्रार्थितो विश्वामित्रः शुनःशेपेन इन्द्रोपेन्द्रादिदेवानां स्तुतिं कारयित्वा मोचित(वान्) इति हि पौराणिकी प्रसिद्धिः । रामायणे तु अम्बरीषयज्ञे

---

१. 'यज्ञे क्लृप्तम्'

२. 'प्रार्थ्य' इति युक्तम् ।

इन्द्रेण पशावपहृते प्रतिनिधित्वेन शुनःशेपमृचीकाद् गृहीत्वा गमनसमये पुष्करक्षेत्रमाजगाम । तत्र च विश्वामित्रं दृष्ट्वा जीवनार्थं प्रार्थितो विश्वामित्रः शुनःशेपाय, अनेन देवान् स्तुहीति वेदमन्त्रमुपदिदेश। अनन्तरं स चाम्बरीषेण स्वयज्ञमागत्य यूपबद्धः सन् तेनेन्द्रादीनस्तौत्। तत्स्तुतिप्रसन्नैश्च सभाजित इति (यदुक्तं तत्) तु युगभेदेनेति ज्ञातव्यम् ॥ ५१ ॥

**(सं.चं.)** शुनःशेपमपालयत्। इयमत्र रामायणगता कथा– अयोध्यापतिरम्बरीषो यियक्षति स्म। सहस्राक्षस्तस्य पशुमपजहार। तं ह पुरोधा बोधयामास– महानिहायमन्तरायः। महच्चात्र प्रायश्चित्तं करणीयम्। तदर्थं कञ्चिन्नरमानय। यः पशुप्रतिनिधिः स्यादिति। स राजा पशुप्रतिनिधिं पुरुषमन्विष्यन् ऋचीकमाजगाम। अयाचत च तम्– तव तनयेष्वेकं दातुमर्हसि मह्यं मूल्येनेति। विदितपरावरः स ऋषिस्तेन विहरन्निवाऽह– ज्येष्ठो मम प्रेष्ठस्तं न दद्यामिति। विदितपतिभावा तज्जाया सत्यवत्यप्याह– कनिष्ठस्तु मम प्रेष्ठस्तमपि न दद्यामिति। मध्यमः शुनःशेपो राजानमाह– मध्यमोऽहम्, नयस्व मामिति। तेन ह सह प्रतस्थौ राजा। मध्ये पुनरध्वपरिश्रान्तः पुष्करक्षेत्रे विशश्राम। तत्र ह ददर्श स्वमातुलं विश्वामित्रं शुनःशेपः। तस्य जननी सत्यवती विश्वामित्रस्य हि ज्येष्ठभगिनी। मुनिकुमारस्तमापदस्त्राणाय ययाचे। विश्वामित्रः स्वतनयानाहूयोवाच– भागिनेयोऽयं बालः पुनरपि जिजीविषति। तद् यूयं तत्स्थाने पशुभूता अम्बरीषस्य यज्ञ उपहारीभवतेति। नेति होचुस्ते। अनुचितमात्मसुतांस्त्यक्त्वा परसुतरक्षणमिति। क्रुद्धो मुनिरनधिगतस्वाशयान् स्वतनयान् शशाप– जातिभ्रष्टा भवतेति। अहो भागधेयं शुनःशेपस्य। स किल विश्वामित्रान्मन्त्रदीक्षामवाप, यया तत्तनया वञ्चिता बभूवुः। स शुनःशेपाय द्वे गाथे मन्त्रभूते उपदिदेश, आदिदेश च– यूपबद्धः स्तुहि विष्णुमाभ्यां गाथाभ्याम्। तेन विमोक्ष्यस इति। तद्ध तथा चकार शुनःशेपः। स्तुतितर्पित इन्द्राविष्टो विष्णुः शुनःशेपाय दीर्घमायुर्ददौ। राजा च सहस्राक्षप्रसादेन प्रतिहतप्रत्यूहो यज्ञफलमवापेति। पुराणेषु च कथेयमन्यथा पठ्यते। तत्र यज्ञकर्ता हरिश्चन्द्रः। सुतं बलिदानाद् रक्षितुं शुनःशेपमाजहार। शुनःशेपश्च नाऽर्चीकः, किन्त्वाजीगर्तिः। बाह्वृच्येऽपि शतर्चिष्वेकः शुनःशेपः आजीगर्तिरित्येव पठ्यते। कल्पभेदेन व्यवस्थेत्याचक्षते। उभयविधकथासङ्ग्रहायैव प्रायः प्रबन्धा–'मखे पशुत्वेन क्लृप्तं शुनःशेपमपालयत्' इति सम्मुग्धमाह। असौ विश्वामित्रः प्राप्तवासुदेवप्रसादोऽपि पुनः प्रसादातिशयाय तपस्तेपे। ननु किमिदं महर्षयोऽप्येवमसभ्यं नामधेयं कुर्वते शुनःशेप इति शुनोलाङ्गूल इति? असभ्यं ते मनः, न नामधेयम्। श्वयतीति श्वा मातरिश्वा कथ्यते। तेन शिष्टे पथि पततीति शुनःशेपः। शुनः मातरिश्वनः लाङ्गूलमिव शुनोलाङ्गूलः। सदा प्राणतत्वमनुसरन् प्राणोपासकः। एवं शुनःपुच्छोऽपि। धन्यो मुनिरयं यदमङ्गलार्थप्रतिभासैः पदैः माङ्गलिकमर्थं स्फोरयन् पुत्राणां नाम चकार। वैदिकानामयं प्रतनः सम्प्रदायः, यत् सर्वैः पदैः प्राण-

नारायणयोः स्मरणम् । तद्यथा भगवान् । संसारिणः सर्वेऽपि भवन्ति स्वभार्याभगवन्तः । अथापि न तान् भगवत आचक्षते । किन्तु परमात्मानमेव भगवन्तमाचक्षते । 'शेपपुच्छलाङ्गूलेषु शुनः सञ्ज्ञायां षष्ठ्या अलुग् वक्तव्यः' इति वार्तिकम् । अलुगयं नाऽक्रोशे[1] । किन्तु प्रीत्यतिशये ॥ ५१ ॥

**मेनकायां तु कामेन रम्भायां क्रोधतोऽप्यसौ ।**
**दैवेच्छया तपोनाशं प्राप्य तेपे पुनस्तपः ॥ ५२ ॥**

**(भा.दी.) मेनकायामि**ति । असौ विश्वामित्रः मेनकायां कामो रागस्तेन, रम्भायां क्रोधतोऽपि कोपेनापि, दैवस्य ईश्वरस्येच्छया तपसो नाशस्तं प्राप्य पुनः तपस्तेपे । तप सन्तापे लिट् । विश्वामित्रेण वसिष्ठसाम्येच्छया तपसि क्रियमाणे सति तत्तपोविघातार्थमिन्द्रेण प्रेषितां मेनकां दृष्ट्वा मोहितस्तया बहुकालं रममाणः सन् तपोहानिं जगाम । अथ च ततोऽप्युत्कृष्टे तपसि क्रियमाणे सति स्ववञ्चनार्थं प्राप्तां रम्भां दृष्ट्वा क्रोधवशात् दशवर्षसहस्रपर्यन्तं शिला भवेति शापदानेन तपोनाशं जगामेति हि प्रसिद्धिः ॥ ५२ ॥

**(सं.चं.)** वसिष्ठस्य ब्रह्मदण्डेन पराभूतो विश्वामित्रः पूर्वं सभार्यस्तपस्तेपे । तपसा तुष्टो ब्रह्मा 'त्वमनेन राजर्षित्वं प्राप्तः' इत्यूचे । पुनरतृप्तः पुष्करे तपस्यन् देवानतोषयत् । पुनरागतो विधिस्तमाह– 'इदानीमृषिस्त्वमसि' इति । विश्वामित्रो भूय एव तपस्तेपे । अथ कदाचिन्मेनकां पुष्करेषु स्नातुमुपक्रान्तामवालोकत । अवलोक्य च कन्दर्पवशमागतः । दशवर्षाणि स तया रेमे । मेनका शकुन्तळां सुषुवे । स चिन्तयामास– अहो मोहमुषिता मे शेमुषी सर्वं विस्मारयामास । नूनं सुराणां कापटिकं कर्मैतदिति । अथ स कृतनिश्चयो महामुनिस्तां सान्त्वपूर्वं विसृज्य पुनस्तपस्तेपे कौशिकीतीरे हिमवतः शृङ्गे । तपसा तुष्टो ब्रह्मा 'त्वमिदानीं महर्षिरसि' इत्याह । अतृप्तो मुनिः पुनस्तपस्तेपे । अथ सन्त्रस्तः सुरपती रम्भां सम्भाव्य प्रेषयामास मुनिं प्रलोभयेति, प्रलोभ्य तपसः प्रच्यावयेति । रम्भा भीतभीता तमुपससाद । आरादेव निशम्य रम्यं कोकिलकूजितं मुनिः शनैश्चक्षुषी उन्मीलयामास । ददर्श च पुरःस्थितां मोहपेटिकामिव रम्भाम् । जितेऽपि कामे क्रोधो विजजृम्भे । विज्ञाय तस्या भावं ज्वलितकोपस्तां शशाप– रम्भे स्तम्भीभव दश वर्षसहस्राणीति । पुनः क्रोधविजयाय तपस्तेपे । तस्याविचलां निष्ठां निरीक्ष्य परमेष्ठी परितुष्ट आगत्याऽचष्ट– त्वमिदानीं ब्रह्मर्षिरसि, वसिष्ठतुल्यो ब्रह्मिष्ठोऽसीति । तदेतत् सर्वं सङ्गृह्य श्लोकत्रयेणाऽह– मेनकायां तु कामेनेत्यादिना ॥ ५२ ॥

---

१. **'षष्ठ्या आक्रोशे'** (अ.सू.६.३.२१) इति सूत्रे पठितमिदं वार्तिकम् । अथापि वार्तिके **'आक्रोशे'** इति सूत्रपदं नानुवर्तनीयमित्यर्थः । अनाक्रोशेऽपि क्वचिदलुग् भवतीति सूचनाय हि वार्तिकप्रवृत्तिः ।

**निराहारो निरुच्छ्वासो निरास्पन्दो निरामयः ।**
**वर्षायुतान्यनेकानि तपश्चक्रेऽथ चक्रिणे ॥ ५३ ॥**

**(भा.दी.)** ब्रह्मर्षित्वाकाङ्क्षयाऽत्युत्कटं तपः पुनश्च चकारेत्याह– **निराहार** इति । अथ निर्गत आहारो यस्मात् स तथा । निर्गत उच्छ्वासो यस्मात् स तथा । योगसामर्थ्येन स्तम्भितश्वास इत्यर्थः । निर्गत आस्पन्दस्तनुचलनं यस्मात् स तथा । निर्गत आमयः क्षुद्बाधादिदोषो यस्मात् स तथा । विश्वामित्रः अनेकानि वर्षाणां अयुतानि दशसहस्राणि तानि, निरन्तरबहुवर्षसहस्रेष्वित्यर्थः, चक्रिणे श्रीहरये, तत्प्रीतिमुद्दिश्येत्यर्थः, तपश्चक्रे । कृञ् धातोर्लिट् ॥ ५३ ॥

**(सं.चं.)** निरास्पन्दो निश्चलः । भगवदनुग्रहबलात् तावन्तमपि महान्तमनेहसं निरामयः व्याध्यादिभिरनभिभूतः ॥ ५३ ॥

**राजर्षित्वमृषित्वं च महर्षित्वं महाव्रतैः ।**
**ब्रह्मर्षिता च ब्रह्माद्यैः क्रमेणास्यान्वमोद्यत ॥ ५४ ॥**

**(भा.दी.)** **राजे**ति । ब्रह्मा आद्यो येषां ते तथा तैः देवैः, महान्ति च तानि व्रतानि च तैः अनशनादिव्रतैरित्यर्थः । हेतौ तृतीया । अस्य विश्वामित्रस्य राजा चासौ ऋषिश्च राजर्षिस्तस्य भावस्तत्वम् । ऋषित्वं त्रिकालज्ञानित्वम् । ऋष ज्ञान इति धातुः । महांश्चासौ ऋषिश्च तस्य भावस्तत्त्वम् । ब्रह्मा चासौ ऋषिश्च ब्रह्मर्षिस्तस्य भावस्तत्ता सा च । क्रमो राजर्षित्वादिक्रमस्तेन अन्वमोद्यत अङ्गीकृतम् । अनुपूर्वको मुद हर्षे लङ् । तपोविशेषेण तुष्टैर्ब्रह्मादिभिः राजर्षित्वादिकं तस्मिन्नेव जन्मनि प्रदत्तमिति भावः ॥ ५४ ॥

**(सं.चं.)** ब्रह्माद्यैः कर्तृभिः । महाव्रतैः करणैः । मोदतेः भावे मुद्यत इति रूपम् । तेन 'ब्रह्माद्यैरन्वमुद्यत' इति वक्तव्यम् । निरङ्कुशाः कवयो नियोगपर्यनुयोगानर्हाः । मोदयतेर्वा रूपम् ॥ ५४ ॥

**वासुदेवप्रसादोऽयमीदृशो यस्य विद्यते ।**
**ब्रह्मण्यस्य तवैतस्मिन् प्रणयो नातिविस्मयः ॥ ५५ ॥**

**(भा.दी.)** **वासुदेवे**ति । यस्य विश्वामित्रस्य ईदृशः एवंवर्तितप्रकारः, अयं क्षत्रियजन्मन्येव ब्रह्मर्षित्वहेतुतया प्रत्यक्षफलकः, वासुदेवप्रसादो श्रीहर्यनुग्रहः विद्यते अस्ति । विद सत्तायां लट् । एतस्मिन् विश्वामित्रे, ब्रह्मणि

ब्राह्मणजातौ साधुर्ब्रह्मण्यस्तस्य ब्राह्मणप्रियस्येत्यर्थः, 'तत्र साधुः' (अ.सू.४.४.९८) इति ण्यः । हे राम, तव प्रणयः स्नेहः, अतिविस्मयः अत्याश्चर्यभूतः न भवति । अस्य ब्राह्मणाग्रेसरत्वादिति भावः ॥ ५५ ॥

**(सं.चं.)** ब्रह्मण्यस्य ज्ञानिषु वत्सलस्य तव रामस्य ॥ ५५ ॥

**गौतमात्मजगिरं स राघवः शुश्रुवानिति ददर्श कौशिकम् ।**
**तत्रतत्र हि कथाः शृणोत्यसौ सर्वविच्च जनतां विडम्बयन् ॥ ५६ ॥**

**(भा.दी.) गौतमे**ति । गौतमस्य आत्मजः सुतस्तस्य गीस्ताम्, इति शुश्रुवान् श्रुतवान् सः राघवः कौशिकं विश्वामित्रं ददर्श सन्तोषातिशयेन तमभिवर्द्धयन् ददर्श । दृशिर् प्रेक्षणे लिट् । सर्वज्ञस्य श्रीरामस्य प्रश्नपूर्वकं शतानन्दादिभ्यः कथाश्रवणादिकं कथमुपपद्यत इत्यत आह– **तत्रे**ति । जनानां समूहो जनता ताम्, विडम्बयन् अनुकुर्वन् असौ श्रीरामः सर्वं वेत्तीति सर्वविच्च सर्वज्ञोऽपि तत्रतत्राऽश्रमेषु कथाः शृणोति (हि) । श्रु श्रवणे लट् ॥ ५६ ॥

**(सं.चं.)** सर्वविदपि अजानन्निव, अश्रुतपूर्वमिव शृणोति । गौतमात्मजः शतानन्दः । रनरा लगाविति रथोद्धता ॥ ५६ ॥

**सज्ज्ञानरूपे[1] जगदेकदीपे नाज्ञानलेशोऽपि घटेत रामे ।**
**प्रकाशमूर्त्तावहिमप्रकाशे न हि क्वचिद् ध्वान्तलवोऽपि लक्ष्यः॥ ५७ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**बालकाण्डे षष्ठः सर्ग्गः ॥**

—०—

**(भा.दी.)** नैतावता श्रीरामस्याज्ञानमित्येतत् सदृष्टान्तमुपपादयति– **सदि**ति । सत् निर्दुष्टं यत् ज्ञानं तदेव रूपं स्वरूपं यस्य स तथा तस्मिन्, जगत् रमाब्रह्मादिचेतनजातं एकतो मुख्यतो दीपयति प्रकाशयतीति तथा तस्मिन्, रमाब्रह्मादिज्ञानस्यापि दीपक इत्यर्थः । यद्वा एकश्चासौ दीपश्च एकदीपः । जगति एकदीप इव जगदेकदीपस्तस्मिन्, ज्ञानादिगुणैर्जगति दीपइव प्रकाशमान इत्यर्थः । श्रीरामे अज्ञानस्य लेशोऽप्येकदेशोऽपि, यत्किञ्चिद्विषयकाज्ञानमपीत्यर्थः । (न घटेत) । प्रकाशः मूर्तिः शरीरं यस्य स तथा तस्मिन् । अहिमोऽशीतः

१. 'सुज्ञानरूपे'

प्रकाशो यस्य स तथा तस्मिन् सूर्ये, क्वचित्काले ध्वान्तस्यान्धकारस्य लवोऽप्येकदेशोऽपि लक्ष्यः दृश्यः नहि नास्ति यद्वत् तद्वत् श्रीरामे अज्ञानं न किञ्चिदपि युज्यत इत्यर्थः। घट परिवर्तने लिङ्। एवञ्च मानुषलोकेऽवतीर्णः श्रीरामस्तत्रत्यजनवत् स्वयं च प्रश्नादिकं करोति शृणोतीव, न त्वज्ञानेनेति भावः ॥ ५७ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां**
**बालकाण्डे षष्ठः सर्गः ॥**

—०—

**(सं.चं.)** अज्ञानासमानाधिकरणं सर्वङ्कषमनन्तं च ज्ञानं सज्ज्ञानम्। अर्थान्तरं न्यस्य स्ववचनं समर्थयते– प्रकाशमूर्ताविति । प्रकाशस्वरूपे । अहिमप्रकाशे उष्णतेजसि भास्करे । इन्द्रवज्रा पूर्वार्धे । उत्तरार्धे चोपेन्द्रवज्रेत्युपजातिः ॥ ५७ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां**
**बालकाण्डे षष्ठसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– २४९+५७=३०६]

# सप्तमः सर्ग्गः

**ततः परस्मिन् दिवसे स राजा सराघवं कौशिकमात्मशालाम् ।**
**आनीय नत्वा परिपूर्णकामः सप्रश्रयं[1] वाचमुवाच वाग्ग्मी ॥ १ ॥**

**(भा.दी.)** श्रीरामं जामातरं कुर्विति विश्वामित्रोक्तो जनकः किमुक्तवानित्यत आह– **तत** इति । ततः श्रीरामशतानन्दयोः सम्भाषणानन्तरम्, परिपूर्णः कामो मनोरथः यस्य स तथा, स्वकन्योचितवरलाभेन पूर्णमनोरथ इत्यर्थः । प्रशस्ता वागस्यास्तीति वाग्ग्मी । 'वाचो ग्मिनिः'(अ.सू.५.२.१२४) इति प्रशंसालक्षणमत्वर्थे ग्मिनिः । स्वचित्तस्थप्रमेयप्रतिपादने पटुरित्यर्थः । राजा जनकः, परस्मिन् गमनदिनादन्यस्मिन्, दिवसो दिनं तस्मिन्, सराघवं श्रीरामसहितं कौशिकं विश्वामित्रम् आत्मनः शालां यज्ञशालां प्रति, आनीय आकारयित्वा, नत्वा नमस्कृत्य, प्रश्रयेण विनयेन सहितं यथा भवति तथा सप्रश्रयम्, वाचं उवाच । वच परिभाषणे लिट् ॥ १ ॥

**(सं.चं.)** उपजातिभिः सप्तमं सर्गमारभते । आत्मनः शालां सदनम् । 'शाला वेश्म निवेशनोदवसिते प्रोक्ते च सद्मौकसी' इति च । कौशिकं नत्वा । पूर्वार्ध उपेन्द्रवज्रा । उत्तरार्ध इन्द्रवज्रा । उपजातौ तावच्चतुर्दशप्रभेदा भवन्ति चतुर्षु चरणेष्विन्द्रवज्रोपेन्द्रवज्रयोः परिवर्तनेन । तथाह्युक्तम्–'कीर्तिर्वाणी माला शाला हंसी माया जाया बाला । आर्द्रा भद्रा प्रेमा रामा ऋद्धिर्बुद्धिर्नामान्यासाम्' इति । तत्रेयं माला नामोपजातिः । 'उपेन्द्रमाला' इति नाम सूक्तम् ॥ १ ॥

**यागाय गां गाधिज कर्षतो मे बभूव कन्या भुवनेषु धन्या ।**
**सीराग्रमार्ग्गादत एव सीता महानिधिश्रीरिव निर्द्धनस्य ॥ २ ॥**

**(भा.दी.)** **यागायेति** । गाधेर्जातो गाधिजः तत्सम्बुद्धिः, हे विश्वामित्र, यागो यज्ञस्तस्मै तादर्थ्ये चतुर्थी, गां भुवं मे मम कर्षतः सतः, सीरस्य हलस्य यदग्रं तस्य मार्गस्तस्मात्, लाङ्गलपद्धतेरित्यर्थः, भुवनानि

---

१. **'सप्रश्रयो वाच–'**

जगन्ति तेषु धन्या रूपशीलगुणैरुत्तमा । 'यस्तु स्तुत्यैर्गुणैः कल्यः स धन्य इति कीर्तितः' इत्यभिधानम् । कन्या, न विद्यते धनं यस्य स तथा तस्य दरिद्रस्येत्यर्थः, महान् यो निधिर्निहितद्रव्यं तद्रूपा श्रीरिव सम्पदिव बभूव प्रादुरभूत् । भूधातोर्लिट् । अत एव लाङ्गलपद्धतिजातत्वादेव सीता सीतानाम्नी बभूव । 'सीता लाङ्गलपद्धतिः' इत्यमरः ॥ २ ॥

**(सं.चं.)** गाधिजेति तस्य क्षत्रियत्वं प्रीत्या स्मरति । त्वं ब्रह्मर्षिरभूः । अस्माकं तु क्षत्रियाणां त्वं क्षत्रियमूर्धन्य इत्येव प्रिय इति । यागाय भूशोधनार्थं गां भुवं कर्षतः । सीराग्रमार्गाज्जाता बभूव । अत एव सीरजाता सीतेति पप्रथे । महानिधिश्रीः । निधिवद् भूगर्भे पिहिता महती श्रीरिव । विषमयोरिन्द्रवज्रा, समयोरुपेन्द्र-वज्रा । तेन भद्रा नामेयमुपजातिः ॥ २ ॥

**पूर्णा यदा चन्द्रकलेव बाला तदा चिरं मां प्रविवेश चिन्ता ।**
**इमामयोग्याय कथं नु दद्यां त्रयीमिवान्त्याय कथञ्चनेति ॥ ३ ॥**

**(भा.दी.) पूर्णे**ति । बाला सा सीता । चन्द्रस्य कला षोडशांशः सेव । 'कला तु षोडशे भागे' इत्य-मरः । यथा अमायामवशिष्टा चन्द्रकला पौर्णमास्यां सम्पूर्णा भवति तद्वत्, यदा पूर्णा यौवनव्यञ्जकस्तनाद्यवयवैः परिपूर्णा, तदा इमां सीतां अयोग्याय बलरूपादिगुणैरननुरूपाय पुरुषाय कथञ्चन सर्वथा कथं नु कथमेव, अन्ते अन्तिमवर्णे भवोऽन्त्यः शूद्रस्तस्मै त्रयीमिव वेदत्रयमिव दद्याम् । डु दाञ् दाने लिङ् । इति चिरं दीर्घकाले मां चिन्ता प्रविवेश । विश प्रवेशने लिट् ॥ ३ ॥

**(सं.चं.)** पूर्णा चन्द्रकला । पूर्णकलश्चन्द्र इत्यर्थः । बाला च पूर्णा सुव्यक्तयौवनलक्षणा । 'कथं न दद्याम्' इति पाठः साधुः । केन प्रकारेण कृते अयोग्याय न दद्याम्, अयोग्यदानप्रसङ्गो न घटेत तथा वर्तितव्यमिति चिन्तयामासेत्यर्थः । प्रथमपाद एवेन्द्रवज्रा । अन्त्येषु त्रिषूपेन्द्रवज्रा । तेन बुद्धिर्नामेयमुपजातिः ॥ ३ ॥

**वरं[1] धनूरत्नमलाभि शम्भोः प्रसादितान्नस्तपसा चिरेण ।**
**विना पिनाकास्त्रमचालनीयं विना यथा भूतळमादिकोलम् ॥ ४ ॥**

**(भा.दी.) वरमि**ति । चिरेण बहुकालतः नः अस्माकं तपसा प्रसादितात् प्रसन्नीकृतात् शम्भोः रुद्रात्, भुवः तळं भूमण्डलम्, आदौ विद्यमानः कोलो वराहः आदिकोलस्तम्, आदिवराहमित्यर्थः, विना यथा

१. **'इदं धनूरत्नम्'** इति च पाठः ।

अचालनीयम्, तथा पिनाकः पिनाकनामकमस्त्रं धनुर्यस्य स तथा तं रुद्रम्, 'अस्त्रं धनुरिष्वासम्'[१] इति हलः, विना, चालनीयं न भवतीत्यचालनीयम्, चालयितुमशक्यमित्यर्थः, अत एव वरमुत्कृष्टं धनुष्षु रत्नं श्रेष्ठम्, 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः, अलाभि लब्धम्, मयेति शेषः । डु लभष् प्राप्तौ लुङ् ॥ ४ ॥

**(सं.चं.)** शम्भोर्यदिदं धनूरत्नं तन्नस्तपसा प्रसादिताच्छम्भोरेवास्माभिरलाभि । पिनाकमजगवं यस्यास्त्रं धनुः स पिनाकास्त्रः शिवः । 'अस्त्रं धनुरिष्वासः' इत्यभिधानम् । ननु यदस्यते तदस्त्रम् । तत् कथं धनुरस्त्रम्? नेत्याह । यत्र निहिता बाणा अस्यन्ते तदप्यस्त्रम् । चतुर्ष्वपि पादेषूपेन्द्रवज्रा ॥ ४ ॥

**दक्षाध्वरे पूर्वमनेन शर्वो नप्राप्य भागं त्रिदशांश्चकर्त्त ।**
**प्रसादितः क्षिप्रतरप्रसादः स्वाङ्गानि तेषामथ सन्दधे च ॥ ५ ॥**

**(भा.दी.) दक्षे**ति । शृणाति संहरति जगदिति शर्वः शिवः । (पूर्वं) पुरा दक्षस्य दक्षप्रजेश्वरस्याध्वरो यज्ञस्तस्मिन् भागो हविर्भागस्तम्, नप्राप्य अलब्ध्वा, अनेन मह्यं दत्तधनुषा त्रिदशान् देवान् चकर्त । कृती च्छेदने लिट् । अथ देवैः प्रसादितः प्रसन्नीकृतः, अत्यन्तं क्षिप्रः क्षिप्रतरः, तादृशः प्रसादो यस्य स तथा शिवः, तेषां च्छिन्नाङ्गानां देवानाम्, (स्वानि) अङ्गानि अवयवान्, सन्दधे च सन्धितवांश्च । सम्पूर्वः डु धाञ् धारणपोषणयोर्लिट् ॥ ५ ॥

**(सं.चं.)** आहुतिभागमप्राप्य कुपितः शर्वः । 'नप्राप्य' इति समस्तं पदम् । क्षिप्रप्रसादो हि विघ्नराजः । तत्पिता चायं क्षिप्रतरप्रसादः । कोपेन चकर्त । क्षिप्रं प्रसन्नः सन्दधे च । तृतीयचरण उपेन्द्रवज्रा । अवशिष्टेष्विन्द्रवज्रा । तेन शाला नामोपजातिः ॥ ५ ॥

**आरोपयेच्चापमिदं[२] य एव तस्मै प्रदास्यामि सुतां ममेति ।**
**प्रतिश्रवो मे विससार लोके सहस्ररश्मेरिव रश्मिराशिः ॥ ६ ॥**

**(भा.दी.) आरोपये**दिति । य एव पुरुषः इदं चापं आरोपयेत् सज्यं कुर्यात् । रुह बीजजन्मनि प्रादुर्भावे च लिङ् । 'रुहः पोऽन्यतरस्याम्' (अ.सू.७.३.४३) इति पः । तस्मै पुरुषाय मम सुतां सीतां प्रदास्यामि । दाञ् दाने लृट् । इति मे प्रतिश्रवः प्रतिज्ञा । सहस्रं रश्मयो यस्य स तथा तस्य सूर्यस्य रश्मीनां राशिः समूह इव लोको भुवनं तस्मिन् विससार विसृतोऽभूत् । सृ गतौ लिट् ॥ ६ ॥

१. **'धनुरिष्वासः'** इति प्रचलितः पाठः ।

२. **'आरोपयेचापमिमम्' । 'अस्त्रियौ चापधनुषौ'** इति वैजयन्तीवचनात् चापश्चापं वा । **'विकटोदरमस्तु चापम्'** इति भवभूतिः ।

**(सं.चं.)** आरोपयेत्, 'रू(रु)प उपरिभावे' इति प्राचीनो धातुपाठः । पाणिनीयास्तु रुहधातोरेव पकारादेशं मन्यन्ते । सूर्यरश्मिरिव सर्वत्र विसृतो मे प्रतिश्रवः । पूर्वार्ध इन्द्रवज्रा । उत्तरार्ध उपेन्द्रवज्रा । तेन रामा नामोपजातिः ॥ ६ ॥

**विराजमाना इह राजपुत्राः सयक्षरक्षःप्रवराश्च दैत्याः ।**
**स्वयम्बरं[1] वीरवरा उपायन् पद्माकरं हंसवराइवाऽशु ॥ ७ ॥**

**(भा.दी.) विराजे**ति । विराजमानाः शोभमानाः वीरेषु वराः श्रेष्ठाः राजपुत्राः, यक्षाश्च रक्षांसि च तेषु प्रवराः श्रेष्ठास्तैः सहिताः सयक्षरक्षःप्रवराः दैत्याश्च, स्वयंवरः स्वयं वरणं तम्, पद्मानामाकर आश्रयस्तं सरोवर-मित्यर्थः, हंसवराइव हंसश्रेष्ठाइव इह मिथिलायां उपायन् उपाजग्मुः । इण् गतौ लङ् ॥ ७ ॥

**(सं.चं.)** इह भूमौ विराजमानाः प्रथितयशसः । स्वयम्बरम् । 'तदा विदेहेन सुतास्वयम्बरो विघोषितः' (४.९) इति निर्णये । अधिकं निर्णयचन्द्रिकायाम् । आदौ पादत्रये उपेन्द्रवज्रा । तुरीये चेन्द्रवज्रा । तेन माया नामोपजातिः ॥ ७ ॥

**आलोक्य केचिद्धनुराप्य केचिदन्ये परिस्पृश्य परे प्रचाल्य ।**
**वीरा अवीरत्वमवाप्य याताः केचिद् गतास्तानवलोक्य भीताः ॥ ८ ॥**

**(भा.दी.)** आगतानां तेषामवस्थां वर्णयति– **आलोक्ये**त्यादिना । केचित् वीराः आलोक्य वीरो न भवतीत्य-वीरस्तस्य भावस्तत्त्वं तत्, धनुष उद्धरणे असमर्थत्वमित्यर्थः, अवाप्य याताः स्वपुरं प्रति प्राप्ताः । केचित् धनुः आप्य भीताः सन्तः याताः । अन्ये तदुद्धर्तुं परिस्पृश्य भीताः सन्तो याताः । परे अन्ये वीराः धनुः प्रचाल्य भीताः सन्तो याताः । केचित् तान् भग्नदर्पतया परावृत्य गच्छतो वीरान् अवलोक्य भीताः सन्तो गताः ॥ ८ ॥

**(सं.चं.)** केचिद् दूरतो धनुरालोक्यैव भीताः । केचिद् धैर्येण समीपमाप्य गलितगर्वाः । अन्ये परिस्पृश्य आमूलचूळं परामृश्य कम्पितसर्वाङ्गाः । परे प्रसभं चालयित्वा दृढं स्थातुमप्रभवन्तः । केचिद् वीरानपि विफलतया प्रतिनिवृत्तानवलोक्यैव स्वयं भीता याताः । स्वतो गत्वा धनुरवलोकयितुमप्यपारयन्तः । समग्रेयमिन्द्रवज्रा ॥ ८ ॥

---

१. 'स्वयंवरम्'

**उद्धर्त्तुकामा धनुरुद्धता ये स्विन्नाः क्षितौ ते पतिताः समूर्च्छाः[१] ।**
**दशाननाद्याश्च दशामगच्छन् शोच्यामशोच्याः किमुतान्यलोकः[२] ॥ ९ ॥**

**(भा.दी.)** **उद्धर्तुकामा** इति । उद्धताः बलादिनोन्नद्धाः, धनुः उद्धर्तुं काम इच्छा येषां ते तथा ये पुरुषास्ते स्विन्नाः आयासेन स्वेदयुक्ताः सन्तः, समूर्च्छाः मूर्च्छया सहिताः सन्तः क्षितौ पतिताः । अशोच्याः शत्रुभिः शोचितुमशक्याः दशाननाद्याश्च स्वकीयैः शोच्यां दशां अवस्थाम्, मूर्छामित्यर्थः, अगच्छन् । गम्लृ गतौ लङ् । अन्यलोकः रावणादिभ्योऽन्यो जनः किमुत असमर्थ इति किं वक्तव्यम् ॥ ९ ॥

**(सं.चं.)** केचिदुद्धताः स्ववीर्येऽतिमानवन्तः । अशोच्या अपि शोच्यां दशामगच्छन् । रामायणानुदितेयं कथा । तृतीयपाद उपेन्द्रवज्रा । इतरेष्विन्द्रवज्रा । तेन शाला नामेयमुपजातिः पञ्चमवत् ॥ ९ ॥

**शठा हठादप्यपहर्त्तुकामाः कन्यां न शेकुर्बलिनोऽपि मत्तः[३] ।**
**संवत्सरं संयति माऽभियाता बलं विरिञ्चस्य वरो वरो मे ॥ १० ॥**

**(भा.दी.)** अधर्मशीलै रावणादिभिस्तर्हि बलात्कृत्य कुतो नापहृतेत्यत आह– **शठा** इति । शठाः वक्र-बुद्धयः । 'निकृतस्त्वनृजुः शठः' इत्यमरः । हठादपि बलादपि । 'प्रसभं तु बलात्कारो हठोऽथ' इत्यमरः । कन्यां सीतां अपहर्तुं कामो येषां ते तथा । अत एव संवत्सरः संवत्सरकालस्तं संयत् युद्धं तस्यां मा मां प्रति अभियाताः आगच्छन्तः रावणाद्याः, (मत्तः) बलमेषामस्तीति बलिनः, तथाऽपि यतः मे मम विभिः पक्षिभी रिच्यते उह्यते इति विरिञ्चस्तस्य ब्रह्मणः वरः श्रेष्ठः वरः बलं तस्मात्, कन्यां अपहर्तुं न शेकुः, न समर्था बभूवुः । शक्लृ शक्तौ लिट् । कश्चिदपि बलात्कारेण तां कन्यकां न नेष्यति तेभ्यस्तव पराजयो वा नास्तीति ब्रह्मवरमहिम्नैव कन्या नापहृता । नतु मच्छक्त्येति भावः ॥ १० ॥

**(सं.चं.)** शठा धूर्ताः कापटिका जम्बुकप्रज्ञाः । हठो बलात्कारः । गर्हायामपिः । अपहर्तुं न शेकुः । मत्तः बलिनोऽपि । संवत्सरं संयति युद्धे । समग्रो वत्सर एवैतैर्युध्यमानस्य मेऽतीतः । अथापि न शेकुः । कुतः? विरिञ्चस्य वरः श्रेष्ठो वर एव मम बलम् । कन्यार्थे मा त्वां कश्चिदपि स्म धर्षयदिति विरिञ्चवरः । अयं सुरगणैर्दत्तो वर इति रामायणे । नहि ब्रह्मवरमत्तो रावण इतरदेवतावरेण शक्यो जेतुम् । अतो 'विरिञ्चस्य वरो बलं मे' इति । सुरगणैर्वृतो विरिञ्चो वरं ददाविति वाल्मीकेराशयः । 'पुरा हि मेऽदात् प्रभुरब्जजो वरम्' (४.२२) इति हि निर्णयवचनम् । आद्यन्तयोरुपेन्द्रवज्रा । मध्ययोरिन्द्रवज्रा । तेनेयमार्द्रा नामोपजातिः ॥१०॥

१. 'सुमूर्च्छाः' २. 'किमुतान्यलोकाः' ३. 'मत्ताः'

**आरोपयेद् राघव एव चापमन्वेतु सीता पतिमेनमेव ।**
**सम्पूर्णचन्द्रं प्रति चन्द्रिकेव प्रभा प्रभानाथमिवानुरूपा ॥ ११ ॥**

**(भा.दी.) आरोपयेदि**ति । राघव एव चापो रुद्रधनुस्तं आरोपयेत्, सज्यं कुर्यात् । रुह बीजजन्मनि प्रादुर्भावे च लिङ् । सम्पूर्णचन्द्रं प्रति चन्द्रिकेव चन्द्रज्योत्स्नेव, प्रभानाथं सूर्यं प्रति प्रभेव अनुरूपा अनुगुणा सीता एनमेव श्रीराममेव (पतिं) भर्तारं अन्वेतु अनुगच्छतु । इण् गतौ लोट् ॥ ११ ॥

**(सं.चं.)** प्रभानाथं सूर्यमिव । तुरीयचरण उपेन्द्रवज्रा । अन्यत्रेन्द्रवज्रा । तेन बाला नामेयमुपजातिः ॥११॥

**इति ब्रुवाणं नरनाथमेनमुदाहरद् विप्र उदारचेताः ।**[१]
**शरासनं वैरिनिरासनं तदानीयतां द्रागवनीश्वरेति ॥ १२ ॥**

**(भा.दी.) इती**ति । उदारमुत्कृष्टं चेतो मनो यस्य स तथा विप्रः विश्वामित्रः, इति एवमादिप्रकारेण ब्रुवाणं वदन्तं नरदेवानां राज्ञां नाथम्[२], एनं जनकं प्रति, हे अवनीश्वर, भूप जनक, वैरिणां निरासनं निराकरणं यत् शरासनं धनुस्तत् द्राक् शीघ्रं आनीयताम् । णीञ् प्रापणे लोट् । इति उदाहरत् उवाच । उदाङ्पूर्वकात् हृञ् हरणे लङ् ॥ १२ ॥

**(सं.चं.)** नरनाथं जनकं विप्रो विश्वामित्र उदाहरत् उदैरयत् । शरासनं चापम् । तुरीयचरण इन्द्रवज्रा । अन्यत्रोपेन्द्रवज्रा सप्तमपद्यवत् । तेनात्रापि माया नामोपजातिः ॥ १२ ॥

**[३]राजाज्ञयाऽथाऽचकृषेऽष्टचक्रमञ्जूषयाऽयःकृतयाऽभिगुप्तम् ।**
**वीरोत्तमैः पञ्चसहस्रसङ्ख्यैर्वराच्छिवस्यैव वरं शिवास्त्रम् ॥ १३ ॥**

**(भा.दी.) राजे**ति । अथ अयसा लोहेन कृतया । अष्टौ चक्राणि यस्याः सा तथोक्ता सा च सा मञ्जूषा तया । अनेन मञ्जूषाया अतिस्थूलत्वं दर्शितम् । अभिगुप्तं रक्षितं वरमुत्तमं शिवास्त्रम्, शिवस्य अस्त्रं धनुस्तत्, राज्ञो जनकस्याऽऽज्ञया, पञ्च च तानि सहस्राणि च पञ्चसहस्राणि तावन्ति सङ्ख्या येषां ते तथा

---

१. **'नरदेवमेन–'** । **'नरदेवनाथ मुदा–'** इति च ।

२. **'नराणां नाथं राजानम्'** इति युक्तः पाठः । **'नराणां देवं नाथम्'** इति वा टीकापाठः स्यात् । तदा तु **'नरदेवमेनम्'** इति मूलपाठः । **'नरदेवनाथम्'** इति पाठं पठतां पक्षे **'एनं जनकं प्रति'** इति न वक्तव्यम् ।

३. **'राजाज्ञयाऽथो चकृषे'**

तैः वीरोत्तमैः पुरुषैः, शिवस्य 'यत्रेदमाकर्षणीयं त्वदाज्ञया तत्राऽनेष्यन्ति' इति यो वरस्तस्मादेव आचकृषे आकृष्टमभूत् । न तु पुरुषशक्त्येत्यर्थः । कृष विलेखलने लिट् ॥ १३ ॥

**(सं.चं.)** आचकृषे आकृष्यत । 'नृणां शतानि पञ्चाशद् व्यायतानां महात्मनाम् । मञ्जूषामष्टचक्रां तां समूहुस्ते कथञ्चन' इति रामायणे । यद् रावणादयोऽपि नोद्धर्तुमैशत तत् कथमथ जनकभटैराकृष्यतेत्यत आह– वराच्छिवस्यैव । नेदमुदितं रामायणे । 'तद्भरतो हि किङ्कराः सहानसैवात्र कृषन्ति कृच्छ्रतः' (४.१८) इति हि निर्णये । तुरीयचरण उपेन्द्रवज्रा, अन्यत्रेन्द्रवज्रा, एकादशवत् । तेनेयमपि बाला नामोप-जातिः ॥ १३ ॥

**मुनिर्म्मुकुन्दं निजगाद वत्स रामेदमापूरय चापरत्नम् ।**
**इतीरितोऽयं नृपतेः कुमारो ब्रुवाण ओमित्युदतिष्ठदीशः ॥ १४ ॥**

**(भा.दी.) मुनिरि**ति । मुनिर्विश्वामित्रः, हे वत्स श्रीराम, चापेषु रत्नं श्रेष्ठम्, इदं धनुः आपूरय सज्यं कुरु । पूरी आप्यायने लोट् । इति मुकुन्दं श्रीरामं प्रति निजगाद । गद व्यक्तायां वाचि । इति विश्वामित्रेण ईरितः प्रोक्तः नृपतेः दशरथस्य कुमारः पुत्रः, ईशः अयं श्रीरामः, ओमिति तथाऽस्त्विति, 'ओं स्याद्ब्रह्मण्यनुज्ञायाम्' इति वैजयन्ती, ब्रुवाणः सन्नुदतिष्ठत् उत्तस्थौ । ष्ठा गतिनिवृत्तौ लङ् ॥ १४ ॥

**(सं.चं.)** नृपतेर्दशरथस्य कुमारः । ओमिति ब्रुवाणः । ओमित्यभ्युपगमे । द्वितीयचरण इन्द्रवज्रा । अन्यत्रोपेन्द्रवज्रा । ऋद्धिर्नामोपजातिः ॥ १४ ॥

**रामं[१] चलत्कुण्डलचारुगण्डं लावण्यसिन्धुं धनुराव्रजन्तम् ।**
**लोकेशमालोक्य विलासनीनामन्योन्यमासीदिति तत्र वार्त्ता ॥ १५ ॥**

**(भा.दी.) राममि**ति । चलती ये कुण्डले ताभ्यां चारू मनोहरौ गण्डौ यस्य स तथा तम् । लावण्येन सिन्धुरिव लावण्यसिन्धुस्तम्, सौन्दर्यपूर्णमित्यर्थः, धनुः प्रति आव्रजन्तमागच्छन्तं लोकेशं श्रीरामं आलोक्य, विलासिनीनां पुरस्त्रीणाम्, तत्र मिथिलायां अन्योन्यमिति वक्ष्यमाणरीत्या वार्ता आसीत् ॥ १५ ॥

**(सं.चं.)** वार्ता परस्परमालापः । समग्रेयमिन्द्रवज्रा, अष्टमवत् ॥ १५ ॥

---

१. 'श्यामम्'

**धन्या हि सा कोसलराजकन्या या सूनुमेनं सुषुवे सुवेषम् ।**
**स राघवो राजवरोऽपि धन्यस्तातेति यं तापहरोऽयमाह ॥ १६ ॥**

**(भा.दी.)** वार्तामेव दर्शयति– **धन्ये**त्यादिना । या कौसल्या शोभनो वेषोऽलङ्कारो यस्य स तथा तम्, एनं श्रीरामाख्यं सूनुं पुत्रं सुषुवे सूतवती, कोसलानां राजा कोसलराजः, तस्य कन्या सुता सा कौसल्या धन्या हि पुण्यवती हि । तापान् आध्यात्मिकादितापान् हरतीति तथोक्तः, योऽयं श्रीरामः तात इति पितरिति यं दशरथं आह । ब्रूञ्धातोर्लट् । राजवरः राजश्रेष्ठः सः राघवोऽपि दशरथोऽपि धन्यः पुण्यवान् इति वार्ता आसीदिति सम्बन्धः ॥ १६ ॥

**(सं.चं.)** कोलसराजकन्या कौसल्या । कन्येति तनयोच्यते । सामान्यतो नारीवचनं च तत् । 'कन्या कुमारिकानार्योः' इति मेदिनी । दशरथसामन्तेष्वेकः कोसलराजः । वेष इत्याकारः आकल्पश्च । सुवेषं स्वभावतः सुन्दराकारम् । विषु सेचने । अथापि मण्डनैर्मण्डितं च । राघवो दशरथः । तृतीयचरण उपेन्द्रवज्रा । अन्यत्रेन्द्रवज्रा । शाला नामोपजातिः । पञ्चमवत्, नवमवच्च ॥१६॥

**[१]सञ्चीय सौन्दर्य्यरसान् समस्तानिमं विधाता व्यधितेति मित्थ्या ।**
**अकृत्रिमं प्रादुरभूद् भुवीदमाश्चर्य्यरत्नं जनहर्षणाय[२] ॥ १७ ॥**

**(भा.दी.)** **सञ्चीये**ति । विधाता चतुर्मुखः समस्तान् समस्तलोकगतान् सौन्दर्याणां रसान् सारान् । 'रसः सारो वरश्चेति शब्दा एकार्थवाचकाः' इत्युक्तेः । सञ्चीय एकीकृत्य, इमं श्रीरामं व्यधित निर्मितवान् इति वाक्यं मिथ्या अनृतम् । विपूर्वः डु धाञ् धारणपोषणयोः लुङ् । किं तर्हि तथ्यमित्यत आह– **अकृत्रिम-मि**ति । कृत्रिमं निर्मितं न भवतीत्यकृत्रिमम्, स्वाभाविकमित्यर्थः, इदं रामाख्यं आश्चर्यरूपं रत्नं जनानां हर्षणं हर्षस्तस्मै भुवि प्रादुरभूत् आविर्बभूव ॥ १७ ॥

**(सं.चं.)** 'सञ्चित्य' इति साधुः पाठः । सौन्दर्यसारान् सञ्चित्य एकत्र सङ्गृह्य । इदमकृत्रिमं सहजम् । न विधात्रा निर्मितम् । आश्चर्यरत्नमाश्चर्यतमम् । 'रत्नं स्वजातिश्रेष्ठेऽपि' इति मेदिनी । आद्यन्तयोरिन्द्र-वज्रा । मध्यत उपेन्द्रवज्रा । तेन जाया नामोपजातिः ॥ १७ ॥

---

१. **'सञ्चित्य सौन्दर्यरसान्'** इत्येव मूलपाठः स्यादिति भाति । मूले टीकायां च **'सञ्चीय'** इति पाठः प्रायो लिपिकृतां प्रमादजनितः ।

२. **'जनहर्षणीम्'**

**सीता च सीरध्वजकन्यकेयं सामान्यनारी न हि लोकमान्या ।**
**यागप्रयोगे भुव आविरासीद् या देवमाया जलधेरिव श्रीः ॥ १८ ॥**

**(भा.दी.) सीतेति** । लोकेषु मान्या पूज्या या देवस्य श्रीहरेर्माया लक्ष्मीः । 'माया नारायणीशाना' इति लक्ष्म्यां प्रयोगात् । षष्ठ्यर्थः भार्याभर्तृभावादिः द्रष्टव्यः । यागस्य प्रयोगः कर्मविधिस्तस्मिन् । 'प्रयोगो ग्राम्यधर्मे स्यात् कुसीदे कर्मणां विधौ' इति वैजयन्ती । यागोपयुक्तक्षेत्रकर्षणलक्षणकर्मणि क्रियमाणे सतीत्यर्थः । जलधेः समुद्रात् श्रीरिव भुवः आविरासीत् । तस्मात् सीरध्वजस्य जनकस्य कन्यका इयं सीता च सामान्यनारी लोकस्त्रीसाधारणस्त्री नहि न भवति हि ॥ १८ ॥

**(सं.चं.)** नहि सामान्या नारी । एका समुदाये । किन्तु लोकमान्या । देवस्य विष्णोर्माया मोहनी शक्तिः श्रीः । समग्रेन्द्रवज्रा, अष्टमवत् पञ्चदशवच्च ॥ १८ ॥

**सीतैव रामस्य घटेत रामा तस्याश्च योग्यो ननु राम एव ।**
**यथेन्दिरैवास्ति मुकुन्दयोग्या मुकुन्द एवोचित इन्दिरायाः ॥ १९ ॥**

**(भा.दी.) सीतैवेति** । मुकुन्दस्य योग्या रूपलावण्यादिना उचिता यथा इन्दिरैव रमैव अस्ति । इन्दिरायाः मुकुन्द एव यथा उचितः भर्ता । तथैव सीतैव श्रीरामस्य रामा भार्या घटेत युज्येत । घट परिवर्तने[1] लिङ् । तस्याः सीतायाश्च योग्यः पतिः श्रीराम एव ननु ॥ १९ ॥

**(सं.चं.)** रामा रमणी घटेत सम्भवेत् । भार्या भवितुं योग्येति यावत् । योग्यो भर्ता राम एव ननु? 'ननु प्रश्नेऽवधारणे' इत्यभिधानम् । '**ಅಲ್ಲವೆ?**' इति भाषायाम् । पूर्वार्ध इन्द्रवज्रा । उत्तरार्ध उपेन्द्रवज्रा षष्ठवत् । रामा नामोपजातिः ॥ १९ ॥

**सीतापतित्वं न परीक्षणीयं रामस्य राज्ञा धनुरानमेन ।**
**न हि प्रदीपेन परीक्षणीयं प्रभाकरस्य प्रभया युतत्वम् ॥ २० ॥**

**(भा.दी.) सीतेति** । राज्ञा जनकेन श्रीरामस्य सीतायाः पतित्वं भर्तृत्वं धनुष आनमः आनमनमवनमनं तेन न परीक्षणीयं न विचारणीयम् । एतदेव सदृष्टान्तमुपपादयति– **नहीति** । प्रभाकरस्य सूर्यस्य प्रभया युतत्वं युक्तत्वम्, प्रदीपः प्रदीपिका तेन न परीक्षणीयं हि ॥ २० ॥

---

१. '**घट चेष्टायाम्**' इति प्रचलितो धातुपाठः ।

**(सं.चं.)** रामस्य सीतापतित्वं तद्योग्यत्वं राज्ञा कर्त्रा धनुरानमनेन करणेन न परीक्षणीयम् । अत्राप्येकोनविंशवत् षष्ठवच्च पूर्वार्धे इन्द्रवज्रा । उत्तरार्धे उपेन्द्रवज्रा । रामा नामोपजातिः ॥ २० ॥

**नृपात्मजोऽयं जनकात्मजाया गृह्णातु पाणिं रमणो रमण्याः[१] ।**
**नारायणः साध्वनुमोदतां तच्छपामहे नः सुकृतेन सख्यः ॥ २१ ॥**

**(भा.दी.) नृपे**ति । नृपस्य दशरथस्य आत्मजः पुत्रः अयं श्रीरामः, रमणः सीताभर्ता सन्, रमण्याः भार्यायाः जनकात्मजायाः, पाणिर्हस्तस्तम् गृह्णातु । ग्रह उपादाने लोट् । तत् सीतापाणिग्रहणं श्रीनारायणः साधु सम्यक् यथा भवति तथा, अनुमोदतां अनुमतिं कुर्यादिति स्वेष्टदेवं श्रीहरिं प्रति प्रार्थना । हे सख्यः, तत् श्रीरामस्य सीतापाणिग्रहणं नः सुकृतं पुण्यं तेन शपामहे प्रार्थयामहे । शप आक्रोशे लट् । अस्य धातोः प्रार्थनार्थकत्वं धातूनामनेकार्थत्वाद् युज्यते । अस्मत्सुकृतफलत्वेन तद्भवत्विति प्रार्थयामासुरित्यर्थः ॥ २१ ॥

**(सं.चं.)** सुकृतेन शपामहे । सुकृतं पणित्वा प्रतिजानीम इत्यर्थः । '**ಆಣೆ**' इति भाषायाम् । मध्ययोरिन्द्रवज्रा । आद्यन्तयोरुपेन्द्रवज्रा । तेनेयमार्द्रा नामोपजातिः, दशमवत् ॥ २१ ॥

**प्रजल्पितानीति पुराङ्गनानामाकर्ण्णयन् कर्ण्णसुखानि पुंसाम् ।**
**अविस्मितः[२] सुस्मित एत्य रामो वामेन दोष्णा धनुरुज्जहार ॥ २२ ॥**

**(भा.दी.) प्रजल्पितानी**ति । पुंसां पुरुषाणां कर्णानां सुखं येभ्यस्तानि तथा तानि । अत्यन्तं श्राव्याणीत्यर्थः । पुरे विद्यमाना अङ्गनास्तासां इति प्रजल्पितानि अत्युत्तमभाषणानि आकर्णयन् शृण्वन् । न विद्यते विस्मितं यस्य स तथा, स्वयं हासमकुर्वन्नित्यर्थः, अथापि शोभनं स्मितं यस्य स तथा, स्वभावतः स्मेरमुखत्वादिति भावः, श्रीरामः धनुःसमीपं एत्य गत्वा, वामः सव्यस्तेन दोष्णा हस्तेन धनुः उज्जहार उद्दधार । उत्पूर्वात् हृञ् हरणे लिट् ॥ २२ ॥

**(सं.चं.)** प्रकृष्टानि जल्पितानि । पुरावासिनीनामङ्गनानाम् । अविस्मितः धनुरुद्धरणविषये स्वयमचकितोऽदृप्तश्च । 'चित्रे दर्पे च विस्मयः' इति यादवप्रकाशः । विषमयोरुपेन्द्रवज्रा, समयोरिन्द्रवज्रा । तेन हंसी नामेयमुपजातिः ॥ २२ ॥

---

१. '**रमायाः**'  २. '**अविस्मयः सुस्मित–**'

**नृणां सहस्रे स्वमवेक्षमाणे[१] सस्वस्तिवादे नृपतौ मुनौ च ।**
**निजानुजे स्मेरमुखे सलीलमारोप्य चापं समपूरयत् सः ॥ २३ ॥**

**(भा.दी.) नृणामि**ति । नृणां मनुष्याणां यत् सहस्रं तस्मिन् स्वं स्वात्मानं अवेक्षमाणे पश्यति सति । नृपतौ जनके मुनौ विश्वामित्रे च स्वस्तीति वादो वचनं तेन सहितः सस्वस्तिवादस्तस्मिन् सति । निजः स्वकीयोऽनुजो लक्ष्मणस्तस्मिन् स्मेरं स्मितयुक्तं मुखं यस्य स तथा तस्मिन् सति । सः श्रीरामः, चापं धनुस्तत्, लीलया सहितं यथा भवति तथा सलीलम्, आरोप्य उन्नमय्य समपूरयत् सज्यं चकारेत्यर्थः । पॄ पालनपूरणयोर्लङ्[२] ॥ २३ ॥

**(सं.चं.)** आरोप्य उद्धृत्य समपूरयत् अवनमय्य शिञ्जिन्या संयोजयामास । पूर्ववद् विषमयोरुपेन्द्रवज्रा । समयोरिन्द्रवज्रा । तेनात्रापि हंसी नामोपजातिः ॥ २३ ॥

**तालप्रमाणं परिकृष्यमाणं मद्ध्ये महाचापमभज्यताऽशु ।**
**विश्वाधिनाथेन विनैव यत्नं यथेन्द्रनागेन नवेक्षुदण्डः ॥ २४ ॥**

**(भा.दी.) ताले**ति । विश्वाधिनाथेन जगदीश्वरेण श्रीरामेण यत्नः प्रयत्नस्तं विनैव परिकृष्यमाणं आकृष्य-माणम्, तालस्य तालवृक्षस्य प्रमाणमिव प्रमाणं परिमितिर्यस्य तत् तथा, महाचापम्, इन्द्रस्य नागो गजस्तेन, ऐरावतेनेत्यर्थः, नवो नूतन इक्षुदण्डः यथा तथा, मध्यं मध्यप्रदेशस्तस्मिन् आशु अभज्यत भग्नमभूत् । भञ्जो[३] आमर्दने लङ् ॥ २४ ॥

**(सं.चं.)** तालप्रमाणं तालवत् महाप्रमाणम् । ज्याया दृढबन्धनार्थं परिकृष्यमाणं प्रसभमवनाम्यमानम् । इन्द्रस्य नागेन ऐरावतेन । नवः अप्रवृद्धतया कोमलः । 'यथेक्षुदण्डं शतमन्युकुञ्जरः' (४.२६) इति निर्णये । तुरीयचरण उपेन्द्रवज्रा, अन्यत्रेन्द्रवज्रा, एकादशवत्, त्रयोदशवच्च । तेनात्रापि बाला नामोपजातिः॥ २४ ॥

**जगत्त्रये दूतइवातिवेगी ध्वनिर्द्धनुर्भङ्गभवः ससार ।**
**रामेण सीतोपगतेति वार्त्तामुद्धोषयन् व्यक्तमिवातिरम्याम् ॥ २५ ॥**

---

१. **'समवेक्षमाणे'**

२. पूरणार्थस्य पॄधातोः पूरयतीत्येव साधु रूपं भाति । अथापि वैयाकरणाः पारयतीति रूपं पेठुः । तत्पक्षे **'पूरी आप्यायने'** इति धातुः पठनीयः– **'पूरी आप्यायने पूरणे च'** इति ।

३. **'भन्जो आमर्दने'** इति क्षीरस्वामी ।

**(भा.दी.) जगदि**ति । धनुषो भङ्गो भञ्जनं तस्माद् भवतीति तथोक्तः । अत्यन्तं वेगः अतिवेगः, सोऽस्यास्तीति तथोक्तः । ध्वनिः श्रीरामेण सीता उपगता सम्प्राप्ता इति अतिरम्यां वार्त्तां व्यक्तं स्पष्टं यथा भवति तथा उद्घोषयन्निव आघोषयन्निव जगतां त्रयं तस्मिन् दूत इव ससार चचार, व्याप्तोऽभूदित्यर्थः । सृ गतौ लिट् । जगत्त्रये व्याप्तं धनुषो भङ्गध्वनिं श्रुत्वा श्रीरामेण सीता लब्धेति जना निश्चितवन्त इति भावः ॥ २५ ॥

**(सं.चं.)** उपगता उरीकृता, सङ्गता वा । व्यक्तमुद्घोषयन्निव । दूतोऽपि सपदि वार्ताश्रवणार्थमतिवेगी सरति । पूर्वार्ध उपेन्द्रवज्रा, उत्तरार्ध इन्द्रवज्रा, प्रथमवत् । तेन माला नामोपजातिः ॥ २५ ॥

**छित्त्वैवमच्छेद्यमवश्यमन्यैस्तत् कार्म्मुकश्रेष्ठमुदारकर्म्मा ।**
**सलक्ष्मणः शोभनलक्षणोऽयं तस्थौ विलोक्यास्य मुनेर्म्मुखेन्दुम् ॥ २६ ॥**

**(भा.दी.) छित्वे**ति । उदारमुत्कृष्टं कर्म यस्य स तथा, शोभनानि लक्षणानि अङ्गसम्पदो यस्य स तथा, 'लक्षणं कार्षिके चिह्ने नाम्नि मुद्राङ्गसम्पदोः' इति वैजयन्ती, अयं श्रीरामः, श्रीरामादन्यैः पुरुषैरवश्यम् सर्वथाऽपि अच्छेद्यं च्छेत्तुमशक्यं तत् जनकसम्बन्धि कार्मुकश्रेष्ठम्, एवं छित्वा सलक्ष्मणः लक्ष्मणेन सहितः सन्[1] अस्य मुनेः विश्वामित्रस्य मुखमेवेन्दुस्तं विलोक्य तस्थौ । ष्ठा गतिनिवृत्तौ लिट् ॥ २६ ॥

**(सं.चं.)** नारायणादन्यैरवश्यमनम्यमच्छेद्यं च । शिववररक्षितमिति ततोऽवराणां न प्रसङ्गः, जनकं विना । तेनापि नम्यमेव, न च्छेद्यम् । शिवस्तु स्ववरं स्वयमेव भनक्तीति न साम्प्रतम् । ब्रह्मणो न भूमाववतार इति न तस्यापि प्रसक्तिः । अस्य विश्वामित्रस्य मुखेन्दुम् । यदर्थं राम इहाऽनीतस्तत् कार्यं सम्पन्नमिति मुनिमुखे व्यक्तां प्रसन्नतामिन्दुपदेनाऽह । तृतीयचरण उपेन्द्रवज्रा, अन्यत्रेन्द्रवज्रेति पञ्चमवत्, नवमवत्, षोडशवच्च शाला नामोपजातिः ॥ २६ ॥

**अथाऽविरासीन्नरदेवकन्या[2]च्छलेन देवी स्वयमिन्दिरैव ।**
**अन्तःपुरान्निर्गतवत्युदारा[3] सा वेदगर्भादिव वेदवाणी ॥ २७ ॥**

**(भा.दी.) अथे**ति । अथ चापभङ्गानन्तरम् । च्छलं व्याजः, तेन नरदेवस्य राज्ञो जनकस्य कन्या, लौकिकप्रवादमात्रेण जनकसुतेत्यर्थः । स्वयं देवी क्रीडादिगुणविशिष्टा, उदारा महती, ब्रह्माद्यधीश्वरीत्यत्यर्थः । 'उदारो

१. **'लक्ष्मणसहितः सन्'**

२. **'–न्नरनाथकन्या–'**। वि.ती.पाठे **'नरदेवकन्या छलेन'** इति भिन्ने पदे ।

३. **'–वत्युदारात् सा'**

महति ख्याते' इति वैजयन्ती । इन्दिरैव महालक्ष्मीरेव सा सीता वेदगर्भात् ब्रह्मणः वेदवाणीव वेदरूपा सरस्वतीव जनकस्य यदन्तःपुरं तस्मात् निर्गतवती बहिरागतवती आविरासीत्[१] । अस्तेर्लङ् । उदारादिति पाठे समृद्धादन्तःपुरादित्यर्थः ॥ २७ ॥

**(सं.चं.)** नरदेवकन्याच्छलेन । छलमपदेशः । 'ꣻꣳ' इति भाषायाम् । जनकपुत्रीत्वं व्याजीकृत्य तदपदेशेन भूमाववतीर्णा स्वयमिन्दिरैव । वेदगर्भाद् बादरायणात्, हयग्रीवाद्वा वेदवाणीव । वेदगर्भात् चतुर्मुखाद् वा । वेदज्ञाद् विप्राद् वा । पूर्वार्ध उपेन्द्रवज्रा, उत्तरार्ध इन्द्रवज्रा । तेन प्रथमवत्, पञ्चविंशवच्च माला नामोपजातिः ॥ २७ ॥

**मञ्जीरमञ्जुध्वनिपूरिताशा गतिश्रिया निर्ज्जितराजहंसी[२] ।**
**पदेपदे रम्यरसा[३] पदाभ्यां सीताऽभिरामं शनकैर्ज्जगाम ॥ २८ ॥**

**(भा.दी.) मञ्जीरेति** । मञ्जीरयोः पादकटकयोः मञ्जुः मनोहरो यो ध्वनिस्तेन पूरिताः पूर्णा आशा यया सा तथा । गतेः पदविन्यासस्य श्रीः लावण्यादिरूपा सम्पत् तया निर्जिता राजहंसी राजहंसपक्षिणः स्त्री यस्याः सा तथा सती । पदेपदे प्रतिपादविन्यासमित्यर्थः, 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । रम्यो रसो लावण्यादिरूपो यस्याः सा तथा सती (सीता) । पदे पादौ ताभ्याम्, अभिरामं मनोहरं श्रीरामं शनकैः शनैः जगाम । गम्लृ गतौ लिट् ॥ २८ ॥

**(सं.चं.)** 'मञ्जीरं हंसकं स्त्रीणां चरणाभरणं स्मृतम्' इत्यभिधानम् । राजहंसस्य स्त्री । प्रतिपदन्यासमभिव्यज्यमानो रम्यो रामविषयो रसोऽनुरागो यस्याः । ललिताभ्यां पदाभ्यामभिरामं राममभिजगाम । आद्यन्तयोरिन्द्रवज्रा, मध्यत उपेन्द्रवज्रा । तेन सप्तदशवज्जाया नामोपजातिः ॥ २८ ॥

**पुनर्न्निरीक्ष्याऽपि पुनर्न्नवा सा कान्त्या हसन्तीव विनाऽपि हासम् ।**
**दृष्ट्याऽऽलपन्तीव विनाऽभिलापं [४]महोत्सवोऽभूज्जनलोचनानाम् ॥ २९ ॥**

**(भा.दी.) पुनरिति** । निरीक्ष्याऽपि पुनःपुनः नवा सौन्दर्यातिशयस्य द्रष्टुमशक्यत्वान्नूतनेव दृश्यमाना । हासो मन्दहासस्तं विनाऽपि कान्त्या मुखकान्त्या हसन्तीव मन्दहासं कुर्वन्तीव दृश्यमाना । आलापः भाषणं तं

---

१. **'या भुव आविरासीत् सा सीता अथ धनुर्भङ्गानन्तरं अन्तःपुरात् राजावरोधात् निर्गतवती बहिरागता'** इति का.श्री. ।

२. **'–श्रिया लज्जितराजहंसी'** ३. **'रम्यतरा'** ४. **'महोत्सवाऽभूज्जन–'**

विनाऽपि दृष्ट्या चक्षुषा आलपन्तीव सम्भाषणं कुर्वन्तीव दृश्यमाना सा सीता जनानां लोचनानि चक्षूंषि तेषां महोत्सवः महोत्सवरूपा अभूत् ॥ २९ ॥

**(सं.चं.)** पुनर्नवा नित्यनूतना । आचक्षते हि–'दिनेदिने यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति । मध्यत इन्द्रवज्रा । आद्यन्तयोरुपेन्द्रवज्रा । तेन दशमवदेकविंशवच्च पुनरियमार्द्रा नामोपजातिः ॥ २९ ॥

**औदार्य्यसौन्दर्य्यविलासपूर्वान् सर्वान् गुणान् कः कथयेत देव्याः ।**
**यान् प्रब्रुवाणश्चतुराननोऽपि [1]कौतूहलेनाचतुराननोऽभूत् ॥ ३० ॥**

**(भा.दी.) औदार्येति** । देव्याः सीतायाः यान् गुणान् प्रब्रुवाणः प्रकृष्टतया विविच्य वदन्, चत्वारि आननानि यस्य स तथा, ब्रह्माऽपीत्यर्थः, कौतूहलं कौतुकं तेन चतुरं न भवतीत्यचतुरं तादृशमाननं यस्य स तथा, तद्गुणवर्णने चातुर्यरहित इत्यर्थः, अभूत् । भूधातोर्लुङ् । औदार्यं महिष्ठदातृत्वं तच्च, सौन्दर्यं (सुरूपता तच्च), विलासः (हावभेदः) स च ते पूर्वे येषां ते तथा तान्, देव्याः सर्वान् तान् गुणान् कः कविः कथयेत वर्णयेत? कथ वाक्यप्रबन्धे लिङ् । न कोऽपीत्यर्थः ॥ ३० ॥

**(सं.चं.)** चतुराननोऽप्यचतुरानन इति विरोधाभासः । सर्वगुणप्रकथनेऽचतुरमाननमस्येति परिहारः । समग्रेय-मिन्द्रवज्रा ॥ ३० ॥

**लज्जानदीं क्षिप्रतरप्रवाहां न्यक्कुर्वती भक्तिमहार्ण्णवौघैः ।**
**शनैरपाङ्गेन सुमङ्गलाङ्गी[2] ददर्श देवी जगदेकनाथम् ॥ ३१ ॥**

**(भा.दी.) लज्जेति** । सुमङ्गलमङ्गं शरीरं यस्याः सा तथा (देवी सीता) । 'अङ्गगात्रकण्ठेभ्यश्च'[3] इति ङीप् । अत्यन्तं क्षिप्रः क्षिप्रतरस्तादृशः प्रवाहो यस्याः सा तथा ताम् । लज्जैव नदी तां भक्तिरेव महान्तोऽ-र्णवास्तेषामोघाः समूहास्तैः । यद्वा भक्तिरेव महार्णवः तस्य ओघाः प्रवाहास्तैः । 'ओघो वृन्दोऽम्भसां रयः' इत्यमरः । न्यक्कुर्वती तिरस्कुर्वाणा सती, शनैः अपाङ्गो नेत्रान्तस्तेन जगदेकनाथं श्रीरामं ददर्श । दृशिर् प्रेक्षणे लिट् । भर्तृमुखनिरीक्षणे लज्जावत्यपि भक्तिवशाददृष्ट्वा स्थातुमशक्ता सती शनैरीषद् ददर्शेति भावः ॥ ३१ ॥

१. 'कुतूहलेनाचतु–' २. 'सुमङ्गलाङ्गं ददर्श देवं जग–'

३. 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' (अ.सू.४.१.५४) इति सूत्रे पूरकतया पठितमिदं वार्तिकम् ।

**(सं.चं.)** भक्तिर्दिदृक्षां त्वरयति । लज्जा निवारयति । अन्ते भक्तिरेव जिगायेत्याह– लज्जानदीम् । लज्जानदीं भक्तिसागरेण सङ्गता तत्तरङ्गवेगपिहिता तिरोहिता बभूव । 'नयनोपान्तमपाङ्गः' इत्यभिधानम् । पूर्वार्ध इन्द्रवज्रा । उत्तरार्ध उपेन्द्रवज्रा । तेन षष्ठवत्, एकोनविंशवत्, विंशवच्च रामा नामोपजातिः ॥ ३१ ॥

**प्रसन्नवक्त्रं सरसीरुहाक्षं श्यामं सुगन्धारुणचन्दनाक्तम् ।**
**शूरं किशोरं शरणं प्रजानां कान्तं विलोक्याऽभिननन्द कान्ता ॥ ३२ ॥**

**(भा.दी.) प्रसन्ने**ति । कान्ता मनोज्ञा सीता, प्रसन्नं वक्त्रं यस्य स तथा तम्, सरसीरुहवत् कमले इवाक्षिणी[१] यस्य स तथा तम्, श्यामम्, शोभनो गन्धो यस्य तत् सुगन्धम्, तादृशमरुणं रक्तं यच्चन्दनं तेन अक्तं लिप्तम् । समासान्तविधेरनित्यत्वादिप्रत्ययाभावः । शूरम्, किशोरं किशोरवयस्कम्, प्रजानां शरणं रक्षकम्, 'शरणं गृहरक्षित्रोः' इत्यमरः, कान्तं भर्तारं श्रीरामं विलोक्य अभिननन्द । नदि हर्षे[२] लिट् ॥ ३२ ॥

**(सं.चं.)** अरुणचन्दनमगरु । अभिननन्द जहर्ष । प्रथमचरण उपेन्द्रवज्रा । इतरत्रेन्द्रवज्रा । कीर्तिर्नामोपजातिः ॥ ३२ ॥

**सीताऽथ[३] रामे नवचन्दनार्द्रां[४] हेमारविन्दस्रजमामुमोच ।**
**रामोऽपि देव्यां प्रणयामृतार्द्रां दृष्टिं मनोज्ञां [५]निदधे तदैव ॥ ३३ ॥**

**(भा.दी.) सीते**ति । अथ सीता श्रीरामे नवं नूतनं यच्चन्दनं तेन अक्तां सिक्ताम्, हेममयानि अरविन्दानि तेषां स्रजं मालां आमुमोच समर्पितवती । मुच्लृ मोक्षणे लिट् । श्रीरामोऽपि तदैव देव्यां प्रणयः स्नेहरस एवामृतं तेन आर्द्राम्, स्नेहपूर्णामित्यर्थः, मनोज्ञां मनोहरां दृष्टिं निदधे निहितवान्, अपश्यदित्यर्थः । डु धाञ् धारणपोषणयोर्लिट् ॥ ३३ ॥

**(सं.चं.)** हेमवर्णान्यरविन्दानि । रामे तत्कण्ठे आमुमोच आबबन्ध । 'आबद्धः पुनरामुक्तः' इति यादवप्रकाशः । समग्रा चेयमिन्द्रवज्रा ॥ ३३ ॥

**शम्भुशङ्करपुरन्दरादयः सुन्दरीयुतमवेक्ष्य सुन्दरम् ।**
**आत्मनां जनकमादिपूरुषं तुष्टुवुश्च तुतुषुश्च सानुगाः ॥ ३४ ॥**

---

१. **'कमलवदक्षिणी'** २. **'टु नदि समृद्धौ'** इति तु धातुपारायणिकाः । ३. **'सीता च रामे'**
४ **'–चन्दनाक्ताम्'** इति वि.ती.पाठः । ५. **'मनोज्ञां विदधे'**

**(भा.दी.) शम्भ्विति** । अनुगैः भृत्यैः गन्धर्वादिभिः सहिताः सानुगाः, शं सुखं भवत्यस्मादिति शम्भुर्ब्रह्मा स च, शं सुखं करोतीति शङ्करः स च, शत्रूणां (पुराणि) नगराणि दारयतीति पुरन्दरः स च, ते आदयो येषां ते तथा देवाः । सुन्दर्या स्त्रिया सीतया युतम्, आत्मनां स्वेषां जनकं पितरम्, आदौ विद्यमानः पूरुष आदिपूरुषस्तम्, सुन्दरं श्रीरामं अवेक्ष्य तुष्टुवुश्च स्तोत्रं चक्रुश्च । ष्टुञ् स्तुतौ लिट् । तुतुषुश्च सन्तोषं प्राप्ताश्च । तुष तुष्टौ लिट् ॥ ३४ ॥

**(सं.चं.)** शम्भुः स्वयम्भूः । शङ्कर इति पृथग्वचनात् । 'शम्भुरर्हन् विधिः शिवः' इति मङ्खः । रथोद्धता च्छन्दः ॥ ३४ ॥

**गन्धर्वगीतरुतमप्सरसां च नृत्तं देवीभिरर्प्पितमुरुद्युतरुप्रसूनम् ।**
**वाद्यस्वनं च निजपूजनमाकलय्य रामश्च रामरमणी च मुदं दधाते ॥ ३५ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**बालकाण्डे सप्तमः सर्ग्गः ॥**

—०—

**(भा.दी.) गन्धर्वेति** । श्रीरामश्च रामरमणी श्रीरामभार्या सीता च गन्धर्वाणां तुम्बुरुप्रभृतीनां गीतरूपं गानरूपं यद् रुतं ध्वनिस्तत्, अप्सरसां उर्वशीप्रभृतीनां नृत्तं नर्तनं तच्च, देवीभिः देवतास्त्रीभिः अर्पितं अभिवृष्टम्, उरव उत्कृष्टा ये दिवः स्वर्गस्य तरवः पारिजाताद्यास्तेषां प्रसूनं तच्च, वाद्यानां भेर्यादीनां स्वनो ध्वनिस्तं च, निजं आत्मीयं यत्पूजनं तत्, आकलय्य दृष्ट्वा मुदं प्रीतिं दधाते सम्प्राप्तौ ॥ ३५ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां बालकाण्डे सप्तमः सर्गः ॥**

—०—

**(सं.चं.)** द्युतरवः देवलोकद्रुमाः । कल्पतरवः । निजपूजार्थं कल्पितम् । आकलय्य अवमृश्य । तभौ जौ गौ चेति वसन्ततिलकेयम् ॥ ३५ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां बालकाण्डे सप्तमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– ३०६+३५=३४१]

---

१. 'गन्धर्वगीतरुतमाकलय्य श्रुत्वा, अप्सरसां नृत्तमाकलय्य दृष्ट्वा, द्युतरुप्रसूनं आकलय्य स्वीकृत्य, वाद्यस्वनं चाऽकलय्य श्रुत्वा' इति.का.श्री.।

# अष्टमः सर्ग्गः

**जनकं प्रति रामस्य जनकोऽथ जनेश्वरः ।**
**दूतान् प्रस्थापयामास[1] विश्वामित्रानुमोदितः ॥ १ ॥**

**(भा.दी.)** श्रीरामे सीतया वृते सति जनकेन किमकारीत्यत आह– **जनकमित्या**दिना । अथ स्वयंवरानन्तरं जनेश्वरः राजा जनकः विश्वामित्रेण अनुमोदितः सम्मतीकृतः सन् श्रीरामस्य जनकं पितरं दशरथं प्रति दूतान् प्रस्थापयामास प्रेषयामास । प्रपूर्वः ष्ठा गतिनिवृत्तौ लिट् ॥ १ ॥

**(सं.चं.)** रामस्य जनकं प्रति । अनुमोदितः लब्धानुमतिः ॥ १ ॥

**प्राप्य दूतास्त्रिरात्रान्ते[2] राघवेन्द्रनिवेशनम्[3] ।**
**संश्रान्ता विश्रमं जग्मुर्हंसाः प्राप्येव मानसम् ॥ २ ॥**

**(भा.दी.)** **प्राप्ये**ति । तिस्रश्च ता रात्रयश्चेति त्रिरात्राणि । सङ्ख्यापूर्वरात्रिशब्दस्य क्लीबता वाच्येति वचनात्[4] क्लीबता । तेषामन्तोऽवसानं तस्मिन् चतुर्थदिन इत्यर्थः । (दूताः) राघवेन्द्रस्य दशरथस्य निवेशनं मन्दिरं तत् प्राप्य, बहुदूरगत्या संश्रान्ताः सन्तः, मानसं मानससरोवरं तत् प्राप्य हंसा इव विश्रमो विश्रमणं तं जग्मुः । गम्लृ गतौ लिट् ॥ २ ॥

**(सं.चं.)** तिस्रो रात्रयः समाहताः त्रिरात्रः । त्रिरात्रस्यान्ते चतुर्थदिवसे । 'त्रिरात्रमुषिता मार्गे तेऽयोध्यां प्राविशन् पुरीम्' (६८.१) इति रामायणे । राघवेन्द्रस्य निवेशनं पुरमयोध्याम् । पूर्वं निरन्तरयानेन गाढं श्रान्ताः । सम्प्रति विश्रमं श्रमाभावं जग्मुः । विशश्रमुरित्येके ॥ २ ॥

---

१. **'दूतान् सम्प्रेषयामास'** २. **'–रात्रेण राघ–'** ३. **'निवेशनमिति नगरम्'** इति वि.भू. ।

४. इदम्–**'सङ्ख्यापूर्वं रात्रं क्लीबम्'** इत्येकदेशिनां मतमनुसृत्योक्तम् । जयादित्यादयो नेदमभ्युपयन्ति । तथाहि काशिकायाम्–**'सङ्ख्याव्ययादेः खल्वपि । द्वे रात्री समाहते द्विरात्रः । त्रिरात्रः । अतिक्रान्तो रात्रिम् अतिरात्रः । नीरात्रः'** इत्युक्तम्, **'अहःसर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः'** (अ.सू.५.४.८७) इति सूत्रविवरणावसरे । **'द्वयोः रात्र्योः समाहारः द्विरात्रम्'** इति वदन्तो भट्टोजिदीक्षितादय एव क्लीबतावादिनः । तत्पक्षेऽपि तिसृणां रात्रीणां समाहारस्त्रिरात्रमित्येव वक्तुमुचितमिति भाति ।

**अथोचुस्ते दशरथं मन्त्रिभिः परिवारितम् ।**
**अञ्जसाऽञ्जलिमाबद्ध्य विदेहेशविवक्षितम् ॥ ३ ॥**

**(भा.दी.) अथे**ति । (अथ दशरथदर्शनानन्तरम्), ते दूताः मन्त्रिभिः सुमन्त्रादिभिः परिवारितं परिवृतं दशरथं प्रति अञ्जसा अञ्जलिं बद्धहस्तं आबद्ध्य, शिरसीति[१] शेषः, प्रणम्येत्यर्थः, विदेहानां विदेहविषयाणामीशो जनकस्तेन विवक्षितं वक्तुं निरूपितं कार्यं ऊचुः । वचधातोर्लिट् ॥ ३ ॥

**(सं.चं.)** अथेति माङ्गलिकमेतदित्याह । परिवारितं परिवृतम् । चुरादेः 'वृञ् आवरणे' इत्यस्येदं रूपम् । अञ्जसा सपदि, अयोध्यागमनसमनन्तरमेव, विलम्बमकृत्वा । विदेहेशेन जनकेन विवक्षितं वक्तव्यमित्यादिष्टम् ॥ ३ ॥

**उर्व्यां सर्वे समासाद्य चापं वीरा वृथा गताः ।**
**रामो राजीवनयनः कोदण्डं समखण्डयत् ॥ ४ ॥**

**(भा.दी.) उर्व्यामि**ति । उर्व्यां भूमौ विद्यमानाः सर्वे वीराः चापं रुद्रधनुस्तत् समासाद्य उद्धरणार्थमागत्य, वृथा व्यर्थम्, धनुरनुद्धृत्यैवेत्यर्थः, गताः स्वनगरं प्रति गताः । राजीववत् कमलवत् नयने यस्य स तथा श्रीरामः, कोदण्डं धनुस्तत् समखण्डयत् । खडि भेदे लङ् ॥ ४ ॥

**(सं.चं.)** उर्व्यां विद्यमानाः सर्वे वीराः । वृथा वितथप्रयत्नाः ॥ ४ ॥

**सीता चात्रानुरक्ताऽऽसी[२]च्चिन्त्यतामित उत्तरम् ।**
**विश्वामित्रो भवन्मित्रं भवन्तं सम्प्रतीक्षते ॥ ५ ॥**

**(भा.दी.) सीते**ति । सीता च अत्र श्रीरामे, अनुरक्ता अनुरागवती आसीत् । इतः जातकार्यात् उत्तरं भाविप्रयोजनं चिन्त्यतां त्वयाऽलोच्यताम् । चिति स्मृत्याम् लोट् । भवतः मित्रं मित्रभूतः विश्वामित्रः भवन्तं सम्प्रतीक्षते कदा द्रक्ष्यामीति सम्प्रतीक्ष्य वर्तते । ईक्ष दर्शनाङ्कनयोर्लट् ॥ ५ ॥

**(सं.चं.)** कोदण्डखण्डनेनानुरक्ताऽऽसीदिति लौकिकम् । सदाऽऽसीदिति वास्तवम् । इत उत्तरं करणीयम् । सम्प्रतीक्षते सम्प्रति प्रतीक्षमाण आस्ते ॥ ५ ॥

---

१. 'शिरसेति'

२. '–रक्ताऽऽस चिन्त्यता–'

**विवाहाय समायाहि नन्दनस्य[१] सबान्धवः ।**
**इति दूतोदितं श्रुत्वा परितुष्यन्नजात्मजः ॥ ६ ॥**

**गमनाय मतिं चक्रे मन्त्रिभिः सह मन्त्रयन् ।**
**तस्यां रात्र्यां व्यतीतायां मतिमान्[२] मानवेश्वरः ।**
**प्रागेव प्रेषयामास दूतान् सह महाधनैः[३] ॥ ७ ॥**

**(भा.दी.) विवाहे**ति । बान्धवैः बन्धुभिः सहितः सबान्धवः । विवाहः परिणयनं तस्मै नन्दनं श्रीरामं प्रति समायाहि आगच्छ । या प्रापणे लोट् । इति दूतैरुदितं तत् वाक्यं श्रुत्वा परितुष्यन् अजस्य अजनाम्नो भूपस्य आत्मजः पुत्रः दशरथः मन्त्रिभिः सह मन्त्रयन् कर्तव्यकार्यमालोचयन् सन् गमनं प्रयाणं तस्मै मतिं चक्रे। कृञ्धातोर्लिट्। **तस्यामि**ति। मतिमान् विवेकी मानवानां नृणामीश्वरः दशरथः तस्यां दूतैरागतदिनरात्र्यां व्यतीतायां सत्यां दूतान् स्वकीयदूतान्[४] महान्ति धनानि यानि तैः, विवाहोपयोगिधनैरित्यर्थः, सह प्रागेव स्वनिर्गमनात् पूर्वमेव प्रेषयामास । इष गतौ लिट् ॥ ६–७ ॥

**(सं.चं.)** तस्मात् नन्दनस्य विवाहाय समायाहि । अजस्य राज्ञ आत्मजो दशरथः मन्त्रिभिः सह मन्त्रयन् कर्तव्यमालोच्य यस्मिन् दिने दूता आगतास्तस्यां रात्र्यां व्यतीतायां गमनाय मतिं चक्रे गन्तव्यमिति निरधारयत् । मतिमान् कार्यज्ञः । प्रागेव स्वगमनात् । जनकप्रेषितान् दूतान् । महान्त्यकुप्यानि धनानि, तैः सह । प्राभृतमिति जनकस्य । उपढौकनमिति दूतानाम् ॥ ६–७ ॥

**युयोज यानं त्वरितः[५] सुमन्त्रो राघवाज्ञया[६] ।**
**पुरो[७] निर्य्यापयामास चमूं च चतुरङ्गिणीम् ॥ ८ ॥**

**(भा.दी.) युयोजे**ति । सुमन्त्रः राघवाज्ञया दशरथाज्ञया त्वरितः वेगितः सन्, यानं ईयते गम्यतेऽनेनेति यानं रथस्तत् युयोज अश्वैर्बबन्ध, नियमितवानिति वा । युजिर् योगे लिट् । चत्वारि अङ्गानि गजरथाश्व-

---

१. **'नन्दनं हि सबान्धवः'** इति वि.ती.पाठः स्यात् । २. **'प्रीतिमान्'**

३. अर्थसौकर्याय अत्र सप्तमे, उत्तरत्र (२७) सप्तविंशे च श्लोके षट्चरणत्वं प्राचीनव्याख्यातृभिरभ्युपगतमिति भाति ।

४. **'दूतान् जनकभृत्यान्'** इति का.श्री. । ५. **'त्वरितम्'**

६. **'राज्ञ आज्ञया'** ७. **'पुरान्निर्यापयामास'**

पदातिलक्षणावयवा यस्याः सा तथा ताम्, चमूं पुरः नगरात्, 'पूः स्त्री पुरीनगर्यौ द्वे' इत्यमरः, निर्यापयामास निर्गमयामास । या प्रापणे लिट् ॥ ८ ॥

**(सं.चं.)** यानं राजप्रयाणोचितं रथम् । युयोज समनह्यत । सज्जं चकारेत्येतत् । पुरः पूर्वमेव पुरो नगरान्निर्यापयामास । यथा सा सत्वरगमनं राजानमनुगच्छेत् । पत्तयोऽश्वा रथा गजा इति चत्वार्यङ्गान्यस्य इति चतुरङ्गिणी । चमूरिति सेनासामान्यवचनम्, विशेषवचनं च । अक्षोहिण्या दशमो भागोऽनीकिनी । तस्याः पुनस्तृतीयोंऽशश्चमूः । अत्र तु न विशेषविवक्षा । सेनासामान्यवचनमेतत् । तथाहि पठन्ति पदज्ञाः– पृतना सेना बलं सैन्यं चक्रं चमूरिति ॥ ८ ॥

**मन्त्रिभिः सह विप्रैश्च सभार्य्यः सविधातृजः ।**
**रथेनाऽसौ[1] दशरथो जगाम जनकालयम् ॥ ९ ॥**

**(भा.दी.) मन्त्री**ति । भार्याभिः सहितः सभार्यः, विधातुश्चतुर्मुखाज्जातो विधातृजो वसिष्ठस्तेन सहितः सविधातृजः, असौ दशरथः मन्त्रिभिः सुमन्त्रादिभिः विप्रैर्वामदेवादिभिश्च सह, रमन्ते धन्विनोऽत्रेति रथस्तेन, जनकस्य आलयो मन्दिरं तम् प्रति जगाम । गम्लृ गतौ लिट् ॥ ९ ॥

**(सं.चं.)** मन्त्रिभिः सुमन्त्रादिभिः । 'धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः । अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत्' (७.३) इति रामायणे । विप्रा वामदेवादयः । 'वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः । मार्कण्डेयः सुदीर्घायुरृषिः कात्यायनस्तथा । एते द्विजाः प्रयान्त्वग्रे स्यन्दनं योजयस्व मे' (६९.४–५) इति च । विधातृजो वसिष्ठः । विप्रत्वेऽपि स विधातृज इति कुलगुरुरिति च पृथगुक्तः ॥ ९ ॥

**प्रवेक्ष्यन्तं पुरीमाराद् भूपं दृष्ट्वाऽथ मैथिलः ।**
**शतानन्दादिभिः सार्द्धं सानन्दोऽभिययौ द्रुतम् ॥ १० ॥**

**(भा.दी.) प्रवेक्ष्यन्तमि**ति । अथ मैथिलो जनकः, आरात् किञ्चिद्दूरतः, पुरीं प्रवेक्ष्यन्तं प्रवेष्टुमिच्छावन्तं भूपं दशरथं दृष्ट्वा, शतानन्दो गौतमपुत्र आदिर्येषां ते तथा तैः मुनिभिः सार्द्धं सानन्दः सन् द्रुतं यथा भवति तथा अभिययौ अभिमुखतया जगाम । या प्रापणे लिट् ॥ १० ॥

**(सं.चं.)** आराद् दूरादेव । शतानन्दादिभिरित्यन्यैरृत्विग्भिश्च विश्वामित्रेण च ॥ १० ॥

१. 'रथेनाथो दश–'

**पुरीं प्रवेश्य सम्पूज्य यथाशास्त्रं स शास्त्रवित् ।**
**राघवं[१] प्रावदद् राजा मुनीन्द्राणां च संसदि ॥ ११ ॥**

**(भा.दी.) पुरीमि**ति । शास्त्रं वेत्तीति शास्त्रवित्, सः राजा जनकः राघवं[२] दशरथं पुरीं प्रवेश्य मुनीन्द्राणां संसत् सभा तस्यां शास्त्रमनतिक्रम्य यथाशास्त्रम्, शास्त्रोक्तप्रकारेणेत्यर्थः[३], सम्पूज्य प्रावदत् प्रोवाच । वद व्यक्तायां वाचि लङ् ॥ ११ ॥

**(सं.चं.)** राघवं दशरथं राजा जनकः प्रावदत् प्रेम्णाऽवदत्, प्रथमं चावदत् ॥ ११ ॥

**दिष्ट्या दृष्टोऽसि राजेन्द्र दुर्लभं प्रियदर्शनम् ।**
**दिष्ट्या मे[४] राघवश्रेष्ठैरभूद् बान्धवमीदृशम् ॥ १२ ॥**

**(भा.दी.)** वचनप्रकारमेव दर्शयति– **दिष्ट्येत्या**दिना । यस्मात् प्रियस्य प्रेमविषयस्य पुंसः दर्शनं दुर्लभं तस्मात् हे राजेन्द्र दशरथ, त्वं दिष्ट्या दैवात् दृष्टः असि । अस्तेर्लट् । (मे) राघवेषु श्रेष्ठैः भवद्भिः सह ईदृशं बान्धवं बन्धुत्वं दिष्ट्या दैवादभूत् ॥ १२ ॥

**(सं.चं.)** दिष्ट्या दृष्टोऽसि । माङ्गलिकमेतत् तव दर्शनम् । महदिदं मोदस्थानं यद् दृष्टोऽसि । रामेण धनुर्भग्नमिति यदृच्छया दृष्टोऽसि । नूनं मयि देवाः प्रसन्ना यद् दृष्टोऽसि । 'दिष्ट्या स्यान्मङ्गलादिषु' इत्यभिधानम् । बान्धवं बन्धुभावः ॥ १२ ॥

**रामाय लक्ष्मणायापि प्रदास्यामि सुते मम ।**
**अवसाय महायज्ञमहं सीतोर्म्मिळे ध्रुवम् ॥ १३ ॥**

**(भा.दी.) रामाये**ति । अहं महान् यो यज्ञस्तम्, अवसाय समाप्य, मम सुते सीता च ऊर्मिळा च ते, सीतोर्मिळाभिधे इत्यर्थः, श्रीरामाय लक्ष्मणायापि प्रदास्यामि । दाञ् दाणे लृट् । ध्रुवम् ॥ १३ ॥

**(सं.चं.)** अवसाय समाप्य । मम सुते सीतोर्मिळे । सीता सीरजाता सुता । ऊर्मिळा प्रसूता सुता ॥१३॥

---

१. 'राजानम्'
२. 'राजानम्'
३. 'शास्त्रोक्तक्रमेणेत्यर्थः'
४. 'राघवैः श्रेष्ठैः–'

**इत्युक्तो जनकेनोचे किञ्चित् स्मित्वा स राघवः ।**
**प्रतिग्रहो दातृवशस्तस्मादेवं भवेदिति[१] ॥ १४ ॥**

**(भा.दी.) इती**ति । जनकेन इति एवमादिप्रकारेण उक्तः राघवः दशरथः सः किञ्चित् स्मित्वा मन्दहासं कृत्वा, यस्मात् प्रतिग्रहः दानद्रव्यम्, 'प्रतिग्रहः क्रियाकारे चमूपृष्ठे पतद्ग्रहे । दानद्रव्ये स्वीकृतौ च' इति वैजयन्ती, दातृवशः तस्मात्, एवं त्वदुक्तरीत्या भवेत्, इति ऊचे ॥ १४ ॥

**(सं.चं.)** 'प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा । यथा वक्ष्यसि धर्मज्ञ तत् करिष्यामहे वयम्' (६९.१४)इति रामायणे ॥ १४ ॥

**सानन्दो नन्दनैः सार्द्धं राजा वेश्मान्तरेऽवसत् ।**
**विश्वामित्रवसिष्ठाद्यैः साकं हरिकथापरैः ॥ १५ ॥**

**(भा.दी.) सानन्द** इति । आनन्देन पुत्रदर्शनजन्यसन्तोषेण सहितः सानन्दः राजा दशरथः नन्दनैः श्रीरामाद्यैः सार्द्धं साकम्, हरेः कथा तस्यां परं तात्पर्यं येषां ते तथा तैः, हरिकथायां पराः रतास्तैरिति वा, विश्वामित्रश्च वसिष्ठश्च तौ आद्यौ येषां ते तथा तैः, मुनिभिः साकम्, अन्यद्वेश्म वेश्मान्तरं तस्मिन् अवसत् । वस निवासे लङ् ॥ १५ ॥

**(सं.चं.)** नन्दनैश्चतुर्भिः सार्द्धम् । रामलक्ष्मणौ विश्वामित्रेण सह पूर्वमेवाऽगतौ । भरतशत्रुघ्नौ पित्रा सहाऽगतौ ॥ १५ ॥

**परेद्युर्भ्रातरं दूतैरुत्सवार्थं कुशध्वजम् ।**
**[२]वीरमिक्षुमतीतीरादानिनायाथ[२] मैथिलः ॥ १६ ॥**

**(भा.दी.) परेद्यु**रिति । अथ मैथिलः जनकः, परेद्युः द्वितीयदिवसे वीरं कुशध्वजं कुशध्वजनामानं भ्रातरं दूतैः उत्सवार्थं विवाहलक्षणोत्सवार्थं इक्षुमत्या इक्षुमतीनद्यास्तीरं तस्मात् आनिनाय आकारयामास । णीञ् प्रापणे लिट् ॥ १६ ॥

**(सं.चं.)** अथेति मङ्गलान्तरारम्भः । भ्रातरमनुजम् । इक्षुमतीतीरगतात् साङ्काश्यनगरात् । आनिनाय अनाययामास ॥ १६ ॥

---

१. **'भवत्विति'** ३. **'वीरमारब्धान्तगामिनम्'** इति का.श्री. । ३. **'–निनाय स मैथिलः'**

**कुलाचार्य्यः कुलीनानां कुलधर्म्मं समाचरन्**[1] **।**
**सभायां सन्निधौ राज्ञां वरवंशमवर्ण्णयत् ॥ १७ ॥**

**(भा.दी.) कुले**ति । कुलस्य इक्ष्वाकुगोत्रस्य आचार्यः पुरोहितः वसिष्ठः, कुले भवाः कुलीनास्तेषां राज्ञां कुलस्य गोत्रस्य वरवंशवर्णनादिरूपो यो धर्मस्तं समाचरन् सन्, सभायां वरस्य वरभूतस्य श्रीरामस्य वंशस्तम्, राज्ञां सन्निधिः सम्मुखं तस्मिन् अवर्णयत् । वर्ण वर्णक्रियाविस्तारगुणवचनेषु लङ् ॥ १७ ॥

**(सं.चं.)** कुलाचार्यो वसिष्ठः । राज्ञां सन्निधौ । वरस्य उद्वक्ष्यतो रामस्य वरं वंशमवर्णयत् ॥ १७ ॥

**यस्मिन्निक्ष्वाकुमान्धातृसगराः साम्बरीषकाः ।**
**रघ्वजाद्याः सार्वभौमा नारायणपरायणाः ॥ १८ ॥**

**(भा.दी.) यस्मिन्नि**ति । यस्मिन् वंशे नारायणः परायणः परमाश्रयो येषां ते तथा, इक्ष्वाकुश्च मान्धाता च सगरश्च ते अम्बरीषेण सहिताः साम्बरीषकाः रघुश्च अजश्च तौ आद्यौ येषां ते तथा, सार्वभौमाः चक्रवर्तिनः, तं वंशमवर्णयदित्यन्वयः ॥ १८ ॥

**(सं.चं.)** वैवस्वतमनोः पुत्र इक्ष्वाकुः । सूर्यवंशस्य प्रथमो राजा । मान्धाता यौवनाश्वः । मान्धातुस्तनयोऽम्बरीषः । अन्यश्चेक्ष्वाकुभ्रातुर्नाभागस्य तनयोऽम्बरीषोऽस्ति । य एकादशीव्रतदक्षितः । गरेण सहितो जातः सगरः । सगरादंशुमान् । ततो दिलीपस्ततो भगीरथः । ततः क्रमेण रघोरजः । अजाद्दशरथः । आद्यपदेन पूर्वमनुक्ता उक्तानां मध्यपतिता दिलीपभगीरथादयः । रामायणे पुनरन्यथाऽन्यथा पठ्यते– 'नाभागस्य बभूवाजः अजाद् दशरथोऽभवत्' (७०.४३) इत्यादि । नाभाग इति रघोरेव नामान्तरमिति प्रतीयते । भागवताद्यनुसारेण सर्वं सङ्गमनीयम् ॥ १८ ॥

**जनकश्च**[2] **वधूवंशं मुनीनामाज्ञयाऽवदत् ।**
**यस्मिन्निमिर्द्देवरातो ह्रस्वरोमादयो नृपाः ॥ १९ ॥**

---

१. **'समाचरत्'**

२. **'जनकस्य वधूवंशम्' । 'शतानन्दः जनकस्य मैथिलस्य वधूवंशं सीतावंशं मुनीनामाज्ञयाऽवदत्'** इति का.श्री. । मूले शतानन्दपदं न पठ्यत इति मूलाननुगुणमेतत् । रामायणाननुगुणं च ।

**(भा.दी.) जनक** इति । जनकश्च यस्मिन् वंशे निमिः निमिनामकः देवरातः देवरातनामकः ह्रस्वरोमा ह्रस्वरोमनामक आदिर्येषां ते तथा नृपाः, तं वधूवंशं सीतावंशं मुनीनां वसिष्ठादीनां आज्ञया अवदत् अवर्णयत् ॥ १९ ॥

**(सं.चं.)** निमिरिक्ष्वाकुतनयो विकुक्षिभ्राता । निमेः षष्ठो देवरातः । यस्मिन् शैवं धनुर्न्यासभूतं शिवेन दत्तम् । ह्रस्वरोमा सीरध्वजपिता । ततः सीरध्वजकुशध्वजौ । सीतोर्मिळे सीरध्वजतनये । माण्ड(ल)वीश्रुतकीर्ती कुशध्वजस्य ॥ १९–२१ ॥

**रामरामानुजाभ्यां स वाग्दानं कन्ययोर्व्यधात् ।**
**विश्वामित्रवसिष्ठौ तावथ[1] मैथिलमूचतुः ॥ २० ॥**

**(भा.दी.) रामे**ति । सः जनकः रामश्च रामानुजो लक्ष्मणः स च ताभ्यामिति चतुर्थी, कन्ययोः सीतोर्मिळयोः वाग्दानं मत्सुते सीतोर्मिळे त्वत्पुत्राभ्यां रामलक्ष्मणाभ्यामवश्यं दास्य इत्यादिरूपवाचो दानं प्रदानं तत् व्यधात् चकार । डु धाञ् धारणपोषणयोः लुङ् । अथ विश्वामित्रवसिष्ठौ तं मैथिलं ऊचतुः॥ २० ॥

**कुशध्वजस्य ते भ्रातुर्भ्राजमाने सुते उभे ।**
**दातव्ये भरतायाङ्ग शत्रुघ्नाय च शोभने ॥ २१ ॥**

**(भा.दी.) कुशे**ति । हे अङ्ग प्रिय जनक, कुशध्वजस्य कुशध्वजनामकस्य ते तव भ्रातुः अनुजस्य भ्राजमाने शोभमाने उभे सुते भरताय शत्रुघ्नाय च दातव्ये दातुमर्हे, इति मैथिलमूचतुरिति सम्बन्धः ॥ २१ ॥

**ऋषीन्द्रयोर्वचः श्रुत्वा मैथिलावप्यथोचतुः[2] ।**
**अर्त्थ्यमस्माभिरेवेदं भवद्भ्यां व्याहृतं त्विति ॥ २२ ॥**

**(भा.दी.) ऋषी**ति । (अथ) मैथिलावपि सीरध्वजकुशध्वजावपि ऋषीन्द्रयोः तयोः वसिष्ठविश्वामित्रयोः वचः श्रुत्वा, अस्माभिरेव अर्थ्यं प्रार्थनार्हं इदं कन्याप्रदानलक्षणं कार्यं भवद्भ्यां व्याहृतमभिहितम् इति ऊचतुः ॥ २२ ॥

---

१. **'तं त्वथ मैथिल–'** इति वि.ती.पाठः स्यात् । **'तावेनं मैथिल–'** इति कचित् ।

२. **'मैथिलावपि चोचतुः'** इति **'मैथिलावथ चोचतुः'** इति च कचित् ।

**(सं.चं.)** मैथिलौ सीरध्वजकुशध्वजौ । अस्माभिरित्यावाभ्याम् । आत्मनि बहुवचनम् । यदस्माकं मनसि स्थितम्, अथाप्यधीरतया न व्याहृतम्, तदेव भवद्भ्यां व्याहृतमिति ॥ २२ ॥

**अथ श्वोभाविनि महे नान्दीश्राद्धानि[1] राघवः ।**
**निमन्त्र्य ब्राह्मणांश्चक्रे चक्री नः प्रीयतामिति ॥ २३ ॥**

**(भा.दी.) अथेति** । अथ राघवः दशरथः, महे विवाहलक्षणोत्सवे, 'मह उद्धव उत्सवः' इत्यमरः, श्वः परदिने भाविनि भविष्यति सति ब्राह्मणान् निमन्त्र्य आमन्त्र्य, नान्दीश्राद्धानि नान्दीश्राद्धाख्यकर्माणि, चक्र-मस्यास्तीति चक्री श्रीहरिः नः अस्माकं प्रीयतां प्रीतो भवतु, प्रीञ् प्रीणने लोट्, इति बुद्ध्या चक्रे ॥२३॥

**(सं.चं.)** श्वोभाविनीत्येकं पदम् । पदद्वयं वा । श्वः परेद्यवि निर्वर्तिष्यमाणे महे विवाहोत्सवे । 'उत्सवः स्यान्महः क्षणः' इत्यभिधानम् । पूर्वेद्युरेव राघवो दशरथः चतुर्णामपि पुत्राणां नान्दीश्राद्धानि चक्रे ॥२३॥

**चतुर्ण्णामपि पुत्राणां भूत्यै विप्रगणाय सः ।**
**गवां चतुःसहस्राणि ददौ सस्वर्ण्णवाससाम् ॥ २४ ॥**

**(भा.दी.) चतुरिति** । सः दशरथः, चतुर्णां अपि पुत्राणां श्रीरामादीनां भूत्यै अभ्युदयाय, स्वर्णानि च वासांसि च तैः सहिताः सस्वर्णवाससस्तासां गवां चत्वारि च तानि सहस्राणि च, विप्राणां गणः समूहस्तस्मै ददौ ॥ २४ ॥

**(सं.चं.)** अथ चतुर्णामपि पुत्राणां भूत्यै क्षेमाय । उत्तरोत्तरमुन्नतये । एकैकस्य सहस्रमिति चतुर्णां चतुःसह-स्राणि । सम्प्रति तु रामायणे–'गवां शतसहस्राणि चत्वारि' (७२.२३) इति पाठं पठन्ति । स्यादपि प्राचीनपाठः–'गवामथ सहस्राणि' इति । शृङ्गनद्धैः स्वर्णैः पृष्ठपिधानैर्वासोभिश्च सहितानां गवाम् । 'सुवर्णशृङ्गाः सम्पन्नाः सवत्साः कांस्यदोहनाः' (७२.२३) इति च ॥ २४ ॥

**धनैरन्नादिभिश्चायं[2] यदा विप्रानतोषयत् ।**
**युधाजिदपि तत्राऽगात् तदा भरतमातुलः ॥ २५ ॥**

---

१. **'श्रद्धया दीयमानानि श्राद्धानि । नान्दीदेवतामुद्दिश्य क्रियमाणानि नान्दीश्राद्धानि'** इति का.श्री. । २. **'धनै रत्नादिभिश्चायम्'**

**(भा.दी.)** **धनैरि**ति । अयं दशरथः धनैः हिरण्यैः । 'वित्तं धनं हिरण्यं च' इति हलः । अन्नमादिर्येषां ते तथा तैश्च, यदा विप्रान् अतोषयत् तोषयामास । तुष तुष्टौ लङ् । तदा भरतस्य मातुलो मातुः सहोदरः युधाजिदपि युधाजिन्नामकोऽपि तत्र विवाहे आगात् सम्प्राप्तः । इण् गतौ लुङ् ॥ २५ ॥

**(सं.चं.)** युधाजित् केकयराजस्याश्वपतेस्तनयः कैकेयीभ्राता । तदा तस्मिन्नेव दिने 'यस्मिंस्तु दिवसे राजा चक्रे गोदानमुत्तमम् । तस्मिंस्तु दिवसे शूरो युधाजित् समुपेयिवान्' (७३.१) इति च ॥ २५ ॥

**सबान्धवो दशरथः कृतस्वस्त्ययनो द्विजैः ।**
**भूषणैर्भूषयामास पुत्रान् स्वगुणभूषणान् ॥ २६ ॥**

**(भा.दी.)** **से**ति । द्विजैः कृतं स्वस्त्ययनं मङ्गल्यवचनं यस्य स तथा, बान्धवैः बन्धुभिः सहितः सबान्धवः दशरथः, स्वेषां ये गुणा विनयादयस्ते भूषणानीव येषां ते तथा तान् पुत्रान्, भूषयन्तीति भूषणान्याभरणानि तैः भूषयामास अलश्चक्रे । भूष अलङ्कारे लिट् ॥ २६ ॥

**(सं.चं.)** स्वस्त्ययनं स्वस्तिवाचनम्, पुण्याहवाचनमित्येतत् । स्वीयाः स्वरूपभूता वा गुणा एव भूषणानि येषाम् ॥ २६ ॥

**यथा दशरथश्चक्रे स्वपुत्राणां महारथः ।**
**भूत्यै दानादि सत्कर्म्म चक्राते मैथिलौ तथा[1] ।**
**कन्यानां साधुकृत्यानि शतानन्दमते स्थितौ ॥ २७ ॥**

**(भा.दी.)** **यथे**ति । (महारथः) दशरथः स्वपुत्राणां श्रीरामादीनां भूत्यै अभ्युदयाय, यथा दानमादिर्यस्य तत्तथा तत् सत्कर्म चक्रे । कृञ्धातोर्लिट् । तथा शतानन्दस्य शतानन्दनामकस्वपुरोहितस्य मतमभिमतिस्तस्मिन्, स्थितौ मैथिलौ सीरध्वजकुशध्वजौ कन्यानां सीतादीनां साधुकृत्यानि शोभनविवाहहेतुभूतकर्माणि चक्राते ॥ २७ ॥

**(सं.चं.)** यथा दशरथश्चक्रे । अत्र द्वेधा पाठः । 'यथा दशरथश्चक्रे चक्राते मैथिलौ तथा । कन्यानां साधु कृत्यानि शतानन्दमते स्थितौ' इत्येकेषां मते । अन्येषां मते षट्चरणाऽनुष्टुप्– 'यथा दशरथश्चक्रे स्वपुत्राणां महारथः । भूत्यै दानादि सत्कर्म चक्राते मैथिलौ तथा । कन्यानां साधुकृत्यानि शतानन्दमते स्थितौ'

१. क्वचित् पाठान्तरं चतुश्चरणं पठ्यते– **'यथा दशरथश्चक्रे चक्राते मैथिलौ तथा । कन्यानां साधुकृत्यानि शतानन्दमते स्थितौ ॥'**

इति । युक्तश्चायं षट्चरणः पक्षः । तेन पठितेन श्लोकार्धेन समग्र एकः श्लोकोऽधिको भवति । साधूनि कृत्यानि । साधूनि यथा स्युस्तथा च ॥ २७ ॥

**उत्तराभ्यां स उद्वाहः फल्गुनीभ्यामभूत् तदा ।**
**प्राजापत्यमिदं कर्म्म यत्र शंसन्ति पण्डिताः ॥ २८ ॥**

**(भा.दी.) उत्तरेति** । तदा उत्तराभ्यां फल्गुनीभ्यां उत्तरफल्गुनीमुहूर्त इत्यर्थः । उत्तरानक्षत्रस्य मण्डलद्वित्वविवक्षायां द्विवचनम् । क्वचिदेकवचनान्ततया प्रयोगस्तद्दैवतैक्यविवक्षयोपपद्यते । नैकधाऽप्यभियुक्तप्रयोगानां बहुलमुपलम्भात् । अधिकरणस्य करणत्वविवक्षया तृतीया । सः उद्वाहः विवाहः अभूत् । यत्र यस्मिन् मुहूर्ते पण्डिताः विद्वांसः प्रजापतिर्देवता अस्येति प्राजापत्यं इदं विवाहाख्यं कर्म शंसन्ति स्तुवन्ति । शंसु स्तुतौ लट् ॥२८॥

**(सं.चं.)** उत्तराभ्यां फल्गुनीभ्याम् । अवच्छेदकत्वं तृतीयार्थः । उत्तरफल्गुनीविशिष्टकालावच्छेदेन । तद्यथा– शाखया लम्बते, शाखावच्छेदेन लम्बते, शाखायां लम्बत इति यावत् । इदं वैवाहिकं कर्म प्राजापत्यं प्रजापतिव्रतं शंसन्ति तद्विदः– 'तद् ये हवै तत् प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते' इति । उपस्थदेवता हि प्रजापतिः । यत्र उत्तरयोः फल्गुन्योः । 'फल्गुन्यामुत्तरे राजंस्तस्मिन् वैवाहिकं कुरु' (७१.२४) इति । 'उत्तरे दिवसे ब्रह्मन् फल्गुनीभ्यां मनीषिणः । वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापतिः' (७२.१३) इति च ॥ २८–३१ ॥

**राघवाणां चतुर्ण्णां च विवाहोऽयं जगत्प्रियः ।**
**आसीन्मुहूर्त्त एकस्मिन्[1] ब्राह्मणैः स्वस्तिवादिभिः[2] ॥ २९ ॥**

**(भा.दी.) राघवेति** । चतुर्णां च राघवाणां रघुगोत्रभवानां श्रीरामादीनां जगत्प्रियः अयं विवाहः एकस्मिन् मुहूर्तो लग्नं तस्मिन् । स्वस्ति आशीर्वचः वक्तुं शीलमेषामस्तीति स्वस्तिवादिनस्तैः । 'स्वस्ति मङ्गळनिष्पापमोक्षेष्वाशीर्वचस्यपि' इति वैजयन्ती । ब्रह्मवादिभिरिति पाठे वेदवादिभिरित्यर्थः । ब्राह्मणैः सह आसीत् । अस्तेर्लङ् ॥ २९ ॥

**सम्भारानथ सम्भृत्य कुलधर्म्मानुकूलतः ।**
**वसिष्ठोऽग्नौ[3] जुहावात्र विश्वामित्राभ्यनुज्ञया ॥ ३० ॥**

---

१. **'एकस्मिन् मुहूर्ते मण्टपचतुष्टये'** इति का.श्री. । २. **'ब्राह्मणैर्ब्रह्मवादिभिः'**

३. **'वसिष्ठोऽपि जुहावाथ'** इति, **'वसिष्ठोऽग्निं जुहावाथ'** इति च क्वचित् ।

**(भा.दी.) समि**ति । अथ वसिष्ठः सम्भारान् होमसाधनद्रव्याणि सम्भृत्य सम्पाद्य, विश्वामित्राभ्यनुज्ञया, अत्र विवाहे कुलस्य गोत्रस्य यो धर्मस्तस्यानुसारस्तेनेति ततः, अग्नौ जुहाव । हु दानादानयोः[१] लिट् ॥ ३० ॥

**चक्राङ्केन सरोजाङ्कं[२] सीतापाणिं स्वपाणिना ।**
**अरुणेनारुणं रामो जग्राह जगदीश्वरः ॥ ३१ ॥**

**(भा.दी.) चक्रे**ति । जगदीश्वरः श्रीरामः चक्रस्य अङ्कश्चिह्नमस्यास्तीति तथा तेन अरुणेन रक्तेन स्वपाणिना सरोजस्य कमलस्य अङ्कश्चिह्नं यस्य स तथा तं अरुणं सीतापाणिं जग्राह ॥ ३१ ॥

**त्रिवारं परिणीयाऽथ सम्यक् सप्तपदानि च[३] ।**
**गमयित्वा क्रियाशेषमशेषं च समापयत् ॥ ३२ ॥**

**(भा.दी.) त्रिवारमि**ति । अथ पाणिग्रहणानन्तरं त्रिवारं त्रिःकृत्वः परिणीय अग्निप्रदक्षिणं कारयित्वा सम्यक् सप्त च तानि पदानि च तानि गमयित्वा, न विद्यते शेषो यस्य स तथा तं क्रियाशेषं च समापयत् समाप्तिमकरोत्[४] ॥ ३२ ॥

**(सं.चं.)** त्रिवारं परिणीय । पाणिं गृह्णीष्व पाणिनेति त्रिवारमुच्चार्य पाणिं ग्राहयित्वा, वधूवरौ सप्तपदानि गमयित्वा, समापयद् वसिष्ठः ॥ ३२ ॥

**जनकं जगतां रामं जननीमपि जानकीम् ।**
**वधूवरत्वमायाताववैक्षन्त सुरोत्तमाः[५] ॥ ३३ ॥**

**(भा.दी.) जनकमि**ति । सुरेश्वराः देवश्रेष्ठाः[६] ब्रह्मादयः जगतां जनकं पितरं श्रीरामं जगतां जननीं मातरं जानकीमपि वधूश्च वरश्च तयोर्भावस्तत्त्वं तत्, भार्याभर्तृभावमित्यर्थः, आयातौ सम्प्राप्तौ अवैक्षन्त अपश्यन् । ईक्ष दर्शनाङ्कनयोः लङ् ॥ ३३ ॥

**(सं.चं.)** जगतां जननीमपि ॥ ३३ ॥

---

१. **'दानादनयोः'** इति क्षीरस्वाम्यादयः पठन्ति । दानं हविःप्रक्षेपः ।

२. **'चक्राङ्केन चक्ररेखावता । सरोजाङ्कं सरोजाकाररेखाचिह्नितम्'** इति का.श्री. ।

३. **'सप्तपदानि सः'**

४. **'समाप्तिमकारयत्' । 'समाप्तमकरोत्'** इति युक्तम् ।

५. **'सुरेश्वराः'** इति वि.ती.पाठः ।

६. **'सुरश्रेष्ठाः'**

**रत्नैर्देदीप्यमानानां विमानानामथाऽवलिः ।**
**अलञ्चकार गगनं देवदेवानुगाकुलम्[1] ॥ ३४ ॥**

**(भा.दी.) रत्नैरि**ति । अथ विवाहानन्तरम्, देवाः ब्रह्मादयस्ते च देवानुगा गन्धर्वादयस्ते च तैराकुला निबिडा, अधिष्ठितेत्यर्थः, रत्नानि माणिक्यादीनि तैः देदीप्यमानानां अतिशयेन प्रकाशमानानां विमानानाम्, 'व्योमयानं विमानं स्यात्'[2] इत्यमरः, आवलिः पङ्क्तिः गगनमाकाशं तत्, अलञ्चकार अलङ्कृतमकरोत् ॥ ३४ ॥

**(सं.चं.)** देवैर्देवानुगैर्गन्धर्वाप्सरोभिश्चाऽकुला निबिडा विमानानामावलिः । 'गगनं देवदेवानुगाकुलम्' इति तु रमणीयः पाठः ॥ ३४ ॥

**देववाद्यान्यवाद्यन्त[3] गीतं गन्धर्वपुङ्गवैः ।**
**प्रवृष्टानि प्रसूनानि प्रनृत्तं चाप्सरोगणैः ॥ ३५ ॥**

**(भा.दी.) देवे**ति । देववाद्यानि भेर्यादीनि अवाद्यन्त । वद सन्देशने लङ् । गन्धर्वपुङ्गवैः गन्धर्वश्रेष्ठैः गीतं गानमकारि । प्रसूनानि कुसुमानि प्रवृष्टानि । अप्सरसां गणाः समूहास्तैः प्रनृत्तं च प्रकृष्टतया नर्तनमकारि ॥ ३५ ॥

**(सं.चं.)** देववाद्यान्यवाद्यन्त गन्धर्वैः । गीतं च । प्रसूनानि प्रवृष्टानि गन्धर्वैश्चाप्सरोभिश्च ॥ ३५ ॥

**लोकानां लोचनानन्दाः सर्वाभरणभूषिताः ।**
**विचेरुः पुरि चार्वङ्ग्यो दिवि देव्यइवोत्सवे ॥ ३६ ॥**

**(भा.दी.) लोकानामि**ति । लोकाः जनास्तेषां लोचनानां चक्षुषां आनन्दो याभ्यस्तास्तथा, जनलोचनानामानन्दकरा इत्यर्थः । सर्वाणि यान्याभरणानि तैर्भूषिताः । चारु मनोहरं अङ्गं यासां तास्तथा । अङ्गकण्ठगात्रेभ्यो ङीषिष्यते[4] इति ङीष् । स्त्रियः, दीव्यन्त्यस्यामिति द्यौस्तस्यां देव्यइव (देव)स्त्रियइव, उत्सवो विवाहोत्सवस्तस्मिन् पुरि मिथिलायां विचेरुः । चर गतिभक्षणयोर्लिट् ॥ ३६ ॥

**(सं.चं.)** विवाहोत्सवे । पुरि मिथिलायाम् ॥ ३६ ॥

---

१. **'देवदेवानुगाकुला'** इति. वि.ती. पाठः ।
२. **'विमानोऽस्त्री'** इति प्रचलितः कोशपाठः ।
३. **'देवैर्वाद्यान्यवाद्यन्त'**
४. **'अङ्गगात्रकण्ठेभ्य इति वक्तव्यम्'** इति वार्तिकपाठं जयादित्यः पठति ।

**ऊर्म्मिला लक्ष्मणस्याऽसीन्मालवी भरतस्य च ।**
**भार्य्याऽथ श्रुतकीर्त्तिश्च शत्रुघ्नस्याभवच्छुभा ॥ ३७ ॥**

**(भा.दी.) ऊर्मिलेति** । अथ लक्ष्मणस्य ऊर्मिळा ऊर्मिळानाम्नी भार्या आसीत् । भरतस्य मालवी मालवीनाम्नी आसीत् । शत्रुघ्नस्य शुभा शोभना श्रुतकीर्तिश्च श्रुतकीर्तिनाम्नी च भार्या अभवत् ॥ ३७ ॥

**(सं.चं.)** रामायणे माण्डवी भरतभार्येति पठ्यते । सङ्ग्रहे तु 'मालवी भरतस्य च' इति सार्वत्रिक उपलब्धः पाठः । लिपिकृत्प्रमादः सम्भाव्यते । मालवराजतनया हि मालवीति प्रायः कथ्यते । इयं तु साङ्काश्यनाथस्य कुशध्वजस्य तनया ॥ ३७–८ ॥

**पुरोहितान् वसिष्ठाद्यान्[१] वित्तैरुत्तमकल्पकैः ।**
**अमानयन्महीपालो ब्राह्मणानपरानपि ॥ ३८ ॥**

**(भा.दी.) पुर** इति । महीपालः राजा जनकः वसिष्ठ आद्यो येषां ते तथा तान् पुरोहितान्, उत्तमः कल्पः अस्मिन् कर्मणि एतावद्द्रव्यं दातव्यमिति विधिर्येषां[२] तानि तथा तैः । 'कल्पो न्याये सुरद्रुमे' इति वैजयन्ती । उत्तमः कल्पः शास्त्रोक्तप्रकारो येषां तानि तथा तैरिति वा । वित्तैः अमानयत् अपूजयत् । मान पूजायां लङ् । अपरान् (ब्राह्मणान्) वसिष्ठादिव्यतिरिक्तमुनीनपि अमानयत् यथायोग्यं अपूजयत् ॥ ३८ ॥

**आपृच्छ्याच्छहृदयं सवसिष्ठं महीपतिम् ।**
**विश्वामित्रो ययौ प्रातर्म्मुक्तः सास्रेण भूभृता ॥ ३९ ॥**

**(भा.दी.) आपृच्छ्येति** । विश्वामित्रः, प्रातः प्रातःकाले, अतुच्छं बृहत् हृदयं मनो यस्य स तथा तम्, मनस्विनमित्यर्थः, वसिष्ठेन सहितः सवसिष्ठस्तं महीपतिं राजानं दशरथं आपृच्छ्य आमन्त्र्य, यात्रार्थमनुज्ञां प्राप्येति यावत्, आस्रेण प्रेमाश्रुणा सहितः सास्रः तेन भूभृता राज्ञा दशरथेन, मुक्तः सन् प्रेषितः सन्, ययौ । या प्रापणे लिट् ॥ ३९ ॥

**(सं.चं.)** गमनार्थमनुमतिपृच्छा आपृच्छा । महीपतिं दशरथम् । विरहासहतया, पूर्वं रामप्रेषणे स्वस्यानिच्छाप्रकटनमौढ्यस्य स्मरणेन प्रत्युपकर्तुमक्षमतया, तत्कृतरामोद्वाहकर्मणाऽऽनन्दतुन्दिलतया च सास्रेण भूभृता । एतावदेव विश्वामित्रस्य रामावतारे कृत्यम् । अतः कृतकृत्यो ययौ ॥ ३९ ॥

१. 'वसिष्ठादीन्' २. 'विधिर्विधानं येषाम्'

**परिबर्हं[१] प्रबर्हं हि राघवेभ्यो ददौ नृपः ।**
**क्षौमाणि मणिराशींश्च कम्बळानम्बराणि च ॥ ४० ॥**

**(भा.दी.) परिबर्हमि**ति । नृपः जनकः, प्रबर्हं श्रेष्ठं तत्, परिबर्हं विवाहकाले वधूवरयोर्दीयमानं धनम्, राघवेभ्यः रघुगोत्रभवेभ्यः श्रीरामादिभ्यः ददौ । तदेव विशदयति– क्षौमाणीत्यादिना । क्षौमाणि कौशेयवस्त्राणि मणिराशींश्च रत्नसमूहांश्च कम्बळान् अम्बराणि (च) वस्त्राण्यपि ददौ ॥ ४० ॥

**(सं.चं.)** प्रबर्हमुत्तमं परिबर्हम्, राजयोग्यमुपायनम् । 'मुख्यं परार्ध्यं प्रवरं प्रबर्हम्' इत्यभिधानम् । 'परिबर्हो राजयोग्यद्रव्ये' इति मेदिनी । परिबर्हं गृहोपकरणद्रव्यजातमिति वा । 'तथोपकरणं प्रोक्तं परिबर्हः परिच्छदः' इत्यभिधानम् । क्षौमाणि वल्कलजानि । 'क्षौमं वल्कलजांशुके' इति मेदिनी । इतराण्यम्बराणि कार्पासानि कौशेयानि च । तेन चतुर्विधमपि वसनमुक्तं भवति । तथा ह्यभिधानम्–'चतुर्विधं तु विज्ञेयं त्वक्सूत्रक्रिमिरोमजम्' । इति क्षौमं त्वग्जम् । कार्पासं सूत्रजम् । कौशेयं क्रिमिजम् । रोमजाः कम्बळा इति ॥ ४० ॥

**गवां लक्षाणि लक्ष्मीवान् चमूं च चतुरङ्गिणीम्[२] ।**
**नियुतं[३] च हिरण्यानि ददौ दासीश्च मैथिलः[४] ॥ ४१ ॥**

**(भा.दी.) गवामि**ति । लक्ष्मीरैश्वर्यमस्यास्तीति लक्ष्मीवान् । 'लक्ष्मीवान् लक्ष्मणः श्रीमान्' इत्यमरः । मैथिलः गवां लक्षाणि, चत्वारि अङ्गानि गजतुरगादीनि अस्याः सन्तीति तथा तां चमूं सेनां च, नियुतं शतसहस्रपरिमितानि हिरण्यानि, नियुतं दासीश्च ददाविति सम्बन्धः ॥ ४१ ॥

**(सं.चं.)** 'गवां शतसहस्राणि बहूनि' इति वाल्मीकिः । अत आह– गवां बहूनि लक्षाणीति । हिरण्यानि राजमुद्राङ्कितानि मूल्यत्वेन देयानि नियुतं लक्षमितानि ॥ ४१ ॥

**दक्षिणेव प्रभुं यज्ञं दामोदरमिवेन्दिरा ।**
**जयन्तीवर्षभं देवं सीता राममुपागमत् ॥ ४२ ॥**

---

१. **'पारिबर्हं हि जनको राघ–'**
२. **'चमूश्च चतुरङ्गिणीः'**
३. **'नियुतं विंशतिसहस्रपरिमितानि'** इति व्याख्यान्तश्चिन्त्याः ।
४. **'दासीः स मैथिलः'**

**(भा.दी.) दक्षिणे**ति । प्रभुं समर्थं यज्ञं यज्ञनाम्नाऽवतीर्णं तं श्रीहरिं दक्षिणेव दक्षिणादेवीव, दाम जगत् उदरे यस्य स तथा तं श्रीहरिं इन्दिरेव लक्ष्मीरिव, देवमृषभं ऋषभनाम्नाऽवतीर्णं विष्णुं जयन्तीव जयन्तीदेवीव श्रीरामं सीता उपागमत् ॥ ४२ ॥

**(सं.चं.)** आकूतिसूनुं यज्ञनामानं भगवन्तं दक्षिणामानिनी तन्नाम्नाऽवतीर्णा रमेव । दमयति उदान् जीवान् रमयति चेति दामोदरो नारायणः । 'दमाद् दामोदरं विदुः' इति हि स्मरन्ति । द्वादशमूर्तिषु चरममिन्दिरानाम्नी लक्ष्मीरिव । ऋषभत्वेनावतीर्णं भगवन्तं देवी जयन्तीव ॥ ४२ ॥

**न जरा न परिस्पन्दो न मलं विमलात्मनोः ।**
**अनयोः किल दम्पत्योरगण्यगुणपूर्णयोः ॥ ४३ ॥**

**(भा.दी.)** विवाहकाले जातां जनानां वार्तां दर्शयति– **न जरे**त्यादिना । अनाद्यनन्तकालेऽपि रागादि-दोषासम्बन्धात् विमलः निर्मलः आत्मा मनो ययोस्तौ तथा तयोः, निर्दोषस्वरूपयोरिति वा, अगण्या ये गुणास्तैः पूर्णयोः अनयोः, जाया च पतिश्च दम्पती तयोः, जरा न । परिस्पन्दो कालनिमित्तकनिद्रादिविकारो वा न । मलं दुःखादिदोषो वा न किल नास्ति किल ॥ ४३ ॥

**(सं.चं.)** न्यूनतां पिधातुं याऽलङ्काररचना स परिस्पन्द उच्यते । प्रकृतिधर्मस्य प्रतिस्पन्दनं वा परि-स्पन्दः । 'परिस्यन्दः' इति वा पाठः । न स्वेदादिपरिस्यन्दः ॥ ४३ ॥

**जगतां पितरावेतौ कमलाकमलेक्षणौ ।**
**नाथितौ[1] किल नाकीन्द्रैरवन्यामवतेरतुः ॥ ४४ ॥**

**(भा.दी.) जगताम**िति । जगतां सर्वजगतां पिता च माता च पितरौ । 'पिता मात्रा' (अ.सू.१.२.७०) इति सूत्रेण पितृशब्दस्यावशेषः । कमला च कमलेक्षणश्च तौ श्रीलक्ष्मीनारायणावित्यर्थः । एतौ पितरौ सीतारामौ नाकिनां देवानामिन्द्रास्तैः देवश्रेष्ठैः नाथितौ प्रार्थितौ सन्तौ अवन्यां भूमौ अवतेरतुः किल, सीतारामरूपेण अवतारं चक्रतुः किल । अवपूर्वः तॄ प्लवनतरणयोर्लिट् ॥ ४४ ॥

**(सं.चं.)** भूमाववतीर्य दुष्टनिग्रहाय नाथितौ याचितौ ॥ ४४ ॥

**किंवदन्तीति ववृते दम्पत्योश्च[2] गृहेगृहे ।**
**अपि त्रिलोक्यां पापघ्नी[3] निश्रेणी मुक्तिपद्धतेः ॥ ४५ ॥**

---

१. **'अर्थितौ'** २. **'दम्पतीनाम्'** इति वि.ती.पाठः । ३. **'त्रैलोक्यपापघ्नी'**

**(भा.दी.) किमि**ति । त्रयाणां लोकानां समाहारस्त्रिलोकी तस्याम् । पापानि हन्तीति पापघ्नी । मुक्ति-रेव पद्धतिर्मार्गस्तस्याः निश्रेणी सोपानायिता । इति किंवदन्ती वार्त्ता । 'किंवदन्ती जनश्रुतिः' इत्यमरः । जायाश्च पतयश्च दम्पतयस्तेषां गृहेगृहे प्रतिगृहम् । 'गृहं गेहोदवसित–' इत्यमरः । ववृते प्रवृत्ता । वृतु वर्तने लिट् ॥ ४५ ॥

**(सं.चं.)** दम्पत्योः सीतारामयोर्विषये । गृहेगृहे स्थितयोर्दम्पत्योर्वा । समुदायवचनम् । ववृते प्रावर्तत । या किंवदन्ती मुक्तिमार्गस्य निश्रेणी । 'ॐॐ' इति भाषायाम् । भगवद्गुणानुसन्धानरूपत्वात् ॥ ४५ ॥

**अथानुज्ञाप्य जनकं द्विजैः सार्द्धं बलैरपि ।**
**ससूनुः सस्नुषो राजा सभार्य्यः स्वपुरं[1] ययौ ॥ ४६ ॥**

**(भा.दी.) अथे**ति । अथ विवाहानन्तरम्, भार्याभिः सहितः सभार्यः, सूनुभिः पुत्रैः श्रीरामादिभिः सहितः ससूनुः, स्नुषाभिः पुत्रभार्याभिः सीतादिभिः सहितः सस्नुषः, राजा दशरथः, जनकं अनुज्ञाप्य, द्विजैः वसिष्ठादिब्राह्मणैः, बलानि चतुरङ्गसैन्यानि, तैरपि सार्द्धं स्वपुरं अयोद्ध्यां प्रति ययौ ॥ ४६ ॥

**(सं.चं.)** बलैः सैन्यैरपि । 'सैन्यं चक्रं बलं सेना' इति यादवप्रकाशः ॥ ४६ ॥

**निमित्तानि निमित्तज्ञः स निरीक्ष्य नराधिपः[2] ।**
**पदव्यां विपदाशङ्की हितमूचे पुरोहितम् ॥ ४७ ॥**

**(भा.दी.) निमित्तानी**ति । निमित्तानि शकुनानि जानातीति निमित्तज्ञः नृपाधिपः सः दशरथः । निमित्तानि शुभाशुभसूचकानि । 'निमित्तं हेतुलक्ष्ययोः' इति वैजयन्ती । निरीक्ष्य, पदव्यां मार्गे, विपदमापदमा-शङ्कितुं शीलमस्यास्तीति तथोक्तस्तथा सन्, हितं स्वहितं (पुरोहितं) वसिष्ठं प्रति ऊचे ॥ ४७ ॥

**(सं.चं.)** निमित्तानि शुभाशुभशंसीनि चिह्नानि । पदव्यामध्वनि । 'अयनं पदवी मार्गः' इत्यभिधानम् । हितं पुरोहितमूचे विपदाशङ्की हि इति शक्यं छेत्तुम् । अथापि पादादौ चवैतुहयो न प्रयोक्तव्या इति कविसमयः इति न तथा व्याख्यातम् । शास्त्रे तु हेः पादादित्वमपि न दोषाय ॥ ४७ ॥

**शकुनानामयं शब्दश्चित्तं दारयतीव मे ।**
**प्रादक्षिण्येन कल्याणं शंसन्तीव[3] मृगाः कथम्[4] ॥ ४८ ॥**

---

१. **'स्वपुरीं ययौ'**
२. **'नृपाधिपः'** इति वि.ती. पाठ इति भाति ।
३. **'शंसन्तीमे मृगाः'**
४. **'शकुनापशकुनयोः किं फलमिति तात्पर्यम्'** इति का.श्री. ।

**(भा.दी.) शकुनेति** । शकुनानां पक्षिणाम् । 'पक्षी शकुन्तशकुनद्विजाः' इत्यमरः । अयं श्रूयमाणः शब्दः मे चित्तं मनस्तत् दारयतीव । दॄ विदारणे लट् । प्रतियाता मृगाः एणाः प्रादक्षिण्यं प्रदक्षिणीकरणं तेन कल्याणं शुभं तत् शंसन्तीव सूचयन्तीव । शंस स्तुतौ लट् । प्रतीयन्ते । अनयोः फलं कथं इति मुनिं वसिष्ठं ऊच इति सम्बन्धः ॥ ४८ ॥

**(सं.चं.)** शकुनानां पक्षिणामशुभसूचकोऽयं शब्दः वाशितम् । 'पत्री शकुन्तिः शकुनः शकुन्तः' इति च । प्रादक्षिण्येन चरन्तो मृगाः शुभं सूचयन्तीव । तदुभयमेकत्र कथम्? ॥ ४८ ॥

**वाणीमाकर्ण्य भूपस्य [1]वसिष्ठोऽविस्मितोऽब्रवीत्[2] ।**
**अस्ति नो भयमासन्नं शान्तिश्चास्य भवेदिति ॥ ४९ ॥**

**(भा.दी.)** वाणीमिति । वसिष्ठः भूपस्य दशरथस्य वाणीं वाचं आकर्ण्य विस्मितः सन्, नः अस्माकं आसन्नं समीपस्थं भयं अस्ति, अस्य सम्प्राप्तस्य भयस्य शान्तिः शमनं च भवेत् इति अब्रवीत् ॥४९॥

**(सं.चं.)** आसन्नमनिष्टं सुखान्तं भविष्यतीति जानन्नविस्मितः। भयमासन्नम्। तेन शकुना विकृतं वाश्यन्ते । भयस्य शान्तिः सुखान्तता च भवेत् । तेन मृगाः प्रदक्षिणं धावन्ति ॥ ४९ ॥

**ततः प्रादुरभूद् भूयस्तेजसां पुञ्जमद्भुतम् ।**
**प्रळयानलसङ्काशं[3] तद्[4] दृष्ट्वोचुर्म्महर्षयः ॥ ५० ॥**

**(भा.दी.) तत** इति । ततः निमित्तदर्शनानन्तरम् । भूयः बहुलम्, 'बहुलं पुरु भूयिष्ठं स्फारं भूयश्च भूरि च' इत्यमरः । अद्भुतं आश्चर्यभूतम्, विलयस्य प्रळयकालस्यानलोऽग्निस्तस्य सङ्काश इव सङ्काशः प्रकाशो यस्य तत्तथोक्तम् । विलयानलस्य सङ्काशं समानमिति वा । 'निभसङ्काशनीकाश–' इत्यमरः । तेजसां पुञ्जं समूहः प्रादुरभूत् प्रादुर्बभूव । भू सत्तायां लुङ् । महान्तश्च ते ऋषयश्च ते वसिष्ठादयः तं परशुरामं दृष्ट्वा ऊचुः परस्परमवदन् । वच परिभाषणे लिट् ॥ ५० ॥

**(सं.चं.)** भूयः महत्तरम् । प्रळयानलस्य सङ्काशं सदृशम् । तत् पुरः स्थितं तेजसां पुञ्जम् ॥ ५० ॥

---

१. **'वसिष्ठो नृपमब्रवीत्'**

२. **'वसिष्ठः विस्मितः अब्रवीत्'** इति वि.ती. प्रतृण्णम् । का.श्री टीकायामपि तथा–**'विस्मितः विशेषस्मितयुक्तः सन्'** इति ।

३. **'विलयानलसङ्काशम्'** इति.वि.ती. पाठः ।

४. **'तं दृष्ट्वोचु–'** इति वि.ती.पाठः । **'तत् तेजःपुञ्जं दृष्ट्वा'** इति का.श्री.

**त्रिस्सप्तकृत्वश्चक्रे[१] यः क्षमामक्षत्रियामिमाम्[२] ।**
**स एष भगवान् रामः कस्माज्जाज्वल्यतेऽधुना ॥ ५१ ॥**

**(भा.दी.) त्रिरिति** । भगवान् यः परशुरामः इमां क्षमां भूमिं त्रिःसप्तवारं त्रिस्सप्तकृत्वः एकविंशतिवारमित्यर्थः । निर्गताः क्षत्रियाः यस्याः सा तथा तां चक्रे । सः एतादृशमहिमोपेतः एषः अधुना कस्मात् किङ्कारणं जाज्वल्यते पुनःपुनः अतिशयेन वा ज्वलति । ज्वल दीप्तौ लट् । 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' (अ.सू.३.१.२२) इति यङ् ॥ ५१ ॥

**(सं.चं.)** अक्षत्रियां क्षत्रियरहिताम् । निःक्षत्रियामिति पाठे निष्क्रान्ता क्षत्रियेभ्यो निःक्षत्रिया ॥ ५१ ॥

**कठोरेण कुठारेण वैकुण्ठः कण्ठसङ्गिना ।**
**चापेन[३] चाग्निवर्ण्णेन किं चिकीर्षुरिहाऽगतः ॥ ५२ ॥**

**(भा.दी.) कठोरेति** । विकुण्ठाया अपत्यं पुमान् वैकुण्ठः श्रीहरिः, श्रीनारायणावतारात्मक इत्यर्थः, परशुरामः कठोरः कठिनस्तेन कुठारेण परशुना, कण्ठस्य सङ्गः सम्बन्धोऽस्यास्तीति तथोक्तः तेन, स्कन्धप्रदेशनिक्षिप्तेनेत्यर्थः, अग्नेर्वर्ण इव वर्णो यस्य स तथा तेन चापेन च, किं कर्म चिकीर्षुः कर्तुमिच्छावान् इह अत्र आगतः ॥ ५२ ॥

**(सं.चं.)** कठोरेण शत्रुदमने निर्दयेन । वैकुण्ठो नारायणात्मा परशुरामः ॥ ५२ ॥

**रामाग्निर्न्न दहेत् कच्चित् क्षत्रगोत्रतृणं पुनः ।**
**कच्चित् त्रिलोकीं न दहेदिति तं मुनयोऽनमन्[४] ॥ ५३ ॥**

**(भा.दी.) रामेति** । रामाग्निः परशुरामाख्याग्निः कच्चित् कर्हिचित् क्षत्राणां क्षत्रजातीनां गोत्रं कुलं तदेव तृणं न दहेत् न भस्मीकुर्यात्? दह भस्मीकरणे लिङ् । कच्चित् त्रिलोकीं न दहेत् इति आलपन्तः परस्परं सम्भाषणं कुर्वन्तः सन्तः (तं) परशुरामं मुनयः वसिष्ठाद्याः अनमन् नमश्चक्रुः । णमु प्रह्वत्वे शब्दे च लङ् ॥५३॥

**(सं.चं.)** 'कच्चित् स्यात् प्रश्नकामयोः' । इति शङ्कितास्तमनमन् ॥ ५३ ॥

---

१. **'त्रिःसप्तवारं चक्रे'** इति वि.ती.पाठः । २. **'क्षमां निःक्षत्रियामिमाम्'** इति च ।

३. **'बाणेन चाग्नि–'** ४. **'मुनयोऽवदन्'**

**जामदग्न्य प्रसीदेति वसिष्ठाद्यैर्द्विजोत्तमैः ।**
**पूजितो राममासाद्य[1] रामो धीरमभाषत ॥ ५४ ॥**

**(भा.दी.) जामदग्न्येति** । वसिष्ठ आद्यो येषां ते तथा तैः द्विजोत्तमैः मुनिभिः । जमदग्नेरपत्यं पुमान् जामदग्न्यस्तत्सम्बुद्धिः हे जामदग्न्य परशुराम, प्रसीद प्रसन्नो भव । प्रपूर्वः षद्लृ विशरणगत्यवसादनेषु लोट् । इति पूजितः परशुरामः धीरं श्रीरामं आभाष्य सम्बोध्य अभाषत ॥ ५४ ॥

**(सं.चं.)** धीरं रामं दाशरथिमासाद्य रामो जामदग्न्यः धीरं यथा स्यात् तथाऽभाषत ॥ ५४ ॥

**चापरत्ने उभे राम लब्ध्वा हरिहरौ पुरा ।**
**जगत्पती जगत् ताभ्यां[2] जिग्यतुः ससुरासुरम् ॥ ५५ ॥**

**(भा.दी.)** किमभाषतेत्यत आह– **चापेति** । हे श्रीराम, जगतः पती स्वामिनौ हरिहरौ । उभे चापेषु रत्ने श्रेष्ठे लब्ध्वा ताभ्यां चापश्रेष्ठाभ्यां ससुरासुरं सुरासुरैः सहितं जगत् पुरा जिग्यतुः जितवन्तौ । जि जये लिट् ॥ ५५ ॥

**(सं.चं.)** जगत्पती हरिहरौ ताभ्यां चापरत्नाभ्यां जगज्जिग्यतुः ॥ ५५ ॥

**ओजोजिज्ञासया देवैः प्रार्थितौ प्रार्थितप्रदौ ।**
**देवौ युद्धाय सन्नद्धौ तस्थतुस्तौ धनुर्द्धरौ ॥ ५६ ॥**

**(भा.दी.) ओज** इति । देवैरिन्द्रादिभिः ओजसः हरिहरयोर्बलस्य जिज्ञासया ज्ञातुमिच्छया । 'ओजोऽवष्टम्भबलयोः' इति वैजयन्ती । प्रार्थितौ युद्धार्थमर्थितौ, प्रार्थितमभीष्टं प्रदत्त इति तथोक्तौ, धनुषी धारयत इति तथोक्तौ तौ देवौ युद्धं योधनं तस्मै सन्नद्धौ सन्तौ तस्थतुः । ष्ठा गतिनिवृत्तौ लिट् ॥ ५६ ॥

**(सं.चं.)** तयोः सर्वजयिनोः क ओजीयानिति जिज्ञासया । लोकानां जिज्ञापयिषयेति तु वास्तवम् । पराभिभवनशक्तिरोजः ॥ ५६ ॥

**अहङ्कारमयं शर्वं[3] हुङ्कारेणैव[4] केशवः ।**
**क्षणेन स्तम्भयामास गरुडः पन्नगं यथा ॥ ५७ ॥**

---

१. **'राममाभाष्य'** इति वि. ती. पाठः ।
२. **'जगत् जगत्पती ताभ्याम्'** इति, **'ताभ्यां जगत्प्रतीताभ्याम्'** इति च क्वचित् ।
३. **'अहङ्कारमयं रुद्रं हुङ्का–'**
४. **'हुङ्कारेणैव । न तु बाणमोचनेनेत्येवकारार्थः'** इति का.श्री. ।

**(भा.दी.) अहमि**ति । कश्च ईशश्च केशौ तौ वर्तयतीति केशवः श्रीहरिः, अहङ्कारेण प्रचुरोऽहङ्कारमयस्तम्, अहङ्कारतत्वाभिमानित्वादहङ्कारात्मकमिति वा, तं शर्वं रुद्रम्, हुङ्कारो हुङ्कृतिस्तेनैव, क्षणः क्षणकालस्तेन, गरुडः पन्नगः सर्पस्तं यथा तथा स्तम्भयामास स्तम्भितवान् । स्तम्भु रोधने[१] लिट् ।। ५७ ।।

**(सं.चं.)** अयं केशवः । हेतुगर्भं विशेषणम् । अहङ्कारमयं तन्मानिनं शर्वम् । अहङ्कारमयमहङ्कारात्मकं शर्वमिति वा ।। ५७ ।।

**विजिष्णुं[२] विष्णुममरा ब्रह्माद्यास्तमथास्तुवन् ।**
**विश्वं यन्नियतं तस्य नेदं चित्रं हरेरिति ।। ५८ ।।**

**(भा.दी.) विजिष्णुमि**ति । अथ हरस्य पराजयानन्तरम्, ब्रह्मा आद्यो येषां ते तथा अमराः, विशेषेण जेतुं शीलमस्यास्तीति विजिष्णुस्तम्, विश्वं वेवेष्टि नियमार्थं विशतीति (वा) विष्णुः श्रीहरिस्तम्, विश्वं रमाब्रह्मादिसमस्तं जगत्, येन नियतं यन्नियतम्, यत्प्रेरितमित्यर्थः, तस्य हरेः इदं हरस्तम्भनं चित्रं न इति अस्तुवन् । ष्टुञ् स्तुतौ लङ् ।। ५८ ।।

**(सं.चं.)** विजिष्णुं विजयशीलम् । इत्यस्तुवन् ।। ५८ ।।

**भवता ननु तद् भग्नं शङ्करस्य शरासनम् ।**
**तेन ते वितता कीर्त्ती रामोऽद्वन्द्वः पुमानिति ।। ५९ ।।**

**(भा.दी.)** स्वोक्तेतिहासस्य प्रकृतोपयोगं दर्शयति– **भवते**ति । हे श्रीराम, भवता शङ्करस्य तत् जनकसम्बन्धि जनकाय दत्तं शरासनं धनुः सीतास्वयम्बरे भग्नं ननु । तेन हरचापभङ्गेन, श्रीरामः न विद्यते द्वन्द्वः प्रतिवीरो[३] यस्य स तथा, असदृश इत्यर्थः, पुमान् पुरुषः इति ते तव कीर्तिः वितता विस्तृता अभूत् ।। ५९ ।।

**(सं.चं.)** शङ्करशरासनभञ्जनमात्रेणाद्वन्द्व इति कीर्तिर्वितता ।। ५९–६० ।।

**इदं तद् वैष्णवं चापं[४] राघवाऽरोपयेर्य्यदि[५] ।**
**मम तुल्यबलो वीरः परमः पुरुषो भवान् ।। ६० ।।**

---

१. सौत्रोऽयं धातुः (अ.सू.३.१.८२) । अर्वाचीनास्तु **'ष्टभि प्रतिबन्धे'** इति धातुना रूपं निष्पादयन्ति । २. **'विजिष्णुं जिष्णु–'**
३. **'प्रतिभटो–'** ४. **'इमं च वैष्णवं चापम्'** ५. **'–रोपयेद् यदि'**

**(भा.दी.)** स्वस्य श्रीरामस्य च विष्ण्ववतारत्वं सन्दिहाना (ये) सन्तस्तेषां संशयं च्छेतुमाह– **इदमि**ति । हे राघव, यदि तत् विष्णुना युद्धसमये धृतम्, इदं इदानीं मद्धस्तगतं विष्णोः सम्बन्धि वैष्णवं चापं आरोपयेः सज्यं करोषि । आङ्पूर्वः युप-रुप-लुप विमोहने[1] लिङ् । तर्हि मम तुल्यं समानं बलं यस्य स तथा वीरः भवान् परमः सर्वोत्तमः पुरुषः पूर्णषड्गुणः श्रीहरिः ॥ ६० ॥

**इति गम्भीरवाचं तं भार्ग्गवं प्रेक्ष्य भूपतिः ।**
**सबाष्पगद्गदो दीनः प्रणिपत्येदमब्रवीत् ॥ ६१ ॥**

**(भा.दी.)** **इती**ति । भूपतिः दशरथः इति गम्भीरा वाग् यस्य स तथा तम्, भृगुगोत्रभवो भार्गवस्तं परशुरामं प्रेक्ष्य बाष्पः अश्रु स च गद्गदं स्खलद्वचनं तच्च ताभ्यां सहितः सबाष्पगद्गदः सन्, दीनः खिन्नः सन्, प्रणिपत्य इदं वचनं अब्रवीत् ॥ ६१ ॥

**(सं.चं.)** गम्भीरा अनूह्यान्तरङ्गा वाक् । दीनो भीतः ॥ ६१ ॥

**अरागद्वेषदोषो हि देवो नारायणो भवान् ।**
**रेणुकायां मुनेर्ज्जातो भूभारपरिभूतये ॥ ६२ ॥**

**(भा.दी.)** **अरागे**ति । रागश्च द्वेषश्च रागद्वेषौ तौ दोषौ न विद्येते यस्य स तथोक्तः, देवः नारायणः भवान्, भुवो यो भारस्तस्य परिभूतिः परिहारस्तस्यै, मुनेः जमदग्निमुनीश्वरात् रेणुकायां रेणुकादेव्यां जातः, प्रादुर्भूतो हि ॥ ६२ ॥

**(सं.चं.)** परिभूतये परिभवाय परिहाराय ॥ ६२ ॥

**भक्तवत्सल भक्ताय मह्यं प्रवयसे प्रभो ।**
**न्यस्तशस्त्रेण भवता पुत्रभिक्षा प्रदीयताम् ॥ ६३ ॥**

**(भा.दी.)** एवं स्तुत्वा स्वाभीष्टं प्रार्थयते– **भक्ते**ति । भक्तेषु वत्सल स्निग्ध, हे प्रभो श्रीपरशुराम, न्यस्तं शस्त्रं धनुर्येन स तथा तेन भवता, [2]प्रकृष्टं बहु वयो यस्य स तथा तस्मै वृद्धायेत्यर्थः, भक्ताय मह्यं पुत्रा एव भिक्षा अन्नम्, 'दीदिविरन्नं तथोदनं भिक्षा' इति हलायुधः, प्रदीयताम् ॥ ६३ ॥

---

१. वैयाकरणास्तु रुहधातोः णिचि **'रुहः पोऽन्यतरस्याम्'** (अ.सू.७.३.४३) इति पकारादेशेन रूपं निष्पादयन्ति । रुपधातोरुपरिकरणार्थकत्वं वैयाकरणा नानुमन्यन्ते । **'रूप उपरिभावे'** इति कश्चनापूर्वो धातुः भगवत्पादेनोल्लिखितः । **'रुप उपरिभावे'** इत्यपि पाठः । तदानुगुण्याय टीकाकारैरेवं व्याख्यातमिति भाति ।

२. **'प्रगतं वयो यस्य स प्रवयाः'** इति का.श्री. ।

**(सं.चं.)** स्वयं न्यस्तशस्त्रो भवान् । तन्नोचितं पुनः शस्त्रग्रहणम् । भक्तवत्सलो भवान् । तन्न युक्तं भक्तपीडनम् । तत्रापि प्रगतवयसो भक्तस्य । 'प्रवयाः स्थविरो वृद्धः' इति च । तेन पुत्ररूपा भिक्षा याचितोऽर्थः प्रदीयताम् । प्रीत्या करुणया वा दानं प्रदानम् ॥ ६३ ॥

**प्रयाचमानमेवं तं प्रोवाच भृगुनन्दनः ।**
**पुत्रास्त्रयस्ते रामो मे प्रतिवीरो भवेदिति ॥ ६४ ॥**

**(भा.दी.)** **प्रे**ति । भृगून् भृगुगोत्रभवान् नन्दयतीति भृगुनन्दनः परशुरामः । एवं प्रयाचमानं तं दशरथं प्रति । ते तुभ्यं त्रयः पुत्राः लक्ष्मणादयः दत्ता इति शेषः । श्रीरामः मे मम प्रतिवीरः प्रतिभटः भवेत् इति प्रोवाच ॥ ६४ ॥

**(सं.चं.)** प्रश्रयेण याचमानम् ॥ ६४–५ ॥

**राम राम गृहाणेति रामो रामेण चोदितः ।**
**ब्रह्मन् स्यादेवमित्युक्त्वा[1] चापं जग्राह सस्मितः[2] ॥ ६५ ॥**

**(भा.दी.)** **रामे**ति । हे राम, हे राम, चापं मया दीयमानं धनुस्तत्, गृहाण । ग्रह उपादाने लोट् । इति रामेण परशुरामेण चोदितः प्रेरितः श्रीरामः । हे ब्रह्मन् ब्राह्मण, एवं त्वदुक्तरीत्या स्यात् भवतु । अस्तेर्लिङ् । इति उक्त्वा सस्मितः समन्दहासः सन् चापं परशुरामधनुस्तत् जग्राह ॥ ६५ ॥

**सज्योतिर्म्मण्डलं चापं सज्यं कृत्वा हसन्नयम् ।**
**राघवो लाघवेनैव क्षणाद् बाणं च सन्दधे[3] ॥ ६६ ॥**

**(भा.दी.)** **सज्योति**रिति । अयं राघवः श्रीरामः । ज्योतिषां तेजसां मण्डलं समूहस्तेन सहितं सज्योतिर्मण्डलं तत् चापम्, लाघवमनायासस्तेनैव, क्षणः क्षणकालस्तस्मात्, ज्यया धनुस्तन्तुना सहितं सज्यं तत्, कृत्वा हसन् मन्दहासं कुर्वन् सन्, बाणयति विरावयति शत्रुमिति बाणः शरस्तम्[4], सन्दधे सन्धितवान्[5] । डु धाञ् धारणपोषणयोर्लिट् ॥ ६६ ॥

---

१. **'स्याद् भार्गवेत्युक्त्वा'** २. **'सुस्मितः'** ३. **'क्षणाद् बाणेन सन्दधे'**
४. **'शरस्तेन'** ५. **'धि धारणे'** इत्यस्येदं रूपं सन्धितवानिति ।

**(सं.चं.)** लाघवेनैव, शस्त्राभ्यासपाटवेन अणुतरप्रयत्नेन सन्धाने क्षिप्रता लाघवम् । क्षणात् क्षिप्रम् बाणं धनुषि सन्दधे च ॥ ६६ ॥

**देवोपदेवमुनयस्तयोराश्चर्य्यचर्य्ययोः[1] ।**
**क्रीडां दिदृक्षवः प्राप्ता अलश्चक्रुर्नभस्तळम् ॥ ६७ ॥**

**(भा.दी.) देवे**ति । आश्चर्यं वीर्यं बलं ययोस्तौ तथोक्तौ तयोः । तयोः भार्गवराघवयोः क्रीडां लीलां दिदृक्षवः द्रष्टुकामाः, देवा ब्रह्मादयस्ते च उपदेवा गन्धर्वादयस्ते च मुनयश्च ते प्राप्ताः सन्तः नभसः तळं प्रदेशस्तत् अलश्चक्रुः अलङ्कृतवन्तः ॥ ६७ ॥

**(सं.चं.)** परस्परं भिन्नयोरिव, विरुध्यमानयोरिव आश्चर्या चर्या ययोः । उपदेवा गन्धर्वादयः ॥ ६७ ॥

**परब्रह्मस्वरूपत्वान्न शरेणेश शीर्य्यसे ।**
**इत्युक्त्वाऽऽकृष्टबाणं तं राघवं भार्ग्गवोऽब्रवीत् ॥ ६८ ॥**

**(भा.दी.) परे**ति । (हे ईश), परं परिपूर्णं यद्ब्रह्म विज्ञाप्यं[2] तस्य स्वरूपं तस्य भावस्तत्त्वं तस्मात् । शृणातीति शरस्तेन न शीर्यसे न नश्यसि । शृ हिंसायां लट् । इति उक्त्वा, आकृष्टो बाणो येन तथा तम्, तं श्रीरामं राघवं प्रति भार्गवः रामः अब्रवीत् । ब्रूञ्धातोर्लङ् ॥ ६८ ॥

**(सं.चं.)** हे ईश भार्गव । न शीर्यसे । तस्मादनेन बाणेन किं करणीयमिति ब्रूहीति । भार्गवमुक्त्वा ॥६८॥

**कारणान्तरतो राम स्वेच्छयाऽन्तः कृतं मया ।**
**तपोमयं लोकमयं महेष्वा तं[3] हरासुरम् ॥ ६९ ॥**

**(भा.दी.) कारणे**ति । हे श्रीराम, अन्यत्कारणं कारणान्तरं तस्मादिति ततः । कारणान्तरं च विष्णुतनुप्रवेश एव मोक्ष इति निश्चित्य अतुलनामकदैत्येन तदर्थं ब्रह्माणं प्रति तपसि कृते सति यावद् विष्णोः पराजयो न स्यात् तावत्पर्यन्तं तत्र तिष्ठेति वर इति भावः । मया स्वेच्छया शरीरान्तः कृतं स्थापितम् । तपसा प्रधानस्तपोमयस्तं बहुक्रूरतपोयुक्तमित्यर्थः । लोके व्याप्तो लोकमयस्तम् । तपःसन्तुष्टाद् ब्रह्मणो वराल्लोक-

१. **'–राश्चर्यवीर्ययोः'** इति वि.ती. पाठः । २. नेदमत्र सङ्गतम् । **'विष्णवाख्यम्'** इति पाठः स्यात् ।

३. **'महेष्वासम्'** इति वि.ती.पाठ इति भाति । का.श्री टीकायामपि तथा । **'महेष्वा तं हनासुरम्'** इति क्वचित् । **'महेष्वा महाबाणेन'** इति वि.भू. ।

व्याप्तमित्यर्थः । महदिष्वासं धनुर्यस्य स तथा तम्[१] । असुरं अतुलनामकमसुरं अनेन महता बाणेन हर संहर । हृञ् हरणे लोट् ॥ ६९ ॥

**(सं.चं.)** अतुलो नाम महासुर आस । स तपसा तुष्टस्य ब्रह्मणो वरेण लोकान् व्याप । तेन तपोमयो लोकमय उच्यते । स विष्णुतनुप्रवेशनं च वरं ययाचे तेनावध्यः स्यामिति । अथ ब्रह्मा तमाह–'यदा हरिर्जीयते तदा वध्यसे' इति । तेन कारणेन स्वेच्छया स्वान्तःकृतम् । तमसुरं महत्या इष्वा शरेण हर संहर ॥ ६९–७० ॥

**वदत्येवं जामदग्न्ये स शरो राघवच्युतः ।**
**असुरं तरसा भस्मीचकारातुलनामकम् ॥ ७० ॥**

**(भा.दी.)** **वदती**ति । जामदग्न्ये जमदग्निपुत्रे परशुरामे एवं वदति सति राघवेण च्युतः मुक्तः सः शरः अतुल इति नाम यस्य स तथा तमसुरं तरसा शीघ्रं भस्मीचकार ॥ ७० ॥

**भार्ग्गवो भगवानूचे राम दाशरथेऽधुना ।**
**साक्षान्नारायणोऽसीति सम्यग् ज्ञातं जनैरिति ॥ ७१ ॥**

**(भा.दी.)** यत्प्रकटनार्थं स्वयमागतस्तदाह– **भार्गव** इति । भार्गवः रामः । दाशरथे दशरथपुत्र । 'अत इञ्' (अ.सू.४.१.९५) इत्यपत्यार्थे इञ् । श्रीराम, त्वम् अधुना साक्षात् प्रत्यक्षं भगवान् श्रीनारायणः असि इति जनैः सम्यक् निस्संशयं ज्ञातम् । इति ऊचे ॥ ७१ ॥

**(सं.चं.)** इति भगवान् भार्गव ऊचे ॥ ७१ ॥

**प्रदक्षिणीकृत्य मुदा दक्षिणं लक्ष्मणाग्रजम् ।**
**तेनैकीभूय भूयश्च माहेन्द्रं भार्ग्गवो ययौ ॥ ७२ ॥**

**(भा.दी.)** **प्रदक्षिणी**ति । भार्गवः रामः दक्षिणं समर्थं लक्ष्मणाग्रजं श्रीरामं मुदा प्रीत्या प्रदक्षिणीकृत्य तेन श्रीरामेण भूयश्च पुनश्च, लोकदृष्ट्या चेत्यर्थः, एकीभूय श्रीरामेणैक्यं सम्प्राप्य, माहेन्द्रो माहेन्द्रपर्वतस्तं प्रति ययौ । या प्रापणे लिट् ॥ ७२ ॥

**(सं.चं.)** 'सरळो दक्षिणो ज्ञेयः' इति च । प्रसङ्गनिर्वहणकुशलो कार्यदक्षो दक्षिणः । माहेन्द्रं पर्वतम् ॥७२॥

---

१. **'तथा सन्'** इति पाठः सम्भाव्यते । तेन **'महेष्वासो हरासुरम्'** इति वि.ती.पाठः स्यात् ।

**लीलेयं रामयोः साक्षाद् विश्वरूपस्वरूपयोः ।**
**न हि भेदोऽनयोः कश्चिदित्युक्त्वा स्वर्य्ययुः सुराः ॥ ७३ ॥**

**(भा.दी.)** **लीले**ति । सुराः, (साक्षात्) विश्वं पूर्णं रूपं यस्य स विश्वरूपः श्रीहरिस्तस्य स्वरूपे अवतार-रूपे तयोः, अनयोः श्रीरामयोः भार्गवराघवरामयोः हि यस्मात् भेदः (कश्चित्) स्वतोऽन्यतो वा प्रयुक्तः नास्ति तस्मात् इयं पुरुषान्तरेणेव स्वस्वरूपेण सम्भाषणादिः लीला क्रीडा । इति उक्त्वा, स्वः स्वर्गम् । 'स्वरव्ययं स्वर्गनाक–' इत्यमरः । ययुः ॥ ७३ ॥

**(सं.चं.)** विश्वरूपो नारायणः । विश्वं पूर्णमस्य रूपमिति । विश्वं रूपयतीति । विश्वमस्य रूपं प्रतिमेति च । साक्षादनुपचारतः ॥ ७३ ॥

**शुचा नतं[१] मुखं राज्ञः प्रोत्फुल्लं[२] रामतेजसा ।**
**नैशाम्बुना शिथिलितं भानुभासेव पङ्कजम् ॥ ७४ ॥**

**(भा.दी.)** **शुचे**ति । शुक् शोकस्तया नतं अवनतम्, राज्ञः दशरथस्य मुखम्, निशि विद्यमानं नैशं तच्च तत् अम्बु च तेन, हिमजलेनेत्यर्थः, शिथिलितं मुकुळितं यत् पङ्कजम्, भानोर्भास्तयेव, श्रीरामस्य तेजः सामर्थ्यं तेन प्रोत्फुल्लं सम्यक् विकसितं अभूत् ॥ ७४ ॥

**(सं.चं.)** शुचा शोकेन नतमवनतं हतप्रभम् । शिथिलितं श्लथितं कळाहीनम् । प्रोत्फुल्लमिति । 'ञिफला विशरणे' इत्यस्य क्तान्तं रूपं फुल्लमिति । तथाहि पाणिनिः–'अनुपसर्गात् फुल्लक्षीबकृषोल्लाघाः' (अ.सू.८.२.५५) इति । 'ञिफला विशवण इत्येतस्माद् धातोरुत्तरस्य निष्ठातकारस्य लकारो निपात्यते' इति वामनः । नन्वेतदनुपसर्गादित्युक्तम् । आह च वामनः–'अनुपसर्गादिति किम्? प्रफुल्लाः सुमनसः' इति । अत्र तु प्रेति उदिति द्वावुपसर्गौ भवतः । तस्मात् 'प्रोत्फुल्लं रामतेजसा' इति न वक्तव्यम् । अयि व्याकरणरूप, स्मरोत्तरं वार्तिकम्–'उत्फुल्लसम्फुल्लयोरिति वक्तव्यम्' इति । तस्मात् उत्सम्भ्यां सोपसर्गादपि लकारो निपततीत्यायातम्– उत्फुल्लमिति । अथ पुनः प्रेत्युपसर्गान्तरयोगे पूर्वं निपतितो लकार उपसर्गान्तरयोगमसहमानः किं पलायते? निपतितं निपतितमेव । न परापतति । तस्माद् युक्तं प्रोत्फुल्लमिति । वस्तुतस्तु प्रफुल्लमिति च बहुप्रयोगदर्शनात् 'प्रफुल्लस्येति च वक्तव्यम्' इति वार्तिके पूरणीयम् ॥ ७४–५ ॥

**वसिष्ठाद्यैर्म्मुनिश्रेष्ठैः स राजा परिवारितः ।**
**सनन्दनो महानन्दः पुरीं प्रायाद् बलैर्य्युतः[३] ॥ ७५ ॥**

---

१. **'शुचाऽऽहतम्'** इति **'शुचा हतम्'** इति च क्वचित् । २. **'प्रफुल्लम्'** ३. **'बलैर्वृतः'**

**(भा.दी.) वसिष्ठेति** । वसिष्ठ आद्यो येषां ते तथा तैः मुनिश्रेष्ठैः परिवारितः, नन्दनैः पुत्रैः सहितः सनन्दनः, महानानन्दो यस्य स तथा, बलानि सैन्यानि तैः युतः युक्तः, सः राजा दशरथः, पुरीं अयोध्यां प्रति प्रायात् । यातेर्लङ् ॥ ७५ ॥

**अयोद्ध्यामाप[1] नगरीमयोद्ध्यामरिभिर्नृपः ।**
**सिक्तां पुष्पाक्षताकीर्ण्णां पताकाकेतुमालिनीम् ॥ ७६ ॥**

**(भा.दी.) अयोद्ध्यामिति** । नृपः अरिभिः अयोध्यां योद्धुमशक्याम्, जलादिना सिक्ताम्, पुष्पाणि च अक्षताश्च तैराकीर्णाम्, पताकाश्च केतवो ध्वजास्ते च तेषां माला परम्परा सा अस्यामस्तीति तथोक्ता ताम्, व्रीह्यादित्वादिनिः, अयोद्ध्यां नाम अयोद्ध्येति प्रसिद्धां नगरीं प्रायात् ॥ ७६ ॥

**(सं.चं.)** अयोध्यामरिभिर्योद्धुं युध्वा जेतुमशक्यामयोध्यां नाम नगरीम् । सिक्तां वारिसेकेन शोधितां शीतलां च । सुगन्धिजलसेकेन परिमळितां च । पताका महती, केतवोऽणवः । केचिद् विपर्ययेणाऽहुः ॥ ७६ ॥

**पूर्ण्णैः सुवर्ण्णकलशैर्न्नानावाद्यैश्च वादितैः ।**
**नरा नार्य्यश्चाभिययुर्वधूवरसमागमे ॥ ७७ ॥**

**(भा.दी.) पूर्णैरिति** । अयोद्ध्यायां विद्यमानाः नरा नार्यश्च पूर्णैः रत्नादिपूर्णैः सुवर्णमया ये कलशास्तैः सह वादितैः वाद्यमानैर्नानाविधानि यानि वाद्यानि तैश्च सह वधूश्च वरश्च तयोः समागमः समागमनं तस्मिन्, श्रीसीतारामयोः समागमसमय इत्यर्थः, अभिययुः अभिमुखतया जग्मुः ॥ ७७ ॥

**(सं.चं.)** जलपूर्णैः सुवर्णकलशैः सह नरा नार्यश्च ॥ ७७–९ ॥

**विवेशान्तःपुरं राजा पुरन्दरपुरोपमम् ।**
**मङ्गल्यसूक्तं[2] शंसद्भिर्ब्राह्मणैर्ब्राह्मणप्रियः ॥ ७८ ॥**

**(भा.दी.) विवेशेति** । ब्राह्मणानां प्रियः प्रीतिविषयः राजा दशरथः, मङ्गल्यं (मङ्गल)करं सूक्तं मङ्गल्यसूक्तं श्रीसूक्तादि तत्, शंसद्भिः वदद्भिः ब्राह्मणैः सह, पुरन्दरस्य यत्पुरं अमरावती, तस्य उपमा यस्य तत्तथा तत्, अन्तःपुरं विवेश । विश प्रवेशने लिट् ॥ ७८ ॥

---

१. **'अयोध्यां नाम'** इति वि.ती.पाठः । २. **'माङ्गल्यसूक्तम्'**

**रमणा रमणीभिस्ते लक्ष्मणाद्याः सुलक्षणाः ।**
**विरेजिरे त्रयस्तत्र शिखाभिरिव पावकाः ॥ ७९ ॥**

**(भा.दी.) रमणा** इति । तत्र अन्तःपुरे लक्ष्मण आद्यो येषां ते तथा । शोभनानि लक्षणानि अङ्गसम्पदो येषां ते तथा । त्रयः ते रमणाः भर्तारः । 'रमणः प्राणाधिनाथोऽनुगः' इति हलः । रमणीभिः भार्याभिः शिखाभिः ज्वालाभिः पावका इव विरेजिरे अशोभन्त । राजृ दीप्तौ लिट् ॥ ७९ ॥

**रेमेऽथ[1] रामो रमणीमवाप्य**
**सीतां जगन्मङ्गलमङ्गलात्मा[2] ।**
**श्रीरेव सीता गुणसम्पदेति**
**सत्यौपचारी न हि यत्र वाणी ॥ ८० ॥**

**(भा.दी.) रेम** इति । अथ अन्तःपुरप्रवेशानन्तरं जगतां मङ्गलं यस्मात् स जगन्मङ्गलः, मङ्गलः शोभनः आत्मा स्वरूपं यस्य स तथा, अनन्तरं जगन्मङ्गलश्चासौ मङ्गलात्मा चेति कर्मधारयः । यद्वा जगति यानि मङ्गलानि वस्तूनि तेभ्यो मङ्गल आत्मा स्वरूपं यस्येति 'मङ्गलानां च मङ्गलम्' इत्युक्तः श्रीरामः । सीता गुणा एव सम्पत्तया श्रीरेव महालक्ष्मीरेव इति वाणी लोकसिद्धा वार्ता यत्र यस्यां सीतायां सत्यैव यथार्थैव, (औपचारी) उपचारेण गौणभावं प्राप्ता औपचारिकी नहीति । तां तादृशीं सीतां सीताख्यां रमणीं भार्यां अवाप्य रेमे ॥ ८० ॥

**(सं.चं.)** मङ्गलानां च मङ्गल आत्मा स्वरूपमस्य । गुणसम्पदा सीता साक्षात् श्रीरेवेति जनवाणी सत्यैवाऽस । न श्रीरिवेत्यर्थे औपचारिकी । नहि सादृश्यादभेदोपचारोऽयं सिंहो माणवक इतिवत् । किन्त्वभेदवचनमेव । अजानन्त्याऽपि जनतया दैवादुदितम् । इन्द्रवज्रा छन्दः ॥ ८० ॥

**श्वेतद्वीपे यथाऽयं विहरति रमया राजमाने विमाने**
**श्रीमद्भोगीन्द्रभोगे गुणनिधिरधिकं भासमानेऽसमाने ।**

---

१. 'रेजेऽथ'

२. 'जगन्मङ्गलमङ्गलाङ्गीम्' । 'जगतो लोकस्य मङ्गलानि मङ्गलकराणि यानि कामधेनुकल्पवृक्षचिन्तामणिगङ्गादिवस्तूनि तेषां जगन्मङ्गलानां मङ्गलः मङ्गलकरः आत्मा स्वरूपं यस्य सः' इति का.श्री. ।

जम्बूद्वीपेऽत्र पुर्य्यां जनकतनयया राजयन्त्या[१] जयन्त्या
देव्या रामोऽथ रेमे[२] वृषभइव जगद् रञ्जयन्त्या जयन्त्या ॥ ८१ ॥

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे बालकाण्डेऽष्टमः सर्ग्गः ॥**

—०—

**(भा.दी.) श्वेते**ति । राम इति आत्मा स्वरूपं यस्य अयं श्रीरामात्मा[३] नारायणः श्वेताख्यो द्वीपः श्वेतद्वीपस्तस्मिन्, तत्रापि राजमानं प्रकाशमानं तस्मिन् विमाने दिव्यरत्नमण्डपाख्ये । अथ तत्रापि अधिकं यथा भवति तथा भासमाने शोभमाने, न विद्यते समानं सदृशं यस्य स तथा तस्मिन्, श्रीमान् यो भोगिनां सर्पाणामिन्द्रः शेषस्तस्य भोगः शरीरं तस्मिन् । 'अहेः शरीरं भोगः स्यात्' इति हलः । रमया लक्ष्म्या सह अधिकं यथा भवति तथा यथा विहरति, क्रीडां करोति, तथा अत्र भूमण्डले, तत्राऽपि जम्ब्वाख्यो यो द्वीपस्तस्मिन्, तत्रापि पुर्यां अयोद्ध्यापुर्याम्, गुणा निधीयन्तेऽत्रेति गुणनिधिः, सर्वगुणाश्रय इत्यर्थः, अयं श्रीरामः, राजयन्त्या शोभमानया, स्वार्थिको णिच्, जगत् रञ्जयन्त्या सन्तोषयन्त्या[४] जयन्त्या उत्कृष्टतया वर्तमानया जनकतनयया जनकसुतया देव्या सीतया, जयन्त्या जयन्तीनाम्नाऽवतीर्णया महालक्ष्म्या वृषभइव वृषभनाम्नाऽवतीर्णो हरिरिव रेम इत्यन्वयः ॥ ८१ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां बालकाण्डेऽष्टमः सर्गः ॥**

—०—

**(सं.चं.)** राजमाने विमाने । 'विमानो व्योमयाने च सार्वभौमगृहेऽपि च' इति मेदिनी । भोगीन्द्रस्य शेषस्य भोगे । 'अहेः शरीरं भोगः स्यात्' इत्यभिधानम् । यथा श्वेतद्वीपे तथा जम्बूद्वीपे । अत्र अयोध्यायाम् । जगद् राजयन्त्या प्रकाशयन्त्या जयन्त्या सर्वोत्कृष्टया । भर्तारं रञ्जयन्त्या जयन्त्याख्यया जायया वृषभदेवइव रामोऽपि रेमे । मरभनैर्यानां त्रयेण च स्रग्धरा ॥ ८१ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां बालकाण्डेऽष्टमसर्गविवरणम् ॥**

**इति बालकाण्डं समाप्तम् ॥**

[आदितः श्लोकाः– ३४१+८१=४२२]

---

१. **'रञ्जयन्त्या'** २. **'रामोऽभिरेमे'**

३. **'रामात्मा'** इति पदं मूले न पठ्यते । वि.ती.सम्मतो मूलपाठः कीदृश इति न ज्ञायते । **'रामात्माऽयं च रेमे'** इति स्यादपि । अथापि **'देव्या सीतया'** इति व्याख्यानं पुनः सन्देहं जनयति । ४. **'विकासयन्त्या'**



रामोऽखिलानन्दतनुः स एव
भीमोऽतिपापेषु दुरन्तवीर्य्यः ।
कामः स एवाजितकामिनीषु
सोमः स एवाऽऽत्मपदाश्रितेषु ॥

## प्रथमः सर्ग्गः

**रामे रमण्या सह पूर्ण्णरूपे प्राप्तोदये चन्द्रिकयेव चन्द्रे ।**
**समृद्धिपूरैः परिपूर्य्यमाणो रराज राजा सरितामिवेशः ॥ १ ॥**

**(भा.दी.)** अथ श्रीरामपितुर्दशरथस्यैश्वर्यातिशयं सदृष्टान्तं वर्णयति– **राम** इति । पूर्णं सर्वगुणपूर्णं रूपं यस्य स तथा तस्मिन् श्रीरामे, रमण्या भार्यया सीतया सह, चन्द्रिकया कौमुद्या सह चन्द्र इव, प्राप्तः उदयः ऐश्वर्याद्यभ्युदयो येन स तथा तस्मिन् सति, समृद्धय एव वित्ताद्यभिवृद्धय एव पूरा उदकाभिवृद्धय-स्तैः, परिपूर्यमाणः राजा दशरथः, सरितां नदीनां ईशः स्वामी समुद्र इव रराज । राजृ दीप्तौ लिट् । यथा चन्द्रोदयेन समुद्रोऽभिवर्धते तद्वदेव सीतारामयोः निवासनिमित्तेन, पूर्वापेक्षयाऽप्यतिशयेन सम्पदाद्यभिवृद्धयः सञ्जाता इति भावः ॥ १ ॥

**(सं.चं.)** पूर्णरूपे सम्पूर्णकले राकानिशाकरे प्राप्तोदये उदिते यथा तथा गुणपूर्णरूपे रामे प्राप्तोदये अभ्युदयं प्राप्ते । जलपूरैः सरितां पतिरिव सम्पत्समृद्धिभिर्दशरथो रराज ॥ १ ॥

**मातामहस्यौकसि कैकयस्य[१] शत्रुघ्नयुक्ते भरते चिराय ।**
**विद्यागणाभ्यासिनि तस्य वार्त्तां श्रुत्वा नरेन्द्रोऽधिकमाननन्द ॥ २ ॥**

**(भा.दी.) मातेति** । मातामहस्य मातुष्पितुः[२] कैकेयीपितुरित्यर्थः, केकयस्य केकयविषयाधिपतेः अश्वपति-नाम्नः[३] ओको मन्दिरं तस्मिन् । शत्रुघ्नयुक्ते भरते, चिरायेत्यव्ययम्, अतिचिरकाले, विद्यानां चतुःषष्टिकलाविद्यानां

---

१. **'केकयस्य'** इति वि.ती.पाठः स्यादिति भाति ।          २. **'मातृपितुः'**

३. **'कैकयस्य केकयविषयाधिपतेः युधाजिन्नामकस्य'** इति वि.भू.व्याख्यानं सम्पातायातम् । कैकेयीभ्राता मातुलो हि भरतस्य युधाजित् । तेन **'अश्वपतिनाम्नः'** इत्येव साधु ।

गणाः समूहास्तानभ्यसितुं शीलमस्यास्तीति तथा तस्मिन् सति । नरेन्द्रः दशरथः । तस्य भरतस्य वार्तां श्रुत्वा अधिकं यथा भवति तथा आननन्द तुतोष । नदि हर्षे लिट् ॥ २ ॥

**(सं.चं.)** 'गृहं सद्माऽश्रयश्चौकः' इति मङ्खः । तस्य शत्रुघ्नयुक्तस्य भरतस्य विद्याभ्यासवार्ताम् ॥ २ ॥

**सङ्कीर्त्तितै रामगुणैरगण्यैर्ज्जनैः सभावर्त्मगृहापणेषु ।**
**पूर्ण्णं विशालं विरराज राज्ञो हृन्मण्डलं विष्टपमण्डलं च ॥ ३ ॥**

**(भा.दी.) समि**ति । सभाः शालास्ताश्च वर्त्मानि मार्गास्तानि च गृहाणि च आपणाश्च तेषु जनैः (सं)-कीर्त्तितैः कथितैः, अगण्यैः श्रीरामस्य ये गुणास्तैः पूर्णं विशालं विस्तीर्णं राज्ञः दशरथस्य हृदो हृदयस्य मण्डलं प्रदेशः, विष्टपस्य लोकस्य मण्डलं च विरराज । राजृ दीप्तौ लिट् ॥ ३ ॥

**(सं.चं.)** 'सभा स्यात् परिषत् सदः' इत्यभिधानम् । गुणानुसन्धानेन पूर्णं भरितम्, हृन्मण्डलं च विष्टप-मण्डलं च । हृदयस्य वदान्यता गुणग्रहणशीलता च विशालता । देशतो विस्तृतिर्विष्टपमण्डलस्य ॥ ३ ॥

**सुमन्त्रपूर्वैरथ मन्त्रिमुख्यैः सम्मन्त्र्य सन्मन्त्ररतैश्च[1] विप्रैः ।**
**रामाभिषेकाय समाहरत् स[2] सामन्तवर्य्यान् प्रकृतीश्च सर्वाः ॥ ४ ॥**

**(भा.दी.) सुमन्त्रे**ति । अथ सः दशरथः श्रीरामस्य अभिषेको यौवराज्याभिषेकस्तस्मै । तादर्थ्ये चतुर्थी । सुमन्त्रः पूर्वो येषां ते तथा तैः मन्त्रिषु मुख्याः श्रेष्ठास्तैः, सम्मन्त्र्य आलोचयित्वा[3] । सन्तो ये मन्त्राः गायत्र्यादयस्तेषु रता आसक्तास्तैः विप्रैश्च सम्मन्त्र्य, सामन्तेषु मण्डलाधिपतिषु वर्यान् श्रेष्ठान्, सर्वाः प्रकृतीश्च–'अमात्या मन्त्रिणो दूताः श्रेणयश्च पुरोहिताः । पुरं जनपदं चेति सप्त प्रकृतयस्त्विमाः'[4] इति प्रसिद्धसप्तप्रकृतीश्च समाहरत् आह्वापयामास । हृञो लङ् ॥ ४ ॥

**(सं.चं.)** अथ रामेऽभ्युदिते सप्तविंशतिहायने । सामन्ता राज्यस्य समन्तात् विद्यमाना अधीननृपतयः । प्रकृतयः प्रधानाः पौरजनपदाः । समाहरत् राजसभायां समावेशयामास । समाह्वयदिति वा पाठः ॥ ४ ॥

१. **'सम्मन्त्रयन् मन्त्ररतैश्च'** इति, **'सम्मन्त्र्य सन्मन्त्रयुतैश्च'** इति च क्वचित् । २. **'समाह्वयत् स-'**

३. **'आलोच्य'** इति पर्याप्तम् । लिपिकृत्प्रमादः स्यात् ।

४. **'सप्त प्रणिधयः स्मृताः'** इति मूलपाठः । तेन प्रणिधिशब्दार्थोऽयम्, न प्रकृतिशब्दार्थः । **'प्रणिध्युपात्तामनुजानुवर्तितः'** (भाग.१.१०.४) इत्यत्र श्रीभागवतात्पर्योदाहृतं ब्राह्मवचनमिदम् । नात्रातीव सङ्गतम् । विद्याभूषणयतिः काशीश्रीनिवासाचार्यश्च एतमेव श्लोकमुज्ज्हतुः । समेऽपि पाठभ्रान्ताः । सप्त प्रकृतयश्चोक्ता अन्यत्र– **'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च'** इति । तस्मादत्र प्रकृतय इति पौरा एवोच्यन्ते ।

**दिवीव देवैः सह देवराजो व्योम्नीव ताराधिपतिः सतारः ।**
**सभातळे स्वैः परिवारवर्ग्गैः समाबभासे सहितो महीशः ॥ ५ ॥**

**(भा.दी.)** **दिवी**ति । महीशः राजा, द्यौः स्वर्गस्तस्यां देवैः सह देवराज इव इन्द्र इव, विशेषेण अवति रक्षत्यवकाशदानेनेति व्योम गगनं तस्मिन् [1]तारैर्नक्षत्रैः सहितः सतारः ताराधिपतिरिव चन्द्र इव, सभायास्तळं प्रदेशस्तस्मिन् स्वैः स्वकीयैः परिवाराणां अमात्यादीनां वर्गाः समूहास्तैः । सहितः सन् समाबभासे । भासृ दीप्तौ लिट् ॥ ५ ॥

**(सं.चं.)** समाहृतो बभासे ॥ ५ ॥

**उवाच वाचं नरदेवनाथो निगृह्य वेगं स्वमनोरथस्य[2] ।**
**सुतं युवानं युवराजमेनं कुर्म्मो मतं चेद् भवतां तदेवम्[3] ॥ ६ ॥**

**(भा.दी.)** **उवाचे**ति । नरदेवानां राज्ञां नाथः दशरथः । स्वस्य यो मनोरथः श्रीरामयौवराज्याभिषेकेच्छा तस्य । 'वाञ्छा लिप्सा मनोरथः' इत्यमरः । वेगः कदा नु भविष्यतीति प्रसरस्तम्, निगृह्य वशी परिहृत्य । वयं युवानं एनं सुतं श्रीरामं युवा चासौ राजा च युवराजस्तम्, श्वस्तनराजमित्यर्थः, कुर्मः, तत् श्रीरामस्य यौवराज्येऽभिषेकाख्यं कर्म चेद्यदि भवतां सर्वेषामपि मतं अभिमतं अनुकूलमित्यर्थः । तर्हि तत्कर्म एवं भवन्मतानुसारेण अस्तु । इति वाचमुवाचेत्यन्वयः । वचधातोर्लिट् । तदेति क्वचित्पाठः । तदा तर्हीत्यर्थः ॥ ६ ॥

**(सं.चं.)** स्वः स्वीयो यो मनोरथः सपदि रामाभिषेकः कर्तव्य इति तस्य वेगं भरम् । '**ಒತ್ತಡ**' इति भाषायाम् । निगृह्य अप्रकाश्य । जनानां मनोरथभरेणैवाभिषेकः सम्पन्न इति प्रचिख्यापयिषया । युवराजं शौवस्तिकं राजानम् ॥ ६ ॥

**रोमोद्गमोऽङ्गे प्रमदाश्रु नेत्रे रामश्च चित्तेऽञ्जलिरास मूर्ध्नि ।**
**मुखे विकासो वदने च वाणी तत् साधुसाध्वित्यखिलप्रजानाम् ॥ ७ ॥**

---

१. **'उडु-दृङ्मध्ययोरक्ष्णी'** इति वैजयन्तीवचनात् तार इत्यपि नक्षत्रवचनम् । **'ताराभिः नक्षत्रैः सहितः सतारः'** इति का.श्री. ।

२. **'स्वस्य मनोरथः, तस्य इदानीमेव रामाभिषेकः कर्तव्य इति वाञ्छाया वेगं रहः निगृह्य आच्छाद्य'** इति का.श्री. । **'तत् तर्हि एवं भवन्मतानुसारेण कुर्मः । वर्तमानसामीप्ये वर्तमानवद् वा'** (३.३.१३१) **इति भविष्यदर्थे लट्'** इति च ।

३. 'तदैवम्'

**(भा.दी.) रोमे**ति । अखिलाः समस्ता याः प्रजास्तासां अङ्गं शरीरं तस्मिन् रोम्णामुद्गमो विकासः, नेत्रं लोचनं तस्मिन् प्रमदस्याऽनन्दस्य अश्रु, चित्तं मनस्तस्मिन् श्रीरामश्च, मूर्धा शिरस्तस्मिन् अञ्जलिः निबद्ध-हस्तः, मुखं वक्त्रं तस्मिन् विकासः । उच्यतेऽनेनेति वदनं वागिन्द्रियं तस्मिन् तत् श्रीरामाभिषेचनं साधु सम्यक् इति वाणी, आसेति प्रत्येकं सम्बन्धः । अस गतिहिंसादानेषु लिट् । विभक्तिप्रतिरूपकमव्ययं वा[१] ॥

**(सं.चं.)** चित्तेऽन्तरङ्गे रामः रामस्यैव स्मरणम् । 'चित्तं स्मरणकारणम्' । साधुसाध्वित्याम्रेडनेन रामाभिषेके प्रजानामुत्सुकता द्योत्यते ॥ ७ ॥

**पौरे जने जानपदे च तस्मिन् सहान्तपालैरधिकं विवक्षौ ।**
**सपद्यभिप्रायविदः सभायां वृद्धाः समृद्धामथ गामवोचन् ॥ ८ ॥**

**(भा.दी.) पौर** इति । अथ पुरि विद्यमानः पौरस्तस्मिन् जने, जनपदे प्रसिद्धराष्ट्रे भवो जानपदस्तस्मिंश्च जने । तस्मिन् श्रीरामाभिषेकविषये । तस्मिन् सभातळ इति वा । अन्तपालाः पर्यन्तदिङ्मण्डलाधिपतयस्तैः, अन्ते समीपे स्थित्वा पालयन्ति राजानमित्यन्तपाला अङ्गरक्षकास्तैरिति वा, सह । अधिकं यथा भवति तथा विवक्षौ प्रत्युत्तरं वक्तुमिच्छावति सति । सपदि अभिप्रायं विदन्तीत्यभिप्रायविदः, वयोज्ञानादिभिर्वृद्धेषु सत्स्वस्माभिः कथं राजवचसः प्रत्युत्तरं देयमिति जनाभिप्रायविद इत्यर्थः, सभायां विद्यमाना वृद्धाः[२], समृद्धां उदारां गां वाचं अवोचन् । वचधातोर्लङ् । अभिप्रायविदो दशरथाभिप्रायविद इति वा ॥ ८ ॥

**(सं.चं.)** अन्तपालैः सामन्तैः । सर्वेषां विवक्षितमभिप्रायं विदन्तो वृद्धाः । अर्थतः समृद्धाम्, महार्थाम् ॥

**महाजनोऽयं मनसा च[३] वाचा करोति रामस्य सदाऽभिषेकम् ।**
**महाजनानामधिनाथ राजन् महाभिषेकं कुरु कर्म्मणैव ॥ ९ ॥**

**(भा.दी.) महदि**ति[४] । महान्तः पूज्याः ये जनास्तेषाम्, अधिनाथ अधीश्वर, हे राजन्, अयं मिळितः महाजनः मनसा वाचा च श्रीरामस्य सदा अभिषेकं करोति । कर्मणा श्रीरामाभिषेकस्य कर्तुमशक्यत्वान्मनसा आशास्ते, वाचा च प्रार्थयत इति भावः । त्वं तु कर्मणैव महान् यो यौवराज्याभिषेकस्तम् कुरु । तव पितृत्वेन कर्मणैवाभिषेकस्य कर्तुं योग्यत्वादवश्यं कुर्विति भावः ॥ ९ ॥

**(सं.चं.)** अयमत्र समाहृतः महाजनः जनसमुदायः । महत्त्वं सङ्ख्यया च योग्यतया च ॥ ९ ॥

---

१. '**धातुरूपत्वे–'अस्तेर्भूः'** (२.४.५२) **इति भू-आदेशे बभूवेति स्यात्'** इति का.श्री. ।

२. '**वृद्धाः ज्ञानेन वयसा च ज्येष्ठाः'** इति का.श्री ।

३. '**मनसाऽपि वाचा'**

४. समासान्तप्रत्ययमविवक्षित्वा प्रतीकग्रहणमिदम् । '**महेति'** इति वा पठनीयम् ।

**नैसर्ग्गिकैरेव गुणैरगण्यैः प्रजापते ते तनयः प्रजानाम् ।**
**मनांस्युपाकर्षति सत्वभाजामयांस्ययस्कान्तइव स्वगोभिः ॥ १० ॥**

**(भा.दी.)** **नैसर्गिकै**रिति । हे प्रजापते राजन् । 'प्रजापतिः क्षत्रियो नृपः क्षत्रम्' इति हलः । ते तव तनयः श्रीरामः, निसर्गतः स्वभावतः सिद्धा नैसर्गिकास्तैरेव, स्वाभाविकैरेव न तु वरादिलब्धैरित्यर्थः, अगण्यैः गुणैः वीर्यतेजःप्रभृतिधर्मैः, सत्वं सात्विकगुणं भजन्तीति सत्त्वभाजस्तासां सात्विकप्रकृतीनामित्यर्थः, प्रजानां मनांसि । अयस्कान्तः अयस्कान्तनामको मणिः स्वस्य गावो रश्मयस्ताभिः अयांसीव काष्र्णायसानीव उपाकर्षति वशीकरोति । कृष विलेखने लट् ॥ १० ॥

**(सं.चं.)** उपाकर्षति स्वसमीपमाकर्षति । गोभिः कर्षणशीलैः किरणैः ॥ १० ॥

**नारायणात्मा किल नन्दनस्ते परायणात्मा निखिलात्मनां च ।**
**अमुष्य को वा गणयेद् गुणौघान् रजांसि भूमेर्ग्गणयेत् कविश्च ॥ ११ ॥**

**(भा.दी.)** **नारायणे**ति । हे राजन्, ते नन्दनः श्रीरामः श्रीनारायणः आत्मा स्वरूपं यस्य स तथा, श्रीनारायणावतारात्मकः किलेत्यर्थः । अत एव निखिलाः समस्ता ये आत्मानो जीवास्तेषां परायणः मुख्याश्रयीभूतः आत्मा स्वरूपं यस्य स तथा । अत एव अमुष्य श्रीनारायणस्वरूपस्य श्रीरामस्य गुणौघान् गुणसमूहान् कः पुरुषः गणयेत् सङ्ख्यानं कुर्यात् । गण सङ्ख्याने लिङ् । कविश्च ब्रह्मा वा भूमेः रजांसि गणयेत् । अमुष्य गुणौघान् गणयेन्न कोऽपीति वाऽन्वयः[१] ॥ ११ ॥

**(सं.चं.)** नारायणात्मा साक्षान्नारायणः । निखिलजीवानां परायणः परमाश्रयः । आत्मा अन्तर्यामी च । को वा कविर्ज्ञानी, ब्रह्मा वा, यो भूमे रजांसि गणयेदपि । नतु नारायणस्य गुणान् । 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' इत्यैतरेयी श्रुतिः । 'विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि' इति भागवते ॥ ११ ॥

**अणोरणीयान् महतो महीयान् गुरोर्ग्गरीयांश्च लघोर्ल्लघीयान् ।**
**ईशः समस्तस्य च[२] सत्यकामः स्वतन्त्र ऐश्वर्य्ययुतोऽयमेवम्[३] ॥ १२ ॥**

---

१. अनन्वितमिव टीकावाक्यम् । प्रायः कानिचन पदानि लुप्तानि ।

२. **'समस्तस्य स सत्यकामः'**

३. **'युतोऽयमेव'**

**(भा.दी.) अणोरि**ति । अयं श्रीरामः अणोः अणुपरिमाणवतो जीवात् अतिशयेनाणुरणीयान् । महतः महत्परिमाणवतो गगनादेः महीयान् अतिशयेन महान् । गुरोः भारयुक्तात् पृथिव्यादेः गरीयान् अतिशयेन भारयुक्तः । लघोः भाररहितात् तेजःप्रभृतेः लघीयान् अतिशयेन लघुः । समस्तं सकलं तस्य जगतः ईशः स्वामी । सत्यः कामो यस्य स तथा, सत्यसङ्कल्प इत्यर्थः । स्वतन्त्रः परानपेक्षश्च[१] । अयमेवं उक्तरीत्या ऐश्वर्ययुतः परमैश्वर्ययुक्तः ॥ १२ ॥

**(सं.चं.)** रामं पुरुषड्गुणं पुरुषोत्तमं प्रतिपिपादयिषन्तः प्रथमं समग्रैश्वर्यमाहुः– अणोरणीयान् ॥ १२ ॥

**सशम्भुशक्राणि जगन्ति रामो धातुं विधातुं सहसा पिधातुम्[२] ।**
**भ्रूविभ्रमेणैव खलु प्रभुः स्याद् वीरस्य[३] वीर्य्याणि हि तादृशानि ॥ १३ ॥**

**(भा.दी.) से**ति । श्रीरामः । शम्भुर्ब्रह्मा शक्रश्च ताभ्यां सहितानि सशम्भुशक्राणि जगन्ति सहसा झटिति विधातुं स्रष्टुं धातुं पोषयितुम्, पालयितुमित्यर्थः, पिधातुं तिरोहितं कर्तुम्, संहर्तुमित्यर्थः, भ्रुवो विभ्रमो विलासस्तेनैव प्रभुः समर्थः स्यात् खलु । तत्र हेतुमाह– **वीरस्ये**ति । वीरस्य असहायशूरस्य श्रीरामस्य वीर्याणि सामर्थ्यानि तादृशानि हि जगत्स्रष्टृत्वादिमहिमोपेतानि हि ॥ १३ ॥

**(सं.चं.)** द्वितीयं समग्रं वीर्यमाहुः– सशम्भुशक्राणि । शम्भुरिति ब्रह्मा च शिवश्च । 'शम्भुरर्हन् विधिः शिवः' इति मङ्खः । शम्भुश्च शम्भुश्च शम्भू । धातुं धारयितुम् । विधातुं निर्मातुम् । पिधातुं संहर्तुम् ॥ १३ ॥

**न केवलं यः कुमुदं विकासं नयत्यभीक्ष्णं हि दिवो मुदं च[४] ।**
**द्विपक्षपूर्णोऽस्तकलङ्कलेशः कीर्त्तीन्दुरस्यास्यति पूर्णमिन्दुम् ॥ १४ ॥**

**(भा.दी.) ने**ति । द्वौ यौ पक्षौ शुक्लकृष्णाख्यौ तयोः पूर्णः, सर्वदा परिपूर्ण इत्यर्थः । अस्तो निरस्तः कळङ्कस्य लाञ्छनस्य लेशो येन स तथा । 'कळङ्कोऽङ्कापवादयोः' इत्यमरः । अकीर्त्यमिश्रित इत्यर्थः । अस्य श्रीरामस्य यः कीर्तीन्दुः कीर्त्याख्यचन्द्रः केवलं कुमुदं कुमुदकुसुमं तत् विकासो विकसनं तम्, न नयति

१. **'स्वतन्त्रः स्वाधीनः । स्वसत्तादेः परानपेक्षः'** इति का.श्री. ।

२. **''पिधातुमित्यत्र–'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यपेरकारलोपः'** इति च।

३. **'वीरस्य अध्यवसायान्तगामिनः रामस्य'** इति च। ४. **'दिवो मुदश्च'**

न प्रापयति । णीञ् प्रापणे लट् । 'अकथितं च'[१] (अ.सू.१.४.५१) इति सूत्रेण द्विकर्मकत्वादुभयत्र द्वितीया । किन्नाम कुमुदं कोर्भूमेर्मुत् सन्तोषस्तां च विकासं आभीक्ष्णं सम्यक् नयति । समस्तभूमण्डलस्थानामपि सन्तोषमभिवर्धयतीत्यर्थः[२] । केवलं तावदेव न, किन्तु चन्द्रादत्यन्तमधिकत्वेन द्यौरन्तरिक्षादिलोकस्तस्यापि मुदं हर्षं विकासं नयति । अन्तरिक्षादिलोकस्थानां देवादीनामपि सन्तोषमत्यन्तं वर्धयतीति हि यस्मात् तेन कारणेन पूर्णं इन्दुं प्रसिद्धचन्द्रं अस्यति निरस्यतीत्यर्थः । असु क्षेपणे लट् । श्रीरामकीर्तिः सर्वदैकप्रकारत्वान्निष्कळङ्कत्वात् सर्वजनसन्तोषजनकत्वात् पूर्वापरपक्षयोर्वृद्धिक्षयवन्तं कळङ्किनं कमलादिसन्तोषाजनकं चन्द्रं विजित्यातिशयेन वर्तत इत्यर्थः ॥ १४ ॥

**(सं.चं.)** तृतीयं समग्रं यश आहुः । इन्दुः शुक्लपक्ष एव पूर्णः । अस्य कीर्तिः द्वयोरपि पक्षयोः पूर्णा । स्वपक्षे परपक्षेऽपि । शत्रवोऽप्यस्य यशो गायन्ति । एवमिन्दुः शशाङ्कः । भगवद्यशो निष्कलङ्कम् ॥ १४ ॥

**भित्त्वा भुवं राजसुताच्छलेन यल्लोभतः श्रीः स्वयमेनमाप ।**
**तां सर्वलोकानुपमामनन्तां रूपश्रियं त्वस्य निरूपयामः ॥ १५ ॥**

**(भा.दी.) भित्त्वेति** । श्रयन्ते गुणा एनामिति वा, हरिं श्रयत इति वा श्रीः, महालक्ष्मीः । स्वयं स्वेच्छयैव, नतु श्रीरामापेक्षया । राज्ञो जनकस्य सुतेति छलं व्याजं तेन भुवं भूमिं भित्त्वा विदार्य यस्मिन् श्रीरामे लोभो भक्तिलक्षणो लोभस्तस्मादिति ततः एनं श्रीरामं आप प्राप । वयम्, सर्वो यो लोकस्तस्मिन् न विद्यते उपमा सादृश्यं यस्याः सा तथा ताम्, अनन्तां देशकालादितोऽपरिच्छिन्नां[३] तां सीतां अस्य श्रीरामस्य रूपेण स्वरूपेण वर्तमाना श्रीः सम्पद्रूपश्रीः ताम् । निरूपयामः जानीमः । रूप रूपवर्णक्रियाविस्तारगुणवचनेषु[४] लट् । सम्पदेव स्त्रीरूपेण समीपे सेवत इति जानीम इत्यर्थः । यद्वा रूपश्रियं रूपसम्पदमित्यर्थः । सीतायाः श्रीरामरूपश्रियश्च असदृशत्वानन्तत्वावियुक्तत्वादिना साम्यादिति भावः ॥ १५ ॥

**(सं.चं.)** चतुर्थीं समग्रां श्रियमाहुः– भित्त्वा भुवम् । तां त्रिभुवनरमणीयायाः श्रियोऽपि लोभनीयां रूपसम्पदं रामस्य निरूपयामः प्रतिपादयामः ॥ १५ ॥

---

१. तथाहि अकथितपदकथिताः षोडशेमे धातव इति वैयाकरणाः–**१. दुह प्रपूरणे, २. याचृ याच्ञायाम्, ३. पचष् पाके, ४. दण्ड दण्डनिपाते, ५. रुधिर् आवरणे, ६. प्रच्छ ज्ञीप्सायाम्, ७. चिञ् चयने, ८. ब्रूञ् व्यक्तायां वाचि, ९, शासु अनुशिष्टौ, १०. जि जये, ११. मथे विरोडने, १२. मुष स्तेये, १३. णीञ् प्रापणे, १४. हृञ् हरणे, १५. कृष विलेखने, १६. वह प्रापणे** । अर्थनिबन्धनो धातुपाठः । तेन समानार्था धातवोऽपि ।

२. **'–वर्षयतीत्यर्थः'**

३. **'देशादिनाऽपरिच्छिन्नाम्'**

४. धातुपारायणिकास्तु– **'रूप रूपक्रियायाम् । वर्ण वर्णक्रियाविस्तारगुणवचनेषु'** इति धातुद्वयं पठन्ति ।

**भावीनि भूतानि भवन्ति वाऽपि[१] समस्तवस्तूनि समं विशेषैः ।**
**यो हस्तहारेन्द्रवदेव वेत्ति ज्ञाने समो नाप्यधिकोऽस्य[२] भूम्नः ॥ १६ ॥**

**(भा.दी.) भावी**ति । यः श्रीरामः । भावीनि भविष्यन्ति समस्तवस्तूनि । भूतानि वा अतीतानि च समस्तवस्तूनि । भवन्ति अपि वर्तमानानि च समस्तवस्तूनि । विशेषा नानाविधाः प्रभेदास्तैः, तत्तद्धर्मविशेषैर्वा समं सह हस्तगतो यो हारेन्द्रो हारश्रेष्ठस्तद्वत् वेत्त्येव जानात्येव । विद ज्ञाने लट् । अत एव भूम्नः पूर्णज्ञानस्य अस्य श्रीरामस्य ज्ञानविषये समोऽपि सदृशोऽपि न । अधिकोऽपि पुमान्नेत्यन्वयः[३] ॥ १६ ॥

**(सं.चं.)** पञ्चमं सार्वज्ञ्यमाहुः– भावीनि भूतानि ॥ १६ ॥

**अमन्दमानन्दमनिन्दनीयं निरन्तरं यन्निजमेव भुङ्क्ते ।**
**स्त्रीराज्यकोशादिषु तस्य तेन न रागरोगोपहता मनीषा ॥ १७ ॥**

**(भा.दी.) अमन्द**मिति । यः श्रीरामः, यत् यस्मात्, मन्दः स्वल्पो न भवतीत्यमन्दस्तम्, परिपूर्णमित्यर्थः[४], निन्दनीयो न भवतीत्यनिन्दनीयस्तम्, निजं स्वरूपभूतं आनन्दमेव, निर्गतमन्तरं व्यवधानं यथा भवति तथा निरन्तरम्, सर्वदेत्यर्थः, भुङ्क्ते अनुभवति । भुज पालनाभ्यवहारयोः लट् । तेन कारणेन तस्य श्रीरामस्य मनीषा बुद्धिः, स्त्री च राज्यं च कोशश्च ते आदयो येषां ते तथा तेषु, राग एव इच्छैव रोगस्तेन उपहता विनाशिता कलुषितेत्यर्थः, न भवति ॥ १७ ॥

**(सं.चं.)** षष्ठं समग्रं वैराग्यमाहुः– अमन्दम् । 'असङ्गो ह्ययं पुरुषः' ॥ १७ ॥

**गुणान् षडेतानथ [५]पञ्च भावांस्तिस्रः स्वशक्तीरुदयांश्च सिद्धीः ।**
**अर्थान् द्वयांश्चेति[६] बिभर्त्ति रामो वेदोदितान् नीतिपथोदितांश्च ॥ १८ ॥**

**(भा.दी.) गुणा**निति । एतान् वेदादिशास्त्रे[७] प्रसिद्धान् । षट् षट्सङ्ख्याकान् गुणान् शुभधर्मान् । ते च सम्पूर्णैश्वैर्यं सम्पूर्णवीर्यं सम्पूर्णं यशः सम्पूर्णश्रीः सम्पूर्णज्ञानं सम्पूर्णवैराग्यं चेत्येत एवोदिताः षड्

---

१. **'चापि'** २. **'नास्त्यधिकस्य भूम्नः'** ३. **'कालत्रयविषयकस्वपरगताशेषविशेषज्ञानवानिति फलितार्थः'** इति का.श्री. ।

४. **'अमन्दमपरिच्छिन्नमवाङ्मनसगोचरमिति यावत् । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतिः । यत आनन्दात् वागादयो निवर्तन्ते प्रतिपादयितुमसमर्थाः, तमानन्दमिति श्रुतावन्वयः । निन्दयितुमयोग्यमनिन्दनीयम् । दुःखासम्भिन्नमिति यावत्'** इति च ।

५. **'पञ्चभावान्'** इति समस्तं पदमिति वि.ती. । ६. **'अर्थद्वयांश्चेति'** ७. **'–शास्त्रे च प्रसिद्धान्'**

गुणाः । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इत्युक्तेः । शत्रुभिः सन्धानात्मकः सन्धिश्च, दुर्बलशत्रुभिः सह कलहरूपो विग्रहश्च, अनम्रशत्रुपुराभिगमनलक्षणं यानं च, कालप्रतीक्षया शत्रुराज्यसमीपे चिरकालसंस्थितिरूपमासनं च, शत्रुषु द्वैधीभावकरणलक्षणो द्वैधीभावश्च, प्रबलशत्रुशरणप्राप्तिरूपः संश्रयश्चेति यथोदिताः षड् गुणाः । 'सन्धिं च विग्रहं चैव यानमासनमेव च । द्वैधीभावं संश्रयं च षड्गुणान् कवयो विदुः' इत्युक्तेः । अथ पञ्च च ते भावाश्च तान् । नारायण-वासुदेव-सङ्कर्षण-प्रद्युम्नानिरुद्धाख्यानि पञ्चरूपाणि वेदोदिताः पञ्चभावाः । कर्मप्रारम्भसमये उचित उपाय इत्येकम्, पुरुषसम्पत् द्रव्यसम्पदित्येकम्, अनर्थपरिहारात्मकं विनिपातप्रतीकार एकम्, देशकालपरीक्षात्मकमेकम्, कार्यसिद्धि-रित्येकमिति यथोदिताः पञ्चभावाः पञ्चाङ्गानि । तच्चोक्तम्—'कर्मारम्भोचितोपायः पुरुषद्रव्यसम्पदौ । विनि-पातप्रतीकारो देशकालावलोकनम् । कार्यसिद्धिरिति प्रोक्तमङ्गानां पञ्चकं बुधैः' इति । तिस्रः शक्तीश्च । ताश्च सृष्टिशक्तिः, स्थितिशक्तिः, संहारशक्तिरिति तिस्रो वेदोदिताः । उत्साहशक्तिर्मन्त्रशक्तिः प्रभुशक्तिरिति तिस्रः शक्तय इति नीतिपथोदिताः । त्रीन् उदयांश्च । ते च अरुणोदय उषउदयः सूर्योदय इति वेदोदिता उदयाः । मित्रोदयः, भूम्युदयः, कोशोदयश्चेति नीतिपथोदिताः[1] । वेदेषु उदितान् प्रोक्तान् । नीतेः पन्थाः नीतिपथः नीतिशास्त्रमित्यर्थः, तत्र उदितांश्च, इति उक्तप्रकारेण द्वयान् द्विप्रकारान् अर्थ्यन्ते ज्ञायन्ते वेदादि-भिरित्यर्था ऐश्वर्यादयो धर्मास्तान् । बिभर्ति भृञ् भरणे लट् । एवं च वेदोदितान् नीतिपथोदितांश्चेत्य-नयोर्विशेषणयोर्योग्यतया प्रत्येकं सम्बन्धः । तिस्र इत्यस्यापि योग्यतया सम्बन्धः । बिभर्तीत्यस्य द्वयार्थानि-त्यस्य च सर्वत्र सम्बन्धः । तथा चैवमन्वयः- श्रीरामः एतान् प्रसिद्धान् षट् गुणानिति द्वयान् अर्थान् धर्मान् बिभर्ति । अथ वेदोदितान् पञ्चभावान् नीतपथोदितांश्च पञ्चभावानिति द्वयान् अर्थान् बिभर्ति । वेदोदिताः तिस्रः शक्तीः नीतिपथोदिताः तिस्रः शक्तीरिति द्वयान् अर्थान् बिभर्ति । वेदोदितान् त्रीनुपायान् नीतिपथोदितान् त्रीन् उदयांश्चेति द्वयान् अर्थान् बिभर्ति । वेदोदिताः तिस्रः सिद्धीः नीतिपथोदिताश्च तिस्रः सिद्धीरिति द्वयान् अर्थान् बिभर्ति । तथाच श्रीरामस्यात्यन्तं राज्याभिषेकयोग्यत्वमस्तीत्युक्तं भवति ॥ १८ ॥

**(सं.चं.)** 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इत्येवमेतान् पूर्वश्लोकेषु वर्णितान् षड्गुणान् । पञ्च भावान् प्रादुर्भावान् । नारायणाद्यनिरुद्धान्तान् । अथच पृथिव्या-

---

१. **'सिद्धीश्च तिस्रः'** इत्यस्य विवरणपरो व्याख्यानभागो लुप्तः । **'वेदपथोदितसिद्धीनामनन्तत्वात् तिस्र इति सिद्धीरित्यस्य न विशेषणम् । वेदपथोदिता अनन्ताश्च सीद्धीर्बिभर्ति । तिस्र इत्यस्य विशेषणत्वे उपलक्षणत्वेनानन्तसिद्धयो ग्राह्याः । अर्थसिद्धिः, स्थलसिद्धिः, समुद्रादिजलसिद्धिरिति नीतिपथोदितास्तिस्रः सिद्धीः बिभर्ति रामः'** इति का.श्री. । वि.भू.टीकायामप्येवम्–**'वेदपथोदितसिद्धीनामानन्त्यात् तिस्र इत्युपलक्षणम् । तथाच महिमा शौर्यं वीर्यमित्याद्या अनन्ताश्च सिद्धीर्बिभर्तीत्यर्थः । अर्थसिद्धिः, स्थलसिद्धिः, जलात् समुद्रादेः सिद्धिरिति तिस्रो नीतिपथोदिताः सिद्धयः'** इति । अस्वरसमुभयोरपि व्याख्यानम् । अन्ते पुनरेवमुपसञ्जहार वि.भू.–**'अत्र पुनरपि प्रतिपदमनेकेऽर्थाः प्रतीयन्ते । तथाऽपि ग्रन्थगौरवभयादुपरम्यते'** इति ।

पोऽग्निर्वायुराकाश इति पञ्च भावान् पदार्थान् बिभर्ति । अथ देवा ऋषयः पितरश्चक्रवर्तिनो मनुष्या इति पञ्चविधान् भावान् जीवान् मोक्षदानेन बिभर्ति । शक्तीश्च तिस्रः । ज्ञानशक्तिमिच्छाशक्तिं क्रियाशक्ति-मिति । त्रिगुणात्मिका वा तिस्रः शक्तीः श्रीभूदुर्गाः । 'शक्यत्वाच्छक्तयो भार्याः' इति ह्यभिदधति । अथ सूर्यगताः प्रकाशनतापनाह्लादनाख्यास्तिस्रः शक्तीर्बिभर्ति । कालरूपी चायमुदयांस्त्रीन् बिभर्ति । अरुणस्योषसः सूर्यस्य चोदयास्त्रयः । सिद्धिरिति मुक्तिः । श्वेतद्वीपानन्तासनवैकुण्ठास्तिस्रः सिद्धीर्धत्ते । कर्मसिद्धीर्वा तिस्रः– यज्ञो दानं तप इति । ज्ञानसिद्धीर्वा तिस्रः श्रुतीः– ऋग् यजुः सामेति । यज्ञाध्ययनदानानि वा साधकानां ज्ञानभक्तिवैराग्याणि वा तिस्रः सिद्धीर्बिभर्ति । इतीमे वेदोदिता अर्थाः । तानेतान् वेदवेद्योऽयं बिभर्ति । अथ नीतिशास्त्रोदिताः क्षत्रियधर्माः । सन्धिविग्रहौ यानासने द्वैधीभावसंश्रयाविति षड्गुणाः । अथ च कामक्रोधलोभमोहमदमत्सराणां षण्णां दोषाणामभावाः षड् गुणाः । स्फुटं चैतदुपरिष्टात् । कर्मणामारम्भो-पायः, पुरुषद्रव्यसम्पत्, विनिपातप्रतीकारः, देशकालावेक्षणम्, कार्यसिद्धिरिति पञ्च भावाः । उत्साह-शक्तिर्मन्त्रशक्तिः प्रभुत्वशक्तिरिति तिस्रः शक्तयः । सेनाबलं देहबलं बुद्धिबलमिति च तिस्रः । मित्रभू-कोशानामुदयास्त्रयः । उत्साहसिद्धिर्मन्त्रसिद्धिः प्रभुत्वसिद्धिरिति सिद्धयश्च तिस्रः । अस्त्रशस्त्रशास्त्राणां वा सिद्धयस्तिस्रः । आत्मविजयः, बन्धुविजयः, शत्रुविजय इति च तिस्रः । मातुः पितुराचार्यस्य चाऽशीरूपाश्च तिस्रः । धर्मार्थकामानां सिद्धयश्च । स्वयं क्षत्रकुलेऽवतीर्णो रामस्तानेतान् बिभर्ति । एवं वेदोदितान् नीति-पथोदितांश्चेति द्वयानप्यर्थान् बिभर्तीत्यर्थः ॥ १८ ॥

**स्वं पारमेष्ठ्यं परमेष्ठिनो यदोजः पुरारेर्विभवो बलारेः ।**
**अन्ये गुणाश्चान्यगता गुणानां रामस्य सर्वे प्रतिबिम्बभूताः ॥ १९ ॥**

**(भा.दी.) स्वमि**ति । परमे उत्तमे ब्रह्मलोके तिष्ठतीति परमेष्ठी चतुर्मुखस्तस्य यत् स्वं स्वकीयं परमेष्ठिनो भावः पारमेष्ठ्यम्, परमोत्कृष्टत्वम्[1] । पुरारेः त्रिपुरशत्रोः शिवस्य यत् ओजः शत्र्वभिभवशक्तिः । बलारेर्बलनामकदैत्यशत्रोरिन्द्रस्य यः विभवः ऐश्वर्यम् । अन्येषु चतुर्मुखादीतरेषु बृहस्पत्यादिषु गताः ये अन्ये नीतिमत्त्वादयो गुणाश्च । ते सर्वे श्रीरामस्य गुणानां सर्वोत्तमत्त्वादीनां प्रतिबिम्बभूताः तत्सदृशत्वे सति तदधीनभूताः । ब्रह्मादिगतसर्वोत्कृष्टत्वादिगुणेभ्योऽप्यतिशयितसर्वोत्तमत्वादिगुणवानिति भावः । अन्ये गुणा अपि यदा तदधीनास्तदा श्रीरामस्य गुणवत्त्वं किं वक्तव्यमिति कैमुत्यद्योतकोऽयं श्लोकः ॥ १९ ॥

१. **'परमेष्ठित्वं सर्वजीवोत्तमत्वम्, सत्यलोकाधिपतित्वं वा । तत् रामगतपरमेष्ठित्वस्य (परमोत्कृष्टत्वस्य) प्रतिबिम्बभूतम् । रामगतपरमेष्ठित्वाधीनत्वे सति किञ्चित् तत्सदृशम्'** इति का.श्री. ।

**(सं.चं.)** जीवानां सर्वे गुणा भगवद्गुणप्रतिबिम्बभूता इत्याहुः– स्वं पारमेष्ठ्यम् ॥ १९ ॥

**कामः स्वकान्तिं [१]परिशान्तिमिन्दुः प्रभां प्रभाकृद् धनितां धनेशः ।**
**क्षमां क्षमेयं रघुवंशकेतोर्दृष्ट्वा गुणान् स्वाननुशिक्षयन्ति ॥ २० ॥**

**(भा.दी.) काम** इति । कामो मन्मथः, इन्दुः, प्रभाकृत् सूर्यः, धनेशो वैश्रवणः, इयं क्षमा भूमिः इत्येते । रघोर्यो वंशस्तस्मिन् केतुरिव ध्वज इव रघुवंशकेतुस्तस्य । 'उत्पातेऽङ्के ध्वजे केतुः' इति वैजयन्ती । गुणान् कान्त्यादिधर्मान् । दृष्ट्वा स्वस्य स्वात्मनः कान्तिं शोभाम्, 'कान्तिः शोभाभिकामयोः' इति वैजयन्ती, परिशान्तिं तापशमनम्, प्रभां द्युतिम्, धनितां धनवत्ताम्, क्षमां क्षान्तिम्, इत्येतान् । स्वान् स्वकीयान् गुणान् अनुशिक्षयन्ति श्रीरामकान्त्यादिवदस्माकं नाभूदिति मत्वा अनुसृत्य शिक्षयन्तीत्यर्थः । शिक्ष विद्योपादाने लट् ॥ २० ॥

**(सं.चं.)** 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतिः । 'अनुकृतेस्तस्य च' इति भगवद्वचनम् । अनुशिक्षयन्ति अनुकर्तुं प्रयतन्ते ॥ २० ॥

**[२]औदार्य्यमाधुर्य्यसुधैर्य्यशौर्य्य[३]गाम्भीर्य्यचातुर्य्यमहार्य्यभावैः ।**
**गुणैरगण्यैरपरैश्च[४] पूर्ण्णः सुतस्त्रिलोकीतिलकस्तवायम् ॥ २१ ॥**

**(भा.दी.) औदार्येति** । उदारस्य दातुर्भाव औदार्यं तच्च, मधुरस्य मनोहरस्य भावो माधुर्यं तच्च, शोभनं यद्धैर्यं तच्च, शौर्यं च तैः । गाम्भीर्यं च, चातुर्यं कौशलं तच्च, महान् य आर्यभावोऽतिपूज्यत्वं स च तैः । अगण्या गणयितुमशक्यास्तैः, स्वातन्त्र्यसार्वज्ञ्यादिगुणैश्च,[५] सदा अतिपूर्णः निरवधिकतया पूर्णः । तव सुतः अयं श्रीरामः त्रिलोक्यां तिलक इव त्रिलोकीतिलकः, त्रिलोकश्रेष्ठ इत्यर्थः ॥ २१ ॥

**(सं.चं.)** औदार्यं वदान्यता । मधुराऽऽकृतिः । मधुरं वचः । श्रवणसुभगं मनोहरं चेत्यर्थः । मधुरं मनः । प्रसन्नमक्रूरं च । विकारहेतावप्यविक्रिया धैर्यम् । तच्च द्विविधम्– दुष्टविषयं साधुविषयं च । प्रथमो दोषः । द्वितीयो गुण इति सुधैर्यमित्युक्तम् । सम्बाधेष्वविचलत्वं च सुधैर्यम् । शत्रुदमनदक्षता शौर्यम् ।

१. **'प्रतिशान्तिमिन्दुः'**

२. **'ननु ज्ञानेच्छाप्रयत्नसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागरूपाष्टगुणातिरिक्तगुणानामभावात् कथं रामस्यानन्तगुणत्वमित्यत आह–औदार्येति'** इति का.श्री. ।

३ **'–शौर्यैर्गाम्भीर्य–'** इति वि.ती.पाठः ।

४. **'–गण्यैश्च सदाऽतिपूर्णः'** इति वि.ती.पाठः । **'गुणैरसङ्ख्यैरप–'** इति च क्वचित् ।

५. **'स्वातन्त्र्यसर्वशक्तित्वादिगुणैश्च'**

चित्तस्य दुरूह्यता चाधृष्यता च गाम्भीर्यम् । सपदि प्रतिकूलविकटसङ्कटपरिहारपटुता चातुर्यम् । कर्मसु कौशलं च । ज्ञानवृद्धा आर्याः । महान् वृद्धानामपि मार्गदर्शी रामस्याऽर्यभावः ॥ २१ ॥

**सर्वत्र सर्वानपि सर्वदाऽपि प्राप्नोति कामान् ननु सत्यकामः ।**
**कामः कथं द्रुह्यति तेन जातु सीतापतिं विश्वपतिं सुतं ते ॥ २२ ॥**

**(भा.दी.)** यत्र गुणास्तत्र दोषा इति नियमाद् रागादिदोषा अपि श्रीरामे सन्ति किमित्यतः सर्वेश्वरत्वान्नेत्याह– **सर्वत्रेत्या**दिना । सत्यः अमोघः कामः सङ्कल्पो यस्य स तथा यः श्रीरामः सर्वत्रापि सर्वस्मिन् देशेऽपि सर्वदाऽपि सर्वान् कामान् अभीप्सितान् प्राप्नोति (ननु) । आप्लृ व्याप्तौ लट् । येन हेतुना । तेन श्रीरामस्य परिपूर्णकामत्वेन कारणेन विश्वपतिं सकलजगत्पतिं विश्वस्य मुख्यप्राणस्य वा पतिम् । 'विश्वो हिरण्यगर्भः' इति श्रुत्या विश्वशब्दस्य मुख्यवायावपि प्रसिद्धेः । सीतापतिं ते सुतं कामः जातु कदाचिदपि कथं द्रुह्यति द्रोहं करोति? द्रुह जिघांसायां लट् । अपूर्णमनोरथानां पीडकः कामः । एतादृशमहिमानं श्रीरामं पीडयितुं समर्थः कथं भवेत्? न कथमपीति भावः ॥ २२ ॥

**(सं.चं.)** षड्गुणा उक्ताः । अथ षड्दोषाणामभावमाहुः । तत्र प्रथमं कामाभावम् । सत्यकामं कामः कथं द्रुह्येत् अपकुर्यात्? अत्र द्रोहस्य कोपमूलत्वाभावान्न सम्प्रदानसञ्ज्ञा । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' (अ.सू.१.४.३७) इति हि पाणिनिः ॥ २२ ॥

**प्रियस्य हानिर्न्न कदाचिदस्य प्रियेतरस्यापि न सम्भवः स्यात् ।**
**क्रोधस्ततो लक्ष्मणपूर्वजस्य पराजितः पादरजांस्युपास्ते ॥ २३ ॥**

**(भा.दी.)** **प्रियस्ये**ति । यस्मात् अस्य श्रीरामस्य कदाचित् कस्मिंश्चित् कालेऽपि प्रियं प्रीत्यास्पदं वस्तु तस्य यो हानिर्विनाशः सा न स्यात् । प्रियादितरदन्यत् तस्य अप्रियस्येत्यर्थः, सम्भवः उत्पत्तिरपि न स्यात् । ततः कारणात् पराजितः क्रोधः लक्ष्मणात् पूर्वस्मिन् काले जातस्य श्रीरामस्य पादरजांसि उपास्ते सेवते । आस उपवेशने लट् । लोके प्रियस्य हानौ वा प्रियस्यानुत्पत्तौ वा[१] खलु क्रोधो जायते । श्रीरामस्य तदुभयाभावान्न क्रोधसम्भव इति भावः ॥ २३ ॥

**(सं.चं.)** अथ क्रोधाभावमाहुः । लक्ष्मणपूर्वजस्य । एतेन भरतो लक्ष्मणपूर्वज इति भ्रमं वारयति ॥२३॥

१. **'अप्रियस्योत्पत्तौ वा'** इति वक्तुमुचितम् । स्याल्लिपिकृतां प्रमादः ।

**सन्त्यज्य साम्राज्यमिदं प्रभुः स्यात् वनं प्रयातुं सहसा प्रसन्नः ।**
**आत्मानमप्येष ददाति सद्भ्यो रामे न लोभो[१] लभतेऽवकाशम् ॥ २४ ॥**

**(भा.दी.)** **सन्त्यज्ये**ति । एषः श्रीरामः यतः इदं सम्राजो भावः साम्राज्यं तत्, राज्याधिपतित्वमित्यर्थः, 'सम्राजोऽग्नीन्द्रविष्ण्वर्का यश्च स्यान्मण्डलेश्वरः । राजसूयेन येनेष्टं राज्ञः शास्त्याज्ञया च यः' इति वैजयन्ती । सन्त्यज्य प्रसन्नः मनःखेदरहितः सन् वनं तत् प्रयातुं प्रभुः समर्थः स्यात् । यतश्च भक्तानां प्रसन्नः सन् आत्मानमपि स्वत्मानमपि सहसा अविचार्यैव सद्भ्यः उत्तमेभ्यः पुरुषेभ्यः ददाति[२] । डु दाञ् दाने लट् । तस्मात् लोभः श्रीरामे अवकाशः अवस्थानार्थं प्रदेशस्तम्, न लभते न प्राप्नोति । डु लभष् प्राप्तौ लट् ॥ २४ ॥

**(सं.चं.)** अथ लोभविरहमाहुः– सन्त्यज्य । वनं प्रयातुम् । चित्रमिदं यत् सभायां वृद्धा अभ्यूहाम्प्रचक्रिरे तदेव भविष्यति सत्यं स्यादिति न तेऽपि स्वप्नेऽप्यचिन्तयन्निति । कवेः कल्पनाकौशलमिदम् । इतिहासप्रबन्धाऽपि मूलतः कविरयं लिकुचपण्डितः । आत्मानमप्येष ददाति । तदपि चकारैव स्वभक्तवचनं परमार्थीकुर्वन्– 'स्वात्मप्रदानमधिकं पवनात्मजस्य कुर्वन् समाश्लिषदमुं परमाभितुष्टः' (म.भा.ता.नि.७.५०) इति । तेन सद्भ्य इति प्राणावतारेभ्यो विशिष्य । 'सदिति प्राणः' इति श्रुतेः ॥ २४ ॥

**आयान्ति[३] शान्तिं किल यत्प्रसादान्मोहाद्यवद्यानि कुतोऽस्य मोहः ।**
**यस्याहिमांशोरुदये व्यपैति[४] महान्धकारोऽत्र[५] कुतोऽन्धकारः ॥ २५ ॥**

**(भा.दी.)** **आयान्ती**ति । यस्य श्रीरामस्य प्रसादोऽनुग्रहस्तस्मात्, मोहः मिथ्याज्ञानमादिर्येषां तानि तथोक्तानि, तानि च तानि अवद्यानि च, मोहादिदोषा इत्यर्थः, शान्तिं शमं आयान्ति किल प्राप्नुवन्ति किल । या प्रापणे लट् । नष्टा भवन्तीत्यर्थः । अस्य परमोहादिकमपहर्तुः श्रीरामस्य मोहः विपरीतज्ञानं कुतः? न कुतोऽपि । तत्र दृष्टान्तः– **यस्ये**ति । हिमविरुद्धा अहिमाः, उष्णा इत्यर्थः, तादृशा अंशवो यस्य स तथा तस्य, (यस्य) सूर्यस्य उदयः प्रादुर्भावस्तस्मिन् सति महान्धकारः निबिडान्धकारो व्यपैति[६] दूरादेव गच्छति । इण् गतौ लट् । अत्र एवंविधे सूर्ये अन्धकारः कुतः कथं घटेत? न कथमपीत्यर्थः ॥ २५ ॥

---

१. **'लोभः स्वस्य दानसामर्थ्ये विद्यमानेऽपि सत्पात्रे प्राप्तेऽपि द्रव्यत्यागेच्छाभावः'** इति का.श्री. ।

२. **'स्वयं भक्ताधीनो भवतीति यावत्'** इति का.श्री. । ३. **'प्रयान्ति'**

४. **'–रुदयेऽप्यपैति'** ५. **'–कारोऽस्य कुतो–'** ६. **'निबिडान्धकारोऽप्यपैति'**

**(सं.चं.)** अथ मोहविरहमाहुः–आयान्ति । मोहो ममकारः तन्मूलमयथाकल्पनं च । अहिमांशुः भास्वान् ॥

**अविद्यमानात्मगुणाभिमानं मोहादहङ्कारमुशन्ति सन्तः ।**
**अविद्यमानो न गुणोऽस्ति रामे तस्मादहङ्कारलवोऽपि नास्य ॥ २६ ॥**

**(भा.दी.) अविद्यमाने**ति । सन्तः सत्पुरुषाः मोहो वस्तुविपरीतज्ञानं तस्मात् अविद्यमानाः स्वस्मिन्नवर्तमानाः ये आत्मनः स्वस्य गुणास्तेषामभिमानो मयि सर्वे गुणाः सन्तीति गर्वस्तम्, 'गर्वोऽभिमानोऽहङ्कारः' इत्यमरः, अहङ्कारं उशन्ति वदन्ति । वश कान्तौ लट् । यस्मात् अविद्यमानः गुणः शुभधर्मः श्रीरामे नास्ति । सर्वोऽपि गुणराशिस्तत्र वर्तत इत्यर्थः । तस्मात् सर्वगुणपूर्णत्वात् । अस्य एवंविधस्य श्रीरामस्य अहङ्कारस्य अविद्यमानगुणाभिमानस्य लवोऽप्यवकाशो नास्ति । तत्कारणस्य गुणैरपूर्णत्वस्याभावादिति भावः ॥ २६ ॥

**(सं.चं.)** अथ मदाभावमाहुः– गुणाभिमानमिति । आत्मन्यविद्यमाना ये गुणाः तेषामात्मगुणत्व-भ्रमेण मानश्चित्तसमुन्नतिः । तेन गुणाढ्योऽहमिति याऽस्मिता नाम शौटीर्यं सोऽहङ्कारः । अस्वतन्त्रो ह्यभिमन्यते । नहि स्वतन्त्रस्य काप्यभिमानः सम्भवी । अविद्यमानस्योत्कर्षस्याऽत्मन्यस्तिताभ्रमः मदो नामाहङ्कारः । तस्य लवो लेशः ॥ २६ ॥

**न मद्वशोऽसाविति चित्ततोदं मात्सर्य्यमार्य्याः समुदाहरन्ति ।**
**विश्वं च यद्वश्यमवश्यमेतत् स मत्सरी चेत् तुरगोऽपि शृङ्गी ॥ २७ ॥**

**(भा.दी.) ने**ति । आर्याः साधवः पुरुषाः । 'आर्यः साधुकुलीनयोः' इति वैजयन्ती । असौ पुरुषः, मद्वशः ममाधीनः न भवतीति यः चित्तस्य तोदश्चित्तव्यथा तं मात्सर्यं मात्सर्याख्यदोषस्तत्, समुदाहरन्ति कथ-यन्ति । एतत् विश्वं च सर्वमपि जगत् अवश्यं निश्चयेन सर्वदाऽपि यद्वश्यं यस्य श्रीरामस्य वशे स्थितम्, तदाज्ञया वर्तमानमित्यर्थः, सः एवंविधः श्रीरामश्चेद्यदि मत्सर अस्यास्तीति मत्सरी तर्हि तुरगोऽपि शृङ्गं अस्यास्ति इति शृङ्गी स्यादित्यर्थः, यथा लोके तुरगशृङ्गमत्यन्तमसत् तथा सर्वजगदीश्वरे श्रीरामेऽपि मात्सर्यं सदाऽप्यविद्यमानमेवेति भावः ॥ २७ ॥

**(सं.चं.)** अरिषड्वर्गे चरमस्य मात्सर्यस्याभावमाहुः– नेति । 'अप्रीतिर्मद्वशो नायमिति मत्सर ईरितः' इति ह्यभिदधति । 'अवश्यं तु निश्चिते' इति यादवप्रकाशः । तुरगोऽपि । 'वश्यमवश्यम्' इत्यालङ्कारिकं वचः । अशृङ्गं जन्तुजातं पदार्थः ॥ २७ ॥

**मदप्रमादौ भयदुःखशोकाः[१] क्षुत् तृट् त्रिधातुप्रभवाश्च[२] दोषाः ।**
**न सन्ति रामे पठितः[३] श्रुतौ य 'आदित्यवर्ण्णं तमसः परस्तात्'[४] ॥ २८ ॥**

**(भा.दी.) मदे**ति । (मदः) विद्यामदादिः स च प्रमादो मनसोऽनवधानता स च तौ, भयं मृत्वादिभयं तच्च दुःखं च मोहश्च ते, क्षुत् क्षुधा, तृट् तृषा, त्रयो ये धातवो वातपित्तश्लेष्मनामानस्तेभ्यः प्रभव उत्पत्तिर्येषां ते तथा दोषाः ज्वरादिदोषाश्चेत्येते श्रीरामे न सन्ति । तत्र कारणमाह– **पठित** इति । श्रुतौ 'आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः' इत्यादिश्रुतौ यः श्रीरामः आदित्यवद्वर्णो यस्य स तथा, तेजोमय इत्यर्थः, सर्वज्ञ इति यावत्, तमसः अज्ञानात् परस्तात् परपारे स्थितः, अज्ञानादिसर्वदोषरहित इत्यर्थः, इति पठितः प्रतिपादितः । एवं च मदप्रमादादिदोषाणामज्ञानमूलत्वात् तदतीतत्वेन श्रुतिप्रतिपादिते श्रीरामे न मदादिदोषावकाश इति भावः ॥ २८ ॥

**(सं.चं.)** एवं कामादयः षण् मनोदोषा निराकृताः । तत्सामान्यादितरेषु तथात्वमित्याहुः– मदप्रमादौ । अहङ्कारजन्या वृद्धावज्ञा मदः । सर्वज्ञोऽहं किमन्येन पृष्टेनेति । किमेते जानन्ति यन्मयाऽविदितमिति । प्रमादश्चित्तस्य विक्षेपोऽनवधानं नाम । एते केवलं मानसाः । अथ भयदुःखशोका मानसा देहे विकारं जनयन्ति । स्फुटं मुखे व्यज्यन्ते । भयं दुःखस्य पूर्वावस्था । दुःखं अन्तर्वेदनानुभवः । साश्रुपातमुच्चै रोदनं शोकः । अनपेक्षितमापतितमिति चिन्ता च । क्षुधातृषे दैहिकमानसिके । कफवातपित्ताख्यत्रिधातुवैषम्यजा आमया दैहिकाः । 'आदित्यवर्णं तमसः परस्तात्' इति श्रुतौ निर्दोषत्वेन पठितः । अयमर्थः– आदित्ये यथा तसमोऽभावः तथाऽऽदित्यवर्णेऽपीत्याह– तमसः परस्तादिति । 'ज्योतिर्मयः पुरुषः' इति च श्रुतिः । तद्धि तमः यदन्धयति । अज्ञानावरणेन जगदन्धयन् त्रिगुणग्रामोऽत्र तम उच्यते । त्रिगुणप्रभवा हि दोषाः । तत् कथं त्रिगुणातीते सम्भवेत्? किं च आदिः सर्वकारणं त्यः ज्ञानानन्दरूपश्चेति भगवानादित्य इति वेदेषु वर्ण्यते । न हि सर्वकारणे ज्ञानानन्दमये दोषाः सम्भवन्ति । 'कर्तृत्वात् सगुणं ब्रह्म' इति ह्याचक्षते । यदि हृदि भगवान् नोदैष्यत् तदा ज्ञानिलोकमपि चापिधाय तम आन्धयिष्यत् ॥ २८ ॥

---

१. **'भयदुःखमोहाः'** इति वि.ती.पाठः । **'शोकः अश्रुमोचनम्'** इति का.श्री. । मोहो हि पूर्वमुदितः ।

२. **'क्षुत्तृट्त्रिधातुप्रभावाः'** इति समस्तं पदं मन्यते का.श्री. ।

३. **'रामे प्रथितः'**

४. **'श्रुतौ तमसः परस्तादित्युपलक्षणत्वेन सत्वरजस्तमसां परस्तात्, पश्चात्, तानतीत्य वर्तत इत्युक्त्या दोषकारणगुणत्रयाभावात् कार्यभूतदोषा अपि न सन्तीत्युक्तं भवति'** इति. का.श्री. ।

**योयो गुणो नाम स एव रामे योयश्च दोषः स तु नैव तस्मिन् ।**
**नरेन्द्र किं वा बहुनोदितेन प्रत्यक्षयुक्तिश्रुतयोऽत्र मानम्[1] ॥ २९ ॥**

**(भा.दी.) य** इति । यःयः गुण इति नाम प्रसिद्धम् स एव सर्वोऽपि, एवशब्दः कात्स्न्यार्थे, श्रीरामे अस्त्येव । यःयश्च दोषः दोष इति प्रसिद्धः स तु दोषः तस्मिन् श्रीरामे नैव नास्त्येव । हे नरेन्द्र दशरथ, बहुना उदितं कथनं तेन, 'नपुंसके भावे क्तः' (अ.सू.३.३.११४) इति क्तः, किं (वा) प्रयोजनम् । यद्वा श्रीरामरूपेण उदितेन अस्माभिः प्रतिपादितेन किं प्रयोजनम्? यतः अत्र श्रीरामस्य गुणपूर्णत्वे सर्वदोषराहित्ये च । प्रत्यक्षं ज्ञानिप्रत्यक्षं तच्च, युक्तिः विमतः पूर्णगुणः स्वतन्त्रत्वादित्याद्यनुमानं सा च, श्रुतयः 'एष सर्वेश्वरः' इत्यादयः ताश्च मानम् । अतः सर्वप्रमाणसिद्धेऽर्थे बहुप्रतिपादनं व्यर्थमिति भावः ॥ २९ ॥

**(सं.चं.)** प्रत्यक्षयुक्तिश्रुतयः । प्रत्यक्षमेतद् भगवति रामचन्द्रे यत् श्रुतिसहकृता युक्तयः श्रुतयश्चावदन् । रामः परब्रह्मस्वरूपः तथा श्रुतिगदितत्वात् । रामो निरवद्यो गुणपूर्णः परब्रह्मस्वरूपत्वादित्याद्या युक्तयः । 'आनन्दरूपो निष्परीमाण एष लोकश्चैतस्माद् रमते तेन रामः' इत्याद्याः श्रुतयः ॥ २९ ॥

**क्षान्तः प्रशान्तः प्रियवाक् प्रसन्नो नित्यानृशंसोऽनुपमानुभावः ।**
**चराचराणामविपश्चितां च गुणाम्बुधिः सम्मत एव रामः ॥ ३० ॥**

**(भा.दी.) क्षान्त** इति । क्षान्तः क्षमावान्, प्रशान्तः अक्रुद्धचनु, प्रिया वाग् यस्य स तथा, प्रसन्नः सुमुखः, नित्यमनृशंसोऽक्रूरो नित्यानृशंसः, न विद्यते उपमा यस्य स तथाऽनुपमः तादृश अनुभावो महिमा यस्य स तथा, गुणाम्बुधिः श्रीरामः चराणि च अचराणि च तेषाम्, स्थावरजङ्गमप्राणिनामित्यर्थः, विपश्चितः पण्डिता न भवन्तीत्यविपश्चितस्तेषां च, बालादीनामपीत्यर्थः, सम्मत एव युवराजत्वविषयेऽभिमत एव । उक्तगुणवत्तया सम्मत इति वा, एवकारेण स्वरूपत उत्तमस्य स्थावरजङ्गमात्मकनानायोनिगतस्यापि जीवजातस्य उक्तार्थे विवादाभावो दर्शितः ॥ ३० ॥

**(सं.चं.)** कतिचन गुणान् मुखत आहुः–क्षान्तः । अपराधसहिष्णुता क्षान्तिः । अचलत्वं मनसः शान्तिः । महत्यपि सङ्कटे तथात्वं प्रशान्तिः । परेषामहितचिन्तनेन वैक्लव्यं मनसः कालुष्यम् । अकालुष्यं प्रसन्नता । मनसः स्वाच्छ्यस्य प्रतिफलनं मुखे प्रसन्नता । स्मितशोभि निरञ्जनं मुग्धं मुखम् । अपराधिष्वप्य-

१. **'–श्रुतयः प्रमाणम्'** । **'रामः सकलगुणपूर्णः तत्प्रभुत्वे सति तत्र शक्तत्वात् (?) व्यतिरेकेण चैत्रवत् रामः सकलदोषरहितः तज्जिहासुत्वे सति तत्र शक्तत्वात् । व्यतिरेकेण सम्मतवदिति युक्तिः'** इति का.श्री. ।

क्रौर्यमानृशंस्यम्, दयालुता। द्वेषमूला हिंसा, हिंसारतिर्वा क्रौर्यम्। अन्तर्लीनं सामर्थ्यमनुभावः। येन पुमानधृष्यो भवत्यभिगम्यश्च भवति। अविपश्चितामपि चराचराणाम्। कीटाः पशवः पक्षिणश्चराः। नराश्च मुग्धा बालादयः। अचरास्तरुगुल्माद्याः। किमुत विपश्चिताम् ॥ ३० ॥

**रामाय राज्यं नरदेव देहि स्वभावपूर्णाय तवैव भूत्यै।**
**रत्नाकरायाम्बुधये यथाऽर्घ्यं त्रैलोक्यदीपाय यथा प्रदीपः ॥ ३१ ॥**

**(भा.दी.)** स्वाभिमतं कण्ठत एव निवेदयन्ति– **रामाये**ति। हे नरदेव राजन् दशरथ, स्वभावेन स्वतः नतु वरादिनेत्यर्थः, पूर्णाय पूर्णगुणाय श्रीरामाय राज्यं तत् देहि। स्वभावपूर्णाय प्रदानं निष्फलमित्यत आह– **तवैव भूत्यै** सम्पद इति। श्रीरामाय राज्ये प्रदत्ते सति तेन तवैव मोक्षाद्यैश्वर्यं भवतीति भावः। तत्रानुगुणदृष्टान्तमाहुः– **रत्नाकरायेत्या**दिना। रत्नानामाकर उत्पत्तिस्थानं तस्मै अम्बुधये यथा अर्घ्यं अर्घ्य-जलं तद्वत्। यथा त्रैलोक्यस्य दीप इव त्रैलोक्यदीपस्तस्मै सूर्याय प्रदीपः दीपिका यथा तथा देहीति सम्बन्धः। यथा रत्नाकरप्रभाकरयोः जलप्रदीपाभ्यां न किञ्चित्प्रयोजनमथापि स्वभूत्यर्थं जनैर्दीयते, तद्वदेव त्वत्प्रदत्तराज्येन न किञ्चित् परिपूर्णस्य प्रयोजनमथापि स्वभूत्यर्थमेव प्रदेहीति भावः ॥ ३१ ॥

**(सं.चं.)** स्वभावत एव पूर्णाय। त्रैलोक्यं दीपयतीति त्रैलोक्यदीपः सूर्यः। सर्गेऽस्मिन्नुपजातिश्छन्दः। नवम उपेन्द्रवज्रा। द्वितीये पञ्चदशे एकान्नविंशे द्वाविंशे चेन्द्रवज्रा ॥ ३१ ॥

**इति वसिष्ठगरिष्ठसभाजनैरभिहितः[1] स्थिररामसभाजनैः।**
**दशरथस्तनयाय महीमतः[2] प्रतिददौ सुनयाय महीमतः ॥ ३२ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्क्षरामायणे**
**अयोद्ध्याकाण्डे प्रथमः सर्ग्गः ॥**

—०—

**(भा.दी.)** इति जनैरभिहिते सति दशरथः किं चकारेत्यत आह– **इती**ति। स्थिरं रामस्य सभाजनं सम्भावना येषु ते स्थिररामसभाजनास्तैः। वसिष्ठः गरिष्ठः प्रधानो येषां ते तथोक्ताः, सभायामुपविष्टा जनाः सभाजनाः, ततो वसिष्ठगरिष्ठाश्च ते सभाजनाश्चेति कर्मधारयस्तैः, इति एवमादिप्रकारेण अभिहितः, महः उत्सव अस्यास्तीति मही, पुत्रगुणश्रवणमहोत्सवयुक्त इत्यर्थः। मतः सर्वलोकेषु प्रख्यातः दशरथः। शोभनो नयो

१. **'–जनैरभिहिते'**

२. **'मही मतः'** इति भिन्नपदत्वं वि.ती.टीकाभिमतम्।

रीतिर्यस्य स सुनयस्तस्मै । तनयाय श्रीरामाय अतः सभातळात्, श्रीरामाभिषेचनात् पूर्वं सर्वेषां जनानां पुरस्तादेवेत्यर्थः, महीं भूमिं प्रतिददौ सर्वथा श्रीरामस्यैवेदं राज्यमित्यादिवाचा दत्तवान् ॥ ३२ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायामयोध्याकाण्डे प्रथमः सर्गः ॥**

—०—

**(सं.चं.)** वसिष्ठप्रमुखैः सभागतैर्जनैः । स्थिरं रामे दर्शितसभाजनैः । सभाजनं सौहार्दम् । इत्यभिहितः । मह्यां मतः सर्वाभिमतः दशरथः । अतः ऐककण्ठ्येन रामाभिषेकायानुमतिदानादेव कारणात् । महीं प्रतिददौ । प्रतिज्ञया ददौ । रामाय महीं दास्यामीति प्रतिजज्ञ इत्येतत् । पादान्त्ययमकम् । नभौ भरौ द्रुतविलम्बितम् ॥ ३२ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामयोध्याकाण्डे प्रथमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– ४२२+३२=४५४]

# द्वितीयः सर्ग्गः

**इति वाक्यस्य तस्यान्ते हृष्यतां तत्र नृत्यताम् ।**
**महाजनानां शब्दोऽभूत् परितः साधुसाध्विति ॥ १ ॥**

**(भा.दी.)** श्रीरामे जनानुरागं दर्शयति– **इतीति** । इति तस्य दशरथप्रोक्तस्य वाक्यं वचस्तस्य अन्तोऽवसानं तस्मिन्, तत्र सभायां हृष्यतां सन्तोषं कुर्वताम्, अत एव नृत्यतां च, महान्तो ये जनास्तेषाम्, साधु सम्यक् साधु सम्यक् इति शब्दः परितः अभूत् ॥ १ ॥

**(सं.चं.)** तस्य वसिष्ठप्रमुखैः प्रोक्तस्य वाक्यस्य । दशरथप्रोक्तस्य वा । परितः सर्वत्र । साधुसाध्विति शब्दोऽभूत् ॥ १ ॥

**पुत्रेऽनुरागमालोक्य जनानां स जनेश्वरः ।**
**हारैरिव बभौ पन्नैरानन्दास्रोदबिन्दुभिः ॥ २ ॥**

**(भा.दी.) पुत्र** इति । जनेश्वरः सः, पुत्रे श्रीरामे, जनानां अनुरागः स्नेहस्तम् आलोक्य, पन्नैः पतितैः आनन्दस्य अस्रं अश्रु तस्य उदानि उदकानि तेषां बिन्दवस्तैः हारैरिव बभौ ॥ २ ॥

**(सं.चं.)** पन्नैः वक्षसि गलितैः आनन्देन जातैरास्रोदबिन्दुभिः, पन्नैः सूत्रात् प्रच्युतैः हारैः मुक्तामणिभिरिव बभौ ॥ २ ॥

**स वरिष्ठान् वसिष्ठादीन् ब्राह्मणानिदमब्रवीत् ।**
**यौवराज्येऽभिषेक्ष्यामि रामं राजीवलोचनम् ॥ ३ ॥**

**(भा.दी.) स** इति । सः दशरथः वरिष्ठान् श्रेष्ठान् वसिष्ठादीन् ब्राह्मणान् प्रति इदं वक्ष्यमाणं वचः अब्रवीत् । अहं राजीववत् कमलवल्लोचने यस्य तथा तं श्रीरामम्, युवा चासौ राजा च युवराजस्तस्य भावस्तत्वं तस्मिन्, श्वस्तनराजत्व इत्यर्थः, अभिषेक्ष्यामि अभिषेकं करिष्यामि । षिच सेचने लृट् ॥ ३ ॥

(सं.चं.) यौवराज्ये शौवस्तिकराजत्वे । अभिषेक्ष्यामि अभिषेक्तुमिच्छामि । सनर्थेऽपि लृङिष्यते ॥ ३ ॥

**श्वोभूते [१]पुष्ययोगोऽयं चैत्रेऽस्मिन् मासि शस्यते ।**
**तत्राभिषेक्तुं सम्भारा[२] आदिश्यन्तां यथाविधि ॥ ४ ॥**

**(भा.दी.) श्व** इति । चित्रायाः सम्बन्धी चैत्रस्तस्मिन् । यस्मिन् मासे पौर्णमास्यां चित्रानक्षत्रयोगः स चैत्र इत्युच्यते । अस्मिन् वर्तमाने मासि । 'पद्दन्नो–' (अ.सू.६.१.६३) इति मासशब्दस्य मासादेशः । श्वः श्वस्तने भूते जाते सति अयं पुष्ययोगः पुष्यनक्षत्रसम्बन्धः शस्यते शुभकर्मणि प्रशस्यते । शंस स्तुतौ लट् । तत्र तस्मिन् मुहूर्ते अभिषेक्तुं सम्भाराः साधनद्रव्याणि, विधिमनतिक्रम्य यथाविधि, शास्त्रोक्त-प्रकारेणेत्यर्थः, आदिश्यन्तां आज्ञाप्यन्ताम् । दिश अतिसर्जने लोट् ॥ ४ ॥

**(सं.चं.)** अद्य रामस्य जन्मर्क्षमिति श्वोभूते श्वस्तने दिने पुष्ययोगो भविष्यति । स च जन्मर्क्षतो द्वितीय इति रामस्य सम्पत्करतया प्रशस्यते । अतस्तत्राभिषेक्तुमपेक्षिताः सम्भाराः । आदिश्यन्ताम्, अधिकृतानादिश्य सङ्गृह्यन्ताम् ॥ ४ ॥

**उक्तो दशस्यन्दनेन शतानन्दस्य नन्दनः[३] ।**
**आभिषेचनिकान् नानासम्भारानादिशद् द्रुतम् ॥ ५ ॥**

**(भा.दी.) उक्त** इति । दशदिक्षु स्यन्दनो रथो यस्य स तथोक्तस्तेन उक्तः शतानन्दनन्दनः चतुर्मुखपुत्रः वसिष्ठः, अभिषेचनस्य सम्बन्धिनः आभिषेचनिकास्तान्, राज्याभिषेकयोग्यानित्यर्थः । नानाविधा ये सम्भाराः साधनानि तान्, द्रुतं यथा भवति तथा, आदिशत् । दिश अतिसर्जने लङ् ॥ ५ ॥

**(सं.चं.)** शतानन्दस्य चतुर्मुखस्य नन्दनो वसिष्ठः । आदिशत् सङ्ग्रहीतुमादेशं ददौ ॥ ५ ॥

**वस्त्ररत्नानि[४] नूत्नानि मधु सर्वौषधानि च ।**
**शातकुम्भमयैः कुम्भैः शतं तीर्थोदकानि च ॥ ६ ॥**

---

१. **'श्वोभूते परेद्युः प्रातःकाले, अयं प्रमाणप्रसिद्धः पुष्ययोगः पुष्यनक्षत्रेण चन्द्रमसः सम्बन्धः'** इति का.श्री. ।

२. **'तत्राभिषेकसम्भाराः'** । **'सम्भारानादिश्यन्ताम्'** इति लिपिकृत्प्रमादजः पाठः ।

३. **'–नेन स शतानन्दनन्दनः'** इति स्यादपि वि.ती.पाठः ।

४. **'नूतनानि वस्त्ररत्नानि वस्त्रश्रेष्ठानि'** इति च का.श्री. ।

**(भा.दी.) वस्त्रेति** । नूत्नानि नूतनानि वस्त्राणि रत्नानि च तानि, मधु क्षौद्रं तत्, सर्वाणि यानि औषधानि तानि च, कलशस्य कषायोदकौषधद्रव्याणीत्यर्थः । शातकुम्भस्य सुवर्णस्य विकाराः शातकुम्भमयास्तैः कुम्भैः कलशैः । शतं शतसङ्ख्याकानि तीर्थानां चतुःसमुद्रगङ्गादितीर्थानामुदकानि च ॥ ६ ॥

**(सं.चं.)** नूत्नानि वस्त्ररत्नानि । श्रेष्ठवस्त्राणि । राजार्हाणि । औषधानि उशीरमांसीकुष्ठह्रीबेरमुरादीनि । शातकुम्भमयैः कनकमयैः कलशैः । शतशब्दो बहुत्वववचनः । भाषायां 'ನೂರಾರು' इति यथा ॥ ६ ॥

**यच्चान्यद् विविधं द्रव्यं वसिष्ठस्याऽज्ञया तदा ।**
**सर्वं सम्पादयामासुः पुरुषाः शीघ्रकारिणः ॥ ७ ॥**

**(भा.दी.) यदिति** । विविधं यच्च अन्यत् द्रव्यं अभिषेकोपयोगि तत् सर्वं च शीघ्रकारिणः पुरुषाः वसिष्ठस्य आज्ञया तदा अभिषेककाले सम्पादयामासुः सम्पादितवन्तः । पद गतौ लिट् ॥ ७ ॥

**(सं.चं.)** अन्यच्च आभिषेचनिकम् । तदा पूर्वस्मिन्नेव दिने, वसिष्ठादेशसमनन्तरमेव सपदि ॥ ७ ॥

**समानय सुमन्त्राऽशु रामं मम मनोरमम् ।**
**राज्ञ इत्याज्ञया मन्त्री रामधाम रथी ययौ ॥ ८ ॥**

**(भा.दी.) समिति** । हे सुमन्त्र, मम मनः रमयतीति मनोरमस्तं श्रीरामम् आशु समानय । राज्ञ इति आज्ञया मन्त्री सुमन्त्रः, रथोऽस्यास्तीति रथी, रथारूढः सन्नित्यर्थः, श्रीरामस्य धाम गृहं तत् ययौ । या प्रापणे लिट् ॥ ८ ॥

**(सं.चं.)** इति राज्ञ आज्ञया । मन्त्री रथमारुह्य रामस्य धाम ययौ ॥ ८ ॥

**प्राञ्जलिः कञ्जनाभाय पितुराज्ञां न्यवेदयत् ।**
**स यावत् तावदेवायं देवोऽध्यास्त रथं च तम् ॥ ९ ॥**

**(भा.दी.) प्राञ्जलिरिति** । सः सुमन्त्रः यावत् यदा, प्रकृष्टः अञ्जलिर्यस्य स तथा सन्, कञ्जं कमलं नाभौ यस्य स तथा तस्मै, श्रीरामाय पितुः आज्ञां शीघ्रमागच्छतु भवानित्याज्ञारूपां वाचं न्यवेदयत् विज्ञापितवान् । 'विद चेतनाख्याननिवसनेषु'[1] लङ् । तावदेव तदैव, देवः अयं श्रीरामः, तं सुमन्त्रानीतं रथं

१. आत्मनेभाषोऽयं धातुः । तेन **'विद ज्ञाने'** इत्यस्य णिचि रूपमिति वक्तुमुचितम् ।

अध्यास्त आस्थितोऽभूच्च। आस उपवेशने लङ्। 'अधिशीङ्स्थासां कर्म' (अ.सू.१.४.४६) इत्यधिकरणस्य कर्मसञ्ज्ञायां कर्मणि द्वितीयेति द्वितीया । रथस्थितोऽभूदित्यर्थः ॥ ९ ॥

**(सं.चं.)** कञ्जनाभाय रामावताराय कमलनाभाय । प्राञ्जलिः प्रबद्धाञ्जलिः । पितुराज्ञां यावन्न्यवेदयत् तावदध्यास्त । तदैव पितुराज्ञाश्रवणसमकालमेव, अविलम्बेन । तेन पितरि गौरवातिशयमाह । तं च तमेव रथम्, यं सुमन्त्र आरुह्याऽजगाम । पुना रथान्तरानयनेन मा विलम्बो भूदिति ॥ ९ ॥

**सार्वभौमः परीतोऽसौ सामन्तैः स्वैः[1] समन्ततः ।**
**प्रासादे सुप्रसन्नात्मा[2] ददर्शाऽयान्तमात्मजम् ॥ १० ॥**

**(भा.दी.)** **सार्वभौम** इति । स्वैः स्वकीयैः सामन्तैः मण्डलाधिपतिभिः समन्ततः परीतः परिवृतः । सर्वभूमेरीश्वरः सार्वभौमः, चक्रवर्तीत्यर्थः । प्रासादे सौधे । 'गृहमिष्टकादिरचितं प्रासादो देवतानरेन्द्राणाम्' इति हलः । स्थित इति शेषः । सुप्रसन्न आत्मा मनो यस्य स तथा असौ दशरथः, आयान्तं आगच्छन्तं आत्मजं पुत्रं श्रीरामं ददर्श, दृशेर्लिट् । ॥ १० ॥

**(सं.चं.)** सर्वभूमेरीश्वरः सार्वभौमः । सर्वभूमौ विदितः सार्वभौमः । तथाहि पाणिनिः– 'तस्येश्वरः । तत्र विदित इति च' (अ.सू.५.१.४२–४३) इति । प्रासादे स्थितः ॥ १० ॥

**इन्दीवरोदरप्रख्यमिन्दिरायाः प्रलोभनम्[3] ।**
**अमन्दचन्द्रवदनं मन्दहासं निसर्गतः ॥ ११ ॥**

**(भा.दी.)** कीदृशं श्रीराममित्यत आह– **इन्दीवरोदरे**त्यादिना । इन्दीवरस्य नीलोत्पलस्य यदुदरं गर्भस्तस्य प्रख्यः समानस्तम् । 'इन्दीवरश्च नीलेऽस्मिन्' इत्यमरः । नीलोत्पलवत् श्यामळ इत्यर्थः । इन्दिरायाः प्रलोभनं मनोमुषम् । अमन्दः परिपूर्णो यश्चन्द्रस्तद्वद् वदनं यस्य स तथा तम् । निसर्गादिति निसर्गतः स्वभावतः, मन्दः (अल्पः) यो हासो यस्य स तथा तम्, श्रीरामं ददर्शेति सम्बन्धः ॥ ११ ॥

**(सं.चं.)** इन्दीवरोदरदलवन्नीलवर्णम्, इन्दिरायाश्चित्तचोरम् । अमन्दः पूर्णश्चन्द्रः । निसर्गतो मन्दहासम् । नतु बलादानीय प्रदर्शितः कृत्रिमो मन्दहासोऽस्य । नापि कदाऽपि विकटमट्टं हसति ॥ ११ ॥

**सिंहसंहननं वीरं मत्तमातङ्गगामिनम् ।**
**उत्तमं सर्वलोकानां पद्मपत्रारुणेक्षणम् ॥ १२ ॥**

१. **'सामन्तैस्तैः'** २. **'स प्रसन्नात्मा'** । **'प्रासादेषु प्रसन्नात्मा'** इति क्वचित् । ३. **'–मिन्दीवरविलोचनम् ।'**

**(भा.दी.) सिंहे**ति । सिंहसंहननं अत्युत्तमाङ्गरूपोपेतम् । 'वराङ्गरूपोपेतो यः सिंहसंहननो हि सः' इत्य-मरः । वीरम्, मत्तो यो मातङ्गो गजस्तद्वद्गन्तुं शीलमस्यास्तीति तथा तम्, सर्वे ये लोका जनास्तेषां सकाशात् उत्तमम् । पद्मस्य पत्रे दले तद्वदरुणे ईक्षणे यस्य स तथा तं ददर्श ॥ १२ ॥

**(सं.चं.)** सिंहवत् अपीवरं परिपुष्टं बलिष्ठं चास्य संहननं वपुरिति । पद्मपत्रारुणेक्षणं ददर्शाऽयान्तमात्मजमिति पूर्वेणान्वयः । अथवा इन्दीवरोदरप्रख्यमित्यादेः श्लोकपञ्चकस्य राजा सुतमैक्षतेत्युत्तरेणैकान्वयः ॥ १२ ॥

**सर्वाभरणसम्पन्नं सर्वावयवसुन्दरम् ।**
**सर्वेन्द्रियसुखं पुंसां सर्वेश्वरमुपागतम् ॥ १३ ॥**

**(भा.दी.) सर्वे**ति । सर्वाणि यान्याभरणानि कटकमकुटादीनि तैः सम्पन्नं युक्तम् । सर्वे ये अवयवा हस्तपादादयस्तैः सुन्दरम् । पुंसां पुरुषाणां सर्वाणि यानीन्द्रियाणि तेषां सुखं यस्मात् स तथा तम्, दर्शनमात्रेण सर्वप्रीतिजनकमित्यर्थः । सर्वेश्वरं उपागतं सम्प्राप्तं श्रीरामं ददर्श ॥ १३ ॥

**(सं.चं.)** पुंसाम्। पुंस्त्वमविवक्षितम् । स्त्रीपुंसानाम् । सर्वाणीन्द्रियाणि सुखयतीति सर्वेन्द्रियसुखः । रूपेण नयने । मधुरया वाचा श्रोत्रे । दिव्यसौगन्ध्येन नासाम् । गुणानुवर्णने मुखरयन् वाचम् । परवशीकरणेन हृदयानि । प्रबुद्धतया मनांसि चित्तानि च । अत्र कर्णाटानां कर्णमधुरो द्वितीयाक्षरप्रासः ॥ १३ ॥

**अपाङ्गैर्म्मङ्गलकृतं जय रामेत्युपेयुषाम् ।**
**मितभाषणमप्यारात् स्मितपूर्वाभिभाषिणम् ॥ १४ ॥**

**(भा.दी.) अपाङ्गै**रिति । हे राम जय, जि जये लोट्, इति एवमादिप्रकारेण उक्त्वा उपेयुषां शरणा-गतानां अपाङ्गा नेत्रान्तास्तैः मङ्गलमभीष्टं करोतीति मङ्गलकृत् तम्, मितं अक्षरतः परिमितं भाषणमालापो यस्य स तथा तम् । स्मितं पूर्वं यथा भवति तथा भाषितुं शीलमस्यास्तीति तथा तम् । आरात् समीपे ददर्श ॥ १४ ॥

**(सं.चं.)** जयजय रामेति वादंवादं शरणमुपेयुषाम् । कटाक्षवीक्षणेनैव कृतमङ्गलाशंसनम् । अराद् दूरादेव जनतां दृष्ट्वा स्मितपूर्वाभिभाषिणम् ॥ १४ ॥

**जनकं स्वजनौघानां कृतान्तमिव वैरिणाम् ।**
**परं[1] ब्रह्माऽत्मविदुषां सुतं राजा स ऐक्षत[2] ॥ १५ ॥**

१. 'परब्रह्मात्म–'
२. 'राजा तमैक्षत'

**(भा.दी.) जनकमि**ति । सः राजा, स्वस्य ये जना भक्तास्तेषामोघाः समूहास्तेषाम् जनकं पितरम्, वैरमेषामस्तीति वैरिणस्तेषां कृतान्तमिव यमसदृशम्, आत्मानं परमात्मानं विदन्तीति आत्मविद्वांसस्तेषां परं विलक्षणं उत्तमं वा ब्रह्म ब्रह्मभूतं सुतं श्रीरामम् ऐक्षत ॥ १५ ॥

**(सं.चं.)** जनकम् । 'उत्सवेषु च सर्वेषु पितेव परितुष्यति' इति हि रामायणे । कं जनयतीति च जनकः । परमात्मविदुषाम् ॥ १५ ॥

**न राज्ञोऽतृप्यतां नाम नयने नळिनायते ।**
**रामलावण्यपीयूषं पायम्पायं सुदुर्लभम् ॥ १६ ॥**

**(भा.दी.) ने**ति । नळिनवत् कमलवदायते दीर्घे राज्ञः नयने अत्यन्तं दुर्लभं सुदुर्लभं श्रीरामस्य लावण्यमेव पीयूषममृतं तत्, पायम्पायं पीत्वापीत्वा । 'आभीक्ष्ण्ये णमुल् च' (अ.सू.३.४.२२) इति क्त्वाप्रत्ययस्य णमुलादेशे सति, 'नित्यवीप्सयोः'(अ.सू.८.१.४) इति द्विरुक्तिः[१] । न अतृप्यतां (नाम) तृप्तिमती नाभूतां किल । तृप प्रीणने ॥ १६ ॥

**(सं.चं.)** नयने नातृप्यतां न तृप्तिमाप्नुताम् । तृप्तिरलम्बुद्धिः । 'लक्ष्मीलावण्यपीयूषपानपात्रायितेक्षणः' इति पितुः काव्यमनुसरति कविरनेन पद्येन ॥ १६ ॥

**स्यन्दनात् समवस्कन्द्य चारुं चलितकुण्डलम् ।**
**सन्नतं सौधमारुह्य सोऽभ्यनन्दत् स्वनन्दनम् ॥ १७ ॥**

**(भा.दी.) स्यन्दनादि**ति । स्यन्दनो रथस्तस्मात् । 'शताङ्गः स्यन्दनो रथः' इत्यमरः । समवस्कन्द्य अवरुह्य, चारुं मनोहरम्, चलिते कुण्डले यस्य स तथा तम्, सौधः प्रासादस्तं आरुह्य सन्नतं सम्यक् नम्रम्, नमः कुर्वन्तमित्यर्थः, स्वनन्दनं स्वपुत्रं श्रीरामं दृष्ट्वा सः दशरथः अभ्यनन्दत् तुतोष । नदि हर्षे लङ् ॥ १७ ॥

**(सं.चं.)** स्यन्दनादवरुह्य सौधमारुह्य शिरोऽवनम्य नमन्तमभ्यनन्दत् पिता सुतम् ॥ १७–८ ॥

**पाणिभ्यामनुकुर्वद्भ्यां पारिजातस्य पल्लवम्[२] ।**
**ववन्दे स पितुः पादौ नामकीर्त्तनपूर्वकम् ॥ १८ ॥**

---

१. **'आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम्'** इति वार्तिकात् (८.१.१२) द्विरुक्तिरिति तु सुन्दरम् । २. **'पारिजातसुपल्लवम्'** ।

**(भा.दी.) पाणिभ्यामि**ति । सः श्रीरामः, पारिजातः पारिजातवृक्षस्तस्य पल्लवः किसलयस्तं अनुकुरुत इत्यनुकुर्वन्तौ ताभ्याम्, तद्वदतिकोमळाभ्यामित्यर्थः, पाणिभ्यां पितुः पादौ, नाम्नः कीर्तनं नामकीर्तनं तत् पूर्वकं यथा भवति तथा, 'रामनामाऽहमभिवादये' इति नामकीर्तनपूर्वकमित्यर्थः, ववन्दे ॥ १८ ॥

**वन्दनायाऽनतं[१] देवमक्रमापेक्षणो नृपः ।**
**कृत्वा निःसङ्गमुत्सङ्गे परिरेभे मुदा यदा[२] ॥ १९ ॥**

**(भा.दी.) वन्दनाये**ति । तदा वन्दनसमये क्रमस्यापेक्षणमपेक्षा न विद्यते क्रमापेक्षणं यस्य स तथा । आदावालिङ्गनमनन्तरमङ्कारोपणमिति क्रमं स्नेहपारवश्यादननुसरन्नित्यर्थः । यद्वा क्रमो न भवतीत्यक्रमः, युगपदित्यर्थः, अक्रमेण युगपदपेक्षणमपेक्षा यस्य स तथेति वा । आलिङ्गनमङ्कारोपणमित्युभयं युगपदपेक्षमाण इत्यर्थः । नृपः दशरथः वन्दनं नमनं तस्मै, तादर्थ्ये चतुर्थी, आनतं नम्रम् । देवं निर्गतः सङ्गो सङ्गादिदोष-सम्बन्धो यस्मादिति निस्सङ्गस्तं श्रीरामम् । उत्सङ्गो(ऽङ्क)स्तस्मिन् कृत्वा उपवेश्य मुत् सन्तोषस्तया परिरेभे आलिलिङ्गे । रभ राभस्ये लिट् ॥ १९ ॥

**(सं.चं.)** न क्रममपेक्षते । अवरैरभिवादे कृते उत्तमैः यः क्रमः सम्प्रदायागतः आशीर्वचनादिः, तं सम्प्रदायमुल्लङ्घ्य सम्भ्रमातिशयेन सपदि तमुत्सङ्गे कृत्वा परिरेभे । सङ्गान्निष्क्रान्तो निःसङ्गः ॥ १९ ॥

**तदैवाऽनन्दजैर्बाष्पैरभिषिञ्चन् नृपः[३] सुतम् ।**
**सार्वभौमो भवेत्युक्त्वा कृतकृत्योऽभवद् ध्रुवम् ॥ २० ॥**

**(भा.दी.) तदैवे**ति । तदैव आलिङ्गनसमय एव, आनन्दाज्जाता आनन्दजास्तैः बाष्पैरश्रुभिः सुतं श्रीरामं अभिषिञ्चन् सन् (नृपः), सार्वभौमः चक्रवर्ती भव, इति एवमादिवचः उक्त्वा, कृतं कृत्यं कार्यं येन स तथा अभवत् । ध्रुवं निश्चितम् ॥ २० ॥

**(सं.चं.)** यदा परिरेभे तदैवेति पूर्वश्लोकेनान्वयः । तदैव बाष्पैरभिषिच्य सार्वभौमपदे स्थापयामासेति कृतकृत्यता । सर्वभूमेरीश्वरः सार्वभौमः ॥ २० ॥

**आसीनः पितुरादेशादासने शुद्धकाञ्चने ।**
**जगन्नाथो जगद्दीपं जिगायोदयशैलगम् ॥ २१ ॥**

---

१. **'वन्दनाय नतम्'** २. **'मुदा तदा'** इति वि.ती.पाठ इति भाति । ३. **'–रभ्यषिञ्चन्नृपः'**

**(भा.दी.) आसीन** इति । पितुः आदेश आज्ञा तस्मात् । शुद्धं च तत् काञ्चनं च तस्मिन्, निर्मलस्वर्णमय इत्यर्थः । आसने आसीनः जगन्नाथः श्रीरामः, उदयनामको यः शैलस्तं गच्छतीति तथा तम्, जगद्दीपयति प्रकाशयतीति जगद्दीपः सूर्यस्तं जिगाय जितवान् । जि जये लिट् ॥ २१ ॥

**(सं.चं.)** शुद्धकाञ्चने पुटपाकस्फुटिते उद्यद्भास्वद्वद्दीषल्लोहिते काञ्चननिर्मिते आसने । जिगाय कान्त्याऽत्यशेत ॥ २१ ॥

**रामेन्दुना कृतानन्दान्नरेन्द्रकुमुदाकरात्[१] ।**
**वचःपरिमळो जज्ञे सभाजनसभाजितः ॥ २२ ॥**

**(भा.दी.) रामे**ति । रामेन्दुना श्रीरामाख्येन्दुना कृत आनन्दो यस्य स तथा तस्मात् । नरेन्द्र एव दशरथ एव कुमुदाकर इव कुमुदपुष्पाणामाश्रयीभूतः सर इव तस्मात् । सभायां विद्यमाना ये जनास्तैः सभाजितः सत्कृतः, वच एव वाक्यमेव परिमळः जज्ञे । जनी प्रादुर्भावे लिट् ॥ २२ ॥

**(सं.चं.)** कुमुदाकरात् सरोवरात् । सभागतैर्जनैः सभाजितः सम्मानितो वचःपरिमळः ॥ २२ ॥

**यौवराज्यच्छलेन त्वां साम्राज्ये सद्गुणान्वितम् ।**
**अभिषेक्ष्यामि वत्साहमनुमोदस्व कर्म्म तत् ॥ २३ ॥**

**(भा.दी.) यौवराज्ये**ति । हे वत्स श्रीराम, (अहं) सन्तो ये गुणा शौर्यादयस्तैरन्वितं युक्तं त्वाम् । युवा चासौ राजा च युवराजस्तस्य भावस्तत्त्वं तदेव च्छलं व्याजः तेन, श्वस्तनराजत्वव्याजेनेत्यर्थः । सम्राजो भावः साम्राज्यं तस्मिन्, सार्वभौमत्व एवेत्यर्थः, अभिषेक्ष्यामि अभिषेकं करिष्यामि । षिच सेचने लृट् । त्वं तत् अभिषेकाख्यं कर्म अनुमोदस्व अनुमतिं कुरु ॥ २३ ॥

**(सं.चं.)** आत्मानं वयोगतं मत्वा युवानं राजानं त्वां कुर्वन् तद्व्याजेन । युवराज इति व्यपदेशमात्रम् । वस्तुतस्त्वमेव राजा । अहं तु राजकार्यात् सर्वात्मना निवृत्तो भविष्यामीत्यर्थः ॥ २३ ॥

**भारक्षमे त्वयि न्यस्य भारं भूभरणाह्वयम् ।**
**प्रवया मन्दयत्नोऽहं विश्रमिष्यामि नन्दन ॥ २४ ॥**

---

१. **'यथा चन्द्रोदये जाते तेन विकसितकुमुदाकरात् परिमल उत्पद्यते तथा रामेन्दुना जातसन्तोषाद् दशरथाख्यकुमुदाकराद् वागाख्यपरिमलोऽभूदिति भावः'** इति का.श्री. ।

**(भा.दी.) भारे**ति । हे नन्दन, भारक्षमे राज्यपरिपालनादिलक्षणभारस्य क्षमे वहनसमर्थे त्वयि भुवः भरणं रक्षणमिति आह्वयो नाम यस्य स तथा तं भारं न्यस्य निधाय । प्रगतं वयो यस्य स तथा वृद्ध इत्यर्थः । अत एव मन्दः स्वल्पः यत्नः प्रयत्नो यस्य स तथा अहं विश्रमिष्यामि विश्रमणं करिष्यामि । तपश्चरिष्यामीति वा । श्रमु तपसि खेदे च लृट् ॥ २४ ॥

**(सं.चं.)** भूभरणाह्वयम् भूलोकगतजीवजातरक्षणाख्यं भारं धुरम् । मन्दयत्नः समस्तभूभारवहने प्रयतमानोऽप्यप्रभवन् क्षीणसामर्थ्यः । प्रवयस्त्वादेव । अत एव विश्रान्तिमिच्छामि ॥ २४ ॥

**इति तातगिरं रामो बाढमित्यभिनन्द्य ताम्[1] ।**
**प्राप स्वधाम राजाऽपि विवेशान्तःपुरं ततः ॥ २५ ॥**

**(भा.दी.) इती**ति । श्रीरामः इति अभिहितां तातस्य पितुर्गीर्वाक् तां बाढमिति तथाऽस्त्विति अभिनन्द्य सन्तोष्य, अङ्गीकृत्येति वा । स्वस्य धाम मन्दिरं तत् प्राप । ततः राजाऽपि दशरथोऽपि पुरस्य मन्दिरस्य अन्तः अन्तःपुरं तत् । 'आगारे नगरे पुरम्' इत्यमरः । विवेश । विश प्रवेशने लिट् ॥ २५ ॥

**(सं.चं.)** अभिनन्द्य अभिनन्दनपूर्वकमङ्गीकृत्य–'अङ्गीक्रियते भवदुक्तं पितुर्वचनगौरवात्' इति । रामः स्वधाम प्राप । ततः रामेण स्वोक्तस्याभ्युपगमेन भृशं परितुष्टो राजाऽपि ॥ २५ ॥

**दुर्न्निमित्तैर्न्निमित्तज्ञश्चिन्तामाप[2] महीपतिः ।**
**पुनश्च पुत्रमाहूय रहो राममभाषत ॥ २६ ॥**

**(भा.दी.) दुरि**ति । निमित्तानि शकुनानि जानातीति निमित्तज्ञः महीपतिः दशरथः दुष्टानि निमित्तानि दुर्निमित्तानि तैः चिन्तां आप । चिन्ताश्रान्त इति क्वचित्पाठः । पुनश्च पुत्रं श्रीरामं आहूय रहः एकान्ते अभाषत । भाष व्यक्तायां वाचि लङ् ॥ २६ ॥

**(सं.चं.)** मृतिसूचकैर्दुर्निमित्तैः ॥ २६–७ ॥

**इष्टं दत्तं मया भुक्तं स्वधर्म्मश्च स्वनुष्ठितः ।**
**नूनं मे दुर्ल्लभं तात तत्फलं तेऽभिषेचनम् ॥ २७ ॥**

१. **'बाढमित्यभ्यनन्दत'**

२. **'–श्चिन्ताश्रान्तो महीपतिः'** इति, **'चिन्तातान्तो महीपतिः'** इति च क्वचित् ।

**(भा.दी.)** श्रीरामं प्रति किमाहेत्यत आह– **इष्टमि**ति । हे तात श्रीराम, मया इष्टं यज्ञादिकमकारि । गोभूहिरण्यादिकं सत्पात्रे दत्तम् । भुक्तम् अनिषिद्धविषयजातमनुभूतम् । स्वधर्मश्च स्ववर्णाश्रमोचित-धर्मश्च स्वनुष्ठितः, सुष्ठु अनुष्ठितः आचरितः । तत्फलं तेषां यज्ञादीनां फलं फलभूतं ते तव अभिषेचनं दुर्लभं अलभ्यम् (नूनम्) ॥ २७ ॥

**अमङ्गलनिमित्तानि[१] स्वाप्नजागरणानि[२] च ।**
**भवन्ति मृतिशंसीनि कार्य्यविघ्नकराणि च ॥ २८ ॥**

**(भा.दी.)** कुत इत्यत आह–**अमङ्गले**ति । स्वप्ने स्वप्नावस्थायां भवानि स्वाप्नानि तानि च, जागरणं जागृद-वस्था तस्मिन् भवानि जागरणानि तानि च, मृतिं मरणं शंसितुं सूचयितुं शीलमेषामस्तीति तथोक्तानि तानि, कार्यस्य ये विघ्नास्तान् कुर्वन्तीति तथा तानि, अमङ्गलनिमित्तानि अशुभनिमित्तानि भवन्ति ॥ २८ ॥

**(सं.चं.)** अमङ्गलानि निमित्तानि शकुनानि । स्वप्नभवानि जागरणभवानि च ॥ २८ ॥

**शान्ताः स्युरन्तराया मे वासुदेवप्रसादतः ।**
**सह वध्वा त्वया त्वद्य दीक्षा कार्य्योपवासिना ॥ २९ ॥**

**(भा.दी.) शान्ता** इति । मे मम अन्तरायाः विघ्नाः, वासुदेवस्य प्रसादोऽनुग्रहस्तस्मादिति ततः, शान्ताः परिहृताः स्युः भवेयुः । उपवासः अनशनव्रतमस्यास्तीति तथा तेन त्वया तु वध्वा भार्यया सीतया सह । ‘वधूर्जाया स्नुषा स्त्री च’ इत्यमरः । अद्य दीक्षा व्रतसङ्ग्रहः कार्यः ॥ २९ ॥

**(सं.चं.)** विघ्ननिवारणाङ्गभगवत्पूजादीक्षा कार्या ॥ २९ ॥

**इत्थं पित्रोपदिष्टः स मातुरन्तःपुरं गतः[३] ।**
**ददर्श तत्र कौसल्यां नारायणपरायणाम् ॥ ३० ॥**

**(भा.दी.) इत्थमि**ति । इत्थं पित्रा उपदिष्टः प्रोक्तः, मातुः कौसल्यायाः अन्तःपुरं मन्दिरान्तस्तत्, गतः प्राप्तः सः श्रीरामः, तत्र अन्तःपुरे नारायणः परायणः परमाश्रयो यस्याः सा तथा तां श्रीनारा-यणाराधनेऽत्यन्तमासक्तामित्यर्थः, कौसल्यां ददर्श ॥ ३० ॥

१. **‘अमङ्गलं प्रति निमित्तानि अमङ्गलनिमित्तानि’** इति का.श्री. । २. **‘स्वप्नजागरणानि’** ३. **‘–पुरं ययौ’** ।

**(सं.चं.)** स्वभावतः नारायणपरायणाम् । तदात्वे च नारायणपूजापरायणाम् ॥ ३० ॥

**पुत्रस्याभ्युदयं श्रुत्वा पूजयन्तीमधोक्षजम् ।**
**देवीं सुमित्रासहितां स ववन्दे सलक्ष्मणः ॥ ३१ ॥**

**(भा.दी.) पुत्रस्येति** । पुत्रस्य श्रीरामस्य अभ्युदयः यौवराज्याभिषेकलक्षणश्रेयस्तं श्रुत्वा अधोक्षजं श्रीहरिं पूजयन्तीं सुमित्रासहितां देवीं कौसल्यां सलक्ष्मणः लक्ष्मणसहितः स श्रीरामः ववन्दे ॥ ३१ ॥

**(सं.चं.)** सलक्ष्मणो ववन्दे । ससीतश्च । तथा हि वक्ष्यति । लक्ष्मणोऽपि सुमित्रासहितां देवीं ववन्दे । सीताऽपि ॥ ३१ ॥

**तावत् सा वाग्यता देवी रामाभ्युदयकाङ्क्षिणी ।**
**अब्रवीद् बाष्पपूर्णाक्षी प्रेम्णा प्रियतमं सुतम् ॥ ३२ ॥**

**(भा.दी.) तावदिति** । तावत् तदा वाक् यता नियमिता यया सा वाग्यता, मौनवतीत्यर्थः, श्रीरामस्य अभ्युदयः श्रेयः काङ्क्षितुं शीलमस्या अस्तीति तथोक्ता सा देवी कौसल्या बाष्पेण आनन्दाश्रुणा पूर्णे अक्षिणी यस्याः सा तथा सती, प्रेम प्रीतिस्तेन, अतिशयेन प्रियः प्रियतमस्तं सुतं श्रीरामं अब्रवीत् ॥ ३२ ॥

**(सं.चं.)** पूजानिमित्तं तावत्पर्यन्तं वाग्यता धृतमौना पुत्रं दृष्ट्वा प्रेम्णा मौनं भङ्क्त्वाऽब्रवीत् ॥ ३२ ॥

**स्वस्ति वत्स[१] चिरं राम सतः पाह्यसतो जहि ।**
**जगतीनाथ[२] जगतीं पाहीमां पुत्रिकामिव ॥ ३३ ॥**

**(भा.दी.) स्वस्तीति** । हे वत्स श्रीराम, तुभ्यं स्वस्ति मङ्गलं भूयात् । चिरं दीर्घकाले सतः सज्जनान् पाहि । पा रक्षणे लोट् । असतः असज्जनान् जहि शिक्षय । हन हिंसागत्योः लोट् । जगत्याः पृथिव्याः नाथ श्रीराम, इमां जगतीं भूमिं पुत्रिकामिव सुतामिव पाहि रक्ष ॥ ३३ ॥

**(सं.चं.)** स्वभावतस्त्वं जगतीनाथ इति न वक्तव्यमेतत् । अथापि पुत्रवात्सल्यं मुखरयतीत्याह ॥ ३३ ॥

**इति पुत्राशिषः प्रोच्य चक्रे साऽभ्युदयक्रियाः ।**
**आमन्त्र्य लक्ष्मणं रामः ससीतः स्वगृहं ययौ ॥ ३४ ॥**

---

१. 'स्वस्ति तेऽस्तु चिरम्' २. 'जगतां नाथ'

**(भा.दी.)** **इती**ति । सा कौसल्या इति पुत्रस्य आशिषः शुभवाक्यानि ताः प्रोच्य, अभ्युदयस्य श्रीरामस्य श्रेयसः साधनभूताः क्रियाः अभ्युदयक्रियास्ताः हर्यर्चनादीः चक्रे । ससीतः सीतासहितः श्रीरामः लक्ष्मणं आमन्त्र्य गृहगमनं प्रति अनुज्ञाप्य स्वगृहं स्वमन्दिरं तत् ययौ ॥ ३४ ॥

**(सं.चं.)** आमन्त्र्य स्वगृहगमनायानुज्ञां प्रदाय ॥ ३४ ॥

**पुरोहितो ब्रह्मसुतस्त्वरितो राज्ञ आज्ञया ।**
**रमारमणधामाभं रामधामाभ्यपद्यत ॥ ३५ ॥**

**(भा.दी.)** **पुरोहित** इति । राज्ञो दशरथस्य आज्ञया, पुरोहितः ब्रह्मणश्चतुर्मुखस्य सुतः वसिष्ठः त्वरितः वेगितः सन्, रमायाः रमणो भर्ता श्रीहरिस्तस्य धामवद् गृहवदाभा कान्तिर्यस्य स तथा तत् रामधाम राममन्दिरं प्रति अभ्यपद्यत जगाम । पद गतौ लङ् ॥ ३५ ॥

**(सं.चं.)** रमारमणधामाभं वैकुण्ठसदृशम् ॥ ३५ ॥

**आसनात् सहसोत्थाय श्रीमान् विनयभूषणः ।**
**गुरुं जगत्त्रयगुरुः पूजयामास शास्त्रतः ॥ ३६ ॥**

**(भा.दी.)** **आसनादि**ति । श्रीमान् विनयो भूषणमलङ्कारो यस्य स तथा । 'विनयो धर्मविद्याधीशिक्षाचारप्रशान्तिषु' इति वैजयन्ती । जगतां त्रयं तस्य गुरुः श्रीरामः आसनं पीठं तस्मात् सहसा उत्थाय शास्त्रतः शास्त्रानुसारेण गुरुं वसिष्ठं पूजयामास अर्घ्याद्युपचारेण पूजां चक्रे ॥ ३६ ॥

**(सं.चं.)** जगत्त्रयगुरुरपि गुरुषु विनेयेन कथं वर्तितव्यमिति लोकशिक्षार्थम् ॥ ३६ ॥

**आभिषेचनिकीं दीक्षां दक्षः प्राप्य विधानतः ।**
**प्रददौ कनकाकल्पमाचार्य्यायायुतं गवाम् ॥ ३७ ॥**

**(भा.दी.)** **आभी**ति । दक्षः समर्थः श्रीरामः आभिषेचनिकीं राज्याभिषेचनसम्बन्धिनीं दीक्षां व्रतपरिग्रहं विधानतः शास्त्रोक्तविधानेन प्राप्य, कनकमय आकल्प आभरणं कनकाकल्पस्तम्, गवां धेनूनां अयुतं दशसहस्राणि तच्च आचार्याय पुरोहिताय वसिष्ठाय प्रददौ ॥ ३७ ॥

**(सं.चं.)** कनकाकल्पं कनकमण्डितशृङ्गं धेनूनां वृषभाणां चायुतं दश सहस्राणि ॥ ३७ ॥

**हुत्वा भुक्त्वा हविष्यान्नं सपत्नीक उपोषितः ।**
**दध्यौ रामः स्वमात्मानं[१] ज्योतिर्नारायणाह्वयम् ॥ ३८ ॥**

**(भा.दी.)** हुत्वेति । सपत्नीकः सभार्यः उपोषितः कृतोपवासः श्रीरामः हुत्वा हवनं कृत्वा, हविष्यं यदन्नं तत् भुक्त्वा, स्वं स्वरूपभूतं आत्मानं सर्वस्वामिनं नारायण इति आह्वयो यस्य तत्तथा तत् ज्योतिः तेजः दध्यौ । ध्यै चिन्तायां लिट् ॥ ३८ ॥

**(सं.चं.)** प्रसादतया हविःशेषभक्षणादृतेऽन्याहारस्य वर्जनादुपोषितः । रामः स्वयं नारायणाह्वयं ज्योतिः । स स्वयं स्वात्मानमेव दध्यौ । ध्येयान्तरस्याभावात् । ध्यातव्यत्वाच्च लोकशिक्षार्थम् ॥ ३८ ॥

**यतवाक् सह वैदेह्या स्वास्तृते दर्भसंस्तरे ।**
**स शिश्ये [२]शेषशयनस्तां निशामृषिवाक्यतः ॥ ३९ ॥**

**(भा.दी.) यतवागिति** । यता नियमिता वाक् यस्य स तथा, मौनीत्यर्थः, शेषः पर्यङ्को शयनं यस्य स तथा सः श्रीरामः, वैदेह्या सीतया सह, सुष्ठु आस्तृतः प्रसारितः स्वास्तृतस्तस्मिन्, दर्भाणां संस्तरः प्रस्तरस्तस्मिन् । 'संस्तरौ प्रस्तराध्वरौ' इत्यमरः । दर्भमुष्टावित्यर्थः । ऋषेर्वसिष्ठस्य यद्वाक्यं तस्मादिति ततः, तां निशां तस्यां निशायाम्, अकर्मधातुभिर्योगे देशकाल(स्व)भावेभ्यो वा द्वितीयेति केचिदिति द्वितीया । शिश्ये शयनं चक्रे । शीङ् स्वप्ने लिट् ॥ ३९ ॥

**(सं.चं.)** दर्भसंस्तरे दर्भमय्यां शय्यायाम् । 'प्रस्तरः संस्तरः शय्या' इति यादवप्रकाशः । तां निशां शिश्ये । अत्यन्तसंयोगे द्वितीया ॥ ३९–४१ ॥

**अभूदभूतपूर्वोऽस्यामयोध्यायां महोत्सवः ।**
**रामाभिषेकलोलानां लोकानां वदतां मिथः ॥ ४० ॥**

**(भा.दी.) अभूदिति** । श्रीरामस्य योऽभिषेकस्तस्मिन् लोलाः लोलुपास्तेषां मिथः परस्परं वदतां सम्भाषणं कुर्वतां लोकानां जनानां अस्यां अयोध्यायाम्, पूर्वं भूतो भूतपूर्वः, भूतपूर्वो न भवतीत्यभूतपूर्वः, पूर्वमेवं न जात इत्यर्थः, (महान्) उत्सवः अभूत् ॥ ४० ॥

---

१. **'आत्मानं व्याप्तं स्वं स्वरूपभूतं ज्योतिः'** इति का.श्री. ।

२. **'शेषपर्यङ्कस्ताम्'** इत्यपि वि.ती.पाठः स्यात् ।

**अर्कोदयेऽभिषेकः स्यात् कदा न्वर्क उदेष्यति ।**
**कदा नु रामं पश्यामः[१] ससीतमभिषेकिणम् ॥ ४१ ॥**

**(भा.दी.)** तदेव विशदयति– **अर्के**ति । अर्कस्य उदयस्तस्मिन् अभिषेकः स्यात् । अर्कः कदा नु उदेष्यति उदयं प्राप्स्यति । इण् गतौ लृट् । ससीतं सीतासहितं अभिषेकोऽस्यास्तीति अभिषेकी तं श्रीरामं कदा नु पश्यामः ॥ ४१ ॥

**इत्यादिवादिनस्तत्र पौरजानपदा[२] जनाः ।**
**सबालवृद्धवनिता रामवार्त्ताः स्म जाग्रति ॥ ४२ ॥**

**(भा.दी.)** **इती**ति । इति आदिर्येषां तानि इत्यादीनि वाक्यानि तानि वक्तुं शीलमेषामस्तीति इत्यादि-वादिनः, बालाश्च वृद्धाश्च वनिताश्च ताभिः सहिताः, पुरि भवाः पौरास्ते च, जनपदे राष्ट्रे भवा जानपदास्ते च जनाः रामस्य वार्ता येषां ते तथा सन्तः तत्र अयोध्यायां जाग्रति स्म जागरणं चक्रुः । जागृ निद्राक्षये लट् ॥ ४२ ॥

**(सं.चं.)** पौराः पुरगताः । जानपदाः नगराद् बहिर्गताः जनाः । रामस्य वार्तैव वार्ता येषामालाप-सर्वस्वम् ॥ ४२ ॥

**प्रतिसद्म प्रतिसभं प्रतिवर्त्म प्रतिव्रजम् ।**
**महोत्सवोत्सुका राममस्तुवन् गणशः प्रजाः ॥ ४३ ॥**

**(भा.दी.)** **प्रती**ति । महान् यः उत्सवस्तस्मिन् उत्सुकाः कौतुकयुक्ताः गणशः प्रजाः । सद्म सद्म प्रति प्रतिसद्म, सर्वगृहेष्वित्यर्थः । सभां सभां प्रति प्रतिसभम्, सर्वसभास्वित्यर्थः । वर्त्म वर्त्म प्रति प्रतिवर्त्म, सर्वमार्गेष्वित्यर्थः । व्रजं व्रजं प्रति प्रतिव्रजम्, सर्वगोष्ठेष्वित्यर्थः । अत्र सर्वत्राप्येवं वीप्सायां वर्तमानस्य प्रतीत्यस्याव्ययीभावसमासस्तत एवाव्ययता च । श्रीरामं अस्तुवन् ॥ ४३ ॥

**(सं.चं.)** सद्मनिसद्मनि प्रतिसद्म । एवं सभायांसभायां प्रतिभमित्यादि । गणशः सङ्घीभूय । प्रतिव्रजम् । व्रज इति सर्वपल्लीनामुपलक्षणम् । पल्लीस्था अपि जनाः प्रतिपल्लि स्वकर्म विस्मृत्य राममस्तुवन् ॥ ४३ ॥

---

१. 'रामं द्रक्ष्यामः'

२. 'पौरा जानपदा–'

**मालाध्वजपताकाद्यैः सम्मार्ज्जैरुपलेपनैः ।**
**सार्वभौमाज्ञया सर्वामलश्चक्रुः पुरीं नराः[१] ॥ ४४ ॥**

**(भा.दी.) माले**ति । नराः तत्रत्यजनाः, मालाश्च ध्वजाश्च [२]पताकाश्च ता आद्या येषां विमानादीनां तानि तथोक्तानि तैः, सम्यक् मार्जाः भूमार्जनानि सम्मार्जाः तैः, भित्त्यादीनां यान्युपलेपनानि तैः सर्वां पुरीं सार्वभौमाज्ञया दशरथाज्ञया अलश्चक्रुः अलङ्कारं कृतवन्तः । डु कृञ् करणे लिट् ॥ ४४ ॥

**(सं.चं.)** मालाद्यैरलङ्कारसाधनैः । रथ्यानां सम्मार्जनैः । भित्त्यादिषु विविधवर्णानामुपलेपनैः । कर्मस्वधिकृता नराः, पौराश्च ॥ ४४ ॥

**रामानुरागामृतभोगतृप्ता न केवलं कोसलमण्डलस्थाः ।**
**त्रयोऽपि लोकाः सकलाः सपालास्त्रैलोक्यनाथो हि स कोसलेन्द्रः ॥ ४५ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**अयोद्ध्याकाण्डे द्वितीयः सर्ग्गः ॥**

—०—

**(भा.दी.) रामे**ति । [३]कोसलानां कोसलविषयाणां यन्मण्डलं प्रदेशस्तस्मिन् तिष्ठन्तीति तथोक्ताः जनाः । श्रीरामेऽनुरागो भक्तिः स एवामृतं तस्य भोगोऽनुभवस्तेन तृप्ताः तृप्तिमन्तः केवलं न । 'अमृतं व्योम्नि देवान्ने यज्ञशिष्टे रसायने' इति वैजयन्ती । किं तर्हि? पालयन्तीति पाला इन्द्रादिदिक्पालाः, तैः सहिताः सपालाः सकलाः त्रयो लोका अपि रामानुरागामृतभोगतृप्ताः आसन् । तत्र हेतुमाह– **स** इति । हि यस्मात् कोसलेन्द्रः सः श्रीरामः त्रैलोक्यनाथो हि । दशरथादिवदस्यापि कोसलमात्राधीशत्वे तत्रत्यानामेव सन्तोषो भवेत् नेतरेषाम् । अयं तु सर्वाधीश्वर इति हेतोस्तस्य राज्याभिषेके उपस्थिते सति सर्वलोकानां सन्तोषोऽभूदिति भावः ॥ ४५ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां**
**भावार्थदीपिकायामयोध्याकाण्डे द्वितीयः सर्गः ॥**

—०—

१. **'पुरीं प्रजाः'**
२. **'पताका अणुध्वजाः'** इति का.श्री. ।
३. **'कोसलानां देशानां मण्डलं समूहः'** इति का.श्री. । कोसलदेश इत्येव साधु व्याख्यानम् ।

**(सं.चं.)** कुतस्त्रयोऽपि लोकाः? यतः स त्रैलोक्यनाथः । प्रथमतुरीययोरिन्द्रवज्रा, द्वितीयतृतीययोरुपेन्द्र-वज्रेत्युपजातिश्छन्दः ॥ ४५ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामयोध्याकाण्डे द्वितीयसर्गविवरणम् ॥**

—o—

[आदितः श्लोकाः– ४५४+४५=४९९]

# तृतीयः सर्ग्गः

**ज्ञातिदास्यथ कैकेय्या गृहे जाता सहोषिता ।**
**कुब्जा प्रासादमारूढा मन्थरा पुरमैक्षत ॥ १ ॥**

**(भा.दी.)** श्रीरामपित्रा दशरथेन दृष्टानां दुर्निमित्तानां फलभूतं श्रीरामयौवराज्याभिषेकान्तरायं वक्तुमुपोद्धातमारचयति– **ज्ञाती**ति । अथ ज्ञातिर्बन्धुभूता च सा दासी चेति ज्ञातिदासी[१] । 'सगोत्रबान्धव-ज्ञातिबन्धुस्वस्वजनाः समाः' इत्यमरः । ज्ञातेर्बन्धुभूतायाः कैङ्कर्यैः[२] दासीति वा । कुब्जा ह्रस्वकाया, कैकेय्या गृहं भवनं तस्मिन् जाता, सह कैकेय्या साकं उषिता, मन्थरा मन्थरानाम्नी, प्रासादो हर्म्यं तम् आरुढा सती, पुरमयोध्यापुरं तत् ऐक्षत । ईक्ष दर्शनाङ्कनयोः लङ् ॥ १ ॥

**(सं.चं.)** ज्ञातिश्च सा दासी च । या बाल्ये धात्री बभूव कैकेय्याः । या कैकेय्या गृह एव जाता, कैकेय्या सहैवोषिता ॥ १ ॥

**तुष्टपुष्टजनं[३] दृष्ट्वा नगरं समलङ्कृतम् ।**
**वाद्यमानमहावाद्यं[४] धात्रीं पप्रच्छ सा खला ॥ २ ॥**

**(भा.दी.) तुष्टे**ति । खला स्वरूपतो दुष्टा[५] सा मन्थरा, तुष्टाश्च ते पुष्टाश्च तुष्टपुष्टाः[६], तादृशा जना यस्मिन् तत् तथोक्तं तत्, समलङ्कृतं सम्यगलङ्कृतम्, वाद्यमानानि महावाद्यानि यस्मिन् तत्तथोक्तं तत्, नगरं वीक्ष्य धात्रीं पूर्वं स्वस्य रक्षाकर्त्रीं काञ्चन स्त्रियम् । 'धात्री स्यादुपमाताऽपि' इत्यमरः । पप्रच्छ विचारितवती । प्रच्छ ज्ञीप्सायां लिट् ॥ २ ॥

---

१. **'कैकेय्याः सगोत्रत्वे सति दासीति यावत्'** इति का.श्री. ।
२. **'कैकेय्याः'** इति पाठः स्यात् ।
३. **'पुष्टहृष्टजनम्' । 'पुष्टतुष्टजनम्'** इति च ।
४. **'वाद्यमानानि ताड्यमानानि वा महावाद्यानि यस्मिन्'** इति च ।
५. **'खला गूढद्वेषिणी । 'अतिदुष्टेति वा'** इति का.श्री. ।
६. **'पुष्टा ऐश्वर्यादियुक्ताः । तुष्टाः सन्तुष्टाः'** इति च ।

**(सं.चं.)** तुष्टाः तृप्ताः । पुष्टा आनन्दतुन्दिलाः । रामोऽभिषेक्ष्यत इत्यानन्दतुन्दिलाः । जीवितस्य महती आशा सम्पन्नेति तृप्ताः । महावाद्यानि दुन्दुभ्यादीनि । रामस्य धात्रीम् । कामपि राजगृहधात्रीं वा । यौवने धात्र्यः परस्तात् दास्यो भवन्ति । वृद्धा दासीति यावत् । पूर्वं स्वस्य धात्रीमिति सर्वे पूर्वव्याख्यातारः । तत्तु चित्ते न लगति । 'ಹಾಡಿ' इति भाषायाम् ॥ २–३ ॥

**कोऽयं महोत्सवो भद्रे पुर्य्यामस्यां प्रवर्त्तते ।**
**राममात्रा कुतो वित्तं विप्रेभ्यो भूरि दीयते ॥ ३ ॥**

**(भा.दी.) क** इति । हे भद्रे शोभने, अस्यां पुर्यां कः अयं महोत्सवः प्रवर्तते? राममात्रा कौसल्यया भूरि बहु वित्तं विप्रेभ्यः कुतः कारणात् दीयते? ॥ ३ ॥

**पृष्टेति धात्री सन्तुष्टा नृत्यन्तीवेदमब्रवीत्[1] ।**
**रामोऽभिषिच्यते हन्त साध्वलङ्क्रियतामिति ॥ ४ ॥**

**(भा.दी.) पृष्टे**ति । इति मन्थरया पृष्टा विचारिता सन्तुष्टा धात्री उपमाता आनन्दातिशयात् नृत्यन्तीव । हे मन्थरे, श्रीरामः अभिषिच्यते, हन्त हर्षे, त्वया च साधु सम्यक् यथा भवति तथा, अलङ्क्रियतां अलङ्कारः क्रियताम् । इति इदं वाक्यमब्रवीत् ॥ ४ ॥

**(सं.चं.)** हन्तेति विस्मयते अनुकम्पने च । रामाभिषेकवार्ताऽपि न श्रुताऽनया मूढयेति ॥ ४ ॥

**व्याळीव यष्टिसंस्पृष्टा व्याघ्रीव हृतपोतका ।**
**चुक्षोभामर्षताम्राक्षी मन्थरा नन्वमन्थरा ॥ ५ ॥**

**(भा.दी.) व्याळीवे**ति । अमन्थरा अमनोहरा, अतिकष्टेत्यर्थः, मन्थरा यष्ट्या दण्डेन संस्पृष्टा ताडिता व्याळीव कृष्णसर्पिणीव, हृताः अपहृताः पोतकाः शिशवो यस्याः सा तथा, व्याघ्रीव, अमर्षेण कोपेन (ताम्रे) रक्ते अक्षिणी यस्याः सा तथा सती चुक्षोभ ननु, कोपोद्रेकाच्चचाल हि । क्षुभ सञ्चलने लिट् ॥ ५ ॥

**(सं.चं.)** यष्टिसंस्पृष्टा दण्डाहता । व्याळी भुजगी । मृगयुभिरपहृतपोतका ॥ ५ ॥

---

१. 'नृत्यन्ती चेदमब्रवीत्'

**साक्षादलक्ष्मीः क्षोणीस्था[१] कस्मिंश्चित् कारणान्तरे ।**
**रामेण चरणे क्षिप्ता जज्ञे रामैकवैरिणी ॥ ६ ॥**

**(भा.दी.)** श्रीरामावतारकालेऽयोध्यायां पशुपक्षितरुगुल्मतृणपिपीलिकादीनामप्यतीतानन्तजन्मार्जित-पुण्यप्रचयातिशयेन चरमदेहं प्राप्तानां श्रीरामैकभक्तानां मध्ये इयमेकैवैवंविधकुत्सितस्वभावा कुतो जातेत्यत-स्तस्याः स्वरूपमाह– **साक्षादि**ति । श्रीरामेण चरणं पादस्तस्मिन् । क्षिप्ता अपविद्धा । यद्यपि 'कर्तृकरणयो-स्तृतीया' (अ.सू.१.३.१८) इत्यनुशासनात् चरणेन क्षिप्तेति वाच्यम् । तथापि विवक्षातः कारकविभक्तयो भवन्तीत्युक्तेः 'कांस्यपात्र्यां भुङ्क्ते', 'कांस्यपात्र्या भुङ्क्ते' इत्यादिप्रयोगदर्शनाच्च करणस्याधिकरणत्वविवक्षया चरणे इत्युक्तम् । श्रीरामेणान्धतमः प्रापणीयेति सङ्कल्पितेत्यर्थः । कस्मिंश्चित् कारणस्यान्तरं विशेषस्तस्मिन्, निमित्तसप्तमीयम् । 'अन्तरः परिधानीयेऽबाह्ये स्वीयेऽन्तरात्मनि । क्ली तु मध्येऽवकाशे च तादर्थ्येऽवसरेऽ-वधौ । विशेषविवरान्तर्द्धिषु' इति वैजयन्ती । 'भूमावुत्पन्ना सती श्रीरामाभिषेकं विलुम्प, ततश्च स्वयोग्य-गतिर्भविष्यति' इति तपसाऽप्सरस्त्वं प्रयातामलक्ष्मीं प्रति यच्चतुर्मुखवचनं तल्लक्षणकारणविशेषादित्यर्थः । क्षोण्यां भूमौ तिष्ठतीति क्षोणीस्था । भूमौ मन्थरारूपेणोत्पन्नेत्यर्थः । साक्षात् प्रत्यक्षम् अलक्ष्मीः, एकं केवलं वैरं एकवैरं श्रीरामे एकवैरं तदस्या अस्तीति रामैकवैरिणी तथा सती जज्ञे । जनी प्रादुर्भावे लिट् ॥६॥

**(सं.चं.)** रामेण भगवता तमसि पातनार्थं प्रथमं तावत् चरणे भगवतश्चरणस्थानीयायां भूमौ क्षिप्ता । तत्रापि तस्याः पापपरिपाकार्थं केनचित् क्षुद्रकारणेन चरणे क्षिप्ता बालरूपेण रामेण चरणेन ताडिता । द्वेष्टुं मां तेन क्षिप्रं स्वगतिमेत्विति । तृतीयार्थे सप्तमी । साक्षात् स्वरूपत एवालक्ष्मीः कलिभार्या । नत्वावेशतः । राम एवैकं मुख्यं केवलं वा वैरमस्या इति रामैकवैरिणी जज्ञे बभूव । मन्थरात्वेन जातेति वा ॥ ६ ॥

**दीर्घश्वासकृतायासा प्रासादादवरुह्य सा ।**
**गृहे शयानां कैकेयीं हा हताऽस्मीत्युपाद्रवत्[१] ॥ ७ ॥**

**(भा.दी.)** **दीर्घे**ति । दीर्घो यः श्वासस्तेन कृतः आयासः प्रयासो यस्याः सा तथा, सा मन्थरा, प्रासादो हर्म्यं तस्मात् अवरुह्य, गृहं मन्दिरं तस्मिन् शयानां कैकेयीं प्रति 'अहं हता विनष्टाऽस्मि' । हा विषादे । 'हा विषादशुगार्तिषु' इति वैजयन्ती । इति वदन्ती सती उपाद्रवत् उपाजगाम । द्रु गतौ लङ् ॥ ७ ॥

१. 'क्षोणिस्था'

१. '–ऽस्मीत्यन्यथाब्रवीत्'

**(सं.चं.)** उद्वेगजो दीर्घश्वासः, 'ನಿಟ್ಟುಸಿರು' इति भाषायाम् । तेन सह सत्वरमवरुह्य धावनादायासः, 'ಜಗ' इति भाषायाम् । हता हतभाग्या । इति क्रोशन्ती कैकेयीमुपलक्ष्याद्रवत् ॥ ७ ॥

**तदुपश्रुत्य कैकेयीं सम्भ्रान्तां सहसोत्थिताम् ।**
**किमेतदिति पृच्छन्तीं कितवा[1] साऽभ्यभाषत ॥ ८ ॥**

**(भा.दी.) तदिति** । तत् मन्थरावचः उपश्रुत्य सम्भ्रान्तां समाकुलाम्, अत एव सहसा उत्थिताम्, एतत् त्वद्विनाशनिमित्तं किमिति पृच्छन्तीं कैकेयीं प्रति कितवा कपटचित्ता सा मन्थरा अभ्यभाषत । भाष व्यक्तायां वाचि लङ् ॥ ८ ॥

**(सं.चं.)** उपश्रुत्य उपह्वरे श्रुत्वा, किमापतितमित्यज्ञात्वा सम्भ्रान्ताम् ॥ ८ ॥

**रामोऽभिषिच्यते राज्ञा भूयो नो भयमागतम् ।**
**इत्युक्तवत्यै दास्यै सा प्रहृष्टा भूषणं ददौ ॥ ९ ॥**

**(भा.दी.) राम** इति । राज्ञा दशरथेन श्रीरामः अभिषिच्यते यौवराज्येऽभिषिच्यते । षिच सेचने लट् । वर्तमानसामीप्ये वर्तमानवद्वेति वचनादभिषेकस्य समीपप्राप्तत्वेन वर्तमानार्थकप्रयोगः । ततः किमित्यत आह– **भूय** इति । नः अस्माकं भूयः भूयिष्ठम्, 'पुरहं पुरु भूयिष्ठं स्फारं भूयश्च भूरि च' इत्यमरः, भयं आगतं सम्प्राप्तम् । सा कैकेयी इति उक्तवत्यै दास्यै मन्थरायै प्रहृष्टा सती, श्रीरामाभिषेकवार्तां श्रुत्वा सन्तुष्टा सतीत्यर्थः । भूषणमलङ्कारस्तत् ददौ ॥ ९ ॥

**(सं.चं.)** भूयो बहुतरं भयम् । यस्य न प्रतिक्रिया ॥ ९ ॥

**इमां च वाचमाचष्ट भद्रे भीरिह नास्ति नः ।**
**समौ मे रामभरतौ सुतौ राजसुतौ ध्रुवम् ॥ १० ॥**

**(भा.दी.) इमामि**ति । यतः राजसुतौ दशरथसुतौ रामभरतौ मे मम समौ समानौ सुतौ । तस्मात् हे भद्रे शोभने मन्थरे, इह श्रीरामयौवराज्याभिषेके सति नः अस्माकं भीः भीतिः नास्ति, ध्रुवं निश्चितम् । इति इमां वाचं (च) आचष्ट । चक्षिङ् व्यक्त्यायां वाचि लङ् ॥ १० ॥

**(सं.चं.)** रामभरतौ राजसुतौ न केवलम् । ममापि सुतौ । 'रामे वा भरते वाऽहं विशेषं नोपलक्षये' इति हि रामायणे ॥ १० ॥

---

१. 'कितवी'

**वदान्यो लोकमान्योऽयं ज्येष्ठः श्रेष्ठो[1] नृपात्मजः ।**
**कथं मया परिद्वेष्यो भक्तिमान् मयि मातृवत् ॥ ११ ॥**

**(भा.दी.)** श्रीरामभरतयोः पुत्रत्वेन साम्येऽपि गुणतो विशिष्टत्वात् तस्य द्वेष्यत्वं न सम्भवतीत्याह– **वदान्य** इति । वदान्यः दानशूरः, लोकैर्जनैर्मान्यः पूज्यः, ज्येष्ठः भरतापेक्षयाऽपि ज्येष्ठः, श्रेष्ठः सर्वोत्तमः, मयि मातृवत् मातरीव भक्तिमान् स्नेहवान्, नृपात्मजः दशरथात्मजः अयं श्रीरामः, कथं केन प्रकारेण, 'प्रकारेऽन्यथेतरथा कथम्' इति वैजयन्ती । मया परिद्वेष्यः परिद्वेषार्हः ॥ ११ ॥

**(सं.चं.)** ज्येष्ठः नृपात्मजः रामः, गुणतः भरतादपि श्रेष्ठः । सर्वस्मादपि । कथं स्नेहं परित्यज्य द्वेष्टुमर्हः? ॥ ११ ॥

**इति ब्रुवन्त्यां कैकेय्यां तां च भूषां निरस्य सा ।**
**निर्भत्सयन्ती निर्भाग्या राज्ञीं पुनरभाषत ॥ १२ ॥**

**(भा.दी.)** **इती**ति । कैकेय्यां इति ब्रुवन्त्यां सत्यां कैकेयीं निर्भत्सयन्ती कुत्सयन्ती, निर्गतं भाग्यं यस्याः सा तथा सा मन्थरा । तां कैकेयीदत्तां भूषां भूषणं च निरस्य तिरस्कृत्य, राज्ञः स्त्री राज्ञी तां कैकेयीं पुनः अभाषत ॥ १२ ॥

**(सं.चं.)** तां रामाभिषेकवार्ताश्रवणजनितेन हर्षेण कैकेय्या दत्ताम् । निरस्य कण्ठादवमुच्य भूमाववक्षिप्य ॥ १२ ॥

**विनयादनयं प्राप्य व्यसने मज्जसि ध्रुवम् ।**
**सपत्नीपक्षिणा राज्ञा मूढेऽसि त्वं[2] विलोभिता ॥ १३ ॥**

**(भा.दी.)** **विनयादि**ति । हे मूढे कार्याकार्यानभिज्ञे, त्वं विनयात् प्रश्रयात्, धर्माद्वा । 'विनयो धर्मविद्याधीशिक्षाचारप्रशान्तिषु' इति वैजयन्ती । अनयोऽनीतिस्तं प्राप्य व्यसने विपदि । 'व्यसनं शक्तिविपदोः' इति च । (ध्रुवं) मज्जसि मग्नाऽसि । कुत इत्यत आह– **सपत्नी**ति । समाना पत्नी सपत्नी[3] कौसल्या तस्यां पक्षः पक्षपातः सोऽस्यास्तीति तथा तेन राज्ञा त्वं विलोभिता वञ्चिता असि ॥ १३ ॥

१. **'ज्येष्ठः प्रेष्ठो–'** २. **'मूढे त्वं हि विलोभिता'** ३. **'समानः एकः पतिर्यस्याः सा सपत्नी'** इति का.श्री. ।

**(सं.चं.)** गुरुषु गौरवादपराधेऽप्यविक्रियं प्रसहनं नाम सौजन्यं विनयः । तेन स्वस्मिन्नापतितोऽन्यायोऽनयः । विनयात् तादृशस्यान्यायस्यानिराकरणात्, प्रत्युत तूष्णीं प्रसहनात् व्यसने महति सङ्कटे मज्जसि । यतः पुनरुन्मज्जनमसम्भवि । समानः पतिरस्या इति सपत्नी कौसल्या । तत्पक्षपातिना भूपतिना, कौसल्यानाथेन दशरथेन विलोभिता प्रतारिता, पुरतस्त्वत्पक्षपातीव वृथा नाटयन् त्वां वञ्चयामास । त्वं तु मूढा, मुग्धा चानभिज्ञा चेति तदपि न जानीषे ॥ १३ ॥

**सानुजे भरते याते पश्य रामाभिषेचनम् ।**
**लक्ष्मणो राममन्वास्ते शत्रुघ्नो भरतं यथा ॥ १४ ॥**

**(भा.दी.)** विलोभनं सम्भावयति– **सानुज** इति । अनुजेन शत्रुघ्नेन सहितः सानुजस्तस्मिन् । भरते याते विद्याभ्यासार्थं केकयगृहं प्रति गते सति रामस्य अभिषेचनं तत् पश्य । तर्हि लक्ष्मणः कुतोऽन्यत्र न प्रेषित इत्यत आह– **लक्ष्मण** इति । लक्ष्मणः, शत्रुघ्नः भरतं यथा तथा श्रीराममन्वास्ते अनुसृत्य वर्तते । आस उपवेशने लट् । तथाच त्वत्पुत्रमन्यत्र प्रेषयित्वाऽभिषेकोद्यमस्त्वत्पुत्रस्य राज्यं कदाऽपि मा भूदित्यभिप्रायेणेति भावः ॥ १४ ॥

**(सं.चं.)** अत एव भरतं सशत्रुघ्नं दूरं केकयदेशं प्रेष्य, तदसन्निधाने सत्वरं रामाभिषेकाय प्रावर्तत । यदि त्वं तस्य प्रिया, यदि च भरतशत्रुघ्नौ, किमिति तावनानाय्य, वार्तामपि तयोरश्रावयित्वा मङ्क्षु एकस्मिन्नेव दिने, अन्येषामालोचयितुमप्यवकाशमदत्वाऽभिषेकार्थमादिदेश– अद्य सायं निर्णयः श्वः प्रभातेऽभिषेक इति किमर्थमिदं महानाटकम्? ननु लक्ष्मणो न दूरं प्रेषितः? सत्यं न प्रेषितः, यतः स राममन्वास्ते, तेन न स रामाभिषेचनं निरोत्स्यतीति निश्चितम् ॥ १४ ॥

**यदि रामोऽभिषिच्येत सपत्न्यास्तव नन्दनः ।**
**त्वया ससुतया दास्यं कौसल्याया विधीयताम् ॥ १५ ॥**

**(भा.दी.)** व्यसनं चोपपादयति– **यदी**ति । तव सपत्न्याः कौसल्यायाः नन्दनः श्रीरामः यदि अभिषिच्येत । तर्हि ससुतया भरतसहितया त्वया । 'अव्ययास्मद्युष्मत्षट्सञ्ज्ञास्त्रिषु सरूपाः'[१] इत्युक्तेः

१. षट्सञ्ज्ञा इति । षान्ता नान्ता च सङ्ख्या इत्यर्थः । तथाहि पाणिनिः–**'ष्णान्ता षट्'** (अ.सू.१.१.२४) इति । **'षकारान्ता नकारान्ता च या सङ्ख्या सा षट्सञ्ज्ञा भवति । षकारान्ता तावत्– षट् तिष्ठन्ति । नकारान्ता–पञ्च । सप्त । (अष्ट ।) । नव । दश'** इति जयादित्यः ।

विशेष्यानुसारेण त्रिलिङ्गत्वादत्र स्त्रीलिङ्गः त्वयेति शब्दः। एवमन्यत्रापि द्रष्टव्यम्। कौसल्यायाः दासस्य भावो दास्यम्, विधीयताम्। धाञो धातोर्लोट्॥ १५॥

**(सं.चं.)** विधीयताम् क्रियताम्॥ १५॥

**भरतस्यान्ववायोऽपि दास्यमेव प्रयास्यति।**
**नह्यराजसुतो राजा राजत्वं रामसन्ततेः ॥ १६ ॥**

**(भा.दी.)** **भरतस्ये**ति। भरतस्य अन्ववायोऽपि वंशोऽपि दास्यमेव श्रीरामसन्ततेर्दासत्वमेव प्रयास्यति। या प्रापणे लृट्। हि यस्मात् राजसुतो न भवतीत्यराजसुतः राजा न भवति। रामसन्ततेः श्रीरामवंशस्य राजत्वं स्यात्॥ १६॥

**(सं.चं.)** न केवलं तव भरतस्य च दास्यम्। भरतस्यान्ववायोऽपि यावद् भरतसन्ततिः। यतः राजसुत एव राजा स्यात्। नाराजसुतः। तस्मात् राज्ञो रामस्य सन्ततेरेव सन्ततं राजत्वं भविष्यति॥ १६॥

**निगूढवैरो वीरोऽयं[1] कालयेद् वा त्वदात्मजम्।**
**त्वं तु रामानुरागेण स्वपुत्रस्याहिते रता ॥ १७ ॥**

**(भा.दी.)** श्रीरामस्याभिषेके सत्यन्ततस्त्वत्पुत्रस्य राज्येऽवस्थानं च दुर्घटमित्याह– **निगूढे**ति। निगूढं निगूहितं वैरं यस्य स तथा, वीरः अयं श्रीरामः तव आत्मजं पुत्रं भरतं कालयेद्वा देशादुच्चाटयेद्वा। कल विल क्षेपणे लिङ्। अनीतिं दर्शयति– **त्वं त्वि**ति। त्वं तु रामेऽनुरागः स्नेहस्तेन स्वस्याः पुत्रस्य भरतस्य अहितमनिष्टं तस्मिन् रता आसक्ता॥ १७॥

**(सं.चं.)** अयं रामः कालयेत् नाशयेत्, राज्यात् निष्कासयेद्वा। अथापि त्वं तु॥ १७॥

**आदितेयान्[2] हि दैतेयास्तपोविद्याबलान्विताः।**
**छिद्रे छिन्दन्ति सत्येवं क्षत्रधर्म्मः सनातनः[3] ॥ १८ ॥**

---

१. '**–वैरो रामोऽयम्**' २. '**दैतेया आदितेयान् हि तपोविद्या–**' इति, '**आदितेया हि दैतेयांस्तपोविद्यागुणाधिकान्**' इति च।

३. '**क्षत्रधर्माः सनातनाः**'। '**हे सति कैकेयि, एवं पूर्वोक्तप्रकारेण क्षत्रधर्मः सपत्नीपुत्रनाशनेन स्वराज्यपरिपालनरूपः क्षत्रियाणां धर्मः सनातनः स्वाभाविकः**' इति का.श्री.।

**(भा.दी.)** सपत्नीपुत्रत्वाच्छ्रीरामाभिषेकविघातो कार्य एव । न्याय्यश्च । पूर्वैरेतादृशकर्मणामाचरितत्वादित्याह– **आदितेयानि**ति । तपश्च विद्या च बलं च तैरन्विताः युक्ताः । दितेरपत्यं पुमांसो दैतेयाः दैत्याः । अदितेरपत्यं पुमांस आदितेयास्तान् देवान् । च्छिद्रं रन्ध्रं तस्मिन् । गुरुवैमनस्यादिच्छिद्रं प्रतीक्ष्येत्यर्थः । च्छिन्दन्ति नाशयन्ति । छिदिर् द्वैधीभावे लट् । हे सति साध्वि कैकेयि, एवं एवंविधः क्षत्रस्य क्षत्रियजातेर्धर्मः सनातनः प्रवाहतो नित्यः पूर्वैःपूर्वैराचरितत्वादिति भावः ॥ १८ ॥

**(सं.चं.)** तपोबलेन शुक्रशिक्षितविद्याबलेन सहजेन देहबलेन च । छिद्रे सति । कथञ्चिदवकाशे लब्धे सति भ्रातॄनप्यादितेयान् निर्दयं छिन्दन्ति । तथा त्वमपि भरतं पुरस्कृत्य रामं निष्कासय । यावता राम एव भरतं न निष्कासयेत् ॥ १८ ॥

**कैकेयी कुब्जयेत्युक्ता कष्टभावेदमब्रवीत् ।**
**सत्यमेतत् कथं कुब्जे राज्यं सूनोर्भवेन्मम ॥ १९ ॥**

**(भा.दी.)** **कैकेयी**ति । कुब्जया ह्रस्वाङ्गया मन्थरया इति एवमादिप्रकारेण उक्ता, अत एव कष्टः भावः अभिप्रायो यस्याः सा तथा कैकेयी इदं वक्ष्यमाणं वचः अब्रवीत् । हे कुब्जे मन्थरे, एतत् त्वदुक्तं वचः सत्यम् । मम सूनोः राज्यं कथं केनोपायेन भवेत् ॥ १९ ॥

**(सं.चं.)** स्वयमदुष्टभावाऽपि कुब्जया दूषितान्तरा कष्टभावा बभूव । कष्टः कुलस्य क्लेशदः भावोऽस्या इति । त्वदुक्तमेतत् सत्यम् ॥ १९ ॥

**नीतिमांश्च विनीतश्च रामोऽयं जनरञ्जनः ।**
**पितुः प्राणसमो राज्यात् कया नीत्या प्रयाप्यते ॥ २० ॥**

**(भा.दी.)** कयाचित्साधारणनीत्याऽस्य राज्यप्रच्यावनं दुर्घटमित्याह–**नीतिमानि**ति । अयं श्रीरामः नीतिरस्यास्तीति नीतिमान्, विनीतश्च विनयवांश्च, जनान् रञ्जयति स्वस्मिन् स्नेहयुक्तान् करोतीति जनरञ्जनः, पितुः दशरथस्य प्राणसमश्च, अत्यन्तं प्रिय इत्यर्थः । अतः कया नीत्या उपायेन राज्ञो विषयो राज्यं तस्मात् प्रयाप्यते प्रयातः कार्यते? राज्यप्रच्युतः कर्तुं शक्य इत्यर्थः । या प्रापणे लट् । आदन्तत्वात् पुक् ॥ २० ॥

**(सं.चं.)** कया नीत्या । कया अनीत्येति ध्वनिः ॥ २० ॥

**इति ब्रुवाणां कैकेयीं सस्मिता स्माऽह[१] मन्थरा ।**
**वरौ किं विस्मृतौ मुग्धे पत्या [२]प्रत्तौ पुरैव ते ॥ २१ ॥**

**(भा.दी.) इती**ति । मन्थरा इति ब्रुवाणां वदन्तीं कैकेयीं प्रति सस्मिता मन्दहासोपेता सती, हे मुग्धे मनोहरे कैकेयि[३], त्वया पुरैव पूर्वमेव पत्या दशरथेन (ते) तुभ्यं प्रत्तौ प्रदत्तौ वरौ विस्मृतौ किम्? इति आह स्म अवदत् किल । ब्रूञ्धातोर्लट् । न तु लिट् । वरदाननिमित्तं च । कदाचिदिन्द्रो देवासुरयुद्धे समुपस्थिते साहाय्यार्थं दशरथं वरयामास । दशरथश्च कैकेय्या साकं तत्समरप्रदेशं प्रति गत्वाऽसुरैः सह युद्धे क्रियमाणेऽसुरा दशरथस्य रथचक्रं बभञ्जुः किल । तदा कैकेयी तस्याग्रतो गत्वा द्वात्रिंशद्भिर्धैरायुधैर्विद्यावशाद्युद्धं कृत्वा तानजैषीत् । ततश्च तेन कर्मणा हृष्टो दशरथ इन्द्रेण समागम्य कैकेयीं प्रत्यभीष्टं वरं वृणीष्वेत्यवादीत् । एवमुक्ते साऽपि प्राञ्जलिरुवाच– समुचितकाले मदभीष्टं वृणे इति, दशरथेन च तथाऽस्त्वित्यनुमतमित्यव-गन्तव्यम् ॥ २१ ॥

**(सं.चं.)** आगता मार्गे इति सस्मिता । किं हितं किमहितमिति निर्णेतुमक्षमा परप्रत्ययनेयबुद्धिमुग्धा । पुरैव पत्या प्रत्तौ वरौ । तथाहि रामायणे–'पुरा देवासुरे युद्धे सह राजर्षिभिः पतिः । अगच्छत् त्वामुपादाय देवराजस्य साह्यकृत् । दिशमास्थाय कैकेयि दक्षिणां दण्डकान् प्रति । वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः । स शम्बर इति ख्यातः शतमायो महासुरः । ददौ शक्रस्य सङ्ग्रामं देवसङ्घैरनिर्जितः । तस्मिन् महति सङ्ग्रामे पुरुषान् क्षतविक्षतान् । रात्रौ प्रसुप्तान् घ्नन्ति स्म तरसाऽऽसाद्य राक्षसाः । तत्राकरोन्महद् युद्धं राजा दशरथस्तदा । असुरैश्च महाबाहुः शस्त्रैश्च शकलीकृतः । अपवाह्य त्वया देवि सङ्ग्रामान्नष्ट-चेतनः । तत्रापि विक्षतः शस्त्रैः पतिस्ते रक्षितस्त्वया । तुष्टेन तेन ते दत्तौ द्वौ वरौ शुभदर्शने । स त्वयोक्तः पतिर्देवि यदेच्छेयं तदा वरौ । गृह्णीयामिति तत् तेन तथेत्युक्तं महात्मना । अनभिज्ञाऽसि तद्देवि त्वयैव कथितं पुरा । कथैषा तव तु स्नेहान्मनसा धार्यते मया । रामाभिषेकसम्भारान्निगृह्य विनि-वर्तय । तौ च याचस्व भर्तारं भरतस्याभिषेचनम् । प्रव्राजनं च रामस्य वर्षाणि तु चतुर्दश' (अयो.कां. ९.११–२०) इति । प्रथमं युद्धरङ्गादपवाह्य रक्षितः । ततो रात्रावपि विश्रान्तिशिबिरे पुनरसुरैराक्रान्तः ततोऽप्यपवाह्य रक्षित इति द्विवारं रक्षणाद् द्वौ वरौ ददाविति रामायणाशयः ॥ २१ ॥

---

१. **'सस्मिता प्राह'** इति, **'सुस्मिता स्माह'** इति च । २. **'पत्या दत्तौ'**

३. **'हे मुग्धे मूढे । 'मुग्धः सुन्दरमूढयोः' इत्यभिधानात्'** इति का.श्री. ।

**वरद्वयं वृणीष्व त्वं वरमेतद् वरानने ।**
**साम्राज्यं भरतस्याऽशु प्राव्राज्यं जानकीपतेः ॥ २२ ॥**

**चतुर्द्दशसमा रामो वने यदि वसेद् व्रती[1] ।**
**छिन्नमूलो भवेद् व्यक्तं भरतो रञ्जयेज्जनम् ॥ २३ ॥**

**(भा.दी.)** **वरे**ति । वरमुत्तममाननं यस्याः सा तत्सम्बुद्धिः । कैकेयि, त्वं भरतस्य साम्राज्यं सार्वभौमत्वं तत्, जानकीपतेः प्राव्राज्यं प्रव्रजनं तत्, वनवासमित्यर्थः, इति[2] वरमुत्तमम् एतत् वरद्वयं दशरथात् वृणीष्व वरय । वृञ् वरणे लोट् । श्रीरामस्य वनवासवरणेन नः किं प्रयोजनमित्यत आह–**चतुर्दशे**ति । यदि श्रीरामः चतुर्दश च ताः समाश्च, चतुर्दशसंवत्सरानित्यर्थः । व्रतमस्यास्तीति व्रती, मुनिव्रतः सन्नित्यर्थः, वन्यते सेव्यते प्राणिभिरिति वनं तस्मिन् वसेत् । वस निवासे लिङ् । तर्हि श्रीरामः व्यक्तं यथा भवति तथा, सम्यगित्यर्थः । छिन्नं मूलं यस्य स तथा, राज्याधिपत्यं कदाप्यप्राप्त इत्यर्थः, भवेत् । भरतः जनं रञ्जयेत् स्वस्मिन्नासक्तं कुर्यात् । रञ्ज रागे लिङ् ॥ २२-२३ ॥

**(सं.चं.)** स्वेष्टसम्पादकत्वाद् वरमुत्तमं वरद्वयम् । तापसव्रती । छिन्नप्रजासम्बन्धमूलः । प्रजाभिर्विस्मृतो भवेदिति ॥ २२–३ ॥

**कैकेयीत्थं समाकर्ण्य विलासं मन्थरामतेः ।**
**आशिश्लेष द्रुतं दासीं हसन्ती साधुसाध्विति ॥ २४ ॥**

**(भा.दी.)** कैकेयी सत्स्वभावाऽपि दुष्टसंसर्गदोषाद् दैवयोगाच्च तदङ्गीकृतवतीत्याह– **कैकेयी**ति । कैकेयी मन्थरामतेः इत्थं तं विलासं विस्तारं समाकर्ण्य हसन्ती सती, साधु सम्यक् साधु सम्यक् इति वदन्ती सती, द्रुतं यथा भवति तथा, दासीं मन्थरां आशिश्लेष आलिलिङ्ग । श्लिष आलिङ्गने लिट् ॥ २४ ॥

**(सं.चं.)** विलासं चमत्कारम् । 'ଯୋଜନା' इति भाषायाम् । साधुसाध्विति प्रशंसन्ती, सन्तोषभरेण हसन्ती ॥ २४ ॥

---

१. **'वनं यातु वसेद् व्रती'** इति कचित् । **'व्रती चीरधारणफलाहारादिनियमवान्'** इति का.श्री. ।

२. **'वरमभीष्टार्थं वरद्वयम्'** इति च ।

**कुब्जायै कुण्डले दत्वा कैकेयी स्वे प्रहर्षिता[1] ।**
**क्रोधागारे द्रुतं शिश्ये मन्थराया मतेन सा ॥ २५ ॥**

**(भा.दी.) कुब्जाया** इति । प्रहर्षिता उपायश्रवणेन सन्तुष्टा सा कैकेयी स्वे स्वकीये कुण्डले ताटङ्के । 'कर्णिका तालपत्रं स्यात् कुण्डलं कर्णवेष्टनम्' इत्यमरः । कुब्जायै दत्वा मन्थरायाः मतमनुमतिस्तेन, क्रोधे समागते सति शयनार्थं यत्क्लृप्तमगारं गृहं तस्मिन्, द्रुतं यथा भवति तथा शिश्ये स्वापं चक्रे ॥ २५ ॥

**(सं.चं.)** मन्थराया मतेन मतमाश्रित्य । तन्निर्देशानुसारेण ॥ २५ ॥

**अभिषेकस्य सम्भारान् विभवांश्च प्रकल्प्य[2] सः ।**
**राजा राजीवनयनः कैकेयीभवनं[3] ययौ ॥ २६ ॥**

**(भा.दी.) अभिषेकस्ये**ति । राजीववत् कमलवन्नयने यस्य स तथा, सः राजा अभिषेकः अभिषेचनं तस्य सम्भारान् साधनद्रव्याणि, विभवांश्च उत्सवं च प्रकल्प्य कैकेय्याः भवनं गृहं तत् ययौ ॥ २६ ॥

**(सं.चं.)** यदा कैकेयी क्रोधागारे शिश्ये तदा राजा राजीवनयनः कैकेयीदर्शनोत्सुकः । अभिषेकस्यापेक्षिताः सामग्रीः, विभवान् सभाचत्वराद्यलङ्करणानि च स्वयमेव प्रकटं कल्पयित्वा ॥ २६ ॥

**संस्मरन्[4] सुस्मितां जायामनङ्गस्य वशं गतः ।**
**नापश्यच्छयनागारे रत्नदीपप्रदीपिते ॥ २७ ॥**

**(भा.दी.)** गमने निमित्तमाह– **समि**ति । शोभनं स्मितं यस्याः सा तथा तां जायां कैकेयीं संस्मरन्, अत एव अनङ्गस्य कामस्य वशोऽधीनता तं गतः दशरथः । [5]रत्नमेव दीपस्तेन प्रदीपितं प्रकाशितं तस्मिन् शयनस्य अगारे गृहे, भोगार्थं शयनीयमन्दिर इत्यर्थः, न अपश्यत् ॥ २७ ॥

**(सं.चं.)** सम्बुभुक्षया स्मरन् । भोगस्थाने शयनागारे नापश्यत् ॥ २७ ॥

**कुत्र कान्तेति सम्भ्रान्तः क्रोधागारं प्रविश्य सः ।**
**ददर्श तरुणीं भार्य्यां शयानां केवलं भुवि ॥ २८ ॥**

---

१. 'स्वे प्रहर्षतः' इति, 'सुप्रहर्षिता' इति च । २. 'विभवांश्चोपकल्प्य–' ३. **'कैकेय्या भवनम्'**
४. **'स स्मरन्'** ५. **'रत्नान्येव दीपाः'** इति का.श्री. ।

**(भा.दी.) कुत्रे**ति । हे भार्ये कान्ते, कुत्र तिष्ठसि इति अतिसम्भ्रान्तः अत्यन्तं परिभ्रमणं कुर्वन्, कान्ता कुत्र तिष्ठतीति सम्भ्रान्त इति वा । सः क्रोधागारं क्रोधगृहं तत् प्रविश्य केवलं भुवि शयानां तरुणीं मनोहरां भार्यां कैकेयीं ददर्श ॥ २८ ॥

**(सं.चं.)** कान्ता कुत्रेति सम्भ्रान्तः । ददर्श तरुणीम्– 'स वृद्धस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीम् । अपापः पापसङ्कल्पां ददर्श धरणीतळे' इति रामायणे । केवलमिति विरहय्य शय्याम् ॥ २८ ॥

**तां पापनिश्चयां भूपो रमणीत्यभ्युपेयिवान् ।**
**भुजङ्गीं माल्यबुद्ध्येव परिरभ्येति[१] चाब्रवीत् ॥ २९ ॥**

**(भा.दी.) तामि**ति । भूपः, पापे पापकर्मणि निश्चयो यस्याः सा तथा तां कैकेयीम्, हे रमणि भार्ये, इति वदन् सन् अभ्युपेयिवान् सम्प्राप । भुजङ्गीं सर्पस्त्रियं माल्यमिति बुद्धिर्माल्यबुद्धिस्तयेव । 'माल्यं पुष्पे पुष्पदाम्नि' इति वैजयन्ती । परिरभ्य आलिङ्ग्य च इति अब्रवीत् ॥ २९ ॥

**(सं.चं.)** पापः निश्चयो यस्याः । ममानुकूलेयं रमणीति मन्वानः, 'रमणि, किमेवं शेषे' इति व्याहरन्न-भ्युपेयिवान् ॥ २९–३० ॥

**त्यज शोकं विशालाक्षि मामालप शुकालपे ।**
**नोपयासि प्रिये त्वं[२] मां कथं स्मरशराहतम् ॥ ३० ॥**

**(भा.दी.) त्यजे**ति । विशाले अक्षिणी यस्याः सा तथा तत्सम्बुद्धिः । शुकवदालपतीति आभाषणं करोतीति शुकालपा तत्सम्बुद्धिः । (प्रिये) कैकेयि शोको दुःखं तं त्यज । त्यज विसर्गे लोट् । मां प्रति आलप सम्भाषणं कुरु । रप लप व्यक्तायां वाचि लोट् । त्वं स्मरस्य कामस्य यः शरस्तेन आहतं ताडितं मां कथं नोपयासि न प्राप्नोषि । या प्रापणे लट् ॥ ३० ॥

**अवन्यां चतुरन्तायां कस्मिन् दण्डो निपात्यताम् ।**
**अब्राह्मणकुलं ब्रूहि देवि ते विहितागसम् ॥ ३१ ॥**

**(भा.दी.) अवन्यामि**ति । चत्वारः समुद्राः अन्तोऽवसानं यस्याः सा तथा तस्याम् । अवन्यां भूमौ कस्मिन् पुरुषे दण्डः शासनं निपात्यतां निक्षिप्यताम्? पत्ल् पतने लोट् । तवापकारिणं कं वा शासयामीत्यर्थः ।

१. **'परिस्पृश्येति'** इति, **'परिमृश्येति'** इति च । २. **'प्रियं त्वम्'**

हे देवि कैकेयि, ते तव विहितमाचरितमागोऽपराधो येन स तथा तम्, न विद्यते ब्राह्मणकुलं यस्य स तथा तम्, ब्राह्मणकुलोत्पन्नमात्रस्यादण्ड्यत्वात् तद्व्यतिरिक्तकुलोत्पन्नमित्यर्थः, ब्रूहि ॥ ३१ ॥

**(सं.चं.)** कस्मिन् दण्डो निपात्यताम् । 'अवध्यो वध्यतां को वा वध्यः को वा विमुच्यताम् । दरिद्रः को भवेदाढ्यो द्रव्यवान् वाऽप्यकिश्चनः' इति रामायणे । तेन निपात्यतामित्युपलक्षणम् । कस्मिन् दण्डो न पात्यतामिति च ॥ ३१ ॥

**प्रयच्छाम्यधुना सर्वं कृशोदरि[१] यदिच्छसि ।**
**कल्पवृक्षइवाहं ते स्मितेनोत्तिष्ठ सुस्मिते ॥ ३२ ॥**

**(भा.दी.)** अभिमतस्य वस्तुनोऽप्रदानात् कोपश्चेत्तदपि दास्य इत्याह– **प्रयच्छामी**ति । कृशमुदरं यस्याः सा तथा तत्सम्बुद्धिः, सूक्ष्ममध्ये, त्वं यत् वस्तु इच्छसि । इषु इच्छायां लट् । तत्सर्वं वस्तु ते तुभ्यं अहं कल्पवृक्षइव अधुना प्रयच्छामि ददामि । यम उपयमे लट् । शोभनं स्मितं यस्याः सा तथा तत्सम्बुद्धिः, स्मितं मन्दहासस्तेन, मन्दहासपूर्वकमित्यर्थः, उत्तिष्ठ । ष्ठा गतिनिवृत्तौ लोट् ॥ ३२ ॥

**(सं.चं.)** यत् त्वमिच्छसि तत् ते प्रयच्छामि । यस्ययस्य यदिच्छसि तत्तत् तस्मै प्रयच्छामि । एतेन 'दरिद्रः को भवेदाढ्यः' इत्येतद् विवृतम् । अहं ते, तवाहं वशगः ॥ ३२ ॥

**कान्तवाणीमिति श्रुत्वा कान्ता वाणीमभाषत ।**
**सत्यसन्धः सदा राजन् भव धर्म्मविदां वर ॥ ३३ ॥**

**(भा.दी.)** **कान्ते**ति । कान्ता भार्या कैकेयी इति कान्तवाणीं भर्तुर्वाचं श्रुत्वा, धर्मं विदन्तीति धर्मविदस्तेषां मध्ये वर श्रेष्ठ हे राजन्, सदा सत्या सन्धा प्रतिज्ञा यस्य स तथा, 'सन्धाऽवधौ प्रतिज्ञायाम्' इति वैजयन्ती, भव, इति वाणीं अभाषत ॥ ३३ ॥

**(सं.चं.)** पूर्वं सत्यसन्ध आसीः । इदानीमपि भव ॥ ३३–४ ॥

**पुरा सुरासुररणे त्वां निशासु शरक्षतम् ।**
**अरक्षं ननु रक्षोभ्यो विद्यया विप्रदत्तया ॥ ३४ ॥**

१. **'सर्वं शातोदरि'** । **'शातं कृशमुदरं यस्याः सा शातोदरी'** इति का.श्री. ।

**(भा.दी.)** **पुरे**ति । पुरा सुराश्च असुराश्च तेषां रणो युद्धं तस्मिन्, निशासु रात्रिषु शरक्षतं शरताडितं त्वां विप्रदत्तया ब्राह्मणदत्तया विद्यया[१] रक्षोभ्यः राक्षसेभ्यः अरक्षं ननु ॥ ३४ ॥

**तदा प्रीत्या प्रदत्तौ मे वरौ नरवर त्वया ।**
**याचे तौ याचनीयं त्वां दीनाऽहं तव वल्लभा ॥ ३५ ॥**

**(भा.दी.)** **तदे**ति । हे नरवर नरश्रेष्ठ दशरथ, तदा त्वया प्रीत्या मे मह्यं यौ द्वौ वरौ प्रदत्तौ तौ वरौ, दीना खिन्ना तव वल्लभा प्रिया अहं याचनीयं प्रार्थनीयं त्वां प्रति याचे प्रार्थये । याचृ याच्ञायां लट् ॥३५॥

**(सं.चं.)** तव वल्लभा सत्यपि दीना दुःखिता ॥ ३५ ॥

**इति तस्या वचो वीरो वक्राया मधुराक्षरम् ।**
**मृगो[२] गीतमिवाऽकर्ण्य विवशो वाक्यमब्रवीत् ॥ ३६ ॥**

**(भा.दी.)** **इती**ति । वीरः दशरथः वक्रायाः कुटिलचित्तायाः तस्याः मधुराणि[३] मनोहराणि अक्षराणि यस्मिन् तत् तथा तत् वचः, गीतं गानं तत् मृग इव एण इव आकर्ण्य विवशः सन् मन्मथाधीनः सन्, वाक्यं वचस्तत् अब्रवीत् । यथा मृगयुना मृगवञ्चनार्थं रात्रौ दीपिकाधारणपुरस्सरं गाने कृते गानवशः सन् मृग आयाति तद्वदयं कर्णमधुरस्त्रीवचनश्रवणेन तद्वशो जात इति भावः ॥ ३६ ॥

**(सं.चं.)** यथा केनचिन्मृगयुना गीतं गानं श्रुत्वा गानमुग्धो मृगो जालबद्धो भवति । मृगयातज्ज्ञा वदन्ति यत् पुरा मृगयवो विशिष्टं गानं जानन्ति स्म । यस्मिन् गीयमाने हरिणा मन्त्रमुग्धा इव गानवशीकृतास्तं देशमागच्छेयुर्यत्र मृगयवो जालं वितत्य प्रत्यैक्षन्तेति । गीतमेतद् भाषायाम्–'**ꠋꠣꠤꠥ**' इत्याचक्षते ॥ ३६–८ ॥

**वरौ वरानने दद्यामभीष्टौ सत्यमेव ते[४] ।**
**पुत्रेण मम रामेण[५] प्राणेभ्यः प्रेयसा शपे ॥ ३७ ॥**

---

१. '**विद्यया मन्त्रेण**' इति का.श्री. ।
२. '**मृगी गीत–**' '**गीतं श्रुत्वा मृग इव**'
३. '**मधुराणि स्वादूनि श्राव्याणि**' इति का.श्री. ।
४. '**सत्यमेव तौ**'
५. '**मम पुत्रेण रामेण**' । इति वि.ती.टीकायामुपरि–'**पुत्रेण मम रामेण**' (५.२) इति प्रतीकग्रहणेन तदभिमतः पाठो निर्णीयेत ।

**(भा.दी.) वराविति** । वरमुत्तममाननं यस्याः सा तथा तत्सम्बुद्धिः । कैकेयि, अभीष्टौ अभीप्सितौ वरौ, ते तुभ्यं दद्याम् । सत्यमेव नात्र वञ्चनमित्यर्थः । प्राणेभ्यः पञ्चप्राणेभ्यः प्रेयसा अत्यन्तं प्रियेण मम पुत्रेण श्रीरामेण शपे शपथं करोमि । शप आक्रोशे लट् ॥ ३७ ॥

**राज्ञः प्रतिज्ञां तां श्रुत्वा किञ्चिदुत्फुल्ललोचना ।**
**वचोवज्रं ससर्जासौ जगन्मङ्गलभङ्गदम् ॥ ३८ ॥**

**(भा.दी.) राज्ञ** इति । राज्ञः तां प्रतिज्ञां श्रुत्वा किञ्चित् उत्फुल्ले सन्तोषेण विकसिते लोचने यस्याः सा तथा असौ कैकेयी जगति मङ्गलं शोभनमभिषेकाख्यं कर्म तस्य भङ्गो विघातस्तं ददातीति तथा तत्, वच एव वज्रं तत्, 'वज्रं कुलिशं च दम्भोळिः' इति हलः, ससर्ज । सृज विसर्गे लिट् ॥ ३८ ॥

**तव राजन् प्रतिज्ञायाः साक्षिणो धर्म्मसाक्षिणः ।**
**रामः प्रियश्चेद् भवतो मह्यं देहि वराविमौ ॥ ३९ ॥**

**(भा.दी.)** प्रार्थितवरयोरन्यथासिद्धिं यथा न कुर्यात् तथा पीठिकामारचयति– **तवे**ति । हे राजन्, चेद्यदि तव प्रतिज्ञायाः धर्मसाक्षिणः– 'आदित्यचन्द्रावनलानिलौ च द्यौर्भूमिरापो हृदयं मनश्च[1] । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्' इति धर्मसाक्षित्वेन प्रसिद्धाः सूर्यादयः साक्षिणः साक्षिभूताः, यदि च भवतः श्रीरामः प्रियः, तर्हि मह्यं इमौ वक्ष्यमाणौ वरौ देहि ॥ ३९ ॥

**(सं.चं.)** 'आदित्यचन्द्रौ–' (म.भा.आदि.९८.११) इति भारतोक्ताश्चतुर्दश धर्मसाक्षिणो देवाः साक्षिणः सन्तु । रामो यदि प्रियस्ते देहि तर्हि वराविमौ ॥ ४० ॥

**अनेनैवोद्यमेनाद्य भरतोऽत्राभिषिच्यताम् ।**
**चतुर्द्दशसमा रामो याप्यतां च वनं प्रति ॥ ४० ॥**

---

१. सम्प्रति भारते त्रिविधः पाठ उपलभ्यते–**'हृदयं यमश्च'** इति, **'हृदयं दिशश्च'** इति, **'हृदयं मनश्च'** इति च । **'यमश्च'** इति प्रचुरः पाठः । भूमिरापः, अनलानिलौ, द्यौराकाशश्चेति पञ्च भूतान्यभिहितानि । अमिभानिव्यपदेशोऽयम् । जडानां साक्षित्वासम्भवात् । हृदयनात् हृदयमिति प्राणनारायणौ । मन इति मनोमानी शिवः । पाठान्तरे स्फुटोऽर्थः । अरोरात्रमानिनौ मित्रावरुणौ । सन्ध्यामानिन्यौ सरस्वतीभारत्यौ । धर्म इति यमः, हस्तदेवता देवेन्द्रः, कर्ममानी पुष्करश्च ।

**(भा.दी.) अनेने**ति । अनेन इदानीं क्रियमाणेन, उद्यमः प्रयत्नस्तेनैव, अत्र[1] यौवराज्ये, भरतः अभिषिच्यताम् । श्रीरामः चतुर्दश च ताः समाश्च चतुर्दशसमाः चतुर्दशसंवत्सरानित्यर्थः, वनं तत्प्रति याप्यतां प्रेष्यताम् ॥ ४० ॥

**(सं.चं.)** अद्य निष्पन्नेनानेनैवोद्यमेन भरतः केकयादानीयाभिषिच्यताम् । चतुर्दश समा इति भिन्ने वा पदे ॥ ४०–१ ॥

**वाक्यबाणेन तेनैव विदीर्ण्णहृदयो नृपः ।**
**पपात सहसा मह्यां छिन्नमूल इव द्रुमः ॥ ४१ ॥**

**(भा.दी.) वाक्ये**ति । तेन कैकेयीप्रोक्तेन वाक्यमेव बाणस्तेनैव विदीर्णं हृदयं मनो यस्य स तथा । 'हृदयं तु मनस्यपि' इति वैजयन्ती । खिन्नमनस्क इत्यर्थः । नृपः सहसा सद्यः मह्यां च्छिन्नं मूलं यस्य स तथा द्रुम इव पपात ॥ ४१ ॥

**[2]कैकेयीत्रिनताशक्त्या मुक्तो मन्थरया शरः ।**
**वाङ्मयोऽपातयद् भूपं दैत्येषुभिरपातितम् ॥ ४२ ॥**

**(भा.दी.)** कैकेयीति । मन्थरया, कैकय्येव त्रिनता त्रिषु स्थानेषु नता धनुर्विशेषात्मिका यष्टिस्तस्याः शक्त्या सामर्थ्येन मुक्तः वाङ्मयः वाक्यात्मकः शरः, दैत्यानामिषवस्तैः अपातितं भूपं अपातयत् ॥ ४२ ॥

**(सं.चं.)** कैकेयीरूपा त्रिनता धनुर्यष्टिः । तच्छक्त्या करणेन मन्थरया कर्त्र्या मुक्तो वाङ्मयः शरः । कैकेयी च त्रिनता वक्षोजभरेण पुरतः, त्रिकभरेण पश्चादिति ॥ ४२ ॥

**दुःखमोहपराभूतः स मुहूर्त्तं महीपतिः ।**
**सञ्ज्ञां कथञ्चित् सम्प्राप्य दीन आस्ते स्म भूतळे[3] ॥ ४३ ॥**

**(भा.दी.)** दुःखेति । मुहूर्तो मुहूर्तकालस्तं दुःखं च मोहो मूर्छा स च ताभ्यां पराभूतः आक्रान्तः महीपतिः सञ्ज्ञाम् प्रबोधं कथञ्चित् सम्प्राप्य दीनः खिन्नः सन् भुवस्तळं तस्मिन् आस्ते स्म उपविष्टोऽभूत् । आस उपवेशने लट् ॥ ४३ ॥

---

१. **'अत्र अयोध्यायाम्'** इति का.श्री. । २. **'कैकेयीत्रिनताच्छक्त्या' 'कैकेयीत्रिनतात् कैकेयीरूपशार्ङ्गात्'** इति का.श्री. ।

३. **'दीन आस महीतळे'**

**(सं.चं.)** कैकेय्या वचःश्रवणेन दुःखम् । सौन्दर्यदर्शनेन मोहः । रामस्याप्यनिष्टं चिन्तयतीति दुःखम् । रामे च मोहो ममतातिशयः । एभिः सर्वैर्भावैः सङ्कीर्णश्च मोहश्चित्तविभ्रमः किङ्कर्तव्यमूढता, तन्मूलः सञ्ज्ञा-नाशश्च । मुहूर्तं लवकालं पराभूतः । पुनः कथञ्चित् सञ्ज्ञां सम्प्राप्यापि सङ्कटपरिहारोपायमपश्यन् दीनः दुःखितः, भाविनमनर्थं चिन्तयन् भीतो वा ॥ ४३ ॥

**क्रोधशोकाभिसन्तप्तान्[१] बाष्पबिन्दून् महोष्मणः ।**
**निमृज्य दीर्घं निश्वस्य कैकेयीं वीक्ष्य सोऽब्रवीत् ॥ ४४ ॥**

**(भा.दी.)** **क्रोधेति** । सः राजा क्रोधश्च मोहश्च ताभ्यामभिसन्तप्ताः तान्, अत एव महोष्मणः अत्युष्णान् बाष्पबिन्दूनश्रुबिन्दून् निमृज्य पाणिना परिमृज्य, दीर्घं यथा भवति तथा निश्वस्य, दीर्घश्वासं मुक्त्वा, कैकेयीं वीक्ष्य अब्रवीत् ॥ ४४ ॥

**(सं.चं.)** राजगताभ्यां क्रोधशोकाभ्यां सन्तप्ता अश्रुबिन्दवः । सन्तापादेव महोष्मणः अतितरामुष्णान् ॥ ४४ ॥

**धिग्धिग् बुद्धिविहीनां त्वां दुर्बुद्धौ बुद्धिमानिनीम् ।**
**शैलूषीमिव निःशङ्कां वाचाटां[२] टिट्टिभीमिव ॥ ४५ ॥**

**(भा.दी.)** **धिगिति** । बुद्ध्या सद्बुद्ध्या विहीनां रहिताम्, दुष्टा च सा बुद्धिश्च दुर्बुद्धिस्तस्यां बुद्धिरिति मानोऽभिमानः सोऽस्या अस्तीति तथोक्ता ताम्, शैलूषस्य नटस्य स्त्री शैलूषी तामिव । 'शैलूषा जायाजीवाः कृशाश्विनः । भरता इत्यपि नटाः ' इत्यमरः । निर्गता शङ्का वक्तव्यावक्तव्यविषयकशङ्का यस्याः सा तथा ताम् । नटभार्या हि सभायां किञ्चिदपि वक्तुं निर्लज्जा भवति । त्वं च तादृशीति भावः । टिट्टिभस्य स्त्री टिट्टिभी तामिव । वाचाटां बहुभाषिणीं त्वां धिक्धिक् ॥ ४५ ॥

**(सं.चं.)** शैलूषीं नटीमिव निःशङ्काम् । यथा निर्देशकेनाऽदिष्टं तथा निःशङ्कं हि नटी भाषते । टिट्टिभी हि सदाऽपि कर्कशं रटति । 'आलजाटजौ बहुभाषिणि' (५.२.१२५) इति पाणिनिः । 'कुत्सित इति वक्तव्यम्' इति वार्तिकम् ॥ ४५ ॥

---

१. **'क्रोधमोहाभिसन्तप्तान्'** इति वि.ती.पाठ इति भाति, उपलब्धपाठानुसारेण ।

२. **'वाचाटीं टिट्टिभीमिव'** । **'वाचालीम्'** इति कचित् ।

**कृपाणीव कृपाहीना कोमलाऽपि [1]निसर्गतः ।**
**परैः कृष्टा सुवंशाऽपि मन्नाशायासि धारिता ॥ ४६ ॥**

**(भा.दी.) कृपाणीवे**ति । निसर्गतः स्वभावतः कोमलाऽपि शोभनाऽपि कृपाहीना । शोभनो वंशः कुलं यस्याः सा तथाऽपि परैः शत्रुभिः कृष्टा वशीकृता । त्वं खड्गापरनामिका कृपाणीव मम नाशो मरणं तस्मै धारिता धृता विधिनेति शेषः । अस्तेर्लट् । कृपाणी च निसर्गतः कोमला भवति, परैः शत्रुभिः प्रहरण-समये कोशादाकृष्टा च भवति । वंशात्मकग्रहणस्थलवती च भवतीति कैकेय्याः कृपाण्याश्च साम्यमिति भावः ॥ ४६ ॥

**(सं.चं.)** कृपाणी खल्वाराद् दृष्टा मनो हरन्ती स्वभावतः कोमला फळफळायते । अन्ततः कृपाहीनाऽ-सूनेव हरति । त्वमपि बहिःकोमलतनुरन्ततः कृपाहीना । सुदृढवंशनिर्मितत्सरुः, परैः बलादाकृष्य स्ववशी-कृता कृपाणी । त्वमपि सद्वंशजाता, अथाऽपि परैः दुष्टशक्तिभिराक्रान्तमनाः । केवलं मन्नाशाय मया धारिता ॥ ४६ ॥

**गेहाद् रामं प्रयाप्य त्वं देहान्मामपि पापिनि ।**
**स्नेहात् त्वत्स्थाच्च[2] भरतं लोकांस्त्वं पातयस्यधः ॥ ४७ ॥**

**(भा.दी.) गेहादि**ति । पापमस्या अस्तीति पापिनी तत्सम्बुद्धिः । हे पापिनि कैकेयि, त्वं गेहं गृहं तस्मात् श्रीरामं प्रयाप्य वनं गमयित्वा, मामपि देहः शरीरं तस्मात् प्रयाप्य, स्वस्मिन् तिष्ठतीति स्वस्थ-स्तस्मात्, त्वयि विद्यमानादित्यर्थः, स्नेहाच्च प्रयाप्य निर्गमयित्वा । भरतं च अधोलोकान् नरकादीन् प्रति पातयसि गमयसीत्यर्थः । श्रीरामे वनं प्रति प्रेषिते सति तद्वियोगेन मम मरणमेव भवेत् । मम त्वयि स्नेहभङ्गश्च भवेत् । भरतस्य नरकादिश्च स्यादिति न कस्यापीदं हितसाधनमिति भावः ॥ ४७ ॥

**(सं.चं.)** मामपि देहात् प्रयाप्य । त्वत्स्थात् स्नेहाच्च भरतं प्रयाप्य । भरतं मातृस्नेहाद् विमोच्येत्यर्थः । अनेन निर्धारेण भरतोऽपि त्वद्विरोधी भविष्यतीत्यर्थः । 'कैकेयि नरकं गच्छ मा स्म भर्तुः सलोकताम्' इति हि भरतवचनं रामायणे । त्वं च स्वयमात्मानमधोलोकान् प्रति पातयसि । 'लोकान् स्वं पातयस्यधः' इत्यपि मूलपाठः स्यात् ॥ ४७ ॥

---

१. **'कोमला च निस–'** २. 'स्वस्थाच्च' इति वि.ती.पाठः ।

**अहर्प्पतिं[1] विनेवाहर्विना वारीव वारिजम् ।**
**देहीवोक्थं विना रामं विनाऽहं नास्मि सर्वथा ॥ ४८ ॥**

**(भा.दी.)** देहात् मामपीत्युक्तं विशदयति– **अहर्पतिमि**ति । अह्नां दिवसानां पतिरहर्पतिः सूर्यस्तं विना अहरिव दिनमिव, वारि उदकं विना वारिजमिव कमलमिव, उक्थो मुख्यप्राणस्तं विना देहीव जीवइव, अहं श्रीरामं विना सर्वथा नास्मि न भवामि ॥ ४८ ॥

**(सं.चं.)** अह्नः पतिः अहःपतिरहस्पतिर्वा । अथच अहरित्यव्ययम् । तदाऽहर्पतिरपि । उत्थापयतीत्युक्थः प्राणो नारायणो वा । नास्मि न जीवामि ॥ ४८ ॥

**मया रामेण च त्यक्तां भरतो [2]नाऽवसेत् पुरीम् ।**
**प्राणजीवपरित्यक्तां तनूमिव मनः स्वयम्[3] ॥ ४९ ॥**

**(भा.दी.) मये**ति । भरतः मया श्रीरामेण च त्यक्तां पुरीं अयोध्याम्, प्राणो मुख्यप्राणः स च जीवश्च ताभ्यां परित्यक्ताम्, तनूः शरीरं ताम् । मन इव स्वयं नाऽवसेत् नावतिष्ठेत् । वस निवासे लिङ् । मनस्व्ययमिति पाठे विशिष्टबुद्धिमानित्यर्थः ॥ ४९ ॥

**(सं.चं.)** प्राणेन भगवता वायुना वा, जीवेन च परित्यक्ताम् । मया पुर्या जीवेनेव । रामेण पुर्याः प्राणेनेवेति यथायोग्यं सम्बन्धः । पाठक्रमादर्थक्रमो हि बलीयान् । प्राणजीवमनांसि सहैव हि हृदि तिष्ठन्ति । मन इति मनोमानी शिवः । चेतनसाहचर्यात् ॥ ४९ ॥

**भरतस्यासि जननी भार्य्या मेऽश्वपतेः सुता ।**
**त्रयाणामपि नः कीर्त्तिं धार्म्मिकाणां निकृन्तसि ॥ ५० ॥**

**(भा.दी.) भरतस्ये**ति । भरतस्य जननी असि । मे मम भार्या असि । अश्वपतेः अश्वपतिनाम्नः केकयाधिपतेः सुता असि । धर्मं चरन्तीति धार्मिकास्तेषां त्रयाणामपि नः कीर्तिं निकृन्तसि नाशयसि । कृती च्छेदने लट् ॥ ५० ॥

---

१. **'अहस्पतिम्'** २. 'केचित् **'न भवेत्'** इति पठित्वा **'अत्यन्तसंयोगे द्वितीया'** इत्याहुः ।

३. **'मनस्व्ययम्'** इति **'महस्व्ययम्'** इति च क्वचित् ।

**(सं.चं.)** धार्मिकस्य जननी, धार्मिकस्य भार्या, धार्मिकस्य सुता कथमधार्मिकाऽभवः। भरतश्च अश्वपतिश्च अहं च वयम्। तेषां नः ॥ ५० ॥

**अनुक्तपूर्वं दुर्वाक्यमिदानीमुक्तवत्यसि ।**
**सर्वेषामपि पूर्वेषां गुणानां दहनायितम् ॥ ५१ ॥**

**(भा.दी.) अन्विति**। पूर्वमुक्तमुक्तपूर्वं उक्तपूर्वं न भवतीत्यनुक्तपूर्वम्, कदाऽप्यनुक्तमित्यर्थः। पूर्वेषां पूर्वं विद्यमानानां सर्वेषामपि गुणाः पातिव्रत्यादिधर्मास्तेषां दहनवदाचरतीति दहनायितम्, अत्यसह्यमित्यर्थः। दुष्टं निन्दितं च तत् वाक्यं च दुर्वाक्यं तत् (इदानीं) उक्तवती असि ॥ ५१ ॥

**(सं.चं.)** एकेन दोषेण समग्रोऽपि गुणसन्निपातो भस्मसाद् बभूवेत्याह– अनुक्तपूर्वम् ॥ ५१ ॥

**सर्वभूताभिरामाय रामाय गुणसिन्धवे ।**
**ऋजवेऽनभ्यसूयाय[१] को ह्यसूयति[२] कुत्रचित् ॥ ५२ ॥**

**(भा.दी.) सर्वेति**। सर्वाणि यानि भूतानि प्राणिनस्तेषामभिरामाय मनोहराय। 'भूतं प्राण्यतीते समे त्रिषु' इत्यमरः। गुणैः सिन्धुरिव समुद्रइव तस्मै, गुणपूर्णायेत्यर्थः। ऋजवे अवक्रबुद्धये। नाभ्यसूयाय न विद्यते अभ्यसूया[३] गुणेषु दोषारोपो यस्य स तथा तस्मै। निषेधार्थकनकारसमासत्वान्नलोपाभावः। श्रीरामाय को हि क एव। 'हि हेताववधारणे' इत्यमरः। कुत्रचित् कस्मिंश्चिद्देशे काले वा। असूयति असूयां करोति। न कोऽपि सत्पुरुष इत्यर्थः ॥ ५२ ॥

**(सं.चं.)** को ह्यसूयति त्वामृते। परोत्कर्षासहनमसूया ॥ ५२ ॥

**समौ मे रामभरतावित्यवादीः कथान्तरे ।**
**भरताच्चातिशुश्रूषू[४] रामस्ते त्यज्यते कथम् ॥ ५३ ॥**

**(भा.दी.) समाविति**। हे कैकेयि, त्वं मे रामभरतौ समौ स्नेहविषये समानौ इति कथाया अन्तरं विशेषस्तस्मिन्, कथामद्ध्य इति वा, अवादीः अकथयः। भरताच्च ते तव अतिशुश्रूषुः अत्यन्तं सेवाशीलः श्रीरामः कथं त्यज्यते ॥ ५३ ॥

---

१. **'ऋजवे नाभ्यसूयाय को ह्यसूयति'** इति वि.ती.पाठः। २. **'कोऽभ्यसूयति'**

३. **'गुणेषु दोषाविष्करणमसूया'** इति प्राचीनटीकयोः। ४. **'भरताच्चापि शुश्रूषू–'**

**(सं.चं.)** कथान्तरे सम्भाषणावसरे, अवादीः वदन्ती आसीः । कथमिदानीं स त्यज्यते । अपिच स ते भरतादप्यधिकं शुश्रूषाशीलः ॥ ५३ ॥

**वनं गच्छेति वक्ष्यामि कथं राममनागसम् ।**
**कान्तत्यक्तां प्ररुदितां वधूं द्रक्ष्यामि वा कथम् ॥ ५४ ॥**

**(भा.दी.) वनमि**ति । न विद्यते आगः अपराधो यस्य स तथा तं श्रीरामं वनं तत्प्रति गच्छ इति कथं वक्ष्यामि । वच परिभाषणे लृट् । कान्तत्यक्तां भर्तृत्यक्तां अत एव सञ्जातः प्ररोदोऽस्या इति प्ररुदिता तां वधूं श्रीरामभार्यां सीतां कथं वा द्रक्ष्यामि ॥ ५४ ॥

**(सं.चं.)** पितुरादेशपालनाय वनं जिगमिषता कान्तेन गृह एव त्यक्तां वधूं जानकीम् ॥ ५४ ॥

**सम्मता त्वं गुणैः सर्वैः[1] पौरजानपदेष्वपि ।**
**त्यजैकं बुद्धिदोषं तु सर्वदूषणकारणम् ॥ ५५ ॥**

**(भा.दी.) सम्मते**ति । हे कैकेयि, त्वं पुरि भवाः पौरास्ते च जनपदे राष्ट्रे भवाः जानपदास्ते च तेषु, सर्वैर्गुणैः [2]शुभधर्मैर्युक्तेति सम्मता असि । तस्मात् सर्वाणि यानि दूषणानि तेषां कारणं हेतुं एकं बुद्धेर्यो दोषस्तं त्यज । श्रीरामो राज्यान्निर्वास्य इति मनोरथं मा कुर्वित्यर्थः ॥ ५५ ॥

**(सं.चं.)** सर्वगुणापाकरणकारणं रामनिर्वासननिर्णयरूपं बुद्धिदोषम् ॥ ५५–६ ॥

**यद्यदिच्छसि वामोरु तत्तद् दास्यामि सर्वथा ।**
**वरावेतौ विना देवि प्रणम्य त्वां प्रसादये ॥ ५६ ॥**

**(भा.दी.) यदि**ति । वामौ मनोहरौ उरू यस्याः तत्सम्बुद्धिः । एतौ त्वदभिहितौ वरौ विना त्वं यत्यत् वस्तु इच्छसि अहं तत्तत् सर्वथा दास्यामि । हे देवि कैकेयि, त्वां प्रणम्य प्रसादये प्रसन्नीकरवाणि । षद्लृ विशरणगत्यवसादनेषु लोट् ॥ ५६ ॥

**मम दीनस्य वृद्धस्य तव प्राणैः[3] समस्य च ।**
**लालप्यमानस्य भृशं शरणं भव भामिनि ॥ ५७ ॥**

---

१. **'सन्मता सद्गुणैः सर्वैः'** २. **'हरिभक्त्यादिशुभधर्मैः'** इति क्वचित् । ३. **'तव प्रियतमस्य च'**

**(भा.दी.) ममे**ति । दीनस्य श्रीरामवियोगशङ्कया खिन्नस्य, वृद्धस्य, तव प्राणैः समस्य, भृशं लालप्यमानस्य पुनःपुनर्विलापं कुर्वतश्च मम, भामिनि ललने कैकेयि, 'नारी भीरुर्भामिनी कामिनी च' इति हलः, त्वं शरणं रक्षिका भव ॥ ५७ ॥

**(सं.चं.)** शरणं रक्षित्री भव । 'शरणं गृहरक्षित्रोर्वधरक्षणयोरपि' इति मेदिनी ॥ ५७–९ ॥

**विलपन्तं पतिमिति विलोठन्तं[१] महीतळे ।**
**विलोक्यानल्पदर्प्पा सा कैकेयी वाक्यमब्रवीत्[२] ॥ ५८ ॥**

**(भा.दी.) विलपन्तमि**ति । अनल्पो महान् दर्पोऽहङ्कारो यस्याः सा तथा सा कैकेयी । इति विलपन्तं विलापं कुर्वन्तं मह्यास्तळं प्रदेशस्तस्मिन् विलोठन्तं परिभ्रमन्तं पतिं दशरथं विलोक्य वाक्यं तत् अब्रवीत् । ब्रूञ् धातोर्लङ् ॥ ५८ ॥

**अनेनासत्यवादेन यशोधर्म्मादयो गुणाः ।**
**स्फीता नश्यन्ति ते राजन् वरौ मे न ददासि चेत् ॥ ५९ ॥**

**(भा.दी.) अनेने**ति । हे राजन्, चेत् (यदि) वरौ मत्प्रार्थितवरौ मे मह्यं न ददासि । तर्हि अनेन असत्यो यो वादो वचनं तेन, ते तव यशश्च धर्मश्च तौ आदी येषां ते तथा, स्फीताः प्रकाशमानाः, लोके प्रख्याता इत्यर्थः, गुणाः नश्यन्ति नाशं प्राप्नुवन्ति ॥ ५९ ॥

**औशीनरादयः पूर्वे[३] सत्यार्त्थे देहमत्यजन् ।**
**त्वं च राज्यं प्रतिज्ञाय स्वपुत्राय न दास्यसि[४] ॥ ६० ॥**

**(भा.दी.)** इममेवार्थमाख्यायिकयोपपादयति– **औशीनरादय** इति । पूर्वे पुरातनाः, उशीनरस्यापत्यं पुमानौशीनरः शिबिः, स आदिर्येषां ते तथा राजानः, सत्यायेति सत्यार्थे, स्वोक्तवचसोऽनन्यथात्व-सिद्ध्यर्थमित्यर्थः, देहः शरीरं तं अत्यजन् । त्वं प्रतिज्ञाय (च) प्रतिज्ञां कृत्वाऽपि स्वपुत्राय भरताय राज्यं तत् न दास्यसि । डु दाञ् दाने लृट् । इन्द्राग्नी श्येनकपोतौ भूत्वा शिबिनिकटं प्रति तद्धर्मपरीक्षार्थमागत्य श्येनभीतः कपोतः शिबिं शरणं जगाम । श्येनेन च ब्रह्मणा मज्जातेराहारत्वेन क्लृप्तं कपोतं त्यजेत्युक्ते

१. 'विलुण्ठन्तम्'
२. 'वाक्यमाददे'
३. 'पूर्वम्'
४. 'प्रतिज्ञाय स्वपुत्राय त्वं राज्यं नच दास्यसि।

शरणागतपरित्यागानर्हत्वात् कपोतदेहसमं मद्देहादवकृत्य मांसं प्रयच्छामीत्युवाच । तेन च तथाऽस्त्वित्युक्ते तुलायां बहुशः स्वदेहमांसमवकृत्य स्थापनेऽपि कपोतेनासममवेक्ष्य स्वयमेव तुलायामारूढस्तस्य तद्धर्मसूक्ष्मावलोकनेन तुष्टा देवा इति पौराणिकी प्रसिद्धिः ॥ ६० ॥

**(सं.चं.)** औशीनरः शिविः । शिबिरित्यर्वाचीनाः । शितस्तीक्ष्णः सन् वेति याति आक्रामति वा शत्रूनिति वा शिविः । शिञ् निशाने । वी गत्यादिषु । शं सुखं वं ज्ञानं बलं वा विशिष्टमस्येति च शिविः ॥६०॥

**रामं राज्येऽभिषिच्य त्वं रन्तुं कौसल्ययेच्छसि ।**
**शिष्टलक्षण दुष्टात्मन्नष्टोऽयं ते मनोरथः ॥ ६१ ॥**

**(भा.दी.)** **राममि**ति । शिष्टानां सत्पुरुषाणां लक्षणं यस्य स तथा तत्सम्बुद्धिः । दुष्ट आत्मा स्वभावो यस्य स तथा तत्सम्बुद्धिः । 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इति वैजयन्ती । हे राजन्, त्वं श्रीरामं राज्यं साम्राज्यं तस्मिन् अभिषिच्य कौसल्यया सह रन्तुं क्रीडां कर्तुं इच्छसि । ते तव अयं मनोरथः ईप्सितार्थः, 'वाञ्छितार्थो मनोरथः' इति हलः, नष्टः ॥ ६१ ॥

**(सं.चं.)** शिष्टमिवाऽत्मानं लक्षयसि दर्शयसि । वस्तुतस्तु दुष्टात्मा त्वम् । अनेन वरदानेन ते मनोरथो नष्टो भविष्यति । निश्चितमेतदिति नष्ट इत्येवाऽह ॥ ६१ ॥

**सपत्नीं मम कौसल्यां[1] मानिनीं[2] दीनतां गताम् ।**
**एकाहं[3] चेदवेक्षिष्ये गमिष्यामि कृतार्थताम् ॥ ६२ ॥**

**(भा.दी.)** **सपत्नीमि**ति । मम समाना पत्नी सपत्नी ताम् । मानः अभिमानः अस्या अस्तीति मानिनी ताम्, कौसल्यां चेद्यदि, एकं च तत् अहश्च, एकाहस्तमपि । 'रात्राह्नाहाः पुंसि' (अ.सू.२.४.२९) इति पुल्लिङ्गता । एकस्मिन् दिवसेऽपीत्यर्थः । दीनतां खिन्नतां गताम्, अहं अवेक्षिष्ये, तर्हि कृत अर्थः प्रयोजनं यस्याः सा तथा तस्या भावस्तत्ता ताम् गमिष्यामि ॥ ६२ ॥

**(सं.चं.)** एकाहमात्रं चेदपि दीनतां गताम्, दुःखितां गलितगर्वाम् ॥ ६२ ॥

---

१. **'सपत्नीं त्यज कौसल्याम्'** इत्यसङ्गतः पाठः । २. **'मानिनीम् अहमेव श्रेष्ठेत्यहङ्कारवतीम्'** इति का.श्री. ।
३. **'एकाहे चेद–'**

**विषं पास्यामि विषमं[१] मरिष्यामि तवाग्रतः ।**
**न चेत् प्रतिज्ञां कुरुषे प्रोच्येति विरराम सा ॥ ६३ ॥**

**(भा.दी.)** **विषमि**ति । प्रतिज्ञां भरताय राज्यदाने प्रतिज्ञां न कुरुषे चेत् तर्हि विषं तत् पास्यामि । पा पाने लृट् । तव अग्रतः विषमः यथा भवति तथा विषमम्, तव मरणात् पूर्वमेवेत्यर्थः, शस्त्रादिनेति वा, मरिष्यामि । मृङ् प्राणत्यागे लृट् । सा इति प्रोच्य विरराम तूर्ष्णीं बभूव ॥ ६३ ॥

**(सं.चं.)** विषममसहजं मरिष्यामि । इति प्रोच्य ॥ ६३ ॥

**हा रामेति क्षितौ पन्नो मोहेन स महीपतिः ।**
**नानासान्त्वैरशान्तां तां पुनः क्रुद्धोऽब्रवीदिदम् ॥ ६४ ॥**

**(भा.दी.)** **हा रामे**ति । हा राम इति वदन् सन्, मोहो मूर्च्छा तेन क्षितौ पन्नः पतितः, सः महीपतिः । नानाविधानि यानि सान्त्वानि सान्त्ववचनानि तैः अशान्तां तां कैकेयीं प्रति क्रुद्धः सन् पुनः इदं वचः अब्रवीत् ॥ ६४ ॥

**(सं.चं.)** गतसञ्ज्ञः पन्नः पतितः, पुनः कथञ्चिदुत्थितः । सान्त्ववचनैरशान्तामजातप्रत्ययामशिथिल-निर्णयाम् । अत एव क्रुद्धः ॥ ६४ ॥

**पापे पाणिर्म्मया यस्ते[२] गृहीतो मन्त्रपूर्वकम् ।**
**तं त्यजामि ममायोग्यं[३] रामसन्त्यागकारणम् ॥ ६५ ॥**

**(भा.दी.)** पापे इति । हे पापे दोषरूपे, सर्वथा, ते तव यः पाणिः, मन्त्रः पूर्वो यथा भवति तथा मन्त्रपूर्वकं विवाहकाले गृहीतः । श्रीरामस्य सन्त्यागः परित्यागस्तस्मिन् कारणम्, अत एव मम अयोग्यं तं पाणिं त्यजामि ॥ ६५ ॥

**(सं.चं.)** तं पाणिं त्यजामि । कुतोऽयोग्यम्? रामसन्त्यागकारणम् । यद्यपि न पाणिः स्वयं रामसन्त्या-गकारणम् । अथापि धर्मिनिष्ठो गुणक्रियादिर्धर्मेष्वप्युपचर्यते । यथा दण्डाः प्रवेश्यन्ताम् । अनेन पाणिना

१. **'विषमं मरणसाध्वसम्'** इति का.श्री. ।
२. **'यस्या गृहीतो–'**
३. **'त्वां त्यजामि ममायोग्याम्'**

गृहीतेन स्वस्य रामसन्त्यागः प्राप्त इति विशिष्य पाणावाक्रोशः । केचिदेतद्भयादेव पाठमन्यथा पठन्ति– 'त्वां त्यजामि ममायोग्याम्' इति ॥ ६५ ॥

**श्रुत्वैव वरदानं मे रामः क्षिप्रं गमिष्यति ।**
**ऋजुर्म्मन्दस्य मेऽभीष्टां राज्यरक्षां न धास्यति ॥ ६६ ॥**

**(भा.दी.) श्रुत्वेति** । ऋजुरवक्रबुद्धिः श्रीरामः मे मम वरस्य दानं प्रदानं तत् श्रुत्वैव क्षिप्रं यथा भवति तथा गमिष्यति । मन्दस्य अल्पभाग्यस्य मे मम अभीष्टां अभीप्सितां राज्यरक्षां न धास्यति न करि-ष्यति । डु धाञ् धारणपोषणयोः लृट् ॥ ६६ ॥

**(सं.चं.)** न धास्यति न विधास्यति, न निर्वक्ष्यति ॥ ६६ ॥

**इत्थं लालप्यमानस्य कैकेय्या दारितात्मनः ।**
**सहस्रयामा तस्याऽसीत् सा त्रियामाऽपि शर्वरी ॥ ६७ ॥**

**(भा.दी.) इत्थमिति** । इत्थं लालप्यमानस्य पुनःपुनर्विलापं कुर्वतः, कैकेय्या दारितो विशीर्ण आत्मा मनो यस्य सः तथा, तस्य दशरथस्य सा शर्वरी त्रयो यामाः यस्याः सा तथाऽपि, यामत्रयविशिष्टाऽपीत्यर्थः, तस्य दशरथस्य सहस्रं यामाः यस्याः सा तथा आसीत् । यथा शस्त्रेणात्यन्तं शीर्णदेहस्य कस्यचित् त्रियामाऽपि रात्रिः दुःखातिशयादलब्धनिद्रस्य सहस्रयामेव भवति, तद्वदस्याप्यासीदिति भावः ॥ ६७ ॥

**(सं.चं.)** सहस्रयामतुल्या ॥ ६७ ॥

**प्रभाते जगदे कान्तः सीताया मागधैरिति ।**
**प्रभा ते जगदेकान्तश्रिये राम रवेरिव ॥ ६८ ॥**

**(भा.दी.) प्रभात** इति । प्रभातः प्रातःकालस्तस्मिन् । 'उषःप्रत्युषसी अपि प्रभातम्' इत्यमरः । मागधैः स्तुत्या प्रबोधकारिभिः पुरुषैः, हे श्रीराम ते प्रभा तेजः, शक्तिरिति यावत्, रवेः प्रभेव कान्तिरिव, जगदेकान्तश्रिये जगतो भक्तजनस्य एकान्ततो मुख्यतो या श्रीः मोक्षलक्षणा सम्पत् तस्यै, भवतीति शेषेणान्वयः । यद्वा जगति एका मुख्या अन्तर्भूता स्वरूपभूता या श्रीस्तस्यै इति वा । 'अन्तोऽस्त्र्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती । त्वदीयजगत्स्रष्टृत्वादिशक्तिर्भक्तैरसकृद्भाविता सती सकल-

सम्पदं सम्पादयतीति भावः। इति सीतायाः कान्तो भर्ता श्रीरामः जगदे स्तुतोऽभूत्। गद व्यक्तायां वाचि लिट्॥ ६८॥

**(सं.चं.)** सीतायाः कान्तः मागधैः जगदे। किमिति? हे राम, रवेरिव तव प्रभा जगत एकान्तायै श्रिये भूयादिति। प्रथमतृतीयपादयोर्यमकम्॥ ६८॥

**तत्रोत्सवे मणिगणो रुचिभिर्विरेजे**
**तेनैव भूषणगणो विविधो विरेजे।**
**रामोऽथ तेन सह वल्लभया विरेजे**
**भूम्ना चराचरमिदं[1] सकलं विरेजे ॥ ६९॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**अयोद्ध्याकाण्डे तृतीयः सर्ग्गः॥**

—०—

**(भा.दी.) तत्रे**ति। तत्र तस्मिन्, उत्सवो महस्तस्मिन्। मणिगणः रुचयः कान्तयस्ताभिः विरेजे। तेनैव तादृशकान्तिमन्मणिगणेनैव विविधः नानाविधः भूषणगणः विरेजे। अथ श्रीरामः वल्लभया प्रियया सीतया सह तेन तादृशमणिरञ्जितभूषणगणेन विरेजे। भूम्ना पूर्णगुणेन श्रीरामेण परं च अपरं च तत्, इदं सकलं जगत् विरेज इत्यन्वयः॥ ६९॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां**
**भावार्थदीपिकायामयोध्याकाण्डे तृतीयः सर्गः॥**

**(सं.चं.)** मणिगणः कान्तिभिर्विरेजे। भूषणगणः कान्तिमता मणिगणेन विरेजे। वल्लभया सह रामो भूषणगणेन विरेजे। भूम्ना पूर्णगुणेन रामेण चराचरात्मकमिदं सकलं जगद् विरेजे। वसन्ततिलका नाम च्छन्दः। तभाभ्यां जाभ्यां गाभ्यां च॥ ६९॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामयोध्याकाण्डे**
**तृतीयसर्गविवरणम्॥**

—०—

[आदितः श्लोकाः– ४९९+६९=५६८]

१. **'परापरमिदम्'** इति वि.ती.पाठः स्यात्।

# चतुर्थः सर्ग्गः

**दिवाकरेऽथाभ्युदिते सुमन्त्रो मन्त्रिसत्तमः ।**
**सत्वरः सत्वसम्पन्नो नरेन्द्रान्तःपुरं ययौ ॥ १ ॥**

**(भा.दी.)** श्रीराम एवं विराजमाने सति वृत्तां सुमन्त्रादीनां प्रवृत्तिं दर्शयति– **दिवाकर** इत्यादिना । अथ प्रभातानन्तरम्, दिवाकरे अभ्युदिते सति, मन्त्रिसत्तमः मन्त्रिषु श्रेष्ठः, सत्वेन सत्वगुणेन सम्पन्नो युक्तः, सात्विक इत्यर्थः, सुमन्त्रः त्वरया वेगेन सहितः सत्वरः सन्, नरेन्द्रस्य अन्तःपुरं तत् ययौ ॥ १ ॥

**(सं.चं.)** अथ निशापगमे । अभ्युदिते उदेतुमारब्धे सति । सत्वं साधुता । साधुरयमिति तस्यानिरुद्धमन्तः-पुरम् । सत्वं सामर्थ्यं च । तेन मन्त्रिषु सत्तमो बभूव ॥ १ ॥

**प्रविश्यान्तःपुरं कान्तं मन्त्री द्वास्थैरवारितः ।**
**सुप्तं मत्वा नरपतिं बोधयन्नभ्यधादिदम्[१] ॥ २ ॥**

**(भा.दी.)** **प्रविश्येति** । द्वारि तिष्ठन्तीति द्वास्थास्तैः अवारितः अनिवारितः मन्त्री सुमन्त्रः कान्तं मनोहरं तत् अन्तःपुरं प्रविश्य, नराधिपं दशरथं सुप्तं निद्रितं मत्वा, दुःखेन शयानमपि निद्रया शेत इति मत्वेत्यर्थः, बोधयन् सन् इदं वचः अभ्यधात् ॥ २ ॥

**(सं.चं.)** कैकेयी राज्ञीषु नितरां कान्ताऽऽस । तेन तस्या अन्तःपुरमपीतरापेक्षया निकामं कान्तम् । सुमन्त्रः साधुरिति विशिष्य राज्ञो विश्वासपात्रमिति द्वाःस्थैरवारितः । शयानं दृष्ट्वा सुप्तं मत्वा ॥ २ ॥

**[२]स्वस्ति तेऽस्तु नृपोत्तिष्ठ प्रजाः सर्वाः प्रजापते ।**
**त्वयि निद्राति निद्रान्ति त्वयि जाग्रति जाग्रति ॥ ३ ॥**

---

१. **'बोधयन्निदमब्रवीत्'** इति, **'बोधयामास संस्तवैः'** इति च क्वचित् । **'बोधयामास संसदि'** इत्यपपाठः ।

२. क्वचिदयमुत्तरश्च श्लोको न पठ्यते । न व्याख्यातं च का.श्री.टीकायाम् । धावद्व्याख्यानत्वाद् विद्याभूषणीयमनिर्णायकम् । अस्मिन् पक्षे सर्गेऽस्मिन् एकपञ्चाशदेव पद्यानि ।

**(भा.दी.) स्वस्ती**ति । हे नृप, ते तुभ्यं स्वस्ति मङ्गळं अस्तु । शयनादुत्तिष्ठ । हे प्रजापते राजन्, त्वयि निद्रातीति निद्रान् तस्मिन्निद्राति, निद्रां कृत्वा स्थितवति सतीत्यर्थः, सर्वाः प्रजाः निद्रान्ति निद्रां कुर्वन्ति । कर्तव्यकार्ये उद्युक्ता न भवन्तीत्यर्थः । कर्तव्यकार्ये अलसा भवन्तीत्यर्थः । निपूर्वः द्रा कुत्सायां गतौ लट् । त्वयि जागर्तीति जाग्रत् तस्मिन् जाग्रति, जागरणं कुर्वति सति, सर्वाः प्रजाः जाग्रति जागरणं कुर्वन्ति । जागृ निद्राक्षये लट् ॥ ३ ॥

**(सं.चं.)** उत्तिष्ठ जागृहि । त्वयि निद्रां कुर्वति प्रजा अपि निद्रान्ति । त्वयि जाग्रति ता अपि जाग्रति । प्रजापतिर्हि भवान् । पतिर्यत् कुरुते तल्लोकोऽनुवर्तते । यथा राजा तथा हि प्रजाः ॥ ३ ॥

**सामन्ता मन्त्रिपूर्वाश्च सर्वाः प्रकृतयस्तथा[1] ।**
**महोत्सवोत्सुका[2] हि त्वां प्रतीक्षन्ते सभातळे ॥ ४ ॥**

**(भा.दी.) सामन्ता** इति । सामन्ता मण्डलाधिपतयः, मन्त्रिणः पूर्वे यासां तास्तथा सर्वाः प्रकृतयश्च अमात्यादिसप्तप्रकृतयश्च[3] महान् य उत्सवस्तस्मिन् उत्सुकाः कौतुकयुक्ताः सभायास्तळं प्रदेशस्तस्मिन् (त्वां) प्रतीक्षन्ते त्वदागमनं प्रतीक्ष्य तिष्ठन्तीत्यर्थः ॥ ४ ॥

**(सं.चं.)** समन्तायाः स्वपुराव्यवहितभूमेरिमे राजानः सामन्ताः अधीननृपाः । मन्त्रिपूर्वाः प्रकृतयः प्रजाः । रामाभिषेकमहोत्सवदर्शनोत्सुकाः । त्वां प्रतीक्षन्ते तवाऽगमनं प्रतीक्षन्ते ॥ ४ ॥

**सर्वान् सम्भृत्य सम्भारानाभिषेचनिकानिह ।**
**वसिष्ठाद्याश्च मुनयस्त्वरन्ते ते हिते रताः ॥ ५ ॥**

**(भा.दी.) सर्वान्**िति । वसिष्ठ आद्यो येषां ते तथा, ते तव हितं यत्कार्यं तस्मिन् रता मुनयश्च, अभिषेचनस्य सम्बन्धिन आभिषेचनिकास्तान् सर्वान् सम्भारान् साधनानि सम्भृत्य सम्पादयित्वा[4], इह सभातळे त्वरन्ते अभिषेकविषयेऽवहिता भवन्ति । त्वर त्वरणे लट् ॥ ५ ॥

**(सं.चं.)** वसिष्ठाद्या मुनयश्च त्वां प्रतीक्षमाणास्त्वरन्ते । अभिषेचनौपयिकान् पदार्थान् सम्भृत्य सङ्गृह्य सज्जाः । तव हिते हि ते रताः ॥ ५ ॥

---

१. '**प्रकृतयस्तव**'
२. '**महोत्सवोत्सुकदृशः प्रतीक्षन्ते**'
३. '**प्रकृतयः प्रजा इति वक्तुमुचितम् ।**'
४. '**सम्पाद्य**' इति पर्याप्तम् ।

**कृतस्वस्त्ययनः श्रीमान् रामस्तव नियोगतः ।**
**अलङ्कृतः सपत्नीक आस्ते कार्य्यं कुरु द्रुतम् ॥ ६ ॥**

**(भा.दी.) कृते**ति । तव नियोगतः आज्ञातः कृतं स्वस्त्ययनं मङ्गल्यवचनं यस्य स तथा, श्रीमान् अलङ्कृतः श्रीरामः पत्न्या सीतया सहितः सपत्नीकः सन् आस्ते । आस उपवेशने लट् । अभिषेकलक्षणं यत्कार्यं तत् द्रुतं यथा भवति तथा कुरु ॥ ६ ॥

**(सं.चं.)** विप्रैः कृतस्वस्तिपुण्याहवाचनः । तव नियोगतः सज्ज आस्ते । अतः यदनन्तरकरणीयं तत् कुरु । द्रुतम्, यथा न मुहूर्तातिपातः स्यात् ॥ ६ ॥

**सचिवस्य वचः श्रुत्वा लज्जाशोकाकुले नृपे ।**
**अवाङ्मुखे मौनवति प्रोचे सा कैकयात्मजा[1] ॥ ७ ॥**

**(भा.दी.) सचिवे**ति । सचिवस्य भृत्यस्य सुमन्त्रस्य वचः श्रुत्वा, लज्जा च शोकश्च ताभ्यामाकुले व्याकुले, अत एव अवाक् अधो मुखं यस्य स तथा तस्मिन् दशरथे मौनवति सति, केकयस्य केकयविषयाधिपते-रश्वपतेरात्मजा पुत्री सा कैकेयी प्रोचे ॥ ७ ॥

**(सं.चं.)** सर्वेषु कार्येषु सचते समवेतो भवतीति सचिवः सहवर्ती सहायकः । श्रुत्वाऽपि अवाङ्मुखे मौनवति नृपे । कुतः? लज्जाशोकाकुलत्वात् । लज्जयाऽवाङ्मुखः । शोकेन वक्तुमप्रभवन् मौनी । केकयानां राजा कैकयः । 'जनपदशब्दात् क्षत्रियादञ्' (अ.सू.४.१.१६८) ॥ ७ ॥

**रामहर्षेण राजेन्द्रो जागर्त्ति स्म निशामिमाम् ।**
**तस्मान्नूनं सनिद्रोऽसौ त्वं शीघ्रं राममानय ॥ ८ ॥**

**(भा.दी.) रामे**ति । राजेन्द्रः दशरथः रामस्य हर्षः रामहर्षस्तेन, श्रीरामस्य यौवराज्याभिषेकनिमित्तकहर्षेणेत्यर्थः, इमां निशां जागर्ति स्म अजागरीत् । जागृ निद्राक्षये लट् । तस्मात् असौ दशरथः नूनमिदानीं सनिद्रः निद्रया सहितः । त्वं श्रीरामं शीघ्रं यथा भवति तथा आनय ॥ ८ ॥

**(सं.चं.)** रामोऽभिषेक्ष्यत इति हर्षेण । रामेण यो हर्षः । रामस्य वा सम्बन्धी हर्षः । रामे वा विषये हर्षः । निशामिमाम् । अत्यन्तसंयोगे द्वितीया । समग्रां निशाम् । जागर्ति स्म अजागः । नूनमिति तर्के ।

१. **'केकयात्मजा'** इति वि.ती.पाठ इति भाति ।

तस्मादिदानीं जातनिद्र इति तर्कयामि । निश्चये वा । इदानीमित्यर्थेऽपि नूनमिति पदं पठन्ति वैदिकाः । निश्चितमिदानीं जातनिद्रः । तेन राममेवेह शीघ्रमानय ॥ ८ ॥

**मन्त्री मत्वा वचः सत्यं तयेति समुदाहृतम् ।**
**निर्गतः प्रैक्षत द्वारि मन्त्रिणः सपुरोहितान् ॥ ९ ॥**

**(भा.दी.) मन्त्री**ति । मन्त्री सुमन्त्रः तया इति समुदाहृतमुक्तं वचः सत्यं मत्वा, श्रीरामानयनोद्देशेन निर्गतः सन्, द्वारि द्वारे । 'स्त्रीर्द्वार्द्वारिं प्रतीहारः' इत्यमरः । सपुरोहितान् वसिष्ठसहितान् मन्त्रिणः प्रैक्षत । ईक्ष दर्शनाङ्कनयोः लङ् ॥ ९ ॥

**(सं.चं.)** तया इति समुदाहृतं वचः सत्यं मत्वा । तया समुदाहृतं वचः सत्यमिति मत्वेति वा । सभा-द्वारि । अन्तःपुरद्वारि वा ॥ ९–१० ॥

**उदेति देवः सविता सम्भारः सम्भृतोऽखिलः ।**
**आवेदयाऽशु राजानं स तैरित्यभ्यभाष्यत[१] ॥ १० ॥**

**(भा.दी.) उदे**ति । देवः सविता उदेति उदयं प्राप्नोति । इण् गतौ लट् । अखिलः सम्भारः अभिषेकसाधनद्रव्यं सम्भृतः सम्पादितः । आशु राजानं प्रति आवेदय विज्ञापय । विद ज्ञापनाख्याननिवासनेषु[२] लोट् । तैः मन्त्रिभिः सः सुमन्त्रः इति अभ्यभाष्यत । भाष व्यक्तायां वाचि लङ् ॥ १० ॥

**ततः सुमन्त्रः सम्भ्रान्तः कालस्यात्ययशङ्कया ।**
**पुनरन्तःपुरं गत्वा स्तुवन्[३] भूपमबोधयत् ॥ ११ ॥**

**(भा.दी.) तत** इति । ततः कालोऽभिषेकसमयस्तस्य अत्ययशङ्कया सम्भ्रान्तः सुमन्त्रः पुनः अन्तःपुरं गत्वा भूपं स्तुवन् सन् अबोधयत् । बुधिर् अवबोधने[४] लङ् ॥ ११ ॥

**(सं.चं.)** सम्भ्रमस्त्वरा । सम्भ्रमः साध्वसम् । कालोऽत्येतीति शङ्कया भीतः । अत एव सत्वरः ॥ ११ ॥

---

१. **'तैरित्यभिभाषितः'**

२. **'विद ज्ञाने'** इति वक्तुमुचितमित्युक्तम् ।

३. **'स्तुवन् नृपमबो-'**

४. **'बुध अवगमने'** इत्यपि शक्यम् वक्तुम् ।

**महेन्द्रसख राजेन्द्र महासुरनिबर्हण ।**
**आयुष्मन् रामजनक क्षिप्रमुद्बुद्ध्यतां त्वया ॥ १२ ॥**

**(भा.दी.) महे**ति । महेन्द्रस्य सखा महेन्द्रसखस्तत्सम्बुद्धिः । सख्ये निमित्तमाह– **महे**ति । महान्तो ये असुरास्तान्निबर्हयति विनाशयतीति तथोक्तस्तत्सम्बुद्धिः । आयुः सम्पूर्णमायुरस्यास्तीति तथा तत्सम्बुद्धिः । रामजनक रामपितः, राजेन्द्र दशरथ, त्वया क्षिप्रं यथा भवति तथा उद्बुध्यतां प्रबोधः प्राप्यताम् । बुधिर् अवबोधने[1] लोट् ॥ १२ ॥

**(सं.चं.)** महेन्द्रप्रियार्थं कृते युद्धे महासुरनिबर्हणः । निबर्हयति नाशयतीति निबर्हणः । बर्ह हिंसायाम् । महेन्द्रः प्रिय इत्यसुरान् न्यबर्हयः । निबर्हणेन पुनस्तस्य प्रियः सखाऽभवः । आयुष्मन्निति सुमन्त्रस्य वयोज्येष्ठत्व-माह ॥ १२ ॥

**सुमन्त्रस्तुतिवाक्यानि कैकेयीक्रूरवाक्यतः[2] ।**
**राज्ञोऽतिदुःसहान्यासन् रामविश्लेषशङ्किनः ॥ १३ ॥**

**(भा.दी.) सुमन्त्रे**ति । सुमन्त्रस्य स्तुतिरूपाणि वाक्यानि, कैकेय्याः यत् क्रूरं वाक्यं प्रागुक्तं तस्मादिति ततः, रामस्य विश्लेषो वियोगस्तमाशङ्कितुं शीलमस्यास्तीति तथा तस्य राज्ञः, अतिदुःसहानि अत्यन्तं श्रोतुमसह्यानि आसन् ॥ १३ ॥

**(सं.चं.)** क्रूरवाक्यादपि स्तुतिवाक्यानि दुःसहान्यासन् । स्तुतिरियं विफला भविष्यति निन्दान्ता च तथ्ये विदिते सतीति ॥ १३ ॥

**महीशो मन्त्रिणं स्माऽह[3] मृतकं स्तौषि किं सखे ।**
**जीवन् क्षणं च पश्यामि राममानय मङ्क्षिति ॥ १४ ॥**

**(भा.दी.) मही**ति । महीशः दशरथः । हे सखे सुमन्त्र, मृतकं शवसमं मां किं किमिति स्तौषि स्तोत्रं करोषि? ष्टुञ् स्तुतौ लट् । क्षणः क्षणकालस्तं च जीवन् अहं श्रीरामं पश्यामि । मङ्क्षु क्षिप्रं श्रीराममानय आकारय, इति मन्त्रिणं आह स्म अब्रवीत् ॥ १४ ॥

---

१. **'बुध अवगमने'** इत्यपि शक्यं वक्तुम् ।
२. **'कैकेय्याः क्रूरवाक्यतः'**
३. **'मन्त्रिणं प्राह'**

**(सं.चं.)** मृतकं मृतकल्पम् । सादृश्यार्थे कन् । मङ्क्षु क्षिप्रम् । यावता जीवामि । जीवंश्च तं क्षणकालमपि पश्यामि ॥ १४ ॥

**ततः किञ्चिदपक्रम्य[१] किमेतदिति दुर्म्मनाः ।**
**चिन्ताक्रान्तः[२] सुमन्त्रोऽथ[३] रामधाम द्रुतं ययौ ॥ १५ ॥**

**(भा.दी.) तत** इति । ततः दशरथस्य समीपात् किञ्चित् अपक्रम्य परागागत्य एतत् एवं कथनं किं किन्निमित्तं इति दुःखयुक्तं मनो यस्य स दुर्मनाः, अत एव चिन्ताक्रान्तः सुमन्त्रः, अथ रामधाम प्रति द्रुतं यथा भवति तथा ययौ ॥ १५ ॥

**(सं.चं.)** अपक्रम्य अपसृत्य । राज्ञस्तामवस्थां द्रष्टुमपारयन् । 'प्रगृहीताञ्जलिः किञ्चित् तस्माद् देशाद-पाक्रमत्' इति रामायणे । किमेतत् सञ्जातमिति निश्चेतुमपारयन् दुःखितमनाः । किं करणीयमिति चिन्ता-क्रान्तः ॥ १५ ॥

**हृष्टपुष्टजनं वप्रैः सौवर्ण्णैः सप्तभिर्य्युतम्[४] ।**
**पुरमिन्द्रपुराक्षिप्नु[५] वैकुण्ठोपममाविशत् ॥ १६ ॥**

**(भा.दी.)** हृष्टेति । हृष्टाः सन्तुष्टाः । (पुष्टाः) स्वेष्टलाभेनाभिवृद्धा जना यस्मिन् तत्तथोक्तं तत् । सुवर्णस्य विकारभूतानि सौवर्णानि तैः सप्तभिः वप्रैः प्राकारैः युतं युक्तम् । पुरन्दरस्य पुरं मन्दिरं तदाक्षेप्तुं शीलमस्यास्तीति तथोक्तं तत् । 'अगारे नगरे पुरम्' इत्यमरः । अत एव वैकुण्ठस्य उपमा यस्य तत्तथा तत् । श्रीराममन्दिरं आविशत् ॥ १६ ॥

**(सं.चं.)** सर्वसाधनपूर्णं राजगृहं पुरम् । हृष्टाः सन्तुष्टाः । पुष्टाः समृद्धाः । सप्तभिर्वप्रैः प्राकारैर्युतम् । 'वप्रश्चाऽवरणे वृन्दे प्राकारे' इत्यभिदधति । इन्द्रपुरं स्वशोभया क्षिपति निराकरोति । बहवो वैयाकरणाः 'क्षिप्णु' इति पठन्ति । युक्तं च षात् परस्य णत्वम् । अथापि वृद्धाः 'क्षिप्नु' इत्येव पठन्ति । सुषुम्नेति-वत् । वैकुण्ठोऽपि सर्वथा हृष्टपुष्टजनः । भूरादिसत्यलोकान्तैः सप्तभिरावरणोपमैर्लोकैर्युतः । तेऽपि शास्त्रगतशोभनवर्णैः वर्णिता इति सौवर्णाः ॥ १६ ॥

---

१. '–दपाक्रम्य' २. 'चिन्ताभ्रान्तः' ३. 'सुमन्त्रोऽपि रामधाम'
४. 'सप्तभिर्वृतम्' ५. 'पुरक्षिप्नु'

**ददर्श देवं सौवर्ण्णे पर्य्यङ्के[1] राङ्कवास्तृते ।**
**आसीनं चन्दनेनाक्तं वराहरुधिरत्विषा ॥ १७ ॥**

**(भा.दी.) ददर्शेति** । सुवर्णस्य विकारः सौवर्णस्तस्मिन्, रङ्कुः हरिणस्तस्य सम्बन्धि राङ्कवं एणचर्म तेन आस्तृतस्तस्मिन् पर्यङ्के आसीनम्, वराहस्य रुधिरं रक्तं तद्वत् त्विट् कान्तिर्यस्य तत्तथोक्तं तेन चन्दनेन अक्तं लेपितं देवं श्रीरामं ददर्श ॥ १७ ॥

**(सं.चं.)** राङ्कवमूर्णादिकृतं कम्बलादिकम् । यद्यपि रङ्कुशब्दो मृगविशेषवचनः । अथापि यद्रोमभिः सूक्ष्म-वस्त्रादिकं वयन्ति स सर्वोऽपि मृगोऽत्र रङ्कुपदार्थ इति वैयाकरणाः । पर्यङ्के मञ्च आसीनम् । चन्दनस्य लौहित्यं वराहरुधिरेण शशरुधिरेण चोपमिमते कवयः ॥ १७ ॥

**सीतया सेवितं देव्या चारुचामरहस्तया ।**
**द्रष्टुमिच्छति राजा त्वामित्यूचे स प्रणम्य तम्[2] ॥ १८ ॥**

**(भा.दी.) सीतयेति** । सः सुमन्त्रः, चारु यच्चामरं तत् हस्ते यस्याः सा तथा तया सीतया देव्या सेवितं तं श्रीरामं प्रणम्य, हे राम, त्वां राजा दशरथः द्रष्टुं इच्छति इति एवमादिप्रकारेण तं श्रीरामं ऊचे ॥ १८ ॥

**(सं.चं.)** चामीकरदण्डतया चारु चामरम् । चमरीमृगपुच्छरोमगुच्छकं बालव्यजनम् । चामरहस्तया देव्या चारु सप्रणयं सभक्त्युन्मेषं सेवितमिति वा । प्रणम्य राजपुत्रोचितैः स्तुतिवचनैरभिनन्द्य । मनसा भक्तिपूर्वं प्रणम्य च ॥ १८ ॥

**आरुरोह रथं रामः[3] प्रभाकरसमप्रभम् ।**
**अभिनन्द्याथ मैथिल्या अपाङ्गं विश्वमङ्गलम्[4] ॥ १९ ॥**

**(भा.दी.) आरुरोहेति** । अथ श्रीरामः, मैथिल्याः सीतायाः, विश्वस्य जगतो मङ्गलं यस्मात् स तथोक्तस्तम्, अपाङ्गं अभिनन्द्य स्वविलासप्रदर्शनेन सन्तोषं जनयित्वा, प्रभाकरेण सूर्येण समा प्रभा यस्य स तथा तं रथम् आरुरोह । रुह बीजजन्मनि प्रादुर्भावे च लिट् ॥ १९ ॥

**(सं.चं.)** अपाङ्गं विश्वमङ्गलम् । 'विश्वस्थितिप्रळयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः । यस्या अपाङ्गलवमात्रत ऊर्जिता सा श्रीः' इत्याचार्यवचनम् ॥ १९ ॥

---

१. **'सौवर्णपर्यङ्के'** २. **'सम्प्रणम्य तम्'** ३. **'रामो दिवाकरसम–'** ४. **'अपाङ्गैर्विश्वमङ्गलैः'** इति भ्रान्तः पाठः ।

**पुरात् पुरुषसिंहोऽयं महासिंहो बिलादिव[१] ।**
**निर्जगाम जगन्नाथो नानाभटगणैर्युतः[२] ॥ २० ॥**

**(भा.दी.) पुरादि**ति । पुरुषसिंहः पुरुषश्रेष्ठः जगन्नाथः नानाविधा ये भटास्तेषां गणास्तैः युतः अयं श्रीरामः । गुहात् गुहायाः । यद्यपि गुहाशब्दः स्त्रीलिङ्गः । तथाऽपि–'विनिर्गतौ गृहात् तस्मात् सिंहाविव महा-गुहात् । राजद्वारि स्थितं नागं हेमाद्रिशिखरोपमम्' इति पाद्मे प्रयोगात् पुल्लिङ्गोऽपि साधुः । बिलादिति क्वचित् पाठः । महासिंह इव, पुरं मन्दिरम् तस्मात् निर्जगाम निस्सृतोऽभूत् ॥ २० ॥

**(सं.चं.)** 'महासिंहो गुहादिव' इति पठन्ति । प्रायः पण्डिताचार्यो लोकेष्वप्रयुक्तानि पदानि न प्रयुङ्क्ते । तेन 'बिलादिव' इत्येव मूलपाठ इति युक्तम् । 'बिलं रन्ध्रे गुहायां च' इति हैमः । 'शूरो वीरश्च विक्रान्तो भटः' इति हलः । भटाः युद्धकुशलाः ॥ २० ॥

**रम्याणि हर्म्याण्यारुह्य रामा रामं निरीक्ष्य च ।**
**परस्परमिति स्माऽहुः पुरुषाश्च समन्ततः[३] ॥ २१ ॥**

**(भा.दी.) रम्याणी**ति । रामाः स्त्रियः रम्याणि हर्म्याणि आरुह्य, श्रीरामं निरीक्ष्य च, पुरुषाश्च श्रीरामं निरीक्ष्य समन्ततः सर्वतः परस्परं इति आहुः स्म अवदन् । ब्रूतेर्लट् ॥ २१ ॥

**(सं.चं.)** रामाः पुरुषाश्च । परस्परं रामा रामाभिः पुरुषैश्च । पुरुषाः पुरुषै रामाभिश्च ॥ २१ ॥

**सीमन्तिनी न सीतायाः समाऽस्ति भुवनत्रये ।**
**राघवं वल्लभं लेभे या मुकुन्दमिवेन्दिरा ॥ २२ ॥**

**(भा.दी.) सीमन्तिनी**ति । भुवनानां त्रयं तस्मिन् । सीतायाः समा, सीमन्त अस्या अस्तीति सीमन्तिनी, सभर्तृकस्त्रीत्यर्थः । 'सीमन्तः कथ्यते स्त्रीणां केशमध्ये तु पद्धतिः' इति हलः । नास्ति । अस्तेर्लट् । कुत इत्यत आह– **राघवमि**ति । या सीता, मुकुन्दं श्रीहरिं इन्दिरेव, वल्लभं भर्तारं राघवं श्रीरामं लेभे । डु लभष् प्राप्तौ लिट् ॥ २२ ॥

**(सं.चं.)** किमिति स्माऽहुः– सीमन्तिनी ॥ २२–३ ॥

---

१. **'गुहादिव'** इति वि.ती.पाठः । २. **'–गणैर्वृतः'** ३. **'–मिति प्राहुः पुरुषाश्च ततस्ततः'**

**कौसल्यया नृपेणापि किन्नु तत् सुकृतं कृतम् ।**
**[1]रामं वत्सेति यावेनं समाश्लिष्याभिनन्दतः[2] ॥ २३ ॥**

**(भा.दी.) कौसल्यये**ति। कौसल्या (राज्ञी) तया, नृपेण दशरथेनापि, तत् श्रीरामस्य पुत्रत्वहेतुभूतं सुकृतं पुण्यं किं नु किं वा कृतम्? को वाऽतिशयोऽनयोरित्यत आह– **रामे**ति। यौ कौसल्यादशरथौ भो राम, वत्स इति, एनं श्रीरामं समाश्लिष्य अभिनन्दतः सन्तोषं प्राप्नुतः ॥ २३ ॥

**मानुषाइव पीयूषं धनं भूरीव निर्द्धनाः[3] ।**
**लब्ध्वा रामं सुराजानं हन्त[4] मोदामहेऽधुना ॥ २४ ॥**

**(भा.दी.) मानुषा** इति । मानुषाः, पीयूषमिव अमृतमिव, न विद्यते धनं यस्य स निर्धनः पुरुषः धनं भूरीव बहुधनमिव, वयं शोभनश्चासौ राजा च सुराजा तम्, 'न पूजनात्'(**अ.सू.**५.४.६९) इति निषेधात् समासान्तप्रत्ययाभावः, श्रीरामं लब्ध्वा अधुना मोदामहे ॥ २४ ॥

**(सं.चं.)** मानुषाः पीयूषमिव निर्धना भूरि धनमिव वयं रामं सुराजानं लब्ध्वा । पूजार्थाभ्यां स्वतिभ्यां परस्य राजशब्दस्य टजभावः । 'पूजायां स्वतिग्रहणं कर्तव्यम्' इति वार्त्तिकम् (**अ.सू.**५.४.६९)। हन्तेति सम्प्रहर्षे सम्भ्रमे च ॥ २४ ॥

**एवं विचित्रा मोदेन[5] वाचः प्रब्रुवतो जनान् ।**
**सस्मितेन कटाक्षेण लाळयन् प्रययौ प्रभुः ॥ २५ ॥**

**(भा.दी.) एवमि**ति । मोदः श्रीरामदर्शनजन्यसन्तोषस्तेन, एवं विचित्रा वाचः प्रब्रुवतः, जनान्, प्रभुः स्वामी, 'समर्थेऽधिपतौ प्रभुः' इति वैजयन्ती, श्रीरामः सस्मितेन स्मितसहितेन, कटाक्षेण अपाङ्गदर्शनेन, 'कटाक्षोऽपाङ्गदर्शनम्' इत्यमरः, लाळयन् मानयन् सन् प्रययौ ॥ २५ ॥

**(सं.चं.)** रामदर्शनजनितमोदेन विचित्रा वाचः । विचित्रेण वाऽऽमोदेन । लाळयन् प्रीत्याऽभिनन्दन् ॥२५॥

**प्रविश्य राजभवनं देवराजगृहोपमम् ।**
**ववन्दे पितरं देवः[6] कैकेयीमपि मातरम् ॥ २६ ॥**

१. '**राम वत्सेति**' इति वि.ती.पाठः । २. '**समाश्लिष्याभ्यनन्दताम्**' ३. '**निर्धनः**' इति वि.ती.पाठः।
४. '**सुराजानं वयं मोदामहे**' इति वि.ती.पाठः। ५. '**विचित्रमोदेन**' ६. '**पितरं रामः**'

**(भा.दी.) प्रविश्येति** । देवः श्रीरामः देवानां राजा देवराज इन्द्रस्तस्य यद्गृहं तस्य उपमा यस्य तत्तथोक्तं तत्, राजभवनं राजमन्दिरं तत्, प्रविश्य (पितरं) दशरथं मातरं कैकेयीमपि ववन्दे । वदि अभिवादनस्तुत्योर्लिट् ॥ २६ ॥

**(सं.चं.)** वैकुण्ठोपमं रामधामेत्युक्तम् । अतः देवराजगृहोपमं दशरथधामेत्याह ॥ २६ ॥

**आयुष्मान् भव[1] वत्सेति विवक्षोरपि भूपतेः ।**
**वचनं नागलद् वक्त्रान्नेत्राभ्यामगलज्जलम्[2] ॥ २७ ॥**

**(भा.दी.) आयुरिति** । हे वत्स, त्वं आयुष्मान् भव । भूधातोर्लोट् । वक्तुमिच्छतीति विवक्षति विवक्षतीति विवक्षुस्तस्य, वक्तुमिच्छावतोऽपीत्यर्थः, भूपतेः वक्त्रं मुखं तस्मात् वचनं न अगलत् न निःसृतमभूत् । [3]गल अदने लङ् । नेत्रे चक्षुषी ताभ्यां जलं अस्रं अपतत् । पत्लृ पतने लङ् ॥ २७ ॥

**(सं.चं.)** अगलत् अस्रवत् । कोऽयं धातुः? 'गल अदने' इति धातोरिदं रूपमिति वदन्ति । स्रवणे चेति वक्तव्यम् । उवाच हि क्षीरस्वामी–'गल अदने । स्रवणेऽपि । अनेकार्थत्वात्' इति ॥ २७ ॥

**पितुस्तं शोकमालक्ष्य कैकेयीं पृच्छति स्म सः ।**
**जानंश्च सर्वं सर्वेशो लोकमेवं[4] विडम्बयन् ॥ २८ ॥**

**(भा.दी.) पितुरिति** । सर्वेशः (सः) श्रीरामः, सर्वं[5] स्वपरगताखिलप्रमेयजातं तत्, जानंश्च जानन्नपि, एनं नरलोकस्थं लोकं जनं विडम्बयन् अनुकुर्वन् सन् । न त्वज्ञानेनेति भावः । पितुः दशरथस्य तं शोकं आलक्ष्य ज्ञात्वा कैकेयीं पृच्छति स्म अपृच्छत् । प्रच्छ ज्ञीप्सायां लट् ॥ २८ ॥

**(सं.चं.)** आलक्ष्य अवलोक्य । एवमज्ञलोकं विडम्बयन् मोहयन् । अथच लोकसङ्ग्रहाय स्वयमपि लोकाचारमनुकुर्वन् ॥ २८ ॥

---

१. **'आयुष्मन् भव'** इति भ्रान्तः पाठः ।

२. **'–भ्यामपतज्जलम्'** इति वि.ती.पाठः ।

३. **'अगलत्' गॄ निगरणे इति धातोर्लङ् । अगरदित्यत्र रेफस्य लत्वे अगलदिति भवति'** इति का.श्री. । असङ्गतमिदम् । गॄधातोर्लङि अगिरदिति रूपम् । नत्वगरदिति । तेन रेफस्य लत्वे 'अगिलत्' इति रूपं स्यात् । नतु 'अगलत्' इति । 'गृ सेचने' इति तु स्यात् । तस्य लङि 'अगिरत्' इति रूपम् । लत्वे 'अगलत्' इति स्यात् ।

४. **'लोकमेनम्'** इति वि.ती.पाठः ।

५. 'सर्वं कालत्रयवर्ति पदार्थजातम्' इति च ।

**किमम्ब दुःखं तातस्य किमागो मयि पश्यति ।**
**किं त्वयाऽऽगः कृतं मानात् सत्यं ब्रूहि सुताय मे[१] ॥ २९ ॥**

**(भा.दी.) किमि**ति । हे अम्ब मातः, 'अम्बार्थनद्योर्ह्रस्वः'(अ.सू.७.३.१०७) इति ह्रस्वः । तातस्य पितुः दुःखं किं किन्निमित्तम्? मयि किं आगः अपराधस्तत् पश्यति? त्वया मानात्, भर्तुः प्रियाऽस्मीति यो मानो गर्वस्तस्मात्, किं आगः अपराधः कृतम्? सुताय मे मह्यं सत्यं वचः ब्रूहि । ब्रूञो लोट् ॥ २९ ॥

**(सं.चं.)** किमागः कमपराधं मयि पश्यति? अथ च मयि किमप्यागः पश्यति किम्? येन विमनायते । त्वया कृतं किमागः पश्यति? अथवा त्वया किमप्यागः कृतं किम्? आत्मसम्भावना मानः ॥ २९ ॥

**वाणीमाकर्ण्य रामस्य शठा कठिणमानसा[२] ।**
**कैकेयी कैतवप्रज्ञा सस्मितं तमभाषत[३] ॥ ३० ॥**

**(भा.दी.) वाणीमि**ति । कैतवा कपटा प्रज्ञा बुद्धिर्यस्याः सा तथा, कठिनं मानसं मनो यस्याः सा तथा, कैकेयी श्रीरामस्य वाणीं आकर्ण्य । शठः शाठ्यं तस्मात् । भावप्रधानोऽयं निर्देशः । बुद्धिकौटिल्या-दित्यर्थः । स्मितेन सहितं यथा भवति तथा सस्मितम्, तं श्रीरामं अभाषत ॥ ३० ॥

**(सं.चं.)** मुखे गौरन्तर्व्याघ्रः कितव उच्यते । पिहिता वञ्चकता कैतवम् । कैतवोपेता प्रज्ञाऽस्याः । अत एव कठिणमानसा कठिणं परहिंसायामानन्ददृक् निर्दयं मानसमस्याः । अथापि सस्मितभाषणा । स्मितेन स्वकैतवं पिधायाभाषत । अयुक्तेन क्रूरेणापि विधानेन स्वकार्यसाधकता शाठ्यम् ॥ ३० ॥

**न त्वयाऽऽगः कृतं पुत्र न मया नापरेण वा[४] ।**
**राजा मह्यं[५] वरौ दत्वा त्वद्भयादनुतप्यते ॥ ३१ ॥**

**(भा.दी.) ने**ति । हे पुत्र श्रीराम, त्वया आगः अपराधः न कृतम् । मया वा आगः न कृतम् । अपरेण वा पुरुषेण आगः न कृतम् । तर्हि दुःखे किं निमित्तमित्यत आह– **राजे**ति । राजा दशरथः मम, मह्यमिति क्वचित् पाठः, वरौ दत्वा, त्वत्तः भयं त्वद्भयं तस्मात्, त्वयि स्नेहभङ्गभयादित्यर्थः, अनुतप्यते अनुतापं प्राप्नोति । तप सन्तापे लट् दिवादिः ॥ ३१ ॥

---

१. **'सुताय ते'** २. **'शठात् कठिनमानसा'** इति वि.ती.पाठः । **'शठा गूढद्वेषिणी'** इति का.श्री. ।
३. **'सस्मितं समभाषत'** ४. **'नापरेण च'** ५. **'राजा मम वरौ'** इति.वि.ती.पाठः ।

**(सं.चं.)** त्वमङ्गीकरोषि वा नवेति भयात्। ननु दशरथस्य न तादृशी संशीतिरास । 'श्रुत्वैव वरदानं मे रामः क्षिप्रं गमिष्यति' इति ह स्माऽह । सत्यमाह तथा दशरथः । इदमिह तु कैकेयीवचनम् । सा रामविषये शङ्किता स्वामाशङ्कां दशरथेऽप्यारोपयामास । 'त्वद्वियोगभयात्' इति केचित् । सन्देहगर्भा प्रवृत्तावधीरता भयम् । '**ଓଡ଼ାଞ**' इति भाषायाम् । अनुतप्यते पश्चात्तापेन अन्तर्दाहमनुभवति कुकूलमध्यपतित इव । तप दाहे ॥ ३१ ॥

**यदि तात स्वताते ते भवेद् भक्तिरकैतवा[१] ।**
**धर्म्मकृच्छ्रादिमं पाहि वक्ष्ये त्वं चेत् प्रतिश्रवी ॥ ३२ ॥**

**(भा.दी.) यदी**ति । हे तात श्रीराम, यदि स्वताते स्वपितरि, ते तव, न विद्यते कैतवं कापट्यं यस्याः सा तथा भक्तिः भवेत् । अकैतवादिति पाठे निर्व्याजादित्यर्थः । तर्हि धर्मस्य कृच्छ्रं कथं कर्तव्यमिति सङ्कटं तस्मात् इमं दशरथं पाहि[२] । तौ वरौ वक्तव्यावित्यत आह– **वक्ष्य** इति । चेद्यदि त्वं प्रतिश्रवः प्रतिज्ञा अस्यास्तीति प्रतिश्रवी, तौ वरौ श्रुत्वा तथा करिष्यामीति प्रतिज्ञां करोषीत्यर्थः, तर्हि वक्ष्ये ॥ ३२ ॥

**(सं.चं.)** तातेति प्रीतिपूर्वं सम्बोध्य राममावर्जयतीव । धर्मे कृच्छ्रं सङ्कटम् । इदमदो वा धर्मसम्मतमित्यनिर्णयः । त्वं प्रतिश्रवी चेत्, यदि पित्रोक्तं पालयिष्यामीति प्रतिजानासि, तर्हि वक्ष्ये ॥ ३२ ॥

**इत्युक्त ऊचे भगवान् न कुर्य्यां किं[३] पितुः प्रियम् ।**
**पिबेयं कालकूटं वा[४] विशेयं ज्वलितानलम् ॥ ३३ ॥**

**(भा.दी.) इती**ति । कैकेय्या इति उक्तः भगवान् श्रीरामः, चेद्यदि पितुः प्रियं कर्म न कुर्याम् । कृञ्धातोर्लिङ् । तर्हि कालकूटं विषं तत् पिबेयम् । ज्वलितोऽनलोऽग्निस्तं वा विशेयम् ॥ ३३ ॥

**(सं.चं.)** पितुः प्रियं किमिति न कुर्याम्? कुर्यामेव । यदि पितुः प्रियं पिबेयं कालकूटम् । प्रविशेयं ज्वलन्तमनलम् । पित्रर्थे जीवितमपि जह्यामित्येतत् ॥ ३३ ॥

---

१. **'भक्तिरकैतवात्'**

२. **'राजा यदि मह्यं वरौ दद्यात् तवाप्रियं भवति । यदि न दद्यात् तदा प्रतिज्ञाभङ्गो भवतीति पक्षद्वयेऽपि बाधकसत्त्वात् धर्मकृच्छ्रं द्रष्टव्यम्'** इति का.श्री. ।

३. **'न कुर्यां चेत् पितुः प्रियम्'** इति वि.ती.पाठः । ४. **'–कूटं तु विशेयम्'**

**मातः क्षमापय क्षिप्रं क्षमावन्तं क्षमापतिम् ।**
**पित्रा [१]प्रत्तौ वरौ तुभ्यं मया सत्यं प्रतिश्रुतम् ॥ ३४ ॥**

**(भा.दी.) मातरि**ति । हे मातः कैकेयि, क्षमा अस्यास्तीति क्षमावान् तम्, क्षमायाः भुवः पतिं दशरथम्, क्षिप्रं यथा भवति तथा क्षमापय मन्निमित्तकानुतापात् क्षमावन्तं कुरु । क्षमूष् सहने लोट् । वरविषये तु मया प्रतिज्ञायत इत्याह– **पित्रे**ति । पित्रा (तुभ्यं) प्रत्तौ प्रदत्तौ वरौ, मया सत्यं यथा भवति तथा प्रतिश्रुतं प्रतिज्ञातम् ॥ ३४ ॥

**(सं.चं.)** मदर्थे त्वमेव क्षमामभ्यर्थय । अकस्मात् तवानुतापहेतुश्चेदपि रामस्त्वया क्षन्तव्य इति सान्त्वय । स नूनं क्षमिष्यते । यतः स निसर्गतः क्षमावान् । मम पित्रा तुभ्यं वरौ दत्तौ । मया च सत्यं निष्कपटं प्रतिश्रुतम्, पित्राज्ञां पालयिष्यामीति । अत्र किञ्चित् पाठवैयाकुल्यमिव दृश्यते । 'पित्रा यौ तौ (द्वौ) वरौ दत्तौ' इति वा पाठः । पित्रा दत्तौ यौ वरौ तौ मया दत्ताविति गृहाण । नेदमौपचारिकं वचः । यतः सत्यं यथार्थमेव मया प्रतिज्ञातमिति ॥ ३४ ॥

**प्रभुणैवं[२] प्रतिज्ञाते सा पापा व्याललाप तम्[३] ।**
**त्वत्पित्रा मे वरौ प्रत्तौ[४] पालितेन पुरा मया ॥ ३५ ॥**

**(भा.दी.) प्रभुणे**ति । प्रभुणा श्रीरामेण एवं प्रतिज्ञाते सति । पापा क्रूरा । 'पापः स्यात् क्रूरपाप्मनोः' इति वैजयन्ती । सा कैकेयी तं श्रीरामं प्रति, पुरा पूर्वं देवासुरयुद्धसमय इत्यर्थः, मया पालितेन रक्षितेन त्वत्पित्रा दशरथेन मे मह्यं वरौ प्रत्तौ इति व्याललाप प्रोवाच । रप-लप व्यक्तायां वाचि लिट् ॥ ३५ ॥

**(सं.चं.)** विषम आलापो व्यालापः । पुरा मे वरौ दत्तौ । पुरा मया पालितेन । दानवैः सह युद्धे रक्षितेन ॥ ३५ ॥

**इदानीं तौ वरौ दातुमुचितौ याचितौ मया ।**
**स्वयं दत्वाऽप्यहो मे त्वां सौजन्यान्न वदत्यसौ ॥ ३६ ॥**

---

१. 'पित्रा दत्तौ' इति, 'पित्रा यौ तौ (द्वौ) वरौ दत्तौ' इति च ।
२. 'प्रभुणेति प्रतिज्ञाते' ।
३. 'विललाप तम्' ।
४. 'वरौ दत्तौ'

**(भा.दी.)** **इदानीमि**ति । इदानीं दातुम्  उचितौ तौ वरौ मया याचितौ । असौ तदानीं वरदाता स्वयं राजा मे मह्यं वरौ दत्वाऽपि, त्वां सौजन्यं स्नेहस्तस्मात् न वदति, त्वां प्रति न ब्रवीति ॥ ३६ ॥

**(सं.चं.)** मे दत्वाऽपि त्वां न वदति । कुतः? सौजन्यात् । परेषां खेदासहिष्णुता, अकस्मात् खेदजननेऽपि चित्तसङ्कोचः सौजन्यम् । तदिदं पितुः पुत्रे सौजन्यमित्यहो ॥ ३६ ॥

**वने वस त्वं तपसा वत्सरान् नव पञ्च च ।**
**भरतः पातु पृथिवीमेतद् राज्ञोऽनुशासनम्[१] ॥ ३७ ॥**

**(भा.दी.)** कौ तौ वरौ त्वया याचितावित्यत आह– **वन** इति । हे श्रीराम, त्वं नव नवसङ्ख्याकान् पञ्च च पञ्चसङ्ख्याकांश्च वत्सरान् तपसा, इत्थम्भूतलक्षणे तृतीया, तपः कुर्वन्नित्यर्थः, वने वस आवासं कुरु । वस निवासे लोट् । भरतः  पृथिवीं पातु । एतत् राज्ञः अनुशासनं आज्ञा ॥ ३७ ॥

**(सं.चं.)** किं तत् तेनानुदितम्? आह– वने  वस त्वं  तपसा । इत्थम्भावे तृतीया । तपश्चरन् । एतद् वरद्वयम् ॥ ३७ ॥

**इत्युक्त ऊचे काकुत्स्थो वनं यास्याम्यहं सुखम् ।**
**आनीयतां च भरतो दूतैः साध्वभिषिच्यताम् ॥ ३८ ॥**

**(भा.दी.)** **इती**ति । कैकेय्या इति उक्तः काकुत्स्थः ककुत्स्थगोत्रे भवः  श्रीरामः, अहं वनं प्रति सुखं यथा भवति तथा यास्यामि गमिष्यामि,   भरतश्च दूतैः केकयदेशात् आनीयताम्,  साधु सम्यक् यथा भवति तथा अभिषिच्यताम्,  इति ऊचे ॥ ३८ ॥

**(सं.चं.)** साधु यथोचितम् ॥ ३८ ॥

**निःसङ्गाः स्मो वयं [२]मातर्न्न तु प्राकृतधर्म्मिणः ।**
**किन्तु कस्मादिदं तातः स्वयं नाऽज्ञापयत्यहो ॥ ३९ ॥**

**(भा.दी.)** निःसङ्गत्वाद् यौवराज्यापगमेऽपि न स्वस्य काऽपि हानिरित्याह– **निरि**ति । हे मातः  कैकेयि, वयं न  विद्यते  सङ्गो विषयासक्तिर्येषां ते निस्सङ्गाः स्मः भवामः । अस्तेर्लट् । प्राकृतस्य पामरजनस्य

१. **'–मेतद् राजानुशानम्'**
२. **'मातर्न स्मः प्राकृतधर्मिणः'** इति वि.ती.पाठः स्यात् ।

धर्मः स्वभावः स एषामस्तीति तथोक्ताः, न स्मः न भवामः । तर्हि वनं प्रति गन्तव्यमित्यत आह– **किन्त्विति** । किन्तु तातः पिता स्वयम्, इदं वनं प्रति व्रजनम्, कस्मात् न आज्ञापयति न निरूपयति । अहो आश्चर्यम् । सर्वदा सम्भाषणीयस्य ममासम्भाषणीयत्वमिदानीमाश्चर्यं हि ॥ ३९ ॥

**(सं.चं.)** निःसङ्गाः सङ्गान्निर्गताः स्मः । 'असङ्गो ह्ययं पुरुषः' इति श्रुतिः । नतु प्राकृतलोकइव ग्राम्य-धर्मनिरताः । न प्रकृतिनिर्मितधर्माश्रया इति तु वास्तवम् । अप्राकृतगुणो हि सः । तातोऽपि मद्विषये सङ्कोच-मनुबभूवेत्यहो इति विस्मयते ॥ ३९ ॥

**इत्युक्ता[१] सा खला प्रोचे[२] तव मानधनः पिता ।**
**लज्जया त्वां न वक्तीह गूढो भावोऽस्य चोच्यते ॥ ४० ॥**

**(भा.दी.) इती**ति । इति उक्ता खला सा कैकेयी, तव मानः सत्कार एव धनं यस्य स तथा, मनसा कर्मणा वाचा च तव सत्कारे तात्पर्यवानित्यर्थः, पिता लज्जया वनं याहीति वचः कथं वक्ष्यामीति ह्रिया । इह प्रव्रजनविषये न वक्ति । अस्य त्वत्पितुः गूढ गूहितः भावः अभिप्रायः मया उच्यते । इति प्रोचे इत्यन्वयः ॥ ४० ॥

**(सं.चं.)** अभिमानधनस्तव पिता । पुत्रेण मच्छासने निराकृते मम मानभङ्गः स्यादिति सन्देहजनितः सङ्कोच एवात्र लज्जा । कैकेयीकल्पनेयम् । इहास्मिन् सङ्कटे । तस्मान्मयोच्यते । अहमेव हि तस्य गूढभावग्रहण-चतुरा । इदमप्यपरं खलत्वम् । वस्तुतस्त्वयमस्य गूढः अभावः । नायं तस्य भावः । अपिच, अनेन हि कैकेयीवचनेन तस्याभाव एव हि भवति ॥ ४०–१ ॥

**यावत् तिष्ठस्ययोद्ध्यायां तावन्नाश्नाति ते पिता ।**
**[३]शीघ्रं गच्छान्यथा हन्त गुर्वाज्ञामतिवर्त्तसे ॥ ४१ ॥**

**(भा.दी.)** दशरथस्यात्यन्तमनभिप्रेतमभिप्रेतत्वेन परिकल्प्याऽह– **यावदि**ति । हे राम, त्वं यावत् अयोध्यायां तिष्ठसि तावत्पर्यन्तम् ते पिता नाश्नाति न भुङ्क्ते । अश भोजने लट् । अतः शीघ्रं यथा भवति तथा अयोध्यायाः निर्गच्छ । अन्यथा गुर्वाज्ञां पित्राज्ञाम् अतिवर्तसे अतिक्रम्य वर्तसे । हन्त शोचने । 'शोचने सम्प्रहर्षे च हन्तशब्दः प्रयुज्यते' इति हलः ॥ ४१ ॥

---

१. 'इत्युक्ते' २. 'खला वक्ति तव' ३. 'शीघ्रं निर्गच्छ गुर्वाज्ञां राम त्वं नातिवर्तसे'

**इत्थं काळ्यैव[1] कैकेय्या सर्वारुन्तुदयोदिते ।**
**धिक् कष्टमिति भूपालः स पपात मुमोह च ॥ ४२ ॥**

**(भा.दी.) इत्थमि**ति । काळ्यैव भद्रकाळ्यैव सर्वारूंषि सर्वमर्मप्रदेशान् तुदति व्यथयतीति सर्वारुन्तुदा तया कैकेय्या, यथा काळी स्वाट्टहासेन हृदयकम्पनजनकत्वेनारुन्तुदा तद्वदियं चात्यन्ताश्रवणीयवचनवक्तृत्वात् सर्वारुन्तुदेत्यर्थः । इत्थं उदिते उदीरिते सति सः भूपालः दशरथः धिक् कष्टं इति वदन् सन् दुःखवशात् पपात । मुमोह मूर्छां जगाम च । मुह वैचित्त्ये लिट् ॥ ४२ ॥

**(सं.चं.)** काळ्या कुलकालन्या । अरुन्तुदया दुर्वचनैर्मर्मभेदन्या । अम्बिकाललाटादुत्पन्ना क्रूरदेवता वा काळी चामुण्डा नाम । 'मर्मस्पृक् स्यादरुन्तुदम्' इति यादवप्रकाशः । 'झिल्लचेव' इति पाठे झिल्ली मर्मावित् कीटविशेषः । '**ಜೀರುಂಡೆ**' इति भाषायाम् । धिक् कष्टमितीयदेव वदन् । 'मिथ्या वदतीयं दुष्टा, नायं मम भावः' इति वक्तुमप्यप्रभवन्, दुःखोत्कर्षात्, दत्तवरभङ्गभयाच्च ॥ ४२ ॥

**राम ऊचेऽथ कैकेयीं देवि द्रक्ष्यामि मातरम् ।**
**सीतां च सान्त्वयिष्यामि पुनर्य्यास्यामि तापसः ॥ ४३ ॥**

**(भा.दी.) राम** इति । अथ श्रीरामः, हे देवि राजभार्ये कैकेयि, अहं मातरं कौसल्यां द्रक्ष्यामि । दृशे- र्लृट् । सीतां च सान्त्वयिष्यामि । मद्वियोगाद् यथाऽऽर्ता न स्यात् तथा सान्त्ववचसा बोधयिष्यामि । षान्त्व सामप्रयोगे लृट् । तदनन्तरं तापसः मुनिवेषः सन् यास्यामि पुनः वनं प्रति गमिष्याम्येव । 'पुनरप्रथमे प्रश्ने व्यावृत्ताववधारणे' इति वैजयन्ती । इति कैकेयीं ऊचे । वचेर्लिट् ॥ ४३ ॥

**(सं.चं.)** मातरं सीतां च द्रक्ष्यामि । दृष्ट्वा सान्त्वयिष्यामि । पुनर्यास्यामि । पुनःशब्दः पश्चाद्वचनः । प्रथमं सान्त्वयिष्यामि, पश्चाद् यास्यामीत्यर्थः ॥ ४३ ॥

**एतावत् क्षम्यतां मातस्त्वया राजर्षिजायया[2] ।**
**भरतः पातु पृथिवीं पितृशुश्रूषणे रतः ॥ ४४ ॥**

**(भा.दी.)** एतावदिति । हे मातः कैकेयि, राजा चासौ ऋषिश्च राजर्षिर्दशरथः तस्य भार्यया त्वया एतावत् मातृदर्शनसीतासान्त्वनकालपर्यन्तं ममावस्थानं क्षम्यतां सह्यताम् । क्षमूष् सहने लोट् । पितुः शुश्रूषणं सेवा तस्मिन् रतः आसक्तः भरतः पृथिवीं पातु ॥ ४४ ॥

---

१. **'इत्थं झिल्लचेव'** २. **'राजर्षिभार्यया'** इति वि.ती.पाठः स्यात् । जाययेति लुप्तं वा स्यात् । अर्थानुवादो वा ।

**(सं.चं.)** एतावत् एतावान् विलम्बः ॥ ४४ ॥

**इति शुद्धां शुभां श्रुत्वा गिरं रामस्य पार्थिवः ।**
**हा राम राम वत्सेति मुक्तकण्ठो रुरोद सः ॥ ४५ ॥**

**(भा.दी.) इती**ति । पार्थिवः (सः) दशरथः, इति शुद्धां निष्कपटां अत एव शुभां श्रीरामस्य गिरं श्रुत्वा । हा राम, हा राम, हा वत्स इति मुक्तोऽविभक्तः कण्ठो यस्य स तथा सन्, अत्युच्चैःस्वरः सन्नित्यर्थः, रुरोद ॥ ४५ ॥

**(सं.चं.)** मुक्तः स्वैरमुद्गतः कण्ठः कण्ठध्वनिर्यस्य । उच्चै रुरोद ॥ ४५–६ ॥

**राज्ञस्तस्य विसञ्ज्ञस्य कैकेय्याश्च जगद्गुरुः ।**
**परिक्रम्याभिवाद्याङ्घ्री[1] निश्चक्राम निवेशनात् ॥ ४६ ॥**

**(भा.दी.) राज्ञ** इति । जगद्गुरुः श्रीरामः, विगता सञ्ज्ञा प्रबोधो यस्य स तथा तस्य, मूर्च्छितस्येत्यर्थः, तस्य राज्ञः दशरथस्य कैकेय्याश्च अङ्घ्री पादौ अभिवाद्य, परिक्रम्य प्रदक्षिणीकृत्य, निवेशनं मन्दिरं तस्मात् निश्चक्राम निर्जगाम । क्रमु पादविक्षेपे लिट् ॥ ४६ ॥

**आर्त्तस्वनो[2] महानासीन्महिषीणां महीभृतः ।**
**पितुरन्तःपुरात् तस्मात् प्रव्रजत्यखिलेश्वरे ॥ ४७ ॥**

**(भा.दी.) आर्ते**ति । पितुः महीभृतः राज्ञः तस्य दशरथस्य, तस्मात् अन्तः विद्यमानं पुरं मन्दिरमन्तःपुरं तस्मात्, अखिलेश्वरे श्रीरामे प्रव्रजति प्रव्रजनं कुर्वति सति, महिषीणां दशरथभार्याणां आर्तः आर्तियुक्तः स्वनः आर्तस्वनः, खेदजन्यध्वनिरित्यर्थः, (महान्) आसीत् ॥ ४७ ॥

**(सं.चं.)** महीभृतो महिषीणां राजभार्याणाम् । पञ्चाशदुत्तरस्य शतत्रयस्य । यद्यपि न सर्वा राजभार्या महिष्यः । राज्ञा सह कृताभिषेका महिषीत्युच्यते । तेन तिस्र एवात्र महिष्यः कौसल्या कैकयी सुमित्रा च । तेन चात्र महिषीशब्दो भार्यासामान्यवचनः । अभिदधति च– 'महिषी नृपयोषिति' इति ॥ ४७ ॥

---

१. **'–क्रम्याभिवन्दयाङ्घ्रिम्'** इति, **'–क्रम्याभिवन्द्याङ्घ्री'** इति च । **'–क्रम्याभिवन्द्याङ्घ्रीन्'** इति भ्रान्तः पाठः ।

२. **'आर्तस्वरो महा–'**

**सर्वभूतप्रियो रामः क्व नो वत्सो[१] गमिष्यति ।**
**कथं त्यजति राजानं मुहूर्त्तं विरहासहम्[२] ॥ ४८ ॥**

**(भा.दी.) सर्वे**ति । सर्वे ये भूताः[३] प्राणिनस्तेषां प्रियः, नः अस्माकं वत्सः बालकः श्रीरामः क्वनु कुत्र गमिष्यति मुहूर्तं मुहूर्तकाले यो विरहो वियोगस्तस्मिन् आतुरमशक्तं राजानं कथं त्यजति विसृज्य गच्छति ॥ ४८ ॥

**(सं.चं.)** मुहूर्तं क्षणकालमपि विरहासहम् ॥ ४८ ॥

**इत्युच्चैः क्रन्दितं तासां सङ्घेसङ्घे निवेदितम् ।**
**सर्वत्राऽऽक्रन्दितं तेने बीजं बीजान्तरं यथा ॥ ४९ ॥**

**(भा.दी.) इती**ति । तासां महिषीणां इति उच्चैर्यथा भवति तथा क्रन्दितं आक्रन्दनं सङ्घेसङ्घे समूहे-समूहे । '(प्रकर)गणौघसङ्घसङ्घातव्रातकुलोत्कराः स्मृताः' इति हलः । सर्वजनसमूहेष्वित्यर्थः । निवेदितं विज्ञातं सत् बीजं फलं अन्यत् बीजं बीजान्तरं तत् यथा तथा सर्वत्र देशे आक्रन्दितं आक्रन्दनं तत् तेने चक्रे । तनु करणे[४] लिट् ॥ ४९ ॥

**(सं.चं.)** सङ्घेसङ्घे सङ्घशः स्थितेषु मन्त्रिपुरोहितेषु, राजगृहाधिकृतेषु, दासदासीजनेषु, सामन्तेषु, सामाजिकेषु च निवेदितं विज्ञापितवार्तं सत् सर्वत्र सङ्क्रान्तमाक्रन्दितं तेने वितस्तार ॥ ४९ ॥

**पूर्णानन्दस्य रामस्य पूर्णेन्दुनिभमाननम् ।**
**दृष्ट्वा राज्यच्युतस्यापि शोचन्ति स्म पुनः प्रजाः ॥ ५० ॥**

**(भा.दी.) पूर्णे**ति । प्रजाः पूर्ण आनन्दो यस्य स तथा तस्य श्रीरामस्य, राज्यात् च्युतो रहितस्तस्यापि सतः, पूर्णेन्दोर्निभं सदृशं तत् आननं दृष्ट्वा पुनः शोचन्ति स्म शोकं चक्रुः । शुच शोके लट् ॥ ५० ॥

**(सं.चं.)** राज्यच्युतस्यापि पूर्णेन्दुनिभं मधुरस्मितचन्द्रिकमाननम् । 'न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् । सर्वलोकातिगस्येव दृश्यते चित्तविक्रिया' इति रामायणे ॥ ५० ॥

---

१. **'वत्सः वात्सल्यविषयः'** इति का.श्री. ।
२. **'विरहातुरम्'** इति वि.ती.पाठः ।
३. **'सर्वाणि यानि भूतानि'** इत्युचितम् ।
४ . **'तनु विस्तारे'** इति धातुपारायणिकाः ।

**लक्ष्मणः क्षुभितो लज्जाशोकक्रोधसमुच्चयात् ।**
**बद्धमौनो निजज्येष्ठं[1] निर्य्यान्तमनुनिर्य्ययौ ॥ ५१ ॥**

**(भा.दी.) लक्ष्मण** इति । पिता स्त्रीजितो जात इति या लज्जा सा च, शोकः श्रीरामस्य यौवराज्यभ्रंशनिमित्तकदुःखं च, कैकेय्यां यः क्रोधः स च, तेषां समुच्चयः सम्मेळनं तस्मात् क्षुभितः मनःकालुष्यं प्राप्तः, तथाऽपि पितरं प्रति यत्किञ्चिद् वक्तुमनुचितत्वात् बद्धं मौनं येन स तथा लक्ष्मणः, निज आत्मीयो ज्येष्ठस्तं निर्यान्तं दशरथमन्दिरान्निर्गच्छन्तं श्रीरामं अनुनिर्ययौ अन्वगच्छत् ॥ ५१ ॥

**(सं.चं.)** तरुण्या जायायाः प्रियार्थं प्रियमपि तनयं पिता तत्याजेति वृद्धस्य पितुर्वर्तनेन लज्जा, रामचन्द्रस्य वनवास आपतित इति, जनताऽनाथा जातेति शोकः, एतादृशस्य दुरन्तस्य हेतुभूतायां कैकेय्यां क्रोधः । एषां त्रयाणामपि भावानां समुच्चयः सकृत् सन्निपातः । सत्सु महत्सु मया न प्रतिरोद्धव्यमिति बद्धमौनः । ज्येष्ठं भ्रातरं रामम् ॥ ५१ ॥

**स जगज्जनको गत्वा जनन्या धाम धामवत् ।**
**वैष्णवव्रतनिष्ठां तामभ्यवन्दत सानुजः ॥ ५२ ॥**

**(भा.दी.) स** इति । जगतः जनकः पिता सः श्रीरामः, जनन्याः कौसल्यायाः, धाम तेजः अस्यास्तीति धामवत् धाम गृहं गत्वा, विष्णोः सम्बन्धि वैष्णवं तादृशं यद् व्रतं तस्मिन् निष्ठा आसक्तिर्यस्याः सा तथा तां कौसल्यां सानुजः लक्ष्मणसहितः सन् अभ्यवन्दत । वदि अभिवादनस्तुत्योर्लङ् । जगज्जनक इत्युक्त्या मातृवन्दनादिकं लोकशिक्षणार्थमिति ज्ञापितम् ॥ ५२ ॥

**(सं.चं.)** धामवत् कान्तियुक्तं धाम गृहम् । 'गृहं देहस्त्विट् प्रभावो धाम' इति मङ्खः ॥ ५२ ॥

**राज्ञी कनत्कनककङ्कणके प्रकोष्ठे न्यस्याक्षमाल्यमथ कम्पितकर्ण्णभूषा ।**
**आश्लिष्य राममवदत् प्रमदाश्रुपूर्ण्णा स्याद् यौवराज्यमधुनैव तवाऽत्मजेति ॥ ५३ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्क्षहरामायणे अयोद्ध्याकाण्डे चतुर्त्थः सर्ग्गः ॥**

---
[1] 'निजं ज्येष्ठम्'

**(भा.दी.) राज्ञी**ति । अथ राज्ञी राजभार्या कौसल्या, कनत् शोभमानं कनकमयं स्वर्णमयं कङ्कणं यस्मिन् स तथोक्तस्तस्मिन् । कनी दीप्तिकान्तिगतिष्विति धातुः । प्रकोष्ठे मणिबन्धप्रदेशे । 'प्रकोष्ठस्तस्य चाप्यधः' । अक्षमाल्यं अक्षमाला तत्, मन्त्रजपमालामित्यर्थः, न्यस्य निक्षिप्य, कम्पिते आलिङ्गनार्थमुत्थानसमये चलिते कर्णभूषे कर्णालङ्कारौ यस्याः सा तथा सती । श्रीरामं आश्लिष्य प्रमदात् सन्तोषादुत्पन्नं यदश्रु तेन पूर्णा सती, हे आत्मज पुत्र,[१] तव अधुनैव यौवराज्यं युवराजत्वं स्यात् भवतु इति श्रीरामं प्रति अवदत् ॥ ५३ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायामयोध्याकाण्डे चतुर्थः सर्ग्गः ॥**

**(सं.चं.)** 'मणिबन्धः पाणिमूलं कपोणिः कूर्परः स्मृतः । तयोर्मध्यं प्रकोष्ठं स्यात् प्रकाण्डः कूर्परांसयोः' इत्यभिधानम् । अक्षमालां न्यस्य । उत्थानसम्भ्रमेण कम्पितकर्णकुण्डला । प्रमदाश्रुभिरानन्दाश्रुभिः पूर्णनयना । इत्याशीर्वचनमवदत् । वसन्ततिलका च्छन्दः ॥ ५३ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामयोध्काण्डे चतुर्थसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– ५६८+५३=६२१]

---

१. 'हे आत्मज सुत'

# पञ्चमः सर्ग्गः

**लक्ष्मणं प्रेक्ष्य भगवान् सस्मितं स्माऽह[1] मातरम् ।**
**अम्ब नूनं न जानासि तवाप्रियमुपस्थितम् ॥ १ ॥**

**(भा.दी.)** श्रीरामः स्वमातर्येवं निरूपयन्त्यां सत्यां स्वागमनप्रयोजनं निवेदयति– **लक्ष्मणमित्या**दिना । भगवान् श्रीरामः लक्ष्मणं प्रेक्ष्य, हे अम्ब मातः, तव उपस्थितं सम्प्राप्तं अप्रियमनिष्टं तत् (नूनं) न जानासि । ज्ञा अवबोधने लट् । इति मातरं प्रति सस्मितं स्मितसहितं यथा भवति तथा आह स्म अवदत् ॥ १ ॥

**(सं.चं.)** 'पश्य मातुर्मुग्धताम्' इति लक्ष्मणं प्रेक्ष्य । अभिप्रायगर्भमीक्षणं प्रेक्षणम् । सस्मितमित्यव्याकुलतामाह । अत एव 'तवाप्रियम्' इत्याह । न 'नोऽप्रियम्' इति ॥ १ ॥

**समयेन[2] नृपं बध्वा कैकेय्या मे प्रचोदितः ।**
**वने चतुर्दश समा वासो राज्यं स्वसन्ततेः ॥ २ ॥**

**भा.दी.)** किं तदित्यत आह– **समयेने**ति । समयः शपथस्तेन– 'वरौ वरानने दद्यामभीष्टौ सत्यमेव ते । पुत्रेण मम रामेण प्राणेभ्यः प्रेयसा शपे' (२.३.३७) इत्यादिप्रकारशपथेन, यद्वा समयेन सङ्केतेनेति वा, नृपं दशरथं बद्ध्वा वशीकृत्य, कैकेय्या मे मम चतुर्दश च ताः समाश्च ताः, निरन्तरचतुर्दशसंवत्सरेष्वित्यर्थः, वने वासः प्रचोदितः प्रोक्तः । स्वस्याः सन्ततिः पुत्रस्तस्याः । 'सन्ततिस्त्वन्ववाये स्यात् पारम्पर्ये सुतेऽपि च' इति वैजयन्ती । राज्यं प्रचोदितं आज्ञप्तम् ॥ २ ॥

**(सं.चं.)** समयः रघूणामाचारः सिद्धान्तो वा । वचनबद्धता । 'कालसङ्केतकाचारसिद्धान्ताः समयाः स्मृताः' इत्यभिधानम् । मे वने वासः प्रचोदितः प्रेरितः । स्वसन्ततेः राज्यं च प्रचोदितम् । मातुर्भावानुगुणेयं भाषा । अत एव कैकेय्येत्याह । न मध्यमाम्बयेति । स्वसन्ततेरित्याह । न भरतस्येति ॥ २ ॥

---

१. **'सस्मितं प्राह'**

२. **'कैकेय्या कर्त्र्या समयेन सङ्केतेन अहं यदा वरद्वयं याचिष्ये तदा वरद्वयं दातव्यमिति समयबन्धेन करणेन'** इति का.श्री. ।

**इत्युपश्रुत्य कौसल्या निपपातावनीतळे[१] ।**
**उल्लूना पुष्पवल्लीव सारङ्गीव शराहता ॥ ३ ॥**

**(भा.दी.) इती**ति । इति वाक्यं वचस्तत् उपश्रुत्य अतिविह्वला दुःखवशादत्यन्तं परवशा[२] कौसल्या । उल्लूना सञ्छिन्ना पुष्पवल्लीव पुष्पलतेव, शराहता शरताडिता सारङ्गीव मृगीव, अवन्यास्तळं प्रदेशस्तस्मिन् निपपात । पत्लृ पतने लिट् ॥ ३ ॥

**(सं.चं.)** उपपन्नं श्रवणमुपश्रुतिः । यच्छ्रोतव्यं तच्छ्रुतमित्येतत् उल्लूना उत्कृत्ता । सारङ्गी हरिणी । पुष्पवल्लीव कोमलाङ्गी । सारङ्गीव भयविह्वला गतसञ्ज्ञा ॥ ३–४ ॥

**आलोक्य लोकनाथस्तां मूर्च्छितां भुव उद्धरन् ।**
**ममार्ज्ज पांसूंस्तद्गात्रात्[३] कराभ्यां करुणाकरः ॥ ४ ॥**

**(भा.दी.) आलोक्ये**ति । लोकनाथः करुणाकरः श्रीरामः, तां मातरं मूर्च्छितां आलोक्य, करौ हस्तौ ताभ्याम्, भुवः उद्धरन् सन्, तस्या गात्रं तद्गात्रं तस्मात्, पांसून् ममार्ज मार्जनं चक्रे । मृजूष् शुद्धौ लिट् ॥ ४ ॥

**मुहूर्त्तात् सा शनैः सञ्ज्ञां लब्ध्वा शोकाग्निशोषिता ।**
**दीना जगाद सास्रौघा दृष्ट्वा पुत्रमुखाम्बुजम् ॥ ५ ॥**

**(भा.दी.) मुहूर्तादि**ति । शोक एवाग्निस्तेन शोषिता शुष्कीकृता, अतिपीडितेत्यर्थः, अत एव दीना सा कौसल्या, मुहूर्तो मुहूर्तकालस्तस्मात् शनैः सञ्ज्ञां लब्ध्वा, पुत्रस्य रामस्य यन्मुखं तदम्बुजमिव तत् दृष्ट्वा, अस्राणामश्रूणामोघः समूहस्तेन सहिता सास्रौघा सती जगाद । गद व्यक्तायां वाचि लिट् ॥ ५ ॥

**(सं.चं.)** मुहूर्तात् कश्चित् कालमतीत्य । शोकाग्निशोषिता । अथापि सास्रौघा । आस्रमश्रु । अश्रुजलक्लिन्न-मुखी शनैर्जगाद ॥ ५ ॥

**अस्वैरिणीं शुचिं दान्तां गुरुदेवार्च्चने रताम् ।**
**त्यक्तुं नार्हसि मां तात[४] मातरं त्वमनागसम् ॥ ६ ॥**

---

१. **'निपपात महीतळे'**

२. **'अतिविह्वला'** इति पदं मूले न पठ्यते । तेन **'दुःखवशादत्यन्तं परवशा'** इति स्वपदवर्णनमिति वक्तव्यम् ।

३. **'पांसूंस्तस्याङ्गात्'** इति भ्रान्तः पाठः ।

४. **'त्यक्तुमर्हसि मा तात मातरं मामनागसीम्'** । **'मां निरागसीम्'** इति क्वचित् ।

**(भा.दी.) अस्वैरिणीमि**ति । हे तात, (स्वैरिणी) पुंश्चली न भवतीत्यस्वैरिणी ताम्, पतिव्रतामित्यर्थः । अत एव शुचिं शुद्धाम् । दान्तां दमयुक्ताम् । गुरवश्च देवाश्च तेषामर्चनं पूजा तस्मिन् रतामासक्ताम् । न विद्यते आगः अपराधो यस्याः सा तथा तां मातरं मां त्यक्तुं नार्हसि न योग्योऽसि । अर्ह पूजायां लट् । मातुरपि स्वैरिण्यादिदोषोपेतत्वे परित्याज्यत्वमित्यतो हेतोस्तादृशदूषणाभावः स्वस्याः प्रतिपादितः ॥ ६ ॥

**(सं.चं.)** मातृत्वादेव न युक्तस्त्यागः । किं पुनः शुद्धचरितायाः ॥ ६ ॥

**सपत्न्या मम कैकेय्याः[१] कलहाख्यानलोष्मणा ।**
**सन्तप्तां सुचिराय त्वं कथं त्यजसि धार्म्मिक ॥ ७ ॥**

**(भा.दी.) सपत्न्ये**ति । मम सपत्न्या कैकेय्या कलह इति आख्या नाम यस्य स कलहाख्यः स चासावनलश्च तस्य ऊष्मा ज्वाला तेन सुचिराय बहुकालं सन्तप्तां माम्, धर्मं चरतीति धार्मिकस्तत्सम्बुद्धिः श्रीराम, कथं त्यजसि ॥ ७ ॥

**(सं.चं.)** कलहाख्यानलस्य ऊष्मणा ऊष्मेण घर्मेण । मम सन्तप्तत्वान्नाहं त्यागार्हा । तव धार्मिकत्वाच्च न त्वं मां त्यक्तुमर्हसि ॥ ७ ॥

**नाप्रियाऽहं तव पितुर्न्नापि लोकैर्विनिन्दिता ।**
**किन्तु सा वक्रधीर्न्नाहं तस्मान्मम पराभवः[२] ॥ ८ ॥**

**(भा.दी.) ने**ति । अहं तव पितुः अप्रिया प्रीत्यविषया न । लोकैर्जनैर्विनिन्दिताऽपि न । तर्हि कैकेयीनिमित्त-कसन्तापः कस्मादित्यत आह– **किन्त्वि**ति । सा कैकेयी वक्रा कुटिला धीर्यस्याः सा तथा । अहं तथा कैकेयीवत् न । तस्मात् कारणात् मम पराभवः पराजयः । मयाऽस्मृतमपि यत्किञ्चित्कौटिल्यं मय्यारोप्य मत्सङ्कल्पितकार्यस्य विघातं करोतीत्यतस्तन्निमित्तकसन्तापो ममेति भावः ॥ ८ ॥

**(सं.चं.)** नाहं वक्रधीः । अवक्रतैव मे पराभवकारणम् । कुटिला जयन्ति । ऋजवो जीयन्ते ॥ ८ ॥

**याः सप्तविंशतिसमास्त्वयि जात इमाः सुत ।**
**तवोदयं प्रतीक्ष्याहं स्थिताऽब्दमिव चातकी ॥ ९ ॥**

---

१. **'कैकेय्या'** इति वि.ती.पाठः ।

२. **'पराजयः'** । **'–र्नाहं तथा तस्मात् पराभवः'** इति वि.ती.पाठः स्यात् । **'तस्मान्मम परो भव'** इति च ।

**(भा.दी.) या** इति । हे सुत, त्वयि जाते सति, इमाः अतीताः, याः सप्तविंशतिसङ्ख्याकाश्च ताः समाश्च ताः, सप्तम्यर्थे द्वितीया । तव उदयोऽभ्युदयस्तम्, चातकीव चातकनामिका पक्षिणीव, अब्दमिव वर्षणशील-मेघमिव । 'अब्दौ जीमूतवत्सरौ' इत्यमरः । प्रतीक्ष्य स्थिता, अस्मीति शेषः ॥ ९ ॥

**(सं.चं.)** सप्तविंशतिसमाः, अत्यन्तसंयोगे द्वितीया । अब्दं मेघमिव चातकी ॥ ९ ॥

**वज्रात् खरतरं[1] नूनं हृदयं मम नन्दन ।**
**त्वद्यात्रावाक्यवज्रेण यन्न भिन्नं सहस्रधा ॥ १० ॥**

**(भा.दी.) वज्रादि**ति । हे नन्दन पुत्र, मम हृदयं यत् यस्मात् कारणात् तव यात्राऽन्यत्रगमनं तस्याः यद्वाक्यं तदेव वज्रं तेन सहस्रधा न भिन्नम् । तस्मात् कारणात् वज्रं कुलिशं तस्मात् खरतरं कठिन-तरम् । नूनं निश्चयः ॥ १० ॥

**(सं.चं.)** यद् हृदयं न भिन्नं न विदीर्णम् वज्रमिन्द्रायुधं हीरकं वा । हीरकं हि कठिनान्यपि विदारयति, यानीतरसाधनैः सर्वथा न भेद्यानि ॥ १० ॥

**पितुर्गरीयसी माता न गच्छातो ममाऽज्ञया[2] ।**
**यदि यास्यसि हास्यामि देहं त्वद्विरहाग्निना ॥ ११ ॥**

**(भा.दी.)** एवं विलप्य स्वाभिप्रेतमाह– **पितुरि**ति । यतः माता पितुः सकाशात् गरीयसी मान्यतायां श्रेष्ठतरा । अतः कारणात् मम आज्ञया न गच्छ । पित्रा गच्छेत्युक्तोऽपि मातुर्मान्यत्वेऽतिविशिष्टत्वान्ममाऽज्ञया न गन्तव्यमिति भावः । स्वाज्ञोल्लङ्घने बाधकमाह– **यदी**ति । यदि वनं यास्यसि तर्हि तव विरहो वियोगः स एवाग्निस्तेन, देहः कायस्तं हास्यामि त्यक्ष्यामि । ओहाक् त्यागे लृट् ॥ ११ ॥

**(सं.चं.)** यदि यास्यसि उल्लङ्घ्य ममाऽज्ञाम् ॥ ११ ॥

**स्वर्ग्गं यास्यति राजेन्द्रो निर्ग्गते त्वयि सर्वथा ।**
**क्षणं त्वद्विरहाशक्तो[3] न जीवेयमभर्तृका ॥ १२ ॥**

**(भा.दी.) स्वर्गमि**ति । राजेन्द्रः त्वयि निर्गते सति क्षणं क्षणकालस्तं तव यो विरहो वियोगस्तस्मिन् अशक्तः सन् स्वर्गः स्वर्गलोकस्तम् सर्वथा यास्यति । न विद्यते भर्ता यस्याः सा तथोक्ता अहं न जीवेयम् ।

१. **'परतरम्'** इति भ्रान्तः पाठः । २. **'मदाज्ञया'** ३. **'त्वद्विरहाशक्ता'** इति च भ्रान्तः पाठः ।

जीव प्राणधारणे लिङ् । तथाच त्वया मद्वचनमुल्लङ्घ्य गते सति राज्ञो मम च मरणमेव भवेत् । त्वयि स्थिते चावयोर्जीवनं स्यादित्यतः परमधर्ममवेक्ष्य त्वया न गन्तव्यमिति भावः ॥ १२ ॥

**(सं.चं.)** त्वद्विरहं सोढुमशक्तो राजेन्द्रः ॥ १२ ॥

**वयं[१] शाकेन जीवामः कैकेय्याः सन्तु सम्पदः ।**
**करुणां कुरु धर्म्मज्ञ न मां मुञ्च कथञ्चन ॥ १३ ॥**

**(भा.दी.)** आवां च नेतव्यावित्याह– **वयमिति** । वयं शाकः पक्वफलादिस्तेन जीवामः । जीव प्राणधारणे लट् । राज्यादिरूपाः सम्पदः कैकेय्याः सन्तु । हे धर्मज्ञ श्रीराम, करुणां कुरु । मां कथञ्चन केनापि प्रकारेण न मुञ्च । मुच्लृ मोक्षणे लोट् ॥ १३ ॥

**(सं.चं.)** वयमिति आत्मनि बहुवचनम् । दशरथसाहित्येन वा । सीताऽपि सहाऽगता चेदपीति मनसि निधाय वाऽऽह । वने शाकेन जीवामः । 'मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् । त्वक् पुष्पं कवचं चैव शाकं दशविधं स्मृतम्' । करीरं वंशाङ्कुरम् । '**ꠇꠞꠤꠟ**' इति भाषायाम् । अग्रं किसलयम् । अधिरूढकाः अङ्कुराः । कवचं छत्राकमिति वदन्ति । मूलमिति कन्दस्याप्युपलक्षणम् ॥ १३ ॥

**विलपन्तीमिमां वीक्ष्य क्षुभितं लक्ष्मणं भृशम् ।**
**नियम्य हेतुमद्वाक्यं जगाद जगतां पतिः ॥ १४ ॥**

**(भा.दी.)** **विलपन्तीमि**ति । जगतां पतिः श्रीरामः विलपन्तीं परिदेवनं कुर्वन्तीं इमां मातरं वीक्ष्य, भृशं क्षुभितं कौसल्यादुःखं दृष्ट्वाऽसह्यतया क्रुद्धमित्यर्थः, लक्ष्मणं नियम्य अनुनीय, हेतुरस्यास्तीति हेतुमत्, पितुराज्ञानुष्ठाने हेतुप्रतिपादकमित्यर्थः, वाक्यं जगाद ॥ १४ ॥

**(सं.चं.)** लक्ष्मणं शान्तो भवेति नियम्य मातरं प्रति जगाद ॥ १४ ॥

**माता गरीयसी मातः[२] सर्वस्माज्जगतोऽपि तु ।**
**आचार्य्याज्जनकाद् वाऽपि परं नास्ति हरिं विना ॥ १५ ॥**

१. **'त्वं च अहं च अयंच (दशरथश्च)वयम् । शोकेन कन्दमूलफलादिना'** इति का.श्री. । २. **'मातर्गरीयसी मातः सर्व–'**

**(भा.दी.) माते**ति । हे मातः कौसल्ये, सर्वस्मात् जगतोऽपि आचार्यात् गुरोरपि जनकात् पितुरपि वा माता तु विशेषतः गरीयसी अतिशयेन श्रेष्ठा । हरिं विना मातुः सकाशात् परं मुख्यं साक्षान्मान्यतायां नास्ति ॥ १५ ॥

**(सं.चं.)** माता गरीयसी सर्वस्मादपि जगतः । नात्र सन्देहः । अथापि आचार्यात् जनकाद्वाऽपि हरिं विनाऽन्यत् परमुत्तमं वस्तु नास्ति । यौ मातुरपि पूजनीयौ । आचार्याज्जनकादपि माता गरीयसीति वा । हरिवचनं वेदपुराणादि प्रथमं पालनीयम् । तदविरोधे लोके मातुः प्रथमम् । ततो जनकस्य । तत आचार्यस्येति ॥ १५ ॥

**मातरं मारयामास भार्ग्गवो भगवान् पुरा ।**
**आज्ञया पितुरेवाथ तत्प्रसादादजीवयत् ॥ १६ ॥**

**(भा.दी.) मातरमि**ति । भगवान् भृगुगोत्रे भवो भार्गवः परशुरामः पुरा पितुर्जमदग्नेः आज्ञयैव मातरं रेणुकां मारयामास जघान । मृङ् प्राणत्यागे लिट् । अथ तस्य पितुर्जमदग्नेः प्रसादः प्रसन्नता तस्मात् मातरं अजीवयत् उज्जीवयामास । जीव प्राणधारणे लङ् । कदाचिदुदकानयनार्थं गङ्गां प्रति गता रेणुका तत्र जलक्रीडां कुर्वन्तं गन्धर्वराजं चित्ररथं दृष्ट्वा तत्र जातस्पृहा सती कालात्ययं नाजानीत् । अथ मुनिशापभीता सती सहसाऽश्रमं प्रति जगाम । जमदग्निश्च तं मानसं व्यभिचारं योगबलात् ज्ञात्वा परशुरामं प्रति मातरं जहीत्यभिहिते तद्धननं कृत्वा स्वकृतकर्मणा सन्तुष्टेन पित्रा 'अपेक्षितं वरं तुभ्यं प्रयच्छामि' इत्युक्ते मातुर्जीवनमेव देहीति वरव्याजेन तामजीवयदिति पौराणिकी प्रसिद्धिः । एवं महद्भिः पितुराज्ञाया अनुल्लङ्घनात् मयाऽपि नोल्लङ्घनार्हेति भावः ॥ १६ ॥

**(सं.चं.)** सत्यमेतत् सर्वम् । तथाऽप्यस्य क्वचिदपवादोऽस्ति । महतामाचारदर्शनादित्याह– मातरं मारयामास । तदुक्तम्–'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव महताम्' इति । का तर्हि व्यवस्था ? किमनयोर्गरीयः ? मातुर्वचनमुत महतामाचरणेन पितुर्वचनम् ? विभाषैवात्र व्यवस्था । यत्र पितुर्निमित्तान्तरमाधिक्यं तत्र पितुर्वचनम् । अत्र दशरथः न पिता केवलम्, राजा च । राजवचनं मात्राऽपि पालनीयम् । अपिच भर्तृविरुद्धं न भार्या वक्तुमर्हति । तेन च दुर्बलं कौसल्यावचनमिति । तत्प्रसादादिति । तस्य पितुः प्रसादादेव । तेन पितृवचनं च पालितम् । मनोमालिन्यान्माता चोज्जीविता ॥ १६ ॥

**कण्डुना पण्डितेनैव गौर्हता पितुराज्ञया ।**
**पित्रर्थे नन्वनुज्ञां मे देहि मातः प्रियोऽस्मि चेत्**[१] **॥ १७ ॥**

**(भा.दी.) कण्डुने**ति । कण्डुना कण्डुनामकेन मुनिना पण्डितेन प्राज्ञेन च सता पितुः आज्ञया गौर्हता । अतः महद्भिः पितुराज्ञाया अनुल्लङ्घनात्, चेद्यदि अहं ते तव प्रियः तर्हि पित्राज्ञायै (इति) पित्राज्ञार्थम्, तदाज्ञाकरणार्थमित्यर्थः, मे अनुज्ञां देहि । दाञ्धातोर्लोट् ॥ १७ ॥

**(सं.चं.)** पण्डितेन धर्माधर्मविदैव । 'ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा । गौर्हता जानता धर्मं कण्डुनाऽपि विपश्चिता' इति रामायणे । तेन ज्ञायते– पितुराज्ञया क्वचिदकार्यमपि कुर्वन् न पातकी भवति । अनिषिद्धं च वनगमनम् । तस्मात् कार्यमेव । तत् भवती कर्तव्यकरणान्मां निरोद्धुमर्हतीति ॥ १७ ॥

**पितुराज्ञामनुष्ठाय चतुर्दशसमास्वहम्**[२] **।**
**निवर्त्तिष्ये प्रतीपं मा ब्रूहि प्राणैः शपे मम**[३] **॥ १८ ॥**

**(भा.दी.) पितुरि**ति । अहं चतुर्दश च ताः समाश्च तासु, चतुर्दशसंवत्सरेष्वित्यर्थः, पितुः आज्ञां अनुष्ठाय कृत्वा निवर्तिष्ये वनात् परावृत्याऽगमिष्य एव । न चेत् नाऽगतश्चेत्, मां प्रतीपं विपरीतं त्वद्वचनोल्लङ्घिन-मित्यर्थः, ब्रूहि । मम प्राणैः पञ्चप्राणैः शपे शपथं करोमि ॥ १८ ॥

**(सं.चं.)** चतुर्दशसमास्वतीतासु निवर्तिष्ये । पितुर्वचनस्य प्रतीपं मा ब्रूहि । मम प्राणैः शपे । 'ನನ್ನಾಣೆ' इति भाषायाम् ॥ १८–९ ॥

**अनुनीयेति जननीं रामो लक्ष्मणमब्रवीत् ।**
**दैवोपपादिते**[४] **कार्य्ये न तात क्रुद्धयतामिति ॥ १९ ॥**

**(भा.दी.) अन्वि**ति । श्रीरामः जननीं कौसल्यां इति अनुनीय सान्त्वयित्वा, हे तात लक्ष्मण, दैवेनैवोपपादितं सम्पादितं तस्मिन् कार्ये त्वया न क्रुद्धयताम् । क्रुध कोपे लोट् । इति लक्ष्मणं प्रति अब्रवीत् ॥ १९ ॥

---

१. **'पित्राज्ञार्थमनुज्ञां मे देहि ते चेदहं प्रियः'** इति वि.ती.पाठः स्यात् । **'पित्रर्थं नन्वनुज्ञां मे देहि मातः प्रियाऽसि चेत्'** इति क्वचित् ।

२. **'–समास्त्वहम्'**

३. **'निवर्तिष्ये प्रतीपं मां ब्रूहि प्राणैः शपे न चेत्'** इति वि.ती.पाठः स्यात् ।

४. **'दैवोपसादिते'**

**कैकेय्याः कैतवं सर्वं प्रजासङ्कटमुत्कटम् ।**
**आर्ज्जवं च प्रभोर्वीक्ष्य पुनश्चुक्रोध लक्ष्मणः ॥ २० ॥**

**(भा.दी.) कैकेय्या** इति । लक्ष्मणः कैकेय्याः सर्वं कैतवं कापट्यं तत् वीक्ष्य, उत्कटं बहळं प्रजासङ्कटम्, श्रीरामयौवराज्याभिषेकविघातश्रवणनिमित्तकं प्रजानां सङ्कटं कष्टं तच्च वीक्ष्य, प्रभोः श्रीरामस्य ऋजोर्भाव आर्जवम्, अकुटिलहृदयत्वमित्यर्थः, तच्च वीक्ष्य पुनः चुक्रोध । क्रुध कोपे लिट् ॥ २० ॥

**(सं.चं.)** उत्कटमात्यन्तिकम् ॥ २० ॥

**लालाटीं भ्रुकुटीं[१] बिभ्रद् भ्रमद्भ्रूररुणेक्षणः ।**
**अमित्रघ्नोऽथ सौमित्रिः प्रोचे प्रेक्ष्यासिमात्मनः ॥ २१ ॥**

**(भा.दी.) लालाटीमि**ति । अथ लालाटीं ललाटे भवां भ्रुकुटिं त्रिशिखां मूर्धरेखां ललाटसीरां बिभ्रत् । 'नाभ्यस्ताच्छतुः' (अ.सू.७.१.७८) इति नुमभावः । भ्रमन्त्यौ कोपवशाच्चलन्त्यौ भ्रुवौ यस्य स तथा, अरुणे रक्ते ईक्षणे यस्य स तथा, अमित्रान् शत्रून् हन्तीत्यमित्रघ्नः, सुमित्राया अपत्यं सौमित्रिः लक्ष्मणः, आत्मनः स्वस्य, अस्यते शत्रुशिक्षादावित्यसिः खड्गस्तं प्रेक्ष्य प्रोचे ॥ २१ ॥

**(सं.चं.)** भ्रकुटिः भ्रकुटी भ्रुकुटिः भ्रुकुटी भ्रूकुटिः भ्रूकुटी भृकुटी वा । भ्रूग्रन्थिगर्भो ललाटसङ्कोचः पदार्थः । 'ಹುಬ್ಬು ಗಂಟಿಕ್ಕು' इति भाषायाम् ॥ २१ ॥

**[२]यद् दैवं देवदेवेश स्यात् ते राज्यापनोदनम् ।**
**हन्यां पुरुषकारेण तत् प्रसन्ने सति त्वयि ॥ २२ ॥**

**(भा.दी.)** दैवोपपादिते कार्ये न तात क्रुद्ध्यतामित्यस्योत्तरमाह– **यदि**ति । देवानामिन्द्रादीनां देवाः ब्रह्मादयस्तेषामीश श्रीराम, ते तव राज्यस्य अपनोदनं विघातो यस्मात् तथोक्तं तत्, यत् दैवं स्यात्, तत्

---

१. **'भ्रुकुटिम्'** इति वि.ती.पाठ इति भाति ।

२. **'यद्येवम्'** इति, **'तं प्रसन्ने'** इति च का.श्री.पाठः । तथाहि तद्व्याख्यानम्–**'हे देवदेवेश ब्रह्मादिस्वामिन्, यदि एवं प्रकारेण ते राज्यापनोदनं राज्यापहारः स्याद् भवेत् तर्हि त्वयि प्रसन्ने सति चतुर्दशसु लोकेषु यः पुरुषः ते तव श्रिये सम्पदे अभ्यसूयति असूयां करोति तं पुरुषमहं पुरुषकारेण स्वसामर्थ्येन हन्याम्'** इति । अत्र मूले **'श्रियै'** इति पाठं पठन्तो भ्रान्ताः ।

दैवं त्वयि प्रसन्ने सति, पुरुषकारः प्रयत्नः पराक्रमो वा, तेन हन्यां नाशये । हन हिंसागत्योः लिङ् । 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' इत्युक्तेः त्वदनुग्रहे सति त्वदधीनं दुरदृष्टादिकं नाशयेयमिति भावः ॥ २२ ॥

**(सं.चं.)** यद् दैवम् । 'अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः' इति रामायणे । राज्यस्य अपनोदनमपनोदकं दैवं भागधेयम् ॥ २२–३ ॥

**चतुर्द्दशसु लोकेषु श्रिये यस्तेऽभ्यसूयति ।**
**कृपाणीयं कृपाहीना तस्य पास्यति शोणितम् ॥ २३ ॥**

**(भा.दी.) चतुरि**ति । चत्वारः अधिका दश चतुर्दश तेषु लोकेषु यः ते तव श्रिये सम्पदे अभ्यसूयति मात्सर्यं करोति तस्य पुरुषस्य शोणितं रक्तं तत्, कृपाहीना कृपया रहिता, इयं मत्करस्था कृपाणी खड्गः पास्यति पानं करिष्यति । पा पाने लृट् ॥ २३ ॥

**कैतवेनैव कैकेयी वरावादत्त भूपतेः ।**
**पश्चात्तप्तं च नः पित्रा कोऽत्र धर्म्मव्यतिक्रमः ॥ २४ ॥**

**(भा.दी.) कैतवेने**ति । कैकेयी कैतवं कापट्यं तेनैव भूपतेः दशरथात् वरौ आदत्त गृहीतवती । दाञो लङ् । नः अस्माकं पित्रा पश्चात्तप्तं अनुतप्तम् । अत्र कैकेय्युक्तवचनाकरणे धर्मव्यतिक्रमः कः? न कोऽपि । कैकेय्या समयबन्धेन शपथं कारयित्वा वृतत्वात्, दशरथेन च वरं दत्वाऽनुतापस्य कृतत्वादेत-दुल्लङ्घनं न दोषायेति भावः ॥ २४ ॥

**(सं.चं.)** 'कैतवं कपटं कूटम्' इत्यभिधानम् । पूर्वदत्तवरवरणव्याजेन । कैकेयी कैतवेनैव वञ्चयामास भूपतिम् । तया वञ्चितो नः पिताऽपि तद्वनिराकरणेन प्रमोदेतैव न केवलम्, सकालोऽपि लोकः । अपिच शठायां शाठ्यमेव धर्म इति धर्मज्ञा आमनन्ति । तस्मात् कोऽत्र धर्मव्यतिक्रमः? प्रत्युत महान् धर्मसमुच्चय एवायम् ॥ २४ ॥

**अप्रियं सर्वभूतानां कृत्वा प्रव्रजनं त्वया ।**
**क्षुद्राया नैव कैकेय्याः प्रियं नाथ विधीयताम् ॥ २५ ॥**

**(भा.दी.) अप्रियमि**ति । हे नाथ श्रीराम, सर्वे च ते भूताः[1] प्राणिनश्च तेषां अप्रियम्, प्रव्रजनम् राज्यादि-परित्यागेन वनं प्रति गमनं तत् कृत्वा । क्षुद्रायाः निकृष्टायाः । 'क्षुद्रो दरिद्रे कृपणे नृशंसेऽल्पनिकृष्टयोः' इति वैजयन्ती । कैकेय्याः प्रियमभीष्टम् । 'अभीप्सितं हृद्यं दयितं वल्लभं प्रियम्' इत्यमरः । त्वया न विधीयतां न क्रियताम् ॥ २५ ॥

**(सं.चं.)** केवलं क्षुद्रायाः कैकेय्याः प्रियम् । क्षुद्रा नृशंसा निकृष्टा च । 'क्षुद्रो दरिद्रे कृपणे नृशंसेऽल्पनिकृष्टयोः' इति यादवप्रकाशः ॥ २५ ॥

**इत्युक्त ऊचे भगवान् क्व नो दुःखं क्व नो सुखम्[2] ।**
**पट्टनं च वनं चाङ्ग निःसङ्गानां समं मतम् ॥ २६ ॥**

**(भा.दी.) इतीति** । इति लक्ष्मणेन उक्तः भगवान् श्रीरामः, नः अस्माकं दुःखं क्व कुत्र? न कुत्रापी-त्यर्थः । नः सुखं प्राकृतसुखं वा क्व कुत्र? हे अङ्ग प्रिय लक्ष्मण, निर्गतः सङ्गो विषयासक्तिर्येभ्यस्ते तथोक्ता-स्तेषामस्माकं पत्तनं नगरम् । 'पत्तनं पुटभेदनम्' इत्यमरः । वनं च समं समानं यथा भवति तथा मतम् अभिमतम् ॥ २६ ॥

**(सं.चं.)** लक्ष्मणेन इत्युक्तः । इत्युक्ते वा । तं भगवानूचे । क्व नो दुःखम्? कुत्र दुःखं नास्ति? राज्येऽपि तदस्ति । क्व नो सुखम्? कुत्र सुखं नास्ति । वनेऽपि हि तदस्ति । द्वन्द्वात्मकं हि जगत् । न क्वाप्येकान्तं सुखं दुःखं वा । स्मरन्ति हि– 'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्' इति । अथापि मानसिके सुखदुःखे । यस्य दुष्टं मनः तस्य दुःखमेव सर्वत्र । यस्य प्रसन्नं मनः तस्य सर्वत्र सुखमेव । तदेतदाह– पट्टनं चेति । निःसङ्गानां पुरुषाणां पट्टनं च वनं च समं समानमिति सम्मतम् । 'पट्टनं पुटभेदनम्' इति प्रतनाः पठन्ति । 'जलस्थलायतिस्फीतं पट्टनं कीर्त्यते बुधैः' इति स्कान्दवचनं भागवततात्पर्ये । 'राज्यं वा वनवासो वा वनवासो महोदयः' इति रामायणे ॥ २६ ॥

**पूर्णमस्मद्यशश्चन्द्रं कलङ्को न स्पृशेदयम्[3] ।**
**राघवो राज्यलोभेन तातं लङ्घितवानिति ॥ २७ ॥**

---

१. **'सर्वाणि च तानि भूतानि'** इति युक्तमित्युक्तम् ।

२. **'क्व नः सुखम् । पत्तनं च'** इति वि.ती.पाठः । **'क्व नु दुःखं क्व नो सुखम्'** इति क्वचित् ।

३. **'स्पृशत्यलम्'**

**(भा.दी.)** एवं स्वस्य शश्वदेकप्रकारत्वमभिधाय स्वाभिप्रेतमाह– **पूर्णमि**ति। पूर्णं सर्वदैकप्रकारम्, अस्माकं यद्यशस्तदेव चन्द्रस्तम्, राघवः श्रीरामः, राज्ये यो लोभस्तेन तातं पितरम्, तदाज्ञामित्यर्थः, लङ्घितवान् अतिक्रान्तवान् इत्ययं कलङ्कः अपवादः। 'कलङ्कोऽङ्कापवादयोः' इति वैजयन्ती। न स्पृशेत्। स्पृश आमर्शने लिङ्॥ २७॥

**(सं.चं.)** गुणदर्शी भवान्। जनस्तु दोषमेव मृगयतीत्याह- पूर्णम्। अपवादरूपः कलङ्कः॥ २७॥

**पुण्यारण्यशरण्यानां कुर्वाणो निर्वृतिं सताम्।**
**वनेषु सञ्चरिष्यामि सन्त्यन्ये चाऽत्र हेतवः ॥ २८ ॥**

**(भा.दी.)** **पुण्ये**ति। पुण्यानि यान्यरण्यानि तान्येव शरणान्येव शरण्यानि मन्दिराणि येषां ते तथा तेषाम्, पुण्यारण्यशरणवतामिति वा, सतां मुनीनां निर्वृतिं प्रीतिं कुर्वाणः सन् वनेषु सञ्चरिष्यामि। चर गतिभक्षणयोः लृट्। वनं प्रति गमने कारणान्तरं चास्तीत्याह– **सन्ती**ति। अत्र वनं प्रति गमनविषये अन्ये च पितृवचनानुष्ठानातिरिक्ताश्च हेतवः राक्षसहननलक्षणकारणविशेषाः सन्ति॥ २८॥

**(सं.चं.)** पुण्यानि पूतानि मनोहराणि च। शरणाय हितानि शरण्यानि॥ २८॥

**मयि स्वभावभक्तस्य युक्तं प्रोक्तं[१] तवेदृशम्।**
**भरतेन समं [२]मातापितृशुश्रूषणं कुरु ॥ २९ ॥**

**(भा.दी.)** **मयी**ति। मयि स्वभावतो भक्तः स्वभावभक्तस्तस्य तव ईदृशं प्रोक्तम् उदितं वचनम्। भावे क्तः। 'विभाषा भावादिकर्मणोः' (अ.सू.७.२.१७) इति नेट्। युक्तमेव। स्वभावभक्तत्वात् तवैवं कथनं युक्तम्। मम पितुर्वचनोल्लङ्घनमयुक्तमिति भावः। तस्य कर्तव्यमाह– **भरतेने**ति। भरतेन मात्रा कौसल्यया च समं साकं पितुः शुश्रूषणं सेवा तत् कुरु॥ २९॥

**(सं.चं.)** प्रोक्तं वचनम्। मातॄणां पितुश्च शुश्रूषणं कुरु। 'मात्रा पितृशुश्रूषणम्' इति पाठे। मात्रा कौसल्यया सुमित्रया वा। शुश्रूषाशब्दः सेवार्थे रूढः। जिज्ञासाशब्दो यथा विचारार्थे॥ २९–३०॥

**इति विश्वेश्वरेणोक्तं श्रुत्वा विश्वेश्वरानुजः।**
**शान्तकोपो ययौ शोकं स्वामिविश्लेषशङ्कया ॥ ३० ॥**

---

१. **'युक्तमुक्तम्'**

२. **'मात्रा पितृ–'** इति वि.ती.पाठः।

**(भा.दी.) इती**ति । विश्वेश्वरस्य श्रीरामस्यानुजः इति एवमादिप्रकारेण विश्वेश्वरेण श्रीरामेण उक्तं वचः श्रुत्वा शान्तः कोपो यस्य स तथा सन्, स्वामिनः श्रीरामस्य विश्लेषो वियोगस्तस्य शङ्कया, शोको दुःखं तं ययौ ॥ ३० ॥

**बद्धाञ्जलिर्बाष्पमुखश्चिन्तया शान्तविभ्रमः[१] ।**
**सेवोत्कण्ठो रुद्धकण्ठो राममाचष्ट[२] लक्ष्मणः ॥ ३१ ॥**

**(भा.दी.) बद्धे**ति । बद्धः अञ्जलिर्येन स तथा । बाष्पेण अश्रुणा युक्तं मुखं यस्य स तथा । चिन्तया तान्तः । शान्तो विभ्रमो विलासः शोभा वा यस्य तथा । 'विभ्रमः संशये भ्रान्तौ शोभायां च' इति वैजयन्ती । सेवायामुत्कण्ठा औत्सुक्यं यस्य स तथा । 'उत्कण्ठा स्यादुत्कळिका' इति हलः । रुद्धः दुःखातिशयान्निबद्धः कण्ठो यस्य स तथा लक्ष्मणः श्रीरामं आचष्ट अवदत् । चक्षिङ् व्यक्तायां वाचि लङ् ॥

**(सं.चं.)** पूर्वं 'अस्मिन् सङ्कटे आत्मना कथं वर्तितव्यम्' इति विभ्रमः वितर्क आसीत् । इदानीं शान्तविभ्रमः सन् स्वेनापि रामानुगमनं कर्तव्यमिति निर्दधार । 'शङ्का वितर्कः सन्देहः संशयो विभ्रमस्तथा' इत्यभिधानम् । अथापि रामस्य वनगमननिर्धारेण जनितया चिन्तया शान्तविभ्रमः विगतशोभो ग्लानमुखो बभूव । 'शोभार्थेऽपि प्रयुज्यन्ते लक्ष्मीश्रीकान्तिविभ्रमाः' इति च । चिन्तया बाष्पमुखो वा । बाष्पक्लिन्नं मुखं यस्य । निरन्तरानुध्यानजनिता मनसोऽप्रसन्नता चिन्ता ॥ ३१–३ ॥

**नाथ ते यत्र यात्रा स्यात् तत्र त्वामनुयाम्यहम् ।**
**त्वत्सेवा मे वरा मुक्तेः किमुतेतरसम्पदः ॥ ३२ ॥**

**(भा.दी.) नाथे**ति । हे नाथ, ते यत्र यात्रा गमनं स्यात्, तत्र त्वां अहं अनुयामि अनुसृत्य गच्छामि । तव सेवा त्वत्सेवा मे मम मुक्तेः मोक्षादपि वरा श्रेष्ठा । इतरा मोक्षादन्या सम्पद् राज्यादिरूपा, तस्याः वरेति किमुत ॥ ३२ ॥

**यदि यास्यसि मां त्यक्त्वा करुणाकर काननम्[३] ।**
**क्षुद्रं[४] देहमिमं त्यक्त्वा सेवेय त्वाऽन्यजन्मनि[५] ॥ ३३ ॥**

---

१. **'–मुखश्चिन्तयाऽत्यन्तविभ्रमः'** २. **'रुद्धकण्ठो देवमाचष्ट'** । ३. **'करुणाकर मानद'**
४. **'क्षुद्रदेहमिम्'** ५. **'सेवे त्वामन्यजन्मनि'** । **'–मन्यजन्मना'** इति क्वचित् ।

**(भा.दी.) यदी**ति । हे करुणाकर श्रीराम, मां त्यक्त्वा काननं वनं तत् यदि यास्यसि गमिष्यसि, तर्हि क्षुद्रं त्वत्सेवानुपयोगित्वेनापकृष्टम् इमं देहं त्यक्त्वा, त्वा त्वाम्, अन्यच्च तत् जन्म च तस्मिन्, सेवेय सेविष्ये । लिङः कालविशेषानुक्त्या सार्वकालिकत्वादत्र भविष्यदर्थे । षेवृ सेवने इत्यस्माल्लिङ् ॥ ३३ ॥

**वेदाहं पुरुषं पूर्णं प्रभुं[१] त्वां प्रकृतेः परम्[२] ।**
**यत्सेवया कृतार्थाः स्युर्ब्रह्मब्रह्मभवादयः ॥ ३४ ॥**

**(भा.दी.)** वेदेति । पूर्षु सर्वप्राणिशरीरेषु नियामकतया सीदत्यन्तर्यामितया तिष्ठतीति पुरुषस्तम् । 'पूः स्यान्नगरदेहयोः' इति वैजयन्ती । पुरु भूयिष्ठं षं प्राणनं यस्य तमिति वा । 'णकारो बलं षकारः प्राण आत्मा' इति श्रुतेः । पूर्णं सर्वगुणपूर्णम्, विभुं सर्वसमर्थम्, प्रकृतेः परं विलक्षणम्, महालक्ष्म्या अपि उत्तममिति वा, वेद जानामि । विद ज्ञाने लट् । 'विदो लटो वा' (अ.सू.३.४.८३) इति णल् । सेवयाऽलमित्यत्र हेतुत्वेन श्रीरामसेवामहिमानमाह– **यदि**ति । ब्रह्मा च ब्रह्मभवो रुद्रः स च तौ आदी येषां ते तथा, देवगन्धर्वादयः, यस्य तव सेवया कृतः अर्थः प्रयोजनं येषां ते तथा स्युः । तं त्वां वेदेति पूर्वेण सम्बन्धः ॥३४॥

**(सं.चं.)** ब्रह्मभवः शिवः । सनकाद्या नारदश्च । तैरादिमन्तः सर्वे सन्ताः । कृतार्थाः कृतकृत्या मुक्ताश्च ॥ ३४ ॥

**इति भागवताग्रण्यो भगवान् शुश्रुवान् वचः ।**
**सस्मितं[३] तमवेक्ष्योचे बाढमागम्यतामिति ॥ ३५ ॥**

**(भा.दी.) इती**ति । भगवतो भक्ता भागवतास्तेषु अग्रणीः श्रेष्ठस्तस्य लक्ष्मणस्य इति वचः शुश्रुवान् श्रुतवान् भगवान् श्रीरामः, स्मितेन सहितं यथा भवति तथा सस्मितम्, तं लक्ष्मणमवेक्ष्य, त्वया वनं प्रति मया सह आगम्यताम्, बाढं अनुमतम् । 'बाढं त्वनुमते दृढे' इति वैजयन्ती । इति ऊचे ॥ ३५ ॥

**(सं.चं.)** बाढमिति सान्त्ववचनम् । अङ्गीकृता तेऽभ्यर्थना । निश्चितं त्वं मया सहाऽगमिष्यसीति । सस्मितमवेक्ष्येति भगवस्तस्मिन् प्रीतिकारुण्ययोः पूरमाह । यतः स भागवताग्रणीः ॥ ३५ ॥

---

१. **'पूर्णं विभुं त्वाम्'** इति वि.ती.पाठः ।

२. **'प्रकृतेः परं विलक्षणम् । प्रकृतिब्धरहितमिति यावत् । पुरुषम्–'सहस्रशीर्षा पुरुषः' इति सूक्तप्रतिपाद्यम्'** इति का.श्री. ।

३. **'सस्मितस्तम–'**

**पुत्रयात्रोद्यमं दृष्ट्वा[1] कौसल्या पुनरब्रवीत् ।**
**पुरातनानां वचनं मान्यं[2] चेच्छृणु नन्दन ॥ ३६ ॥**

**(भा.दी.) पुत्रेति** । कौसल्या पुत्रस्य श्रीरामस्य यात्रा वनं प्रति गमनं तस्यामुद्यमः प्रयत्नस्तं दृष्ट्वा, हे नन्दन श्रीराम, पुरातनानां पूर्वजानां स्वायम्भुवमन्वादीनां वचनं स्मृतिरूपं वाक्यम्, चेद्यदि मान्यं प्रमाणत्वेन माननार्हं तर्हि तद्वाक्यं श्रुणु इति पुनः अब्रवीत् ॥ ३६ ॥

**(सं.चं.)** दृष्ट्वा अचाल्यं विदित्वा ॥ ३६ ॥

**गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।**
**कामचारप्रवृत्तस्य[3] न कार्य्यं ब्रुवतो वचः ॥ ३७ ॥**

**(भा.दी.)** तद्वाक्यं पठति– **गुरोरि**ति । अवलिप्तस्य गर्वितस्य[4] । 'दर्पो मदोऽवलेपः' इति हलः । कर्तुमर्हं कार्यम्, विहितं कर्म तच्च, कार्यं न भवतीत्यकार्यम्, निषिद्धं कर्म तच्च कार्याकार्यम्, द्वन्द्वैकवद्भावः, अजानतः । अत एव कामेन इच्छया चार आचरणं तस्मिन् प्रवृत्तस्तस्य, गुरोः पितुर्विद्योपदेष्टुर्वा, ब्रुवतः स्वेच्छानुसारेण किञ्चिच्छास्त्रनिषिद्धं कर्तव्यतया वदतोऽपि सतः, वचः वाक्यं न कार्यं नाऽदरणीयम् ॥ ३७ ॥

**(सं.चं.)** पुरातनं स्मृतिवचनं प्रकृतोपयोगितयाऽर्थतोऽनुवदति– गुरोः । अकार्यं कर्तुं ब्रुवतः । रामायणे तु 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य न्याय्यं भवति शासनम्' इति लक्ष्मणवचनत्वेन पठ्यते । कौसल्याऽपि लक्ष्मणोक्तमनूवादेति ग्रन्थकृदाशयः । 'भ्रातुस्ते वदतः पुत्र लक्ष्मणस्य श्रुतं त्वया' इति हि तत्र कौसल्यावचनम् । अवलिप्तस्य काममत्तस्य, अत एव कार्याकार्यविवेकमजानतः, अत एव च रामनिष्कासनाख्ये कामचारे प्रवृत्तस्य दशरथस्य वचो न कार्यमिति कौसल्याया आशयः ॥ ३७ ॥

**मानवेन्द्रेण मनुना गाथेयं नन्वगीयत ।**
**तस्मात् त्वमभिषिच्यस्व राजाऽप्यत्रानुनीयताम् ॥ ३८ ॥**

**(भा.दी.) मानवेन्द्रेणेति** । मानवानां मनुगोत्रभवानां राजर्षीणामिन्द्रेण स्वामिना मनुना स्वायम्भुवमनुना इयं श्लोकरूपा गाथा अगीयत अभिहिता । गै शब्दे लङ् । नन्विति गाथायाः प्रसिद्धिं सूचयति । यस्मात्

१. **'–यात्रोद्यमं ज्ञात्वा'** २. **'मानं चेच्छृणु'**

३. **'कामकारप्रवृत्तस्य'** इति, **'कामकार्यप्रवृत्तस्य'** इति क्वचित् । ४. 'अवलिप्तस्य स्त्रीजितस्य' इति वि.भू.

तस्मात् कारणात् दशरथेन अभिषिच्यस्व अभिषिक्तो भव । षिच सेचने लोट् । राज्ञाऽक्रियमाणत्वात् कथमभिषेकः स्यादित्यत आह– **राजे**ति । राजाऽपि दशरथश्च अत्र अभिषेकविषये अनुनीयताम् । येनकेनाप्युपायेनानुमतः क्रियताम् ॥ ३८ ॥

**(सं.चं.)** प्रतनं हितवचनं गाथा । 'ಗಾಥೆ' इति भाषायाम् । अनुनीयताम्, अनुनयेन यथाऽनुमन्येत तथा क्रियताम् ॥ ३८ ॥

**मातुरेतद् वचः श्रुत्वा[1] प्रोवाच प्रहसन् प्रभुः ।**
**पितुः शान्तस्य दान्तस्य कार्य्यैवाऽज्ञा गुरोरिति ॥ ३९ ॥**

**(भा.दी.) मातु**रिति । प्रभुः श्रीरामः, मातुः एतत् अभिहितं वचः श्रुत्वा, शान्तस्य भगवन्निष्ठबुद्धेः, दान्तस्य निगृहीतेन्द्रियस्य, गृणाति हितमुपदिशतीति गुरुस्तस्य, पितुः दशरथस्य आज्ञा कार्यैव इति प्रहसन् मन्दहासं कुर्वन् सन् प्रोवाच । वच धातोर्लिट् । तथाच दशरथस्य अवलेपादिदोषाभावात् प्रत्युत शमदमादिगुणोपेतत्वादेतद्वाक्याविषयत्वेनाऽस्याऽज्ञाऽवश्यं कार्येति भावः ॥ ३९ ॥

**(सं.चं.)** पितुर्गुरोराज्ञा कार्यैव । पित्रन्यगुरुविषयकत्वात् स्मृतिवचनस्य अपिच नेदं पुत्रकार्यं यत् पितरि दोषारोपणम् । किमुत शमदमादिमति मतिमति पितरि । स किल लोकापवादभियैव वरौ ददौ । नतु कामचारेण ॥ ३९ ॥

**दीर्घश्वासकृतायासा[2] सन्तताश्रुजलाकुला ।**
**अनिवर्त्त्यं सुतं ज्ञात्वा कौसल्या विललाप सा ॥ ४० ॥**

**(भा.दी.) दीर्घे**ति । दीर्घो यः श्वासस्तेन कृत आयासः प्रयासो यया सा तथोक्ता, सन्ततमव्युच्छिन्नं यदश्रुजलं तेन आकुला निबिडा, कौसल्या सुतं श्रीरामं वनयात्रायाः अनिवर्त्यं निवर्तयितुमशक्यं ज्ञात्वा विललाप परिदेवनं चक्रे । रप लप व्यक्तायां वाचि लिट् ॥ ४० ॥

**(सं.चं.)** विललाप विषीदन्ती बभाषे ॥ ४० ॥

**सपत्न्या भक्ष्यमाणां[3] मां व्याघ्र्या गामिव दुर्बलाम् ।**
**तात सन्त्यज्य मा याहि नय मामपि काननम् ॥ ४१ ॥**

---

१. 'मातुस्तद्वचनं श्रुत्वा' २. 'दीर्घश्वासा कृतायासा' ३. 'भीष्यमाणां माम्'

**(भा.दी.)** **सपत्न्ये**ति । हे तात, सपत्न्या कैकेय्या, व्याघ्र्या गामिव धेनुमिव, भक्ष्यमाणाम्, न विद्यते बलं यस्याः सा दुर्बला तां मां सन्त्यज्य मा याहि न गच्छ । अथापि गच्छसि चेत् मामपि काननं तत् प्रति नय ॥ ४१ ॥

**(सं.चं.)** भक्ष्यमाणां मर्मसु विध्यमानाम् । 'ಕಿತ್ತು ತಿನ್ನು' इति भाषायाम् । 'भीष्यमाणाम्क इत्यपि पाठः स्यात् ॥ ४१ ॥

**इत्युक्त ऊचे भगवान् मातरेवं तु मा वद ।**
**पतिशुश्रूषणात्[1] स्त्रीणां परमात्मा प्रसीदति ॥ ४२ ॥**

**(भा.दी.)** **इती**ति । इति कौसल्यया उक्तः भगवान् श्रीरामः, हे मातः, यस्मात् स्त्रीणां पत्युः शुश्रूषणं सेवा तस्मात्, परमः सर्वोत्तमः आत्मा श्रीहरिः, यद्वा परा सर्वोत्कृष्टा या मा लक्ष्मीस्तस्या आत्मा स्वामी श्रीनारायण इत्यर्थः, प्रसीदति प्रसन्नो भवति । तस्मात् एवं मा वद न ब्रूहि ॥ ४२ ॥

**(सं.चं.)** मा वद । माशब्दोऽयम्, न माङ् । मा याहीतिवत् । परमात्मा प्रसीदति । स्वयमात्मा च परं प्रसीदति । पतिरपि हि शुश्रूषितः प्रसादयति जायाम् ॥ ४२ ॥

**भरतं मामिवेक्षस्व स च त्वां मद्वदर्चयेत् ।**
**सत्यमानन्दयिष्यामि वत्सरे त्वां चतुर्दशे ॥ ४३ ॥**

**(भा.दी.)** स्ववियोगनिमित्तशोकापायोपायमाह– **भरतमि**ति । हे मातः, त्वं भरतम् मामिव ईक्षस्व । ईक्ष दर्शनाङ्कनयोः लोट् । स च भरतः त्वां मद्वत् अहमिव अर्चयेत् मानयेत् । अर्च पूजायां लिङ् । चत्वारो अधिका दश चतुर्दश । चतुर्दशत्वसङ्ख्यापूरकश्चतुर्दशस्तस्मिन् । 'तस्य पूरणे डट्' (अ.सू.५.२.४८) इति डट् । वत्सरे अहं त्वां आनन्दयिष्यामि । नदि हर्षे लृट् । इदं वचः सत्यं यथार्थम् ॥ ४३ ॥

**(सं.चं.)** मद्वत् अहमिव । वत्सरे चतुर्दशेऽतीते ॥ ४३ ॥

**काकुत्स्थे कथयत्येवं सा देवी देवतोपमा ।**
**नियम्य नीत्या तं शोकं तस्य स्वस्त्ययनं व्यधात् ॥ ४४ ॥**

---

१. **'पतिशुश्रूषया'** इति, **'पति शुश्रूषणाधर्मः'** इति, **'पतिशुश्रूषणं स्त्रीणाम्'** इति च क्वचित् ।

**(भा.दी.) काकुत्स्थ** इति । काकुत्स्थे ककुत्स्थगोत्रभवे श्रीरामे एवं कथयति सति देवतायाः उपमा सादृश्यं यस्याः सा तथा सा देवी कौसल्या तमुत्पन्नं शोकं नीत्या ज्ञानेन नियम्य तस्य श्रीरामस्य स्वस्त्ययनं मङ्गल्यवचनं तत् व्यधात् चक्रे ॥ ४४ ॥

**(सं.चं.)** 'अनुल्लङ्घनीया राजाज्ञा' इति, 'धर्मपथे पतन् पुत्रो न निवारणीयः' इति च राजनीत्या लोकनीत्या च निमित्तभूतया । तादृशनीत्यनुसन्धानेन शोकं नियम्येत्यर्थः । अवर्जनीये न शोकेन प्रयोजनमिति नीत्या वा । स्वस्त्ययनं स्वस्तिवाचनौपयिकं माङ्गलिकं कर्म ॥ ४४ ॥

**रक्षोघ्नान्[१] सर्षपान् जप्त्वा बबन्ध तनुमद्ध्यमा ।**
**चक्राङ्के चक्रिणः पाणौ चक्री त्वां पालयेदिति ॥ ४५ ॥**

**(भा.दी.) रक्ष** इति । तनु कृशं मध्यमं मध्यप्रदेशो यस्याः सा तथोक्ता कौसल्या, रक्षांसि हन्तुं शीलमेषामस्तीति रक्षोघ्नास्तान् सर्षपान् स्वेष्टदेवतामन्त्रेण जप्त्वा, चक्रस्य अङ्को यस्मिन् स तथा तस्मिन्, चक्रिणः श्रीरामस्य पाणौ, चक्रमस्यास्तीति चक्री श्रीहरिः त्वां पालयेत् । पाल रक्षणे लिङ् । 'पातेर्णौ लुगागमो वाच्यः' इत्युक्तेः[२] पा रक्षण इति वा धातुः । इति उद्दिश्य बबन्ध । बन्ध संयमने लिट् ॥ ४५ ॥

**(सं.चं.)** रक्षोघ्नान् सर्षपान्, रक्षामन्त्रं जप्त्वा बबन्ध । 'रक्षोघ्नैः सर्षपान्' इत्यपि साधुः पाठः । रक्षोघ्नैर्मन्त्रैः सर्षपान् जप्त्वा अभिमन्त्र्येति । 'घृतं श्वेतानि माल्यानि समिधः श्वेतसर्षपान् । उपसम्पादयामास कौसल्या परमाङ्गना' इति रामायणे । श्वेतसर्षपैः किं करणीयमिति रामायणे न स्फुटम् । तदिह कविराह । पालयेदित्युक्त्वा पाणौ बबन्ध 'यत्र रूपं तत्र गुणाः' इति महतां वचनं स्मारयन्नाह– तनुमध्यमेति । अत एव रामायणे परमाङ्गनेत्याह । गुणेन रूपेण च परमेत्यर्थः ॥ ४५ ॥

**सर्वदा स्वस्तये सन्तु सर्वभूतानि तात ते ।**
**सर्वभूतान्तरात्मा च केशवः स्वस्तयेऽस्तु ते ॥ ४६ ॥**

---

१. **'रक्षोघ्नैः सर्षपान्'**

२. वार्तिकमिदं बहुधा पठन्ति । **'लुगागमस्तु तस्य वक्तव्यः'** (अ.सू.७.३.३७) इति काशिकायामुद्धृतः पाठः । **'पातेर्णौ लुग् वक्तव्यः'** इति भट्टोजिः ।

**(भा.दी.) सर्वदे**ति । हे तात श्रीराम, ते तव स्वस्तये मङ्गळाय । 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च'[१] इत्युक्तेर्विभक्तिप्रतिरूपकमव्ययमेतत् । सर्वभूतानि सर्वप्राणिनः सन्तु भवन्तु । सर्वभूतानामन्तरात्मा अन्तर्यामी केशवश्च ते स्वस्तये सर्वदा अस्तु ॥ ४६ ॥

**(सं.चं.)** स्वस्तये सन्ततसौख्याय 'सचस्वा नः स्वस्तये' इति हि श्रुतिः । सर्वभूतान्तरात्मानौ केशौ ब्रह्म-शिवौ । क इति वायुश्च । तानप्ययं वर्तयतीति केशवः ॥ ४६ ॥

**[२]विनतेवाऽत्मतनयमुपेन्द्रमिव चादितिः ।**
**विष्णुप्रसादाद् द्रक्ष्यामि त्वां विक्रान्तमुपागतम् ॥ ४७ ॥**

**(भा.दी.) विनते**ति । आत्मनः तनयं पुत्रं गरुडं विनतेव, अमृतहरणार्थं स्वर्गं प्रति गतं तद्धृत्वा पुनरागतं गरुडं विनतादेवीव, उपेन्द्रं अदितिरिव, बलेः सत्रं प्रति त्रिपदभूतळयाचनार्थं गतं ततश्च त्रिपदच्छलेन[३] त्रैलोक्यं हृत्वाऽऽगतं वामनं अदितिदेवीव, विक्रान्तं पराक्रमिणम्, उपागतं त्वां विष्णोः प्रसादोऽनुग्रहस्तस्मात्, द्रक्ष्यामि ॥ ४७ ॥

**(सं.चं.)** मातुर्दास्यविमोक्षार्थं स्वर्गादमृतमाहृत्य प्रत्यागतमात्मतनयं गरुडमिव विनता । बलियज्ञ-शरणात् प्रत्यागतमुपेन्द्रं वामनमिवादितिः । विक्रान्तं देवेषु दर्शितविक्रमं गरुडम् । विक्रान्तं दर्शितपदक्रमणं वामनम् । तथा रक्षःसु दर्शितविक्रमं रामम् ॥ ४७ ॥

**पुरुषोत्तम भक्त्या मे पुनरेहि सलक्ष्मणः ।**
**इत्युक्त्वा मूर्ध्न्युपाघ्राय परिरेभे सुतं सती ॥ ४८ ॥**

**(भा.दी.) पुरुषोत्तमे**ति । हे पुरुषोत्तम श्रीराम, मे भक्त्या, मयि विद्यमानस्नेहेनेत्यर्थः, सलक्ष्मणः सन् पुनः एहि आगच्छ । इण् गतौ लोट् । सती पतिव्रता कौसल्या इति रामं प्रति उक्त्वा मूर्धा शिरस्तस्मिन् उपाघ्राय सुतं परिरेभे आलिङ्गितवती । रभ राभस्ये लिट् ॥ ४८ ॥

**(सं.चं.)** अयि पुरुषपुङ्गव, मे मयि विद्यमानया भगवद्भक्त्या मम सम्बन्धिन्या त्वयि विद्यमानया मद्भक्त्या निमित्तभूतया पुनरेहीति वा । पुरुषोत्तमे भगवति भक्त्येति समस्तं वा पदम् ॥ ४८–९ ॥

---

१. सप्तदशं गुणसूत्रमिदम् । (अ.सू.१.४.५७) इत्यत्रोद्धृतं काशिकायाम् । १.१.३७ तमे सूत्रे भट्टोजिना ।

२. 'विनतेव स्वतनयमुपेन्द्रमिव वाऽदितिः' ३. 'त्रिपदव्याजेन'

**प्रसाद्य मातरं देवः परिक्रम्य प्रणम्य च ।**
**निर्ज्जगाम गृहात् तस्माल्लक्ष्मीवान् लक्ष्मणान्वितः[1] ॥ ४९ ॥**

**(भा.दी.) प्रसाद्येति** । देवः मातरं कौसल्यां प्रसाद्य प्रसन्नीकृत्य, परिक्रम्य प्रदक्षिणीकृत्य, प्रणम्य च, तस्मात् मातृसम्बन्धिनः, गृहं मन्दिरं तस्मात्, लक्ष्मीः कान्तिरस्यास्तीति लक्ष्मीवान् सन्, मात्रादिवियोगे प्रसक्तेऽपि पूर्णानन्दमयत्वात् मुखवैवर्ण्यादिरहित इत्यर्थः, लक्ष्मणान्वितः सन् निर्जगाम ॥ ४९ ॥

**रराज रामोऽतनुराजमार्ग्गे स श्यामधामा वियतीव मेघः ।**
**स्वदृष्टिवृष्ट्या परितापहारी मुहूर्त्तमार्त्तिं शमयन् प्रजानाम् ॥ ५० ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे अयोद्ध्याकाण्डे पञ्चमः सर्ग्गः ॥**

—०—

**(भा.दी.) रराजेति** । श्यामं धाम तेजो यस्य स तथा, स्वस्य दृष्टिर्दर्शनं सैव वृष्टिस्तया प्रजा जनास्तासां परितापान् आध्यात्मिकादितापान् हर्तुं शीलमस्यास्तीति तथोक्तः । सः श्रीरामः मुहूर्तो मुहूर्तकालस्तं प्रजानामार्तिं शमयन् सन्, वियद् व्योम तस्मिन् मेघ इव । अतनुरसूक्ष्मो यो राजमार्गस्तस्मिन् रराज । राजृ दीप्तौ लिट् । श्रीरामस्य वनयात्रावार्ताश्रवणेनानुतप्ताः प्रजाः राजमार्गे गच्छन्तं श्रीरामं दृष्ट्वा मुहूर्तं परितापान् जहुरिति भावः ॥ ५० ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायामयोध्याकाण्डे पञ्चमः सर्गः ॥**

—०—

**(सं.चं.)** उपजात्योपसंहरति– रराज । श्यामधामा मेघश्च रामश्च । स्ववनगमननिर्धारजनितामार्तिं मुहूर्तं स्वदर्शनेन शमयन् रामः परितापं अन्तर्वेदनां जहार रामः । निदाघजनितामार्तिं मुहूर्तं शमयन् वह्निस्तापं जहार मेघः । वियतीवअतनौ विशाले राजमार्गे ॥ ५० ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामयोध्याकाण्डे पञ्चमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– ६२१+५०=६७१]

१. 'लक्ष्मणाग्रजः'

## षष्ठः सर्ग्गः

**महोत्सवोत्सुकजनं प्रविश्य स्वपुरं प्रभुः ।**
**अन्तःपुरान्तरगतां देवीमूचे चिकीर्षितम्[1] ॥ १ ॥**

**(भा.दी.)** श्रीरामो राजमार्गेण कुत्र गतवानित्यत आह– **महे**ति । प्रभुः श्रीरामः, महान् यः उत्सवः तद्दर्शने उत्सुकः कौतुकयुक्तो जनो यस्मिन् तत्तथा तत्, स्वपुरं स्वमन्दिरं प्रविश्य, अन्तःपुरस्य यदन्तरं मध्यं तत् गतां देवीं सीतां प्रति, कर्तुमिष्टं चिकीर्षितं तत्, स्वकर्तव्यं वनं प्रति प्रव्रजनम् ऊचे ॥ १ ॥

**(सं.चं.)** रामाभिषेकाख्ये महोत्सवे उत्सुकाः, यतोऽज्ञातरामवनगमनवार्ता जना यत्र । स्वपुरं स्वमन्दिरम् । 'पुरं शरीरमित्याहुर्गृहोपरिगृहे पुरम् । पुरो गुग्गुलुराख्यातो नगरेऽपि पुरं पुरी' इति धरणिः । देवीं सीतां प्रति स्वचिकीर्षितं वनगमनमाह ॥ १ ॥

**त्वया सह वनं यामि[2] देवेत्यूचेऽथ जानकी ।**
**पुर एवोष्यतां तावत्[3] त्वयेत्यूचे जगत्पतिः ॥ २ ॥**

**(भा.दी.) मये**ति । अथ जानकी हे देव, त्वं मया सह वनं तत्प्रति याहि इति ऊचे । जगत्पतिः श्रीरामः तावत् मद्वनवासपर्यन्तं त्वया पुरं गृहं तस्मिन्नेव उष्यतां स्थीयताम्, वस निवासे लोट्, इति ऊचे ॥ २ ॥

**(सं.चं.)**त्वया सह । 'धर्मे चार्थे च कामे च नातिचरामि' इति प्रतिज्ञातम् । तावत् यावन्मम वनात् प्रत्या-वर्तनम् । मद्वचनपालनमेव हि वरं प्रत्यवायसङ्कटान्मया सह वनगमनात् ॥ २ ॥

**समूदे सह तद्यात्रां कृच्छ्रेण किल केशवः ।**
**सदाऽप्येकधियोरेतद् देववेव्योर्विडम्बनम् ॥ ३ ॥**

---

१. **'अन्तःपुरगतां देवीमूचे किं ते चिकीर्षितम् ।'** २. **'मया सह वनं याहि'** इति.वि.ती.पाठः ।

३. **'एवोष्यतां तन्वि त्वये–'** । **'हे तन्वि कोमले शरीरे'** इति का.श्री. ।

**(भा.दी.) समि**ति । केशवः श्रीरामः, स्वेन सह तस्याः सीतायाः यात्रा तद्यात्रा ताम्, कृच्छ्रं निर्बन्धस्तेन समूदे किल, तथाऽस्त्विति संवादं चक्रे किल । वद व्यक्तायां वाचि लिट् । इदं च लौकिकदम्पत्यनुकरण-मात्रमित्याह– **सदे**ति । सदाऽपि अनाद्यनन्तकालेऽपि एका एकार्थविषयिणी धीर्ययोस्ते तथोक्ते तयोः, देवदेव्योः श्रीरामसीतयोः, एतत् विरुद्धधीदम्पतिवत् सम्भाषणादिकम्, विडम्बनं लौकिकदम्पत्यनुकरणमात्रम्, न तु भिन्न-मतित्वेनेति भावः ॥ ३ ॥

**(सं.चं.)** कृच्छ्रेण कथञ्चित् समूदे संवदते स्म । 'व्यक्तवाचां समुच्चारणे' (अ.सू.१.३.४८) इत्यात्मने-भाषा । व्यक्तवाचां मनुष्याणां समुच्चारणं सम्भाषणम् ॥ ३ ॥

**वनवासविवादं तं राजराज्ञ्योः[१] प्रशुश्रुवान् ।**
**अन्तःपुरजनः सर्वो रुरोद विवशो भृशम् ॥ ४ ॥**

**(भा.दी.) वने**ति । राजराज्ञ्योः रामसीतयोः, तं वने वासस्तस्मिन् विषये यो विवादस्तं प्रशुश्रुवान् प्रकृष्टतया श्रुतवान्, सर्वः अन्तःपुरे विद्यमानो जनः, विवशः शोकातिशयात् परवशः सन्, भृशमत्यन्तं रुरोद । रुदिर् अश्रुविमोचने लिट् ॥ ४ ॥

**(सं.चं.)** त्यक्तराज्योऽपि राम एव जनानामभिमतो राजा । राज्ञी च सीता । राममुखेनैव प्रकटं श्रुतवान् ॥ ४ ॥

**लक्ष्मणं बाष्पपूर्णाक्षं पार्श्वे प्रह्वमुपस्थितम्[२] ।**
**ध्यायन्तमथ कर्त्तव्यं भगवान् समभाषत[३] ॥ ५ ॥**

**(भा.दी.) लक्ष्मणमि**ति । अथ भगवान् बाष्पेण अश्रुणा पूर्णे अक्षिणी यस्य स तथा तम्, पार्श्वमुपान्तं तस्मिन् अनुस्थितम्, प्रह्वं अवनतम्, कर्तुमर्हं कर्तव्यं तत्, अस्यामवस्थायां कर्तव्यकार्यं किमिति ध्यायन्तं आलोचयन्तं लक्ष्मणं समभाषत ॥ ५ ॥

**(सं.चं.)** लक्ष्मणस्य वनगमनं पूर्वमनुमतम्–'बाढमागम्यताम्' (५.३५) इति । अथापि तस्य मनोदार्ढ्यं परीक्षमाण इव पुनरपि भगवान् समभाषत कारणविशेषं विवक्षुः ॥ ५ ॥

---

१. **'तं रामदेव्योः'** २. **'प्रह्वमनुस्थितम्'** इति वि.ती.पाठः । ३. **'भगवांस्तमभाषत'**

**कैकेय्या नियतो राजा मातरौ नौ न मानयेत् ।**
**भरतः श्रीमदान्धश्च तस्मादत्रोष्यतां त्वया ॥ ६ ॥**

**(भा.दी.)** **कैकेय्ये**ति । कैकेय्या नियतः वरव्याजेन नियमितः, बद्ध इति यावत्, राजा दशरथः नौ आवयोः मातरौ कौसल्यासुमित्रे न मानयेत् न सत्कुर्यात् । मान पूजायां लिङ् । श्रीनिमित्तको यो मदस्तेन अन्ध इवान्धः, गर्वित इत्यर्थः, भरतश्च नौ मातरौ यस्मान्न मानयेत् तस्मात् कारणात् त्वया अत्र अयोध्यायां मातृमाननार्थं उष्यताम् । वस निवासे लोट् ॥ ६ ॥

**(सं.चं.)** नियतः नियन्त्रितः, वशीकृतः । भरतश्च श्रीमदान्धः स्यात् । सम्भावनोक्तिरियं केवलं लक्ष्मणस्य निर्धारं श्लथयितुम् । तदपि लोकविडम्बनम् । तेन सोऽपि नौ मातरौ कौसल्यासुमित्रे न मानयेच्च । चकारः सम्भावनायाम् ॥ ६ ॥

**मज्जनन्या हि[1] शुश्रूषा मच्छुश्रूषैव नान्यथा ।**
**किञ्चित्क्लेशासहं[2] प्रेष्ठं त्वां वनं न नयाम्यहम् ॥ ७ ॥**

**(भा.दी.)** त्वच्छुश्रूषाभावात् कथं स्थातव्यमित्यत आह– **मदि**ति । मज्जनन्याः कौसल्यायाः शुश्रूषा मच्छुश्रूषैव मत्प्रीतिहेतुत्वान्मम सेवैव । अन्यथा अन्यसेवासदृशी न हि यस्मात् । 'हि हेताववधारणे' इत्यमरः । तस्मात् किञ्चित् स्वल्पो(ऽपि) यः क्लेशस्तं न सहत इति किञ्चित्क्लेशासहस्तं प्रेष्ठं प्रियतमं त्वां अहं वनं प्रति न नयामि ॥ ७ ॥

**(सं.चं.)** मज्जनन्याः शुश्रूषाऽपि मच्छुश्रूषैव हि । न केवलमेवम् । सम्प्रति तु मज्जनन्याः शुश्रूषैव मच्छुश्रूषा । अन्यथा जननीशुश्रूषामकृत्वा मया सह वनगमनेन मच्छुश्रूषा न कृता भवति हि । मदिष्टकरणं हि मच्छुश्रूषा । न त्वदिष्टकरणमिति । किञ्चिदितिकारणान्तरमनेनाह । वनं नीत्वा न क्लेशयामि । क्लेशासहत्वात् प्रेष्ठत्वाच्च मे ॥ ७–८ ॥

**एवं ब्रुवाणे देवेऽस्मिंस्तूर्णं पादाभिवन्दनम् ।**
**कृत्वाऽऽर्य्यस्य तथाऽर्य्याया रुदन्नाचष्ट लक्ष्मणः ॥ ८ ॥**

---

१. **'मज्जनान् पाहि'** इति भ्रान्तः पाठः । २. **'किञ्च क्लेशासहम्'**

**(भा.दी.) एवमि**ति । (अस्मिन्) देवेशे श्रीरामे एवं ब्रुवाणे सति वदति सति, लक्ष्मणः तूर्णं यथा भवति तथा आर्यस्य स्वामिनः श्रीरामस्य तथा आर्यायाः साध्व्याः सीतायाः पादयोरभिवन्दनं तत् कृत्वा रुदन् आचष्ट ॥ ८ ॥

**कौसल्या नैव शोच्या सा त्वद्वियोगं सहेत चेत् ।**
**यस्या ग्रामसहस्रं हि निसृष्टमुपजीवनम् ॥ ९ ॥**

**(भा.दी.) कौसल्ये**ति । हि यस्मात् यस्याः कौसल्यायाः उपजीव्यतेऽनेनेत्युपजीवनम्, उपजीवनहेतुभूतमित्यर्थः, ग्रामसहस्रं दशरथेन निसृष्टं पूर्वमेव दत्तम् । तस्मात् कौसल्या चेद्यदि तव वियोगस्त्वद्वियोगस्तं सहेत । षह मर्षणे लिङ् । तर्हि सा नैव शोच्या, त्वद्वियोगव्यतिरिक्तशोककारणाभावाच्छोचितुमर्हा न ॥ ९ ॥

**(सं.चं.)** यदि कौसल्या त्वद्वियोगं सहेत तदा मादृशेन सेवकेन न किमपि प्रयोजनमित्याह– कौसल्या नैव शोच्या । 'कौसल्या बिभृयादार्या सहस्रमपि मद्विधान् । यस्याः सहस्रं ग्रामाणां सम्प्राप्तमुपजीवनम् । तदात्मभरणे चैव मम मातुस्तथैव च । पर्याप्ता मद्विधानां च भरणाय यशस्विनी' इति रामायणे ॥ ९ ॥

**कौसल्यां च सुमित्रां च भरतस्त्वयि गौरवात् ।**
**पूजयेदधिकं मातुः कृत्यं नास्त्यत्र मे ततः ॥ १० ॥**

**(भा.दी.) कौसल्यामि**ति । भरतः त्वयि विद्यमानं यद्गौरवं बहुमानस्तस्मात् कौसल्यां च सुमित्रां च मातुः स्वमातुः कैकेय्याः अधिकं यथा भवति तथा पूजयेत् मानयेत् । पूज पूजायां लिङ् । ततः कारणात् अत्र अयोध्यायां कृत्यं कार्यं मे नास्ति ॥ १० ॥

**(सं.चं.)** तस्मादत्रायोध्यायां स्थित्वा मम किमपि करणीयं नास्ति ॥ १० ॥

**प्रेष्ठोऽहं चेत् तव स्वामिन् कथं मां न नयस्यहो ।**
**त्वच्छुश्रूषोचितं साक्षात् प्रेष्यं[१] शिष्यं तवानुजम् ॥ ११ ॥**

**(भा.दी.) प्रेष्ठ** इति । हे स्वामिन्, चेत् (यदि) तव अहं प्रेष्ठः अतिशयेन प्रियस्तर्हि साक्षात् मुख्यतः तव शुश्रूषायामुचितं योग्यम्, प्रेष्यं किङ्करम्, शिष्यं शिक्षणीयम्, तव अनुजं मां कथं न नयसि । अहो दुरदृष्टमत्याश्चर्यम् ॥ ११ ॥

---

१. **'प्रेष्यम् (प्र)एषयितुं योग्यम् । 'गुणोऽप्यत्रेति केचित्' इति केषाञ्चित्पक्षमात्रित्य प्रेष्यमित्युक्तम् ।अन्यथा 'प्रादूहोढोढ्येषैष्येषु' इत्यनेन वृद्धौ सत्यां प्रैष्यमिति स्यात्'** इति का.श्री. ।

**(सं.चं.)** प्रेष्यो दासः । 'प्रेष्यः प्रोक्तः प्रतिस्कन्दः' इत्यभिधानम् । 'प्रैष्यः' इति साधु रूपमिति केचित् पाणि-नीयाः । तथाहि वार्तिकं पपाठ पतञ्जलिः–'प्रादूहोढोढ्येषैष्येषु' (अ.सू.५.१.८९) इति । वामनस्तु ऊहपदं परित्यज्य पपाठ–'प्रादूढोढ्येषैष्येषु वृद्धिर्वक्तव्या' इति । तेन प्र+एष्यः= प्रैष्य इति रूपमिति तेषां मतम् । अथापि 'ईष गतौ' इति धातोः प्रेष्य इति रूपनिष्पत्तिं तेऽभ्युपयन्ति–'प्र+ईष्यः' प्रेष्य इति । अथवा प्रेषृ धातुरेव हि पठ्यते । तथाच प्रेषयितुं योग्यः प्रेष्य इति स्वरसत एव रूपसिद्धौ किमनेन प्रादक्षिण्येन नासास्पर्शनेन? ॥ ११ ॥

**देव त्वं सह वैदेह्या वने स्वैरं हि रंस्यसे ।**
**सकलः सफलः कालो युवयोः सेवयाऽस्तु मे[१] ॥ १२ ॥**

**(भा.दी.)** **देवे**ति । दे देव, त्वं वैदेह्या सीतया सह वने स्वैरं स्वेच्छानुसारेण रंस्यसे हि क्रीडिष्यसि हि । रमु क्रीडायां लृट् । (वां) युवयोः, दम्पत्योः जाया च पतिश्च दम्पती तयोः, सेवया सकलः कालः सफलः सार्थकः अस्तु ॥ १२ ॥

**(सं.चं.)** स्वस्य ईरः ईरणा प्रेरणा यथा तथा स्वैरं यथेच्छम् । 'स्वादीरेरिणोः' इति वार्तिकम् (अ.सू. ६.१.८९) ॥ १२–३ ॥

**एवमुक्तवतस्तस्य भक्तिं तां भक्तवत्सलः ।**
**विज्ञाय प्रत्युवाचेदं लक्ष्मणं लक्ष्मणाग्रजः ॥ १३ ॥**

**(भा.दी.)** **एवमि**ति । भक्तेषु वत्सलः स्निग्धः लक्ष्मणाग्रजः श्रीरामः एवं उक्तवतः तस्य लक्ष्मणस्य तां भक्तिं विज्ञाय इदं वचः लक्ष्मणं प्रत्युवाच ॥ १३ ॥

**वत्सैवं स्यात्[२] प्रसन्नोऽस्मि त्वमापृच्छ्य[३] सुहृज्जनम् ।**
**ये राज्ञे वरुणप्रत्ते धनुषी ते समानय ॥ १४ ॥**

**(भा.दी.)** **वत्से**ति । हे वत्स, एवं त्वदुक्तरीत्या स्यात् भवतु । अस्तेर्लिङ् । अहं ते प्रसन्नः अस्मि । त्वं सुहृत् बन्धुभूतो यो जनस्तम् आपृच्छ्य अनुज्ञाप्य, राज्ञे दशरथाय वरुणेन प्रत्ते दत्ते ये धनुषी ते समानय ॥ १४ ॥

---

१. **'कालो दम्पत्योः सेवयाऽस्तु वाम्'** इति वि.ती.पाठः स्यात् । **'युवयोः सेवनेऽस्तु मे'** इति कचित् । २. **'तत् तव स्यात्'**
३. **'त्वमापृच्छ'** । **'त्वं सुहृज्जनं मात्राद्यं स्वजनं आपृच्छ्य पृष्ट्वा, तदनुज्ञां गृहीत्वेति यावत्, आगच्छ'** इति का.श्री. ।

**(सं.चं.)** गमनार्थमनुज्ञाग्रहणमापृच्छा । राज्ञे जनकाय वरुणेन दत्ते । तेन चोपायनत्वेन रामलक्ष्मणयोर्दत्ते । तथाहि रामायणे– 'ये च राज्ञो ददौ दिव्ये महात्मा वरुणः स्वयम् । जनकस्य महायज्ञे धनुषी रौद्रदर्शने । अभेद्यकवचे दिव्ये तूणी चाक्षयसायकौ । आदित्यविमलौ चोभौ खड्गौ हेमपरिष्कृतौ । सत्कृत्य निहितं सर्वमेतदाचार्यसद्मनि । स त्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण' इति । अथवा राज्ञे दशरथायैव दत्ते । तदा रामायणवचनस्यायमर्थः– जनकस्य महायज्ञे, सहैव निर्वृत्ते रामविवाहप्रसङ्गे, युक्ते काले रामलक्ष्मणयोर्दातव्ये इति स्वयं वरुणेन राज्ञो दशरथस्य दत्ते इति । अत एवैतावन्तमनेहसमाचार्यस्य वसिष्ठस्य सद्मनि निहितं विन्यस्तम् । वस्तुतस्तु 'ये च राज्ञे ददौ दिव्ये' इत्येव ग्रन्थकृदभिमतो रामायणपाठ इति भाति ॥ १४–५ ॥

**अभेद्यं कवचं हृद्यमक्षयेषू तथेषुधी ।**
**खड्गौ चाऽनय विन्यस्तं सर्वमाचार्य्यसद्मनि ॥ १५ ॥**

**(भा.दी.) अभेद्यमि**ति । आचार्यस्य कुलाचार्यस्य सद्मनि वेश्मनि विन्यस्तं निक्षिप्तम्, अभेद्यं शत्रुभिर्भेत्तुमशक्यम्, हृद्यं मनोहरं कवचम्, तथा अक्षयेषू अक्षया इषवो ययोस्तौ तथोक्तौ इषुधी तूणीरौ, खड्गौ चेति सर्वं समस्तम्, यद्वरुणदत्तं तत् आनय ॥ १५ ॥

**इत्युक्तमात्रे[१] सौमित्रिः स्वमापृच्छ्य[२] सुहृज्जनम् ।**
**आचार्य्यसद्मनो हेतीर्हेमदीप्ताः समानयत् ॥ १६ ॥**

**(भा.दी.) इती**ति । सौमित्रिः श्रीरामेण इति वचसि केवलमुक्तमुक्तमात्रं तस्मिन् सति, स्वं स्वकीयं सुहृद्बन्धुभूतो यो जनस्तम्, आपृच्छ्य अहं श्रीरामेण सह वनं प्रति गच्छामीत्यादियात्राप्रसङ्गमुक्त्वा, आचार्यसद्मनः कुलाचार्यगृहात् हेम्ना दीप्ताः हेमदीप्ताः, सुवर्णबन्धा इत्यर्थः, हेतीः आयुधानि समानयत् ॥ १६ ॥

**(सं.चं.) सुहृज्जनमि**ति । मुख्यतो मातरं सुमित्राम्, भार्यामूर्मिळां च । हेतीरायुधानि धनुषी, अभेद्ये कवचे, अक्षयेषू इषुधी, खड्गौ च ॥ १६ ॥

---

१. 'इत्युक्तमात्रः' २. 'तमापृच्छ्य'

**पुनश्च देवस्याऽऽदेशात् स दानाय[1] समानयत् ।**
**सुयज्ञं च वसिष्ठस्य सूनुमन्यान् द्विजानपि ॥ १७ ॥**

**(भा.दी.) पुनरि**ति । सः लक्ष्मणः पुनश्च देवस्य श्रीरामस्य आदेशः सुयज्ञमाकारयेत्याज्ञा तस्मात् । वसिष्ठस्य सूनुं सुयज्ञं सुयज्ञनामानम्, अन्यान् द्विजानपि, दानं प्रदानं तस्मै समानयत् आकारयामास । णीञ् प्रापणे लङ् ॥ १७ ॥

**(सं.चं.)** देवस्य रामस्य । वसिष्ठस्य सूनुं सुयज्ञं सभार्यम् ॥ १७ ॥

**कोटीरकाञ्चीकटककेयूरादिविभूषणम् ।**
**अनर्घं[2] राघवः प्रादात् सुयज्ञाय मणीनपि ॥ १८ ॥**

**(भा.दी.) कोटीरे**ति । राघवः । न विद्यते अर्घः मूल्यं यस्य तत्तथा तत् । कोटीरं किरीटं तच्च, काञ्ची मेखला सा च, कटको[3] वलयः स च, केयूरमङ्गदं तच्च तानि आदीनि यस्य तत् विभूषणं च तत् । मणीनपि रत्नान्यपि सुयज्ञाय वसिष्ठपुत्राय प्रादात् ॥ १८ ॥

**(सं.चं.)** 'आहुः किरीटमुष्णीषं कोटीरम्' इत्यभिधानम् । 'कलापः सप्तकी काञ्ची मेखला रशना तथा' इति च । **'ಉಡುದಾರ', 'ಸೇವಳ'** इति भाषायाम् । कटकः हस्तभूषणं पादभूषणं च । 'आवापः परिहार्यः स्यात् कटको वलयस्तथा' इति । 'सिञ्जिनी पादकटकः' इति च । **'ಕಡಗ'** इति भाषायाम् । 'केयूरमङ्गदम्' इति च । **'ತೋಳುಬಂದಿ, ವಂಕಿ'** इति भाषायाम् । अनर्घं विभूषणजातम् । अनर्घान् मणीनपि ॥ १८ ॥

**भूषणानि पराद्ध्र्याणि वासांसि विविधानि च ।**
**सुयज्ञपत्न्यै प्रददौ रामपत्नी मुदाऽन्विता ॥ १९ ॥**

**(भा.दी.) भूषणानी**ति । रामपत्नी सीता, पराध्र्याणि अत्युत्तमानि भूषणानि, विविधानि वासांसि वस्त्राणि च, सुयज्ञपत्न्यै मुदा प्रीत्या अन्विता सती प्रददौ ॥ १९ ॥

---

१. **'स्वस्वत्वत्यागपूर्वकं परस्वत्वापादनं दानम् । 'तुभ्यमिदं सम्प्रददे' इति परस्वत्वापादनम् । 'न मम' इति स्वस्वत्वपरित्यागः'** इति का.श्री.।

२. **'अनर्घ्यान्'** । **'अर्घं मूल्यमर्हन्तीत्यर्घ्याः । न अर्घ्याः अनर्घ्याः ।ताननर्घ्यान् मूल्यरहितान् मणीनमपि प्रादात्'** इति का.श्री. । **'अनर्घ्यम्'** इति च क्वचित् ।

३. **'कटकं हस्ताभरणं तच्च'**

**(सं.चं.)** पराद्ध्यर्मुत्कृष्टम् । 'मुख्यं पराद्ध्यं प्रवरं प्रबर्हम्' इत्यभिधानम् । परस्मिन्नर्द्धे स्थाने भवमित्यर्थः । 'परावराधमोत्तमपूर्वाच्च' (अ.सू.४.३.५) इति यत् ॥ १९ ॥

**मातुलेनाऽऽत्मने दत्तं नागं शत्रुञ्जयं[1] प्रभुः ।**
**हेमभूषं ददौ तस्मै सहस्रेण गवां सह ॥ २० ॥**

**(भा.दी.) मातुलेने**ति । प्रभुः श्रीरामः मातुलेन जनकेन आत्मने स्वस्मै विवाहसमये दत्तं शत्रुञ्जयम् शत्रुञ्जयनामानं हेममयी भूषाऽलङ्कारो यस्य स तथा तम् नागं गजं गवां धेनूनां यत्सहस्रं तेन सह तस्मै सुयज्ञाय ददौ ॥ २० ॥

**(सं.चं.)** मातुलेन कौसल्याभ्रात्रा । मातुलशब्देन श्वशुरो गृह्यत इत्यपि व्याचक्षते । गवां सहस्रेण सह । एतेन 'नागः शत्रुञ्जयो नाम मातुलो यं ददौ मम । तं ते गवां सहस्रेण ददामि द्विजपुङ्गव' इत्येव प्रतनो रामायणपाठ इति निश्चीयेत । अर्वाञ्चस्त्वन्यथा पठन्ति– 'तं ते गजसहस्रेण' इति 'तं ते निष्कसहस्रेण' इति च ॥ २० ॥

**ब्राह्मणेभ्यस्तथाऽन्येभ्यः सर्वेभ्योऽर्थिभ्य एव च ।**
**यथेष्टं प्रददौ वित्तं प्रीतास्ते चाऽऽशिषोऽवदन्[2] ॥ २१ ॥**

**(भा.दी.)** ब्राह्मणेभ्य इति । श्रीरामः अन्येभ्यः सर्वेभ्यः ब्राह्मणेभ्यः, अर्थिभ्यः ब्राह्मणातिरिक्तयाचकेभ्यश्च वित्तं धनं तत्, इष्टमीप्सितमनतिक्रम्य यथेष्टम्, अभीष्टपूर्तिर्यथा भवति तथेत्यर्थः, प्रददौ । ते च ब्राह्मणाद्या प्रीताः सन्तः आशिषः शुभवाक्यानि ताः अवदन् ॥ २१ ॥

**(सं.चं.)** ब्राह्मणेभ्यः, अन्येभ्यः तदन्येभ्यश्च, इति सर्वेभ्यः अर्थिभ्यश्च । सुयज्ञादन्येभ्यो ब्राह्मणेभ्य इति वा । तदितरेभ्यश्च सर्वेभ्योऽर्थिभ्यः । यथेष्टमेव प्रददौ ॥ २१–३ ॥

**ततः सौमित्रिमाहूय भगवानिदमब्रवीत् ।**
**धनराशिमिमं पश्य लक्ष्मणोत्तमलक्षण[3] ॥ २२ ॥**

**(भा.दी.) तत** इति । ततः भगवान् श्रीरामः सौमित्रिं लक्ष्मणं आहूय उत्तमानि लक्षणानि अङ्गसम्पदो यस्य स तथा तत्सम्बुद्धिः, हे लक्ष्मण, इमं धनराशिं पश्य इति अब्रवीत् ॥ २२ ॥

१. 'शत्रुजयम्' २. 'प्रीतास्तेनाऽऽशिषोऽवदन्' ३. '–णोत्तमलक्षणम्'

**द्विजाग्रेभ्यश्च भृत्येभ्यः[1] सुहृद्भ्यश्च प्रदीयताम् ।**
**योयो जनोऽधुना वित्तं यद्यदिच्छति तद् दिश ॥ २३ ॥**

**(भा.दी.) द्विजे**ति । द्विजेषु अग्र्याः श्रेष्ठास्तेभ्यश्च, भृत्येभ्यश्च, सुहृद्भ्यो बन्धुभ्यश्च त्वया वित्तं प्रदीयताम् । प्रदानप्रकारं दर्शयति– **य** इति । अधुना इदानीं यःयः जनः यत्यत् वित्तं इच्छति, तस्मैतस्मै तत्तत् वित्तं दिश प्रयच्छ । दिश अतिसर्जने लोट् ॥ २३ ॥

**अगस्त्यं कौशिकमुनिं गार्ग्यं शाण्डिल्यमप्युत[2] ।**
**तैत्तिरीयं गुरुं चाऽशु तर्प्पयैतैर्म्महाधनैः ॥ २४ ॥**

**(भा.दी.) अगस्त्यमि**ति । अगस्त्यम्, कुशिकगोत्रे भवः कौशिकः सचासौ मुनिश्च तम्, गर्गस्य गोत्रे भवं गार्ग्यम्, शाण्डिल्यमपि, उत तैत्तिरीयम् तैत्तिरीयाख्यमुनिम्, गुरुं वसिष्ठं च, एतैः महान्ति च तानि धनानि च तैः आशु तर्पय प्रीणय । तृप प्रीणने लोट् ॥ २४ ॥

**(सं.चं.)** कौशिकमुनिं विश्वामित्रम् । तैत्तिरीयं गुरुं तैत्तिरीयशाखिनामाचार्यम् । 'आचार्यस्तैत्तिरीयाणामभिरूपश्च वेदवित्' इति रामायणे ॥ २४ ॥

**सूतं च मे चित्ररथं बन्दिहासकमल्लकान् ।**
**तर्प्पयान्यांश्च शिल्पाद्यान्[3] रजकान्[4] श्मश्रुवर्द्धकान् ॥ २५ ॥**

**(भा.दी.) सूतमि**ति । चित्ररथं चित्ररथनामकं मे सूतं सारथिं च, वन्दिनः स्तुतिपाठकास्ते च, हासकाः परिहासकास्ते च, मल्लका मल्लास्ते च तान्, शिल्पाः शिल्पविद्यावन्तः कार्वादयस्तान्, अन्यांश्च रजकान् वस्त्रशोधकान्, श्मश्रुवर्धकान् क्षौरकृतश्च[5] वित्तैस्तर्पय ॥ २५ ॥

**(सं.चं.)** 'सूतश्चित्ररथश्चाऽर्यः सचिवः सुचिरोषितः' इति च । हासका विदूषकाः । शिल्पमेवाऽद्यमुपजीवनं येषां ते शिल्पाद्याः । श्मश्रुवर्धका नापिताः ॥ २५ ॥

**कौसल्यायाः सुमित्रायाः प्रेष्यान्[6] भिक्षूंश्च तद्गृहे ।**
**द्वाभ्यान्द्वाभ्यां सहस्राभ्यां निष्काणां प्रतितर्प्पय ॥ २६ ॥**

---

१. 'द्विजाग्रेभ्यस्तथाऽन्येभ्यः' २. '–मप्यथ' ३. 'शिल्पांश्च' इति वि.ती.पाठः स्यात् ।
४. 'याजकांश्च' ५. 'क्षौरकर्तॄंश्च' ६. 'प्रेष्ठान्'

**(भा.दी.) कौसल्ये**ति । कौसल्यायाः सुमित्रायाश्च प्रेष्यान् भृत्यान्, तयोर्गृहं तद्गृहं तस्मिन् विद्यमानान् भिक्षूंश्च, निष्काणां सुवर्णानाम् । 'राः कल्याणं निष्कमष्टापदं च' इति हलः । यद्वा 'गुञ्जाष्टकं भवेन्माषः कर्षं माषचतुष्टयम् । चतुष्कर्षं तु निष्कं स्यात्' इत्युक्तनिष्कपरिमाणकसुवर्णानामित्यर्थः । यद्वा 'निष्कमष्टाधिकस्वर्णशतम्' इत्युक्तसङ्ख्यावत्सुवर्णानामित्यर्थः । द्वाभ्यांद्वाभ्यां सहस्राभ्यां प्रतितर्पय ॥ २६ ॥

**(सं.चं.)** भिक्षून् परिव्राजकान् । निष्कं राजमुद्राङ्कितं सुवर्णमयं रूप्यम् । प्रत्येकं तर्पय ॥ २६ ॥

**मयि नाथे वनं याते नाऽस्माकः कोऽपि सीदतु ।**
**विश्राणय विशेषज्ञ निःशेषं मे ततो धनम् ॥ २७ ॥**

**(भा.दी.) मयी**ति । नाथे स्वामिनि मयि वनं प्रति याते सति, अस्माकं सम्बन्धी आस्माकः पुरुषः कोऽपि न सीदतु दारिद्र्येण न क्लिश्यतु । षद्लृ विशरणगत्यवसादनेषु लोट् । ततः तत्तत्पुरुषाणां विशेषं गुणविशेषं जानातीति विशेषज्ञस्तत्सम्बुद्धिः, लक्ष्मण, मे धनं द्रव्यं तत्, निर्गतः शेषो यथा भवति तथा निश्शेषं विश्राणय विभज्य देहि । श्रण दाने लोट् ॥ २७ ॥

**(सं.चं.)** विश्राणय विशेषज्ञत्वात् यस्य यावदिति विचार्य विज्ञाय विभज्य देहि ॥ २७–९ ॥

**इत्यार्य्यस्य वचः श्रुत्वा तथा चक्रे स लक्ष्मणः ।**
**पुनश्च धनशेषं स्वं व्यङ्गादिभ्यो ददौ प्रभुः ॥ २८ ॥**

**(भा.दी.) इती**ति । सः लक्ष्मणः आर्यस्य स्वामिनः इति वचः श्रुत्वा तथा श्रीरामोक्तप्रकारेण चक्रे । प्रभुः श्रीरामः स्वं धनस्य शेषोऽवशेषस्तम् । 'शेषस्त्रिष्वन्यस्मिन्नुपयुक्ततः' इति वैजयन्ती । विगतमङ्गं हस्ताद्यवयवा येषां ते व्यङ्गास्त आदयो येषां ते तथा तेभ्यः पुनश्च ददौ ॥ २८ ॥

**अथ कश्चिद् द्विजो वृद्धो मलिनो मलिनाम्बरः ।**
**त्रिजटो नाम दुद्राव रामं दण्डावलम्बनः ॥ २९ ॥**

**(भा.दी.) अथे**ति । अथ मलिनः मलदिग्धः, मलिनं मलदिग्धमम्बरं वस्त्रं यस्य स तथा, अतिवृद्धत्वात् दण्ड एव अवलम्बनमाश्रयो यस्य स तथा, त्रिजटः त्रिजट इति नाम प्रसिद्धः कश्चिद् द्विजः श्रीरामं प्रति दुद्राव अतिशीघ्रमाजगाम । द्रु गतौ लिट् ॥ २९ ॥

**स गार्ग्यो देवमाचष्ट राम मे तरुणी प्रिया ।**
**बह्वपत्या च[1] दारिद्र्यात् खिन्ना मे दीयतां धनम् ॥ ३० ॥**

**(भा.दी.) स** इति । गर्गस्य गोत्रे भवो गार्ग्यः सः त्रिजटः । हे राम, बहूनि अपत्यानि पुत्राः यस्याः सा तथा, तरुणी सुन्दरी, मे प्रिया भार्या दरिद्रस्य भावो दारिद्र्यं तस्मात्, खिन्ना दुःखिता च । अतः मे मह्यं धनं दीयताम् । इति देवं श्रीरामं प्रति आचष्ट ॥ ३० ॥

**(सं.चं.)** गार्ग्यो गोत्रतः । तरुणी न स्वयमिव वृद्धा पलितकेशा । प्रथमे वयसि स्थितेति नार्थः । बह्वपत्येति वचनात् । अत एव 'वयसि प्रथमे' (अ.सू.४.१.२०) इति न ङीप् । किन्तु 'नञ्स्नञीकक्तरुण-तलुनानामुपसङ्ख्यानम्' इति वार्तिकात् (अ.सू.४.१.१५) । एतेनैव च गमकेन तरुणीति न प्रथमवयोमात्रवचनमिति स्थितम् । अन्यथा वार्तिकवैयर्थ्यात् । अतोऽपलितत्वमेव तरुणशब्दार्थः । तरुणी युवतिरिति स्त्रीसामान्यवचनम्, कन्येतिवत् इत्यप्याचक्षते ॥ ३० ॥

**इत्युक्त ऊचे भगवान् हास्यं लोके हसत्यमुम्[2] ।**
**इतो दण्डं क्षिपसि चेद् गोषु दास्यामि ता इति[3] ॥ ३१ ॥**

**(भा.दी.) इती**ति । इति तेन उक्तः भगवान् श्रीरामः, लोको जनस्तस्मिन् हसति हासं कुर्वति सति, हे द्विज, त्वं चेद् यदि इतः अस्मात् प्रदेशात्, स्वेन गृहीतो दण्डः स्वदण्डस्तम्, सरयूनद्या उत्तरभागस्थितासु गोषु क्षिपसि निक्षिपसि । क्षिप प्रेरणे लट् । तर्हि गाः दास्यामि । इति हास्यं परिहासरूपं वचः अमुं द्विजं प्रति अब्रवीत् ॥ ३१ ॥

**(सं.चं.)** हास्यं हास्यरसोपेतं यथा स्यात् तथा ऊचे । परितो लोके हसति । यावतीषु गोषु क्षिपसि दण्ड-क्षेपपर्यन्तास्तावतीस्ता गा दास्यामीत्यूचे ॥ ३१ ॥

**स शार्णीं[4] मलिनां कक्ष्यां वृद्धः संवेष्ट्य सम्भ्रमी ।**
**आविद्ध्य दण्डं चिक्षेप सर्वप्राणेन वेपितः ॥ ३२ ॥**

---

१. **'–पत्या हि दारि–'** २. **'लोके प्रकाशयन्'** । **'हास्यं हासयोग्यम् अमुं त्रिजटं लोके जने हसति सति'** इति का.श्री. ।
३. **'स्वदण्डं क्षिपसीतश्चेद् गोषु दास्यामि गा द्विज'** इति वि.ती.पाठः । ४. **'स शाटीम्'**

**(भा.दी.) स** इति । सम्भ्रमः दण्डप्रक्षेपेऽत्यादरोऽस्यास्तीति सम्भ्रमी । 'सम्भ्रमोऽत्यादरे भये' इति वैजयन्ती । वेपितः जरया कुञ्चितः वृद्धः सः त्रिजटनामा विप्रः शणस्य शणवृक्षस्य सम्बन्धिनी शाणी ताम्, शणवृक्षतन्तुनिर्मितामित्यर्थः, मलिनां मलोपेतां कक्ष्यां मध्यबन्धनानुकूलां शाटीं संवेष्ट्य सम्यगाबध्य दण्डं आविध्य उद्यम्य सर्वः समग्रो यः प्राणो बलं तेन चिक्षेप । क्षिप प्रेरणे लिट् ॥ ३२ ॥

**(सं.चं.)** शाणीं शणतन्तुनिर्मिताम् । 'शाणी गोणी' इति यादवप्रकाशः । 'ಸೆಣಬು' इति भाषायाम् । कक्ष्या परिकरबन्धः । संवेष्ट्य परितः कटिदेशं वेष्टयित्वा । सम्भ्रमी सहर्षं त्वरमाणः । वेपितः जरसा कम्पमानः । सर्वप्राणेन सर्वत्राणेन आविध्य उत्क्षिप्य तोलयित्वा प्रचाल्य च ॥ ३२ ॥

**स दण्डः सरयूं तीर्त्वा गोसहस्रे समापतत् ।**
**प्रशस्याऽऽश्लिष्य[1] तं विप्रं गोसहस्रं ददौ प्रभुः ॥ ३३ ॥**

**(भा.दी.) स** इति । सः तेन निक्षिप्तः दण्डः सरयूं सरयूनदीं तीर्त्वा अतीत्य गवां सहस्रं तस्मिन् समापतत् । प्रभुः श्रीरामः तं विप्रं प्रहस्य आश्लिष्य च गवां सहस्रं तत् ददौ ॥ ३३ ॥

**(सं.चं.)** सरय्वा उत्तरतीरे स्थितस्य गोसहस्रस्यान्ते । कृतं परिहासं विस्मारयन्निव तं प्रशस्य प्रीत्याऽऽश्लिष्य च ॥ ३३ ॥

**यियक्षवे पुनस्तस्मै कामं वित्तं प्रदत्तवान् ।**
**ब्रह्मण्यत्ववदान्यत्वे[2] प्रशशंसुः प्रजाः प्रभोः ॥ ३४ ॥**

**(भा.दी.) यियक्षव** इति । श्रीरामः यष्टुमिच्छति यियक्षति यियक्षतीति यियक्षुस्तस्मै त्रिजटाय, पुनः काममभीप्सितं तत् वित्तं प्रदत्तवान् । प्रजाः तत्रत्यजनाः प्रभोः श्रीरामस्य ब्रह्मणि ब्रह्मजातौ साधुर्ब्रह्मण्यस्तस्य भावस्तत्वं तच्च, वदान्यत्वं दानशूरत्वं तच्च, प्रशशंसुः तुष्टुवुः ॥ ३४ ॥

**(सं.चं.)** ब्रह्मण्यत्वं ब्राह्मणप्रियत्वम् । कामं पर्याप्तम् । 'कामं निकामं पर्याप्तं प्रकामं च यथेप्सितम्' इति यादवप्रकाशः ॥ ३४–५ ॥

---

१. **'प्रहस्याऽऽश्लिष्य'** इति वि.ती.पाठ इति भाति । **'प्रशस्य स्तुत्वा'** इति का.श्री. ।

२. **'ब्रह्मण्यत्वं वदान्यत्वं प्रश–'**

**इत्थं विभज्य विप्रेभ्यो[1] विश्वेशो वित्तमुत्तमम् ।**
**सानुजः सह जानक्या जनकं द्रष्टुमेयिवान् ॥ ३५ ॥**

**(भा.दी.) विश्वेश** इति । विश्वेशः जगदीश्वरः श्रीरामः विप्रेभ्यः इत्थं वित्तं द्रव्यं तत् अञ्जसा विभज्य सानुजः सलक्ष्मणः सन् जानक्या सीतया सह जनकं पितरं द्रष्टुं एयिवान् जगाम ॥ ३५ ॥

**वाच[2] ऊचुर्बहुविधाः शोकशङ्कुक्षतान्तराः ।**
**तत्र जानपदाः पौरा नरा नार्य्यो निरीक्ष्य तान् ॥ ३६ ॥**

**(भा.दी.) वाच** इति । तत्र अयोध्यायां श्रीरामस्य वनयात्रोद्यमं दृष्ट्वा जनतायाः (यः) शोकः स एव शङ्कुः कीलकं तेन क्षतं अन्तरं चित्तं येषां ते, जनपदे राष्ट्रे भवा जानपदाः, पुरे भवाः पौराः नरा नार्यश्च, तान् श्रीरामसीतालक्ष्मणान्, निरीक्ष्य, बह्व्यो विधाः प्रकारा यासां ताः तथा ताः वाचः ऊचुः ॥ ३६ ॥

**(सं.चं.)** शङ्कुः कीलः । तेन क्षतान्तराः ॥ ३६ ॥

**[3]यान्तं यमन्वेति च चमूश्चतुरं चतुरङ्गिणी ।**
**तमिमं सीतया साकमनुगच्छति लक्ष्मणः ॥ ३७ ॥**

**(भा.दी.) यान्तमि**ति । चत्वारि अङ्गानि यस्याः सा तथा चमूः सेना । चतुरं समर्थम् । 'चतुरौ दक्षधीमन्तौ' इति वैजयन्ती । यान्तं पितृसमीपं गच्छन्तं यं श्रीरामं पुरा अन्वेति अनुगच्छति । इण् गतौ लट् । तं तादृशं इमं श्रीरामं अद्य सीतया साकं लक्ष्मणः अनुगच्छति ॥ ३७ ॥

**(सं.चं.)** उत्तरश्लोकगः पुराशब्दोऽत्राप्यनुवर्तते । अन्वेति पुरा । अन्वगात् पुरा । 'पुरि लुङ् चास्मे' (अ.सू.३.२.१२२) । 'यं यान्तमनुयाति स्म चतुरङ्गबलं महत् । तमेकं सीतया सार्धमनुयाति स्म लक्ष्मणः' इति रामायणे ॥ ३७ ॥

**या न शक्या पुरा द्रष्टुं सत्वैराकाशगैरपि ।**
**तामिमां राजमार्ग्गेऽस्मिन् वीक्षन्ते जानकीं जनाः ॥ ३८ ॥**

---

१. **'विप्रेभ्यः । बहुवचनमाद्यर्थे । विप्रादिभ्यः'** इति का.श्री. । २. **'वाचमूचु–'** ३. **'यान्तमन्वेति च चमू–'**

**(भा.दी.)** **ये**ति । या सीता, पुरा आकाशे गच्छन्तीत्याकाशगास्तैः सत्वैः पक्ष्यादिप्राणिभिः । 'सत्वोऽस्त्री जन्तुषु क्लीबं व्यवसाये' इति वैजयन्ती । सर्वदाऽन्तःपुरगतत्वात् द्रष्टुं न शक्या । तामिमां जानकीं जनाः अस्मिन् राजमार्गो राजपथस्तस्मिन् वीक्षन्ते पश्यन्ति ॥ ३८ ॥

**(सं.चं.)** आकाशगैः सत्वैः खगादिभिः । अम्बरचरैर्यक्षगन्धर्वादिभिरपि । किमुत पृथिवीस्थैर्जनैः । 'या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि । तामद्य सीतां पश्यन्ति राजमार्गगता जनाः' इति च ॥ ३८ ॥

**मुञ्चतीमां श्रियं प्राप्तामीश्वरोऽप्यखिलेश्वरः ।**
**कैकेय्या वाक्यमात्रेण पश्यतासङ्गितां प्रभोः[1] ॥ ३९ ॥**

**(भा.दी.)** **मुञ्चती**ति । अखिलेश्वरः श्रीरामः कैकेय्या यद्वाक्यमात्रं तेन, प्राप्तामिमां श्रियम्, ईश्वरोऽपि कैकेयीवाक्यमुल्लङ्घ्य स्थातुं समर्थोऽपि मुञ्चति त्यजति । मुचेर्लट् । प्रभोः श्रीरामस्य न सङ्गोऽसङ्गोऽस्यास्तीत्यसङ्गी, तस्य भावस्तत्ता ताम्, राज्यादिषु निःस्पृहत्वमित्यर्थः, पश्यत ॥ ३९ ॥

**(सं.चं.)** असङ्गिताम् । 'असङ्गो ह्ययं पुरुषः' ॥ ३९ ॥

**यदि रामो वनं याति यामः सर्वे वयं सह ।**
**नैनं विना हि जीवामो जलं जलचराइव ॥ ४० ॥**

**(भा.दी.)** **यदी**ति । यदि श्रीरामः वनं प्रति याति, तर्हि सर्वे वयं श्रीरामेण सह यामः गच्छामः । एनं श्रीरामं विना जलमुदकं तद् विना जलचराइव मत्स्याइव न जीवामो हि । जीव प्राणधारणे लट् ॥४०॥

**(सं.चं.)** जलं विना जलचरा इव ॥ ४० ॥

**आर्त्तवाचमनार्त्तस्तां[2] शुश्रुवान् भगवानिति ।**
**प्रहसन्[3] प्राविशद् गेहं पितुर्न्नानाविलापिनः ॥ ४१ ॥**

**(भा.दी.)** **आर्ते**ति । इति तं आर्तानां जनानां वादो वाक्यं तं शुश्रुवान् श्रुतवान् । आर्तो न भवतीत्यनार्तः, स्वयं दुःखरहित इत्यर्थः, भगवान् श्रीरामः प्रहस्य, नानाविधो यो विलापः परिदेवनं सोऽस्यास्तीति तथा तस्य, पितुः दशरथस्य गेहं मन्दिरं तत् प्राविशत् ॥ ४१ ॥

---

१. **'–तासङ्गतां प्रभोः'** २. **'आर्तवादमनार्त्तस्तम्'** इति वि.ती.पाठः । ३. **'प्रहस्य प्रावि–'** इति च ।

**(सं.चं.)** बहुविधं प्रलपतः पितुः ॥ ४१ ॥

**विज्ञाय राममायान्तं सुमन्त्रवचनान्नृपः ।**
**दारार्द्धसप्तशतकं[1] रामं द्रष्टुमुपाह्वयत् ॥ ४२ ॥**

**(भा.दी.) विज्ञाये**ति। नृपः सुमन्त्रस्य यद्वचनं श्रीराम आगच्छतीत्यादि तस्मात् आयान्तमागच्छन्तं श्रीरामं विज्ञाय, श्रीरामं द्रष्टुम्, [2]सप्तानां शतानां समाहारः सप्तशतकम्, अर्धं सप्तशतकं यस्मिन् तदर्धसप्तशतकम्, चतुर्दशशतकमित्यर्थः, दाराणां भार्याणामर्धसप्तशतकं चतुर्दशशतकं तत्। अर्धेन समांशेन सप्तशतकेन सहितं सप्तशतकमिति वा विग्रहः। 'चतुर्दशशतस्त्रीभिः समं राजपरिग्रहैः। मातॄर्विलोक्य क्रोशन्तीर्विललाप पुनःपुनः' (१२.९) इत्युत्तरत्रोक्तेर्दारार्धसप्तशतकमित्यस्योक्तव्युत्पत्त्या दाराणां चतुर्दशशतकमित्यर्थः। उपाह्वयत् अन्तःपुरादाह्वापयामास। ह्वेञ् स्पर्धायां शब्दे च लङ् ॥ ४२ ॥

**(सं.चं.)** दाराणामर्धसप्तशतकम्। 'अर्धसप्तशतास्तास्तु प्रमदास्ताम्रलोचनाः। कौसल्यां परिवार्याथ शनैर्जग्मुर्धृतव्रताः' (३४.१३) इति हि रामायणे। सप्तशतानामर्धं यासां सङ्ख्यापरिमाणं ता अर्धसप्तशताः त्रीणि शतानि पञ्चाशच्च प्रमदा इति सर्वेषां रामायणव्याख्यातॄणामैककण्ठ्यम्। प्राचीनटीकाकारास्तु अन्यथा व्याचक्षते– सप्तशती यासां परिमाणस्यार्धं ता अर्धसप्तशताः, चतुर्दशशतसङ्ख्याका इत्यर्थः। अवश्यं चैतदेवं व्याख्येयम्। अन्यथोपरिपठ्यमानं पण्डिताचार्यवचनं व्याहन्येत– 'चतुर्दशशतस्त्रीभिः समं राजपरिग्रहैः' इतीति। वस्तुतस्तु पञ्चाशदुत्तरा त्रिशत्येव राजदारा इति युक्तमिति भाति। तथाहि निरवकाशं वाल्मीकिवचनम्– 'त्रयश्शतशतार्धाश्च ददर्शावेक्ष्य मातरः'(३६) इत्येकोनचत्वारिंशे सर्गे। त्रीणि च तानि शतानि त्रयश्शतानि। त्रेस्त्रयस्। त्रयश्शतानि शतार्धं च यासां सङ्ख्यापरिमाणं तास्त्रयश्शतशतार्धा राममातर इति हि तदर्थः। तदनेन निरवकाशवचनेन अर्धसप्तशता इति यथाश्रुत एवार्थो युक्त इति। नन्वेकं सन्धित्सतः पुच्छमपरं च्यवते। कृतं रामायणसङ्गमनम्। अथ सङ्ग्रहवचनं कुप्यति– 'चतुर्दशशतस्त्रीभिः समं राजपरिग्रहैः' इति। तत्कथं सङ्गमयसि? शृणु। सावकाशमेतत्। न राजपरिग्रहा एव चतुर्दशशतस्त्रियः। किन्तु राजपरिग्रहैः सह चतुर्दशशतस्त्रिय इति। अधिकं तद्व्याख्यानावसरे ॥ ४२ ॥

**व्याप्तेन शोकवनवह्निजवेन राज्ञ-**
**स्तातप्यमानसकलेन्द्रियसप्तधातोः ।**

---

१. **'दारार्धसप्तशतकम्। पञ्चाशदधिकत्रिशतपरिमितमित्यर्थः'** इति वि.भू.।

२. इत आरभ्य **'–चतुर्दशशतकमित्यर्थः'** इत्यन्तं वाक्यजातं का.श्री.टीकायामपि यथावदविकलं पठ्यते। न ज्ञायते कः कमुज्जहारेति।

**रामाननेन्दुहसितामृतपूरवर्षः**[१]
**सर्वाभितापशमनः सकृदाविरासीत्** ॥ ४३ ॥

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**अयोद्ध्याकाण्डे षष्ठः सर्ग्गः ॥**

—०—

**(भा.दी.) व्याप्तेने**ति । व्याप्तेन परिपूर्णेन, शोकः श्रीरामवियोगचिन्ताजन्यदुःखं स एव वनवह्निस्तस्य जवो वेगस्तेन, सकलानि यानि इन्द्रियाणि चक्षुरादीनि तानि च, सप्त ये धातवः त्वक्चर्मरुधिरमांसमेदोमज्जास्थि-नामकास्ते च, तातप्यमाना अतिशयेन तप्यमानाः सकलेन्द्रियसप्तधातवो यस्य स तथा तस्य, राज्ञः दशरथस्य सर्वे ये (अभि)तापा आध्यात्मिकादयस्तान् शमयतीति तथोक्तः, श्रीरामस्य यदाननं तदेव इन्दुः चन्द्रस्तस्य यद्धसितमेवामृतं मन्दहासामृतं तस्य पूराः अभिवृद्धप्रवाहास्तेषां वर्गः समूहः, सकृत् आविरासीत् आवि-र्बभूव । यथाभिवृद्धोऽपि वह्निरुदकपूरनिकरेण शान्तो भवति । तद्वद्दशरथशोकोऽपि श्रीरामदर्शनात् सकृच्छान्तोऽ-भूदिति भावः ॥ ४३ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां**
**भावार्थदीपिकायामयोध्याकाण्डे षष्ठः सर्गः ॥**

—०—

**(सं.चं.)** वसन्ततिलकया सर्गार्थमुपसंहरति– व्याप्तेनेति । पुत्रविरहनिरीक्षया जातः शोक एव वनवह्नि-र्दवानलः । तस्य जवेन वेगेन तातप्यमानानि सकलेन्द्रियाणि सप्तधातवश्च यस्य तस्य राज्ञः । न केवलं मन-स्तापतप्तम् । अन्तर्गतान् रक्तमांसादिधातूनपि दाहन्दाहं शोकवह्निः क्षोभयामासेत्यर्थः । रामाननमेवेन्दुः । हसितमेवामृतपूरवर्षणम् ॥ ४३ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामयोध्याकाण्डे**
**षष्ठसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– ६७१+४३=७१४]

---

१. **'पूरवर्गः'** इति वि.ती.पाठः ।

## सप्तमः सर्ग्गः

**सिंहासनादुत्पपात राजा राममवेक्ष्य तम् ।**
**एह्येहि राम वत्सेति शोकोत्कण्ठापरिप्लुतः[1] ॥ १ ॥**

**(भा.दी.)** श्रीरामदर्शनानन्तरं भावितद्वियोगचिन्तापारवश्येनानुवृत्तां दशरथावस्थां वर्णयति– **सिंहे**ति । राजा तं श्रीरामं अवेक्ष्य हे वत्स श्रीराम, एहि-एहि आगच्छ-आगच्छ । इण् गतौ लोट् । इति वदन् शोकस्य या उत्कण्ठा उत्कलिका, अतिशय इति यावत्, तया परिप्लुतः अभिषिक्तः, अभिवृद्धः सन्नित्यर्थः, सिंहासनं भद्रासनं तस्मात् । 'नृपासनं च यद्भद्रासनं सिंहासनं च तत्' इत्यमरः । उत्पपात सहसोत्थितः ॥ १ ॥

**(सं.चं.)** रामाभिषेकभङ्गजनितेन शोकेन, उत्कण्ठया रामदर्शनार्थमदम्येन औत्सुक्येन च परिप्लुतः सम्पृक्तः । एह्येहि राम वत्सेति वदन्नुत्पपात ॥ १ ॥

**परिरम्भपरो राजा पतन्नप्राप्य राघवम् ।**
**मामेति लोकनाथेन सहसा पर्य्यगृह्यत[2] ॥ २ ॥**

**(भा.दी.)** **परी**ति । परिरम्भे आलिङ्गने परं तात्पर्यं यस्य स तथा राजा दशरथः (राघवं) श्रीरामं अप्राप्य दुःखपारवश्यात् पतन् लोकनाथेन श्रीरामेण मा पत मा पत इति सहसा पर्यगृह्यत[१] ॥ २ ॥

**(सं.चं.)** मामा पप्तः पितरिति सम्भ्रमे द्विरुक्तिः । सहसा सपदि पतनात् पूर्वमेव ॥ २ ॥

**परिरभ्य सुतं भूयः पर्य्यङ्के सन्निवेश्य सः ।**
**सीतां सौमित्रिमप्याराद् विवक्षुर्म्मूर्च्छितोऽपतत् ॥ ३ ॥**

---

१. **'शोकात् कण्ठपरिप्लुतः' इति भ्रान्तः पाठः । 'शोकश्च उत्कण्ठा दर्शनोत्कण्ठा च ताभ्यां परिप्लुतः युक्तः'** इति का.श्री. ।

२. **'सहसा समगृह्यत'**

**(भा.दी.) परिरभ्ये**ति । सः राजा सुतं श्रीरामं भूयः बहुवारं परिरभ्य, पर्यङ्कः शय्या तस्मिन् सन्निवेश्य (उपवेश्य) सीतां सौमित्रिं लक्ष्मणमपि आरात् समीपे उपवेश्य, वक्तुमिच्छतीति विवक्षति विवक्षतीति विवक्षुः, किञ्चिद् वचो वक्तुमिच्छावानित्यर्थः, दशरथः मूर्च्छितः सन् अपतत् ॥ ३ ॥

**(सं.चं.)** पर्यङ्को मञ्चः शय्या वा । आरात् मञ्चसमीपे स्वस्य च समीपे । सन्निवेश्य उपवेश्य ॥ ३ ॥

**स्त्रीसहस्रस्य रावोऽभूत् करुणो राजसंसदि ।**
**राज्ञि मूर्च्छामुपायाते रामविश्लेषशङ्कया ॥ ४ ॥**

**(भा.दी.) स्त्री**ति । राज्ञि श्रीरामस्य विश्लेषो वियोगः तस्य शङ्कया मूर्च्छामुपायाते सति, राज्ञः संसत् सभा तस्याम्, करुणः श्रोतॄणां कृपास्पदीभूतः स्त्रीणां सहस्रं तस्य रावः ध्वनिः अभूत् । भुवो लुङ् ॥ ४ ॥

**(सं.चं.)** राव आक्रन्दनम् ॥ ४ ॥

**मुहूर्त्तात् प्राप्तसञ्ज्ञं तं प्रोवाच पितरं प्रभुः ।**
**तात मामनुजानीहि वनवासाभिकाङ्क्षिणम् ॥ ५ ॥**

**(भा.दी.) मुहूर्ता**दिति । प्रभुः श्रीरामः मुहूर्तः मुहूर्तकालस्तस्मात् प्राप्ता सञ्ज्ञा प्रबोधो येन स तथा तम्, पितरं दशरथं प्रति, हे तात, त्वं वने यो वासस्तस्मिन् अभिकाङ्क्षा (आकाङ्क्षा) सा अस्यास्तीति तथा तम्, मां अनुजानीहि अनुज्ञातं कुरु, ज्ञा अवबोधने लोट्, इति प्रोवाच ॥ ५ ॥

**(सं.चं.)** मुहूर्तादविलम्बेन ॥ ५–६ ॥

**सीतेयं लक्ष्मणश्चायं वारितौ हेतुभिर्म्मया ।**
**अप्यन्वागच्छतस्ताभ्यां ततोऽनुज्ञा[1] प्रदीयताम् ॥ ६ ॥**

**(भा.दी.) सीते**ति । इयं सीता अयं लक्ष्मणश्च मया हेतुभिर्लिङ्गवचनैः, वनं प्रति नाऽगन्तव्यमित्यत्र कारणप्रतिपादकैरित्यर्थः, वचोभिः मया वारितौ, अपि तथाऽपि अन्वागच्छतः मदनुगमनं कुरुतः । ततः कारणात् ताभ्यामपि अनुज्ञा प्रदीयताम् ॥ ६ ॥

---

१. **'तातेनाऽज्ञा'। ततः कारणात् ताभ्यां सहितस्य ममानुज्ञा प्रदीयताम्'** इति का.श्री. ।

**इत्युक्त ऊचे राजेन्द्रः कितवायै वरावदाम्[१] ।**
**ततो मां शिक्षयित्वा ते युक्तं[२] राज्यस्य पालनम् ॥ ७ ॥**

**(भा.दी.) इतीति** । इति श्रीरामेण उक्तः राजेन्द्रः हि यस्मात् कितव्यै कापट्ययुक्तायै वरौ अदां दत्तवानस्मि । दाण् दाने लुङ् । ततः कारणात् मां शिक्षयित्वा इदं स्त्रीतन्त्रत्वं तव युक्तं न भवतीत्यादिवचसा शिक्षयित्वा ते तव राज्यपालनं युक्तं न्याय्यम् । 'न्याय्यसंयुक्तयोर्युक्तम्' इति वैजयन्ती । इति ऊचे ॥७॥

**(सं.चं.)** कितवा धूर्ता । या बहिर्नवनीतमिव । अन्तः कर्तरीव । भस्माग्निकल्पा । शिक्षयित्वा – 'अयोध्यायां त्वमेवाद्य भव राजा निगृह्य माम् । छन्नया छलितश्चास्मि स्त्रिया भस्माग्निकल्पया' इति रामायणे ॥ ७ ॥

**बत यास्यसि[३] तात त्वमथवा सर्वथा वनम् ।**
**नय मां नरवैडूर्य्य न जीवामि त्वया विना ॥ ८ ॥**

**(भा.दी.) बतेति** । हे तात श्रीराम, अथवेति निपातसमुदायः (पक्षान्तरे) । वनं तत् सर्वथा अवश्यतया यास्यसि तर्हि नरेषु वैडूर्यमिव नरवैडूर्यं तत्सम्बुद्धिः, नरश्रेष्ठेत्यर्थः, त्वं मां वनं प्रति नय । अहं त्वया विना न जीवामि । जीव प्राणधारणे लट् । बत खेदे ॥ ८ ॥

**(सं.चं.)** नरवैडूर्य पुरुषरत्न । 'अश्मगर्भं मरतकं हरिन्मणिरिति स्मृतम् । शोणात्मा पद्मरागः स्याद् वैडूर्यं वाळवायजम्' इत्यभिधानम् । पाणिनीयास्तु वैदूर्यमिति पठन्ति । तथाहि सूत्रम्–'विदूराञ् ञ्यः' (अ.सू.४.३.८४) इति । 'विदूरात् प्रभवति वैदूर्यो मणिः' इति जयादित्यः । वस्तुतस्तु मणिरयं वाळवायपर्वते जायते । अत एव 'वाळवायजम्' इत्युच्यते । तत् कथं विदूरात् प्रभवति? तदेतत् समाहितं भाष्ये–'वालवायो विदूरं च प्रकृत्यन्तरमेव वा । न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत्' इति । इदमुक्तं भवति– वालवायशब्दस्य विदूरादेशः, ततो ञ्यः प्रत्ययः । तेन वैदूर्यमिति रूपसिद्धिरिति । अथवा विदूरशब्दोऽपि वालवायवत् पर्वतवाचकः । नवै तत्र पर्वते विदूरशब्दः प्रसिद्ध इति चेत् पूर्वपक्षी ब्रूयात्, तर्हि जित्वरीवदुपाचरेत्, यथा वणिक्समुदाये वाराणसी जित्वरीपदेन व्यपदिश्यत एवं वैयाकरणा वालवायमेवाद्रिं विदूरपदेन व्यपदिशन्तीति । सर्वमेतदर्वाचीनानां निर्वचनवैयाकुल्यम् । ये विडूरथं विदूरथमाचक्षते । मण्डोदरीं मन्दोदरीम् । वैडूर्यं वैदूर्यम् । तत्ववादिनस्तु मूर्धन्यमध्यमेव साधु पदं मन्यन्ते । वाळवायपर्वतस्यैव प्रतनं नाम विडूर इति

---

१. **'कितव्यै हि वरावदाम्'** इति वि.ती.पाठः । २. **'ते धर्मो राज्यस्य'** ३. **'यदि यास्यसि'**

च । विड्भिः वणिग्भिः मणिव्यवहारार्थमूरीकरणाद् विडूरः पर्वतः । तत्र भवं वैडूर्यमिति सर्वं सुन्दरम् । न जानीमः कुत एते वैयाकरणा अप्यपथेन वृथा पतन्तीति ॥ ८–९ ॥

**इत्युक्त ऊचे रामस्तं नैवं[1] वक्तुं त्वमर्हसि ।**
**त्वमेव राजा भरतो युवराजो मदाज्ञया ॥ ९ ॥**

**(भा.दी.)** **इती**ति । इति दशरथेन उक्तः श्रीरामः हे पितः, त्वं एवं वक्तुं नार्हसि न योग्योऽसि । अर्ह पूजायां लट् । राजा त्वमेव नान्यः । भरतः मदाज्ञया युवा चासौ राजा च युवराजः, श्वस्तनराज इत्यर्थः, इति दशरथं प्रति ऊचे ॥ ९ ॥

**स्वर्गे वा नरके वाऽपि वने वा पट्टनेऽपि वा[2] ।**
**सुखमेव न मे दुःखं तस्मात् त्वं निर्वृतो भव ॥ १० ॥**

**(भा.दी.)** त्वया वनवासनिमित्तकशोको मद्विषये न कार्य इत्याह– **स्वर्ग** इति । स्वः निरतिशयसुखं गम्यतेऽत्रेति स्वर्गस्तस्मिन् वा । नराः पापकर्मिणोऽस्मिन् कायन्ति रुवन्तीति नरकस्तस्मिन् वा । वन्यते गम्यते प्राणिभिरिति वनं तस्मिन् वा । पतन्ति सञ्चरन्त्यत्र जना इति पत्तनं नगरं तस्मिन् वा । यस्मात् मे सुखमेव । दुःखं मे न । तस्मात् त्वं निर्वृतः सुखी भव ॥ १० ॥

**(सं.चं.)** स्वः सुखं दुःखासम्भिन्नम् । तद् गमयतिततः पातपर्यन्तमिति स्वर्गोऽमर्त्यभवनम् । मोक्षे दुःखस्यानवसरान्नात्र तद् ग्रहणम् । दुःखान्तो हि स्वर्गः । देवानां च भवति दुःखं दैत्यैः पराजितानाम् । वनन्ति स्तवन्ति कीचकाः शकुन्ताश्चात्रेति वनम् । ष्टन वन शब्दे । वनन्ति सेवन्ते विहारार्थमिदमिति वनम् । वन सम्भक्तौ शब्दे च । सेवन्ते तपस्यार्थमिति वा । न विद्यते रमणं कं सुखं चात्रेति नरको निरयः । पट्टाः चतुष्पथा अत्र सन्तीति पट्टनम् । मत्वर्थीयो नः । 'पट्टः पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे च' इति मेदिनी । निर्वृतो निश्चिन्तः ॥ १० ॥

**राजा रामस्य निर्बन्धं ज्ञात्वा मन्त्रिणमब्रवीत् ।**
**सकोशरत्नस्त्रीरत्नं[3] बलं राममनुव्रजेत् ॥ ११ ॥**

---

१. **'–स्तं मैवं वक्तुम्'** २. **'पत्तनेऽपि वा'** इति वि.ती.पाठः स्यात् । ३. **'सकोशरत्नं स्त्रीरत्नम्'** इति वि.ती.पाठः ।

**(भा.दी.) राजे**ति । राजा श्रीरामस्य वनगमने यो निर्बन्ध आवश्यकता तं ज्ञात्वा, मन्त्रिणं सुमन्त्रं प्रति, कोश अर्थौघः स च, रत्नानि च तैः सहितम्, स्त्रीणां रत्नानि श्रेष्ठानि यस्मिन् तत् तथोक्तम्, बलं सैन्यं श्रीरामं अनुव्रजेत् अनुगच्छेत् इति अब्रवीत् ॥ ११ ॥

**(सं.चं.)** निर्बन्धम्, अचलं वनगमननिर्धारम् । कर्तव्ये निर्णयेन बद्धता प्रारब्धादचलनं नाम निर्बन्धः । कोशोऽर्थसञ्चयः, अमूल्यानि च रत्नानि मरतकादीनि, स्त्रीरूपाणि च रत्नानि यत्र तद् बलम् ॥ ११-२ ॥

**कामं वने वसेद् रामो मम सर्वविभूतिभिः ।**
**निर्द्धनायामयोद्ध्यायां कैकेयीतनयो वसेत् ॥ १२ ॥**

**(भा.दी.) काम**मिति । श्रीरामः मम सर्वा या विभूतयः छत्रचामरादिराजसम्पदस्ताभिः सह वने कामः यथा भवति तथा कामं इच्छानुसारेणेत्यर्थः, वसेत् । वस निवासे लिङ् । निर्गतं धनं यस्यां सा तथा तस्यां अयोध्यायां कैकयीतनयः भरतः वसेत् ॥ १२ ॥

**वयोज्येष्ठो गुणज्येष्ठः श्रेष्ठोऽयं सर्वदेहिनाम् ।**
**कथं रामो भवेच्छोच्यः कैकेयीकैतवार्दितः[१] ॥ १३ ॥**

**(भा.दी.) वय** इति । वयोज्येष्ठः भरतापेक्षया वयसा ज्येष्ठः, गुणैर्बलादिधर्मैः ज्येष्ठः श्रेष्ठः, सर्वे ये देहिनो जीवास्तेषां सकाशात् श्रेष्ठः अयं श्रीरामः । इतः अस्मात् कैकेय्या कैतवं कापट्यं तस्मात् शोच्यः शोचितुमर्हः कथं भवेत्? न कथमपि । अतः सर्वा विभूतयः श्रीरामेण सह गच्छन्त्वित्यभिप्रायः ॥ १३ ॥

**(सं.चं.)** कैकेय्या कैतवेन धौर्त्येन अर्दितः पीडितः ॥ १३ ॥

**इत्याकर्ण्र्य गिरं पत्युः क्रुद्धा कैकेय्यभाषत ।**
**असमञ्जसवद् रामो ज्येष्ठोऽपि त्यज्यतामिति ॥ १४ ॥**

**(भा.दी.) इती**ति । कैकेयी पत्युः दशरथस्य इति गिरं आकर्ण्य क्रुद्धा सती, ज्येष्ठोऽपि वयःप्रभृतिभिः भरताज्ज्येष्ठोऽपि श्रीरामः असमञ्जसवत् असमञ्जसनामकसगरपुत्रवत् त्यज्यतां राज्यार्हो न क्रियताम् । त्यज विसर्गे लोट् । इति अभाषत । भाष व्यक्तायां वाचि लङ् ॥ १४ ॥

**(सं.चं.)** सगरपुत्रोऽसमञ्जसः ज्येष्ठोऽपि पित्रा परित्यक्तः । तस्मादस्मद्वंश एवास्तीदृशः पूर्वसम्प्रदायः ॥१४॥

---

१. **'–कैतवादितः'** इति वि.ती.पाठः ।

धिग्धिक् पापीयसीमित्थमुक्त्वा राजन्यवाङ्मुखे ।
सिद्धार्थनामा प्रोवाच महामात्रो[1] नृपप्रियः ॥ १५ ॥

**(भा.दी.) धिगिति** । पापीयसीं अतिशयेन पापिष्ठां कैकेयीं धिग्धिक् (इत्थं) इति उक्त्वा राजनि दशरथे अवागधः मुखं यस्य स तथा, तस्मिन् सति । सिद्धार्थ इति नाम यस्य स तथा नृपस्य दशरथस्य प्रियः, महामात्रः कश्चन प्रधानपुरुषः । 'महामात्रः प्रधानः स्यादध्यक्षोऽधिपतिः स्मृतः' इति हलायुधः । प्रोवाच ॥ १५ ॥

**(सं.चं.)** महामात्रोऽमात्यः । 'महामात्रः समृद्धे चामात्ये' इति मेदिनी । । राज्याधिकृतो वा ॥ १५ ॥

सरय्वां प्राक्षिपद् बालानिति त्यक्तोऽसमञ्जसः ।
सगरेण पुरा राज्ञि[2] वद रामस्य दूषणम् ॥ १६ ॥

**(भा.दी.) सरय्वामिति** । हे राज्ञि राजभार्ये कैकेयि, पुरा सगरेण सगरनामकभूपेन असमञ्जसः बालान् नागरजनबालकान् सरय्वां सरयूनद्यां प्राक्षिपत् चिक्षेप । क्षिप प्रेरणे लङ् । इति निमित्तात् त्यक्तः राज्यान्निष्कासितः । श्रीरामस्य दूषणं दोषस्तत् वद ॥ १६ ॥

**(सं.चं.)** सरय्वां प्राक्षिपद् बालानिति । अत्र विशेषो भागवते–'असमञ्जस आत्मानं दर्शयन्नसमञ्जसम् । जातिस्मरः पुरा सङ्गाद् योगी योगाद् विचालितः । आचरन् गर्हितं लोके ज्ञातीनां कर्म विप्रियम् । सरय्वां क्रीडतो बालान् प्रास्यदुद्वेजयन् जनम्' इति । अत्रापि–'स योगी सङ्गसंविग्नो नृशंसत्वं प्रकाशयन्' (१.९.४१) इति । तथाच नासमञ्जसः स्वतो दुष्टः । स्वस्य राज्यानिच्छुतयाऽऽत्मानमसमञ्जसमिव दर्शयामास । तेन योग्योऽपि ज्येष्ठपुत्रः न राज्यमाप । एवं राज्यार्होऽपि रामोऽसमञ्जसदर्शितेन पथा वनं यात्विति कैकेय्या आशयः । योग्योऽपि लोकविरुद्धं चकार । तेन राज्यान्निर्वासितः । न तथा रामेण किमपि लोकविद्विष्टमाचरितमिति सिद्धार्थस्याऽशयः ॥ १६ ॥

निर्दोषं वृणुते नाथं सल्लोकोऽयं[3] गुणार्ण्णवम् ।
विनीतं तं प्रियं रामं कथं राजा परित्यजेत् ॥ १७ ॥

---

१. **'महामात्यो नृपप्रियः'** इति क्वचित् । 'महामात्रः' इत्येव रामायणसम्मतः पाठः । **'महामात्रः गजपालकः'** इति वि.भू.का.श्री.टीकयोः । न स्वरसमेतत् । २. **'राज्ञि द्रक्ष्याम्यस्य न दूषमम्'**

३. **'त्रिलोकीयम्'। 'त्रिलोको यम् इति च । 'लोकत्रयं यं नाथं स्वामिनं वृणुते रामो नः स्वामी भूयादिति स्वीकरोति तं स्वामित्वेन लोकत्रयस्वीकारयोग्यम्' इति का.श्री.** ।

**(भा.दी.) निर्दोषमि**ति । अयं सल्लोकः उत्तमजनः । 'त्रिलोकीयम्' इति क्वचित्पाठः । निर्गतो दोषो यस्मात् स निर्दोषस्तम्, गुणैरर्णव इव तं श्रीरामं नाथं स्वामिनं वृणुते, श्रीराम एवास्माकं राजा भवत्विति प्रार्थयते । वृञ् वरणे लट् । राजा विनीतं विनयोपेतं प्रियं तं श्रीरामं कथं परित्यजेत्? ॥ १७ ॥

**(सं.चं.)** अयं सल्लोकः । यं सल्लोकः नाथत्वेन वृणुते निर्दोषत्वादिति वा ॥ १७ ॥

**महामात्रे[१] वदत्येवं कैकेयीं क्रूरवादिनीम् ।**
**शपमाने च राजेन्द्रे राघवः पुनरब्रवीत् ॥ १८ ॥**

**(भा.दी.) महे**ति । क्रूरं निष्ठुरं वचः वक्तुं शीलमस्या अस्तीति तथा तां कैकेयीम्, महामात्रे प्रधानपुरुषे एवं वदति सति, राजेन्द्रे दशरथे कैकेयीं शपमाने च सति, पुनः राघवः अब्रवीत् ॥ १८ ॥

**(सं.चं.)** शपमाने । शप आक्रोशे भ्वादिः । दिवादित्वे शप्यमाने इति रूपं स्यात् । शपनमत्र आक्रोशगर्भं भत्सनं निन्दनं वा ॥ १८ ॥

**राजन् राजविभूत्या किं राज्यं त्यक्तवतो मम ।**
**गजं त्यक्तवतः पुंसः किं फलं गजकक्ष्यया[२] ॥ १९ ॥**

**(भा.दी.) राजन्नि**ति । हे राजन्, राज्यं तत् त्यक्तवतः मम राजविभूत्या राजैश्वर्येण किं प्रयोजनम् ? तत्र दृष्टान्तमाह– **गजमि**ति । गजं त्यक्तवतः पुंसः गजकक्ष्यया गजमध्यबन्धनानुकूलया रज्ज्वा ।'कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इत्यमरः । किं फलं किं प्रयोजनम् ॥ १९ ॥

**(सं.चं.)** गजकक्ष्या गजमध्यबन्धनी रज्जुः । 'रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम्' (३७.३) इति च रामायणे । न केवलं प्रत्युत भारश्च । उक्तं चान्यत्र–'विक्रीते करिणि किमङ्कुशे विवादः' इति ॥ १९ ॥

**सर्वं दास्यामि कैकेय्यै चीराण्येव वृणे स्वयम् ।**
**खनित्रपिटके[३] चोभे सशिक्ये नरनायक ॥ २० ॥**

१. **'महामात्ये'** २. **'गजकक्षया'**

३. **'खननार्थमनुकूलोऽयोदण्डः खनित्रम् । फलादिसङ्ग्रहार्थमनुकूलं पात्रं पिटकम्'** इति वि.भू.का.श्री.टीकयोः । **'पात्रस्थापनानुकूलं पाशकृतं शिक्यम्'** इति. वि.भू. । **'मोनेगुद्दलि, पुट्टि, शिक्यं नेलबु–इत्यपभ्रष्टभाषा'** इति .का.श्री. ।

**(भा.दी.) सर्वमि**ति । अहं कैकेय्यै सर्वं राज्यादिकं दास्यामि । दाण् दाने लृट् । स्वयं अहं च चीराण्येव चेलान्येव वृणे आच्छादयामि । वृञ् वरणे लट् । हे नरनायक नरनाथ, पात्रादिस्थापनानुकूलं रज्जुविनिर्मितं शिक्यमित्युच्यते, तेन सहिते सशिक्ये । उभे खनित्रपिटके कन्दमूलादिखननानुकूलो दण्डः खनित्रं तच्च, फलादिग्रहानुकूलं पात्रं पिटकं तच्च, ते वृणे गृह्णामि ॥ २० ॥

**(सं.चं.)** 'कैकेय्यै' इति नामग्रहणेन तस्या असभ्यतामनुमोदमान इवाऽह । खनित्रं कन्दमूलादिखननसाधनम् । खन्यते भूरनेनेति खनित्रम् । 'खनु अवदारणे' । 'खनित्रमवदारणम्' इति यादवप्रकाशः । 'ಗುದ್ದಲಿ' अथवा 'ಪಿಕಾಸಿ' इति भाषायाम् । पिटकं पेटिका । शिक्यं विहङ्गिकाग्रयोरालम्बमानं जोळिकावद् याने भारनयनसाधनम् । 'भारयष्टिर्विहङ्गिका । शिक्यं तल्लम्बिकाचश्च पाथेयं शम्बलोऽस्त्रियाम्' इति च । 'ನೆಲವು' 'पेटकः पिटकः पेटा मञ्जूषा' इति च । अथवा 'ಬುತ್ತಿ' इति भाषायाम् ॥ २०–१ ॥

**भगवत्युक्तवत्येवं निर्लज्जा कैकयात्मजा[1] ।**
**चीराणि परिधत्स्वेति ददौ रामाय संसदि ॥ २१ ॥**

**(भा.दी.) भगवती**ति । भगेन भूत्यादिना नित्ययुक्तो भगवान् तस्मिन् श्रीरामे एवं उक्तवति सति । निर्गता लज्जा यस्याः सा निर्लज्जा केकयस्य केकयराजस्य आत्मजा पुत्री । चीराणि परिधत्स्व परिधानं कुरु । धाञो लोट् । इति उक्त्वा श्रीरामाय संसदि सभायां ददौ ॥ २१ ॥

**अविचार्य्यैव[2] ते चीरे गृहीत्वा पर्य्यधात् प्रभुः ।**
**विहाय वाससी सूक्ष्मे प्रसन्नाननचन्द्रमाः ॥ २२ ॥**

**(भा.दी.) अविचार्ये**ति । प्रभुः श्रीरामः, अविचार्यैव, अनया स्वेच्छया दीयमानमिदं ग्रहीष्यामि नवेति विमर्शमकृत्वैव, ते चीरे चैले गृहीत्वा, सूक्ष्मे लघुनी स्वेन धृते वाससी विहाय, प्रसन्नं यदाननं तच्चन्द्रमा इव यस्य स तथा सन् । अनेनाऽनन्दमयत्वेन प्राकृतवैलक्षण्यं दर्शितम् । पर्यधात् परिधानं चक्रे ॥ २२ ॥

**(सं.चं.)** अविचार्येति । धारणीयमुत नेति जिज्ञासां विना । निःशङ्कमित्यर्थः । तदेव स्फुटमाह– प्रसन्नाननचन्द्रमाः । 'न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् । सर्वलोकातिगस्येव दृश्यते चित्तविक्रिया' (१९.३३) इति हि रामायणे ॥ २२–५ ॥

---

१. **'केकयात्मजा'** इति वि.ती.पाठ इति भाति ।　　२. **'अविचार्य च ते'**

[1]स्वनाथं जगतां नाथं दृष्ट्वा तं चीरधारिणम् ।
चीरे प्रदत्ते कैकेय्या पर्य्यधादाशु लक्ष्मणः ॥ २३ ॥

**(भा.दी.)** **स्वे**ति । लक्ष्मणः जगतां नाथं विशेषतः स्वनाथं तं श्रीरामं चीरं धर्तुं शीलमस्यास्तीति तथा तं दृष्ट्वा कैकेय्या स्वस्मै प्रदत्ते चीरे आशु पर्यधात् ॥ २३ ॥

चीरे प्रदत्ते कैकेय्या मुग्धेवाऽदाय मैथिली ।
ग्रीवायामेकमाबद्ध्य रामं प्रेक्ष्येदमब्रवीत् ॥ २४ ॥

**(भा.दी.)** **चीरे** इति । मैथिली सीता, कैकेय्या प्रदत्ते चीरे आदाय, ग्रीवायां एकं चीरम् आबध्य श्रीरामं प्रेक्ष्य मुग्धेव अपरचीरधारणे मुग्धेव इदं वचः अब्रवीत् ॥ २४ ॥

मुनिवध्वो निबध्नन्ति कथं चीरमिदं प्रभो ।
इत्युक्त्वा चीरहस्ता सा तस्थौ लज्जावती[2] सती ॥ २५ ॥

**(भा.दी.)** **मुनी**ति । हे प्रभो श्रीराम, मुनिवध्वः मुनिभार्याः इदमेतादृशं चीरं कथं निबध्नन्ति? बध बन्धने लिट् । इति उक्त्वा चीरं हस्ते यस्याः सा तथा सा सीता लज्जान्विता सती तस्थौ ॥ २५ ॥

सत्वरः[3] स त्वथोपेत्य कुशचीरं गृहीतवान् ।
[4]कौशेयोपरि सीताया रामस्तत् पर्य्यधापयत् ॥ २६ ॥

---

१. का.श्री.पाठेऽत्र श्लोकार्धं न पठ्यते । तथाहि तत्पाठः–**'स्वनाथं जगतां नाथं दृष्ट्वा तं चीरधारिणम् ।
चीरे प्रदत्ते कैकेय्या मुग्धेवादाय मैथिली ।
ग्रीवायामेकमाबध्य रामं प्रेक्ष्येदमब्रवीत् ॥**

व्याचख्यौ च–**'मैथिली सीता जगतां नाथं जगत्स्वामिनम्, स्वनाथं स्वपतिं तं रामं चीरधारिणं चणवस्त्रं बिभ्राणं दृष्ट्वा । कैकेय्या चीरे प्रदत्ते सति मेग्धेव मूढेव चीरमादाय गृहीत्वा एकं चीरं ग्रीवायां कण्ठ आबध्य वेष्टयित्वा'** इति । साधुरयमपि पाठः स्यात् । येनोत्तरत्र पठितं(३१) श्लोकार्धं समीकृतं स्यात् ।

२. **'लज्जान्विता सती'** इति वि.ती.पाठः । ३. **'सत्वरं स–'**

४. **'पूरणगुण-' (अ.सू.२.२.११) इति पाणिनिसूत्रेण कृदन्ताव्ययस्यैव समासनिषेधात् उपरिशब्दस्य कृदन्ताव्ययत्वाभावात् कौशेयोपरीति साधु । अत एवोक्तम्–'तदुपर्यपि बादरायणः सम्भवात्' इति'** इति का.श्री ।

**(भा.दी.) सत्वर** इति । अथ त्वरया सहितः सत्वरः सः श्रीरामः उपेत्य सीतासमीपं गत्वा कुशैर्निर्मितं चीरं कुशचीरं तत् गृहीतवान् । तत् चीरं श्रीरामः सीतायाः कौशेयोपरि कौशेयस्य उपरि पर्यधापयत् परिधानं चक्रे ॥ २६ ॥

**(सं.चं.)** कौशेयस्योपरि । 'चेलं च तच्चतुर्धा स्यात् त्वक्फलाक्रिमिरोमजम् । वाल्कं क्षौमादिके वस्त्रे फालं कार्पासबादरौ । कौशेयं क्रिमिकोशोत्थे राङ्कवं मृगरोमजे । पत्रोर्णं धौतकौशेयं महामूल्यं महाधनम्' इति यादवप्रकाशः । कौशेयं पीतीम्बरम् । '्‍ड्ढ्ढ्ढ' इति भाषायाम् । कुशनिर्मितं चीरं कुशचीरमिति वदन्ति । कुशवत् कर्कशस्पर्शं वा चीरं कुशचीरम् ॥ २६ ॥

**देवीं चीरधरां दृष्ट्वा वीरनाथामनाथवत् ।**
**वसिष्ठे मन्युरुदभूच्चन्दनाग इवानलः ॥ २७ ॥**

**(भा.दी.) देवीमि**ति । वीरः श्रीरामो नाथो यस्याः सा तथा तां देवीं सीताम्, न विद्यते नाथो यस्याः सा तथा तद्वत्, चीरं धरतीति चीरधरा तां दृष्ट्वा वसिष्ठे मन्युः क्रोधः, चन्दनश्चासौ अगश्च तस्मिन्, चन्दनवृक्ष इत्यर्थः । 'शैलवृक्षौ नगावगौ' इत्यमरः । अनल इव आग्निरिव उदभूत् । परमशैत्ये चन्दनवृक्षे वह्निप्रादुर्भावो यथाऽपूर्वः एवं परमशान्त्युपेतेऽपि वसिष्ठे तदानीं कोपोऽभूदित्यर्थः ॥ २७ ॥

**(सं.चं.)** चन्दनागे चन्दनद्रुमे अनल इव परमशान्ते वसिष्ठे कोपः । 'सालो वनस्पतिरगो विटपी कुटश्च' इत्यभिधानम् ॥ २७ ॥

**मामेति सीतां संवार्य्य कैकेयीमब्रवीन्मुनिः ।**
**अतिप्रवर्त्तसे पापे कैकेयि कुलदूषणि[1] ॥ २८ ॥**

**(भा.दी.) मामे**ति । मुनिर्वसिष्ठः सीतां चीरधारणं मा कुरु मा कुरु इति संवार्य, हे पापे, कुलं दूषितवतीति कुलदूषिणी तत्सम्बुद्धिः, कैकेयि, अतिप्रवर्तसे अत्यन्तं प्रवर्तसे । वृतु वर्तने लट् । इति कैकेयीमब्रवीत् ॥ २८ ॥

**(सं.चं.)** मामा चीरं परिधा ससम्भ्रमं वारयित्वा । सतामाचारमतिक्रम्य प्रवर्तसे ॥ २८–९ ॥

१. **'कुलदूषिणि'** इति वि.ती. पाठ इति भाति ।

**त्वद्वरेणापि दुर्वृत्ते न गन्तव्यं हि सीतया ।**
**सीता रामशरीरार्द्धं[1] मेदिनीं पालयेत् पुरे ॥ २९ ॥**

**(भा.दी.)** अतिप्रवर्तनमेव दर्शयति– **त्वदिति** । दुष्टं वृत्तं चरितं यस्याः सा तथा तत्सम्बुद्धिः, कैकेयि, तव यो वरस्तेनापि सीतया वनं प्रति न गन्तव्यं हि । सीतयाऽपि वनं प्रति गन्तव्यमिति त्वया राजानं प्रत्यकथनादिति भावः । तस्मात् रामस्य यच्छरीरं तस्यार्धमिव रामशरीरार्धम्, भार्येत्यर्थः । सीता पुरमयोध्या तस्मिन् स्थित्वा मेदिनीं पालयेत् । पाल रक्षणे लिङ् ॥ २९ ॥

**सदारो याति चेद् रामो यामः सर्वे वयं वनम्[2] ।**
**भरतः सानुजो रामं चीरधार्य्यनुयास्यति ॥ ३० ॥**

**(भा.दी.) सदार** इति । दारैः सहितः सदारः, सीतासहित इत्यर्थः, श्रीरामः चेद्यदि वनं प्रति याति । तर्हि सर्वे वयं दशरथादयः वनं यामः गच्छामः । ततः किमित्यत आह– **भरत** इति । भरतः सानुजः शत्रुघ्न-सहितः सन् श्रीरामं चीरं धर्तुं शीलमस्यास्तीति चीरधारी सन् वनं प्रति अनुयास्यति अनुगमिष्यति । ध्रुवं निश्चितम् ॥ ३० ॥

**(सं.चं.)** भरतोऽपि सानुजः सशत्रुघ्नः कैकेयीमपहाय राममेवानुयास्यति । 'भरतश्च सशत्रुघ्नश्चीर-वासा वनेचरः । वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम्' (३७.२७) । नह्यदत्तां महीं पित्रा भरतः शास्तु-मर्हति । त्वयि वा पुत्रवद् वस्तुं यदि जातो महीपतेः' (३७.३०) इति हि रामायणे ॥ ३० ॥

**शून्यामयोद्ध्यामद्ध्यास्व त्वं काळीव कलिप्रिये ।**
**वदत्येवं वसिष्ठे स्वं[3] धिक्कुर्वाणे जने नृपः[4] ।**
**धर्म्माशां जीविताशां च चिच्छेद विरहे प्रभोः[5] ॥ ३१ ॥**

**(भा.दी.) शून्यामिति** । कलिः कलहस्तस्मिन् प्रिये प्रीतियुक्ते । 'कलहेऽन्त्ययुगे कलिः' इति वैज-यन्ती । कैकेयि, त्वं शून्यां सत्पुरुषैर्हीनां अयोध्यां काळीव अलक्ष्मीरिव भद्रकाळीवेति वा । अध्यास्व

---

१. **'–शरीरार्धा मेदिनीम्'** २. **'वयं ध्रुवम्' इति वि.ती.पाठः स्यात् ।**

३. **'वसिष्ठेऽस्मिन् धिक्–'** । **'अस्मिन् पूर्वोक्ते प्रसिद्धे वा वसिष्ठे एवम्, अतिप्रवर्तसे' इत्यादिप्रकारेण (वदति) जने लोके कैकेयीं धिक्कुर्वाणे सति'** इति का.श्री. ।

४. **'जनेश्वरः'** । ५. सम्प्रत्युपलब्धपाठानुसारेण षट्पदी अनुष्टुबियम् ।

सन्तिष्ठ । आस उपवेशने लोट् । वसिष्ठे कैकेयीं प्रति एवं वदति सति, जने स्वं स्वात्मानं धिक्कुर्वाणे ईदृशं वरं कथं ददावित्यादिरीत्या धिक्कुर्वति सति, नृपः दशरथः प्रभोः श्रीरामस्य विरहो वियोगस्तस्मिन् सति, धर्मविषयिणी आशा धर्माशा ताम्, धर्मं करिष्यामीत्याशामित्यर्थः, जीविते जीवने आशा जीविताशा तां च, जीविष्यामीत्याशामित्यर्थः, चिच्छेद तत्याज । छिदिर् द्वैधीभावे लिट् । अनेन वरदानेन मम धर्म-जीवितयोर्हानिर्जातेति निश्चिकायेत्यर्थः ॥ ३१ ॥

**(सं.चं.)** प्रभोः रामस्य विरहे सन्निहिते । धर्मेण वर्तितव्यमित्याशाम् । जीवितव्यमित्याशां च । त्यक्तरामस्य का धर्माशा? का च जीविताशा? ॥ ३१ ॥

**रामस्यैकस्य पापिष्ठे वनवासो वरस्तव[१] ।**
**सीतालक्ष्मणयोः कस्माच्चीरमित्यवदन्नृपः ॥ ३२ ॥**

**(भा.दी.) रामस्ये**ति । हे पापिष्ठे कैकेयि, एकस्य श्रीरामस्य यस्मात् वनवासः वनवासलक्षणः वरः तव दत्तः, तस्मात् सीतालक्ष्मणयोः चीरं कस्मात् प्रदत्तं इति नृपः अवदत् ॥ ३२ ॥

**(सं.चं.)** तव त्वया वृतो वरः । कस्माच्चीरं प्रादा इत्यवदन्नृपः ॥ ३२ ॥

**सर्वमाकुलमालोक्य रामो राजानमब्रवीत् ।**
**मत्स्नेहादपि[२] पाहीमां जननीं जनकाधुना ॥ ३३ ॥**

**(भा.दी.) सर्वमि**ति । श्रीरामः सर्वं सज्जनजातं तत् आकुलं सम्भ्रान्तं आलोक्य, हे जनक हे पितः, मयि स्नेहो मत्स्नेहस्तस्मादपि वा इमां जननीं कैकेयीं अधुना पाहि । पा रक्षणे लोट् । इति राजानं अब्रवीत् ॥

**(सं.चं.)** मयि स्नेहान्निमित्तात् । यदि त्वं मयि स्निह्यसि ॥ ३३ ॥

**[३]यत्कृपालुतयाऽऽकृष्टं निःसङ्गमपि मे मनः ।**
**तस्यां मातरि मे तात कृपणायां कृपां कुरु ॥ ३४ ॥**

**(भा.दी.) यदि**ति । हे तात, मे मनः निर्गतः सङ्गो यस्मात् तथा तत्, स्वकीये स्नेहादिलक्षणसङ्गरहित-मपीत्यर्थः, यस्यां विद्यमाना कृपा यत्कृपा सैव लता तया, आकृष्टं आकृष्यत । मे मम कृपणायां तस्यां

---

१. **'वरस्ततः'** २. **'न केवलं भार्यात्वेनेत्यपेरर्थः'** इति का.श्री. । ३. **'यत्कृपालतया'** इति वि.ती.पाठः ।

मातरि कैकेय्यां कृपां कुरु । कृञो लोट् । अपकारिण्यामप्येतस्यामियं तु मद्वनगमननिमित्तमात्रमिति मम मनो न कुण्ठितं यस्मात् तस्मात् त्वयाऽपि परित्यागमकृत्वा पूर्ववत् परिग्रहः कार्य इत्यर्थः ॥ ३४ ॥

**(सं.चं.)** निःसङ्गमपि मे मनः कृपावशंवदतया आकृष्टं सत् तस्यां सकरुणम् । कृपणा दयनीया ॥ ३४ ॥

**निशम्यैवं निगदितं राजा रामस्य गच्छतः[१] ।**
**मुक्तकण्ठो रुरोदोच्चैः प्रियैर्भार्य्याशतैर्य्युतः[२] ॥ ३५ ॥**

**(भा.दी.) निशम्येति** । राजा वनं गच्छतः श्रीरामस्य एवं निगदितं प्रोक्तं वचः निशम्य प्रियैः प्रीतिविषयैः भार्याणां शतानि चतुर्दशशतानि तैः युतः सन्, मुक्तो विभक्तः कण्ठो यस्य स तथा सन्, उच्चैर्यथा भवति तथा रुरोद । रुदिर् अश्रुविमोचने लिट् ॥ ३५ ॥

**(सं.चं.)** मुक्तकण्ठः, राजा सन् प्राकृत इव सर्वजनसमक्षं कथं रुद्यामिति स्थानमानादिव्यवस्थामगणयित्वा यथेच्छं रुरोद ॥ ३५–६ ॥

**चिरं विलप्य राजेन्द्रः कैकेयीं गर्हयन् मुहुः[३] ।**
**रामं पदातिमेष्यन्तं ज्ञात्वा सूतमभाषत[४] ॥ ३६ ॥**

**(भा.दी.) चिरमिति** । कैकेयीं मुहुः गर्हयन् राजेन्द्रः चिरं दीर्घकाले विलप्य श्रीरामं पदातिं एष्यन्तं ज्ञात्वा मन्त्रिणं सुमन्त्रं प्रति अब्रवीत् ॥ ३६ ॥

**सुमन्त्र मम यानेन नन्दनं मे वनं नय ।**
**मात्रा पित्रा च निर्यास्यः पुत्रो [५]नन्वेवमीदृशः ॥ ३७ ॥**

**(भा.दी.) सुमन्त्रेति** । हे सुमन्त्र, त्वं मे नन्दनं श्रीरामं मम यानं रथस्तेन वनं तत् नय प्रापय । श्रीरामं वनं प्रति नयेति वचनमत्यन्तावाच्यमित्याशयेन कैकेयीमात्मानं च विनिन्दयन् साक्षेपमाह– **ईदृश** इति । ईदृशः एवंगुणविशिष्टः पुत्रः श्रीरामः मात्रा कैकेय्या पित्रा मया च एवं चीरधारणादिकं कारयित्वा रथेन निर्वास्यो

---

१. **'रामस्य पश्यतः ।' 'रामस्य पश्यतः सतः रामे पश्यति सतीति यावत्'** इति.का.श्री. ।

२. **'–शतैः सह ।'**

३. **'गर्हयन् पुनः ।'**

४. **'ज्ञात्वा मन्त्रिणमब्रवीत्'** इति वि.ती.पाठः ।

५. **'नत्वेवमीदृशः'** इति भ्रान्तः पाठः ।

ननु विवासयितुमर्हो ननु । एतादृशगुणविशिष्टो निर्वास्यो न भवत्येव । अथापि मन्दभाग्याभ्यामावाभ्यां निर्वास्यत इति भावः ॥ ३७ ॥

**(सं.चं.)** ईदृशः सर्वगुणाढ्यः सुतो निर्वास्यो नन्विति व्यङ्ग्योक्तिः ॥ ३७–८ ॥

**इति राज्ञा समादिष्टः सारथी रथमानयत् ।**
**सीतां दृष्ट्वा रुदन् भूपः कोशाद्ध्यक्षमभाषत ॥ ३८ ॥**

**(भा.दी.)** **इती**ति । राज्ञा इति समादिष्टः आज्ञप्तः सारथिः सुमन्त्रः रथः स्यन्दनस्तम् आनयत् । सीतां दृष्ट्वा रुदन् भूपः कोशस्यार्थौघस्याध्यक्षोऽधिपतिस्तं पुरुषं प्रति अभाषत । भाष व्यक्तायां वाचि लङ् ॥ ३८ ॥

**वरीयांसि च वासांसि पराद्ध्यार्भरणानि च ।**
**[१]समाः सङ्ख्याय देह्याशु स्नुषायै मे यथेप्सितम् ॥ ३९ ॥**

**(भा.दी.)** **वरीयांसी**ति । वरीयांसि श्रेष्ठानि वासांसि, पराध्यानि अत्युत्तमानि यान्याभरणानि तानि च, समाः संवत्सरान् सङ्ख्याय गणयित्वा मे स्नुषायै पुत्रभार्यायै सीतायै ईप्सितमनतिक्रम्य यथेप्सितं यथेष्टमित्यर्थः । आशु देहि । चतुर्दशसंवत्सरेषु धारयितुं यावन्ति वस्त्रादीन्यपेक्षितानि तानि सर्वाणि देहीत्यर्थः । इत्यभाषतेत्यन्वयः ॥ ३९ ॥

**(सं.चं.)** वनवाससमाः सङ्ख्याय तावत्पर्यन्तं यावन्त्याभरणानि वासांसि चापेक्षितानि तावन्ति मे स्नुषायै यथेच्छं देहि ॥ ३९–४० ॥

**इति राज्ञा नियुक्तेन[२] राजामात्येन तत्क्षणात्[३] ।**
**दत्तैराकल्पवासोभिर्विरेजे वीरवल्लभा ॥ ४० ॥**

**(भा.दी.)** **इती**ति । राज्ञा नियुक्तेन आज्ञप्तेन राजामात्येन दशरथमन्त्रिणा, स चासौ क्षणस्तस्मिन् दत्तैः, आकल्पा आभरणानि ते च वासांसि च तैः वीरवल्लभा श्रीरामप्रिया सीता विरेजे । राजृ दीप्तौ लिट्॥

---

१. **'समादाय प्रदेह्याशु' । 'सममासङ्ख्याय देहि स्नुषायै' इति च । 'समं यथा तथा आ सङ्ख्याय गणयित्वा द्वन्द्वशो गणयित्वेति यावत् । यथेप्सितम्, ईप्सितमाप्तुमिष्टतमनतिक्रम्य देहि । सा यद्यदिच्छति तत्तद् देहीति भावः'** इति. का.श्री. ।

२. **'राजनियुक्तेन'** ३. **'तत्क्षणे'** इति वि.ती.पाठः स्यात् ।

**स्नुषामुवाच कौसल्या लाळयन्ती[१] सुतामिव ।**
**माऽवमंस्था मुनिं रामं वत्से साध्वी भवेरिति ॥ ४१ ॥**

**(भा.दी.) स्नुषामि**ति । कौसल्या स्नुषां पुत्रभार्यां सीतां सुतामिव लाळयन्ती मानयन्ती सती, हे वत्से, मुनिं मुनिव्रतं श्रीरामं माऽवमंस्थाः अवज्ञातं मा कुरु । मनु अवबोधने लुङ् । 'न माङ्योगे' **(अ.सू.६.४.७४)** इत्यडभावः । साध्वी पतिव्रता भवेः । इति उवाच ॥ ४१ ॥

**(सं.चं.)** मुनिं स्वीकृतमुनिवृत्तिम् ॥ ४१ ॥

**कान्ते त्रैलोक्यकान्ते मे[२] स्थिरा भक्तिर्गुणार्ण्णवे ।**
**आर्य्ये न प्राकृतस्त्री[३] स्यामिति सीताऽभ्यभाषत ॥ ४२ ॥**

**(भा.दी.) कान्त** इति । हे कान्ते मनोहरे, आर्ये साध्वि कौसल्ये, गुणार्णवे त्रयाणां लोकानां समाहारः त्रैलोक्यं तस्मिन् एकान्तमनोहरे श्रीरामे मे भक्तिः स्थिरा । अहं प्राकृता च सा स्त्री च प्राकृतस्त्री, पामरस्त्रीसदृशीत्यर्थः, न स्यां न भवामि । अस्तेर्लिङ् । पामरस्त्रिया हि भर्तरि क्षीणे तत्सेवायामौदासीन्यं क्रियते । नाहं तादृशीत्यर्थः । इति सीता अभ्यभाषत ॥ ४२ ॥

**(सं.चं.)** त्रैलोक्यकमनीये मे कान्ते भर्तरि रामे । आर्ये पूज्ये इति कौसल्यां प्रति सम्बोधनम् । रामविशेषणं वा । 'आर्यः साधुकुलीनयोः' इति, 'पतिस्त्वर्य आर्यपुत्रः' इति च यादवप्रकाशः ॥ ४२–३ ॥

**सीतामाश्लिष्य बाष्पाक्षी कौसल्या राममब्रवीत् ।**
**पुत्र सीतां च सौमित्रिं त्वां च[४] पाहि वनेष्विति ॥ ४३ ॥**

**(भा.दी.) सीतामि**ति । बाष्पेण युक्ते अक्षिणी यस्याः सा तथा कौसल्या सीतां आश्लिष्य, हे पुत्र, श्रीराम, सीतां च सौमित्रिं च त्वां च वनेषु पाहि । इति श्रीरामं अब्रवीत् । ब्रूञो लङ् ॥ ४३ ॥

**परिभावी[५] न मे मातस्त्रैलोक्ये ससुरासुरे ।**
**शीघ्रमेष्यामि चैताभ्यां प्रसीदेत्यब्रवीत् प्रभुः ॥ ४४ ॥**

१. 'लालयन्ती' २. '–कान्ते ते स्थिरा' ३. 'प्राकृता स्त्री' ४. '–मित्रिं स्वं च'

५. 'पराभवो न' । 'पराभावी न' इति च । 'मे पराभावी तिरस्कर्ता मा जयन्नित्यर्थः । प्रतिभटो वा नैवास्ति । पराभव इति पाठे तिरस्कारो नास्ति' इति का.श्री. ।

**(भा.दी.) परी**ति । प्रभुः श्रीरामः, हे मातः कौसल्ये, सुराश्च असुराश्च तैः सहितं तस्मिन्, त्रैलोक्ये (मे) मम परिभावयति पराजयति शत्रुमिति परिभावी पराजयकर्तेत्यर्थः, प्रतिभट इति वा, न नास्ति । एताभ्यां सीतालक्ष्मणाभ्यां सह शीघ्रं यथा भवति तथा एष्यामि चतुर्दशवर्षानन्तरमागमिष्यामि । इण् गतौ लृट् । त्वं प्रसीद प्रसन्ना भव । अयं सीतालक्ष्मणाभ्यां सहितः कथमायास्यतीति मद्विषयकमनःक्षोभरहिता भव, प्रसादं कुर्विति वा । इति अब्रवीत् ॥ ४४ ॥

**(सं.चं.)** परिभावी पराजेता ॥ ४४ ॥

**रामोऽर्द्धसप्तशतकं मातॄणामभ्यवन्दत ।**
**[1]संवासे क्षम्यतामागः साध्वनुज्ञायतामिति[2] ॥ ४५ ॥**

**(भा.दी.) राम** इति । श्रीरामः मातॄणां सप्तानां शतानां समाहारः सप्तशतकं अर्धेन समांशेन सहितं सप्तशतकं अर्धसप्तशतकं चतुर्दशशतकमित्यर्थः, तत्प्रति संवासः सहवासस्तस्मिन् कृतं यत्किञ्चित् आगः अपराधः क्षम्यताम् । क्षमूष् सहने लोट् । साधु यथा भवति तथा वनवासार्थं अनुज्ञायतां अनुज्ञाप्यताम्, ज्ञा अवबोधने लोट् । इति वदन् सन् अभ्यवन्दत ॥ ४५ ॥

**(सं.चं.)** सप्तशतकस्यार्धम् । संवासः सहवासेनातिपरिचयः । 'ಸಲುಗೆ' इति भाषायाम् । संवासनिमित्तम् । 'संवासात् परुषं किञ्चिदज्ञानाद्वाऽपि यत् कृतम् । तन्मे समनुजानीत सर्वाश्चाऽमन्त्रयामि वः' (३९.३८) इति रामायणे ॥ ४५ ॥

**क्रौञ्चीनामिव देवीनां करुणे[3] क्रन्दिते सति ।**
**रामलक्ष्मणजानक्यो राजानं चाभ्यवादयन् ॥ ४६ ॥**

**(भा.दी.) क्रौञ्चीनामि**ति । देवीनां कृताभिषेकाणां राजभार्याणाम् । 'देवी कृताभिषेका या' इत्यमरः । क्रौञ्चीनामिव क्रौञ्चपक्षिस्त्रीणामिव, करुणे कृपास्पदे, क्रन्दितमाक्रन्दितं तस्मिन्, सति वर्तमाने सति, रामलक्ष्मणजानक्यः राजानं अभ्यवादयन् ॥ ४६ ॥

**(सं.चं.)** देवीनामिति न कृताभिषेकाणाम् । कौसल्याद्यास्तिस्र एव हि पट्टमहिष्यः । तेन देवस्य राज्ञः स्त्रिय इत्येव ॥ ४६ ॥

---

१. **'संवादः क्षम्यतां मातः'** इति, **'संवादे क्षम्यतामागः'** इति च । २. **'साध्वनुज्ञाप्यतामिति'**

३. **'करुणे श्रोतॄणां दयाजनके'** इति का.श्री. ।

**परिक्रम्य महीपालं धर्म्मशिक्षणलक्षणाः[1] ।**
**कौसल्यां च सुमित्रां च क्रमेणैवाभ्यवादयन् ॥ ४७ ॥**

**(भा.दी.) परी**ति । धर्मस्य यच्छिक्षणमेवं कार्यमिति प्रदर्शनम्, तदेव लक्षणं लिङ्गमेषामस्तीति तथोक्ताः श्रीरामाद्याः । महीपालं दशरथं परिक्रम्य प्रदक्षिणीकृत्य, कौसल्यां सुमित्रां च क्रमेण अभ्यवादयन् । वदिधातोर्लङ् ॥ ४७ ॥

**(सं.चं.)** धर्मशिक्षणमेव लक्षणं स्वभावो येषाम् । अथापि कैकेयीमहो नाभ्यवादयन्निति भाति । तदनुक्तेः । रामायणेऽपि तथा । तेन तस्या असभ्यतामाघोषयन्तीव ॥ ४७ ॥

**सुमित्रोचे प्ररुदिता[2] वन्दमानं स्वनन्दनम् ।**
**पुत्र सत्पुत्रवत्यस्मि त्वया पुत्रेण साधुना ॥ ४८ ॥**

**(भा.दी.) सुमित्रे**ति । प्रमुदिता पुत्रस्य ज्येष्ठानुगमनदर्शनेन सन्तुष्टा सुमित्रा वन्दमानं नमस्कुर्वन्तं स्वस्याः नन्दनं पुत्रं लक्ष्मणं प्रति, हे पुत्र, साधुना पुत्रेण त्वया अहं संश्चासौ पुत्रश्च सोऽस्या अस्तीति तथोक्ता अस्मि, इति ऊचे ॥ ४८ ॥

**(सं.चं.)** स्वः स्वीयो नन्दनः । स्वस्य वा नन्दनः । 'स्वोऽस्त्री धने त्रिषु स्वीय आत्मनि स्वजने तु ना' इति यादवप्रकाशः ॥ ४८ ॥

**तरुणीं रमणीं त्यक्त्वा मां च यद् यासि[3] राघवम् ।**
**तात रामः ससीतस्ते जगन्नाथः परा गतिः ॥ ४९ ॥**

**(भा.दी.)** कुत इत्यत आह– **तरुणीमि**ति । हे तात लक्ष्मण, तरुणीं सुन्दरीं रमणीं भार्यामूर्मिळाम्, मातरं मां च त्यक्त्वा राघवं हि यस्मात् यासि अनुगच्छसि । यातेर्लट् । तस्मात् ससीतः, सीतासहितः ससीतः, जगन्नाथः श्रीरामः ते तव परा उत्कृष्टा गतिः आश्रयः ॥ ४९ ॥

**(सं.चं.)** तरुणीं प्राप्तयौवनाम्, उपाष्टादशाम् ॥ ४९–५० ॥

---

१. **'वयसा न्यूनैः बयोवृद्धानां नमनं कर्तव्यमिति धर्मस्य शिक्षणं लक्षणमसाधारणधर्मो येषां ते'** इति का.श्री. ।

२. **'प्रमुदिता'** इति वि.ती. पाठः । **'तं वन्दमानं रुदती माता सौमित्रिमभ्यधात्'** (४०.४) इति रामायणे । ३. **'मां च यास्यसि'**

**एतावदुक्त्वा सौमित्रिं सुमित्रा राममब्रवीत् ।**
**तातानुजस्तव प्रेष्यो[१] लक्ष्मणः पाल्यतामिति ॥ ५० ॥**

**(भा.दी.) एतावदिति** । सुमित्रा सौमित्रिं लक्ष्मणं एतावत् वचः उक्त्वा, हे तात श्रीराम, तव अनुजः प्रेष्यः किङ्करः, प्रेष्ठ इति वा पाठः, अतिशयेन प्रिय इत्यर्थः, लक्ष्मणः पाल्यताम् । पाल रक्षणे लोट् । इति श्रीरामं अब्रवीत् ॥ ५० ॥

**एवमेवेति देवेशे ब्रुवाणे भास्वरं रथम् ।**
**इङ्गितज्ञ उपानिन्ये सुमन्त्रो देशकालवित् ॥ ५१ ॥**

**(भा.दी.) एवमिति** । देवेशे श्रीरामे एवमेवेति त्वदुक्तप्रकारेण करिष्याम्येवेति ब्रुवाणे सुमित्रां प्रति वदति सति । इङ्गितं श्रीरामाभिप्रायं जानातीति तथोक्तः । देशश्च कालश्च तौ वेत्तीति तथोक्तः । तद्देशकालयोः कर्तव्यकार्यविदित्यर्थः । सुमन्त्रः भास्वरः प्रकाशमानस्तं रथं उपानिन्ये श्रीरामसमीपमानयत् ॥ ५१ ॥

**(सं.चं.)** आकारेणैव हृद्गतं जानन्निङ्गितज्ञ उच्यते । 'आकारस्त्विङ्ग इङ्गितम्' इति यादवप्रकाशः ॥५१॥

**सानुजो रथमारुह्य सीतामारोपयत् प्रभुः ।**
**करं करेण सङ्गृह्य करेणुं करिराडिव ॥ ५२ ॥**

**(भा.दी.) सानुज** इति । सानुजः सलक्ष्मणः प्रभुः श्रीरामः रथः स्यन्दनस्तं आरुह्य । करः सीताहस्तस्तं करेण स्वपाणिना सङ्गृह्य करेणुर्हस्तिनी तां करिराडिव गजश्रेष्ठइव सीतां आरोपयत् रथमारोपयामास । रुह बीजजन्मनि प्रादुर्भावे लङ् ॥ ५२ ॥

**(सं.चं.)** करिराट् करेणुमिव ॥ ५२ ॥

**[२]अद्ध्यास्त तद्युगपदेव युगं च योग्यं रुच्या ततं दशमुखाक्रमणे प्रसिद्धम् ।**
**अत्यायतं सुमनसां सुमनोरथं च दिव्यं तदा दशरथस्य रथं स रामः ॥ ५३ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**अयोद्ध्याकाण्डे सप्तमः सर्ग्गः ॥**

---

१. 'प्रेष्ठो लक्ष्मणः–'
२. 'ग्रन्थकारः, रामो दशरथस्य रथं देवानां मनोरथं च सकृदारुरोहेत्याह– अध्यास्तेति' इति का.श्री. ।

**(भा.दी.) अध्यास्ते**ति । श्रीरामः तदा योग्यं स्वारोहणार्थमुचितम् । रुच्या दीप्त्या ततं व्याप्तम् । दश मुखानि यस्य स दशमुखो रावणस्तस्य आक्रमणमतिक्रमस्तस्मिन् विषये प्रसिद्धम् । रावणस्य विनाशः कदा नु भविष्यतीति सञ्चिन्तया प्रसिद्धमित्यर्थः । इदं देवानां मनोरथपक्षे । रथपक्षे तु दशानां दशादिशां मुखानि । सुमनसां (देवानाम्), 'सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्' इति वैजयन्ती । सुमनोरथं शोभनो यो मनोलक्षणरथस्तम्, दशरथस्य रथं चेति तत् युगं च तत् द्वयमपि युगपदेव अध्यास्त । आरुरोहेत्यन्वयः । आस उपवेशने लङ् । यदा श्रीरामः सुमन्त्रादानीतं रथमारुरोह वनं प्रति गन्तुम्, तदा देवा रावणादिराक्षसनिग्रहोऽपि रणे भविष्यतीति प्रसन्नमनसो भूत्वा श्रीरामं मनसा व्यचिन्तयन्निति भावः ॥ ५३ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां**
**भावार्थदीपिकायामयोध्याकाण्डे सप्तमः सर्गः ॥**

**(सं.चं.)** वसन्ततिलकयैव सर्गार्थमुपसंहरति– दशरथस्य रथं सुमनसां मनोरथं चेत्येतत् युगं द्वयमपि युगपदेवाध्यास्त । अस्मन्मनोरथपूर्तिकालः सम्प्राप्तः इति देवैः सामोदं चिन्तितो बभूवेत्यर्थः । सुमनोरथं चेति पुष्पकविमानं स्मारयतीव । उभयमपि रामेणारोढुं योग्यम् । रुचिरभिलाषः, रावणो रामेण हन्तव्य इति । तेनाऽततो व्याप्तो निबिडो मनोरथः । रुच्या शोभया ततो रथः । दशमुखस्याऽक्रमणे प्रसिद्धः प्रसक्तो मनो-रथः । दशदिङ्मुखानां आ समन्तात् क्रमणे प्रसिद्धो रथः । अत एव हि तं दशरथमाहुः । बहुतररक्षःसं-हारादिनिरीक्षयाऽत्यायतो मनोरथः । सुविशालो रथः । दिव्यो जयशीलो मनोरथश्च रथश्च ॥ ५३ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामयोध्याकाण्डे**
**सप्तमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– ७१४+५३=७६७]

## अष्टमः सर्ग्गः

**चोदितोऽचोदयद् भूम्ना तं रथं सारथिर्य्यदा ।**
**सबालवृद्धवनिताः प्रजास्तमनुदुद्रुवुः ॥ १ ॥**

**(भा.दी.)** श्रीरामकृपयाऽनन्तजन्मार्जितसुकृतातिशयाच्चरमशरीरं प्राप्तानां प्रजानां श्रीरामे प्रवृत्तिं दर्शयति– **चोदित** इत्यादिना । भूम्ना परिपूर्णमनोरथेन श्रीरामेण चोदितः शीघ्रं वनं प्रापयेति प्रेरितः सारथिः सुमन्त्रः यदा तं रथं अचोदयत् प्रेरितवान् । चुद प्रेरणे लङ् । तदा बालाश्च वृद्धाश्च वनिताश्च ताभिस्सहिताः प्रजाः तं श्रीरामं अनुदुद्रुवुः पृष्ठतोऽगच्छन् । द्रु गतौ लिट् ॥ १ ॥

**(सं.चं.)** भूम्ना गुणपूर्णेन रामेण चोदितः ॥ १ ॥

**तृषार्त्ताइव तोयौघं भवार्त्ताइव माधवम् ।**
**भयार्त्ताइव पातारं शोकार्त्ता राममन्वगुः ॥ २ ॥**

**(भा.दी.)** **तृषार्ता** इति । तोयानामोघः समूहः, प्रवाह इति वा, तं तृषार्ताइव तृषया आर्ताइव माधवं श्रीहरिं भवे संसारे आर्ताइव, पातारं रक्षितारं पुरुषं भयार्ताइव, श्रीरामं शोकार्ताः पीडिताः सन्तः अन्वगुः अन्वगच्छन् । इण् गतौ लुङ् ॥ २ ॥

**(सं.चं.)** तृषार्ताइव तोयौघम् । तोयस्य ओघः पूगो यत्र तं जलाशयम् । 'ततः सबालवृद्धा सा पुरी परम-पीडिता । राममेवाभिदुद्राव घर्मार्त्ता सलिलं यथा' (४०.३०) इति च । अगुः । 'इणो गा लुङि' (अ.सू. २.४.४५) ॥ २ ॥

**सारथे स्थीयतां किञ्चिच्छनैर्वा नीयतां रथः ।**
**रामाननेन्दुं पश्यामो द्रक्ष्यामस्तं कदा पुनः ॥ ३ ॥**

**(भा.दी.) सारथ** इति । हे सारथे सुमन्त्र, किञ्चित् स्थीयताम् । रथः शनैर्नीयतां वा । वयं श्रीरामस्य यदाननं तदिन्दुरिव तं पश्यामः । दृशेर्लट् । पुनः तं श्रीरामं कदा द्रक्ष्यामः ॥ ३ ॥

**(सं.चं.)** किञ्चिदल्पकालम् । इदानीं न पश्यामश्चेत् तं पुनः कदा द्रक्ष्यामः ॥ ३ ॥

**धन्याऽसि देवि सीते त्वं धन्योऽसि त्वं च लक्ष्मण ।**
**श्रेयः स्वर्गापवर्गाभ्यां यद् वां स्याद् रामदर्शनम् ॥ ४ ॥**

**(भा.दी.) धन्येति** । हे देवि सीते, त्वं धन्या पुण्यवती असि । हे लक्ष्मण, त्वं च धन्यः असि । कुत इत्यत आह– **श्रेय** इति । यत् यस्मात् स्वर्गश्च अपवर्गो मोक्षः स च ताभ्यां श्रेयः अतिप्रशस्तं तत् । 'श्रेयोऽत्यन्तप्रशस्ते स्यात् कल्याणे धर्ममोक्षयोः' इति वैजयन्ती । श्रीरामदर्शनं वां युवयोः स्यात् ॥ ४ ॥

**(सं.चं.)** यत् श्रेयः श्रेष्ठं रामदर्शनम्, यत् यस्मात् युवयोः स्यात् । तस्मात् धन्याऽसि । धनं लब्ध्री धन्या । लब्धा धन्यः । रामदर्शनमेव सर्वाधिकं धनम् । 'धनगणं लब्धा' (अ.सू.४.४.८४) इति पाणिनिः । स्वर्गापवर्गाभ्याम् । स्वर्गादपि मोक्षादप्यधिकं प्रशस्यम् । 'प्रशस्यस्य श्रः' (अ.सू.५. ३.६०) ॥ ४ ॥

**जनेषु प्रवदत्स्वेवं[1] राजा स्त्रीभिरनुद्रुतः[2] ।**
**रामं पुनर्दिदृक्षेऽहमित्युक्त्वा पुनराद्रवत्[3] ॥ ५ ॥**

**(भा.दी.)** जनेष्विति । जनेषु एवं प्रवदत्सु[4] स्त्रीभिः स्वभार्याभिः अनुद्रुतः अनुगतः राजा दशरथः । अहं पुनः श्रीरामं दिदृक्षे द्रष्टुमिच्छामि । इति उक्त्वा पुनः आव्रजत् । शीघ्रमन्वगच्छत् । व्रज गतौ लङ् ॥५॥

**(सं.चं.)** स्त्रीभिर्भार्याभिः । आद्रवत् आधावत् ॥ ५ ॥

**धावतोः स्खलतोर्भूयो बाष्पैरन्धीकृताक्षयोः[5] ।**
**मातापित्रोः प्रवयसोर्ईशा कं न कृपां नयेत् ॥ ६ ॥**

**(भा.दी.) धावतोरिति** । धावतोः पृष्ठतो धावनं कुर्वतोः, भूयः पुनःपुनः स्खलतोः दुःखवशात् स्खलनं कुर्वतोः, बाष्पा अश्रूणि तैः अन्धीकृते अक्षिणी ययोस्तौ तयोः, प्रगतं वयो ययोस्तौ तयोः, वृद्धयोरित्यर्थः,

---

१. **'प्ररुदत्स्वेवम्'** २. **'स्त्रीभिः समावृतः'** ३. **'पुनराव्रजत्'** इति वि.ती.पाठः ।
४. **'प्ररुदत्सु'** ५. **'अन्धीकृते दर्शनासाधनत्वं प्राप्ते अक्षिणी ययोस्तयोः'** इति का.श्री. ।

माता च पिता च मातापितरौ तयोः कौसल्यादशरथयोः दशाऽवस्था कं पुरुषं प्रति कृपां न नयेत् न प्रापयेत्? सर्वस्यापि कृपां जनयत्येवेत्यर्थः ॥ ६ ॥

**(सं.चं.)** वेगेन सरन्तौ धावन्तौ । वेगितायां गतौ सृधातोर्धावादेशः । एतेन धावु गतिशुद्ध्योरित्यर्वाचीनो धातुपाठः, 'धावु शुद्धौ' इत्येव प्रतनः इति ज्ञायते । प्रगतं वयो यौवनं ययोः प्रवयसोः । 'प्रवयाः स्थविरो वृद्धः' इत्यभिधानम् । मातापित्रोः कौसल्यादशरथयोः । 'आनङ् ऋतो द्वन्द्वे' (अ.सू.६.३.२५) इति पाणिनिः ॥ ६–७ ॥

**हा राम राम वत्सेति हा सीते लक्ष्मणेति च ।**
**मातापित्रोः समाक्रन्दस्त्रैलोक्यकरुणोऽभवत् ॥ ७ ॥**

**(भा.दी.) हा रामे**ति । हा राम राम वत्स इति । हा सीते इति । हा लक्ष्मण इति च । मातापित्रोः कौसल्या-दशरथयोः समाक्रन्दः आर्तनादः त्रैलोक्यस्य करुणः कृपास्पदीभूतः अभवत् ॥ ७ ॥

**तिष्ठतिष्ठेति राजेन्द्रो याहियाहीति राघवः ।**
**सुमन्त्रमभितोऽब्रूतां सुमन्त्रो [1]विक्लबोऽभवत् ॥ ८ ॥**

**(भा.दी.) तिष्ठे**ति । राजेन्द्रः तिष्ठतिष्ठ इति । राघवः श्रीरामः याहियाहि गच्छगच्छ इति । इति सुमन्त्रं अभितः उभयतः । 'समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः' इति वैजयन्ती । अब्रूताम् । सुमन्त्रः विक्लबः केन वा प्रोक्तं कर्तव्यमिति परवशः अभवत् ॥ ८ ॥

**(सं.चं.)** राजेन्द्रो दशरथः । राघवो रामः । अभितः उभयतः परितो वा । विक्लबः किङ्कर्तव्यतामूढः । 'विक्लबे विह्वलः स्मृतः' इत्यभिधानम् । 'तिष्ठेति राजा चुक्रोश याहियाहीति राघवः । सुमन्त्रस्य बभूवाऽत्मा चक्रयोरिव चान्तरा' (४०.४६) इति च ॥ ८ ॥

**नाश्रौषमिति राजेन्द्रं सुमन्त्र ब्रूहि सङ्गमे ।**
**इति रामोदितः सूतो रथं निन्ये कृताञ्जलिः ॥ ९ ॥**

१. **'विक्लबः मनःखेदयुक्तः'** इति का.श्री. ।

**(भा.दी.) ने**ति । हे सुमन्त्र, सङ्गमः पुनरागत्य दशरथेन सह समागमस्तस्मिन् जायमाने सति, त्वद्वचनं नाश्रौषं न श्रुतवानस्मि । श्रु श्रवणे लुङ् । इति राजेन्द्रं दशरथं प्रति ब्रूहि इति रामोदितः सूतः सारथिः सुमन्त्रः कृतः अञ्जलिर्येन स तथा सन् रथं वनं प्रति निन्ये ॥ ९ ॥

**(सं.चं.)** सङ्गमे, मां वने विसृज्य प्रतिनिवृत्तस्य ते दशरथेन समागमे सति । 'नाश्रौषमिति राजेन्द्रमुपालब्धोऽपि वक्ष्यसि' (४०.४७) इति च ॥ ९ ॥

**यं पुनर्द्रष्टुमन्विच्छेन्न तं दूरमनुव्रजेत् ।**
**नृप एवं वसिष्ठाद्यैर्वारितोऽध्वन्युपाविशत् ॥ १० ॥**

**(भा.दी.) यमि**ति । यः पुरुषः यं पुरुषं पुनः द्रष्टुं अन्विच्छेत् । इषु इच्छायां लिङ् । तं पुरुषं दूरं नानुव्रजेत् नानुगमनं कुर्यात् । एवं वसिष्ठ आद्यो येषां ते तथा तैः मुनिभिः वारितः नृपः अध्वा मार्गः तस्मिन् उपाविशत् ॥ १० ॥

**(सं.चं.)** यं पुनः । 'यमिच्छेत् पुनरायान्तं नैनं दूरमनुव्रजेत् । इत्यमात्या महाराजमूचुर्दशरथं वचः' (४०.५०) इति च ॥ १०–३ ॥

**प्राणिदेहादिव प्राणे सेतुबन्धादिवाम्भसि ।**
**रामे निर्गच्छति पुरात् सर्वमासीदमङ्गलम् ॥ ११ ॥**

**(भा.दी.) प्राणी**ति । प्राणिनो देहः शरीरं तस्मात् प्राण इव, सेतुरूपो बन्धः सेतुबन्धस्तस्मात् अम्भसीव, पुरमयोध्या तस्मात् श्रीरामे निर्गच्छति सति सर्वं पुरं अमङ्गलं आसीत् । यथा मुख्यप्राणे निर्गते शरीरममङ्गलं भवति यथा वा सेतोर्भेदेनोदके गते सति तत्प्रदेशोऽमङ्गलं भवति तद्वदेवायोध्याऽपि श्रीरामे निर्गतेऽभूदिति भावः ॥ ११ ॥

**स्थावराणां तिरश्चां च शोकवह्निमदीपयत् ।**
**रामदेवस्य विरहो मानवानां तु[१] किम्पुनः ॥ १२ ॥**

१. **'मानवानां च किम्पुनः'**

**(भा.दी.) स्थावराणामिति** । रामश्चासौ देवश्च रामदेवस्तस्य विरहः वियोगः, स्थावराणि वृक्षादीनि तेषाम्, तिर्यञ्चस्तिर्यक्प्राणिनो गजादयस्तेषां च, शोक एव वह्निस्तम् अदीपयत् अभ्यवर्धयत् । दीपी दीप्तौ लङ् । मानवानां तु पुनः शोकवह्निं अदीपयदिति किं वक्तव्यम् ॥ १२ ॥

**शोचतः पततो राज्ञो मामेति सहसा सती ।**
**कौसल्या दक्षिणं बाहुं कैकेयी वाममग्रहीत् ॥ १३ ॥**

**(भा.दी.) शोचत** इति । सती साध्वी कौसल्या शोचतः दुःखं कुर्वतः, दुःखोद्रेकादेव पततः, राज्ञः दशरथस्य दक्षिणं बाहुं मा पत मा पत इति सहसा अग्रहीत् । कैकेयी च वामं बाहुमग्रहीत् ॥ १३ ॥

**(सं.चं.)** मा पप्तः, मा च शोचीरिति ॥ १३ ॥

**कैकेयीमवलोक्याथ क्रुद्धो दशरथोऽब्रवीत् ।**
**कर्म्मणा चण्डि चण्डेन चण्डालि[१] त्वं न मां स्पृश ॥ १४ ॥**

**(भा.दी.) कैकेयीमिति** । अथ क्रुद्धः दशरथः कैकेयीमवलोक्य, हे चण्डि क्रूरे, चण्डेन क्रूरेण कर्मणा श्रीरामाभिषेकविघातापरलक्षणकर्मणा चण्डालि चण्डालीसदृशे कैकेयि, त्वं मां न स्पृश । स्पृश आमर्शने लोट् । इति अब्रवीत् ॥ १४ ॥

**(सं.चं.)** चण्डेन क्रूरेण कर्मणा । जन्मना क्षत्रियाऽपि कर्मणा चण्डाली ॥ १४ ॥

**त्वया छलादवच्छिन्नं[२] राज्यं चेद् भरतो भजेत् ।**
**न तेन दत्तमुदकं प्रेतस्यापि प्रियं मम ॥ १५ ॥**

**(भा.दी.) त्वयेति** । त्वया च्छलं कैतवं तस्मात् आच्छिन्नं अपहृतं तत् राज्यं चेद्यदि भरतः भजेत् । भज सेवायां लिङ् । तर्हि इह भूमौ तेन भरतेन दत्तं उदकं प्रेतस्यापि प्रेतभूतस्यापि मम प्रियं न भवति ॥ १५ ॥

**(सं.चं.)** भजेत् स्वीकुर्यात् । अधिकारं निर्वहेत् । छलं कपटमाश्रित्यावच्छिन्नं बलादपहृतम् ॥ १५–६ ॥

१. **'चण्डाली त्वम्'**

२. **'छलादिहाऽच्छिन्नम्'** इति वि.ती.पाठः स्यात् ।

**तस्यैवं ब्रुवतो राज्ञो[1] राममेवान्वगच्छताम् ।**
**स्वभावायतनेत्रस्य नेत्रे अत्यायते तदा ॥ १६ ॥**

**(भा.दी.) तस्ये**ति । एवं ब्रुवतः स्वभावात् आयते दीर्घे नेत्रे यस्य स तथा तस्य, राज्ञः तस्य दशरथस्य तदा श्रीरामस्य गमनसमये अत्यायते दर्शनौत्सुक्येनातिविशाले नेत्रे श्रीराममेव अन्वगच्छताम् ॥ १६ ॥

**चक्षुराद्यैरुपरतं रामेऽक्ष्यविषये[2] सति ।**
**रतमस्मिन् मनोवाग्भ्यां भूपतेर्य्योगिनो यथा ॥ १७ ॥**

**(भा.दी.) चक्षु**रिति । श्रीरामे अक्ष्यविषये सति चक्षुषोऽगोचरे सति । भूपतेः दशरथस्य चक्षुराद्यं येषां तानि तैः त्वगादीन्द्रियैः उपरतं निवृत्तम् । मनश्च वाक् च ताभ्याम् । योगिनः मनोवाचौ यथा तथा । अस्मिन् श्रीरामे रतं रमणमकारि । यथा योगी भगवदनपरोक्षदशायां मनसा वाचा च भगवत्स्मरणानुकीर्तनाभ्यां रमते तद्वद्राममचक्षाणो दशरथोऽपि तदनुस्मरणादिपरोऽभूदिति भावः ॥ १७ ॥

**(सं.चं.)** मनोवाग्भ्याम् । राममेव चिन्तयामास मनः । रामगुणानेव कीर्तयामास वाक् ॥ १७ ॥

**राममातुर्नयत मां कौसल्याया निवेशनम् ।**
**रामपादारविन्दाङ्के भूतळे स्वस्ति मे भवेत् ॥ १८ ॥**

**(भा.दी.) रामे**ति । मन्त्रिणः, राममातुः कौसल्यायाः निवेशनं गृहं तत् प्रति मां नयत प्रापयत । श्रीरामस्य यौ पादौ तावरविन्दे इव तयोरङ्को यस्मिंस्तत्तथा तस्मिन् भूतळे मे मह्यं स्वस्ति क्षेमः भवेत् ॥ १८ ॥

**(सं.चं.)** नयत मामिति परिजनान् प्रत्युक्तिः । सम्प्रति रामपादारविन्दाङ्कितं भूतळमेव शरणम् । यतो मे स्वस्ति भवेत् निर्वृतिर्भवेत् ॥ १८ ॥

**एवं[3] निगद्य सुचिरं विलप्य च महीपतिः ।**
**कौसल्यालयमापेदे दिवाकर इवाम्बुदम्[4] ॥ १९ ॥**

१. 'ब्रुवतस्तस्य राम–' २. 'रामे त्वविषये' ३. 'इत्थं निगद्य' ४. 'इवाम्बुधिम्'

**(भा.दी.) एवमि**ति । महीपतिः एवं निगद्य, सुचिरं दीर्घकाले विलप्य परिदेवनं कृत्वा (च), कौसल्याया आलयो गृहं तम्, अम्बुदो मेघस्तं दिवाकर इव सूर्य इव आपेदे प्राप । पद गतौ लिट् ॥ १९ ॥

**(सं.चं.)** दिवाकरोऽम्बुदं मेघमिव । मेघान्तर्लीनो भानुरिव कळाहीनो राजा । 'विलपन् प्राविशद् राजा गृहं सूर्य इवाम्बुदम्' (४२.२४) इति च । 'दिवाकर इवाम्बुधिम्' इति क्वचित् । मधुरः पाठः । तदात्वे तु 'गृहं सूर्य इवाम्बुधिम्' इत्येव रामायणपाठोऽपि स्यात् ॥ १९ ॥

**राजा राममिहापश्यंश्चुक्रोशोद्बाहुरुच्चकैः ।**
**हा राम क्वाऽसि सीते त्वं लक्ष्मणेति पुनःपुनः ॥ २० ॥**

**(भा.दी.) राजे**ति । इह कौसल्यागृहे श्रीरामं अपश्यन् राजा दशरथः । हा राम, त्वं क्व कुत्र असि । हे सीते, त्वं क्व असि । हे लक्ष्मण, त्वं क्व असीति पुनःपुनः उच्चकैः, ऊर्ध्वौ बाहू यस्य स उद्बाहुस्तथा सन्, चुक्रोश रुरोद । क्रुश आह्वाने रोदने च लिट् ॥ २० ॥

**(सं.चं.)** उद्बाहुः उच्छ्रितबाहुः । उच्चकैः मुक्तकण्ठम्, चुक्रोश नामग्राहं रुरोद ॥ २०–१ ॥

**शयानः शयने तत्र मग्नः शोकमहार्ण्णवे ।**
**रामलीलां स्मरन्नेव सकलं कालमत्यगात् ॥ २१ ॥**

**(भा.दी.) शयान** इति । तत्र कौसल्यागृहे, शय्यतेऽत्रेति शयनं शय्या तस्मिन् शयानः, शोक एव महार्णवस्तस्मिन् मग्नः, दशरथः रामलीलां स्मरन्नेव सकलः समस्तस्तं कालं अत्यगात् निनाय । इण् गतौ लुङ् ॥ २१ ॥

**अनुयातुमशक्तत्वाल्ललनाः[१] सह बालकैः ।**
**स्मरन्त्यो राममुद्बाष्पा न्यवर्त्तन्त गृहान् प्रति ॥ २२ ॥**

**(भा.दी.) अन्वि**ति । ललना नागरस्त्रियः, बालका बालास्तैः सह, श्रीरामं अनुयातुं अशक्तत्वात् श्रीरामं स्मरन्त्यः सत्यः, उत् उत्कृष्टः बाष्पः अश्रु यासां तास्तथा सत्यः, गृहान् प्रति । 'गृहाः पुंसि च भूम्न्येव' इत्यमरः । न्यवर्तन्त परावृत्य जग्मुः ॥ २२ ॥

**(सं.चं.)** पुरवासिन्यो ललनाः । उद्गतबाष्पाः ॥ २२ ॥

---

१. '–मशक्यत्वाल्ललनाः'

**हा राम[1] क्व प्रयासि त्वं सीतयेत्युरुरोदनाः ।**
**अन्वधावन् समं पौरैः सर्वाः प्रकृतयः प्रभुम् ॥ २३ ॥**

**(भा.दी.) हा रामे**ति । सर्वाः प्रकृतयः अमात्यादिसप्तप्रकृतयः, पुरि विद्यमानाः पौरास्तैः जनैः समं सार्धम्, हा राम, त्वं सीतया सह क्व कुत्र प्रयासि गच्छसि, इति उरु उत्कृष्टं रोदनं येषां ते तथाभूताः सन्तः, प्रभुं श्रीरामं अन्वधावन् अन्वगच्छन् । धावु गतिशुद्ध्योः लङ् ॥ २३ ॥

**(सं.चं.)** उरु उच्चैः रोदनं यासां प्रकृतीनाम् । प्रकृतयः राज्याधिकृताः पुरुषाः, जानपदाश्च ॥ २३–४ ॥

**आधावतो रुद्धकण्ठान् प्राञ्जलीनश्रुलोचनान् ।**
**जनांस्तान् मेघगम्भीरं प्रोवाच करुणाकरः ॥ २४ ॥**

**(भा.दी.) आधावत** इति । करुणाकरः श्रीरामः, आधावतः, स्वपृष्ठत आधावनं कुर्वतः, रुद्धः दुःखा-तिशयनिरुद्धः कण्ठो येषां ते तथा तान्, प्रबद्धः अञ्जलिर्येषां ते तथा तान्, अश्रुपूर्णे लोचने येषां ते तथा तान्, तान् आगतान् अमात्यादिजनान् प्रति मेघगर्जनवद्गम्भीरं यथा भवति तथा मेघगम्भीरं प्रोवाच ॥ २४ ॥

**निवर्त्तध्वं च वर्त्तध्वं भरतस्यानुशासने ।**
**स मे भक्तोऽनुजो राजा तन्मे शुश्रूषणं प्रजाः ॥ २५ ॥**

**(भा.दी.) निवर्तध्वमि**ति । हे प्रजाः, यूयं निवर्तध्वम् । अयोध्यां प्रति परावृत्य गच्छत । वृतु वर्तने लोट् । भरतस्य अनुशासनमाज्ञा तस्मिन् वर्तध्वं प्रवर्तध्वम् । त्वद्विरोधिनोऽनुज्ञया कथं वर्तनीयमित्यत आह– **स** इति । यस्मात् अनुजः राजा सः भरतः मे भक्तः तस्मात् तत् भरताज्ञानुसारेण वर्तनं मे शुश्रूषणं सेवा ॥ २५ ॥

**(सं.चं.)** तत् तस्मात् । तत् भरतानुवर्तनं मे शुश्रूषणम् । न मदनुवर्तनम् ॥ २५ ॥

**इत्युक्ता अपि ते सर्वे तमेवान्वाद्रवन्[2] द्रुतम् ।**
**विप्रा मार्ग्गालसाः प्रोचुस्त्रयीवेदान्तपारगाः ॥ २६ ॥**

---

१. 'हा नाथ क्व'

२. '–मेवान्वद्रवन्'

**(भा.दी.) इती**ति । श्रीरामेण इति उक्ता अपि  ते सर्वे जनाः द्रुतं यथा भवति तथा तमेव श्रीराममेव अन्वाद्रवन्  अन्वगच्छन् । द्रु गतौ लङ् । त्रयी वेदत्रयं सा च, वेदान्ता उपनिषदः, वेदानामन्तो निर्णयो यस्मादिति व्युत्पत्त्या वेदान्तशास्त्रं वा तच्च, तयोः पारं परमावधिस्तत्  गता इति तथोक्ताः । 'अन्तोऽत्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती । विप्राः मार्गे अलसाः आलस्योपेताः मार्गालसाः बहुदूरं धावनेनाऽलस्योपेताः सन्त इत्यर्थः, प्रोचुः ॥ २६ ॥

**(सं.चं.)** सुदूरं मार्गक्रमणेन न लसन्तीत्यलसाः श्रान्ता म्लानमुखाः । वेदान्तो वेदार्थनिर्णायकं शास्त्रम् ॥

**हे जात्या वाजिनोऽस्माकं स्वामी नो नीयतां वनम् ।**
**पुरमानीयतामेनं व्रजन्ति शरणं प्रजाः ॥ २७ ॥**

**(भा.दी.) हे** इति । जातौ भवाः जात्याः  हे वाजिनः, सदश्वजातौ जाता मानुषाइव विवेकिनो भवन्तीत्यतो जात्या इत्युक्तम् । भवद्भिः  अस्माकं स्वामी श्रीरामः वनं प्रति नो नीयतां न नीयताम् । श्रीरामः पुरमयोध्यापुरं प्रति आनीयताम् । प्रजाः एनं श्रीरामं शरणं तत् व्रजन्ति ॥ २७ ॥

**(सं.चं.)** रामः स्वप्रार्थनां नानुमन्यत इति विज्ञाय विप्रा वाजिनः प्रत्याहुः, तद्व्याजेनापि रामः स्वाशय-दार्ढ्यमवगच्छत्विति । हे जात्या अश्वजातिषु श्रेष्ठाः, उक्तग्रहणदक्षा वाजिनः । 'कुलीनश्रेष्ठयोर्ज्जात्यम्' इत्यभिधानम् । अनन्यशरणा एनं रामं शरणं व्रजन्ति । तस्मात् तं पुरं नयत । न वनम् । 'वहन्तो जवना रामं भोभो जात्यास्तुरङ्गमाः । निवर्तध्वं न गन्तव्यं हिता भवत भर्तरि' (४५.१४) इति च ॥ २७ ॥

**पदातीनां द्विजातीनामिति श्रुत्वाऽऽर्त्तभाषितम् ।**
**अवतीर्य्य रथाद् रामो ययौ मन्दं दयानिधिः[१] ॥ २८ ॥**

**(भा.दी.) पदातीनामि**ति । दयानिधिः दयाश्रयः श्रीरामः । पद्भ्याम् अतन्ति गच्छन्ति इति पदातयस्तेषां द्विजातीनां ब्राह्मणानां इति आर्तनादोपेतं यद्भाषितं भाषणं तत्, आर्तानां भाषितमिवाऽर्तभाषितं तदिति वा, श्रुत्वा रथः स्यन्दनस्तस्मात् अवतीर्य मन्दं यथा भवति तथा ययौ ॥ २८ ॥

**(सं.चं.)** पादाभ्यामेवातन्तीति पदातयः पादचारिणः । पादशब्दस्य पद इत्ययमादेशः–'पादस्य पदाज्याति-गोपहतेषु' (अ.सू.६.३.५२) इति । केचित् पादस्य पद्भावमाहुः । तन्नाऽऽदृत्यम् । तथात्वे पद्ग इति स्यान्न पदग इति । पदुपहत इति स्यान्न पदोपहत इति । आर्तं दुःखपूर्णं भाषितम् ॥ २८–९ ॥

१. 'दयाकरः'

**विप्राः प्राञ्जलयः प्रोचू रामं राजीवलोचनम् ।**
**निवर्त्तस्व पुरं वत्स पालयास्मान् कृपालय ॥ २९ ॥**

**(भा.दी.) विप्रा** इति । विप्राः प्राञ्जलयः सन्तः, हे कृपालय कृपाश्रय, वत्स श्रीराम, त्वं पुरमयोध्यां तत्प्रति निवर्तस्व । अस्मान् पालय । इति राजीववत् कमलवत् लोचने यस्य स तथा तं श्रीरामं प्रोचुः ॥ २९ ॥

**पश्येमान् प्रणतान् भूमौ[१] हंसशुक्लशिरोरुहान् ।**
**मुनीन् भागवतश्रेष्ठान् वाजपेयादियाजिनः[२] ॥ ३० ॥**

**(भा.दी.) पश्ये**ति । भूमौ प्रश्रितान् संस्थितान्, हंसवत् हंसपक्षिवत् शुक्लाः शिरोरुहाः केशा येषां ते तथा तान्, वृद्धानित्यर्थः, भागवतेषु भगवद्भक्तेषु श्रेष्ठान्, वाजपेयः वाजपेयाख्ययज्ञ आदिर्येषां ते वाजपेयादयः, तैः यष्टुं भगवन्तं पूजयितुं शीलमेषामस्तीति तथा तान् इमान् मुनीन् पश्य ॥ ३० ॥

**(सं.चं.)** पश्येमान् । 'याचितो नो निवर्तस्व हंसशुक्लशिरोरुहैः । शिरोभिर्निभृताचार महीपतनपांसुलैः' (४५.२७) इति च ॥ ३० ॥

**पश्याग्नीननुयातांस्त्वां[३] वेदांश्चाङ्गानि चाधुना ।**
**पश्येदं ब्राह्मणकुलं पर्य्याकुलमनाकुल[४] ॥ ३१ ॥**

**(भा.दी.) पश्ये**ति । अधुना त्वां अनुयातान् अनुसृत्य गतान् अग्नीन् आहवनीयाद्यग्नीन् पश्य । अनुयातान् वेदांश्च पश्य । अङ्गानि च व्याकरणादिशास्त्राणि च पश्य । न विद्यते आकुलं राज्यादित्यागेन क्लेशो यस्य स तथा तत्सम्बुद्धिः । हे अनाकुल श्रीराम, इदं ब्राह्मणकुलं ब्राह्मणसमूहम्, पर्याकुलं त्वद्वियोगेन क्लिष्टं पश्य ॥ ३१ ॥

**(सं.चं.)** पश्याग्नीन् । स्कन्धारूढाग्नि वेदवेदाङ्गपारगं ब्राह्मणकुलं त्वामनुयातं पश्येत्यर्थः ॥ ३१ ॥

---

१. **'प्रश्रितान् भूमौ'** इति वि.ती.पाठः ।

२. क्वचिदिदं पद्यमन्यथा पठ्यते । यथा– **'पश्य भागवतश्रेष्ठान् वाजपेयादियाजिनः । मुनीनिमान् भूप्रणतान् हंसशुक्लशिरोरुहान्'** इति ।

३. **'पश्याग्नीननुयातान् स्वान्'** इति, **'पश्येमाननुयातान् स्वान्'** इति च ।

४. **'पर्याकुलमनाकुलम्'** । **'पर्याकुलं व्याप्तम्, तव सन्निधावनाकुलं आकुल(ता)रहितम् । यद्वा पुरे अनाकुलम्, इदानीं परितः आकुलं तव गमनेन दुःखितमिदं ब्राह्मणकुलं पश्य'** इति का.श्री. ।

**नानास्तम्बलतोपेता रुद्धपादा[१] हि पादपाः ।**
**अनुयातुमशक्तास्त्वामनुशोचन्ति शोभन ॥ ३२ ॥**

**(भा.दी.) नाने**ति । स्तम्बाः गुल्मास्ते च लताश्च स्तम्बलताः, नानाविधा याः स्तम्बलतास्ताभिरुपेताः, रुद्धाः भूलग्नाः पादा येषां ते तथा, पादपाः वृक्षाः, हे शोभन श्रीराम, त्वां अनुयातुमशक्ताः सन्तः अनुशोचन्ति हि । शुच शोके लट् । तरुगुल्मादयोऽप्यनुगमने समर्थाश्चेदनुगच्छेयुरेव । तत्रासामर्थ्यादेव कीदृश-मस्मज्जन्मेत्यनुशोचन्तीत्यर्थः ॥ ३२ ॥

**(सं.चं.)** नानास्तम्बलतोपेताः । स्तम्बा वीरुधः । 'ಪೊದರು' इति भाषायाम् । 'अनुगन्तुमशक्तास्त्वां मूलैरुद्धतवेगिनः । उन्नता वायुवेगेन विक्रोशन्तीव पादपाः' (४५.३०) इति च ॥ ३२–३ ॥

**तिर्य्यञ्चः कीटपर्य्यन्ता हन्तेमे मृगपक्षिणः ।**
**भक्तवत्सल दृश्यन्तां खिन्ना भक्ताश्चराचराः ॥ ३३ ॥**

**(भा.दी.) तिर्यञ्च** इति । हे भक्तवत्सल श्रीराम, कीटः पर्यन्तोऽवसानो येषां ते तथोक्ताः, भक्ताः तिर्यञ्चः तिर्यक्प्राणिनः इमे त्वामनुगताः मृगपक्षिणः त्वया दृश्यन्ताम् । एवं चराश्च अचराश्च चराचराः प्राणिनः त्वद्वियोगेन खिन्नाः, हन्त ॥ ३३ ॥

**एकच्छत्रोचितो लोके त्वमच्छत्रो हि गच्छसि ।**
**वयं[२] त्वां वाजपेयोत्थैः श्वेतच्छत्रैरुपास्महे ॥ ३४ ॥**

**(भा.दी.) एके**ति । लोको भुवनं तस्मिन्, एकं यच्छत्रं श्वेतच्छत्रं तस्य उचितः त्वम्, न विद्यते च्छत्रं यस्य स तथा सन् गच्छसि हि । वयं त्वां वाजपेयेन वाजपेययज्ञेन उत्थानि उत्पन्नानि तैः, वाजपेय-यागकरणनिमित्तेन प्राप्तैरित्यर्थः । वाजपेययाजिनां हि श्वेतच्छत्रार्हता स्मृतिसिद्धा । श्वेतच्छत्रैः उपास्महे सेवामहे । आस उपवेशने लट् ॥ ३४ ॥

**(सं.चं.)** 'वाजपेयसमुत्थानि छत्राण्येतानि पश्य नः । अनवाप्तातपत्रस्य रश्मिसन्तापितस्य ते । एभिश्छायां करिष्यामः स्वैश्छत्रैर्वाजपेयिकैः' (४५.२२–३) इति च । 'तस्माद् वाजपेययाजी न कश्चन प्रत्यवरोहेत् । श्वेतच्छत्री भवति' इति प्रसिद्धं वाजपेययाजिनां श्वेतच्छत्रत्वम् ॥ ३४ ॥

---

१. 'बद्धपादा हि' २. 'हन्त त्वाम्'

**प्रययौ भगवांस्तूष्णीं शृण्वंस्तेषां[1] सरस्वतीम् ।**
**सन्ध्यायां प्राप्तवान् नाम्ना तमसां च सरस्वतीम् ॥ ३५ ॥**

**(भा.दी.) प्रययाविति** । भगवान् श्रीरामः तेषां विप्राणां सरस्वतीं वाचं शृण्वन्, तूष्णीं यत्किञ्चिदवदन् प्रययौ । सन्ध्यायां सन्ध्याकाले नाम्ना तमसां सरस्वतीं नदीं । 'कूलङ्कषा शैवलिनी सरस्वती' इति हलः । प्राप्तवांश्च ॥ ३५ ॥

**(सं.चं.)** सरस्वतीं वाणीं शृण्वन् तमसां सरस्वतीं नदीं प्राप्तवान् । सरस्वतीं सरस्वतीमित्यभङ्गश्लेष-यमकम् ॥ ३५ ॥

**फलमूलोदकैर्वृत्तिरद्य प्राप्ता गृहं स्मरन् ।**
**नोत्कण्ठां कुरु तातेति रामः सौमित्रिमब्रवीत् ॥ ३६ ॥**

**(भा.दी.) फलेति** । हे तात लक्ष्मण, अद्य अद्यप्रभृति फलानि च मूलानि च उदकं च तैः अस्माकं वृत्तिः जीवनं प्राप्ता । त्वं गृहं मन्दिरं तत् स्मरन् सन् उत्कण्ठां शोकम्, कठि शोक इति धातुः, न कुरु । श्रीरामः इति सौमित्रिं अब्रवीत् ॥ ३६ ॥

**(सं.चं.)** उत्कण्ठां गृहे रतिम् । 'स्यादायल्लकमौत्सुक्यमुत्कण्ठोत्कलिका रतिः' इति यादवप्रकाशः ॥३६॥

**रामाज्ञया सुमन्त्रोऽश्वान् विमुच्य यवसं ददौ ।**
**स सौमित्रिः शुभां शय्यां[2] चक्रे च मृदुलैर्दलैः ॥ ३७ ॥**

**(भा.दी.)** रामेति । सुमन्त्रः रामाज्ञया अश्वान् विमुच्य । यवसं तृणं तत् । 'यवसं तृणमर्जुनम्' इत्यमरः । ददौ । दाण् दाने लिट् । अथ सः सौमित्रिः मृदुलैः, दलानि पत्राणि तैः, शुभां शय्यां चक्रे (च) ॥ ३७ ॥

**(सं.चं.)** यवसम्, अश्वानां प्रियमदनीयं तृणं ददौ । 'घासस्तु यवसः शरिः' इति यादवप्रकाशः ॥ ३७॥

**अनन्तशय्यस्तां शय्यामध्यासामास सीतया ।**
**[3]सौमित्रिस्त्वनयोस्तूर्णं चक्रे पादावनेजनम् ॥ ३८ ॥**

---

१. 'शृण्वन्नेषाम्' २. 'शिवां शय्याम्' ३. 'सौमित्रिस्तु तयो–'

**(भा.दी.) अनन्त** इति । अनन्तः शेषः शय्या यस्य तथा श्रीरामः सीतया सह तां शय्यां अध्यासामास । आस्थितोऽभवत् । आस उपवेशने लिट् । सौमित्रिस्त्वनयोः सीतारामयोः पादानामवनेजनं प्रक्षाळनं तत् तूर्णं यथा भवति तथा चक्रे ॥ ३८ ॥

**(सं.चं.)** पादावनेजनं पाद्यम्, पादक्षाळनम् ॥ ३८ ॥

**स तस्मिंस्तमसातीरे विमले गोकुलाकुले[1] ।**
**सन्ध्यामुपास्य शिश्येऽत्र पर्य्यङ्के सीतया समम् ॥ ३९ ॥**

**(भा.दी.) स** इति । सः श्रीरामः विमले, गवां कुलं समूहस्तेन आकुलं निबिडं तस्मिन्, तस्मिन् सम्प्राप्ते, तमसातीरे तमसानदीतीरे सन्ध्यां उपास्य, अत्र लक्ष्मणरचिते, पर्यङ्कः शय्या तस्मिन्, सीतया समं साकं शिश्ये शयनं चक्रे । शीङ् स्वप्ने लिट् ॥ ३९ ॥

**(सं.चं.)** गोकुलाकुले । 'गोकुलाकुलतीरायास्तमसाया विदूरतः । अवसत् तत्र तां रात्रिं रामः प्रकृतिभिः सह' (४६.१७) इति च ॥ ३९–४० ॥

**सौमित्रिश्च सुमन्त्रश्च देवदेव्योरदूरतः ।**
**मनोरमान् रामगुणान् वर्ण्णयन्तौ स्म तिष्ठतः ॥ ४० ॥**

**(भा.दी.) सौमित्रिरि**ति । सौमित्रिश्च सुमन्त्रश्चाप्युभौ देवदेव्योः अदूरतः समीपे मनोरमान् मनोहरान् रामगुणान् वर्णयन्तौ तिष्ठतः स्म अतिष्ठताम् ॥ ४० ॥

**रामोऽर्द्धरात्र उत्थाय सौमित्रिमिदमब्रवीत् ।**
**पश्य पौरानिमान् सुप्तान् वनेषु भवनेष्विव ॥ ४१ ॥**

**(भा.दी.) राम** इति । श्रीरामः रात्र्या अर्धं अर्धरात्रस्तस्मिन्, 'रात्राह्नाहाः पुंसि' (अ.सू.२.४.२९) इति पुल्लिङ्गता, उत्थाय हे लक्ष्मण, वनेषु भवनानि गृहाणि तेष्विव सुप्तान् निद्रितान् इमान् पौरान् जनान् पश्य । इति इदं वचः सौमित्रिं प्रति अब्रवीत् ॥ ४१ ॥

**(सं.चं.)** अर्धरात्रो निशीथः । 'क्लीबे सङ्ख्यापरं रात्रमर्धान्ना' इति यादवप्रकाशः । 'सङ्ख्यापूर्वं रात्रं क्लीबम्' इति मतमनुसृत्येदमुदितम् । 'द्विरात्रः त्रिरात्रः चतूरात्रः' इति तु जयादित्यः ॥ ४१–२ ॥

१. 'कोकिलाकुले'

**पुत्रमित्रकळत्राणि क्षेत्रवित्तगृहाणि च ।**
**त्यक्त्वा मद्भक्तिसम्पूर्णा मां योगिनइवान्वगुः ॥ ४२ ॥**

**(भा.दी.) पुत्रेति** । पुत्राश्च मित्राणि च कळत्राणि भार्यास्तानि च, क्षेत्राणि च वित्तानि च गृहाणि च (तानि) त्यक्त्वा, मम भक्तिस्तया सम्पूर्णाः पूर्णमनोरथाः सन्तः, मां योगिनइव सनकादयइव, अन्वगुः । इण् गतौ लङ् ॥ ४२ ॥

**अस्मिन् यामे वयं यामः सुप्तेष्वेतेषु सत्वरम् ।**
**दुःसहो विरहो ह्येषां किं वा लक्ष्मण मन्यसे ॥ ४३ ॥**

**(भा.दी.) अस्मिन्निति** । हे लक्ष्मण, अस्मिन् वर्तमाने, यामः यामसञ्ज्ञकः कालस्तस्मिन्, एतेषु जनेषु सुप्तेषु सत्सु, वयं त्रयः सत्वरं त्वरया सहितं यथा भवति तथा यामः गच्छामः । किमर्थमेवं गन्तव्यमित्यत आह– **दुःसह** इति । एषां भक्तजनानां विरहः अपरोक्षतो मद्वियोगः । दुस्सहो हि असह्यो हि । हे लक्ष्मण, त्वं किं वा कार्यं मन्यसे निरूपयसि? मन ज्ञाने लट् ॥ ४३ ॥

**(सं.चं.)** अस्मिन् निशायाश्चरमयामे । यामो नाम प्रायः सार्धसप्तघटिकापरिमितः कालः ॥ ४३ ॥

**इत्युक्त्वा सूतमूचेऽसौ पौरव्यामोहनाय हि[1] ।**
**नयोदीचीं रथं क्षिप्रं निवर्त्तस्व पुनस्त्विति[2] ॥ ४४ ॥**

**(भा.दी.) इतीति** । असौ श्रीरामः लक्ष्मणं प्रति इति उक्त्वा, हे सुमन्त्र, पौराणां यद् व्यामोहनं श्रीरामोऽयोध्यां प्रति गत इति प्रतीतिजननं तस्मै, उदीचीं उत्तरां दिशं प्रति रथं क्षिप्रं यथा भवति तथा नय। पुनस्तं निवर्त्य परावृत्य नय। इति सूतं सुमन्त्रं प्रति ऊचे। अयोध्यायाः दक्षिणदिगवस्थिततमसातीरं प्रति सहाऽगता इमे जनाः उत्तरां दिशं प्रति निशीथसमय एव रथे नीते सति श्रीरामः अस्मासु विद्यमानकृपया परावृत्यायोध्यां प्रति गत इति मन्वाना अयोध्यां प्रत्येव गमिष्यन्ति । ततश्च दूरं गतानस्मान्नानुव्रजिष्यन्तीत्याशयेनैवमुक्तम् ॥ ४४ ॥

**(सं.चं.)** प्रथममयोध्याभिमुखं गच्छन्निवोदीचीं नय । ततः निवर्त्य पुनरिमं देशमानय ॥ ४४ ॥

---

१. **'पौरव्यामोहनाय हि पौराणां विपरीतज्ञानोत्पादनायैव'** इति का.श्री. ।

२. **'निवर्त्य च पुनर्नय'** इति वि.ती.पाठः । **'पुनस्तु पुनरेव निवर्तस्वेति सूतमूचे'** इति का.श्री. ।

**सुमन्त्रोऽथ[१] तथा कृत्वा रथं भूम्ने न्यवेदयत् ।**
**आरुरोह रथं रामः ससीतालक्ष्मणस्ततः ॥ ४५ ॥**

**(भा.दी.) सुमन्त्र** इति । अथ सुमन्त्रः रथं केवलस्यन्दनं तथा श्रीरामोक्तप्रकारेण कृत्वा भूम्ने पूर्णगुणाय श्रीरामाय न्यवेदयत् स्वकृतं कर्म विज्ञापितवान् । विद चेतनाख्याननिवासनेषु लङ् । ततः श्रीरामः ससीतालक्ष्मणः सन् रथं आरुरोह । रुह बीजजन्मनि प्रादुर्भावे च लिट् ॥ ४५ ॥

**(सं.चं.)** तथा कृत्वा रथमुत्तराभिमुखं नीत्वा पुना रामसमीपमानीय । भूम्ने पूर्णानन्दाय रामाय ॥ ४५ ॥

**रथमारुह्य तरसा तमसामतितीर्य्य सः ।**
**तेनैव रात्रिशेषेण[२] दीर्घमध्वानमत्यगात् ॥ ४६ ॥**

**(भा.दी.) रथमि**ति । सः श्रीरामः रथं तरसा झटिति आरुँह्य तमसां तमसानदीम् अतितीर्य तेनैव अवशिष्टेन रात्रेश्शेषस्तेन दीर्घं अध्वानं अत्यगात् । इण् गतौ लुङ् ॥ ४६ ॥

**(सं.चं.)** तमसां अयोध्यायाः पश्चिमादिभागमगाम् ॥ ४६–७ ॥

**प्रभाते सति पौरास्ते मन्वाना नगरं गतम् ।**
**रामं लोकाभिरामं तं प्रहृष्टा नगरं ययुः ॥ ४७ ॥**

**(भा.दी.) प्रभात** इति । ते पौराः जनाः, प्रभातः प्रातःकालस्तस्मिन् सति, तं लोकाभिरामं श्रीरामं नगरमयोध्यापुरं तत् प्रति गतं प्राप्तं मन्वानाः विजानन्तः सन्तः नगरं प्रति प्रहृष्टाः सन्तः ययुः ॥ ४७ ॥

**अतिगच्छन्[३] बहून् ग्रामान्[४] कोसलान्[५] कोसलेश्वरः ।**
**वेदस्मृतिं नाम नदीं गोमतीं चात्यवर्त्तत ॥ ४८ ॥**

**(भा.दी.) अती**ति । बहून् कोसलान् कोसलनामकान् ग्रामान् अतिगच्छन् अतिक्रम्य गच्छन् कोसलेश्वरः श्रीरामः वेदस्मृतिं वेदस्मृत्याख्याम् नाम प्रसिद्धां नदीं गोमतीं च गोमत्याख्यनदीं च अत्यवर्तत अतिक्रान्तवान् । वृतु वर्तने लङ् ॥ ४८ ॥

---

१. **'सुमन्त्रोऽपि तथा'** २. **'येन रात्रिशेषेण पौरव्यामोहेनं कृतं तेनैव रात्रिशेषेण'** इति का.श्री । ३. **'इति गच्छन्'**
४. **'बहुग्रामान्'** ५. **'कोसलान् कोसलदेशे विद्यमानान् बहून् ग्रामानत्यवर्तत'** इति का.श्री. ।

**(सं.चं.)** कोसलान् कोसलविषयगतान् बहून् ग्रामान् । वेदस्मृतिं नाम नदीम् । 'ततो वेद श्रुतिं नाम शिववारिवहां नदीम्' (४९.१०) इति प्रचलितो रामायणपाठः ॥ ४८ ॥

**दक्षिणाभिमुखं यान्तं दक्षिणं[१] सरयूनदीम् । (?स्यनिदकां नदीम्)**
**तरन्तं कोसलाद्यास्तं[२] सर्वे जानपदा ययुः ॥ ४९ ॥**

**(भा.दी.) दक्षिणे**ति । दक्षिणां दक्षिणदिशं प्रति अभिमुखं आभिमुख्यं यथा स्यात् तथा यान्तम्, दक्षिणं समर्थम्, सरयूं नदीं तरन्तं तं श्रीरामम्, कोसलाः कोसलविषयस्था जना आद्या येषां ते तथा, सर्वे जनपदे राष्ट्रे भवा जानपदाः जना ययुः ॥ ४९ ॥

**(सं.चं.)** दक्षिणाभिमुखं यत्र गङ्गासङ्गमः । गङ्गातीरे च शृङ्गिबेरपुरम् । न सरयूतीरे । सरयूनदीं तरन्त-मिति पठन्ति । तीर्णगोमतीनां ततो गङ्गाभिमुखं दक्षिणां दिशमभिपततां न सरयूतरणावकाशः । अयोध्यातः पूर्वस्यां हि दिशि सरयूः । पश्चिमायां गोमती । स्फुटं लिपिकृतां प्रमादोऽयम् । तेषां प्रमादेन व्याख्यातारोऽपि प्रामाद्यन् । एकः प्रमादः प्रमादान्तरं जनयामास । ततो रामायणानुगुणम्, 'दक्षिणं स्यन्दिकां नदीम्' इति पठितव्यम् । तथाहि रामायणे– 'ततो वेदश्रुतिं नाम शिववारिवहां नदीम् । उत्तीर्याभिमुखः प्रायादगस्त्याध्युषितां दिशम् । गोमतीं चाप्यतिक्रम्य राघवः शीघ्रगैर्हयैः । मयूरहंसाभिरुतां ततार स्यन्दिकां नदीम्' (४९.१०;१२) इति । तमसा वेदश्रुतिर्गोमती स्यन्दिका चेतीमा नद्यो वसन्तग्रीष्मयोः स्तोकसलिला इति रथेनैव ततार । न नावा ॥ ४९–५१ ॥

**दीनानश्रुमुखान् दृष्ट्वा भक्तांस्तान् विरहासहान् ।**
**भूमा भुजं भुजङ्गाभमुद्यम्येदमभाषत ॥ ५० ॥**

**(भा.दी.) दीनानि**ति । भूमा पूर्णसुखः श्रीरामः दीनान् श्रीरामस्य राज्यवियोगं दृष्ट्वा खिन्नान्, अश्रु मुखे येषां ते तथा तान्, विरहं वियोगं न सहन्त इति विरहासहाः तान्, भक्तान् तान् जनान् दृष्ट्वा भुजङ्गवत् सर्पवदाभा कान्तिर्यस्य स तथा तम्, भुजं हस्तं उद्यम्य उद्धृत्य इदं वचः अभाषत ॥ ५० ॥

**वेदाहं भवतां भक्तिं भवनं प्रति गम्यताम् ।**
**इत्युक्तास्ते ययुर्नत्वा वर्ण्णयन्तो गुणार्ण्णवम् ॥ ५१ ॥**

---

१. 'यातं दक्षिणां सरयू–' २. 'कोसलाद्यास्ते सर्वे'

**(भा.दी.) वेदे**ति । अहं भवतां मयि भक्तिं वेद जानामि । विद ज्ञाने लट् । भवनं गृहं तत्प्रति भवद्भिर्गम्यताम् । इति श्रीरामेणोक्तास्ते जनाः गुणार्णवं श्रीरामं नत्वा वर्णयन्तः तद्गुणवर्णनं कुर्वन्तः सन्तः ययुः ॥ ५१ ॥

**द्विजसङ्घैः सदा सेव्यां भजतामघनाशिनीम्[१] ।**
**गच्छन्नाप त्रिपथगां गङ्गां रामस्त्रयीमिव ॥ ५२ ॥**

**(भा.दी.) द्विजे**ति । द्विजानां पक्षिणां ब्राह्मणानां वा ये सङ्घाः समूहास्तैः सदा सेव्याम्, भजतां स्नानादिना सेवमानानां जनानाम्, अघं पापं हन्तुं शीलमस्या अस्तीति तथा ताम्, त्रयश्च ते पन्थानश्च त्रिपथास्तेषु गच्छतीति तथोक्ता ताम् । स्वर्गभूमिपाताळाख्यत्रिलोकव्याप्तामित्यर्थः । गङ्गां गच्छन् श्रीरामः त्रयीमिव वेदत्रयीमिव आप । आपॢ व्याप्तौ लिट् । वेदत्रयस्यापि द्विजसङ्घैस्सेव्यत्वात्, भजतां पापहारित्वात्, 'त्रयोऽर्थाः सर्ववेदेषु' इति स्मृतेः अर्थत्रयप्रतिपादकत्वेन [२]त्रिमार्गगत्वाच्चेत्युपमानोपमेयभावः ॥ ५२ ॥

**(सं.चं.)** गङ्गा द्विजसङ्घैः पक्षिसङ्घैर्मुनिसङ्घैश्च सदा सेव्या । त्रयी वेदाध्ययनरतानां विप्राणां सङ्घैः । स्नानेन भजतामघघातिनी गङ्गा । अध्ययनानुष्ठानाभ्यां भजतां त्रयी । गङ्गा त्रिपथगा । त्रीन् पथो गच्छतीति । त्रयाणां पथां समाहारस्त्रिपथम् । त्रिपथेन गच्छति वा । 'क्षितौ तारयते मर्त्यान् नागांस्तारयतेऽप्यधः । दिवि तारयते देवांस्तेन त्रिपथगा स्मृता' इति पुराणं वचः । त्रिभिः पथिभिरधिगम्यत इति त्रयी च त्रिपथगा । तद् यथा 'अग्निमीळे' इत्यग्निमानिनं वैश्वानरम्, प्राणाग्निम्, अग्निनारायणं च प्रतिपादयति । अधिभूतमध्यात्ममधिदैवमिति वा त्रयः पन्थानः ॥ ५२ ॥

**ससीतं सानुजामात्यमिङ्गुदीवृक्षमूलगम् ।**
**प्रणनाम प्रभुं प्राप्य निषादाधिपतिर्गुहः ॥ ५३ ॥**

**(भा.दी.) ससीतमि**ति । निषादाधिपतिः गुहः गुहनामकः निषादः ससीतं सीतासहितम्, अनुजश्च अमात्यः सुमन्त्रः स च ताभ्यां सहितः सानुजामात्यस्तम्, इङ्गुदीवृक्षस्तापसवृक्षस्तस्य मूलं गत इति तथोक्तस्तम् । 'इङ्गुदी तापसतरुः' इत्यमरः । 'इङ्गळ' इत्यपभ्रष्टसञ्ज्ञा । प्रभुं श्रीरामं प्राप्य प्रणनाम । णमु प्रह्वत्वे शब्दे च लिट् ॥ ५३ ॥

---

१. **'–मघघातिनीम्'** इति वि.ती.पाठः ।
२. **'त्रिपथगाम्, ऋगादिमार्गत्रयगताम्'** इति का.श्री. ।

**(सं.चं.)** गङ्गाकूले निषादपतेर्गुहस्य राज्यमापेत्याह– ससीतम् । इङ्गुदीवृक्षः । **'ಇಂಗಳ'** इति, **'ಗಾರೆಮರ'** इति च भाषायाम् । 'निषादो व्याळादिवधाद् यवनः कुञ्जरग्रहात्' इति यादवप्रकाशः । निषादानामेव प्रभेदः शबरो भिल्लः पुलिन्दः किरात इति ॥ ५३ ॥

**तवेदं सपुरं राज्यं देव दासा वयं तव[१] ।**
**निवसात्रैव नाथेति गुहो राघवमब्रवीत् ॥ ५४ ॥**

**(भा.दी.) तवे**ति । हे देव श्रीराम, पुरेण सहितं सपुरं इदं राज्यं तव विद्यमानम्, वयं तव दासाः भृत्याः, तस्मात् हे नाथ, त्वं अत्रैव मन्नगर एव निवस आवासं कुरु । वस निवासे लोट् । गुहः इति राघवं प्रति अब्रवीत् ॥ ५४ ॥

**(सं.चं.)** पुरं शृङ्गिबेरपुरम् ॥ ५४ ॥

**वनवासेन देवस्य भक्तः खिन्नो मुहुर्गुहः[२] ।**
**सान्त्वितस्तेन यवसं रामाश्वेभ्यो ददौ तदा ॥ ५५ ॥**

**(भा.दी.) वने**ति । देवस्य श्रीरामस्य वने यो वासस्तेन मुहुः खिन्नः भक्तः गुहः तेन श्रीरामेण सान्त्वितः सन् श्रीरामस्य ये रथाश्वास्तेभ्यः यवसं तृणं तत् तदा ददौ ॥ ५५ ॥

**(सं.चं.)** तेन रामेण सान्त्वितः । 'अश्वानां खादनेनाहमर्थी नान्येन केनचित्' (५०.४५) इति च ॥५५॥

**देवदेव्योः स सौमित्रिः पर्ण्णपर्य्यङ्कयातयोः ।**
**पादावक्षाळयद् धन्यो रवावस्तमुपेयुषि[३] ॥ ५६ ॥**

**(भा.दी.) देवे**ति । धन्यः सः सौमित्रिः लक्ष्मणः, पर्णमयो यः पर्यङ्कस्तं यातौ गतौ तयोः देवदेव्योः श्रीरामसीतयोः, रवौ अस्तं अस्तगिरिस्तम् उपेयुषि सति प्राप्ते सति, सायङ्काल इत्यर्थः, पादौ अक्षाळयत् । क्षळ शौचकर्मणि लङ् ॥ ५६ ॥

**(सं.चं.)** पर्णमयं पर्यङ्कं यातयोः । पर्यङ्के उपविष्टयोः । सः भ्रातृशुश्रूषारतः सौमित्रिः । ससौमित्रिर्गुहो वा । 'उदयस्तूदयाद्रिः स्यादस्तस्त्वस्तमयाचलः' इति, यादवप्रकाशः । 'अस्तमदर्शने' इति चाव्ययपर्याये ॥५६॥

---

१. **'इदं राज्यमयं देशस्तव त्वदधीनम् । एते चाहं च वयं तव दासाः'** इति का.श्री. । २. **'मुहुर्मुहुः'**

३. **'अस्तमित्यव्ययम् । अस्तमदर्शनमुपेयुषि प्राप्ते सति'** इति का.श्री. ।

**सन्ध्यायां समतीतायां देवदेव्योः शयानयोः[१] ।**
**तिष्ठन्तं लक्ष्मणं वीक्ष्य[२] गुह ऊचे धनुर्द्धरम्[३] ॥ ५७ ॥**

**(भा.दी.) समिति** । सन्ध्यायां समतीतायां सत्याम्, देवदेव्योः शयानयोः सत्योः, धनुर्धरतीति धनुर्धरस्तम्, तिष्ठन्तं लक्ष्मणं वीक्ष्य गुहः ऊचे ॥ ५७ ॥

**(सं.चं.)** धनुर्धारयति धरते वा । धनुर्धरं तिष्ठन्तम् । अशयित्वा जागरितारम् ॥ ५७ ॥

**वीर विश्रम्यतां किञ्चित् किङ्करो भवतामहम् ।**
**आर्य्ययोः पालने युक्त[४] इत्युक्तो लक्ष्मणोऽब्रवीत् ॥ ५८ ॥**

**(भा.दी.) वीरेति** । हे वीर लक्ष्मण, त्वया किञ्चित् विश्रम्यतां विश्रमणं क्रियताम् । श्रमु तपसि खेदे च लोट् । भवतां किङ्करः अहं आर्ययोः स्वामिनोः देवदेव्योः पालनं रक्षणं तस्मिन् युक्तः सन्नद्धः अस्मि । इति गुहेन उक्तः लक्ष्मणः तं प्रति अब्रवीत् ॥ ५८ ॥

**(सं.चं.)** आर्ययोः सीतारामयोः । 'ઌ' इति भाषायाम् । अहमेव युक्तः समञ्जसः । 'युक्तौ श्लिष्टसमञ्जसौ' इति मङ्खः ॥ ५८ ॥

**वीक्ष्येमं[५] पर्ण्णपर्य्यङ्कं प्रासादेऽनर्घशय्ययोः[६] ।**
**आर्य्ययोर्दूयते मे धीर्गुह किं गूहयामि ते ॥ ५९ ॥**

**(भा.दी.) वीक्ष्येति** । प्रासादो हर्म्यं तस्मिन्, न विद्यते अर्घो मूल्यं यस्याः सा अनर्घा, तादृशी शय्या ययोस्तौ तथोक्तौ तयोः, आर्ययोः स्वामिनोः सीतारामयोः इमं मद्रचितं पर्णमयो यः पर्यङ्कस्तम् वीक्ष्य मे धीः मनः दूयते । दूञ् परितापे लट् । हे गुह, ते किं गूहयामि आच्छादयामि । गुहू संवरणे लट् । परमेष्टत्वात् त्वां प्रति न किञ्चिदवक्तव्यमित्यर्थः ॥ ५९ ॥

**(सं.चं.)** पर्णमयीं शय्यां वीक्ष्य ॥ ५९ ॥

---

१. 'शयानयोः योगनिद्रां प्राप्तयोः' इति का.श्री. । २. 'लक्ष्मणं प्रेक्ष्य गुह–' ३. 'धनुर्धरः'
४. 'पालने यत्त–' ५. 'संवीक्ष्य पर्ण–' ६. 'प्रासादेऽनर्घ्यशय्ययोः'

**हा रामेति [१]विलोठन्तावनाथौ स्थविरौ भुवि ।**
**पितरौ स्मरतो मेऽङ्ग निद्रा विद्राविता शुचा ॥ ६० ॥**

**(भा.दी.)** **हे**ति । भुवि हा राम इति विलोठन्तौ परिभ्रमन्तौ, न विद्यते नाथो ययोस्तौ, तथोक्तौ । श्रीरामस्यात्राऽगतत्वादेव रक्षकरहिताविन्त्यर्थः, स्थविरौ वृद्धौ माता च पिता च पितरौ कौसल्यादशरथौ स्मरतः मे, [२]शुचा शोकेन, हे अङ्ग, इह प्रदेशे[३] निद्रा विद्राविता, दुःखातिशयान्निद्रैव नाऽयातीत्यर्थः ॥ ६० ॥

**(सं.चं.)** भुवि विलोठन्तौ मातापितरौ । लुठ उपघाते विलोडने वा ॥ ६० ॥

**गुहसौमित्रिसूतानामित्थं रामप्रसङ्गिनाम् ।**
**जाग्रतामेकभावानां[४] सा व्यतीयाय शर्वरी ॥ ६१ ॥**

**(भा.दी.)** **गुहे**ति । इत्थं रामस्य प्रसङ्गः कथा एषामस्तीति तथा तेषाम्, जाग्रतां अनिद्रितानाम्, केवलं भक्ता एकभक्तास्तेषाम्, गुहश्च सौमित्रिश्च सूतः सुमन्त्रश्च तेषां सा शर्वरी रात्रिः व्यतीयाय । इण् गतौ लिट् ॥ ६१ ॥

**(सं.चं.)** एकभावानामेकाभिप्रायाणाम् ॥ ६१ ॥

**करेण ताम्रेण मनोहरेण स्पृष्टं मनाक् सुस्मितमुल्ललास ।**
**रामेण देव्या वदनारविन्दं सूर्य्येण तुल्यं[५] तरुणारविन्दम् ॥ ६२ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**अयोद्ध्याकाण्डेऽष्टमः सर्ग्गः ॥**

—०—

**(भा.दी.)** **करेणे**ति । श्रीरामेण, ताम्रेण रक्ततळेन मनोहरेण करो हस्तस्तेन । 'कर्तृकरणयोस्तृतीया' (अ.सू. २.३.१८) इत्युभयत्र तृतीया । मनाक् ईषत्, स्पृष्टं देव्याः सीतायाः वदनमेवारविन्दं वदनारविन्दम् । सूर्येण

---

१. **'विलोटन्तावनाथौ'** २. **'शुक् शोकस्तया'** ३. **'इह'** इति पदं मूले न पठ्यते ।
४. **'जाग्रतामेकभक्तानाम्'** इति वि.ती.पाठः । ५. **'सूर्येण सान्ध्यं तरुणा–'**

ताम्रेण स्वर्णभासा मनोहरेण करेण किरणेन मनाक् स्पृष्टं तरुणारविन्दं नूतनारविन्दं चेत्युभयं तुल्यं समकालं यथा भवति तथा सुशोभनं स्मितं  मन्दहासो विकासो यस्य तत्तथा सत् उल्ललास शुशुभे । लस श्लेषण-क्रीडनयोः लिट् ॥ ६१ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायामयोध्याकाण्डे भावार्थदीपिकायामष्टमः सर्गः ॥**

—०—

**(सं.चं.)** उपजात्योपसंहरति– करेण । रामकरेण स्पृष्टं देव्याः सीताया वदनारविन्दम् । सूर्यकिरणेन स्पृष्टं तरुणारविन्दं च  तुल्यं समानयोगक्षेममुल्ललास ॥ ६२ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामष्टमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– ७६७+६२=८२९]

# नवमः सर्ग्गः

**रामाज्ञयाऽथ सौमित्रिः प्लवायाचोदयद् गुहम् ।**
**गुहश्चोपानयन्नावं स्वरित्रां[1] किङ्करैर्दृढाम् ॥ १ ॥**

**(भा.दी.)** श्रीरामो वनवासव्याजेन भक्तानुग्रहकारी सन् तत्तदृष्याश्रमेषु चचारेति वक्तुमुपक्रमते– **रामाज्ञये**त्यादिना । अथ सूर्योदयानन्तरम्, सौमित्रिः लक्ष्मणः रामाज्ञया गुहं प्लव उडुपस्तस्मै अचोदयत् प्रेरयामास । चुद प्रेरणे[2] लङ् । गुहश्च सु शोभनं अरित्रं नावं प्रेरयितुमन्ते वृक्षखण्डेन बद्धो दण्डो यस्याः सा तथा ताम् । 'अरित्रं केनिपातनम्' इत्यमरः । दृढां नावं किङ्करैः उपानयत् आनाययामास ॥ १ ॥

**(सं.चं.)** सुदृढानि अरित्राणि यस्याम् । 'अरित्रं कोटिपत्रं स्यात्' इत्यभिधानम् । **'ಹುಟ್ಟುಗೋಲು', 'ಜಲ್ಲೆ'** इति भाषायाम् । दृढां गङ्गारयःसहनसमर्थाम् ॥ १ ॥

**राघवो निरघं सूतं सुमन्त्रं प्रत्यमन्त्रयत् ।**
**याहि सौम्याधुनाऽयोध्यां पाहि तातं शुचाऽर्दितम् ॥ २ ॥**

**(भा.दी.) राघव** इति । राघवः निर्गतमघं दोषो यस्मात् स तथा तं सूतं सारथिं सुमन्त्रं प्रति । हे सौम्य मनोहर, अधुना अयोध्यां प्रति याहि गच्छ । शुक् मद्वियोगजनितशोकस्तया अर्दितं तातं दशरथं पाहि सान्त्ववचनेन रक्ष । पा रक्षणे लोट् । इति अमन्त्रयत् अकथयत् । मत्रि गुप्तपरिभाषणे लङ् ॥ २ ॥

**(सं.चं.)** निरघं सौत्ये साचिव्ये च कदाचिदप्यकृतापराधम् ॥ २ ॥

**कैकेयीं नावमन्यध्वं कुरुध्वं[3] भरतं नृपम् ।**
**पितुराज्ञां तनुध्वं[4] मे सर्वथैवं[5] प्रियं मम ॥ ३ ॥**

---

१. **'–न्नावं सारित्राम्'** २. **'चुद सञ्चोदने'** । तथैव प्रचिलितो धातुपाठश्च । ३. **'–मन्यध्वं तनुध्वम्'**
४. **'पितुराज्ञां कुरुध्वम्'** ५. **'सर्वथैव प्रियम्'**

**(भा.दी.) कैकेयीमि**ति । यूयं कैकेयीं नावमन्यध्वम्, मद्राज्यविघातिनीत्यवज्ञातां न कुरुध्वम् । मन ज्ञाने लोट् । भरतं नृपं युवराजं कुरुध्वम् । मे पितुः दशरथस्य आज्ञां तनुध्वम् कुरुध्वम् । तनोतेर्लोट् । एवं अनेन प्रकारेण वर्तनं सर्वथा सर्वप्रकारेण मम प्रियं प्रीत्यास्पदम् ॥ ३ ॥

**(सं.चं.)** पितुराज्ञां तनुध्वम् । अनुल्लङ्घनमेवात्र तननम् ॥ ३ ॥

**तातं सान्त्वय[1] सान्त्वज्ञ मम दीनां च मातरम् ।**
**वसिष्ठादींश्च सर्वांस्त्वं नानुशोचन्तु मामिह[2] ॥ ४ ॥**

**(भा.दी.) तातमि**ति । सान्त्वं शोकशमनप्रकारं जानातीति सान्त्वज्ञस्तत्सम्बुद्धिः, हे सुमन्त्र, त्वं मम तातं सान्त्वय । षान्त्व सामप्रयोगे लोट् । दीनां दुःखितां (मम) मातरं च सान्त्वय । सर्वान्, वसिष्ठ आदिर्येषां ते तथा तांश्च, सान्त्वय । इह वने मां प्रति नानुशोचन्तु न दुःखं कुर्वन्तु । शुच शोके लोट् ॥ ४ ॥

**(सं.चं.)** वसिष्ठादींश्च सान्त्वय । इह विपिने ससीतानुजो रामः कथं वा जीवतीति नानुशोचन्तु । अन्येषां शोकमनुचिन्त्य शोचनमनुशोकः ॥ ४ ॥

**एवमुक्ते भगवता लक्ष्मणः कुपितोऽब्रवीत् ।**
**राजा कृतार्थः कैकेय्या रामं नानुस्मरेदिति ॥ ५ ॥**

**(भा.दी.) एवमि**ति । भगवता श्रीरामेण एवं वचसि उक्ते सति, लक्ष्मणः कुपितः सन्, कैकेय्या कृतः निष्पादित अर्थः प्रयोजनं यस्य स तथा, राजा दशरथः श्रीरामं नानुस्मरेत्, नानुध्यायेत् । स्मृ आध्याने लिङ् । इति अब्रवीत् ॥ ५ ॥

**(सं.चं.)** कृतार्थः लब्धपुरुषार्थः । नहि रामस्मरणेन तस्य कश्चिदर्थः ॥ ५ ॥

**इत्युक्त ऊचे भगवान्[3] सूत मैवं नृपं वद ।**
**श्रुत्वा क्रोधोक्तमस्येदं पिता जह्यादसूनिति ॥ ६ ॥**

**(भा.दी.) इती**ति । इति लक्ष्मणेन उक्तः भगवान् श्रीरामः, हे सूत सुमन्त्र, नृपं दशरथं प्रति एवं लक्ष्मणेनैवमुक्तमिति मा वद । क्रोधोक्तं क्रोधादुक्तं अस्य लक्ष्मणस्य इदं वचः श्रुत्वा दशरथः असून् प्राणान् जह्यात् परित्यजेत् । ओ हाक् त्यागे लिङ् । इति ऊचे ॥ ६ ॥

---

१. **'सान्त्वय दुःखं मा कुर्विति वद'** इति का.श्री. । २. **'मामिति'** ३. **'इत्युक्त ऊचे भगवान् सूत'**

**(सं.चं.)** एवंविधं लक्ष्मणोक्तं कटुवचनं पितरं प्रति मा वद ॥ ६ ॥

**याहीति चोदयन्तं तं सुमन्त्रः कलिताञ्जलिः ।**
**मुक्तकण्ठो [1]रुदन्नुच्चैस्तन्निगृह्येदमब्रवीत् ॥ ७ ॥**

**(भा.दी.) याही**ति । याहि इति चोदयन्तं श्रीरामं प्रति कलितः सम्बद्ध अञ्जलिर्येन स तथा मुक्तो दुःखाद्दीर्णः कण्ठो यस्य स तथा उच्चैर्यथा भवति तथा रुदन् सः सुमन्त्रः तत् रोदनं निगृह्य इदं वचः अब्रवीत् ॥७॥

**(सं.चं.)** मुक्तः कथमहं राजा सर्वेषां पुरतो रुद्यामिति सङ्कोचेन मुक्तः रहितः कण्ठो रवः । 'कण्ठो गलेऽन्तके शब्दे' इति यादवप्रकाशः ॥ ७ ॥

**हतवीरामिव चमूं निर्वीरामिव सुन्दरीम् ।**
**त्वद्विहीनां रथधुरं कथं नेष्यामि ते पुरम्[2] ॥ ८ ॥**

**(भा.दी.) हते**ति । हतः वीरो नायको यस्याः सा तथा तां चमूमिव, निर्वीरां पतिसुतरहिताम् । 'निर्वीरा[3] निष्पतिसुता' इत्यमरः । सुन्दरीमिव स्त्रियमिव । त्वया हीनां रहितां रथधुरं रथस्य धूर्भारस्ताम् । 'धूः स्याद्यानमुखे भारे' इति वैजयन्ती । ते तव पुरीं अयोध्यां प्रति कथं नेष्यामि ॥ ८ ॥

**(सं.चं.)** निर्वीरा पतिविधुरा, पतिपुत्रविधुरा वा । 'पतिपुत्रवती वीरा' इति नाममाला । रथधुरं रथनिर्वहण-भारम् । 'रथधुराम्' इति साधुः पाठः ॥ ८ ॥

**पितरौ किं नु वक्ष्यामि पौरांश्च पथि पृच्छतः[4] ।**
**अयि[5] देव दयाळो त्वं तव सेवां प्रशाधि[6] मे ॥ ९ ॥**

**(भा.दी.) पितरावि**ति । माता च पिता च पितरौ । कौसल्यादशरथौ प्रति किं नु किं वा 'श्रीरामः कुत्र' इत्याद्युक्ते वक्ष्यामि? परिपृच्छतः विचारयतः पुरे भवाः पौरास्तांश्च, किं नु वक्ष्यामि? अयि देव हे देव? दयाळो दयाशील श्रीराम, त्वं मे मह्यं तव सेवां प्रशाधि शासनं कुरु । इतः अयोध्यां गत्वा दशरथादीनां क्लेशावलोकनादेः कर्तुमशक्यत्वान्निकट एव तव सेवां कृत्वा स्थास्यामीति भावः ॥ ९ ॥

---

१. **'रुरोदोच्चैः–'** २. **'ते पुरीम्'** इति वि.ती.पाठः । ३. **'अवीरः निष्पतिसुता'** इत्यमरपाठः ।
४. **'परिपृच्छतः'** इति वि.ती.पाठः । ५. **'अपि देव'** ६. **'प्रसीद मे'**

**(सं.चं.)** प्रशाधि आज्ञापय । तव सेवां कुर्वन्निहैव यथा स्याम् ॥ ९ ॥

**इत्युक्त ऊचे भगवांस्त्वयि याते[१] वने रतम् ।**
**मां प्रत्येष्यति कैकेयी सेवेयं मे भवेदिति[२] ॥ १० ॥**

**(भा.दी.) इती**ति । इति सुमन्त्रेण उक्तः भगवान् श्रीरामः, हे सुमन्त्र, त्वयि याते सति अयोध्यां प्रति गते सति, मां वनमरण्यं तस्मिन् रतमासक्तम्, स्थिमित्यर्थः, कैकेयी प्रत्येष्यति, प्रत्ययं यास्यति, रामो वनं गतः सन्देहो नात्रेति विश्वासं यास्यति, गमिष्यतीत्यर्थः । इण् गतौ लृट् । मे मम इयं कैकेयीविश्वासकरणरूपा सेवा भवेत् । इति ऊचे इति सम्बन्धः ॥ १० ॥

**(सं.चं.)** वने रतं विहरन्तम् । अभ्यस्तवनवासम् । प्रत्येष्यति विश्वसिष्यति । 'नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी । कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः' (५२.६१) इति च । पुरगमनेन कैकेयीप्रत्यायनमेव सम्प्रति त्वया कर्तव्या मम सेवा, नात्र स्थित्वा शुश्रूषणमिति ॥ १० ॥

**सान्त्वयित्वा तथा सूतं रामदेवेन चोदितः[३] ।**
**वटक्षीरं जटाः कर्तुमुपानिन्ये गुहो बहु ॥ ११ ॥**

**(भा.दी.) सान्त्वयित्वे**ति । सूतं सुमन्त्रं तथा उक्तरीत्या सान्त्वयित्वा, अयोध्यां गन्तुमनुमतिं कारयित्वा, रामदेवेन चोदितः[१] प्रेरितः गुहः, बहु बहळं वटक्षीरं वटस्य वटवृक्षस्य क्षीरं तत् जटाः कर्तुं उपानिन्ये आनीतवान् ॥ ११ ॥

**(सं.चं.)** वटक्षीरम् । 'जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय । तत्क्षीरं राजपुत्राय गुहः क्षिप्रमुपाहरत् । लक्ष्मणस्याऽत्मनश्चैव रामस्तेनाकरोज्जटाः' (५२.६८–९) इति च ॥ ११ ॥

**लक्ष्मणस्याऽत्मनश्चाथ[४] जटाश्चक्रे[५] जगद्गुरुः ।**
**जटाभिस्तौ विरेजाते नरनारायणाविव ॥ १२ ॥**

**(भा.दी.) लक्ष्मणस्ये**ति । अथ जगद्गुरुः श्रीरामः आत्मनः स्वस्य लक्ष्मणस्य च जटाः चक्रे । तौ श्रीरामलक्ष्मणौ जटाभिः नरनारायणाविव विरेजाते शुशुभाते । राजृ दीप्तौ लिट् ॥ १२ ॥

---

१. '–स्त्वय्यायाते' २. '**इयं पुरीं प्रति गमनमेव मे मम सेवा भवेदित्यूचे । सेवाशब्दापेक्षया इयमिति स्त्रीलिङ्गनिर्देशः**' इति का.श्री. ।
३. '**रामदेवेन नोदितः**' ४. '**–त्मनश्चापि जटा–**' ५. '**जटां चक्रे**'

**(सं.चं.)** नरनारायणाविव। 'अशोभतामृषिसमौ' (५२.७०) इति रामायणवचनस्य सुन्दरमिदं व्याख्या-नम् ॥ १२ ॥

**गुहसूतावनुज्ञाप्य विनीतावनुनीय च ।**
**विचित्रारित्रसम्पन्नां नावं प्रापदनामयः[१] ॥ १३ ॥**

**(भा.दी.)** **गुहेति**। न विद्यते आमयो यस्य स तथा, जटाकरणेऽपि पूर्णसुखरूपत्वेन मनःखेदादिदोषरहित इत्यर्थः, श्रीरामः विनीतौ विनयोपेतौ गुहसुमन्त्रौ अनुनीय सान्त्वयित्वा अनुज्ञाप्य च, विचित्रं यदरित्रं अन्ते दारुबन्धबद्धो दण्डविशेषस्तेन सम्पन्नां युक्तां नावं प्रापत् जगाम । आप्लृ व्याप्तौ लुङ् ॥ १३ ॥

**(सं.चं.)** नौपृष्ठे कर्णधारहस्तगतं कर्णाख्यमरित्रम् । पाश्र्वयोः स्थितानां पुलिन्दानां हस्ते क्षेपण्याख्यान्य-रित्राणि भवन्ति । तानि च विविधवर्णैरलङ्कृतानि भवन्तीति विचित्रारित्रमित्याह । विशेषतश्च रामसेवार्थं सीताविनोदार्थं च उत्सवादिषूपयुज्यमानानि विचित्राण्यरित्राणि गुहः संयोजयामासेत्यर्थः । अनुनीय सस्नेहं सान्त्वयित्वा च ॥ १३ ॥

**देवदेवाज्ञया देवीं नावमारोप्य वीर्य्यवान् ।**
**लक्ष्मणः स्वयमारूढः पश्चाल्लक्ष्मणपूर्वजः ॥ १४ ॥**

**(भा.दी.)** **देवेति**। वीर्यं पराक्रमोऽस्यास्तीति वीर्यवान् लक्ष्मणः, देवानां ब्रह्मादीनां देवः श्रीरामस्तस्याऽज्ञया देवीं सीतां नावं आरोप्य स्वयं आरूढः। 'गत्यर्थाकर्मक–' (अ.सू.३.४.७२) इत्यादिना कर्तरि क्तः। पश्चात् लक्ष्मणपूर्वजः लक्ष्मणज्येष्ठः श्रीरामः आरूढः ॥ १४ ॥

**(सं.चं.)** देवानामपि देवस्य पूज्यस्य रामस्याऽज्ञया 'आरोप्य मैथिलीं पूर्वमारुरोहाऽत्मवांस्ततः । अथारुरोह तेजस्वी स्वयं लक्ष्मणपूर्वजः' (५२.७६) इति रामायणे। आत्मवानिति वाल्मीकिवचनं वीर्यवानिति व्याचख्यौ ॥ १४ ॥

**तारकैस्तार्य्यमाणा[२] सा देवी देवान्तिके स्थिता ।**
**तां गङ्गामवलोक्याथ मङ्गलाङ्गीदमब्रवीत् ॥ १५ ॥**

१. **'प्राप दयामयः'** । **'अनामयः रोगोपलक्षितसर्वदोषरहितः'** इति का.श्री. ।
२. **'नाविकैस्तार्यमाणा'**

**(भा.दी.) तारकैरिति** । अथ तारयन्तीति तारकास्तैः, नदीतारकपुरुषैरित्यर्थः, तार्यमाणा तरणं कार्यमाणा, देवस्यान्तिकं समीपम् तस्मिन् स्थिता, मङ्गलानि अङ्गानि अवयवा यस्याः सा तथा देवी तां गङ्गां अवलोक्य इदं वचः अब्रवीत् ॥ १५ ॥

**(सं.चं.)** तारकाः नाविकाः । ये नावा नदीं तारयन्ति ॥ १५ ॥

**हे विष्णुपदि धन्या त्वं ब्रह्मलोकादिहागता[१] ।**
**देवे वनान्निवृत्ते त्वां पूजयिष्यामि[२] जाह्नवि ॥ १६ ॥**

**(भा.दी.)** हे **विष्ण्विति** । हे विष्णुपदि गङ्गानदि, ब्रह्मणश्चतुर्मुखस्य यो लोकः सत्याख्यः तस्मात् इह भुवि आगता त्वं धन्या प्रख्यातगुणवती असि । जह्नुः (राजर्षिः) तेन जाता जाह्नवी तत्सम्बुद्धिः । हे जाह्नवि, त्वां देवे श्रीरामे वनमरण्यं तस्मात् निवृत्ते सति, परावृत्याऽगच्छति सति, पूजयिष्यामि ॥ १६ ॥

**(सं.चं.)** हे विष्णुपदि गङ्गे । 'भागीरथी सुरसरिद् विष्णुपदी जाह्नवी तथा गङ्गा' इत्यभिधानम् । विष्णुः पदं स्थानमस्या इति । विष्णोः पदं पदं स्थानमस्या इति वा । तेन विष्णुपदपदीं परोक्षप्रिया विष्णुपदीमाचक्षते । विष्णोस्त्रिविक्रमस्य वामपादाङ्गुष्ठनखनिर्भिण्णोर्ध्वाण्डकटाहविवरादन्तःप्रविष्टा ब्रह्मलोकं गता तत इहाऽगता ॥ १६ ॥

**एवं ब्रुवन्त्यां[३] वैदेह्यां परं पारं प्लवोऽगमत् ।**
**अवरुह्य प्लवात् तस्माद् रामो लक्ष्मणमब्रवीत् ॥ १७ ॥**

**(भा.दी.) एवमिति** । वैदेह्यां सीतायाम् एवं ब्रुवन्त्यां सत्यां प्लवः परं अन्यत् पारं तीरं तत् अगमत् । श्रीरामः तस्मात् प्लवात् अवरुँह्य लक्ष्मणं प्रति अब्रवीत् ॥ १७ ॥

**(सं.चं.)** परं पारमपरतीरम्, दक्षिणकूलम् ॥ १७ ॥

**अग्रतो गच्छ सौमित्रे सीता त्वामनुगच्छतु ।**
**अनुयास्याम्यनायासी त्वां च[४] सीतां च पालयन् ॥ १८ ॥**

---

१. **'–लोकादुपगता'**

२. **'पूजयिष्यामीति लोकानुकरणायाब्रवीत्'** इति का.श्री. ।

३. **'इत्युक्तवत्याम्'** इति, **'एवं वदन्त्याम्'** इति च क्वचित् ।

४. **'त्वां वै सीतां च'**

**(भा.दी.) अग्रत** इति । हे सौमित्रे लक्ष्मण, अग्रे इत्यग्रतः, पुरत इत्यर्थः, गच्छ, सीता त्वां अनुगच्छतु अनुसृत्य गच्छतु, आयास अस्यास्तीत्यायासी, स न भवतीत्यनायासी, यत्किञ्चिद्विषयकक्लेशरहित इत्यर्थः, अहं त्वां च सीतां च पालयन् सन् अनुयास्यामि ॥ १८ ॥

**(सं.चं.)** त्वामनु तव पृष्ठतः । अहं युवयोरनन्तरं यास्यामि सर्वपृष्ठतः । अनुयानं नानुचरतया । किन्तु त्वां च सीतां च पालयन् । 'अग्रतो गच्छ सौमित्रे सीता त्वामनु गच्छतु । पृष्ठतोऽहं गमिष्यामि त्वां च सीतां च पालयन्' (५२.९५) इति च । त्रैलोक्यपालनेऽप्यनायासी । आयासः श्रमः ॥ १८ ॥

**इत्येवं व्रजतोः स्वैरं रामरामानुजन्मनोः ।**
**सुमद्ध्यमा ययौ मद्ध्ये करेणुः करिणोरिव ॥ १९ ॥**

**(भा.दी.) इत्येवमिति** । एवमिति एवमादिवचः, 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । उक्त्वेति शेषः । स्वैरं स्वेच्छया व्रजतोः रामश्च रामादनु अनन्तरं जन्म यस्य लक्ष्मणस्य स च तयोः, मध्यं मध्यप्रदेशस्तस्मिन्, सु शोभनं मध्यमं मध्यदेहो यस्याः सा तथा सीता, करिणौ गजौ तयोर्मध्ये करेणुरिव गजीव ययौ ॥ १९ ॥

**(सं.चं.)** सुमध्यमा कृशोदरी । 'अवलग्नवलग्नौ तु मध्यमो मध्यमस्त्रियाम्' इति यादवप्रकाशः । करेणुः करिणी । 'करेणुर्गजहस्तिन्योः' इत्यभिधानम् । 'मातङ्गयोर्मध्यगता शुभा नागवधूरिव' (५५.२९) इति च ॥ १९ ॥

**ते गत्वा दीर्घमध्वानं प्राविशन्नद्भुतं वनम् ।**
**न्यग्रोधमूलमासाद्य तत्र वासमकल्पयन् ॥ २० ॥**

**(भा.दी.) त** इति । ते रामाद्याः दीर्घं बहुयोजनं अध्वानं मार्गं गत्वा, अद्भुतमाश्चर्यरूपं तत् वनं प्राविशन् । तत्र वने न्यग्रोधस्य वटवृक्षस्य मूलं तत् आसाद्य, वास आवासस्तम्, अकल्पयन् अकुर्वन् । क्लृपू क्लृप्तौ लङ् ॥ २० ॥

**(सं.चं.)** अद्भुतमदृष्टपूर्वं द्रुमनिबिडम्, यत्र सूर्यातपोऽपि दुष्प्रवेशः । 'वासाय काले ययतुर्वनस्पतिम्' (५२.१०२) इति, 'ते तु तस्मिन् महावृक्षे उषित्वा रजनीं शुभाम्' (५४.१) इति चाऽह वाल्मीकिः । कोऽयं महावृक्ष इति जिज्ञासायां वाल्मीकेर्मौनं व्यंसयति पण्डिताचार्यः– न्यग्रोधमूलमिति ॥ २० ॥

**सीतालक्ष्मणयो रामो दर्शयामास पद्मिनीम् ।**
**सुदर्शनां[१] नाम ततः पद्मान्यादत्त लक्ष्मणः ॥ २१ ॥**

**(भा.दी.) सीते**ति । श्रीरामः सीतालक्ष्मणयोः सुदर्शनां नाम सुदर्शनेति प्रसिद्धाम्[२], पद्मानि अस्यां सन्तीति पद्मिनी तां सरसीं दर्शयामास । ततः सरसः लक्ष्मणः पद्मानि आदत्त । दातेर्लङ् ॥ २१ ॥

**(सं.चं.)** पद्मिनीं पद्मवतीं सरसीम् ॥ २१ ॥

**[३]पदपद्मोपमं पत्युः पद्ममादाय मैथिली ।**
**विरराजान्तिके[४] भर्त्तुः सुन्दरीवेन्दिरा स्वयम् ॥ २२ ॥**

**(भा.दी.) पदमि**ति । मैथिली सीता पत्युः भर्तुः श्रीरामस्य पदं पादस्तदेव पद्मं तस्य उपमा यस्य तत्तथा तत् पद्मं आदाय भर्तुः अन्तिकं समीपं तस्मिन् सुन्दरी मनोहरा स्वयं स्वस्वरूपभूता इन्दिरेव श्रीरिव, (वि)रराज । राजृ दीप्तौ लिट् ॥ २२ ॥

**(सं.चं.)** सुन्दरीवेन्दिरा । इन्दिरेव सुन्दरी । पद्महस्ता हि रमा स्तूयते–'पद्मद्वयाभयवरोद्यतपद्महस्ताम्' इति । रामायणानुक्तेयं कथा, प्रायो मूलरामायणगता इदमुपज्ञमाविष्कृता ॥ २२ ॥

**ते त्रयोऽत्र त्रिरात्रान्ते मृणालादनतर्प्पिताः ।**
**अवसंस्तत्र तां रात्रिं नानासङ्कथनैः सुखम् ॥ २३ ॥**

**(भा.दी.) त** इति । तिस्रो या रात्रयस्त्रिरात्रास्तेषामन्तोऽवसानं तस्मिन् अत्र वटमूले मृणालानां बिसानामदनं भक्षणं तेन तर्पिताः सन्तुष्टाः ते त्रयः श्रीरामप्रभृतयः नानाविधानि यानि सङ्कथनानि सम्भाषणानि तैः तां रात्रिं तत्र वटमूले सुखं यथा भवति तथा अवसन् ॥ २३ ॥

**(सं.चं.)** ते त्रयोऽत्रेति । 'ते त्रयोऽथ' इति मूलपाठः स्यात् । तिस्रो रात्रयस्त्रिरात्रः । तस्यान्ते । तिस्रो रात्रीः न्यग्रोधमूले न्युष्य, अथ तां चतुर्थीं रात्रिं तत्र पद्मिनीतटाके मृणालादनतर्पिता सुखमवसन् । मृणालं

---

१. **'सुदर्शनं नाम'**

२. **'सुदर्शनं नाम सुदर्शनमिति प्रसिद्धाम्'** ।

३. **'पादपद्मो–'**

४. **'विललासान्तिके'**

कमलकन्दः । एतेन वनवासकाले यज्ञार्थादृते न राम आमिषं स्वीचकारेति ज्ञायते । रामायणे तु–'तौ तत्र हत्वा चतुरो महामृगान् वराहमृश्यं पृषतं महारुरुम् । आदाय मेध्यं त्वरितं बुभुक्षितौ वासाय काले ययतुर्वनस्पतिम्' (५२.१०२) इति पठ्यते । प्रायः भगवत्पाददर्शितान्मूलरामायणादियं मृणालादनकथा ग्रन्थकृता समुद्धृता स्यात् । रामायणं तु गुह्यभाषामयमिति । अत एव रामायणवचनं शिरोमणिकार एवं व्याचष्ट– 'तत्र वासदेशे वराहादींश्चतुरो महामृगान् हत्वा खेलनार्थं सन्ताड्य बुभुक्षितौ रामलक्ष्मणौ मेध्यं व्रतिभिर्भोक्तव्यं जलादिकमित्यर्थः, आदाय गृहीत्वा वनस्पतिं वृक्षसमीपं ययतुः' इति । अथवा पुनरेवं व्याख्येयम्–'हन शब्दो ज्ञानवाचीति शास्त्रेषु प्रसिद्धम् । तेन चतुरो महामृगान् तत्र हत्वा विहरतो ज्ञात्वा मञ्जुलमृगकुलसङ्कुलोऽयं कमनीयो विपिनविभाग इति तत्र वासाय निश्चिकाय' इति । वराहः कन्दमूलाशनो भूदारः । तेन तत्र कन्दमूलसमृद्धिरवगम्यते । ऋष्यो मृदुशृङ्गो हरिणः । पृषतो बिन्दुमान् हरिणः । महारुरुः कृष्णसारः । एतैर्मृगैर्मृगनयना रममाणा सीता मोदेतेति च तत्रोवासेति च गुह्यभाषाहृदयमवगन्तव्यम् ॥ २३ ॥

**प्रभाकरे प्रभातेऽथ प्रतस्थुस्ते ततो वनात् ।**
**बहून् बहुविधान् देशान् पश्यन्तः शीघ्रगामिनः ॥ २४ ॥**

**(भा.दी.) प्रभाकर** इति । (अथ) प्रभाकरे सूर्ये प्रभाते सति प्रकाशमाने सति शीघ्रं गन्तुं शीलमेषामस्तीति तथा ते त्रयः ततः वनात् बह्व्यः विधाः प्रकारा येषां ते तथा तान् बहून् देशान् पश्यन्तः सन्तः प्रतस्थुः जग्मुः ॥ २४ ॥

**(सं.चं.)** प्रभाकरे प्रभाते भातुं प्रवृत्ते सति पञ्चमे दिने । सर्वमिदं रामायणानुदितम् । रामायणे तु न्यग्रोधमूल एकां रजनीमुषित्वा ततः प्रयागाभिमुखं ययावितीयदेवोक्तम्–'ते तु तस्मिन् महावृक्ष उषित्वा रजनीं शुभाम् । विमलेऽभ्युदिते सूर्ये तस्माद् देशात् प्रतस्थिरे । यत्र भागीरथीं गङ्गां युमुनाऽभिप्रवर्तते' (५४.१–२) इति । प्रायः 'उषित्वा रजनीः शुभाः' इति ग्रन्थकृत्सम्मतो रामायणपाठः स्यात् ॥ २४ ॥

**अल्पावशेषे दिवसे रामो जायानुजान्वितः ।**
**सङ्गमं गतवान् पुण्यं गङ्गायमुनयोः[१] प्रभुः ॥ २५ ॥**

**(भा.दी.) अल्पे**ति । जायानुजाभ्यां अन्वितः सहितः प्रभुः श्रीरामः दिवसो दिनं तस्मिन् अल्पः अवशेषो यस्य स तथा तस्मिन् सति । अपराह्णकाल इत्यर्थः । गङ्गा च यमुना च तयोः । पुण्यं पुण्यसाधनं सुन्दरमिति

१. **'गङ्गायमुनयोः शुभम्'**

वा । 'पुण्यं धर्मे जले हेम्नि पूतेऽक्ष्णोः सुन्दरेऽर्थवत्' इति वैजयन्ती । सङ्गमः सङ्गमप्रदेशस्तं प्रयाग-मित्यर्थः । गतवान् ॥ २५ ॥

**(सं.चं.)** गङ्गायमुनयोः सङ्गमं प्रयागाख्यम् ॥ २५ ॥

**ऋषिर्बृहस्पतिसुतो भरद्वाजो जगत्प्रभुम् ।**
**तस्यैव वचनाज्ज्ञात्वा पूजयामास भक्तिमान् ॥ २६ ॥**

**(भा.दी.) ऋषिरि**ति । बृहस्पतिसुतः भरद्वाजः भरद्वाजनामकः ऋषिः, तस्य श्रीरामस्य यद्वचनं तस्मादेव, को भवानिति पृष्टे सति दशरथपुत्रः श्रीरामोऽहमस्मीत्यभिहितवचनादेवेत्यर्थः, जगतां प्रभुं स्वामिनं श्रीहरिं ज्ञात्वा, साक्षाद् विष्णुरेवायमिति ज्ञात्वेत्यर्थः, भक्तिमान् सन् पूजयामास ॥ २६ ॥

**(सं.चं.)** तस्य रामस्यैव वचनात्–'पुत्रौ दशरथस्याऽवां भगवन् रामलक्ष्मणौ । भार्या ममेयं वैदेही कल्याणी जनकात्मजा' (५४.१४) इत्यादि । तं जगत्प्रभुं देवदेवं पुरुषोत्तमं ज्ञात्वा । रामरूपो नारायणोऽयमागत इति विज्ञाय ॥ २६ ॥

**तं सजायानुजं देवमर्घ्यमूलफलादिभिः ।**
**परिपूज्य जगत्पूज्यमासीनमृषिरब्रवीत् ॥ २७ ॥**

**(भा.दी.) तमि**ति । ऋषिः भरद्वाजः, जाया च अनुजश्च ताभ्यां सहितम्, सर्वजगति पूज्ये, आसीनं स्वाश्रमेऽवस्थितम्, देवं तं श्रीरामम्, अर्घ्यं मूलं फलं च अर्घ्यमूलफलानि तानि आदीनि येषां तानि तथा तैः परिपूज्य अब्रवीत् ॥ २७ ॥

**(सं.चं.)** 'हस्तावनेजनं त्वर्घ्यं पाद्यं पादावनेजनम्' । भक्तिपरिपूर्णा पूजा परिपूजा ॥ २७ ॥

**उत्तमश्लोक सुचिरात् त्वां दिदृक्षामहे वयम् ।**
**त्वद्दर्शनान्तः सन्तापः सन्ततोऽपि हि[1] देहिनाम् ॥ २८ ॥**

**(भा.दी.) उत्तमे**ति । उत्तमः श्लोकः कीर्तिर्यस्य तत्सम्बुद्धिः, श्रीराम, वयं त्वां सुचिरात् दीर्घकालात्, अव्ययमेतत्, दिदृक्षामहे द्रष्टुमिच्छामः । अस्मद्दर्शनाकाङ्क्षानिमित्तं किमित्यत आहुः– **त्वदि**ति । हि यस्मात्

१. 'सन्ततोऽपीह देहिनाम्'

देहिनां प्राणिनां सन्तापः संसारनिमित्तकखेदः, सन्ततोऽपि अनादिकालमारभ्य वर्तमानोऽपि, तव दर्शनं त्वद्दर्शनम्, तदन्तोऽवसानं यस्य स तथा, तस्मात् त्वां दिदृक्षामह इत्यर्थः ॥ २८ ॥

**(सं.चं.)** त्वद्दर्शनान्तः त्वद्दर्शनावसानः । त्वद्दर्शनेनान्तो नाशो यस्येति वा ॥ २८ ॥

**इदं क्षेमकरं क्षेत्रं क्षेत्रज्ञ[१] स्वैरमावस ।**
**[२]तन्वानोऽतनुमानन्दमस्माकं क्षेत्रवासिनाम् ॥ २९ ॥**

**(भा.दी.) इदमि**ति । क्षेत्रं प्रकृत्यादिकं जानातीति क्षेत्रज्ञः तत्सम्बुद्धिः, श्रीराम, त्वम्, क्षेत्रे प्रयागक्षेत्रे वस्तुं शीलमेषामस्तीति तथा तेषामस्माकम्, अतनुरनल्पस्तं आनन्दं तन्वानः कुर्वाणः सन्, क्षेमं करोतीति क्षेमकरम्[३], इदं क्षेत्रम्, स्वैरं स्वेच्छानुसारेण आवस आवासं कुरु । वस निवासे लोट् ॥ २९ ॥

**(सं.चं.)** क्षेत्रज्ञ नारायण । 'क्षेत्रज्ञं चापि मां विद्धि' इति भगवद्वचनात् । क्षेत्रं पिण्डाण्डं ब्रह्माण्डं च जानन् क्षेत्रज्ञः । क्षेमकरम् । 'क्षेमो न प्राप्तरक्षायां मोक्षेऽप्यस्त्री तु मङ्गले' इति यादवप्रकाशः । अतनुम-मन्दमानन्दम् । क्षेत्रमावस 'उपान्वध्याङ् वसः' (अ.सू.१.४.४८) इति द्वितीया ॥ २९ ॥

**इत्युक्तो भगवानूचे प्रेक्षका हि जना[४] इह ।**
**ससीतं मां संव्रजेयुरेकान्तं मे वदेरिति ॥ ३० ॥**

**(भा.दी.) इती**ति । इति भरद्वाजेन उक्तः भगवान् श्रीरामः, हि यस्मात् प्रेक्षकाः निरीक्षकाः जनाः पौरजनाः इह क्षेत्रे ससीतं सीतया सहितं मां संव्रजेयुः, प्रयागे श्रीरामस्तिष्ठति किल तं द्रक्ष्याम इत्यनुव्रजेयुः । व्रजेर्लिङ् । तस्मात् मे एकान्तमेकान्तस्थलं वदेः वद । वदेर्लिङ् । इति ऊचे । वचेर्लिट् ॥ ३० ॥

**(सं.चं.)** तस्मात् किञ्चिदेकान्तं स्थानं मे वदेः । 'आगमिष्यति वैदेहीं मां चापि प्रेक्षको जनः । अनेन कारणेनाहमिह वासं न रोचये । एकान्ते पश्य भगवन्नाश्रमस्थानमुत्तमम्' (५४.२५–६) इति च ॥ ३० ॥

**कपालशिरआदीनां सिद्धिभूमिं तपस्विनाम् ।**
**ततस्त्रियोजनाभ्याशे चित्रकूटं द्विजोऽब्रवीत् ॥ ३१ ॥**

---

१. **'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयत इत्यत्र 'शीर्यते नित्यमेवास्माच्छरीरं जगदीदृशम्' इति प्रमाणात् शरीरशब्देन जगदपि गृह्यते'** इति का.श्री । २. **'तन्वन्नतनु–'** ३. **'क्षेमकरं मुक्तिदायकम्'** इति का.श्री ।

४. **'प्रेक्षका जनाः कैकेय्याः गूढपुरषाः'** इति का.श्री. । नातिस्वरसमिदम् । गूढपुरुषाश्चित्रकूटमप्यागच्छेयुरेव । **'भगवन्नित आसन्नः पौरजानपदो जनः'** (५४.२४) इति वाल्मीकिवचनाननुगुणं च ।

**(भा.दी.) कपाले**ति । द्विजः भरद्वाजः, कपालशिरइतिनामको मुनिरादिर्येषां ते तथा तेषां तपस्विनां सिद्धिभूमिम्, सिद्धेर्भूमिराश्रयस्ताम् । 'भूमिः क्षितौ स्थानमात्रे च' इति वैजयन्ती । चित्राणि कूटानि शृङ्गाणि यस्मिन् स तथा तम्, चित्रकूटाख्यपर्वतमित्यर्थः, ततः प्रयागात्, त्रीणि च तानि योजनानि च त्रियोजनानि तेषामभ्याशं समीपं तस्मिन् । 'तथाऽभ्यर्णमभ्यग्रमभ्याशमाहुः' इति हलायुधः । अब्रवीत् ॥ ३१ ॥

**(सं.चं.)** त्रीणि योजनानि यस्य स त्रियोजनः । त्रियोजनपथे, अत एवाभ्याशे अनतिदूरे । चित्रकूटं पर्वतं वासयोग्यमेकान्तस्थानं द्विजो भरद्वाजोऽब्रवीत् । 'दशक्रोश इतस्तात गिरिर्यस्मिन्निवत्स्यसि । चित्रकूट इति ख्यातो गन्धमादनसन्निभः । ऋषयस्तत्र बहवो विहृत्य शरदां शतम् । तपसा दिवमारूढाः कपालशिरसा सह' (५४.२८–२९;३१) इति च । धन्वन्तरसहस्रं क्रोशः । **'ಹಾಗಢ'** इति भाषायाम् । क्रोशद्वयं गोरुतं गव्यूतं नाम । गोरुतद्वयं योजनमित्याहुः । कपालशिरा नाम कश्चिदृषिः । बहवो रामायणव्याख्यातारोऽत्र भ्रान्ताः । कतककार एवं व्याचख्यौ– 'दुर्भिक्षमृतकपालवत् पलितं शुक्लं शिरस्तथा । मध्यमपदलोपी समासः । तादृशेन शिरसा सह । एवमतिवृद्धदशायामपि तपश्चरन्तः' इति । 'कपालशिरसा सह दिवमारूढाः, तपश्चरणेन निरन्तरकपालासनेन प्रक्षीणत्वक्छिरोरुहतया कपालावशिष्टशिरसा सह दिवमारूढा इत्यर्थः । कपालशिरसेत्येतत् शरीरोपलक्षणम् । सशरीराः स्वर्गं गता इत्यर्थः । यद्वा कपालशिरा इति कस्यचिदृषेः सञ्ज्ञा । कपालशिरसा कपालरूपशिरोयुक्तेनेत्यध्याहृतशरीरविशेषणमित्येके । कपालमात्रावशिष्टं शिरो यस्मिन्निति तपोविशेषणमित्येके' इति गोविन्दराजः स्वविभ्रमविलासं बहुधा व्याततान, वास्तवमर्थं निरूप्यापि स्वस्मिन्नेव स्वयमप्रत्ययः । 'कपालशिरसा त्वद्दर्शनफलकनित्यस्थितिमच्छिवेन सह शरदां शतं विहृत्य दिवं प्रमोदविशेषमारुढाः प्राप्ताः । एतेन शिवस्य रामानुरागिश्रेष्ठत्वं व्यञ्जितम्' इति शिरोमणिः । एवं व्याख्यातॄणामिव रामायणपाठकानामपि मा विभ्रमो भूदिति कृपया पण्डिताचार्य आह– कपालशिरआदीनां तपस्विनामिति । गलितकेशतया कपालशिराः । यो वार्धकेन खल्वाटीकृतः । सिद्धिभूमिं मुक्तिस्थानम् ॥ ३१ ॥

**तस्यां रात्र्यां व्यतीतायां रामो जायानुजान्वितः ।**
**अभिनन्द्य मुनीन्द्रं तं[१] पश्चिमाभिमुखो ययौ ॥ ३२ ॥**

**(भा.दी.) तस्यामि**ति । जायानुजान्वितः श्रीरामः तस्यां रात्र्यां व्यतीतायां सत्यां मुनीन्द्रं मुनिश्रेष्ठं तं भरद्वाजं अभिनन्द्य तोषयित्वा पश्चिमां दिशं प्रत्यभिमुखं यस्य तथा सन् ययौ ॥ ३२ ॥

**(सं.चं.)** यस्यां सन्ध्यायां रामो भरद्वाजाश्रममागतः तस्यां रात्र्यां व्यतीतायाम्, परे द्यवि प्रगे ॥ ३२ ॥

१. **'मुनीन्द्रं च पश्चिमा–'**

**यामुनाद्रिमथ प्राप्य यमुनां प्रभुरैक्षत ।**
**सप्तसप्तेरिवाश्वालिं[१] सत्वरां श्यामलश्रियम् ॥ ३३ ॥**

**(भा.दी.) यामुने**ति । (अथ) प्रभुः श्रीरामः यमुनायाः सम्बन्धी यामुनः स चासौ अद्रिश्च तं यमुनातीरस्थ-पर्वतमित्यर्थः, प्राप्य, सप्तसप्तेः, सप्त सप्तयोऽश्वा यस्य स तथा तस्य, सूर्यस्येत्यर्थः, 'हयसैन्धवसप्तयः' इत्यमरः । अश्वानामालिः समूहस्तामिव सत्वरां त्वरया सहितां सूर्यस्याश्वा यथा शीघ्रगामिनः तद्वद्वेगवती-मित्यर्थः । श्यामळा श्रीः कान्तिर्यस्याः सा तथा तां यमुनामैक्षत ॥ ३३ ॥

**(सं.चं.)** यामुनाद्रिम् । रामायणेऽनुक्तोऽयमद्रिः । श्यामलश्रियम् । अत एव सप्तसप्तेः सूर्यस्य अश्वाळिमिव भासमानाम् । श्यामलाश्वो हि सूर्यः । 'हरिदश्वः सप्ताश्वः प्रभाकरो भानुमान् भानुः' इत्यभिधानम् । 'अर्वा गन्धर्वोऽश्वः सप्तिर्वाजी तुरङ्गमस्तुरगः' इति च । सत्वरैरुत्तरङ्गैः स्रोतोभिः कलिता यमुना सत्वरं धावतां सूर्यतुरगाणां पङ्क्तिरिवाशोभतेत्यर्थः ॥ ३३ ॥

**खण्डयित्वाऽथ[२] खड्गेन लक्ष्मणो नळवेतसान् ।**
**रामाज्ञया व्यधात् तर्तुं[३] सङ्घाटं[४] वेत्रबन्धनैः ॥ ३४ ॥**

**(भा.दी.) खण्डे**ति । अथ लक्ष्मणः रामाज्ञया नळवेतसान् वेणुगुल्मविशेषान्, खड्गोऽसिस्तेन खण्डयित्वा, वेत्राणां तत्र तत्र बन्धनानि तैः, सङ्घाटः नदीतरणानुकूलवेणुसङ्घट्टनविशेषः, तं तर्तुं यमुनातरणार्थं चक्रे ॥३४॥

**(सं.चं.)** 'नळवेतसान्' इति पठन्ति । 'जलवेतसान्' इत्येव प्रतनः पाठः स्यादिति भाति । नदीतीरे रोहन् वानीरापरनामा हि वेतसो जलवेतस उच्यते । वेणुदण्डवत् प्लवनिर्माणायोपयुज्यमानः प्रफुल्लकुसुमस्तरु-विशेषः । 'इह समदशकुन्ताक्रान्तवानीरमुक्तप्रसवसुरभिशीतस्वच्छतोया वहन्ति' इति भवभूतिः । वाति प्लवतां गच्छतीति वेतस इति निर्वदन्ति । '**ಹೆಚ್ಚುಂಯ ಮರ**' इति भाषायाम् । वेतसान् आस्तरणेन संयोज्य रज्जुस्थानी-याभिः वेत्रलताभिस्तान् दृढं बध्वा, एवं काष्ठैः सङ्घटितं जलयानयोग्यं सङ्घाटं नाम प्लवं व्यधात् । '**ತೆಪ್ಪ**' इति भाषायाम् । वेत्रलता– '**ಬೆತ್ತದ ಬಳ್ಳಿ**' इति भाषायाम् । 'तौ काष्ठसङ्घाटमथो चक्रतुः सुमहाप्लवम् । शुष्कैर्वंशैः समास्तीर्णमुशीरैश्च समावृतम् । ततो वेतसशाखाश्च जम्बूशाखाश्च वीर्यवान् । चकार लक्ष्मणश्छित्वा सीतायाः

---

१. **'अश्वालिकमिवेति वेगे च श्यामलत्वे चोपमा'** इति का.श्री. । २. **'खण्डयित्वा तु खड्गेन'**

३. **'यद्यपि तॄ-प्लवनतरणयोरिति धातुः ॠकारान्तत्वात् सेट् । तथाऽपि आगमशास्त्रमनित्यमिति ह्रस्वोऽपि पिपर्तिरस्तीतिवत् ह्रस्वोऽपि तरतिरस्तीति वा तर्तुमित्युक्तम् । अत एवोक्तम्–'साम्पराये तर्तव्याभावात्' इति'** इति का.श्री । ४. **'तर्तुं नावं वै तत्र'**

सुखमासनम्' (५५.१४–५) इति च। तरितुमिति वक्तव्ये 'तर्तुम्' इति प्रयुञ्जानः कविः 'तर्तुं सागरगामिनीम्' इति तरतिमनिटं प्रयुञ्जानं वाल्मीकिमनुससार। भद्रा ह्येषां प्राचामाचार्याणां वाचि लक्ष्मीर्निषक्ता। अत एव छान्दसप्रयोगप्रचुरमिदं काव्यम्। कामं कुप्यन्तु नाम पाणिनीयाः। तृप्यन्ति वाल्मीकिमुखा ऋषयश्छान्दसा इति ॥ ३४ ॥

**रामो गृहीत्वा वैदेहीं किञ्चिल्लज्जास्मिताननाम्।**
**आरोपयत् तं सङ्घाटं भूषणान्यायुधानि च ॥ ३५ ॥**

**(भा.दी.) राम** इति। श्रीरामः किञ्चित् ईषत् लज्जया कथमनेन सङ्घाटेन नदी तर्तव्येति स्त्रीस्वभावभूतलज्जया स्मितं विकसितमाननं यस्याः सा तथा तां वैदेहीं गृहीत्वा तं सङ्घाटं आरोपयत्। भूषणानि आयुधानि च आरोपयत्। रूप[1] उपरिभावे लङ् ॥ ३५ ॥

**(सं.चं.)** कथमहमेका सङ्घाटे स्थित्वा यामीति सङ्कोचो लज्जा। लज्जायामपि स्त्रीसहजं भर्तृविषये साभिमानं मन्दस्मितम् ॥ ३५ ॥

**राघवौ ययतुर्वीरौ सङ्घाटं परिगृह्य[2] तम्।**
**कालिन्द्या दक्षिणं तीरं दक्षिणौ रामलक्ष्मणौ ॥ ३६ ॥**

**(भा.दी.) राघवा**विति। वीरौ, दक्षिणौ प्रवीणौ राघवौ रामलक्ष्मणौ तं सङ्घाटं परिगृह्य कलिन्दपर्वतादुत्पन्ना कालिन्दी यमुना तस्याः दक्षिणं दक्षिणदिगवस्थितं तत् तीरं ययतुः ॥ ३६ ॥

**(सं.चं.)** कालिन्द्या दक्षिणं तीरम्। यद्यपि यमुनाऽन्या। कालिन्दी चान्या। स्वसारौ हि ते। अथापि कलिन्दगिरिजा कालिन्दीनदी यमुनया सहैव प्रवहतीति नदीमेतां क्वचित् कालिन्दीमाहुः। क्वचिद्यमुनाम्। तं सङ्घाटं परिगृह्य दृढं हस्ताभ्यां गृहीत्वा स्वयं जले तरन्तौ ययतुः। त्रयाणां वहने सङ्घाटस्यापर्याप्तत्वात् ॥ ३६ ॥

**यमुनावनमभ्येत्य तटाके बहुपुष्करे।**
**किञ्चिद् विश्रम्य यान्तस्ते[3] श्यामं न्यग्रोधमाययुः ॥ ३७ ॥**

---

१. भाष्यकारोदितोऽयं धातुः। पाणिनीयास्तु **'रुह'**धातोरेव रोहयति रोपयतीति रूपद्वयं निष्पादयन्ति हकारस्य वैकल्पिकेन पकारादेशेन–**'रुहः पोऽन्यतरस्याम्'** (अ.सू.७.३.४२) इति।

२. **'तं सङ्घाटं परिगृह्य स्वयमुदके प्लवमानौ सन्तौ'** इति का.श्री.।

३. **'यातास्ते'**

**(भा.दी.) यमुने**ति । यमुनावनं यमुनातीरस्थं वनं तत् अभ्येत्य, बहूनि पुष्कराणि पद्मानि यस्मिन् तत्तथा तस्मिन् तटाके  तटे किञ्चित् विश्रम्य यान्तः गच्छन्तः श्रीरामाद्याः श्यामः श्यामनामकस्तं न्यग्रोधं वटवृक्षं आययुः प्रापुः ॥ ३७ ॥

**(सं.चं.)** 'सरोजमब्जं नळिनं च पुष्करम्' इत्यभिधानम् । तटाके सरसि, गङ्गायाङ्घोषवादोऽयम्, तटाक-निकटे । तटमकति गच्छतीति तटाकस्तटाकं वा । श्यामाख्यं न्यग्रोधम् । '७ᱹ' भाषायाम् । सूर्यातपवारणेन वनं श्यामं चकारेति श्यामाख्या तस्य ॥ ३७–८ ॥

**यापयामास भगवानग्रतो भरताग्रजम् ।**
**रामः स्वयं [१]पृष्ठतोऽगाज्जानकी मद्ध्यतो ययौ ॥ ३८ ॥**

**(भा.दी.) यापये**ति । भगवान् श्रीरामः अग्रे इत्यग्रतः भरताग्रजं भरतस्याग्रजो ज्येष्ठो लक्ष्मणस्तं यापया-मास प्रेषयामास । स्वयं श्रीरामः पृष्ठतः अगात् । जानकी मध्ये इति मध्यतः ययौ ॥ ३८ ॥

**गव्यूतिमात्रं[२] गत्वा ते ततोऽपि यमुनातटे ।**
**हत्वा मृगानुपादाय तां निशामवसन्निह ॥ ३९ ॥**

**(भा.दी.) गव्यूती**ति । ते रामादयः ततोऽपि श्यामनामकवटमूलादपि केवलं गव्यूतिं गव्यूतिमात्रम्, क्रोशद्वयमात्रमित्यर्थः, गत्वा, यमुनायास्तटं तीरं तस्मिन् मृगान् हत्वा, उपादाय उपयुज्य, तां निशां इह यमुनातटे अवसन् आवासं चक्रुः ॥ ३९ ॥

**(सं.चं.)** गव्यूतिमात्रं यमुनातटात् । न्यग्रोधात् क्रोशमात्रम् । 'क्रोशमात्रं ततो गत्वा भ्रातरौ राम-लक्ष्मणौ । बहून् मेध्यान् मृगान् हत्वा चेरतुर्यमुनावने' (५५.३२) इति च । ननु तर्हि व्याहतभाषी भगवान् वाल्मीकिः । तथाहि पूर्ववचनम्– 'चतुर्दश हि वर्षाणि वत्स्यामि विजने वने । कन्दमूलफलैर्जीवन् हित्वा मुनिवदामिषम्' (२०.२९) इति । 'पित्रा नियुक्ता भगवन् प्रवेक्ष्यामस्तपोवनम् । धर्ममेव चरिष्यामस्तत्र मूलफलाशनाः' (५४.१६) इति च । यदि वाल्मीकिः सत्यवचाः, तर्हि रामो मृषावागित्यायातम् । कन्दमूलफलाशन इति पूर्वमाह । इदानीं मृगमांसमशिशिषति । न भोः । मुनेराशयमविदन्नेवं भाषसे । नहि रामो द्विर्भाषते । नापि परावरज्ञो वाल्मीकिरतथ्यं वक्तुमर्हति । तेनोभयमपि वचनमविरोधेन योजनीयम् ।

१. **'पृष्ठतोऽयाज्जानकी'**

२. **'गव्यूतिमात्रं गव्यूतिप्रमाणम् । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः'** (अ.सू.५.२.३७) **इति मात्रच्प्रत्ययः'** इति का.श्री. ।

अयमत्र सङ्गमनप्रकारः । हिंसा निषिद्धाऽपि यज्ञीयहिंसा शास्त्रेष्वनुमता । एवं भोगार्थं मांसवर्जनेऽपि यागार्थं मांसस्वीकारो न दोषावह इति सम्प्रदायः । न केवलं न दोषावहः । कर्तव्यत्वेन विहितं च क्षत्रियाणां मेध्य-मांसभक्षणम् । वक्ष्यति च मुनिः स्वयमेव– 'इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना' (९६.२) इति । गोविन्दराजोऽप्याह रामायणभूषणे–'अत्राऽमिषशब्देन सूदैः संस्कृतं मांसमुच्यते । केवलमांसस्वीकारस्यो-त्तरत्र वक्ष्यमाणत्वात्' इति । आमिषं हित्वेति न मांसहानमुच्यते । 'आमिषं पुन्नपुंसकम् । भोग्यवस्तुनि सम्भोगे' इति मेदिनीवचनाद् राजभोग्यं वस्तु हित्वेत्येवार्थ इति शिरोमणिः । 'आमिषं सम्भोगं राज्यलोभं वा । 'आमिषं पलले लोभे सम्भोगोत्कोचयोरपि' इति विश्ववचनात्' इति सत्यधर्मतीर्थीयम् । तस्मान्न कोऽपि विरोध इति ॥ ३९ ॥

**श्रान्तं भुवस्तळे सुप्तं लक्ष्मणं लक्ष्मणाग्रजः ।**
**कराभ्यां शङ्कराभ्यां तं परिमृज्योदबोधयत् ॥ ४० ॥**

**(भा.दी.) श्रान्तमि**ति । लक्ष्मणाग्रजः श्रीरामः श्रान्तं श्रमयुक्तं भुवः तळं प्रदेशस्तस्मिन् सुप्तं निद्रितं तं लक्ष्मणम्, शं सुखं कुरुत इति शङ्करौ ताभ्यां कराभ्याम्, परिमृज्य परितः मार्जयित्वा उदबोधयत् प्रबोधनं चक्रे । बुध अवबोधने लङ् ॥ ४० ॥

**(सं.चं.)** श्रान्तम् । 'अथ रात्र्यां व्यतीतायामवसुप्तमनन्तरम् । प्रबोधयामास शनैर्लक्ष्मणं रघुनन्दनः' (५६.१) इति च । लक्ष्मणाग्रज इति रामस्यासाधारणं नाम । तेनानुजेऽनुकम्पातिशयमाह ॥ ४० ॥

**ततस्ते प्रस्थिताः प्रातश्चित्रकूटं गिरिं गताः ।**
**तत्राऽश्रमं[1] श्रमोपेता अनुरूपममन्वत[2] ॥ ४१ ॥**

**(भा.दी.) तत** इति । ततः यमुनातटात् प्रातः प्रातःकाले प्रस्थिताः प्रयाताः चित्रकूटः चित्रकूटाख्यस्तं गिरिं गताः श्रमेण उपेता इव श्रमोपेताः ते श्रीरामाद्याः, तत्र चित्रकूटे अनुरूपं योग्यं आश्रमो मुनि-निवासस्तं अमन्वत निरूपितवन्तः । मनु अवबोधे लङ् । इदं स्थानमस्माकमावासार्थमुचितमिति निश्चितवन्त इत्यर्थः ॥ ४१ ॥

**(सं.चं.)** तत्राऽश्रमनिर्माणमनुरूपममन्वत । आश्रममित्युटजम् ॥ ४१ ॥

---

१. **'तत्र चित्रकूटगिरौ विद्यमानमाश्रमम्'** इति का.श्री. । अत्राऽश्रममिति मुनिस्थानम् । २. **'अनुकूलममन्वत'**

[१]मन्दाकिनीपरिगतं मन्दानिलहिमं वनम् ।
देवीं देवोऽभिनन्द्यात्र[२] सार्वकामिकमैक्षयत्[३] ॥ ४२ ॥

**(भा.दी.)** **मन्दे**ति । देवः श्रीरामः, अत्र चित्रकूटे, मन्दाकिन्या गङ्गया परिगतं परिवृतम्, अनिलश्च हिमश्च अनिलहिमे, मन्दे स्वल्पे अनिलहिमे यस्मिन् तत्तथा तत्, सर्वे कामा अभीप्सितार्था अस्मिन् सन्तीति सार्वकामिकं वनम्, देवीं सीतां अभिनन्द्य सन्तोष्य ऐक्षयत् दर्शयामास । ईक्षतेर्लङ् ॥ ४२ ॥

**(सं.चं.)** मन्दाकिनीपरिगतम् । रामायणे चित्रकूटं परिगता नदी माल्यवतीति पठ्यते–'सुरम्यमासाद्य तु चित्रकूटं नदीं च तां माल्यवतीं सुतीर्थाम्' (५६.३५) इति । माल्यवत्या एव मन्दाकिनीति नामान्तरं स्यात् । मन्दं वहन्ती अकति कुटिलं यातीति मन्दाकिनी । अक कुटिलायां गतौ । मन्दानिलेन हिमं शीतलम् । सार्वकामिकं सर्वकामसमृद्धम् । देवीमभिनन्द्य नूनं सीताऽत्र रंस्यत इति प्रशस्य ॥ ४२ ॥

शाले विशाले चक्राते पादपैर्गजपातितैः ।
लतावितानैराबद्ध्य पर्णैरास्तीर्य्य राघवौ ॥ ४३ ॥

**(भा.दी.)** **शाले** इति । राघवौ गजैः पातितास्तैः पादपैर्वृक्षैः, विशाले विस्तीर्णे शाले, लतानां वितानानि समूहाः तैः, 'चयसमवायवृन्दसन्दोहसमाजवितानसंहतिः' इति हलायुधः आबध्य, पर्णानि पत्राणि तैः आस्तीर्य आच्छाद्य, चक्राते ॥ ४३ ॥

**(सं.चं.)** विशाले पर्णशाले । लतावितानैः लतानिचयैः पादपानाबद्ध्य । अन्तरा पर्णैराच्छाद्य ॥ ४३ ॥

अशोधयत्[४] स्थलं कृत्वा[५] लक्ष्मणः पर्णशालयोः ।
देवी शाले अलञ्चक्रे मार्त्तिकैरनुलेपनैः[६] ॥ ४४ ॥

**(भा.दी.)** **अशोधयदि**ति । लक्ष्मणः, पर्णरचिते ये शाले तयोः, स्थलं तळं तत्, कृत्वा खननं कृत्वा, अशोधयत् सम्यक् चकार । शुध शौचे लङ् । देवी सीता मृत्तिकामादाय कृतानि मार्त्तिकानि तैः अनुलेपनैः शाले अलञ्चक्रे अलङ्कृतवती ॥ ४४ ॥

---

१. **'मन्दाकिनी नाम काचन नदी । नतु गङ्गा । तस्यास्तीर्णत्वात्'** इति का.श्री. । २. **'देवोऽभिनन्द्याथ'**

३. सर्वत्र प्रचुरः **'सार्वकामिकमैक्षत'** इति पाठः प्रामादिकः । ४. **'व्यशोधयत्'**

५. **'लक्ष्मणः पर्णशालयोः पर्णमण्टपयोः स्थलं मध्यप्रदेशं कृत्वा छित्वा । कृती छेदने । खात्वा, खननं कृत्वेति यावत्'** इति का.श्री. । वैयाकरणास्तु कृन्ततेः त्त्वाप्रत्यये **'कर्तित्वा'** इति रूपमामनन्ति । ६. **'मार्त्तिकैरुपलेपनैः'**

**(सं.चं.)** वासयोग्यं समतळं स्थलं कृत्वा निर्माय पाषाणकण्टकादीनपनीय अशोधयत् । देवी चालश्चक्रे । रामायणानुक्त ममेतत् ॥ ४४ ॥

**रामानुजो रामगिरा हत्वा कृष्णमृगं[1] वने ।**
**जनयित्वाऽग्निमचिराच्छ्रपयित्वा न्यवेदयत्[2] ॥ ४५ ॥**

**(भा.दी.) रामे**ति । रामानुजः लक्ष्मणः, रामगिरा श्रीरामस्य या कृष्णमृगमांसेन हविः कुर्विति गीस्तया, वनं चित्रकूटस्थवनं तस्मिन्, कृष्णश्चासौ मृगश्च तं हत्वा, अग्निं अचिरात् झटिति जनयित्वा शिलाविशेषसङ्घर्षादिना जनयित्वा, श्रपयित्वा पाकं कृत्वा, न्यवेदयत् श्रीरामं प्रति स्वकृतं कर्म विज्ञापितवान् । विद चेतनाख्यान-निवासनेषु लङ् ॥ ४५ ॥

**(सं.चं.)** मथनेन जनयित्वा । श्रपयित्वा पक्त्वा । श्रा पाके । रामाय न्यवेदयत् । विद ज्ञाने णिच् । 'स लक्ष्मणः कृष्णमृगं हत्वा मेध्यं प्रतापवान् । अथ चिक्षेप सौमित्रिः समिद्धे जातवेदसि' (५६.२६) इति च ॥ ४५ ॥

**सतां पतिः[3] ससीतोऽथ स्नात्वा विहितमाचरन् ।**
**जुहाव हविषो भागं बर्हिरिध्मादिभिः[4] क्रमात् ॥ ४६ ॥**

**(भा.दी.) सताम**िति । अथ सतां पतिः श्रीरामः । अनेन सन्मार्गशिक्षकत्वं श्रीरामस्य प्रदर्शितम् । ससीतः सन् स्नात्वा, विहितं सन्ध्यावन्दनादिकर्म आचरन् सन्, बर्हिरिध्मादिभिः, बर्हींषि कुशास्तानि च, इध्मानि समिधस्तानि च, तानि आदीनि येषां तानि तथा तैः द्रव्यैः, 'बर्हिर्नाऽग्नौ नपुं कुशः' इति वैजयन्ती, सह हविषः भाग एकदेशस्तं क्रमः शास्त्रोक्तक्रमस्तस्मात् जुहाव । हु दानादनयोः लिट् ॥ ४६ ॥

**(सं.चं.)** 'बर्हिर्दर्भः कुशः कुथः' इत्यभिधानम् । 'एधः समिदिध्म इत्यभिन्नार्थाः' इति च । हविषो भागं पक्वस्य कृष्णमृगमांसस्यैकदेशम् । 'मृगं हत्वाऽऽनय क्षिप्रं लक्ष्मणेह शुभेक्षण । कर्तव्यः शास्त्रदृष्टो हि विधिर्धर्ममनुस्मर' (५६,२३) इति, 'ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम् । कर्तव्यं वास्तुशमनं सौमित्रे

---

१. **'कृष्णमृगान्'** २. **'न्यवेदयत् रामपुरतः स्थापितवान्'** इति का.श्री. ।

३. **'सीतापतिः ससीतोऽथ'** इति, **'सीतापतिः ससीतोऽयम्'** इति क्वचित् ।

४. **'बर्हिः दर्भमुष्टिः । इध्मं प्रादेशपरिमितः पञ्चदशसमित्समुदायः'** इति का.श्री ।

चिरजीविभिः' (५६.२२) इति, 'तं तु पक्वं समाज्ञाय निष्टप्तं छिन्नशोणितम् । लक्ष्मणः पुरुषव्याघ्रमथ राघवमब्रवीत् । अयं कृष्णः समाप्ताङ्गः शृतः कृष्णमृगो यथा । देवतां देवसङ्काश यजस्व कुशलो ह्यसि' (५६.२७–८) इति च । क्रमात् क्रममनपहाय ॥ ४६ ॥

**निवेद्य वासुदेवाय देवाय स्वात्मने हविः ।**
**पितृभ्योऽथ पवित्रेषु निवापं सजलं[1] ददौ ॥ ४७ ॥**

**(भा.दी.) निवेद्ये**ति । श्रीरामः देवाय स्वात्मने, स्वस्य आत्मा स्वरूपभूतस्तस्मै, स्वाभिन्नायेत्यर्थः, वासुदेवाय हविः कृष्णमृगमांसरूपं हविः निवेद्य समर्प्य, अथ पितृभ्यः पवित्रेषु कुशेषु । 'अस्त्री कुशः कुथो दर्भः पवित्रम्' इत्यमरः । सजलं निवापः पितृतर्पणकरं हविस्तं ददौ ॥ ४७ ॥

**(सं.चं.)** पितृभ्यः पितृदेवतान्तर्गताय स्वात्मने । पवित्रेषु दर्भेषु । 'ऋषौ मन्त्रे कुशे देवे पवित्रम्' इति मङ्खः । 'निवापः पितृदानं स्यात्' इति यादवप्रकाशः । रामायणानुक्तमेतद् रामस्य पितृभोजनम् । ननु जीवति पितरि रामः कथं पितृभोजनं दद्यात्? न पित्रे ददौ । किन्तु पितृभ्यः पितामहादिभ्यो ददौ पूर्वराजेभ्योऽ-जादिभ्यः । एतेन जीवत्पितृकस्यापि पितामहादिश्राद्धकरणं प्रतनानामृषीणामनुमतमिति ज्ञायते । विशेषतः क्षत्रियाणाम् । एवमेतस्यापूर्वप्रमेयस्याऽविष्करणायैव रामायणानुक्तोऽप्ययं प्रसङ्गः कविना निरूपित इति युक्तमुत्पश्यामः ॥ ४७ ॥

**पञ्चयज्ञांश्च[2] यज्ञेशो विधायैवं सलक्ष्मणः ।**
**हविष्यं बुभुजे दिव्यं देव्या पात्रे समर्पितम् ॥ ४८ ॥**

**(भा.दी.) पञ्चे**ति । यज्ञेशः श्रीरामः एवं पञ्च च ते यज्ञाश्च तान्, स्वाध्यायपाठहोमातिथिपूजापितृतर्पणबलि-हरणात्मकपञ्चयज्ञानित्यर्थः, 'पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः । एते पञ्च महायज्ञाः' इत्यमरः । लोकशिक्षार्थं विधाय, सलक्ष्मणः सन्, देव्या सीतया पात्रे भाजनं तस्मिन् समर्पितं परिवेषितं दिव्यं हविष्यं हविश्शेषभूतं तत् बुभुजे । भुज परिपालनाभ्यवहारयोर्लिट् ॥ ४८ ॥

---

१. **'निर्वापं स जलं ददौ'** इति का.श्री. पाठः । तथाहि तद्व्याख्यानम्–**'सः रामः.......अथ हविर्निवेदनानन्तरं पवित्रेषु भूमावास्तृतदर्भेषु निर्वापं पितृतर्पणरूपं जलं ददौ'** इति । **'निवापं च जलं ददौ'** इति क्वचित् ।

२. **'पञ्चयज्ञान् स यज्ञेशो–'**

**(सं.चं.)** 'अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्' इति मानवे । एतेन तत्रत्यानृषीनाहूयातिथिसत्कारपूर्वकं भोजयामासेत्यवगम्यते । रामायणेऽनुक्तमेतदपि प्रमेयम् । हविष्यं हविःशेषम् ॥ ४८ ॥

**परिवेषं[1] सुवेषाऽथ भर्त्तृदेवरयोरिह ।**
**विधाय भर्त्तुरुच्छेषं कान्तैकान्त उपाददे[2] ॥ ४९ ॥**

**(भा.दी.) परी**ति । अथ सु शोभनो वेषोऽलङ्कारो यस्याः सा तथा सीता, भर्ता च देवरो भर्त्रनुजः स च तयोः, परिवेषः परिवेषणं तं विधाय, अन्तो श्रीरामभोजनावसानं तस्मिन्[3], भर्तुः श्रीरामस्य उच्छेष अवशेष-स्तम् । उच्छिष्टमित्यर्थः, कान्ता भार्या सीता इह पर्णशालायां एका सती उपाददे स्वीकृतवती । दातेर्लिट् । एकान्त एकान्तप्रदेशे उपादद इति वा ॥ ४९ ॥

**(सं.चं.)** उच्छेषं भुक्तशेषम् । इदमपि रामायणेऽनुदितम् ॥ ४९–५० ॥

**पर्ण्णशालां विशालां तां रामो राजीवलोचनः ।**
**वैकुण्ठइव वैकुण्ठं प्राविशत् प्रियया समम् ॥ ५० ॥**

**(भा.दी.) पर्णे**ति । राजीववत् कमलवत् लोचने यस्य स तथा श्रीरामः विशालां विस्तीर्णां तां पर्णशालां प्रियया भार्यया समं सह वैकुण्ठो वैकुण्ठलोकस्तं वैकुण्ठइव श्रीहरिरिव प्राविशत् ॥ ५० ॥

**नानाफलप्रसवपत्रगणोपहारं मालिन्युदारसलिलैरुपसर्प्पणं च ।**
**आलोक्य लक्ष्मणसमीरणयोः स्वसेवां रामश्च रामरमणी च मुदं दधाते ॥ ५१ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**अयोद्ध्याकाण्डे नवमः सर्ग्गः ॥**

—०—

**(भा.दी.) नाने**ति । श्रीरामश्च रामरमणी रामभार्या सीता च, नानाविधानि यानि चूतादिफलानि तानि च, प्रसवाः कमलादिपुष्पाणि ते च, पत्राणि पल्लवादीनि तानि च, तेषां गणः समूहः तस्य उपहार आनयनं

१. **'पात्रान्तरे स्थितस्यान्नादेः भोजनपात्रे प्रक्षेपः परिवेषः'** इति का.श्री. ।

२. **'कान्तैका तमुपाददे'** इति, **'कान्ता कान्तमुपाददे'** इति क्वचित् ।

३. अस्मिन् पक्षे–**'कान्ता+एका+अन्ते'** इति प्रतृण्णम् ।

तम्, आनयनात्मिकामित्यर्थः। 'घञः पुंसि' इति पुल्लिङ्गता। मालिन्याः गङ्गायाः। 'मन्दाकिन्याश्च मालिनी' इति विश्वः। उदाराणि परिशुद्धत्वेनोत्कृष्टानि यानि सलिलानि तैः सह उपसर्पणं समीपप्राप्तिश्च तत्, समीपप्राप्त्यात्मिकामित्यर्थः। भावे ल्युट्। नपुंसकता च। लक्ष्मणसमीरणयोः लक्ष्मणवाय्वोः स्वसेवां स्वविषयकसेवां अवलोक्य, मुत् प्रीतिस्तां दधाते प्रापतुः। धातेर्लिट्। चित्रकूटस्थयोः श्रीरामसीतयोः लक्ष्मणस्य फलपुष्पपत्रोदकादानाद्यात्मकानवरतपरमसेवया शैत्यसौरभ्यामान्द्यादिगुणविशिष्टचित्रकूटोपवनपवनानुसेवनेन चाऽनन्दोऽजनीति भावः ॥ ५१ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां**
**भावार्थदीपिकायामयोध्याकाण्डे नवमः सर्गः ॥**

**(सं.चं.)** वसन्ततिलकयोपसंहरति– नानेति। 'पुष्पं प्रसवः कुसुमम्' इत्यभिधानम्। नानाफलप्रसवपत्रगणैरुपहारं सपर्याम्। समीरणः फलादीनि रामपादमूले पातयामास। लक्ष्मणोऽवचित्याऽनिनाय। 'अर्चा पूजा सपर्या स्यादुपहारो बलिः स्मृतः' इत्यभिधानम्। तरङ्गमालिन्याः तीरद्रुममुक्तप्रसवमालिन्याश्च मालिन्या मन्दाकिन्याः माल्यवत्यपराभिधाया उदारैरुत्कृष्टैः सलिलैरुपसर्पणं च। तदप्युपहार इत्येव। समीरणः सुरभिशीतस्वच्छतोयबिन्दुभिः सिञ्चन् राममुपसिषेवे। लक्ष्मणः पूजाद्यर्थं सलिलेनोपससर्प ॥ ५१ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामयोध्याकाण्डे**
**नवमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– ८२९+५१=८८०]

# दशमः सर्ग्गः

**रामदेवविरहानलदूनास्तद्गुणान् जगुरथामृततुल्यान् ।**
**नागराः सवनिताः शिशुवृद्धा[१] मातरोऽस्य जनकः स्वजनाश्च ॥ १ ॥**

**(भा.दी.)** श्रीरामे प्रयाते सति अयोध्यापुरवासिनां तद्वियोगजनितावस्थां वर्णयति– **रामेत्यादि**ना । अथ श्रीरामानुगमनं कृत्वा नगरप्रवेशानन्तरम्, रामश्चासौ देवस्तस्य विरहो वियोगः स एवानलोऽग्निस्तेन दूनाः सन्तप्ताः, नगरे भवा नागरा जनाः, सवनिताः, वनिताभिः स्त्रीभिः सहिताः, शिशुवृद्धाः, अस्य श्रीरामस्य मातरः कौसल्याद्याः, अस्य जनकः पिता दशरथः, स्वजनाः, स्वे स्वकीयाः रामसम्बन्धिनोऽन्ये जनाश्च, ते सर्वे अमृतस्य तुल्यान् सदृशान् तस्य श्रीरामस्य गुणान् जगुः अस्तुवन् । गै शब्दे लिट् ॥ १ ॥

**(सं.चं.)** स्वागतच्छन्दोबद्धेन सर्गेणायोध्यावृत्तान्तमाह । नागराः शिशवोऽपि वृद्धा अपि । सवनिताः शिशवो मातृभिः सह । वृद्धाः जरद्धार्याभिः सह । अस्य रामदेवस्य मातरो जनको बन्धुजनाः परिवारजनाश्च । रवया गौ च स्वागतम् ॥ १ ॥

**रामरूपमखिलेन्द्रियरम्यं दर्शयन् विहसितामृतसारम् ।**
**सद्य एव पिदधासि दृशां नो हा विधे तव दया क्व नु[२] याता ॥ २ ॥**

**(भा.दी.)** एतदेव विशदयति– **रामे**ति । हे विधे दैव, 'विधी तु दैवकालौ च' इति वैजयन्ती । अखिलानां समस्तप्राणिनां इन्द्रियाणि चक्षुरादीनि तेषां रम्यं तत्, विहसितमेव विशिष्टमन्दहास एव अमृतसारो अमृतवरो यस्य तत्तथा तत्, रामरूपं श्रीरामस्य स्वरूपं दर्शयन् त्वं नः दृशो दृष्टयस्तासां सद्य एव पिदधासि तिरोहितं करोषि । अदृश्यं कृतवानसीत्यर्थः । हा खेदे । अपिपूर्वधाधातोर्लट् । 'वष्टि भागुरिरल्लोपम्' इत्यल्लोपः । तव (दया) एतावत्कालपर्यन्तं श्रीरामदर्शनानुकूलकारुण्यं क्व नु कुत्र याता इदानीं गता ॥ २ ॥

---

१. **'सवनिताशिशुवृद्धा–'**

२. **'पूर्वं विद्यमाना तव दया नु इदानीं क्व याता'** इति का.श्री. ।

**(सं.चं.)** कविः स्वयं भक्तिपरवशतया राममहिमानुसन्धानलोलः नागरशोकालापव्याजेन रामरूपं भगवन्तं बहुधा वर्णयति– **रामरूपमित्या**दिना श्लोकदशकेन । अखिलानामखिलानीन्द्रियाणि । चक्षू रामरूपं दिदृक्षते । श्रोत्रं तत्सुषमां शुश्रूषते । त्वगपि तत् पिस्पृक्षति । वाक् तद्गुणान् विवक्षति । नासा तद्गन्धमप्राकृतं जिघ्रासति । मनस्तदेव चिराय चिन्तयति । हृदयं तदेव स्वादंस्वादं द्रवति । इत्येवमखिलेन्द्रियरम्यम् । 'आकुञ्चितकपोलाक्षं सस्वनं निस्वनं तथा । प्रस्तावोत्थं सानुरागमाहुर्विहसितं बुधाः' । विशिष्टं मन्दहसित-मित्येव वा । तदेवामृतसारोऽमृतरसो यत्र तादृशं रामरूपं नो दृशां दर्शयन् इदानीं सद्य एव पिदधासि । 'दुःखे शोके विषादे हा' इति मङ्खः ॥ २ ॥

**पूर्त्तमिष्टमुदितं विदितं वा यद्यदस्ति हि शुभं[1] विहितं नः ।**
**तेन तुष्टिमुपगम्य परात्मा रामदर्शनसुखं प्रदिशेन्नः ॥ ३ ॥**

**(भा.दी.) पूर्तमि**ति । परात्मा सर्वोत्तमः श्रीहरिः, नः अस्माकं सम्बन्धि यत् पूर्त्तं वापीकूपतटाकोत्खननादिकम्, तज्जन्यसुकृतमित्यर्थः, यदि अस्ति । यत् इष्टं यागः यदि अस्ति । यत् उदितं सात्विकहितार्थमुक्तं वचनं यदि अस्ति । यत् विदितं वा भगवत्तत्वज्ञानं वा यदि अस्ति, यत् विहितं कृतं शुभं वा एतद्व्यतिरिक्तदानादिशुभकर्म वा यदि अस्ति । तर्हि तेन पूर्तादिना तुष्टिं सन्तोषं उपगम्य नः अस्मभ्यं श्रीरामस्य यद्दर्शनमवलोकनं तज्जन्यं यत्सुखं तत्प्रदिशेत् दद्यात् ॥ ३ ॥

**(सं.चं.)** पूर्तमिष्टम् । 'पुष्करिण्यः सभा वापी देवतायतनानि च । आरामाश्च विशेषेण पूर्तं कर्म विनि-र्दिशेत्' । 'एकाग्निकर्म हवनं त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते' । उदितं गदितम्, अनुद्वेगकरं सत्यं प्रियं हितं च वचनम् । शास्त्रैर्विदितमवगतं तत्वम् । तत्वज्ञानं वा । एवं यद्यच्छास्त्रविहितं शुभं श्रेयःसाधनं च कर्म कृतमस्ति । परात्मा परमात्मा ॥ ३ ॥

**अत्र सन्निहितमात्मकटाक्षं भाग्यदेव्यगमयद् वनवीथीम् ।**
**तेन तत्र विलसन्ति समस्तश्रीपदानि रघुनाथपदानि ॥ ४ ॥**

**(भा.दी.) अत्रे**ति । भाग्यस्य देवी देवता महालक्ष्मीः, अत्र अयोध्यायां सन्निहितं निक्षिप्तं आत्मनः स्वस्याः यः कटाक्षोऽपाङ्गदर्शनं तम्, येन कारणेन वनानां वीथी पङ्क्तिस्तां अगमयत् प्रापयामास । तेन कारणेन तत्र वनवीथ्यां समस्ताः श्रियः सम्पदः तासां पदानि आश्रयभूतानि रघुनाथस्य पदानि पादलक्षणानि विलसन्ति विराजन्ते । लस श्लेषणक्रीडनयोर्लट् ॥ ४ ॥

---

१. '–दस्ति ह शुभम्'

**(सं.चं.)** भाग्यदेवता रमा एतावन्तमनेहसमयोध्यां कटाक्षयन्त्यासीत् । तेनायोध्याया भाग्यं विचकासामास । सम्प्रति सा स्वकटाक्षमरण्यपथं प्रत्यगमयत् । तेनायोध्याभाग्यमरण्यं जगाम । तेन भाग्यप्रदानि रामपदानि तत्र विहरन्ति लसन्ति । वीथी पन्थाः पङ्क्तिर्वा । 'वीथी पङ्क्त्यध्वनोरपि' इति यादवप्रकाशः ॥४॥

**किं नु[१] तेन सुकृतं कृतमासीन्मार्ग्गजेन तृणगुल्मगणेन ।**
**[२]ब्रह्मरुद्रमकुटोपनिवेश्यं यं परिस्पृशति रामपदाब्जम् ॥ ५ ॥**

**(भा.दी.) किं न्विति** । ब्रह्मा च रुद्रश्च ब्रह्मरुद्रौ, तयोर्ये मकुटे ताभ्यामुप समीपे निवेश्यं निवेशयितुं सेवितुमर्हम्, ब्रह्मरुद्राभ्यां वन्द्यमानमित्यर्थः । रामस्य पदं पादस्तदेवाब्जम्, यं तृणगुल्मगणं परिस्पृशति । स्पृश आमर्शने लट् । मार्गे जातो मार्गजस्तेन, तृणानि च गुल्माश्च तृणगुल्माः, तेषां यो गणस्तेन सुकृतं पुण्यं किं नु किं वा कृतं आसीत्? अस्तेर्लङ् ॥ ५ ॥

**(सं.चं.)** वनमार्गगतेन तृणगुल्मगणेन । सुकृतं पुण्यम् । यं तृणगुल्मगणम् । ब्रह्मरुद्राभ्याम्, किमुतान्यदेवैः, मुकुटे उप उत्कृष्टतया निवेश्यम् ॥ ५ ॥

**रामपादरजसा विरजस्का पावनीभवति सा वनराजिः[३] ।**
**यां करेण करुणाकर आरादिन्दिराकरसखेन निमार्ष्टि ॥ ६ ॥**

**(भा.दी.) रामेति** । करुणाकरः श्रीरामः इन्दिरायाः लक्ष्म्याः करस्तस्य सखा तेन । 'राजाहस्सखिभ्यष्टच्' (अ.सू.५.४.९१) इति टच् । तेन सह देवनात् क्रीडाकरणादित्यर्थः । करेण यां वनराजीं आरात् समीपे निमार्ष्टि सम्मार्जयति । मृजूष् शुचौ । श्रीरामस्य पादौ तयोर्यद्रजः तेन, विगतं रजः रजोगुणो यस्याः सा तथोक्ता, निर्मला सतीत्यर्थः, सा वनराजी वनानां पङ्क्तिः पावनीभवति पवित्रीभवतीत्यर्थः ॥ ६ ॥

**(सं.चं.)** विरजस्का विगतरजोगुणा वनपङ्क्तिः । अर्थात् वितमस्का च । शुद्धसत्वप्रसरा सती पावनी पवित्रा भवति । पावनीभवतीत्येकं वा पदम् । रामपादरजःस्पर्शात् पूर्वमपावनी सम्प्रति पावनीभवति । अभूततद्भावे च्विः । यामिन्दिराकरसखेन स्वकरेण रामो निमार्ष्टि स्पृष्ट्वा पवित्रीकरोति ॥ ६ ॥

---

१. **'नु इदानीं किं सुकृतं पुण्यं कृतमासीत्'** इति का.श्री. ।
२. **'ब्रह्मरुद्रमुकुटोप-'**
३. **'वनराजी'** इति वि.ती.पाठः स्यात् ।

**ता नदीर्न्न भजते भुवने को यासु मज्जति जगत्पतिरेषः[१] ।**
**यत्पदे सपदि सङ्गममात्राज्जाह्नवी [२]शिवशिरोमणिरासीत् ॥ ७ ॥**

**(भा.दी.) ता** इति । जगत्पतिः एषः श्रीरामः यासु नदीषु मज्जति स्नानं करोति । टु मस्जो शुद्धौ लट् । भुवनं लोकस्तस्मिन् कः पुमान् ताः नदीः न भजते न सेवते । भज सेवायां लट् । श्रीरामचन्द्रस्य स्नानात् को वाऽतिशयस्तासामित्यत आह– **यदिति** । जाह्नवी, यत्पदे यस्य त्रिविक्रमरूपिणः श्रीरामस्य पदं पादस्तस्मिन्, सपदि एकवारं केवलं सङ्गमः सङ्गमात्रं तस्मात्, न तु तपश्चरणादिनेत्यर्थः, शिवस्य शिरोमणिः शिरोरत्नमिव, यथा शिरोमणिः सर्वदा धार्यः एवमतिपवित्रत्वादिना सर्वदा धार्येत्यर्थः, आसीत् ॥ ७ ॥

**(सं.चं.)** यासु जगत्पतिर्मज्जति ता नदीः को न भजते सेवते । शिरोमणिरिव शिरोधार्या शिरसोऽलङ्कार-भूता च ॥ ७ ॥

**चारुचीरमचिरादुपयातं प्रेष्ठबन्धुमिव बन्धुरमारात् ।**
**तं जटावलयिनं किल दृष्ट्वा पूजयन्ति मुनयः कृतकृत्याः ॥ ८ ॥**

**(भा.दी.) चार्विति** । चारु मनोहरं चीरं वासो यस्य स तथा तम्, बन्धुरं सुन्दरम् । 'बन्धुरौ नम्रसुन्दरौ' इति वैजयन्ती । जटानां वलयं मण्डलं तदस्यास्तीति तथोक्तस्तम्, अचिरात् शीघ्रेण उपयातं समागतं तं श्रीरामम्, अतिशयेन प्रियः प्रेष्ठः स चासौ बन्धुश्च तमिव, आरात् समीपे दृष्ट्वा, श्रीरामेण कृतं सम्पन्नं कृत्यं कार्यं येषां ते तथा सन्तः मुनयः पूजयन्ति किल । पूज पूजायां लट् ॥ ८ ॥

**(सं.चं.)** चीरं चीवरं मुनीनां वसनम् । आरात् नेदिष्ठं दृष्ट्वा । बन्धुरं नम्रं रम्यं च । 'बन्धूरबन्धुरौ रम्ये नम्रे' इति विश्वः । कृतकृत्या विवृतमुक्तिधाराः ॥ ८ ॥

**चापपाणिमवलोक्य ससीतालक्ष्मणं भुवनसुन्दरमेनम् ।**
**तर्कयन्ति सरतिं रतिनाथं कानने मधुसखं मुनिवध्वः ॥ ९ ॥**

**(भा.दी.) चापेति** । मुनिवध्वः मुनिभार्याः, चापः पाणौ यस्य स तथा तम्, सीता च लक्ष्मणश्च ताभ्यां सहितम्, भुवनेषु सुन्दरम्, एनं श्रीरामम्, कानने वने तस्मिन् अवलोक्य, सरतिः रत्या रतिनाम्न्या भार्यया सहितम्, मधुर्वसन्तः सखा यस्य तम्, रतेः नाथं भर्तारं कामं तर्कयन्ति ऊहयन्ति । तर्क ऊहायां लट् ॥ ९ ॥

---

१. **'जगद्गुरुरेषः'** इति, **'जगद्गतिरेषः'** इति च । **'जगतो गतिः । सज्जनप्राप्यः'** इति का.श्री । २. **'हरशिरोमणि–'**

**(सं.चं.)** मधुर्वसन्तः । स सखा यस्य । तत्सहितमित्येतत् । अत्र मधुरिव लक्ष्मणः ॥ ९ ॥

**यत्र याति रघुसन्ततिकेतुस्तत्र सम्पदतुला न विपत्तिः ।**
**सौख्यमूर्त्तिरिति नैव स शोच्यस्तद्वियोगिजनतैव हि शोच्या॥ १० ॥**

**(भा.दी.) यत्रे**ति । रघोः सन्ततिर्गोत्रं तस्यां केतुरिव ध्वज इव केतुः । 'उत्पातेऽङ्के ध्वजे केतुः' इति वैजयन्ती । रघुगोत्रे श्रेष्ठ इत्यर्थः । यत्र यस्मिन् देशे याति गच्छति । तत्र देशे न विद्यते तुला उपमा यस्याः सा तथा, असदृशीत्यर्थः, सम्पत् ऐश्वर्यम्, विपत्तिः विपत् न इति हेतोः, सुखमेव सौख्यं तत् मूर्तिः शरीरं यस्य स तथोक्तः, सः श्रीरामः शोच्यः अस्माभिः शोचितुमर्हः नैव न भवत्येव । किं तर्हि शोच्यमित्यत आह– तदिति । तस्य यो वियोगः सोऽस्या अस्तीति तथोक्ता, जनानां समूहो जनता, तद्वियोगिनी च सा जनता चेति कर्मधारयः । सैव शोच्या हि ॥ १० ॥

**(सं.चं.)** सदाऽऽनन्दमूर्तिरिति हेतोः स न शोच्यः ॥ १० ॥

**किं धनैः प्रियजनैरथ किं वा[१] किं सुतैः किमपरैरपि हृद्यैः[२] ।**
**स्याम रामगुणकीर्त्तनतृप्ता यावदायुरपि तच्चरणाप्त्यै ॥ ११ ॥**

**(भा.दी.) किमि**ति । धनानि सुवर्णादीनि तैः किं साध्यम्? न किमपि । अथ प्रिया ये बन्धुजनास्तैर्वा नः किम्? सुतैः पुत्रैर्वा किम्? भृत्यैः अपराणि अवराणि तैरपि किम्? तस्मात् वयं तस्य श्रीरामस्य यौ चरणौ तयोराप्तिः प्राप्तिस्तस्यै, आयुः आयुष्यं यावदस्ति तावत्कालपर्यन्तं श्रीरामस्य ये गुणाः तेषां यत्कीर्तनं तेन तृप्ताः सन्तः स्याम भवेम ॥ ११ ॥

**(सं.चं.)** अपरैरन्यैः हृद्यैः सखिभिः । मनोहारिभिर्वस्तुभिर्वा । यावदायुस्तावन्तं कालं रामचरणसेवालाभाय ॥ ११ ॥

**इत्थमुत्थितविरागविवेकास्ते जना हृदि जनार्द्दनमाप्य ।**
**योगिवत् सकलकालमवश्यं निर्न्यिरे सफलमेव हि धन्याः ॥ १२ ॥**

१. **'किं नः किम्'** इति वि.ती.पाठः स्यात् ।

२. **'किमपरैरपि भृत्यैः'** इति वि.ती.पाठः । **'हृद्यैरपरैरपि पदार्थैः किम्? न किमपि । तेषां नश्वरत्वेन मोहहेतुत्वात्'** इति का.श्री. ।

**(भा.दी.)** **इत्थमि**ति । इत्थं उत्थितौ उत्पन्नौ, विरागो वैराग्यं स च, विवेको ज्ञानं स च, तौ येषां ते तथोक्ताः, धन्याः ते जनाः, हृदि मनसि, जनान् दुष्टजनानर्दयतीति जनार्दनस्तं श्रीरामं आप्य, तं स्मरन्त इत्यर्थः, योगिवत् ज्ञानिवत्, सकलश्चासौ कालश्च तम्, फलेन प्रयोजनेन सहितस्तमेव, अवश्यं यथा भवति तथा, निन्यिरे हि नीतवन्तो हि । नीतेर्लिट् ॥ १२ ॥

**(सं.चं.)** अन्यत्र विरागः । राममहिमविषये विवेकः । दुर्जनानर्दयतीति जनार्दनः । जननमर्दयति च । न जायते चार्दयति च संसारमिति च ॥ १२ ॥

**राम रम्यहसितामृत[१] सीते लक्ष्मण क्व नु वने द्रवथाद्य ।**
**हा हतोऽस्मि विरहादिति राजा सुस्वरं स विविधं विललाप॥ १३ ॥**

**(भा.दी.)** इदानीं दशरथविलापं दर्शयति– **रामेत्या**दिना । रम्यं हसितं हास एवामृतं हसितामृतं यस्य स तथा तत्सम्बुद्धिः, हे श्रीराम, हे सीते, हे लक्ष्मण, यूयं अद्य वनमरण्यं तस्मिन् क्व नु कुत्र द्रवथ पर्यटनं कुरुथ । द्रु गतौ लट् । अहं विरहो वियोगस्तस्मात् हतः मृतः अस्मि । हा खेदे । 'हा विषादशुगार्तिषु' इति वैजयन्ती । इति सः राजा सम्यक् स्वरो यथा भवति तथा, विविधं यथा भवति तथा, विललाप परिदेवनं चक्रे । लप व्यक्तायां वाचि लिट् ॥ १३ ॥

**(सं.चं.)** अथ दशरथावस्थामाह– रामेति । हतोऽस्मि मृतप्रायोऽस्मि ॥ १३ ॥

**एकमेकमपि रात्रिविशेषं कल्पकल्पमनयत् पृथिवीशः ।**
**क्लेश एव[२] परमं तप आसीद् रामसंस्मृतिबलाद् बत राज्ञः ॥ १४ ॥**

**(भा.दी.)** **एकमि**ति । पृथिवीशः दशरथः एकं एकमपि रात्रेर्यो विशेषः पूर्वरात्रादिस्तं कल्पस्य कल्पकालस्य कल्पः समानो यथा भवति तथा कल्पकल्पं अनयत् अगमयत् । नीतेर्लङ् । राजर्षेरस्यायं क्लेशस्तपोरूप एवाऽसीदित्याह– **क्लेश** इति । राज्ञः अयं[३] वियोगजनितः क्लेशः, रामस्य संस्मृतिस्तस्या बलं तस्मात्, परमं उत्तमं तपः आसीत् । अस्तेर्लङ् । बत आश्चर्ये । श्रीहरिस्मरणपूर्वकं कायक्लेशादिकं हि तप इत्युच्यते । अयं च क्लेशस्तादृश इति तपोरूप आसीदिति भावः ॥ १४ ॥

१. **'हे हसितामृत, हे रम्य, हे राम'** इति का.श्री. । २.**'क्लेश एष–'** इति वि.ती.पाठः स्यादिति भाति ।
३. **'एषः वियोगजनितः'** इति पाठः स्यादिति भाति ।

**(सं.चं.)** कल्पः ब्रह्मणो दिनम् । ईषदसमाप्तः कल्पः कल्पकल्पः । कल्पतुल्य इत्यर्थः । 'ईषदसमाप्तौ कल्पब्-देश्य-देशीयरः' (अ.सू.५.३.६७) इति पाणिनिस्मरणात् तुल्यार्थे कल्पप्रत्ययः । रात्रीणां विशेषा विघटिका-घटिकाद्याः । बतेति विस्मयते । 'बत त्वामन्त्रणेऽद्भुते । तोषे खेदे कृपायां च' इति यादवप्रकाशः ।।१४।।

**तं रथं समधिरुह्य सुमन्त्रः शोकशोषितमनाः पुरमायात् ।**
**तं परीत्य जनता नगरस्था तत्र राममनवेक्ष्य रुरोद ॥ १५ ॥**

**(भा.दी.)** तमिति । सुमन्त्रः तं रामसम्बन्धिनं रथं समधिरुह्य, शोकेन शोषितं खिन्नं मनो यस्य स तथा सन्, पुरमयोध्यापुरं तत् आयात् । यातेर्लङ् । नगरे तिष्ठतीति नगरस्था, जनानां समूहो जनता, तं रथं परीत्य परिवार्य तत्र रथे श्रीरामं अनवेक्ष्य रुरोद । रुदिर् अश्रुविमोचने लिट् ॥ १५ ॥

**(सं.चं.)** तं रथं येन रामं वनं निनाय । जनता । 'ग्रामजनबन्धुसहायेभ्यस्तल्'[१] (अ.सू.४.२.४३) ।।१५।।

**राघवस्य ननु मन्त्रिवरस्त्वं त्यक्तवानसि वने क्व नु रामम् ।**
**दुःसहामिति गिरं परिशृण्वन्[२] बाष्पवान् नृपगृहं प्रविवेश ॥ १६ ॥**

**(भा.दी.)** **राघवस्ये**ति । त्वं राघवस्य दशरथस्य मन्त्रिषु वरो ननु श्रेष्ठो ननु । दशरथो हि कैकेय्यधीनो भूत्वा श्रीरामं वनं प्रति प्रेषितवान् । त्वं च तदनुकूलतया रात्रावस्मद्वञ्चनं कृत्वा नीतवानसीत्याक्षेपः । श्रीरामं वने क्व नु कुत्र त्यक्तवान् असि? अस्तेर्लट् । सः सुमन्त्रः सोढुमशक्या दुःसहा तां इति एवमादि गिरं परिशृण्वन् परितः शृण्वन् सन्, बाष्पः अश्रु अस्यास्तीति बाष्पवान् सन्, नृपस्य दशरथस्य यद्गृहं मन्दिरं तत् प्रति प्रविवेश । विशतेर्लिट् ॥ १६ ॥

**(सं.चं.)** बाष्पवान् अश्रुपूर्णाक्षः । 'नृपगृहं स विवेश' इत्यपि पाठः स्यात् ॥ १६ ॥

**रामदूतमवलोक्य सुमन्त्रं मूर्च्छितो नरपतिः स मुहूर्त्तम् ।**
**वल्लभाशतवृतोऽथ ससञ्ज्ञः पृष्टवान् सपदि राघववृत्तम् ॥ १७ ॥**

**(भा.दी.)** **रामे**ति । मुहूर्तो मुहूर्तकालस्तम्, निरन्तरमुहूर्तकाल इत्यर्थः, मूर्च्छितः, वल्लभानां दयितानां शतानि तैः वृतः परिवृतः, नरपतिः राजा अथ ससञ्ज्ञः सन्, सञ्ज्ञया प्रबोधेन सहितः सन्, रामदूतं श्रीरामस्य वाक्यस्य हर्तारं सुमन्त्रं अवलोक्य सपदि श्रीराघवस्य श्रीरामस्य वृत्तं चरित्रं पृष्टवान् विचारितवान् ।।१७।।

---

१. जयादित्यपाठोऽयम् । **'ग्रामजनबन्धुभ्यस्तल्'** इति पतञ्जलिपाठः ।

२. **'गिरं पथि शृण्वन्'** । **'पथि मार्गे शृण्वन्'** का.श्री. ।

**(सं.चं.)** रामदूतम् आहृतरामसन्देशम् । वल्लभाशतवृतः । अर्धसप्तशतभार्याभिः कौसल्यया सुमित्रया च वृतः । कैकेयी तु तत्र नाऽस । 'नेह तिष्ठति कैकेयी विश्रब्धं प्रतिभाष्यताम्' (५७.३१) इति हि सुमन्त्रवचनं रामायणे ॥ १७ ॥

**राघवस्य रमणीयमुदन्तं कीर्त्तयन् स जनतापमुदास ।**
**[१]वर्षुकोऽम्बुदइवाम्बु सुमन्त्रो रामवाचमपि तावदुवाच ॥ १८ ॥**

**(भा.दी.) राघवस्येति** । राघवस्य श्रीरामस्य, रमणीयं मनोहरम्, उदन्तो वृत्तान्तस्तम्, कीर्तयन् सन्, सः सुमन्त्रः, जनानां तापः सन्तापस्तम्, वर्षुकः वर्षणशीलः अम्बुदः मेघ इव, उदास निराकृतवान् । असु क्षेपणे लिट् । सः सुमन्त्रः तावत् तदा वर्षुकः अम्बुदः अम्बिव उदकमिव सकलहितकरीं श्रीरामवाचमपि उवाचेत्यन्वयः । वचेर्लिट् ॥ १८ ॥

**(सं.चं.)** वर्षुको वर्षणशीलोऽम्बुद । तच्छीलार्थे उकञ् । अम्बु, यथा वर्षन् यथा जनतापमुदस्यति तथा सुमन्त्रः राघवोदन्तं कीर्तयन्नन्तःपुरजनतापमुदास । रामवाचमपि तावत् साकल्येनोवाच । 'यावत् तावच्च साकल्यमानावध्यवधारणे' इति यादवप्रकाशः । अम्बुदइवेति उभयत्रापि शक्यमन्वेतुम् ॥ १८ ॥

**नन्दयिष्यति नरेन्द्र भवन्तं नन्दनः समयमेनमतीत्य ।**
**त्वां सदा परिचरन्ननुरागात् साधु शास्तु भरतः किल राज्यम् ॥ १९ ॥**

**(भा.दी.) नन्देति** । हे नरेन्द्र दशरथ, त्वां सदा अनुरागः स्नेहः तस्मात् परिचरन् सेवां कुर्वन् सन्, नन्दनः श्रीरामः एनं चतुर्दशवर्षेषु वनवासलक्षणम्, समयः सङ्केतस्तम्, अतीत्य भवन्तं नन्दयिष्यति । नदि हर्षे लृट् । भरतः राज्यं तत् साधु सम्यक् यथा भवति तथा शास्तु किल । शासु अनुशिष्टौ लोट् । इति रामनियोग इत्युत्तरत्र सम्बन्धः ॥ १९ ॥

**(सं.चं.)** एनं चतुर्दशवत्सरान्तं समयं कालमतीत्य । समयं स्वप्रतिज्ञां वा । त्वां सदाऽनुरागात् परिचरन् भरतः शास्तु ॥ १९ ॥

**वन्दते भुवनवन्द्यपदस्त्वां सुन्दरी च मिथिलेन्द्रसुता सा ।**
**लक्ष्मणश्च परितप्तमनास्ते हेळनेन महिळाविहितेन ॥ २० ॥**

१. 'वार्षिकोऽम्बुद–'

**(भा.दी.) वन्दत** इति । भुवनेषु लोकेषु वन्द्ये पदे पादौ यस्य स तथोक्तः, श्रीरामः त्वां वन्दते नमस्करोति । वन्दतेर्लट् । मिथिलेन्द्रस्य जनकस्य सुता सुन्दरी मनोहरा सा सीता च वन्दते । महिळया स्त्रिया कैकेय्या विहितं कृतं तेन, हेळनेन 'असमञ्जसवद् रामो ज्येष्ठोऽपि त्यज्यताम्' इत्यादिश्रीरामावज्ञया परितप्तं मनो यस्य स तथा लक्ष्मणश्च ते तुभ्यं वन्दते ॥ २० ॥

**(सं.चं.)** भुवनवन्द्यपदो रामस्त्वां वन्दते । सा, या रामेण सह वनं जगाम, सा मिथिलेन्द्रसुता च त्वां वन्दते । एका मिथिलेन्द्रसुता गृह एवाऽस्ते किलोर्मिळा । लक्ष्मणश्च वन्दते । अथापि न प्रसन्नतया । किन्तु परितप्तमनाः । हेळनमवज्ञानम् । 'हेडृ अनादरे' इति हि धातुः । महिळया कैकेय्या कृतेन राज्यभ्रंशनरूपेणावज्ञानेन, महिळानिमित्तं त्वया कृतेन वा, परितप्तमनाः । असहायकतया कोपसमानाधिकरणं दुःखं परितापः ॥ २० ॥

**राममातरुपचर्य्य सदा त्वं रामतातमखिलं त्यज शोकम् ।**
**राम एष्यति मुदे तव सत्यं रम्य एष ननु रामनियोगः ॥ २१ ॥**

**(भा.दी.) रामे**ति । हे राममातः कौसल्ये, त्वं श्रीरामतातं श्रीरामस्य पितरं दशरथं सदा उपचर्य सेवित्वा, अखिलम्, शोको दुःखं तम्, त्यज परित्यज । त्यज विसर्गे लोट् । तव मुद् सन्तोषस्तस्यै श्रीरामः एष्यति आगमिष्यति । इण् गतौ लृट् । एतद्वचः सत्यम् । रम्यः एषः मदुक्तः रामनियोगः श्रीरामस्य नियोग आज्ञारूपं वचः ॥ २१ ॥

**(सं.चं.)** रामतातमुपचरन्ती शोकं त्यज । रम्य इति रम्योदर्क इत्यर्थः ॥ २१ ॥

**ताम्यति स्म वनमम्बुजिनीभिः[१] कस्य रामविरहेण न शोकः ।**
**[२]स्याच्चराचरगतिस्तव सूनुर्म्मानदेति निजगाद सुमन्त्रः ॥ २२ ॥**

**(भा.दी.) ताम्यती**ति । वनं अम्बुजिनीभिः पद्मिनीभिः पद्माकरैः सरोवरैः सह ताम्यति स्म ग्लानिं गच्छति स्म । तमु ग्लानौ लट् । खिन्नमभवदित्यर्थः । श्रीरामस्य विरहो वियोगस्तेन कस्य चेतनस्य शोकः न स्यात्? मानं बहुमानं सत्कारं ददातीति मानदस्तत्सम्बुद्धिः, हे मानद दशरथ, तव सूनुः श्रीरामः, परं चापरं च परापरे तयोर्गतिः आश्रयः स्यात् । सुमन्त्रः इति (नि)जगाद ॥ २२ ॥

---

१. **'भ्राम्यति स्म वनमम्बुजनाभः'** २. **'स्यात् परापरगति–'** इति वि.ती.पाठः ।

**(सं.चं.)** अम्बुजनीभिः कमलसरसीभिः सह वनमपि ताम्यति रामविरहेण, यदा स वनान्तरं याति । यतः स चराचरगतिः ॥ २२ ॥

**राम वत्स विपिने क्व नु शेषे कुत्र तन्वि परिताम्यसि सीते ।**
**क्वाऽसि लक्ष्मण[1] सुतेति रुदन्तौ स्माऽह रामपितरावथ सूतः ॥ २३ ॥**

**(भा.दी.) रामे**ति । अथ सूतः सुमन्त्रः, हे राम, हे वत्स, विपिनं वनं तस्मिन् क्व नु कुत्र शेषे शयनं करोषि? शीङ् स्वप्ने लट् । हे तन्वि कोमले, हे सीते, कुत्र परिताम्यसि परितप्यसे? तमु ग्लानौ लट् । हे लक्ष्मण, हे सुत, क्व नु असि? इति रुदन्तौ रामस्य पितरौ कौसल्यादशरथौ प्रति आह स्म । ब्रूतेर्लट् ॥ २३ ॥

**हे नृदेव नरदेवि[2] न तापो राघवे निजसुखामृतपूर्णे ।**
**नो भयं स्वबलधारितलोके सर्वसद्गुणनिधौ न हि दोषः ॥ २४ ॥**

**(भा.दी.) हे** इति । हे नृदेव राजन्, हे नरदेवि नरदेवस्य भार्ये कौसल्ये, निजं स्वस्वरूपभूतं यत्सुखं तदेवामृतं तेन पूर्णे, हेतुगर्भविशेषणमेतत्, राघवे श्रीरामे तापः न शङ्क्यः । स्वस्य यद्बलं तेन धारिताः धृताः लोकाः भूरादयो येन स तथा तस्मिन् श्रीरामे भयं नो शङ्क्यम् । सर्वे समस्ताः सन्तो निर्दुष्टा ये गुणाः स्वातन्त्र्यादयस्तेषां निधौ आश्रये श्रीरामे दोषः दुःखादिदोषः न हि, इत्याहेति पूर्वेण सम्बन्धः ॥ २४ ॥

**(सं.चं.)** हे नृदेव राजन्, हे नरदेवि राज्ञि कौसल्ये, राघवे न तापः शक्यसम्भवः । अतस्तद्विषये भवद्भ्यामपि न शोकः कार्यः । नो नैव । उरवधारणे । न हि न सम्भवति हि ॥ २४ ॥

**न प्रताम्यति न सीदति सीता सौमनस्यमपि नैव जहाति ।**
**राममानसमिता मलहीनं पद्मपाळिरिव हन्त हसन्ती ॥ २५ ॥**

**(भा.दी.) ने**ति । मलेन रागादिदोषेण हीनं रहितम्, श्रीरामस्य मानसं मनस्तत्, इता गता, तेनानुगृहीतेत्यर्थः, हसन्ती ग्लान्यादिदोषराहित्येन हासं कुर्वन्ती सीता, मलहीनं निर्मलम्, रामं मनोहरम्, यन्मानसं मानससरोवरं तत् इता प्राप्ता, पद्मपाळिरिव, पद्मानां पाळिरिव पङ्क्तिरिव । 'पाळिः स्त्र्यस्त्यङ्कपङ्क्तिषु'

---

१. 'लक्ष्मण बतेति'

२. 'हे नृदेवि नरदेव न तापो–'

इत्यमरः । न प्रताम्यति न ग्लानिं गच्छति । तमु ग्लानौ । न सीदति न नश्यति । षद्लृ विशरणगत्यवसादनेषु । सुमनसो भावः सौमनस्यं तदपि, मनःप्रसन्नत्वमपीत्यर्थः, नैव जहाति नैव त्यजति । ओ हाक् त्यागे लट् । हन्त हर्षे ॥ २५ ॥

**(सं.चं.)** न प्रताम्यति न ग्लायति । ग्लानिरिति हर्षक्षय उच्यते । सीता कदाऽप्यहृष्टा न भवतीत्येतत् । नापि सीदति विषादमनुभवति । सौमनस्यं मनःप्रसादमपि न जहाति । रामाख्यं मलहीनं निर्मलं मानससरोवरं गता । रामचन्द्रमनसा सङ्गता च । हसन्ती विकसन्ती मानससरोगता पद्मपङ्क्तिरिव । 'पाळिः कर्णलतायां स्यात् प्रदेशे पङ्क्तिचिह्नयोः' इत्यजयः । पद्मपाळिरपि मानसगा न ग्लायति, न सीदति, स्वीयं सुमनस्त्वं न जहाति । पद्मे विकसनह्रासो ग्लानिः । इति 'ముదుడు' भाषायाम् । शोभाविरहः सादः । इति 'బాడు' भाषायाम् ॥ २५ ॥

**रामपादमुपसेव्य कृतार्थो लक्ष्मणः पुरुषलक्षणदक्षः ।**
**शोच्यता न खलु तेषु ततः स्यान्निर्य्ययाविति निगद्य सुमन्त्रः ॥ २६ ॥**

**(भा.दी.) रामेति** । पुरुषलक्षणदक्षः, पुरुषस्य यल्लक्षणं चिह्नं तेन दक्ष इव मुनिरिव दक्षः । 'मुनिकुक्कुटयोर्दक्षः' इति हलः । निगृहीतेन्द्रियत्वादिना मुनिवद्धर्तमान इत्यर्थः । यद्वा पुरुषस्य यानि लक्षणानि अङ्गसम्पदस्तैर्निमित्तैर्दक्षः समर्थः । इदं लक्षणवत्त्वं शोच्यताभावे हेतुः । दुर्लक्षणनिमित्ता हि दुःखप्राप्तिः । यद्वा पुरुषस्य पूर्णषड्गुणस्य श्रीरामस्य यानि लक्षणानि जगत्कर्तृत्वादीनि तद्विचारविषये दक्षः समर्थः, लक्ष्मणः श्रीरामस्य यः पादस्तं उपसेव्य, कृतः अर्थः प्रयोजनं येन स तथा । तेभ्य इति ततः, श्रीरामसीतालक्ष्मणेषु प्रतिपादितहेतुभ्यः, तेषु श्रीरामादिषु शोच्यता न स्यात् खलु, न भवेत् खलु, इति सुमन्त्रः निगद्य निर्ययौ, दशरथमन्दिरात् स्वगृहं प्रति जगाम ॥ २६ ॥

**(सं.चं.)** अनितरसाधारणमुत्कृष्टं सेवनमुपसेवा । कृतार्थस्तृप्तः । पुरुषलक्षणं पौरुषम् । तेनाऽत्मरक्षणे दक्षः । तेषु सीतारामलक्ष्मणेषु ॥ २६ ॥

**हा हताऽस्मि नरनाथ[1] बताहं मत्सुतस्य विरहानलदूना ।**
**त्वं रमस्व मम कान्त सपत्न्येत्यत्र रामजननी विललाप ॥ २७ ॥**

१. 'नरदेव बताहम्'

**(भा.दी.) हा हते**ति । हे नरनाथ राजन् दशरथ, मम सुतो मत्सुतः श्रीरामः, तस्य विरह एवानलोऽग्निस्तेन दूना परितप्ता, अहं हता मृता अस्मि । बत खेदे । हे कान्त भर्तः, त्वं मम सपत्न्या प्रतिपक्षभूतया कैकेय्या सह रमस्व । रमु क्रीडायां लोट् । इति अत्र दशरथसमीपे रामजननी श्रीराममाता कौसल्या विललाप । रप लप व्यक्तायां वाचि लिट् । हा खेदे ॥ २७ ॥

**(सं.चं.)** हताऽस्मीति दुःखोद्गारः । न तत्र शब्दार्थान्वेषणा । प्रलापो हि सः । व्यर्थं मे जीवन-मित्येतत् । अत्र मम अन्तःपुरे, अस्मिन् विषमेऽवसरे ॥ २७ ॥

**देवि मैवमभिधेहि सती[1] त्वं मा क्षतं मम मनोऽथ च भिन्धि ।**
**राममातरुपसंस्पृश दोर्भ्यां मां बतेति नरदेव उवाच ॥ २८ ॥**

**(भा.दी.) देवी**ति । हे देवि कौसल्ये, सती पतिव्रता त्वं एवं मा अभिधेहि मा वद । धाञो लोट् । क्षतं रामवियोगेन पूर्वमेव क्षुण्णं मम मनः, अथ च पुनरपि, मा भिन्धि मा विदारय । भिदिर् विदारणे लोट् । हे राममातः कौसल्ये, दोषौ हस्तौ ताभ्यां मां उपसंस्पृश परिमार्जय । स्पृश आमर्शने लोट् । बत खेदे । इति नरदेवः दशरथः उवाच ॥ २८ ॥

**(सं.चं.)** निकटमुपेत्य, अविरळतया गाढं स्पर्शनमुपसंस्पर्शनम् । गाढमुपगूहस्वेत्यर्थः ॥ २८ ॥

**वल्लभ प्रलपितं बहुशोकोन्मत्तया ननु मया न विवेकात् ।**
**हा क्षमस्व सुजनेति गदन्ती तत्र राजमहिषी[2] प्रणनाम ॥ २९ ॥**

**(भा.दी.)** वल्लभेति । हे सुजन हे सज्जन, वल्लभ प्रिय दशरथ, बहुलो यः शोकः, तेन उन्मत्तया भ्रान्तया, बहुशोकपरवशयेत्यर्थः । मया प्रलपितं निरर्थकं वाक्यमभिहितम् । 'प्रलापोऽनर्थकं वचः' इत्यमरः । विवेकः पूर्वोत्तरविमर्शस्तस्मात् न भवति ननु । त्वं क्षमस्व । क्षमूष् सहने लोट् । हा खेदे । इति गदन्ती सती, मह्यते पूज्यते सर्वैरिति महिषी, राज्ञो महिषी राजमहिषी, राज्ञा सहाभिषिक्तेत्यर्थः, कौसल्या तत्र मन्दिरे प्रणनाम ॥ २९ ॥

**(सं.चं.)** नविवेकादित्येकं वा पदम् । हे सुजन, सौजन्यशील राजन्, सत्यप्यपराधे क्षमाशीलता सौजन्यम् । ततः प्रार्थ्यसे क्षमस्व मेऽपराधमिति । इति गदन्ती सुजना राजमहिषी वा । अकस्मात् सञ्जातेऽप्यपराधे सपदि पश्चात्तापप्रकटनमत्र सौजन्यम् । तत्र स्वस्याविमृश्यवादिताविषये क्षमापयन्ती राजानं प्रणनाम ॥२९॥

१. 'सति त्वम्' २. 'रामजननी'

**पञ्चकल्पसदृशाः प्रभुपित्रोः पञ्च रामरहिता दिवसास्ते ।**
**पञ्चमेऽह्नि विगतेऽथ सुमित्रा नक्तमभ्यधित तौ विलपन्तौ ॥ ३० ॥**

**(भा.दी.)** **पञ्चेति** । रामरहिताः पञ्च ते दिवसाः, प्रभुपित्रोः, माता च पिता च पितरौ, प्रभोः पितरौ तयोः । 'मातापितरौ पितरौ' इत्यमरः । पञ्च च ते कल्पाश्च पञ्चकल्पाः, तेषां सदृशाः समानाः आसन् । अथ पञ्चमे, अहः दिवा तस्मिन्, विगते सति, सुमित्रा नक्तं रात्रौ, विलपन्तौ (तौ) कौसल्यादशरथौ प्रति अभ्यधित उवाच । धात्रो लुङ् ॥ ३० ॥

**(सं.चं.)** प्रभो रामस्य पित्रोः मातापित्रोः । स च स च तौ । अभ्यधित अवादीत् ॥ ३० ॥

**नो कटु स्पृशति यं कटुरश्मिर्य्यत्र वात उत वाति न तीक्ष्णम् ।**
**विश्वमानमति यं[१] बत रामं नैष शोच्य[२] इति शोभननीतिः ॥ ३१ ॥**

**(भा.दी.)** वचनप्रकारमेव दर्शयति– **नो कट्विति** । कटवस्तीक्ष्णा रश्मयो यस्य स तथोक्तः सूर्यः, यं श्रीरामम्, कटु तीक्ष्णं यथा भवति तथा, नो स्पृशति न स्पृशति । स्पृश आमर्शने लट् । वातः यत्र श्रीरामे तीक्ष्णं यथा भवति तथा न वाति उत । वा गतिगन्धनयोर्लट् । विश्वं जगत् यं श्रीरामं प्रति आनमति सम्यक् नम्रीभवति बत, एषः श्रीरामः शोच्यः शोचितुमर्हो न भवति इति शोभना नीतिः समुचिता नीतिः ॥ ३१ ॥

**(सं.चं.)** कटुरश्मिः उष्णरश्मिः सूर्यः । वात उत वातोऽपि । 'भीषाऽस्माद् वातः पवते भीषोदेति सूर्यः' इति हि श्रुतिः । न शोच्य इति शोभना नीतिः । न्यायोचितं वर्तनमित्यर्थः । बतेति सन्तोषे सम्बोधने वा । 'बत खेदेऽनुकम्पायां हर्षे सम्बोधनेऽद्भुते' इत्यजयः ॥ ३१ ॥

**आपदं समपनेष्यति रामः सम्पदं ध्रुवमुपैष्यति देवः ।**
**यद्यपास्यति रविस्तिमिरौघं यद्यसावुदयमेति सुतेजाः ॥ ३२ ॥**

**(भा.दी.)** **आपदमिति** । यदि रविः तिमिराणामन्धकाराणामोघः समूहस्तं अपास्यति निराकरोति । असु क्षेपणे लट् । तद्वदेव श्रीरामः राक्षसादिभ्यो या आपत् तां समपनेष्यति निराकरिष्यति । यदि सु शोभनं तेजो यस्य स तथोक्तः सूर्यः, उदय उदयपर्वतस्तं एति, तर्हि देवः श्रीरामः राज्यादिरूपा या सम्पत् ताम्, ध्रुवं निश्चयो यथा भवति तथा, उपैष्यति प्राप्स्यति ॥ ३२ ॥

१. 'यं तव रामम्'    २. 'नैव शोच्य–'

**(सं.चं.)** यदि रविस्तिमिरौघमपास्यति तर्हि रामो वनवासभवामापादमपनेष्यति । रवेस्तिमिरौघनाशनवद् रामस्याऽपदपनयनमपि सहजं निश्चितं चेत्यर्थः । यद्ययं तेजस्वी रविरुदयमेति तर्हि देवो रामोऽपि राज्यसम्पदं ध्रुवमुपैष्यति । रामस्य पुना राज्यप्राप्तिरपि सूर्यस्य पुनरुदयवत् निश्चितेत्यर्थः ॥ ३२ ॥

**जानकी जगति धन्यतमाऽसाविन्दिरैव ननु सुन्दरपत्नी ।**
**नानुशोकपदमेवमवश्यं लक्ष्मणः स हि तयोः प्रियदासः ॥ ३३ ॥**

**(भा.दी.) जानकी**ति । जगति धन्यतमा अतिशयेन श्लाघ्यगुणा, सुन्दरस्य श्रीरामस्य पत्नी, असौ जानकी इन्दिरैव ननु, महालक्ष्मीरेव हि । अतः एवं श्रीरामवदेव अवश्यं सर्वथा अनुशोकस्य पदमास्पदं न । लक्ष्मणः तयोः सीतारामयोः हि यस्मात् प्रियः दासः प्रीतिविषयो भृत्यः, अतः तयोः परमदयास्पदत्वात् अनुशोकपदं नेति सम्बन्धः ॥ ३३ ॥

**(सं.चं.)** धन्यतमा यतोऽसाविन्दिरैव । यस्मात् प्रियो दासः तस्मान्नानुशोकपदम् निरन्तरः शोकोऽ-नुशोकः । भूतमनुस्मृत्य शोकोऽनुशोकः ॥ ३३ ॥

**शान्तयोरिति शुभेन सुमित्रासान्त्वितेन बत[१] राघवपित्रोः ।**
**शोकवह्निरथ चोषसि निद्राभस्मना क्षणमभूदुपगूढः ॥ ३४ ॥**

**(भा.दी.) शान्तयोरि**ति । अथ च राघवपित्रोः कौसल्यादशरथयोः इति शुभेन, सुमित्रायाः सान्त्वितं सान्त्ववचनम्, तेन शान्तयोः विलापाद् विनिवृत्तयोः सतोः, उषः उषःकालस्तस्मिन्, शोक एव वह्निः, निद्रैव भस्म तेन, क्षणः क्षणकालस्तम्, क्षणकाल इत्यर्थः । उपगूढः तिरोहितः अभूत् । बत खेदे । क्षणमात्रं तदा निद्रा समागादित्यर्थः ॥ ३४ ॥

**(सं.चं.)** सुमित्रायाः सान्त्वितेन सान्त्वनेन शान्तदुःखयोः । रामायणेऽनुक्तोऽयं सुमित्राप्रसङ्गः । शोक-वह्निः निद्राभस्मना क्षणकालमुपगूढः पिहितो बभूव ॥ ३४ ॥

**षष्ठ एव[२] दिवसेऽथ निशीथे शोकशोषितमना नरदेवः ।**
**संस्मरन् स्वकृतदुष्कृतवीर्य्यं राममातरमवेक्ष्य जगाद ॥ ३५ ॥**

---

१. **'बत कष्टेन शान्तयो–'** इति का.श्री. ।

२. **'षष्ठ एष दिवसे'** इत्यपि वि.ती.पाठः स्यात् । **'एषः नरदेवः'** इति प्रतीकग्रहणात् । **'दिवसो दिनं तस्मिन्नेव'** इत्येवकारस्यापि ग्रहणात् सन्देह एव शरणम् । **'षष्ठ एव दिवसे तु'** इति कचित् ।

**(भा.दी.) षष्ठ** इति। अथ षष्ठे, दिवसो दिनं तस्मिन्नेव, तत्रापि निशीथो मध्यरात्रस्तस्मिन्, शोकेन शोषितं सन्तप्तं मनो यस्य स तथा, एषः नरदेवः राजा दशरथः, स्वेन कृतं यद्दुष्कृतं पापकर्म तस्य वीर्यं सामर्थ्यं तत् संस्मरन् सन्, राममातरं कौसल्यां अवेक्ष्य जगाद ॥ ३५ ॥

**(सं.चं.)** अत्र दिवस इति नाहर्मात्रम् । किन्तु षष्टिघटीपरिमितः कालः । 'निशीथे' इति वचनात् । षष्ठे दिवसे अथ अहरपगमानन्तरं निशीथे अर्द्धरात्रे च सति । स्वकृतं यद् दुष्कृतं दुरितं तस्य वीर्यं प्रभावम् । राममातरमवेक्ष्य सुमित्रां चावेक्ष्य । 'इति रामस्य मातुश्च सुमित्रायाश्च सन्निधौ । राजा दशरथः शोचन् जीवितान्तमुपागमत्' (६४.७८) इति च ॥ ३५ ॥

**ईश्वरः खलु शुभाशुभमूलं भावयेत् स हि[१] सुखासुखभोगम् ।**
**अत्र जन्मनि परत्र पुनर्वा तन्वि तत्र हि निदर्शनमेतत् ॥ ३६ ॥**

**(भा.दी.) ईश्वर** इति । इह जगति, शुभं शुभकर्म तच्च, अशुभं अशुभकर्म तच्च, तयोः मूलं कारणम्, ईश्वरः खलु, सर्वजगदीश्वरः श्रीनारायणः खलु । कुतो वा स मूलमित्यत आह– **अत्रे**ति । सः श्रीहरिः सुखं च (असुखं) दुःखं च तयोर्भोगोऽनुभवस्तम्, अत्र जन्मनि, यज्जन्मनि शुभादिकं करोति तस्मिन् जन्मनि, परत्र वा पुनः परस्मिन् जन्मनि वा, भावयेत् सम्पादयेत् । तत्र उक्तविषये हे तन्वि मनोहरे कौसल्ये, एतत् वक्ष्यमाणं निदर्शनं दृष्टान्तो हि ॥ ३६ ॥

**(सं.चं.)** ईश्वरः खलु शुभाशुभमूलम् । 'एष ह्येव साधु कर्म कारयति । एष ह्येवासाधु कर्म कारयति' इति हि श्रुतिः । स हि स एव सुखासुखभोगं भावयेत् जनयेत् । कदा? अत्र जन्मनि क्वचित् । क्वचित् पुनः परत्र अन्यजन्मनि । तत्र पुनरत्रैव जन्मनि भवतीत्यत्र विशिष्य निदर्शनमेतत् ॥ ३६ ॥

**शब्दवेधपटुना मृगयायां तिष्ठतोषसि वने द्विपबुद्ध्या[२] ।**
**कुम्भमम्भसि[३] निमज्जितवान् द्राक् सूदितो ननु मया मुनिसूनुः ॥ ३७ ॥**

**(भा.दी.) शब्दे**ति । शब्दात् ध्वनिमात्रात् यः वेधः ताडनं तत्र पटुना समर्थेन, लक्ष्यमदृष्ट्वाऽपि यतः शब्दः श्रूयते तस्य भेदने सामर्थ्यवतेत्यर्थः, उषः उषःकालस्तस्मिन्, वनमरण्यं तस्मिन् तिष्ठता मया, मृगयायां

१. 'भावयेदिह सुखा–' । 'शुभाशुभमूलम् । पुण्यपापयोः कारणम् । स कारयेत् पुण्यमथापि पापमित्यादि' श्रुतिप्रसिद्धेः । स ईश्वर एव इह लोके सुखासुखभोगं सुकृतदुष्कृतफलरूपसुखासुखविषयकानुभवं भावयेत् सम्पादयेत्, प्रेरयेदिति यावत् । 'सुखं दुःखं भवोऽभावो भयं चाभयमेव च । भवन्ति भावा भूतानां मत्त एव पृथग्विधाः', 'पुण्येन पुण्यं लोकं नयति पापेन पापम्' इत्यादेः' इति का.श्री. ।

२. 'बनद्विपबुद्ध्या'

३. 'मातापित्रोः स्नानार्थं उदकेन कुम्भं पूरितवान्' इति का.श्री. ।

मृगहननक्रियायां क्रियमाणायां सत्याम्, कुम्भो घटस्तं अम्भसि द्राक् क्षिप्रं निमज्जितवान् निमज्जनं कुर्वन्, मुनिसूनुः कस्यचित् मुनेः पुत्रः, द्विप इति गज इति या बुद्धिस्तया, द्राक् कुम्भनिमज्जने क्रियमाणे सति तद्ध्वनिं श्रुत्वा गजोऽत्र स्थित्वा ध्वनिं करोतीति भ्रान्त्येत्यर्थः, सूदितो ननु संहतो ननु ॥ ३७ ॥

**(सं.चं.)** दशरथः स्वकृतं पूर्वदुष्कृतं स्मरन्नाह– शब्दवेधपटुना । शब्दश्रवणमात्रेण लक्ष्यस्थानमवधार्य वेधे व्यधने पटुना । वने मृगयायां तिष्ठता मग्नेन । मृगयानिमित्तं वने तिष्ठता वा । मृगयायां शब्दवेधपटुनेति वा । अम्भसि निमज्ज्यमानस्य कुम्भस्य गुळुगुळुध्वनिं द्विपस्य गजस्य शुण्डादण्डेन वारिपानध्वनिं मत्वा सूदितः बाणेन ताडितः ॥ ३७ ॥

**सानुतापमवलोक्य विषण्णं मां तदा करुणयर्षिकुमारः ।**
**स्यान्न ते नविदुषो द्विजहत्या राघवेति निगदन्[१] दिवमाप ॥ ३८ ॥**

**(भा.दी.) सानुतापमि**ति । ऋषेः कुमारः पुत्रः, तदा सानुतापं पश्चात्तापयुक्तम्, विषण्णं भीतम्, मां अव-लोक्य, हे राघव दशरथ, न वेत्तीति नविद्वान् तस्य । नैकधादिवन्नसमासोऽयम् । अज्ञानादेतत्कर्म कृतवत इत्यर्थः । ते तव द्विजहत्या, ब्रह्महत्यापातकमित्यर्थः, न स्यात् न भवेत् । अस्तेर्लिङ् । करुणया मयि विद्यमानदयया इति निगदन् सन् द्यौः स्वर्गस्तां आप । आप्लृ व्याप्तौ लिट् ॥ ३८ ॥

**(सं.चं.)** सानुतापं मामवलोक्य । 'विप्रतिसारोऽनुशयः पश्चात्तापोऽनुतापः स्यात्' इत्यभिधानम् । नविदुषः अविदुषः । मुनिसूनुं माममविदित्वा, अत एव न द्विजबुद्ध्या किन्तु द्विपबुद्ध्या मां सूदितवतस्ते द्विजहत्यादोषः न स्यादिति करुणया निगदन् । दिवमाप । 'विघूर्णतो विचेष्टस्य वेपमानस्य भूतळे । तस्य त्वाताम्यमानस्य तं बाणमहमुद्धरम् । स मामुद्वीक्ष्य सन्त्रस्तो जहौ प्राणांस्तपोधनः' (६३.५२) इति च रामायणे । रामायणे तु किञ्चिदिवान्यथा पठ्यते । तथाहि तत्र मुनिसूनुवचनम्–'ब्रह्महत्याकृतं पापं हृदयादपनीयताम् । न द्विजातिरहं ब्रह्मन् मा भूत् ते मनसो व्यथा । शूद्रायामस्मि वैश्येन जातो जनपदाधिप'(६३.५०–५१) इति । न द्विजातिरिति न द्विजजातिरित्यर्थः । जातितः नायम्, नापि तस्य पितरौ द्विजजातयः । तथाऽपि वर्णतः सर्वेऽपि द्विजा एव । अत एवोपरि तत्पिता वदिष्यति– 'अज्ञानात्तु हतो यस्मात् क्षत्रियेण त्वया मुनिः । तस्मात् त्वां नाऽविशत्याशु ब्रह्महत्या नराधिप' (६४.५५) इति । तदेतत् सर्वमवधृत्य पण्डिताचार्यवचनं प्रवृत्तमिति न कोऽपि दोषः । अवश्यं चैवं सङ्गमनीयम् । अन्यथा रामायणवचने व्याहन्येते इति भावः । ब्रह्मज्ञानिहत्या हि ब्रह्महत्या नाम ॥ ३८ ॥

---

१. **'बाणोद्धारानन्तरं दिवं स्वर्गमाप'** इति का.श्री. ।

**अन्धयोः स्थविरयोर्म्मुनिपित्रोः पार्श्वमेकसुतयोरहमाप्य ।**
**आर्ज्जवं[1] परममवेत्य शुचाऽऽर्त्तः प्रावदं बत मुदन्तमुदन्तम् ॥ ३९ ॥**

**(भा.दी.) अन्धयोरि**ति । अहं स्थविरयोः अतिवृद्धयोः, अत एवान्धयोः अचक्षुषोः, एकसुतयोः, यो मया हतः स एक एव सुतो ययोस्तौ तथोक्तौ तयोः, मुनिपित्रोः मुनेर्मातापित्रोः पार्श्वं समीपं तत् आप्य गत्वा, ऋजोर्भाव आर्जवम्, ऋजुत्वमित्यर्थः, परमधिकं अवेत्य ज्ञात्वा, शुक् शोकस्तया आर्त्तः सन्, मुदन्तम्, मुदः सन्तोषस्य अन्तः अवसानं यत्र स तथा तम्, उदन्तं सुतहननादिवृत्तान्तं प्रावदम् अब्रुवम् ॥ ३९ ॥

**(सं.चं.)** पार्श्वमाप्य । शुचा शोकेनाऽर्तः पीडितः । मुदः प्रमोदस्यान्तो येन तमुदन्तं पुत्रसूदनाख्यं प्रावदम् । प्रकटमवदम्, किमप्यगूहित्वा । 'वार्तोदन्तः प्रवृत्तिश्च वृत्तान्तश्च समाः स्मृताः' इत्यभिधानम् ॥ ३९ ॥

**आवयोस्त्वयि हि तात निविष्टं जीवितं च सुकृतं च गतस्त्वम् ।**
**यज्ञदत्त नय नौ द्रुतमित्थं तत् तपस्विमिथुनं विललाप ॥ ४० ॥**

**(भा.दी.) आवयोरि**ति । हे तात, त्वयि आवयोः जीवितं जीवनं तच्च, सुकृतं च पुण्यकर्म च, निविष्टं हि संस्थितं हि । तत्साधकस्यान्यस्य पुत्रस्याभावादित्यर्थः । त्वं गतः, स्वर्गं प्राप्तः असि । हे यज्ञदत्त पुत्र, नौ आवां तव समीपं प्रति द्रुतं नय । इत्थम्, तच्च तत् तपस्विनोर्मिथुनं च तत्, विललाप । रप लप व्यक्तयां वाचि लिट् ॥ ४० ॥

**(सं.चं.)** अन्ध ऋषिर्मृतं पुत्रं प्रत्याह– आवयोः । नौ आवामपि तत्र नय यत्र गतस्त्वम् । यज्ञेन यजनकर्मणाऽऽराधितेन यज्ञेन नारायणेन दत्त इति पुत्रं श्लाघते । तत् हतैकपुत्रं तपस्विमिथुनम् ॥ ४० ॥

**त्वं च पुत्रविरहात् त्यज देहं पार्थिवेति सति मामथ शप्त्वा[2] ।**
**तापसस्तनयतापपरीतः स्वर्ग्गमार्ग्गमगमत् सह पत्न्या ॥ ४१ ॥**

**(भा.दी.) त्वं चे**ति । अथ हे पार्थिव दशरथ, त्वं च, पुत्रस्य विरहो वियोगस्तस्मात्, देहः शरीरं तं त्यज, हे सति कौसल्ये, इति एवमादिप्रकारेण मां शप्त्वा, तनयस्य यस्तापः वियोगनिमित्तसन्तापः तेन परीतः परिपूर्णः, तापसो मुनिः पत्न्या सह, स्वर्गमार्गम्, स्वर्गस्य मार्गः अर्चिरादिः पन्थाः तं अगमत् । गम्ऌ गतौ लुङ् ॥ ४१ ॥

१. **'आर्जवमृजुत्वं मनोवाक्कायेष्वेकप्रकारत्वम्'** इति का.श्री। २. **'मामपि शप्त्वा'** । **'पार्थिवेति स ऋषिर्मम शप्त्वा'** इति क्वचित् ।

**(सं.चं.)** अथ तपस्वी दशरथं शशापेत्याह– त्वं च । हे सति कौसल्ये, तापसो मामिति शस्त्वा ॥ ४१ ॥

**दुष्कृतं ननु कृतं तदिदं मे तत्फलं मरणमेव नचान्यत् ।**
**भेषजं मम सुतस्य मुखेन्दोर्दर्शनामृतमुपागतमृत्योः ॥ ४२ ॥**

**(भा.दी.) दुष्कृतमि**ति । मे मया तत् मुनिपुत्रहननरूपम्, इदं फलोन्मुखम्, दुष्कृतं दुष्कर्म कृतं ननु । तत्फलम्, तस्य दुष्कृतस्य फलं मरणमेव, अन्यत् फलं न च । उपागतः समीपप्राप्तः मृत्युर्मरणं यस्य स तथा तस्य मम, भेषजं औषधम्, मम सुतस्य श्रीरामस्य मुखमेवेन्दुस्तस्य दर्शनामृतम्, दर्शनाख्यामृतमेव ॥ ४२ ॥

**(सं.चं.)** एवं शापबलेनोपागतमृत्योर्मे जीवनप्रदं भेषजं सुतस्य रामस्य मुखेन्दोर्दर्शनाख्यममृतम् । अहो मुनिशापमहिमा, येन नैकोऽपि पुत्रो मरणकाले तत्सविधे बभूव ॥ ४२ ॥

**श्यामलं सुलळितं विमलाङ्गं कोमलं कमलचारुतराक्षम्[१] ।**
**आव्रजन्तमवलोक्य हि लोको[२] धन्यतां व्रजति मे तनयं तम्॥ ४३ ॥**

**(भा.दी.)** एवं परमभागवतस्यापि स्वस्य प्रारब्धमनुल्लङ्घ्यं ज्ञात्वा साम्परायेऽवश्यकर्तव्यं श्रीहरिस्मरणं श्रीरामस्य गुणानुवर्णनरूपेण दशरथः कृतवानित्याह– **श्यामलमि**त्यादिना । लोको जनः, श्यामलं दूर्वादळश्यामलम्. सुलळितं बहुविलासोपेतम्, विगतं मलं शुक्लशोणितजन्यत्वलक्षणदोषो यस्मात् तथोक्तम्, तादृशमङ्गं यस्य स तथोक्तस्तम्, कोमलं सुकुमारम्, कमलवत् चारुतरे अक्षिणी यस्य स तथा तम्, आव्रजन्तं आगच्छन्तम्, तं मे तनयं श्रीरामं अवलोक्य धन्यतां कृतकृत्यतां व्रजति हि । व्रज गतौ लट् ॥ ४३ ॥

**(सं.चं.)** आव्रजन्तं वनात् पञ्चदशे वर्षे । मम तु एकैकोऽपि क्षणः कल्पकल्पः । वस्तुतस्तु चतुर्दश वर्षाणीति लोकस्य नातिदीर्घः काल इत्याह । लोको धन्यतां व्रजतीति । व्रजिष्यतीत्यर्थः । 'वर्तमानसामीप्ये वर्तमान-वद् वा' (अ.सू.३.३.१३१) ॥ ४३ ॥

**पादपद्मगुणनिर्ज्जितपद्मं यात्रया द्विरदराजसपत्नम् ।**
**प्रेक्षते भुवनभूषणरत्नं पुण्यवान् पुनरवेक्षणनूत्नम् ॥ ४४ ॥**

**(भा.दी.) पाद**ेति । पुण्यमस्यास्तीति पुण्यवान् जनः, पादौ पद्मे इव तयोर्ये गुणाः सौरभ्यसौकुमार्यादयः तैर्न्निर्जितं पद्मं येन स तथोक्तस्तम्, यात्रया गमनेन द्विरदानां गजानां राजा द्विरदराज ऐरावतः, तस्य सपत्नः

---

२. 'श्यामलं विंसितं विमलाङ्गं लोकमङ्गलदचारुतराक्षम्'

२. '–लोक्य नृलोको–'

प्रतिपक्षस्तम्, तस्मादप्यतिविलासादिमत्तया गमनशक्तिमन्तमित्यर्थः । भुवनानां लोकानां भूषणं अलङ्कार-भूतं रत्नमिव, पुनरवेक्षणनूत्नं पुनःपुनरवेक्षणं दर्शनं तस्मिन् नूत्नः नूतनभूतस्तम्, लोकविलक्षणभूतात्याश्चर्य-सौन्दर्यादिगुणविशिष्टतया पुनःपुनरवेक्षणेऽपि नूतनतया दृश्यमानमित्यर्थः, प्रेक्षते पश्यति । ईक्षतेर्लट् ।।४४।।

**(सं.चं.)** पादपद्मगुणाः मृदुतामसृणताशोणतादयः । यात्रया गम्भीरेण यानेन । निर्जितगजराजगतिम् । सपत्नः प्रतिस्पर्धी । 'शत्रुः सपत्नो भ्रातृव्यः' इत्यभिधानम् । भुवनस्य भूषणरत्नमिव । 'भूषारत्नं भुवनवलयस्य' इति चोक्तं पुरस्तात् । पुनःपुनरवेक्षणेऽपि प्रतिवारं नित्यनूत्नम् । 'दिनेदिने यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति हि वदन्ति ॥ ४४ ॥

**[1]वीरवर्य्यमचिरद्युतिचीरं दीर्घबाहुमिषुकार्म्मुकपाणिम् ।**
**आयतोरसमवेक्ष्य सुतं मे कस्य तृप्यति मनो नयनं वा ॥ ४५ ॥**

**(भा.दी.) वीरे**ति । वीरेषु वर्यः श्रेष्ठस्तम्, अचिरद्युतिवत् विद्युद्वत् चीरं वासो यस्य स तथा तम्, दीर्घौ बाहू यस्य स तथा तम्, इषुश्च कार्मुकं च पाण्योर्यस्य स तथा तम्, आयतं विस्तृतमुरो यस्य स तथा तम्, मे सुतं श्रीरामं अवेक्ष्य कस्य पुरुषस्य मनः, नयनं वा, चक्षुर्वा, तृप्यति तृप्तिं प्राप्नोति? न कस्यापीत्यर्थः । तृप प्रीणने लट् ॥ ४५ ॥

**(सं.चं.)** तृप्यति अलम्बुद्धिं प्राप्नोति ॥ ४५ ॥

**कम्बुकण्ठमरुणाम्बुजमाल्यं प्रोल्लसन्मकरकुण्डलगण्डम् ।**
**विद्रुमाधरमहो मम पुत्रं द्रक्ष्यतीक्षणमिदं तु कदा नु ॥ ४६ ॥**

**(भा.दी.) कम्ब्वि**ति । कम्बुवत् शङ्खवत् रेखात्रयोपेतः कण्ठो यस्य स तथा तम्, अरुणानि यान्यम्बुजानि रक्ताम्बुजानि तेषां माल्यं माला यस्य स तथा तम्, प्रोल्लसती मकराकारे कुण्डले ययोस्तौ तथोक्तौ, तादृशौ गण्डौ यस्य स तथा तम्, विद्रुमवत् प्रवाळवत् अधरावोष्ठौ यस्य स तथा तम्, मम पुत्रं श्रीरामम्, इदं ईक्षणं चक्षुः, तु विशेषेण, कदा नु द्रक्ष्यति? अहो ॥ ४६ ॥

**(सं.चं.)** कम्बुकण्ठम् । 'रेखात्रयाङ्किता ग्रीवा कम्बुग्रीवेति कथ्यते' इत्यभिधानम् । मकराकारे कुण्डले अधिगण्डं भासमाने इति तस्य विष्णुत्वमाह । मकरकुण्डलो हि विष्णुः । विद्रुमवद् रक्ताधरम् । विद्रुमः प्रवाळः । '**ಹವಳ, ಪಗಡ**' इति भाषायाम् । इदं मदीयमीक्षणं नेत्रम् ॥ ४६ ॥

१. 'वीरवीरमचिर–'

**अर्द्धचन्द्रमिव तस्य ललाटं चन्द्रसुन्दरकलामिव हासम् ।**
**पूर्णचन्द्रमिव तस्य[१] मुखाब्जं पश्यतः क्व परितापलवोऽपि ॥ ४७ ॥**

**(भा.दी.) चन्द्रेति** । यस्य श्रीरामस्य, ललाटमळिकं तत्, अर्धचन्द्रमिव पश्यतः, यस्य हासो मन्दहासस्तम्, चन्द्रस्य सुन्दरी या कला षोडशो भागस्तामिव पश्यतः, तस्य मुखमेवाब्जम्, पूर्णो यश्चन्द्रस्तमिव पश्यतः पुरुषस्य, परितापस्य लवोऽप्येकदेशोऽपि क्व कुत्र? न कुत्रापीत्यर्थः । एकमपि चन्द्रमण्डलं पश्यतः परितापो नास्ति । उक्तचन्द्रमण्डलत्रयं युगपत् पश्यतः परितापो नास्तीत्यत्र किमु वक्तव्यमित्यतो लवोऽपीत्युक्तम् ॥ ४७ ॥

**(सं.चं.)** तस्य ललाटमष्टमीचन्द्रइव । तस्य हासो द्वितीयाचन्द्रइव । मुखाब्जं पूर्णिमाचन्द्रइवेत्यहो तस्मिन् चन्द्रत्रयसमावेशः । तत्रापि मुखपद्मं चन्द्रइवेति विरुद्धयोरेकत्र समावेशः । मुखाब्जः मुखचन्द्र इत्यपि शक्यं व्याख्यातुम् । 'अब्जो धन्वन्तरौ शङ्खे चन्द्रे क्ली लवणेऽम्बुजे' इति यादवप्रकाशः । अथापि न वाक्यार्थ सारस्यमाधत्त इति न तथा व्याख्यायते ॥ ४७ ॥

**राजमौलिमणिमद्भुतमौलिं सीतया सह वरासनमाप्तम्[२] ।**
**लक्ष्मणाचलितचामरमाराद् वीक्षिता[३] मम सुतं पुरि धन्यः ॥ ४८ ॥**

**(भा.दी.) राजेति** । राजसु मौलिमणिरिव रत्नमिव तम्, राजश्रेष्ठमित्यर्थः । अद्भुतो मौलिः किरीटं यस्य स तथा तम् । 'चूडा किरीटं केशाश्च संहता मौलयस्त्रयः' इत्यमरः । वरमुत्तमं यदासनं तत्, सिंहासनमित्यर्थः, सीतया सह आप्तं प्राप्तम्, लक्ष्मणेन आचलितं ईषच्चलितं चामरं यस्य स तथा तम्, मम सुतं श्रीरामं पुरि अयोध्यायाम्, आरात् दूरे समीपे वा वीक्षिता विशेषेण द्रष्टा पुरुषः धन्यः पुण्यवान् ॥ ४८ ॥

**(सं.चं.)** राज्ञां मौलिमणिरिव राजरत्नम् । अद्भुतमौलिमतिसुन्दरकेशपाशम् । 'मौलिः संयतकेशेषु चूडायां मुकुटेऽप्यषण्' इति, 'व्यजनं तालवृन्तं स्याद् धवित्रं चर्मणा कृतम् । आलावर्तस्तु वस्त्रेण चामरं तु प्रकीर्णकम्' इति च यादवप्रकाशः । 'चामरा चामरं बालव्यजनं रोमगुच्छकम्' इति रभसः । यो धन्यः स एव ईक्षिता ईक्षिष्यते । य ईक्षिष्यते स एव च धन्यः कृतकृत्यः ॥ ४८ ॥

---

१. **'–मिव चास्य'** २. **'परासनमाप्तम्'**

३. **'–मारादीक्षते मम'** । **'माराद् वीक्षते मम'** इति च ।

**ज्ञानयज्ञनिजधर्म्मगुणैर्म्मे तुष्टिमेति यदि नाम विधाता[1] ।**
**रामदर्शनसुखं प्रतिदद्यादुद्भवान्तरगताय च मह्यम् ॥ ४९ ॥**

**(भा.दी.) ज्ञाने**ति । विशेषेण धत्ते शुभाशुभकर्मफलं विदधातीति विधाता श्रीहरिः, यदि नाम यर्हि, ज्ञानं चराचरवस्तुविषयकज्ञानं तच्च, यज्ञाश्च, निज आत्मीयो यो धर्मः स च, गुणा हरिगुरुभक्त्यादिशुभधर्मास्ते च, तैः मे तुष्टिं प्रीतिं एति प्राप्नोति । इण् गतौ लट् । तर्हि रामस्य यद् दर्शनं तस्माद् यत् सुखं तत्, अन्य उद्भव उद्भवान्तरम्, जन्मान्तरम्, तद् गतस्तस्मै मह्यं प्रतिदद्यात् प्रदिशतु ॥ ४९ ॥

**(सं.चं.)** ज्ञानयोगेन कर्मयोगेन क्षात्रधर्मानुष्ठानेन सौशील्यादिगुणैश्च । विधाता विधिर्नारायणो वा । 'यो नः पिता जनिता यो विधाता' इति श्रुतिः । प्रतिदद्यात् पुनःपुनर्दद्यात् । 'वीप्सायां लक्षणे प्रति' इति यादवप्रकाशः । उद्भवान्तरगताय च जन्मान्तगतायापि ॥ ४९ ॥

**इत्यमुष्य स विलापविशेषः शेषतामुपजगाम समाधेः ।**
**येन रामपदवेद्यमुदारं ब्रह्म[2] नन्दनधियाऽपि स दध्यौ ॥ ५० ॥**

**(भा.दी.) इती**ति । अमुष्य दशरथस्य, इति सः विलापस्य विशेषः श्रीरामानुवर्तनरूपः, समाधिर्ध्यानं तस्य, शेषतामङ्गतां उपजगाम । तत्र हेतुमाह– **येने**ति । येन कारणेन, सः दशरथः, राम इति यत्पदं तेन वेद्यं ज्ञेयम्, उदारमुत्कृष्टं विष्ण्वाख्यं वस्तु, ब्रह्मनन्दनधिया, ब्रह्मेति नन्दन इति या धीस्तयाऽपि, दध्यौ ध्यानं कृतवान् । ध्यै चिन्तायां लिट् । अतः समाधेरङ्गतामुपाजगामेत्यर्थः ॥ ५० ॥

**(सं.चं.)** विलापविशेषः समाधेर्ब्रह्मोपासनस्य शेषतामङ्गतामुपजगाम । रामपदवेद्यं ब्रह्म । नन्दनः स्वपुत्रत्वेनावतीर्य नन्दयतीति धियाऽपि दध्यौ ॥ ५० ॥

**वैष्णवं पदमवाप स राजा राजहंसइव निर्म्मलरूपः ।**
**तच्छरीरमपहाय कृतार्थो वृक्षनीळमिव भीतिसनीळम् ॥ ५१ ॥**

**(भा.दी.) वैष्णवमि**ति । अन्तकाले भगवदनुध्यानेन कृतः अर्थः मोक्षलक्षणप्रयोजनं येन स तथा, अत एव निर्गतं मलं रागक्लेशादिदोषो यस्मात् तथोक्तम्, तादृशं रूपं यस्य स तथा, राजा सः दशरथः, तच्च तत् शरीरं च तत्, भीतेः सनीळं समीपम्, भययुक्तमित्यर्थः । 'सनीळं समीपं समर्यादमारात्' इति हला-

१. **'विधाता ब्रह्मा, अदृष्टनियामकदेवता वा'** इति का.श्री ।

२. उपलब्धपाठानुसारेण **'ब्रह्मनन्दनधिया'** इत्येकं पदमिति वि.ती.टीकासम्मतमिति भाति ।

युधः । (अपहाय त्यक्त्वा), वृक्षनीळम्, वृक्षे विद्यमानं नीळं स्वगृहं त्यक्त्वा, वैष्णवं विष्णुसम्बन्धि, पदं स्थानमाकाशप्रदेशम्, राजहंसइव राजहंसपक्षीव, वैष्णवं विष्णुसम्बन्धि, पदं स्थानम् अवाप । आप्लृ व्याप्तौ लिट् । राजहंसपक्षी भीत्यास्पदं स्वनीळं विहाय वैष्णवं पदं आकाशं यथा गच्छति तद्वद्दयमपि मृत्युभयास्पदं देहं विहाय श्रीहरिलोकं जगामेत्यर्थः ॥ ५१ ॥

**(सं.चं.)** निर्मलरूपः स्वच्छधवळकायः राजहंसः वृक्षगतं स्वं नीळं कुलायमपहाय वैष्णवं पदमाकाशमाप्नोति । एवमेव स राजा दशरथः तन्मानुषं शरीरमपहाय वैष्णवं विष्णुना दत्तं मनुपदमवाप । स्वमूलरूपमवापेत्यर्थः । क्रमेण वैष्णवं पदं वैकुण्ठलोकं चावाप । भीतिः सनीळा साश्रया येन तादृशं भयावहं मानुषं शरीरम् । भीतिः सनीळे सविधे यस्येति वा । सदा मरणभयग्रस्तम् । वृक्षनीळमपि बलिष्ठपक्षिसर्पाद्याक्रमणभयग्रस्तमिति भीतिसनीळम् ॥ ५१ ॥

**रामकीर्त्तनरसामृततृप्तं सुप्तमात्मदयितं प्रतितर्क्य[१] ।**
**राममेव हृदयेन दधाना[२] स्वापमाप महिषी क्षितिभर्त्तुः ॥ ५२ ॥**

**(भा.दी.) रामे**ति । क्षितिभर्तुः भूपतेः दशरथस्य, महिषी कौसल्या, श्रीरामस्य यत्कीर्तनं तस्मिन् यो रसो रागः, आसक्तिरित्यर्थः, स एवामृतं तेन तृप्तम्, आत्मनः स्वस्य दयितं भर्तारं दशरथम्, सुप्तं निद्रितं प्रतिबुध्य, प्रतितर्क्येति क्वचित् पाठः । राममेव, हृदयं मनस्तेन दधाना सती, ध्यायन्ती सती, स्वापः सुषुप्तिस्तमाप ॥ ५२ ॥

**(सं.चं.)** मुग्धा तु कौसल्या भर्तारं निद्राणं मेन इत्याह– रामकीर्तनरसामृततृप्तम् । प्रतितर्क्य, निद्रासाधारणैर्निश्चलत्वादिलक्षणैरूहित्वा । प्रतिरत्र लक्षणवचनः । 'वीप्सायां लक्षणे प्रति' इति यादवप्रकाशः । तर्क वितर्के । वितर्क ऊह उत्प्रेक्षा ॥ ५२ ॥

**आहरन् परिजना जनभर्त्तुः[३] कानकेषु करकेषु जलानि ।**
**वन्दिनः प्रतिववन्दिर एनं कल्य[४] एतदघमप्रतिबुद्ध्य ॥ ५३ ॥**

**(भा.दी.) आहरन्नि**ति । जनानां भर्ता पोषयिता तस्य दशरथस्य, परिजनाः भृत्यजनाः, कल्यमुषःकालस्तस्मिन्, एतत् मरणलक्षणम्,अघं व्यसनम्, 'दुःखैनोव्यसनेष्वघम्' इति वैजयन्ती, अप्रतिबुध्य अज्ञात्वा, कनकानां विकाराः कानकास्तेषु, सुवर्णमयेष्वित्यर्थः, करकेषु कलशेषु । 'कुटः कुम्भो निपः स्मृतः । कर्करी करकः

१. 'प्रतिबुद्ध्य'    २. 'हृदये निदधाना'    ३. 'परिजनाः क्षितिभर्तुः'    ४. 'काल्य एत–'

प्रोक्तः' इति हलायुधः । जलानि आहरन् आनीतवन्तः । हृञो लङ् । वन्दिनः स्तुतिपाठकाः । एनं दशरथं प्रति ववन्दिरे स्तुतवन्तः । वन्दतेर्लिट् ॥ ५३ ॥

**(सं.चं.)** कानकेषु कनकनिर्मितेषु करकेषु कमण्डलुषु । 'कमण्डलौ दाडिमे ना करकः' इति मङ्खः । वन्दिनः स्तुतिपाठकाः प्रतिववन्दिरे प्रत्येकं स्वंस्वं स्तुतिपाठमर्पयामासुः । वन्दतिरत्र स्तुतिवचनः । कल्ये उषः-काले । अघं दुःखम् । 'दुःखांहोव्यसनेष्वघम्' इति च । अप्रतिबुद्धय मरणप्रत्यायकं देहशैत्यादिकम-विज्ञाय ॥ ५३ ॥

**पादशैत्यमवगम्य हि भर्त्तुः पादसेवनकृतो नृपनार्य्यः ।**
**आत्मकान्तमुपलभ्य[१] परेतं चुक्रुशुर्न्निजतनूः[२] प्रहरन्त्यः ॥ ५४ ॥**

**(भा.दी.) पादे**ति । भर्तुः पत्युः दशरथस्य, पादयोः सेवनं सेवा तत्कर्म कुर्वन्तीति तथोक्ताः, नृपनार्यः दशरथभार्याः, पादयोः शैत्यं शीतत्वं तत् अवगम्य, आत्मनां कान्तं भर्तारं दशरथं परेतं मृतं उपलभ्य ज्ञात्वा, निजा आत्मीया याः तनवस्ताः, प्रहरन्त्यः ताडयन्त्यः सत्यः, चुक्रुशुः उच्चैः रोदनं चक्रुर्हि । क्रुश[३] आह्वाने रोदने च लिट् ॥ ५४ ॥

**(सं.चं.)** नृपनार्यो नृपभार्याः । परेतं मृतम् । निजतनूः सशिरउरस्ताडं प्रहरन्त्यः ॥ ५४ ॥

**तत्र रामजननी प्रतिबुद्धा प्राणनाथमवलोक्य [४]गतासुम् ।**
**व्याललाप मृदुमङ्गलतां[५] स्वां ताडयन्त्यतितरां ससुमित्रा ॥ ५५ ॥**

**(भा.दी.) तत्रे**ति । तत्र स्त्रीणां रोदनसमये, प्रतिबुद्धा प्रबोधं प्राप्ता, ससुमित्रा सुमित्रया सहिता, श्रीरामस्य जननी कौसल्या, प्राणनाथं भर्तारम् । 'प्राणनाथो यमे प्रिये' इति वैजयन्ती । गता असवो यस्य स तथा तम्, अवलोक्य, मृदुम्, स्वां स्वकीयाम्, अङ्गमेव लता ताम्, अतितरां अत्यन्तम्, ताडयन्ती सती, व्याललाप परिदेवनं कृतवती ॥ ५५ ॥

**(सं.चं.)** तत्र राजान्तःपुरे पृथक् शय्यायां सुप्ता रोदनेन प्रतिबुद्धा रामजननी ससुमित्रा । मृदुं मृद्वीमङ्ग-लताम् । मृदुशब्दस्य उकारान्तत्वात् स्त्रियां वा ङीष् । स्मरति च पाणिनिः–'वोतो गुणवचनात्' (अ.सू.४.१.४४) इति । व्याललाप मृतभर्त्रा सह आलापरूपं विलापं चकार ॥ ५५ ॥

---

२. '–मुपलक्ष्य परेतम्' २. '–र्न्निजतनुम्' ३. 'क्रुश आध्याने–'
४. '–लोक्य परासुम्' ५. 'मृदुलाङ्गलताम्'

**हा पते ननु सुतप्रणयी त्वं स्वां तनुं त्यजसि रामवियोगे ।**
**त्वां च तं च परिहाय न दीर्ण्णं कर्कशं हि कुलिशाद् हृदयं मे ॥ ५६ ॥**

**(भा.दी.) हा पत** इति । हा पते दशरथ, त्वं सुते प्रणयः सोऽस्यास्तीति तथा, श्रीरामे प्रीतिमान् ननु? यस्मात् श्रीरामस्य वियोगस्तस्मिन् सति, स्वां तनुं शरीरं त्यजसि । त्वां च, तं च श्रीरामं च, परिहाय परित्यज्यापि, न दीर्णं मे हृदयम्, कुलिशं वज्रं तस्मादपि कर्कशं कठिनं हि ॥ ५६ ॥

**(सं.चं.)** कुलिशादपि वज्रायुधादपि कठिनम् । 'अस्त्रियौ वज्रकुलिशौ' इति यादवप्रकाशः ॥ ५६ ॥

**नन्दनेन रमणेन च हीनां निन्दितां जगति धिग्धिगवीराम् ।**
**हा विधातरुपयापय पारं मा नृशंस इति नाम लभेथाः ॥ ५७ ॥**

**(भा.दी.) नन्दनेने**ति । नन्दनेन श्रीरामेण, रमणो भर्ता तेन च, हीनां रहिताम्, अत एव अवीरां अवीरा-नाम्नीम् । 'अवीरा निष्पतिसुता' इत्यमरः । अत एव जगति निन्दितां मां धिक् धिक् । हा विधातः हे विधे, पारं ममापि जीवितावसानम्, उपयापय प्रापय । त्वम्, नृशंस इति क्रूर इति, नाम आख्याम्, मा लभेथाः न प्राप्नुहि ॥ ५७ ॥

**(सं.चं.)** धिगित्यात्मकुत्सने । 'धिग् भत्सने कुत्सने च' इति यादवप्रकाशः । 'पतिपुत्रवती वीरा' । सा न भवतीत्यवीरा । अस्य जीवितस्य दुःखस्य वा पारमुपयापय अपरतीरं प्रापय ॥ ५७ ॥

**राज्यमागतमिदं[१] त्वयि दैवात् सर्वमेव खलु कैकयपुत्रि[२] ।**
**भुङ्क्ष्व साम्प्रतमकण्टकमेतत् त्वत्सपत्नविलयोऽखिल आसीत् ॥ ५८ ॥**

**(भा.दी.) राज्यमि**ति । हे कैकेयपुत्रि, केकयविषयाधिपतेरश्वपतेः पुत्रि, त्वयि दैवं भागधेयं तस्मात्, सर्वमेव (इदं) राज्यं आगतं खलु । साम्प्रतमिदानीम्, न विद्यते कण्टकः क्षुद्रशत्रुर्यस्य तत्तथोक्तम् । 'स्यात्कण्टकः क्षुद्रशत्रौ' इति वैजयन्ती । निरुपद्रवमित्यर्थः । एतद् राज्यम् भुङ्क्ष्व पालय । भुज पालनाभ्यवहारयोर्लोट् । अखिलः समस्तः, तव ये सपत्नास्तेषां विलयो विनाशः, आसीत् ॥ ५८ ॥

**(सं.चं.)** कण्टकः क्षुद्रोपद्रवः । अकण्टकं निराबाधम् ॥ ५८ ॥

---

१. **'राज्यमानतमिदम्'**

२. **'कैकयपुत्र'** । **' हे कैकेयीपुत्र भरत'** इति का.श्री. ।

**[१]इत्यहो विलपितं भुवि पन्नं लोठितं च बहु ताडितमङ्गम्[२] ।**
**स्त्रीशतैः सह हि रामजनन्या तत्र कस्य करुणा न बभूव ॥ ५९ ॥**

**(भा.दी.) इतीति** । रामजनन्या कौसल्यया, स्त्रीणां शतानि चतुर्दशशतानि तैः सह, इति एवमादिप्रकारेण विलपितं विलापोऽकारि (हि) । भुवि पन्नं दुःखात् पतितं च, लोठितं दुःखवशादितस्ततः परिभ्रान्तं च, अङ्गं बहु यथा भवति तथा ताडितं (च) । (तत्र) स्त्रीजने, कस्य पुरुषस्य, करुणा दया न बभूव । अहो आश्चर्यम् ॥ ५९ ॥

**(सं.चं.)** पन्नं गलितमिव सहसा पतितम् । **'ಕುಸಿದುಬಿದ್ದು'** इति भाषायाम् । पद्यतेः क्तः । धातोर्दकारस्य निष्ठातकारस्य च नकारः । 'रदाभ्यां निष्ठातो नः पूर्वस्य दः' (अ.सू.८.२.४२) इति । स्त्रीणामर्धसप्तशतैः, रामजनन्या, सुमित्रया च । तत्र तस्मिन् प्रसङ्गे । कस्य वा जनस्य । पुंस्त्वमविवक्षितम् ॥ ५९ ॥

**स्त्रीगणं तमपसार्य्य वसिष्ठस्तां च रामजननीमपयाप्य ।**
**देशकालविदसावधितैलद्रोणि पार्त्थिवतनुं प्रररक्ष ॥ ६० ॥**

**(भा.दी.) स्त्रीति** । देशश्च कालश्च तौ वेत्तीति तथोक्तः, देशकालयोः कर्तव्यकार्यविदित्यर्थः, असौ वसिष्ठः, तं तत्रस्थम्, स्त्रीणां गणः समूहस्तम्, अपसार्य निस्सारयित्वा[३], तां रामजननीं कौसल्यां च, अपयाप्य किञ्चिद्दूरं प्रेषयित्वा, तैलेन पूर्णा द्रोणी तैलद्रोणी, तैलद्रोण्यां अधि अधितैलद्रोणि । विभक्त्यर्थेऽव्ययीभावः । तत एवाव्ययत्वं च । तैलपूर्णमञ्जूषायामित्यर्थः । पार्थिवस्य तनुः शरीरम्, तां प्रररक्ष रक्षितवान् । रक्ष पालने लिट् । संस्कारकर्तुः कस्याप्यभावाद् भरतागमनपर्यन्तमेवं ररक्षेत्यर्थः ॥ ६० ॥

**(सं.चं.)** अधितैलद्रोणि तैलद्रोण्याम् । पार्थिवतनुं प्रररक्ष प्रक्षिप्य ररक्ष । यावद् भरतागमनं बहून्यहानि रक्षणीयमिति च प्रररक्षेत्याह । दीर्घकालरक्षणं हि प्ररक्षणम् ॥ ६० ॥

**रामं रम्यं मरतकमणिश्यामलं कोमलाङ्गं**
**स्मेरं वीरं मणिघृणिकनत्कुण्डलोल्लासिगण्डम् ।**

---

१. **'इत्यहो प्रलपितम्'** २. **'लोटितं च बहु ताडितमङ्गे'**

३. **'निस्सार्य'** इति पर्याप्तम् ।

कौसल्या स्वं तनयमुदितं चित्तपद्मे दयालुं
सान्त्वार्थं वा सपदि समुपाश्लिष्य शोकं मुमोच ॥ ६१ ॥

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे अयोद्ध्याकाण्डे दशमः सर्ग्गः ॥**

—०—

**(भा.दी.) रामम**िति । कौसल्या रम्यम्, मरतकश्चासौ मणिश्च मरतकमणिः इन्द्रनीलरत्नम्, तद्वच्छ्यामलम्, कोमलं सुकुमारमङ्गं यस्य स तथा तम्, स्मेरं मन्दस्मितोपेतम्, वीरम्, मणीनां रत्नानां घृणयो दीप्तयः, ताभिः कनती, ज्वलती, ये कुण्डले मकरकुण्डले, ताभ्यामुल्लासिनौ शोभमानौ गण्डौ यस्य स तथा तम्, चित्तमेव पद्मं तस्मिन्, सान्त्वार्थं वा, शोको न कार्य इत्यादि सान्त्ववचनानि वक्तुमिव । 'वा विकल्पोपमानयोः' इत्यमरः । उदितं स्मरणेन तथाऽविर्भूतम्, दयालुं दयाशीलम्, स्वं स्वकीयं तनयं पुत्रं श्रीरामम्, सपदि समुपाष्लिष्य, मनसैवाऽलिङ्गनं कृत्वा, पतिमरणादिनिमित्तो यः शोकस्तं मुमोच नाशयामासेत्यर्थः । मुच्लृ मोक्षणे लिट् ॥ ६१ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायामयोध्याकाण्डे दशमः सर्गः ॥**

—०—

**(सं.चं.)** मन्दाक्रान्तयोपसंहरति– रामं रम्यम् । मरतकमणिवत् श्यामलवर्णम् । मरकतमिति पठन्तो भ्रान्ता इति साधितमन्यत्र । कुण्डले खचितानां मणीनां घृणिभिः किरणैः कनती कमनीये कुण्डले । 'कुण्डलं कर्णवेष्टनम्' इत्यभिधानम् । ताभ्यां गण्डप्रान्ते प्रचलद्भ्यामुल्लासिनौ मुदिताविव क्रीडन्ताविव लसितौ गण्डौ गल्लौ यस्य तम् । चित्तपद्मे उदितमाविर्भूतं स्वं तनयं मनसैव समुपाश्लिष्य । समिति गाढम्, पुत्रस्नेहेनोपचितमधिकं यथा स्यात् तथा आश्लिष्य । 'उपान्तिकेऽधिके' इति यादवप्रकाशः । पतिमृतिजं शोकं मुमोच जहौ । तस्याश्चित्ते रामप्रादुर्भावस्य बीजं कविरुत्प्रेक्षते– सान्त्वार्थं वा । दुःखितां मातरं सान्त्वयितुमिव ॥ ६१ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायायोध्याकाण्डे दशमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– ८८०+६१=९४१]

# एकादशः सर्ग्गः

वैनतेयोदये प्राप्ते वैनतेयध्वजप्रियाः ।
ब्राह्मणा राज्यकर्त्तारः[1] सभां प्रापुः ससङ्कटाः ॥ १ ॥

**(भा.दी.)** श्रीरामपितुर्मरणोत्तरदिवसे सञ्जातां जनानां प्रवृत्तिं दर्शयति– **वैनतेये**ति । विनताया अपत्यं पुमान् वैनतेयोऽरुणस्तस्योदयस्तस्मिन् प्राप्ते सति । वैनतेयो गरुडो ध्वजो यस्य स तथा तस्य श्रीहरेः प्रियाः, राज्यकर्तारः राज्याधिपत्यकर्तारः ब्राह्मणाः, सङ्कटेन दशरथनिमित्तक्लेशेन सहिताः सन्तः सभां प्रति प्रापुः । आप्लृ व्याप्तौ लिट् ॥ १ ॥

**(सं.चं.)** वैनतेयोदये अरुणोदये प्राप्ते । वैनतेयध्वजस्य गरुडध्वजस्य विष्णोः प्रिया भक्ताः । वैनतेयध्वजश्च प्रियस्तेषाम् । 'वैनतेयस्तु गरुडे स्यात् प्रभाकरसारथौ' । वैनतेयोदय इति प्रौढिवादोऽयम् । वस्तुतस्तु वैनतेयोदये राजमरणवार्ता श्रुता । ततः सूर्योदये ब्राह्मणाः सभां प्रापुः । तेन वैनतेयोदयपदेन सूर्योदयो लक्ष्यते । अथवैवं व्याख्येयम् । वैनतेयोदये प्राप्ते दुरन्ते, तन्निमित्तं ततः सूर्योदये सति ब्राह्मणाः सभां प्रापुरिति । 'व्यतीतायां तु शर्वर्यामादित्यस्योदये ततः । समेत्य राज्यकर्तारः सभामीयुर्द्विजातयः' (६७.२) इति च । राज्यकर्तारः राज्याधिकृता राजकार्यनिर्वोढारः । ससङ्कटाः शोकव्याकुलाः ॥ १ ॥

मार्क्कण्डेयो वामदेवो मौद्गल्यः[2] काश्यपो मुनिः ।
कात्यायनो[3] गौतमश्च जाबालिरिति सद्गुणाः[4] ॥ २ ॥

पुरोहितं पुरोधाय वसिष्ठं सममन्त्रयन्[5] ।
रामे वनं गते राज्ञि स्वर्ग्गते कार्य्यमत्र किम्[6] ॥ ३ ॥

---

१. **'राज्यकर्तारः राज्यस्य परिपालनविषये युक्तायुक्तविचारकर्तारः, सङ्कटेन धर्मकृच्छ्रेण सह वर्तमानाः ससङ्कटाः'** इति का.श्री. । **'राजभर्तारः'** इति भ्रान्तः पाठः ।

२. **'मौद्गलः काश्यपो–'** । **'मौद्गल्यः कश्यपो–'** इति क्वचित् ।

३. **'कार्त्यायनो–'**

४. **'सद्गुणाः'**

५. वि.ती. रीत्याऽत्र श्लोकसमाप्तिः । तत्पक्षे षट्चरणेयमनुष्टुप् ।

६. **'कृत्यमत्र किम्'**

**क्षित्यामराजकायां[1] स्युर्दोषाः सर्वभयङ्कराः ।**
**भरतः सानुजस्तस्मादानेतव्यो गिरिव्रजात् ॥ ४ ॥**

**(भा.दी.) मार्कण्डेय** इति । मार्कण्डेयः मार्कण्डेयनामको मुनिः । वामदेवः मौद्गल्यः काश्यपः कात्यायन-नामकः गौतमनामकः जाबालिनामक इति प्रसिद्धाः, सन्तो गुणा येषां ते तथोक्ताः मुनयः, पुरोहितं वसिष्ठं पुरोधाय पुरस्कृत्य सममन्त्रयन् आलोचितवन्तः । मत्रि गुप्तभाषणे लङ् । **राम** इति । श्रीरामे वनं प्रति गते सति, राज्ञि दशरथे स्वः गतः स्वर्गतः तस्मिन्, स्वर्गं प्रति गते सतीत्यर्थः । अत्र अयोध्यायां कर्तुमर्हं कार्यं किम्, अस्माभिरिति शेषः । यस्मात् क्षित्यां भूमौ, न विद्यते राजा यस्याः सा अराजका तस्यां सत्याम्, सर्वेषां जनानां भयं कुर्वन्तीति तथोक्ताः, दोषाः परस्परहननद्रव्यापहरणादयो दोषाः स्युः भवेयुः । अस्तेर्लिङ् । तस्मात् कारणात् अनुजेन शत्रुघ्नेन सहितो भरतः, गिरीणां व्रजं समूहो यस्मिन् स तथोक्त-स्तस्मात्, केकयदेशादित्यर्थः, आनेतव्यः । [2]वसिष्ठः एवं तैः मुनिभिः सह निश्चित्य राजामात्यान् राजमन्त्रिणः समादिशत् ॥ २–४ ॥

**(सं.चं.)** मार्कण्डेयः । 'मार्कण्डेयोऽथ मौद्गल्यः वामदेवश्च काश्यपः । कात्यायनो गौतमश्च जाबालिश्च महायशाः' (६७.३) इति च । इति सप्त सद्गुणाः पुरोहिताः । अत्र सङ्कटे किमस्माभिः कार्यमिति समेत्या-मन्त्रयन् । सम्मन्त्र्य किं निरचैषुः? आह– क्षित्यामराजकायाम् । गिरिव्रजात् केकयराजधानीतः ॥ २–४ ॥

**वसिष्ठ एवं निश्चित्य राजामात्यान् समादिशत् ।**
**भोभो विजय सिद्धार्थ जयन्ताशोक गच्छत ॥ ५ ॥**

**आयातु भरतस्तूर्णं मदाज्ञेति[3] निवेद्यताम् ।**
**अयं[4] रामविवासश्च[5] राज्ञो मृत्युश्च नोच्यताम् ॥ ६ ॥**

**वासोरत्नधनाकल्पा दीयन्तां कैकयाय च ।**
**कथयित्वेति पाथेयं दत्वा दूतानयातयत्[6] ॥ ७ ॥**

---

१. **'क्षित्यामरक्षकायाम्'** २. उत्तरश्लोकपूर्वार्धस्य व्याख्यानमिदम् । ३. **'ममाऽज्ञेति'** इति वि.ती.पाठः स्यात् ।
४. **'अथ राम–'** ५. **'–विवासश्च वोच्यतां शोककारणम् ।'** ६. **'दूतानयापयत्'** । वि.ती. रीत्याऽयमपि षट्चरणः श्लोकः ।

**(भा.दी.) भो** इति । भो विजय हे विजयनामक, सिद्धार्थनामक, जयन्तनामक, अशोकनामक, यूयं केकयविषयं प्रति गच्छत । भरतः तूर्णं यथा भवति तथा आयातु । इति मम आज्ञा निवेद्यतां विज्ञाप्यताम् । अयमिति । अयं वृत्तः रामस्य विवासो विदेशवासश्च, राज्ञः मृत्युश्चेत्युभयम्, नोच्यताम् । केकयाय केकयदेशाधिपतये [१]युधाजिते, वासांसि च, रत्नानि च, धनानि च, आकल्पा आभरणानि च, दीयन्तां प्रदीयन्ताम् । वसिष्ठः इति दूतान् प्रति कथयित्वा, पथः सम्बन्धि पाथेयम्, मार्गगमनसमये व्ययाय युक्तद्रव्यमित्यर्थः, दत्वा दूतान् सन्देशहारान् विजयसिद्धार्थादीन् । 'स्यात् सन्देशहरो दूतः' इत्यमरः । अयातयत् प्रेषयामास । यत निकरोपस्कारयोः लङ् । अयापयदिति क्वचित्पाठः ॥ ५–७ ॥

**(सं.चं.)** एवं मार्कण्डेयादिभिर्मन्त्रालोचनफलतया वसिष्ठः कार्यं निश्चित्य । विजयः सिद्धार्थः जयन्तोऽशोक इतीमांश्चतुरोऽमात्यान् । 'एहि सिद्धार्थ विजय जयन्ताशोकनन्दन' (६८.५) इति च । अशोकनन्दन इत्यशोकस्यैव नामधेयम् । 'अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत्' (७.३) इति बालकाण्डवचनात् । गच्छत केकयराजधानीम् । इयं मदाज्ञेति भरताय निवेद्यताम् । रामविवासः नोच्यताम् । दशरथस्य मृत्युश्च नोच्यतामिति प्रत्येकमन्वयः । कैकयायाश्वपतये युधाजिते च । आकल्पा मण्डनान्याभरणानि । 'आकल्पो भूषणं वेषः' इत्यभिधानम् । पाथेयं पथि व्ययार्थं यद् धनं दीयते । 'पाथेयं सम्बळं स्मृतम्' इति च । दूतान् सन्देशहरान् मन्त्रिणः ॥ ५–७ ॥

**वसिष्ठेन गरिष्ठेन त्वरितं प्रेषितास्ततः ।**
**ते हस्तिनपुरे गङ्गां तीर्त्वा प्रत्यङ्मुखा ययुः[२] ॥ ८ ॥**

**(भा.दी.)** ततः गरिष्ठेन श्रेष्ठेन वसिष्ठेन प्रेषिताः ते दूताः, हस्तिनाख्यं यत्पुरं तस्मिन् गङ्गां तीर्त्वा, प्रत्यक् मुखं येषां ते तथा, पश्चिमाभिमुखाः सन्त इत्यर्थः, त्वरितं यथा भवति तथा ययुः ॥ ८ ॥

**(सं.चं.)** गङ्गां यमुनां च तीर्त्वा प्रत्यङ्मुखाः पश्चिमाभिमुखा ययुः । रामायणे च–'ते हस्तिनपुरे गङ्गां तीर्त्वा प्रत्यङ्मुखा ययुः' (६८.८) इत्येव पठ्यते । 'हस्तिनपुरे' इत्यर्वाचीनः पाठः, रामायणे च, सङ्ग्रहरामायणे च । राजपुरोधसां वरिष्ठेन ॥ ८ ॥

**अतीत्य पाञ्चालकुरूनिक्षुमत्यादिका नदीः ।**
**बाह्लीकानतिगत्याऽपुः[३] केकयान् सप्तमे दिने ॥ ९ ॥**

---

१. '**अश्वपतये**' इति वक्तुमुचितम् । २. '**अगुः**' ३. '**बाह्लीकानप्यतीत्याऽपुः**' इति, '**बाह्लीकानतिगम्याऽपुः**' इति च ।

**(भा.दी.) अतीत्ये**ति । पाञ्चालाः पाञ्चालाख्यदेशास्ते च, कुरवः कुरुनामकदेशास्ते च तान् अतीत्य, इक्षुमती इक्षुमतीनाम्नी आदिर्यासां तास्तथोक्तास्ता नदीश्च, अतीत्य अतिक्रम्य बाह्लीकान् बाह्लीकनामविषयान् अतिगत्य अतीत्य, केकयान् केकयविषयान्, सप्तमे दिनं दिवसस्तस्मिन् आपुः ययुः ॥ ९ ॥

**(सं.चं.)** बाह्लीकान् जनपदान् । 'ಪಂಜಾಬ್' इति भाषायाम् ॥ ९ ॥

**यां रात्रिं तत्र ते यातास्तामेव भरतोऽप्यथ ।**
**[1]दुःस्वपमवलोक्याभूच्छोकाकुलितमानसः ॥ १० ॥**

**(भा.दी.) यामि**ति । अथ ते दूताः, यां रात्रिं यस्यां रात्रौ, तत्र केकयदेशे याताः, भरतोऽपि तामेव रात्रिं तस्यां रात्रौ, दुष्टश्चासौ स्वप्नश्च दुःस्वप्नस्तम्, 'दुरशोभनदुःखयोः' इति वैजयन्ती, अवलोक्य, शोकेन आकुलितं मानसं मनो यस्य स तथा अभूत् ॥ १० ॥

**(सं.चं.)** यां रात्रिं यस्यां रात्र्याम् । तामेव रात्रिं तस्यामेव रात्र्याम् । 'यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् । भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः' (६९.१) इति च । सप्तम्यर्थे द्वितीया छान्दसीत्येके । अत्यन्तसंयोगे द्वितीयेति बहवः । समग्रां रात्रिं प्रयाय प्रातर्गिरिव्रजमापुरित्यर्थः । भरतोऽपि प्रातरन्तं दुःस्वप्नान् ददर्शेति ॥ १० ॥

**सागरं शुष्कमद्राक्षीच्चन्द्रं च पतितं भुवि ।**
**रक्तमाल्यं स्वपितरं[2] गोमये मुक्तमूर्द्धजम् ॥ ११ ॥**

**पिबन्तं तैलमसकृद्धसन्तं[3] खरवाहनम् ।**
**स्थितं कार्ष्णायसे पीठे कृष्णवस्त्रं तमैक्षत[4] ॥ १२ ॥**

**(भा.दी.)** स्वप्नदर्शनप्रकारं दर्शयति– **सागरमि**त्यादिना । सागरः समुद्रस्तं शुष्कं निरुदकं अद्राक्षीत् ददर्श, दृशिर् प्रेक्षणे लुङ् । चन्द्रं च भुवि पतितमद्राक्षीत् । स्वपितरं दशरथं रक्तं माल्यं माला यस्य स तथा तम्, गोपुरीषं गोमयं तस्मिन्, तस्य पुरीषमिति[5] मयट्, मुक्तो विकीर्णो मूर्द्धजः कचभारो यस्य

---

१. **'दुःस्वप्नानव–'** २. **'रक्तमाल्यं च पितरम्'** ३. **'–कृद् वहन्तम्'** इति वि.ती.पाठः । अर्थस्तु न स्वरसः ।
४. **'कृष्णवस्त्रं समैक्षत'** ५. तथाहि पाणिनिः–**'गोश्च पुरीषे'** (४.३.१४५) इति ।

स तथा तम्, तिलेभ्य उत्पन्नं तैलं तत् असकृत् बहुवारं पिबन्तम्, खर एव गर्दभ एव वाहनं तत् वहन्तं आरूढम्, कृष्णायसः विकारः कार्ष्णायसं तस्मिन् पीठे स्थितम्, कृष्णं नीलं वस्त्रं यस्य स तथा तं ऐक्षत ॥ ११–२ ॥

**(सं.चं.)** गोमये पतितम् । असकृत् तैलं पिबन्तम्, पायम्पायं हसन्तम् ॥ ११–३ ॥

**दुःस्वप्नेनाऽकुलः प्रातः प्राप्तान् दूतान् पदे नतान् ।**
**सर्वान् कुशलिनोऽपृच्छद् भरतो भयविक्लबः ॥ १३ ॥**

**(भा.दी.)** **दुरि**ति । दुष्टश्चासौ स्वप्नश्च दुस्स्वप्नस्तेन आकुलः सम्भ्रान्तः, भयेन विक्लबः उद्विग्नः परवशः, भरतः प्रातः प्रातःकाले प्राप्तान्, पदं पादस्तस्मिन् नतान् दूतान् प्रति, सर्वान् बन्धून् कुशलं क्षेमं एषामस्तीति तथोक्तास्तान् अपृच्छत् विचारितवान् । प्रच्छ जिज्ञासायां लङ् ॥ १३ ॥

**सर्वान् कुशलिनः प्रोच्य[1] दूतास्ते पुनरब्रुवन् ।**
**कृत्यमात्ययिकं[2] कर्तुमाह्वानं तत् पुरोधसः[3] ॥ १४ ॥**

**(भा.दी.)** **सर्वानि**ति । ते दूताः सर्वान् बन्धून् कुशलिनः प्रोच्य, पुनः अत्ययोऽनन्तरं विद्यमानमात्ययिकम्, दशरथमरणानन्तरं विद्यमानं संस्कारादिकमित्यर्थः, कृत्यं कार्यं तत् कर्तुं पुरोधसः वसिष्ठस्य आह्वानं आह्वानमात्रं तत् अब्रुवन् । न पुनर्दशरथमरणादिकं प्रोचुरित्यभिप्रायः ॥ १४ ॥

**(सं.चं.)** आत्ययिकम् । 'त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया' (७०.३) इति च । कालात्ययं प्राप्तमात्ययिकम् । सद्यः कर्तव्यमिति माधवयोगी । अत्ययो नाशः । नाशप्रयोजनकमात्ययिकम् । दुरितादिनाशार्थं सद्यः करणीयं प्रायश्चित्तादिकमित्यन्ये । अत्यय इति कृच्छ्रमुच्यते । तेनाऽत्ययिकं कृच्छ्रसाध्यं दुष्करमिति गोविन्दराजीयं विवरणं तु न श्लिष्यति । सर्वथा कालातिक्रमासहं सद्यः करणीयं कर्म पदार्थः ॥ १४ ॥

**मातामहं मातुलं च गुरुं चाऽपृच्छ्य सत्वरः ।**
**धनं च मातुलप्रत्तं सैन्यं चाऽदाय यातवान् ॥ १५ ॥**

---

१. **'प्रोचुर्दूतास्ते'**

२. **'कृत्यमत्यधिकम्'** । **'आत्ययिकम्, अत्ययानन्तरं विद्यमानं दशरथमरणानन्तरमपि विद्यमानं संस्कारादिकमित्यर्थः'** इति वि.भू. । नातिस्वरसम् । तस्य सम्प्रत्यनुद्घाटनीयत्वात् । **'कृत्यमभ्यधिकम्'** इति कश्चित् ।

३. **'त्वत्पुरोधसः'** इति भ्रान्तः पाठः ।

**(भा.दी.) मातामहमि**ति । त्वरया सहितः सत्वरः भरतः, मातामहं मातुः पितरं अश्वपतिनामानम्, मातुलं युधाजिन्नामानं मातुर्भ्रातरं च, गुरुं स्वस्य विद्याभ्यासकर्तारं गुरुं च आपृच्छ्य आमन्त्र्य, मातुलेन युधाजिता प्रत्तं दत्तं तत् धनं च सैन्यं च आदाय यातवान् अयोध्यां प्रति प्रस्थानं चक्रे ॥ १५ ॥

**(सं.चं.)** मातामहमश्वपतिम् । मातुलं युधाजितम् । तत्र भरतशत्रुघ्नयोर्यो गुरुरासीत् तं च । केकयराजगुरुं वा । मातुलेन च प्रत्तं दत्तम् । दाञ् दाने । 'अच उपसर्गात् तः' (अ.सू.७.४.४७) । चकारेण मातामहप्रत्तं च धनम् । मातुलप्रत्तमिति विशिष्योल्लेखेन स तदा युवराज आसीदिति सूचयाम्बभूव ॥ १५ ॥

**[१]शतद्रुवेदधामादिनदीस्तीर्त्वाऽथ सत्वरः ।**
**देशानतीत्य विविधान् सप्तमेऽह्नि पुरं ययौ ॥ १६ ॥**

**(भा.दी.) शुतुद्री**ति[२] । अथ सत्वरः भरतः, शुतुद्रिश्च[३] वेदधामा च ते आदी यासां तास्तथा, ताश्च ता नद्यश्च ताः तीर्त्वा, विविधान् देशान् अतीत्य, सप्तमं अहः दिवसस्तस्मिन्, पुरमयोध्यापुरं तत् ययौ ॥ १६ ॥

**(सं.चं.)** शतद्रुः सिन्धुसङ्गमनी नदी । यां शतद्रूः, शुतुद्रिः, शुतुद्रीति बहुधा वदन्ति । 'सत्लेज्' इति पाश्चात्यं नाम । 'शतद्रुमतरच्छ्रीमान्नदीमिक्ष्वाकुनन्दनः' (७१.२) इति वाल्मीकिः । 'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या' इति श्रुतिः । शतधा द्रवणात् शतद्रुः शतुद्रूर्वा । वर्णव्यत्ययेन शुतुद्रिः शुतुद्री वा । तथाहि महाभारते– 'शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता' इति । वेदधामाख्या चापरा नदी ॥ १६ ॥

**अप्रहृष्टजनां पश्यन्नप्रहृष्टमनाः पुरीम् ।**
**भरतो भयसम्भ्रान्तो[४] जनन्यन्तःपुरं ययौ ॥ १७ ॥**

**(भा.दी.) अप्रहृष्टे**ति । प्रहृष्टा न भवन्तीत्यप्रहृष्टाः तादृशा जना यस्यां सा तथा तां पुरीं पश्यन्, अत एव अप्रहृष्टमसन्तुष्टं मनो यस्य स तथा, भरतः भयसम्भ्रान्तः सन्, जनन्याः मातुः कैकेय्याः अन्तर्विद्यमानं पुरं मन्दिरं अन्तःपुरं ययौ ॥ १७ ॥

**(सं.चं.)** अनिष्टाशङ्काजनितेन भयेन सम्भ्रान्तो व्याकुलः ॥ १७ ॥

**कैकेयी सुतमालोक्य चिरप्रोषितमागतम् ।**
**उत्थायाऽश्लिष्य पप्रच्छ बन्धूनां कुशलं मुदा ॥ १८ ॥**

१. 'शुतुद्रिवेदधामादि–' । 'शुतुद्र-' इति च । २. 'शतद्रुविति' ३. 'शतद्रुश्च' ४. '–भ्रान्तो मातुरन्तःपुरम्'

**(भा.दी.) कैकेयी**ति । कैकेयी चिरं प्रोषितः प्रवासस्थस्तम्, आगतं सुतं भरतं आलोक्य, आसनादुत्थाय, आश्लिष्य च बन्धवो युधाजिदादयस्तेषां कुशलं क्षेमं तत्, मुत् सन्तोषस्तया पप्रच्छ ॥ १८ ॥

**(सं.चं.)** चिरं प्रोषितम्, प्रकृष्टदूरमुषितम्, प्रवासगतम् । बन्धूनामश्वपत्यादीनाम् । अधिकारदुराशया भर्तृमरणदुःखमपि विस्मृत्य मुदा पप्रच्छ ॥ १८ ॥

**भरतस्तान् कुशलिनः प्रोच्य पप्रच्छ मातरम् ।**
**कुत्राऽस्ते मे पिता तस्य वन्देय चरणाविति ॥ १९ ॥**

**(भा.दी.) भरत** इति । भरतः तान् पृष्टान् बन्धून्, कुशलं क्षेममेषामस्तीति कुशलिनस्तान् प्रोच्य, मे पिता दशरथः कुत्र आस्ते? तस्य चरणौ अहं वन्देय अभिवादयेयम्, इति मातरं पप्रच्छ ॥ १९ ॥

**(सं.चं.)** तान् केकयदेशगतान् बन्धून् प्रोच्य प्रथमं मातुः प्रश्नस्योत्तरमुक्त्वा ॥ १९ ॥

**तात[1] ते स्वर्गतस्तातो यज्वा विपुलदक्षिणः ।**
**इति [2]मात्रुक्तिबाणेन भरतो मूर्च्छितोऽपतत् ॥ २० ॥**

**(भा.दी.) तात**ेति । हे तात भरत, यज्वा यज्ञशीलः, विपुला भूयसी दक्षिणा यस्य स तथोक्तः, बहुदक्षिणाप्रद इत्यर्थः, ते तव पिता स्वः स्वर्गं प्रति गतः प्राप्तः । भरतः इति मातुः कैकेय्या उक्तिर्वाक् सैव बाणस्तेन मूर्छितः सन् अपतत् ॥ २० ॥

**(सं.चं.)** 'तात' इति प्रीतिसम्बोधनम् । यथा 'ಅಪ್ಪ' इति भाषायाम् । 'तातोऽनुकम्प्ये पितरि' इति हैमः । इयांस्तु विशेषः । अवरस्य प्रीतिपात्रस्य सम्बोधनमात्रे 'तात' इति प्रयुज्यते । नान्यासु विभक्तिषु । नहि ममायं प्रीतिपात्रं पुत्र इत्यर्थे 'ममायं तातः' इति प्रयोगो युज्यते ॥ २०–१ ॥

**कैकेय्योत्थापितः सञ्ज्ञां सम्प्राप्य पुरुषर्षभः ।**
**रुदन् बाष्पाभिपूर्णाक्षो[3] विलप्येदं वचोऽब्रवीत् ॥ २१ ॥**

**(भा.दी.) कैकेय्ये**ति । कैकेय्या उत्थापितः पुरुषर्षभः भरतः सञ्ज्ञां सम्प्राप्य, रुदन् सन्, बाष्पेण अश्रुणा अभिपूर्णे अक्षिणी यस्य स तथा सन्, विलप्य परिदेवनं कृत्वा, इदं वक्ष्यमाणं वचः अब्रवीत् ॥ २१ ॥

---

१. **'तातस्ते स्वर्गतस्तात यज्वा'** २. **'मात्रोक्तिबाणेन'** ३. **'बाष्पाम्बुपूर्णाक्षो–'**

**अभिषेक्ष्यति मे तातो[१] नूनं रामं ममाग्रजम् ।**
**इत्यहं[२] हर्षितः प्राप्तो मन्दभाग्यो[३] महापदे ॥ २२ ॥**

**(भा.दी.) अभी**ति । मे तातः दशरथः मम अग्रजं ज्येष्ठं श्रीरामं नूनं अभिषेक्ष्यति यौवराज्येऽभिषेकं करिष्यति । षिच सेचने लृट् । इति हर्षितः सन्तुष्टः प्राप्तः, मन्दं स्वल्पं भाग्यं यस्य स तथा, अहं महती च सा आपच्च तस्यै, बहळकष्टानुभवायेत्यर्थः, प्राप्तोऽस्मि ॥ २२ ॥

**(सं.चं.)** अभिषेकस्मरणेनैव हर्षं प्रापितः । रामाभिषेकदर्शनायेति प्राप्त आगतः । प्रत्युत सम्प्रति महत्या आपदे प्राप्तः ॥ २२–३ ॥

**ज्येष्ठाय सर्वश्रेष्ठाय रामाय स्वामिने मम ।**
**कृपाकराय गुरवे ब्रूहि मां दासमागतम् ॥ २३ ॥**

**(भा.दी.) ज्येष्ठे**ति । ज्येष्ठाय अग्रजाय, सर्वेभ्यः श्रेष्ठाय, मम स्वामिने, कृपाया आकर आश्रयस्तस्मै, गुरवे श्रीरामाय दासं मां आगतं ब्रूहि ॥ २३ ॥

**भवापदो[४] विनश्यन्ति [५]यत्पादाम्बुजसेवया ।**
**तस्य रामस्य नाथस्य कुर्य्यां पादाभिवन्दनम् ॥ २४ ॥**

**(भा.दी.) भवे**ति । यस्य श्रीरामस्य पादौ तावेवाम्बुजे तयोः सेवा तया, भवः संसारस्तस्य आपदः क्लेशाः विनश्यन्ति । नश अदर्शने लट् । नाथस्य तस्य श्रीरामस्य पादयोरभिवन्दनं नमस्कारस्तत् कुर्यां करवाणि । कृञो लिङ् ॥ २४ ॥

**(सं.चं.)** भवे संसारे भवस्य वा या आपदः ॥ २४ ॥

**पिता दैत्यविदारी मे मारितः केन हेतुना ।**
**चरमं व्याहृतं तस्य किं च तत् कत्थ्यतामिति ॥ २५ ॥**

---

१. 'मे मातर्नूनम्' २. 'इत्येवं हर्षितः' ३. '–भाग्योऽहमापदे'
४. '–पदोऽपि नश्यन्ति' ५. 'यत्पदाम्भोज–'

**(भा.दी.) पितेति** । दैत्यान् विदारयितुं शीलमस्यास्तीति दैत्यविदारी, दैत्यविनाशक इत्यर्थः, मे पिता केन हेतुना केन कारणेन मारितः मृतः? तस्य दशरथस्य चरमं अवसानकाले विद्यमानं व्याहृतं वचनं (च) किं कीदृशम्? मरणसमये किमुक्तमित्यर्थः । तत् पृष्टं समस्तं त्वया कथ्यताम् । कथ वाक्यप्रबन्धे लोट् । इति अब्रवीत् ॥ २५ ॥

**(सं.चं.)** केन हेतुना केन व्याधिना? कारणान्तरेण वा? तत् कथ्यताम् । मरणकाले तस्य चरमवाक्यं किम्? तच्च कथ्यताम् ॥ २५ ॥

**रामं ससीतं द्रक्ष्यन्ति धन्याः सिद्धार्थमागतम् ।**
**हा रामेत्युत्तरं वाक्यं तस्येत्यम्बा तमब्रवीत्[1] ॥ २६ ॥**

**(भा.दी.) राममिति** । धन्याः पुण्यवन्तः, सिद्धः निष्पन्न अर्थः प्रयोजनं यस्य स तथा तम्, साधिताभिप्रायमित्यर्थः, आगतं पुरमागतं ससीतं श्रीरामं द्रक्ष्यन्ति, हा राम इति (तस्य दशरथस्य) उत्तरं जीवितावसाने भवं वाक्यम्, मरणकालीनदशरथवाक्यम्, इति अम्बा माता तं भरतं अब्रवीत् ॥ २६ ॥

**(सं.चं.)** सिद्धार्थः निर्वर्तितप्रतिज्ञः । उत्तरं वाक्यं चरमवाक्यम् ॥ २६ ॥

**मम नाथो जगन्नाथः ससीतः कुत्र वर्त्तते ।**
**इति पप्रच्छ भरतो महादुःखाग्निशङ्कया ॥ २७ ॥**

**(भा.दी.) ममेति** । जगन्नाथः ससीतः मम नाथः श्रीरामः कुत्र वर्तते? भरतः महद्दुःखं तदेवाग्निस्तस्य शङ्कया इति पप्रच्छ ॥ २७ ॥

**(सं.चं.)** तर्हि रामः क्व गत इति पृच्छति– मम नाथः । महादुःखं रामविप्रयोगाख्यम् । तदेवाग्निः । तस्य शङ्कया ॥ २७ ॥

**रामः ससीतासौमित्रिश्चीरी वनमितो गतः ।**
**इत्युवाच प्रियं मत्वा कैकेयी तस्य विप्रियम् ॥ २८ ॥**

**(भा.दी.) राम** इति । सीता चासौ सौमित्रिश्च ताभ्यां सहितः श्रीरामः, चीरमस्यास्तीति तथा सन्, इतः अयोध्यायाः वनं प्रति गतः, इति तस्य भरतस्य विप्रियं अप्रियं वचः प्रियमिति मत्वा कैकेयी उवाच ॥ २८ ॥

---

१. 'ततोऽब्रवीत्'

**(सं.चं.)** चीरी चीरवसनः । तस्य विप्रियमपि राज्यलाभलोभेन प्रियं स्यादिति मत्वा ॥ २८–३० ॥

**विवासः श्रीनिवासस्य कस्माद्धेतोरजायत ।**
**अनवद्यस्य तस्येति पप्रच्छ भरतोऽथ ताम् ॥ २९ ॥**

**(भा.दी.)** **विवास** इति । अथ भरतः, न विद्यते अवद्यं पितृवैमनस्यादिदोषो यस्य स तथा तस्य, श्रियो निवास आवासभूतस्तस्य, तस्य श्रीरामस्य, विवासः वनवासः कस्मात् हेतोः अजायत? जनी प्रादुर्भावे लङ् । इति तां कैकेयीं पप्रच्छ ॥ २९ ॥

**[1]इत्याकुलतरं पुत्रं कैकेयी वाक्यमब्रवीत् ।**
**सत्यं रामोऽनवद्यात्मा चन्द्रवद् रञ्जयन् प्रजाः ॥ ३० ॥**

**[2]तस्योद्यतेऽभिषेकेऽत्र [3]कृतवत्यस्मि ते हितम् ।**
**रामस्य तु वने वासं राज्ये त्वदभिषेचनम् ॥ ३१ ॥**

**(भा.दी.)** **इतीति** । इत्येवं अतिशयेन आकुल इत्याकुलतरस्तम्, पुत्रं भरतं प्रति कैकेयी, श्रीरामः, न विद्यते अवद्यं दोषो यस्य स तथोक्तस्तादृश आत्मा स्वभावो यस्य स तथा, चन्द्रवत् प्रजाः रञ्जयन् सन्तोषयन् इत्येतत् सत्यं यथार्थम् । अत्र अयोध्यायां तस्य श्रीरामस्य, अभिषेको यौवराज्याभिषेकस्तस्मिन् उद्यते सति, कर्तुमारब्धे सति, श्रीरामस्य वने वास आवासस्तम्, राज्यं साम्राज्यं तस्मिंस्तु, त्वदभिषेचनं तव अभिषेचनम्, इति ते हितं द्वयं अहं कृतवती अस्मि । इति वाक्यं वचः अब्रवीदिति सम्बन्धः ॥ ३०–३१ ॥

**(सं.चं.)** तस्य रामस्य, अत्र अयोध्यायाम्, अभिषेक उद्यते प्रारब्धे । अहं तु ते हितमिति । प्रियं स्यात्, मा भूद् वा, किन्तु हितमिति रामस्य वने वासं राज्ये त्वदभिषेचनं च वरबलेन कृतवती साधितवती । तुना रामस्य प्रजारञ्जकत्वं नाम विशेषमाह । अत एव त्वदभिषेचनस्य प्रत्यूहो मा भूदिति तस्य वने वासं वरमवृषि । वृत्वा च ते हितं कृतवती । अहो, अजानन्त्येव कैकेयी दैवचोदितेव तथ्यमाह–ते अहित-मिति ॥ ३१–२ ॥

**आत्माज्ञया वनं याते सीतासौमित्रिसंयुते ।**
**[4]रामे हा रामरामेति राजा शोकाद् दिवं गतः ॥ ३२ ॥**

---

१. 'अत्याकुल–' २. 'तस्योद्यतोऽभिषेकोऽत्र' ३. 'वृतवत्यस्मि' ४. 'हा राम रामरामेति'

**(भा.दी.)** श्रीरामस्य वनवासनिमित्तमुक्त्वा दशरथमरणकारणमाह– **आत्मेति** । राजा दशरथः आत्मनः स्वस्य या आज्ञा, चतुर्दशवर्षेषु वने तिष्ठेत्याज्ञा, तया सीता च सौमित्रिश्च ताभ्यां संयुते श्रीरामे वनं प्रति याते गते सति, (हा) राम (हा) राम इति शोको दुःखं तस्मात् द्यौः स्वर्गस्तां प्रति गतः ॥ ३२ ॥

**जुगुप्सितमिदं कर्म्म त्वयि स्नेहान्मया[१] कृतम् ।**
**रक्ष राज्यं स्वधर्म्मेण यत्नं मे सफलं कुरु ॥ ३३ ॥**

**(भा.दी.)** ईदृशं कुकर्म किमर्थं कृतमित्यत आह– **जुगुप्सितमिति** । मया जुगुप्सितं निन्दितं इदं श्रीरामस्य वनवासकारणं कर्म त्वयि स्नेहोऽनुरागस्तस्मात् कृतम् । त्वं राज्यं अस्मदीयं यद्राज्यं तत् स्वस्य यो धर्मस्तेन रक्ष । मे यत्नः प्रयत्नस्तं सफलं सप्रयोजनं कुरु इति अब्रवीदिति सम्बन्धः ॥ ३३ ॥

**(सं.चं.)** यद्यपि जुगुप्सितम् । तथाऽपि त्वयि स्नेहादिदं कृतम् । अदम्यो हि सर्वातिशायी मातुः पुत्रस्नेहः, सोऽकार्यमपि कारयति, असाध्यमपि साधयति ॥ ३३ ॥

**जाज्वल्यमाने शोकाग्नाविति वाक्येन पातितः ।**
**तातप्यमानो भरतः कैकेयीमिदमब्रवीत् ॥ ३४ ॥**

**(भा.दी.)** **जाज्वल्येति** । इति वाक्यं वचः तेन, पुनःपुनरतिशयेन वा ज्वलतीति जाज्वल्यमानस्तस्मिन्, शोक एवाग्निस्तस्मिन्, पातितः अत एव तातप्यमानः अतिशयेन तप्यमानः भरतः कैकेयीं प्रति इदं वचः अब्रवीत् ॥ ३४ ॥

**(सं.चं.)** तातप्यमानः पश्चात्तापदग्धः ॥ ३४ ॥

**हत्वा मे पितरं घोरे प्रवास्य च ममेश्वरम् ।**
**रामं दुःखे महद् दुःखं क्षते क्षारमिव व्यधाः[२] ॥ ३५ ॥**

**(भा.दी.)** **हत्वेति** । हे घोरे दारुणे कैकेयि, मे पितरं हत्वा, मम ईश्वरं स्वामिनं श्रीरामं प्रवास्य वनवासं कारयित्वा च, पितृमरणं श्रुत्वोत्पन्नं यद् दुःखं तस्मिन्, महद् दुःखम्, श्रीरामप्रवासजन्यं दुःखम्, क्षतं व्रणं तस्मिन्, क्षारमिव विषमिश्रभस्मरूपक्षारमिव । 'धूर्तभस्मरसाः क्षाराः' इति वैजयन्ती । व्यधाः अकरोः ॥३५॥

१. **'स्नेहात् कृतं मया ।'** इति, **'त्वयि स्नेहादिदं कृतम्'** इति च ।

२. **'दुष्टे व्यधा महद् दुःखं विषं क्षीरमिवेक्षसे'** इति, **'दुःखे व्यधा महादुःखं विषक्षारमिव क्षते'** इति च । **'विषक्षारं विषयुक्तसर्षपादिरसमिव'** इति का.श्री ।

**(सं.चं.)** ममेश्वरं स्वामिनं रामम्। क्षारमिव लवणमिव। 'दुःखे मे दुःखमकरोर्व्रणे क्षारमिवादधाः' (७३.३) इति च। 'भस्मनि धूर्ते लवणे क्षारः' इति हैमः। अत्र 'दुःखे व्यथा महद् दुःखं क्षते क्षारमिव व्यधाः' इति पाठः प्रचलितो दृश्यते। स च पुनरुक्त इव। नापि सा पुनरुक्तिर्लाटानुप्रास इव काव्यशोभां पुष्णाति। तस्माद् 'रामं दुःखे महद् दुःखम्' इति प्राचीनपाठः स्यादिति भाति॥ ३५॥

**ब्रह्मभ्रूणवधाभ्यां च दोषौ लक्षगुणोल्बणौ।**
**कृत्वा त्वदर्थमित्युक्त्वा मां च[1] भस्मीकरोष्यहो[2] ॥ ३६॥**

**(भा.दी.) ब्रह्मेति**। ब्रह्मा ब्राह्मणः स च, भ्रूणो बालः स च, तयोर्वधः ताभ्याम्। 'भ्रूणोऽर्भके स्त्रैणगर्भे गर्भिण्यां श्रोत्रियद्विजे' इति वैजयन्ती। लक्षसङ्ख्याको यो गुण आवर्तनं तस्मात् उल्बणौ क्रूरौ, लक्षावृत्त्या उल्बणावित्यर्थः, दोषौ कृत्वा, तव कृते त्वदर्थम्, तव प्रयोजनार्थमित्यर्थः, इति उक्त्वा मां च भस्मीकरोषि, मां च नरके पातयसीत्यर्थः। अहो आश्चर्यम्॥ ३६॥

**(सं.चं.)** ब्राह्मणवधः, भ्रूणस्य गर्भस्थशिशोर्वध इत्युभावपि महापातके। ततोऽपि लक्षगुणम्, लक्षेण गुणितं यावत् स्यात् तावदुल्बणौ उद्भणौ। 'उल्बणमुत्कटमुद्धतमिति नातिनानार्थाः' इत्यभिधानम्। अतिघोरमतिक्रूरं चेत्येतत्। पतिमारणं रामविवासनमितीमौ दोषौ। तदपि त्वदर्थं कृतमिति घातकभारं मयि निक्षिप्यापराधाग्निना मां भस्मीकरोषि। अहो कल्पनातीतमेतत्॥ ३६॥

**पापिष्ठे राजनिधनं रामप्रव्रजनं च ते।**
**राज्यभोगाय मे नैव [3]तत्र स्युः साक्षिणः सुराः ॥ ३७॥**

**(भा.दी.) पापिष्ठ** इति। हे पापिष्ठे कैकेयि, राज्ञो निधनं वधः, श्रीरामस्य प्रव्रजनं वनवासश्च, ते तव राज्यस्य भोग उपभोगस्तस्मै स्यात्। मे मम राज्यभोगाय नैव भवेत्। तत्र एतस्मिन्नर्थे सुराः साक्षिणः स्युः भवेयुः॥ ३७॥

**(सं.चं.)** ते त्वया कृते। मे राज्यभोगाय हेतुभूते नैव स्याताम्॥ ३७॥

**त्वद्देहादुदभूद् देहो योऽयं दूषणभूषणे।**
**इमं तु सन्त्यजाम्यद्य मा भून्मे देवहेळनम् ॥ ३८॥**

---

१. **'मां तु भस्मी–'**। **'मां तु मामेव'** इति का.श्री। २. **'करोषि हि'** ३. **'तस्य स्युः'**

**(भा.दी.)** त्वदिति । दूषणं दोषो भूषणमलङ्कारो यस्याः सा तत्सम्बुद्धिः, हे कैकेयि, यः अयं देहः, तव देहः त्वद्देहः, तस्मात् उदभूत् जातः । इमं तु देहं अद्य सन्त्यजामि । त्यज विसर्गे लट् । मे देवस्य श्रीरामस्य हेळनं अवज्ञा मा भूत् ॥ ३८ ॥

**(सं.चं.)** दूषणमेव भूषणं मन्यमाना दूषणभूषणा । तमिमं देहं सन्त्यजामि । 'इमं तं सन्त्यजाम्यद्य' इत्येव प्राचीनपाठः स्यादिति भाति । मे मत्तो मम देवस्य रामस्य हेळनमनादरोऽवज्ञा वा मा भूत् ॥ ३८ ॥

**सहस्रपुत्रा सुरभिः खिन्ना स्मृत्वा कृशौ सुतौ ।**
**एकपुत्रा च कौसल्या तद्वियोगं सहेत किम् ॥ ३९ ॥**

**(भा.दी.)** सहस्रेति । सहस्रसङ्ख्याकाः पुत्रा यस्याः सा तथोक्ता, सुरभिः गवां माता सुरभिदेवी, सहस्रपुत्राणां मध्ये द्वौ पुत्रौ कर्षकातिपीडनात् कृशौ स्मृत्वा खिन्ना दुःखिता आसीत् । अस्तेर्लङ् । केदारकर्षकपीडितौ सुतौ स्मृत्वा दुःखितां सुरभिं प्रति पुत्रसहस्रेषु विद्यमानेषु तवानयोः कृपायां कोऽतिशय इतीन्द्रेण पृष्टे सति सर्वत्र प्रीतिः साम्येऽपि दीने तु कृपाऽतिशयितेति सुरभिणोक्ते जीवितादप्यतिशयेन प्रीतिविषयं पुत्रं ज्ञात्वा कर्षकस्य विघ्नमाचरन् (इन्द्रः) सहसा भूयिष्ठं तोयं केदारमज्जनार्थं ववर्षेति हि पौराणिकी प्रसिद्धिः । एकः पुत्रो यस्याः सा तथोक्ता कौसल्या तस्य श्रीरामस्य यो वियोगस्तं सहेत किम्? सहनं कुर्यात् किम्? षह मर्षणे लिङ् । सहस्रपुत्राऽपि सुरभिर्यदा द्वयोः पुत्रयोः खेदेन खिन्नाऽभूत्, तदेक-पुत्रायास्तद्वियोगेन क्लेशः किं वक्तव्य इत्यर्थः ॥ ३९ ॥

**(सं.चं.)** सहस्रपुत्रा सुरभिः । तथाहि रामायणे कथा–'अन्यदा किल धर्मज्ञा सुरभिः सुरसम्मता । वहमानौ ददर्शोर्व्यां पुत्रौ विगतचेतसौ । तावर्धदिवसे श्रान्तौ पुत्रौ दृष्ट्वा महीतळे । रुरोद पुत्रशोकेन बाष्पपर्या-कुलेक्षणा । अधस्ताद् व्रजतस्तस्याः सुरराज्ञो महात्मनः । बिन्दवः पतिता गात्रे सूक्ष्माः सुरभिगन्धिनः । इन्द्रोऽप्यश्रुनिपातं तं स्वगात्रे पुण्यगन्धिनम् । सुरभिं मन्यते दृष्ट्वा भूयसीं तां सुरेश्वरः । निरीक्षमाणः शक्रस्तां ददर्श सुरभिं स्थिताम् । आकाशे विष्ठितां दीनां रुदन्तीं भृशदुःखिताम् । तां दृष्ट्वा शोकसन्तप्तां वज्रपाणिर्यशस्विनीम् । इन्द्रः प्राञ्जलिरुद्विग्नः सुरराजोऽब्रवीद् वचः । भयं कच्चिन्नचास्मासु कुतश्चिद् विद्यते महत् । कुतोनिमित्तः शोकस्ते ब्रूहि सर्वहितैषिणि । एवमुक्ता तु सुरभिः सुरराजेन धीमता । प्रत्युवाच ततो धीरा वाक्यं वाक्यविशारदम् । शान्तं पापं न वः किञ्चित् कुतश्चिदमराधिप । अहं तु मग्नौ शोचामि स्वपुत्रौ विषमे स्थितौ । एतौ दृष्ट्वा कृशौ दीनौ सूर्यरश्मिप्रतापितौ । अर्द्यमानौ बलीवर्दौ कर्षकेण सुराधिप । मम कायात् प्रसूतौ हि दुःखितौ भारपीडितौ । यौ दृष्ट्वा परितप्येऽहं नास्ति पुत्रसमः प्रियः । यस्याः पुत्रसहस्रैस्तु

कृत्स्नं व्याप्तमिदं जगत् । तां दृष्ट्वा रुदतीं शक्रो न सुतान्मन्यते परम् । सदाऽप्रतिमवृत्ताया लोकधारण-काम्यया । श्रीमत्या गुणनित्यायाः स्वभावपरिवेषया । यस्याः पुत्रसहस्राणि साऽपि शोचति कामधुक् । किं पुनर्या विना रामं कौसल्या वर्तयिष्यति । एकपुत्रा च साध्वी च विवत्सेयं त्वया कृता' (७४.१५–२९) इति ॥ ३९ ॥

**न त्वमश्वपतेः पुत्री पुत्री त्वं रक्षसो ध्रुवम् ।**
**यया नाथो जगन्नाथस्त्यक्तः कान्तश्च[१] सूदितः ॥ ४० ॥**

**(भा.दी.)** उत्तमे वचसा शिक्षेत्युक्तेर्मातुरपि योग्यशिक्षां करोति– **न त्वमि**ति । त्वं अश्वपतेः अश्वपति-नामकस्य केकयराजस्य पुत्री न, किन्तु (त्वं) रक्षसः राक्षसस्य पुत्री ध्रुवम् । कुत इत्यत आह–ययेति । यया त्वया जगन्नाथः मम नाथः स्वामी श्रीरामः त्यक्तः राज्याद् वियोजितः, कान्तश्च भर्ता दशरथश्च सूदितः संहृतः ॥ ४० ॥

**(सं.चं.)** न त्वमिति । 'न त्वमश्वपतेः कन्या धर्मराजस्य धीमतः । राक्षसी तत्र जाताऽसि कुलप्रध्वंसिनी पितः' (७४.९) इति च । राक्षसी रक्षःस्वभावा, रक्षसः पुत्री चेत्यर्थः । 'न त्वमश्वपतेः कन्या' इति पूर्व-वचनात् । तदेतद् स्फुटमाहपण्डिताचार्यः–'पुत्री त्वं रक्षसो ध्रुवम्'इति । किमुक्तं भवति? धर्मात्मनि महाराजेऽश्वपतावाविष्टं किमपि रूक्षं रक्षस्त्वां जनयामासेत्युक्तं भवति । अत एव कान्तश्च । सूदितः मारितः॥४०॥

**तस्याऽर्त्तगिरमाश्रुत्य भृशार्त्तो लक्ष्मणानुजः ।**
**ज्येष्ठं पतितमुत्थाप्य क्षुभितो[२] वाक्यमब्रवीत् ॥ ४१ ॥**

**(भा.दी.) तस्ये**ति । तस्य भरतस्य, आर्तस्य गीर्नादस्ताम्, आश्रुत्य भृशमत्यन्तमार्तः दुःखितः, लक्ष्मणा-नुजः शत्रुघ्नः, दुःखातिशयात् पतितं ज्येष्ठं भरतं उत्थाप्य, क्षुभितः क्रोधात् क्षुब्धः सन् वाक्यं वचस्तत् अब्रवीत् ॥ ४१ ॥

**(सं.चं.)** आर्तां दुःखभरितां गिरम् । क्षुभितः क्रोधमूर्छितः । लक्ष्मणानुजः शत्रुघ्नः । ननु भरतोऽपि लक्ष्मणानुजः? सत्यम् । अथापि 'ज्येष्ठं पतितमुत्थाप्य' इत्युत्तरवचनात् शत्रुघ्न इति ज्ञायते । ननु स्फुटं भरतानुज इत्येवोच्यताम् । उच्येत । अथाप्येकमातृकत्वज्ञापनाय लक्ष्मणानुज इत्याह । तद्धि मुख्यमनुजत्वम् । लक्ष्मणानुजोऽप्यहो लक्ष्मणमाचिक्षेपेत्युत्तरवचनानुकूल्याय च ॥ ४१ ॥

---

१. 'कान्तस्तु सूदितः'

२. '–मुत्थाय कुपितो–'

**कथं लोकैकनाथेन राज्यं त्यक्तं स्त्रिया गिरा ।**
**कथं वा लक्ष्मणो धीरो यान्तं रामं न रुद्धवान् ॥ ४२ ॥**

**(भा.दी.) कथमि**ति । एको मुख्यो नाथ एकनाथः लोकानामेकनाथः तेन श्रीरामेण स्त्रियाः कैकेय्याः गीर्वाक् तया राज्यं कथं त्यक्तम्? धीरः लक्ष्मणः यान्तं वनं प्रति गच्छन्तं श्रीरामं कथं (वा) न रुद्धवान्? न निवारितवान् ॥ ४२ ॥

**(सं.चं.)** लोकानामयमेक एव नाथः । प्रधानश्च नाथः । 'स्त्रियाः गिरा' इति प्रतृण्णम् । 'स्त्रियो गिरा' इति पठन्तो भ्रान्ताः ॥ ४२ ॥

**एवं ब्रुवाणस्तां कुब्जां कैकेयीभेदकारिणीम् ।**
**श्रुत्वा ददर्श प्रद्वारे[1] सर्वाभरणभूषिताम् ॥ ४३ ॥**

**(भा.दी.) एवमि**ति । एवं ब्रुवाणः वदन् शत्रुघ्नः, कुब्जां ह्रस्वकायाम्, तां मन्थराम्, कैकेय्या भेदो बुद्धि-भेदस्तं कर्तुं शीलमस्या अस्तीति तथोक्ता तां श्रुत्वा, प्रद्वारं महाद्वारातिरिक्तद्वारं तस्मिन्, सर्वाणि यान्याभरणानि तैर्भूषितां ददर्श ॥ ४३ ॥

**(सं.चं.)** कुब्जां मन्थराम् । कैकेय्या मनोभेदकारिणीम् । श्रुत्वा–'यस्याः कृते वने रामो न्यस्तदेहश्च वः पिता । सेयं पापा नृशंसा च तस्याः कुरु यथामति' (७८.९) इति द्वारपालैरुक्तं श्रुत्वा । सर्वाभरणभूषितां ददर्श । प्रगतं द्वारं प्रद्वारम् । द्वारप्रान्ते । 'प्राग्द्वारेऽभूत् तदा कुब्जा सर्वाभरणभूषिता' (७८.५) इति च । 'प्रद्वारेऽभूत्–' इत्येव ग्रन्थकृदभिमतो रामायणपाठः । 'श्रुत्वा ददर्श प्राग्द्वारे' इति वाऽत्र पाठः । अयं मन्थरावृत्तान्तो दशरथसंस्कारानन्तरं त्रयोदशे दिने निर्वृत्त इति रामायणे पठ्यते । पाठक्रमादर्थक्रमो बलीयानिति पण्डिताचार्यः पूर्वं पपाठ ॥ ४३ ॥

**शत्रुघ्नः शत्रुदर्प्पघ्नश्चूडे सङ्गृह्य तां खलाम् ।**
**चकर्षामर्षताम्राक्षः स्मरंस्तस्याः कुमन्त्रितम् ॥ ४४ ॥**

**(भा.दी.) शत्रुघ्न** इति । शत्रूणां दर्पोऽहङ्कारस्तं हन्तीति तथोक्तः, अमर्षेण कोपेन ताम्रे रक्ते अक्षिणी यस्य स तथा, शत्रुघ्नः तस्याः मन्थरायाः कुत्सितं यन्मन्त्रितं कैकेय्या उपदिष्टं तत् स्मरन् सन्, खलां दुष्टां तां मन्थरां चूडः केशपाशस्तस्मिन् सङ्गृह्य चकर्ष कर्षणं चक्रे । कृष विलेखने लिट् ॥ ४४ ॥

१. **'प्रद्वारि सर्वा–'** । **'प्रद्वारि महाद्वारातिरिक्ते कस्मिंश्चिद् द्वारविशेषे'** इति वि.भू. ।

**(सं.चं.)** 'चूडे सङ्गृह्य' इति पठन्ति । 'चूडे केशपाशे सङ्गृह्य' इति व्याचक्षते । तदा 'चूडायाम्' इति पठितव्यम् । न 'चूडे' इति । भिदादिगणपठितत्वेन नियतस्त्रीलिङ्गत्वात् । तस्मात् चूडे इति द्वितीयाद्विवचनान्तं पदमिति युक्तं वचः । संहतः केशपाशः शिखा । शिखण्डा वेणीति यावत् । 'चतुःशिखण्डां हि रमां वदन्ति । वेणीद्वयं सम्भ्रमसूचकम् । विरहिणी पुनरेकवेणी भवतीति सम्प्रदायः । मन्थरा च, भरत आगत इति सम्भ्रमेण द्वे चूडे बध्वा सगर्वमन्तःपुरे चचार । तद् दृष्ट्वा जातामर्षः शत्रुघ्नः तस्याश्चूडे द्वे अपि सङ्गृह्य एकीकृत्य चकर्ष भूमाविति सर्वमनाकुलम् ॥ ४४ ॥

**कुब्जाबन्धुजने याते कौसल्यां [१]शरणार्थिनि ।**
**पुरश्चकर्ष[२] कैकेय्या हा हताऽस्मीतिवादिनीम् ॥ ४५ ॥**

**(भा.दी.) कुब्जे**ति । शरणं रक्षकमर्थयितुं शीलमस्यास्तीति तथोक्तस्तस्मिन्, कुब्जायाः मन्थरायाः यो बन्धुजनस्तस्मिन्, कौसल्यां प्रति याते प्राप्ते सति, कैकेय्याः पुरः पुरतः, अहं हता अस्मि, हा खेदे, इति वादिनीं मन्थरां चकर्ष । कृष विलेखने लिट् ॥ ४५ ॥

**(सं.चं.)** तस्याः बन्धुजनः सखीजनः शरणार्थी कौसल्यासमीपं पलायत । कैकेय्याः पुरः, तस्याः पश्यन्त्याः, चकर्ष ॥ ४५ ॥

**रेणुनाऽपूरयत् तस्याः क्रोशन्त्या मुखकोटरम् ।**
**घोरां गां मेघगम्भीरामब्रवीच्चान्तकोपमः[३] ॥ ४६ ॥**

**(भा.दी.) रेणुने**ति । अन्तकस्य यमस्य उपमा यस्य स तथोक्तः, दुष्टशिक्षणे यमसदृश इत्यर्थः, शत्रुघ्नः क्रोशन्त्याः, आक्रोशनं कुर्वन्त्याः, तस्याः मन्थराया मुखमेव कोटरं वृक्षबिलं तत् रेणुना पांसुना अपूर-यत् । पॄ पालनपूरणयोर्लङ् । घोरां भयजनकां मेघवत् मेघगर्जनवत् गम्भीरां गां गिरं अब्रवीच्च ॥ ४६ ॥

**(सं.चं.)** वृक्षकोटरवद् विवृतं विकृतं च तस्या मुखकोटरं रेणुना पांसुनाऽपूरयत् । रामायणेऽ-नुक्तमिदम् । 'निष्कुटः कोटरः स्मृतः' इत्यभिधानम् । 'ಪೊಟರೆ' इति भाषायाम् । घोरामुग्रां गां चा-ब्रवीत् । घोराङ्गां कुब्जां तस्या अन्तकोपमः शत्रुघ्नोऽब्रवीदिति वा । तदा 'मेघगम्भीरम्' इत्यपि पाठः स्यात् ॥ ४६ ॥

---

१. 'कौसल्याशर–' २. 'पुनश्चकर्ष कैकेयि हा' ३. '–मब्रवीदन्तकोपमः'

**पितरं घातयित्वा[१] त्वं स्वामिनं च विवास्य नः ।**
**कथं जीवसि दुर्वृत्ते दुर्वृत्तां[२] समुपाश्रिता ॥ ४७ ॥**

**(भा.दी.) तात**मिति । दुष्टं वृत्तं चरित्रं यस्याः सा तत्सम्बुद्धिः । हे मन्थरे, दुष्टं वृत्तं यस्याः सा तथा तां कैकेयीं समुपाश्रिता, त्वं नः अस्माकं पितरं घातयित्वा, नः स्वामिनं श्रीरामं च विवास्य प्रवास्य कथं जीवसि? जीव प्राणधारणे लट् । न कथमपि जीवसीत्यर्थः ॥ ४७ ॥

**(सं.चं.)** किमब्रवीत्? आह– पितरम् । नः पितरं घातयित्वा । नः स्वामिनं रामं च विवास्य । दुर्वृत्तां कैकेयीं समुपाश्रिता ॥ ४७ ॥

**अद्य नेष्याम्यहं मृत्युं मन्थरे त्वाममन्थराम्[३] ।**
**ईश्वरी तव कैकेयी नश्वरीं त्वां तु पश्यतु ॥ ४८ ॥**

**(भा.दी.) अद्ये**ति । हे मन्थरे, अमन्थरां अतिकष्टां त्वां मृत्युर्मरणं तं अद्य अहं नेष्यामि । नीतेर्लृट् । तव ईश्वरी स्वामिनी कैकेयी त्वां नश्वरीं नाशशीलां पश्यतु । दृशेर्लोट् ॥ ४८ ॥

**(सं.चं.)** मृत्युं नेष्यामि । न विद्यते मन्थरा वक्रस्वभावा यस्यास्ताममन्थराम् । अतिकुटिलस्वभावाम् । मन्थर इति कर्णेजप उच्यते । कुटिलश्च ॥ ४८–५० ॥

**कर्षन्तमिति तां पापां शत्रुघ्नं भरतोऽब्रवीत् ।**
**मयैव वद्ध्या तातेयं कैकेयी मन्थरायुता ॥ ४९ ॥**

**(भा.दी.) कर्षन्त**मिति । भरतः पापां तां कर्षन्तं कर्षणं कुर्वन्तं शत्रुघ्नं प्रति, हे तात शत्रुघ्न, मन्थरायुता इयं कैकेयी मयैव वध्या वधार्हा इति अब्रवीत् ॥ ४९ ॥

**राजर्षिधर्म्मो रामो मां स्त्रीघातीति परित्यजेत् ।**
**तत्पादपांसुलोभेन ध्रुवमेतां सहावहै ॥ ५० ॥**

---

१. **'तातं नो घातयित्वा'** २. **'दुर्वृत्तं समुपा–'**

३. **'अमन्थराममनोहराम्, अतिकष्टां वा'** इति का.श्री ।

**(भा.दी.) राजर्षी**ति । राजा चासौ ऋषिश्च राजर्षिस्तस्य धर्मो यस्य स तथा श्रीरामः, इयं कैकेयी हता चेत्, मां स्त्रियं घातितवानिति स्त्रीघाती स्त्रीहन्तेत्यर्थः, इति हेतोः परित्यजेत् । ध्रुवम् । तस्य श्रीरामस्य यौ पादौ तयोर्ये पांसवस्तेषां धारणे यो लोभस्तेन, तन्निकटेऽवस्थानलोभेनैवेयं रक्ष्या न मातृत्वादित्यर्थः । एतां कैकेयीं सहावहै सहनं करवावः । षह मर्षणे लट् ॥ ५० ॥

**पाशेन पशुवद् बध्वा विवशान् स्ववशे[1] प्रभुः ।**
**कर्षत्यस्मान् कृतान्तोऽयं वत्स तस्मात् सहावहै ॥ ५१ ॥**

**(भा.दी.)** स्त्रीहत्यालक्षणदोषाच्च सह्यत इत्याह– **पाशेने**ति । प्रभुः अयं लोकप्रसिद्धः, कृतः अन्तो विनाशो येन स तथोक्तः यमः, विवशान् कर्मवशानस्मान् पशुवत् पाशो दाम तेन बध्वा, स्वस्य वशास्तस्मिन्, 'वशो जन्मस्पृहयोः' इति हेमचन्द्रः, कर्षति । कृष विलेखने लट् । हे वत्स शत्रुघ्न, तस्मात् सहावहै । षह मर्षणे लट् ॥ ५१ ॥

**(सं.चं.)** विवशानस्मान् स्ववशे कृत्वा कर्षति । के वयं जीवने मारणे वा । तस्मात् सहावहै ॥ ५१ ॥

**एवमुक्त्वा स भरतः सानुजः प्रस्थितो द्रुतम् ।**
**कौसल्यां च सुमित्रां च ववन्दे भयकम्पितः ॥ ५२ ॥**

**(भा.दी.) एवमि**ति । सः भरतः एवं उक्त्वा, सानुजः शत्रुघ्नसहितः सन्, द्रुतं शीघ्रं यथा भवति तथा प्रस्थितः कौसल्यामन्दिरं प्रति प्राप्तः, भयकम्पितः सन् कौसल्यां च सुमित्रां च ववन्दे ॥ ५२ ॥

**(सं.चं.)** द्रुतं कौसल्यानिवेशनं प्रति प्रस्थितः । कुपिता कौसल्या मया सह प्रीत्या सम्भाषेत वेति शङ्कया भयकम्पितः ॥ ५२ ॥

**राममाता तमाश्लिष्य रामविश्लेषकर्शिता ।**
**रामभक्तमुवाचाथ रामभ्रातृव्यशङ्कया ॥ ५३ ॥**

**(भा.दी.) रामे**ति । अथ श्रीरामस्य यो विश्लेषो वियोगस्तेन कर्शिता कृशीभूता राममाता कौसल्या राम-भक्तं तं भरतं आश्लिष्य, श्रीरामस्य भ्रातृव्यः शत्रुरिति या शङ्का तया, 'भ्रातृव्यौ भ्रातृजामित्रौ' इति वैज-यन्ती, उवाच ॥ ५३ ॥

---

१. 'स्ववशः प्रभुः' । 'स्ववशः स्वशब्दवाच्यपरमात्माधीनः' इति का.श्री. ।

**(सं.चं.)** रामस्य भ्रातृव्यः शत्रुरयं सञ्जात इति शङ्कया । 'शत्रुः सपत्नो भ्रातृव्यः' इत्यभिधानम् ॥ ५३ ॥

**वत्स राज्यं चिरं भुङ्क्ष्व मात्रा ते प्रतिपादितम् ।**
**घातयित्वा हि ते तातं कालयित्वा तवाग्रजम् ॥ ५४ ॥**

**(भा.दी.)** **वत्सेति** । हे वत्स, ते मात्रा कैकेय्या ते तातं दशरथं घातयित्वा, तव अग्रजं ज्येष्ठं श्रीरामं कालयित्वा, वनं प्रति प्रेषयित्वा, प्रतिपादितं सम्पादितं तत्, राज्यं चिरं यथा भवति तथा भुङ्क्ष्व पालय । भुजेर्लोट् ॥ ५४ ॥

**(सं.चं.)** कालयित्वा दूरं निष्कास्य ॥ ५४–५ ॥

**मां च तत्र नयत्वेषा त्वं वा मां नय पुत्रक ।**
**ससुमित्राऽथवा यायां स्वयमेव सुतान्तिकम् ॥ ५५ ॥**

**(भा.दी.)** **मामिति** । हे पुत्रक, कप्रत्ययः कुत्सने, हे भरत, एषा कैकेयी मां च तत्र श्रीरामसमीपे नयतु, त्वं वा मां नय । अथवा ससुमित्रा सुमित्रासहिता अहं स्वयमेव परानपेक्षैव सुतस्य श्रीरामस्य अन्तिकं समीपं तत् प्रति यायां गच्छेयम् । इत्युवाचेति सम्बन्धः ॥ ५५ ॥

**कौसल्याया अकल्योऽसौ[१] सोढुमेतदुदीरितम् ।**
**हा मातरिति तत्पादे पतित्वेदमभाषत ॥ ५६ ॥**

**(भा.दी.)** **कौसल्याया** इति । कौसल्यायाः एतत् उदीरितं वचः सोढुं सहनार्थं अकल्यः असमर्थः असौ भरतः, हा मातः इति वदन् तस्याः पादस्तस्मिन् पतित्वा इदं वचः अभाषत ॥ ५६ ॥

**(सं.चं.)** सोढुमकल्योऽसमर्थः । 'कल्यो वाक्श्रुतिवर्जिते । सज्जनीरोगदक्षेषु' इति मेदिनी ॥ ५६–६१ ॥

**मां शुद्धभावमज्ञात्वा मातर्म्मा त्वं निराकुरु[२] ।**
**रामपादैकदासोऽहं[३] सत्यमेतद् ब्रवीमि ते ॥ ५७ ॥**

---

१. **'अकल्पोऽसौ'** । **'अकल्पः असमर्थः'** इति वि.भू. । २. **'मातस्त्वं मा निराकुरु'**
३. **'–पादैकदासोऽस्मि'** इति वि.ती.पाठः स्यात् ।

**(भा.दी.)** मामिति । हे मातः कौसल्ये, त्वं मां शुद्धः भावः स्वभावो यस्य स तथा तम्, अज्ञात्वा मा निराकुरु तिरस्कुरु । अहं श्रीरामस्य यौ पादौ तयोरेकदासो मुख्यदासः अस्मि । सत्यं एतत् वचः ते तुभ्यं ब्रवीमि ॥ ५७ ॥

**गुरुद्रुहां च मूर्खाणां महापातकिनामपि ।**
**लोकान् मातरहं यायामार्य्यश्चेन्मन्मते गतः[१] ॥ ५८ ॥**

**(भा.दी.)** **गुर्विति** । हे मातः कौसल्ये, चेद् यदि आर्यः स्वामी रामः मम सतः मयि अयोध्यायां विद्यमाने सतीत्यर्थः[२] । ते तव सकाशात् वनं प्रति गतः, गुरून् द्रुह्यन्तीति गुरुद्रुहस्तेषाम्, मूर्खाणां च, महदपरिहार्यं यत्पातकं ब्रह्महत्यादिपातकं तदेषामस्तीति तथोक्तास्तेषामपि लोकान् यायां प्राप्नुयाम् ॥ ५८ ॥

**देवीति शपथैस्तुष्टा भरतं प्रत्यभाषत ।**
**शुद्धस्वभावं जानामि त्वां रामस्यानुजं प्रियम्[३] ॥ ५९ ॥**

**(भा.दी.)** **देवीति** । इति शपथाः शपथपूर्वकवचनानि तैः तुष्टा देवी कौसल्या, हे भरत, श्रीरामस्य प्रियं अनुजं त्वाम्, शुद्धः स्वभावो यस्य स तथा तं जानामि, इति भरतं प्रति अभाषत ॥ ५९ ॥

**त्वं संस्कृत्य पितुर्देहं राज्यं धर्म्मेण पालय ।**
**चतुर्दशे वत्सरे तु[४] रामेण सह रंस्यसे ॥ ६० ॥**

**(भा.दी.)** **त्वमिति** । त्वं पितुः देहः शरीरम्, तं संस्कृत्य दहनादिसंस्कारवन्तं कृत्वा, धर्मः क्षत्रधर्मस्तेन राज्यं पितृराज्यं तत् पालय । पाल रक्षणे लोट् । चतुरधिका दश चतुर्दश, चतुर्दशत्वसङ्ख्यापूरणश्चतुर्दशः, तस्मिन् वत्सरे तु श्रीरामेण सह रंस्यसे क्रीडिष्यसि । रमु क्रीडायां लृट् ॥ ६० ॥

**आर्ज्जवेन प्रसीदन्त्या राममात्रेत्युदाहृतः ।**
**रामरामेति[५] विलपंस्तां रात्रिं भरतोऽनयत् ॥ ६१ ॥**

---

१. सर्वत्राशुद्धः पाठः पठ्यते । अयमिह सम्भावितः पाठः ।

२. टीकायामपि विसङ्गत इव पाठः । **'आर्यश्चेन्मम ते गतः'** इति टीकापाठः स्यात् ।

३. **'रामस्यानुजं सुत'** ४. **'वत्सरेऽथ'** ५. **'राम देवेति'**

**(भा.दी.) आर्जवेनेति** । ऋजोर्भावं आर्जवं तेन, अकौटिल्येनेत्यर्थः, प्रसीदन्त्या प्रसन्नीभवन्त्या राममात्रा कौसल्यया इति उदाहृतः भरतः राम राम इति विलपन् तां रात्रिं अनयत् गमयामास ॥ ६१ ॥

**तस्मिन् पुरे जनपदे[1] निखिलप्रजानां शोकोऽपि शोकभयशोषणमूलमासीत् ।**
**रामस्मृतिश्रवणकीर्त्तनसम्प्रयोगात् सर्वापदां प्रशमनो हि[2] हरेः प्रसङ्गः॥ ६२ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**अयोद्ध्याकाण्ड एकादशः सर्ग्गः ॥**

—o—

**(भा.दी.) तस्मिन्निति** । तस्मिन्, पुरं अयोध्यापुरं तस्मिन्, जनपदो राष्ट्रं तस्मिन्, विद्यमानाः निखिलाः समस्ताः याः प्रजास्तासां शोकोऽपि, श्रीरामस्य स्मृतिश्च, श्रवणं च, कीर्तनं च, तेषां सम्प्रयोगः सम्बन्धः तस्मात्, शोकश्च, भयं च, तयोर्यच्छोषणं विनाशः, तस्य मूलं कारणभूतः आसीत् । यथा परमात्मनि समर्पितं ज्ञानपूर्वं निष्कामकर्म संसारकारणीभूतकर्मण एव विनाशकं भवति । तत्र निमित्तमाह– **सर्वेति** । हरति सर्वारिष्टमिति हरिः श्रीपरमात्मा तस्य प्रसङ्गः सर्वा या आपदस्तासां प्रशमनो हि ॥ ६२ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां**
**भावार्थदीपिकायामयोध्याकाण्ड एकादशः सर्गः ॥**

—o—

**(सं.चं.)** वसन्ततिलकयोपसंहरति–तस्मिन् पुरे । कथं शोचतां शोकशोषणम्? आह– रामेति । रामस्य स्मृत्या श्रवणेन कीर्तनेन च सम्प्रयोगात् समायोगात् । शोचन्तो राममेव सस्मरुः । रामगुणानेव कीर्तयन्तः शृण्वन्तो रामविरहजशोकं विसस्मरुरित्यर्थः । नवविधभक्तिषु श्रवणं कीर्तनं स्मरणमिति ह्याद्यास्तिस्रो विधाः । तेन शोको भक्तितामाप । भक्तिश्च सदाऽप्यानन्दमयी । तदेवार्थान्तरन्यासेनाऽह– सर्वापदां प्रशमनो हि हरेः प्रसङ्ग इति ॥ ६२ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामयोध्याकाण्डे**
**एकादशसर्गविवरणम् ॥**

—o—

[आदितः श्लोकाः– ९४१+६२=१००३]

---

१. 'जनपदेऽप्यखिलप्रजानाम्'    २. 'प्रशमदो हि'

# द्वादशः सर्ग्गः

**प्रभाते भरतं दृष्ट्वा विलपन्तं[१] शुचाऽऽकुलम् ।**
**वृतं प्रकृतिभिस्तत्र वसिष्ठो मुनिरब्रवीत् ॥ १ ॥**

**(भा.दी.)** श्रीरामानुजेन भरतेनानन्तरं किमकारीत्यत आह– **प्रभात** इति। प्रभातः प्रातःकालस्तस्मिन्, मुनिः वसिष्ठः, प्रलपन्तं प्रलापं कुर्वन्तम्, शुक् शोकस्तया आकुलं व्याकुलम्, प्रकृतय अमात्यादयस्ताभिः वृतं परिवृतं भरतं तत्र दशरथमन्दिरे दृष्ट्वा अब्रवीत् ॥ १ ॥

**(सं.चं.)** विलपन्तं परिदेवयमानम् । प्रकृतिभिरमात्यादिभिराधिकारिकमण्डलस्थैरपि विलपद्भिर्वृतम् ॥१॥

**उत्तिष्ठ शीघ्रमायुष्मन्ननुतिष्ठ पितृक्रियाम् ।**
**उपतिष्ठ द्विजान् वृद्धानधितिष्ठ वरासनम् ॥ २ ॥**

**(भा.दी.)** **उत्तिष्ठेति** । आयुः वेदोक्तमायुरस्यास्तीति तथा तत्सम्बुद्धिः, हे भरत, शीघ्रं यथा भवति तथा उत्तिष्ठ। पितुर्दशरथस्य या क्रिया, प्रेतकार्याद्यवश्यकर्म, तां अनुतिष्ठ कुरु। ज्ञानादिगुणैर्वृद्धान् द्विजान् उपतिष्ठ सेवस्व । वरमुत्तमं यदासनं तत्, राजासनमित्यर्थः, अधितिष्ठ अद्ध्यारोह ॥ २ ॥

**(सं.चं.)** सार्थकमायुरस्येति, दीर्घमायुरस्येति वा आयुष्मान् । भूम्नि प्रशंसायां च मतुप् । तथा भूया इत्याशीर्गर्भमिदं सम्बोधनम् । उपतिष्ठ उपचर । उपचारेण मानय । मानेन सन्तोषय । देवपूजात्वाभावान्नाऽत्मनेभाषा ॥ २ ॥

**कालात्मनः परेशस्य लीलेयं लोककालनी[२] ।**
**न हृष्यन्ति[३] न शुष्यन्ति पण्डिताः सुखदुःखयोः ॥ ३ ॥**

१. **'प्रलपन्तम्'** इति वि.ती.पाठः। २. **'लोककालिनी'**। ३. **'न पुष्यन्ति'**

**(भा.दी.) कालेति** । कालयन्ति[१] विनाशयन्ति सर्वमिति कालाः रुद्रादयः, तेषामात्मा स्वामी तस्य, सर्वेश्वरस्येत्यर्थः, परेषामुत्तमानां ब्रह्मादीनामीशस्य श्रीहरेः इयं जगत्सर्जनसंहारादिरूपा प्रवृत्तिर्लोकानां कालनी[२] विनाशिनी विद्राविणीति वा, नानावस्थापादिकेत्यर्थः, लीला क्रीडारूपा यतः अतः पण्डिताः ज्ञानिनः सुखं च दुःखं च तयोः न हृष्यन्ति, सुखे प्राप्ते सति सन्तोषं न प्राप्नुवन्तीत्यर्थः, न शुष्यन्ति, दुःखे प्राप्ते सति न नीचतां गच्छन्ति । शुष शोषणे लट् ॥ ३ ॥

**(सं.चं.)** कालात्मनः संहारकर्मणि प्रवृत्तस्य, कालः संहारक आत्मा स्वरूपमस्येति । लोककालनी लोकक्षयकृत् । 'कालोऽस्मि लोकक्षयकृत्' इति हि भगवद्वचनम् । सुखे प्राप्ते न हृष्यन्ति । न तोषेण श्वयन्ति । हृष तुष्टौ । सुखं हि नरमुन्माद्य नर्तयति । दुःखे प्राप्ते न शुष्यन्ति न शोचन्ति । शुष शोषणे । शोको हि शोषयति नरम् ॥ ३ ॥

**इत्युक्त ऊचे भरतो बाष्पं सम्मृज्य पाणिना ।**
**अपण्डितोऽस्मि शोच्योऽस्मि विना राममहं गुरो ॥ ४ ॥**

**(भा.दी.) इतीति** । इति उक्तः वसिष्ठेनाभिहितः भरतः पाणिना बाष्पमश्रु तं सम्मृज्य मार्जयित्वा, हे गुरो वसिष्ठ, अहं श्रीरामं विना अपण्डितः अज्ञः अस्मि, शोच्यः अस्मि, इत्यूचे ॥ ४ ॥

**(सं.चं.)** सम्मृज्य समन्तात् मार्जित्वा धावित्वा । मृजूष् शुद्धौ । सत्यं पण्डिताः समदर्शिनः । अहं त्वपण्डितोऽस्मि । तेन शोचामि । शोचन् शोचनीयोऽस्मि । अनुकम्पनीयोऽस्मि ॥ ४ ॥

**साम्राज्यान्मे शतगुणं वने रामाङ्घ्रिसेवनम् ।**
**अमृतान्मे शतगुणं [३]रामास्येन्दोरवेक्षणम्[४] ॥ ५ ॥**

**(भा.दी.) साम्राज्यादिति** । साम्राज्यं सार्वभौमत्वं तस्मात्, वने श्रीरामस्य अङ्घ्री पादौ तयोः सेवनम्, शतानां गुणानामावृत्तीनां समाहारः शतगुणम्, शतावृत्त्युत्तममित्यर्थः, रामस्य श्रीरामाख्यस्य इन्दोः अवेक्षणं दर्शनम्, मे अमृतं पीयूषं तस्माच्छतगुणम् ॥ ५ ॥

**(सं.चं.)** रामास्येन्दोरवेक्षणम् । येनानन्तममृतं लभेय ॥ ५ ॥

---

१. **'कलयन्ति'** २. **'लोकानां कालिनी'**

३. **'रामाख्येन्दोः'** इति वि.ती.पाठ इति भाति । अथाप्यस्फुटमिव टीकावचनम् । लिपिकृत्प्रमादेन गलितमिव ।

४. **'तस्माद् वनं गत्वा रामाङ्घ्रिं सेवमानः, रामास्येन्दोरवेक्षणं कुर्वन् तत्रैव स्थास्यामीति भावः' इति का.श्री. ।**

**जगतामेकनाथे मे नाथे रामे विराजति ।**
**ब्रह्मनन्दन मां नाथं न ब्रुवन्ति भवादृशाः[1] ॥ ६ ॥**

**(भा.दी.) जगतामि**ति । जगतां लोकानां एको मुख्यो यो नाथस्तस्मिन्, मे नाथे श्रीरामे विराजति शोभमाने सति, ब्रह्मणश्चतुर्मुखस्य नन्दन पुत्र वसिष्ठ, भवता तुल्यं दृश्यन्त इति भवादृशो ज्ञानिनः, मां नाथं पृथिवीस्वामिनं न ब्रुवन्ति । ब्रूञो लट् ॥ ६ ॥

**(सं.चं.)** जगतां सप्तानामपि लोकानाम् । ब्रह्मनन्दनो वसिष्ठः । न ब्रुवन्ति न वक्तुमर्हन्ति ॥ ६ ॥

**न्याय्यामुदारां करुणां वाणीं रामानुजन्मनः ।**
**श्रुत्वाऽश्रूण्यमुचंस्तृप्ता गुणैस्तस्य[2] महाजनाः ॥ ७ ॥**

**(भा.दी.) न्याय्यामि**ति । महाजनाः, रामादनु अनन्तरं जन्म यस्य स तथा तस्य, भरतस्य न्याय्यां युक्ति-युक्ताम्, उदारां उत्तमाम्, करुणां श्रोतॄणां दयाश्रयाम्, वाणीं वाचं श्रुत्वा, तस्य भरतस्य गुणा रामभक्त्यादिगुणास्तैः तृप्ताः सन्तः अश्रूणि अमुचन् । मुच्लृ मोक्षणे लुङ् ॥ ७ ॥

**(सं.चं.)** न्याय्यां न्यायोपेताम् । दिष्ट्या प्राप्तस्यापि धैर्येण त्याग औदार्यमयी महती धर्मनिष्ठा । तद्युक्तत्वादुदारामुत्कृष्टाम् । करुणां रामविरहजनितेनान्तःशोकेन सम्भृताम् । महान्तो जना ज्ञानेन वयसा च । अस्य गुणैस्तृप्ता आनन्दाश्रूण्यमुचन् ॥ ७ ॥

**तैलद्रोण्यामथ न्यस्तां कौसल्याया निवेशने ।**
**वीक्ष्योद्धृतां[3] पितृतनुं शुशोच भरतः पुनः ॥ ८ ॥**

**(भा.दी.) तैले**ति । अथ भरतः, कौसल्यायाः निवेशनं गृहं तस्मिन्, तैलपूर्णा या द्रोणी तस्यां न्यस्ताम्, संस्कारार्थमुद्धृतां पितुस्तनुं वीक्ष्य पुनः शुशोच । शुच शोके लिट् ॥ ८ ॥

**(सं.चं.)** सम्प्रति तैलद्रोणीत उद्धृताम् । 'उद्धृतं तैलसंरोधात् स तु भूमौ निवेशितम् । आपीतवर्णवदनं प्रसुप्तमिव भूपतिम् । संवेश्य शयने चाग्र्ये नानारत्नपरिष्कृते । ततो दशरथं पुत्रो विललाप सुदुःखितः' (७६.४–५) इति च ॥ ८ ॥

---

१. **'भवादृशः'**इति वि.ती.पाठः स्यात् । २. **'गुणैरस्य'** ३. **'प्रेक्ष्योद्धृताम्'**

**चतुर्दशशतस्त्रीभिः समं राजपरिग्रहैः ।**
**मातॄर्विलोक्य क्रोशन्तीर्विललाप[१] पुनश्च सः[२] ॥ ९ ॥**

**(भा.दी.)** **चतुर्दशेति**। राज्ञः परिग्रहा दारास्तैः, चतुरधिका दश चतुर्दश च शतानि च चतुर्दशशतानि , तानि च ताः स्त्रियश्च ताभिः समं सह क्रोशन्तीः उच्चैः रुदन्तीः मातॄः कौसल्याद्या विलोक्य सः पुनश्च विललाप । रप लप व्यक्तायां वाचि लिट् ॥ ९ ॥

**(सं.चं.)** राजपरिग्रहा अर्धसप्तशतानि राजभार्याः । चतुर्दशशतस्त्रीभिर्दासीभिः समेतै राजपरिग्रहैः समं मातॄः कौसल्याद्यास्तिस्रः । राजपरिग्रहेषु एकैकस्या अपि चतस्रश्चतस्रो दास्य इति चतुर्दशशतानि दास्यः । अथवा परिग्रहशब्दोऽयं न भार्यावचनः । किन्तु भरणीयपरिवारवचनः । राज्ञः परिवारभूतैः, अर्थात् बन्धुतया राजसम्बन्धिनीभिश्चतुर्दशशतस्त्रीभिः समं क्रोशन्तीर्मातॄरिति । 'परिग्रहः कळत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च' इत्यजयः । 'ಬಂಧುಬಳಗ' इति भाषायाम् । सर्वथाऽपूर्वमिदं प्रमेयं रामायणेऽनुक्तम् । प्रायो भगवत्पादेन प्रवचनेष्वाविष्कृतमिति ग्रन्थकृताऽत्र निबद्धम् । वाल्मीकिनाऽपि किञ्चिदिव सूचितम् । तथाहि तद्वचनम्–'क्रौञ्चीनामिव नारीणां निनादस्तत्र शुश्रुवे । आर्तानां करुणं काले क्रोशन्तीनां सहस्रशः' (७६.२१) इति । क्रोशन्तीनां नारीणां सहस्रस्येति किलार्थः । तस्येदं विवरणम्– 'चतुर्दशशतस्त्रीभिः' इति ॥ ९ ॥

**दृष्ट्वा वसिष्ठजाबाली रुदन्तं[३] तमवोचताम् ।**
**अप्राकृतः प्राकृतवत् किं रोदिषि[४] नृपात्मज ॥ १० ॥**

**(भा.दी.)** **दृष्ट्वेति** । वसिष्ठश्च जाबालिश्च तौ रुदन्तं तं भरतं दृष्ट्वा, हे नृपस्य दशरथस्य आत्मज पुत्र भरत, न प्राकृतोऽप्राकृतः, पामरविलक्षण इत्यर्थः, त्वं प्राकृतवत् पामरजनवत् किं किमर्थं रोदिषि? रुदिर् अश्रुविमोचने लट्, इति अवोचताम् ॥ १० ॥

**(सं.चं.)** वसिष्ठजाबाली । इदमप्यपूर्वम् । रामायणे वसिष्ठः सान्त्वयामासेतीयदेवोच्यते ॥ १० ॥

---

१. **'शोचन्तीर्विललाप'**

२. **'स भरतः चतुर्दशशतस्त्रीभिः परिचारिकाभिः, चतुःशताधिकसहस्रस्त्रीभिरित्यर्थः, समं साकम्, तथा राजपरिग्रहैः पञ्चाशदधिकत्रिशतसङ्ख्याकैः दशरथभार्याभिः, समं क्रोशन्तीः रुदतीः मातॄः कौसल्याद्यास्तिस्रः विलोक्य पुनश्च विललाप'** इति का.श्री. ।

३. **'जाबाली शोचन्तम्'** इति, **'रुदन्तं समवोचताम्'** इति च । ४. **'किं विरौषि'**

भूरिद्युम्नो[1] गतः स्वर्ग्गं बन्धुशोकैर्न्निपातितः ।
नानुशोच्यस्ततः प्राज्ञैः पुण्यवान् स्वर्ग्गतिं गतः ॥ ११ ॥

**(भा.दी.) भूरी**ति । भूरि बहु द्युम्नं पराक्रमो धनं वा यस्य स तथोक्तः, 'पराक्रमे धने द्युम्नम्' इति वैजयन्ती, महापराक्रमी बहुदक्षिणश्चेति वाऽर्थः, दशरथः, बन्धोः अनादिबन्धोः श्रीरामस्य वियोगजनिता ये शोकास्तैः निपातितः त्यक्तदेहः सन्, यतः स्वर्गः स्वर्गलोकस्तं गतः प्राप्तः, यतश्च प्राज्ञैर्ज्ञानिभिः पुण्यमस्यास्तीति पुण्यवान् स्वर्गतिं गतः पुरुषः अनुशोच्यः अनुशोचितुं योग्यः न । ततः दशरथोऽपि त्वया न शोच्य इत्यर्थः ॥ ११ ॥

**(सं.चं.)** भूरिद्युम्नो नाम राजा स्वर्गं गतोऽपि बन्धुशोकैः बन्धवोऽश्रूण्यवर्तयन्निति हेतोः स्वर्गान्निपातितः । ततः प्राज्ञैः पुण्यवान् स्वर्गतिं गतः कोऽपि नानुशोच्यः । ततो दशरथोऽपि नानुशोच्यः । मृतिमनुसृत्य शोकः अनुशोकः । इदमप्यपूर्वं रामायणेऽनुक्तम् । भूरिद्युम्न इति कश्चिच्चक्रवर्ती मैत्रायण्यामुपनिषदि पठ्यते– 'अन्ये महाधनुर्धराश्चक्रवर्तिनः केचित् सुद्युम्नभूरिद्युम्नेन्द्रद्युम्नकुवलयाश्वयवनाश्वाः' (१.४) इति । हरिवंशे (१.७.५८) मार्कण्डेये (९१.९) च कश्चिद् भूरिद्युम्नः भाविमनुपुत्रत्वेनोच्यते ॥ ११ ॥

इत्युक्तो बाढमित्युक्त्वा वन्दिनः प्रेक्ष्य वन्दकान् ।
नाहं राजेति निर्भर्त्स्य शत्रुघ्नं भरतोऽब्रवीत् ॥ १२ ॥

**(भा.दी.) इती**ति । इति वसिष्ठजाबालिभ्यां उक्तः भरतः, बाढमिति तथाऽस्त्विति उक्त्वा, वन्दन्ते स्तुवन्तीति वन्दकास्तान् वन्दिनः स्तुतिपाठकान् प्रेक्ष्य अहं राजा न इति निर्भर्त्स्य शत्रुघ्नं प्रति अब्रवीत् ॥ १२ ॥

**(सं.चं.)** वन्दिनः स्तुतिपाठकान् वन्दकान् 'जयजय महाराज' इति स्तुवतः ॥ १२ ॥

पश्य शत्रुघ्न कैकेय्या[2] दुर्न्नीतिं लोकनिन्दिताम् ।
रामराजवियोगेन राज्यश्रीर्विधवा यया[3] ॥ १३ ॥

**(भा.दी.) पश्ये**ति । हे शत्रुघ्न, यया कैकेय्या, रामश्च राजा च तयोर्यो वियोगस्तेन, राजश्रीः राजलक्ष्मीः विधवा स्वामिरहिता कृता, तस्याः कैकेय्याः लोकेषु निन्दितां दुर्नीतिं पश्य । दृशेर्लोट् ॥ १३ ॥

---

१. **'बहुलदक्षिणत्वात् भूरिद्युम्न इति कश्चन राजा'** इति का.श्री. । २. **'कैकेयीं दुर्नीतिम्'**

३. **'राजश्रीर्विधवा यया'** इति वि.ती.पाठ इति भाति । **'राज्यश्रीर्विधवायिता'** इति क्वचित् ।

**(सं.चं.)** रामस्य राज्ञश्च वियोगेन । रामाख्यस्य राज्ञो वा ॥ १३ ॥

**[1]एवं ब्रुवाणो भरतो सभायां मन्त्रिभिः सह ।**
**मन्त्रयित्वा यथान्यायं चक्रे तस्यौर्ध्वदैहिकम्[2] ॥ १४ ॥**

**(भा.दी.) एवमि**ति । एवं ब्रुवाणः वदन् भरतः सभायां मन्त्रिभिः सुमन्त्रादिभिः सह मन्त्रयित्वा, तस्य दशरथस्य मरणादूर्ध्वं विद्यमानमौर्ध्वं तच्च तद्दैहिकं देहसम्बन्धिसंस्कारादि कर्म च तत्, न्यायं शास्त्रमनतिक्रम्य यथान्यायं चक्रे ॥ १४ ॥

**(सं.चं.)** यथान्यायं यथाविधि । यथा कर्मभ्रेशो न स्यात् । देहादूर्ध्वं ऊर्ध्वदेहः । ऊर्ध्वदेहे भवमौर्ध्व-देहिकमौर्ध्वदैहिकं वा । 'ऊर्ध्वदेहाच्च' इति वार्तिकेन ठञ् (अ.सू.४.३.६०) । और्ध्वदेहिकम् । 'अनुशतिकादीनां च' (अ.सू.७.३.२०) इति पाणिनिस्मरणात् अनुशतिकादित्वेनोभयवृद्धिवादिनां मते 'और्ध्वदैहिकम्' । यद्यपि अनुशतिकादिगणे ऊर्ध्वदेहशब्दो न पठितः । तथाऽपि तस्याऽकृतिगणत्वात् दृष्टप्रयोगा एवंविधा अन्येऽपि शब्दास्तत्रान्तर्भावमर्हन्तीति तेषामाशयः । अत एवाऽह वामनः–'आकृति-गणश्चायमिष्यते । तेनेदमपि सिद्धं भवति–अभिगममर्हति आभिगामिकः । अधिदेवे भवमाधिदैवम् । आधिभौतिकम् । चतस्र एव विद्याः चातुर्वैद्यम्' इति ॥ १४ ॥

**राजदेहमथाऽरोप्य शिबिकां राजभूतिभिः ।**
**नृपात्मजावनयतां विशदं सरयूतटम् ॥ १५ ॥**

**(भा.दी.) राजे**ति । अथ नृपात्मजौ भरतशत्रुघ्नौ, राज्ञो यो देहस्तम्, शिबिकां याप्ययानम्, 'शिबिका याप्ययानं स्यात्' इत्यमरः, आरोप्य, राज्ञो दशरथस्य भूतिभिरैश्वर्यैः च्छत्रचामरादिभिः सह, विशदं निर्मलं सरय्वास्तटं तीरं तत्प्रति अनयतां नीतवन्तौ ॥ १५ ॥

**(सं.चं.)** शिबिकाम्– **'ಪಾಲಕಿ, ಡೋಲಿ'** इति भाषायाम् । राजदेहं शिबिकायामारोप्य, तां च शिबिकां नृपात्मजावनयताम् । राजयोग्याभिर्भूतिभिः विभवैः । विशदं स्वच्छपुलिनम् । नृपात्मजावनयताम्, परिचारकैः सह । रामायणेऽनुक्तमेतत् । तत्र परिचारका ऊहुरित्युक्तम्– 'शिबिकायामथाऽरोप्य राजानं गतचेतनम् । बाष्पकण्ठा विमनसस्तमूहुः परिचारकाः' (७६.१४) इति ॥ १५ ॥

---

१. 'इति ब्रुवाणो–'
२. 'तस्यौर्ध्वदेहिकम्'

[१]चन्दनागरुकाष्ठाद्यैश्चितां तत्र नरैश्चिताम् ।
अलङ्कृतं राजदेहं तावारोपयतामथ ॥ १६ ॥

**(भा.दी.) चन्दने**ति । अथ तत्र सरयूतीरे, नरैः पुरुषैः, चन्दनाः चन्दनवृक्षास्ते च, अगरवो अगरुवृक्षास्ते च, तेषां यानि काष्ठानि तानि आद्यानि येषां तानि कर्पूरादीनि तैः, चितां संयोजिताम्, कृतामित्यर्थः, चितां प्रति अलङ्कृतं राज्ञो यो देहस्तं आरोपयताम् । रूप उपरिभावे लङ् ॥ १६ ॥

**(सं.चं.)** चन्दनकाष्ठैरगरुकाष्ठैश्च । 'अगुर्वगरु राजार्हम्' इति हैमः । आद्यपदेन तुळसीकाष्ठलामज्जकक-रीषादिभिः करणैः भृत्यजनैश्चितां समूह्य रचितां चितां तावारोपयताम् । ननु रुहिर्न द्विकर्मकः । क एवमाह ते । किं न स्मरसि प्राचां वचनम्–'सुभद्रां रथमारोप्य' (भाग.१०.८७.११) इति । ननु नोक्तं पाणिनिना । पाणिनिः किमपि न मुखत आह । केवलम्–'अकथितं च' (अ.सू.१.४.५१) इत्येवाऽह । तर्हि गृहाणाकथितेषु रुहिमपि । ननु अविदितव्याकरणइव मा स्म भाषथाः । अपादानादिकारकविशेषैरकथितमिति किल सूत्रार्थः । अत्र त्वधिकरणत्वविवक्षया चितायामित्येव युक्तं वक्तुम् । सत्यम्, अधिकरणत्वविवक्षायां चितायामित्येव युक्तं वक्तुम् । अविवक्षित्वाऽधिकरणत्वं विवक्षित्वा च कर्मत्वमेवमाह । नन्वविवक्षिता धातवः पठिताः । सत्यं पठिताः पाणिनीयैः । तत्पक्षे यत्र कारकान्तरविधिर्न शक्यं तत्र कर्मत्वं विवक्षितुम् । तेन पाणिनीयपरमाः प्रतीत्यध्याहार्य सन्तोषितव्याः–'चितां प्रति राजदेहमारोप्य' इति । वयं तु बादरायणप्रयोग-परमा द्विकर्मकत्वमुष्म इति न कोऽपि दोषः । वस्तुतस्तु नायं रुहिः । किन्तु 'रूप उपरिभावे' इति वैदिको धातुः । सोऽयमविदितो धातुः पाणिनीयानाम् । अविदिते पुनस्ते कथं किमपि विदधीरन्? निषेधेयुर्वा? ॥ १६ ॥

अथाऽश्वमेधिकानग्नीन् प्रणीयोद्दीप्य ते द्विजाः ।
पात्राणि च यथास्थानं विन्यस्य जुहुवुर्घृतम् ॥ १७ ॥

**(भा.दी.) अथे**ति । अथ ते वसिष्ठाद्याः द्विजाः, अश्वमेधस्य सम्बन्धिन आश्वमेधिकास्तान् अग्नीन् प्रणीय नीत्वा, उद्दीप्य प्रज्वाल्य, हवनोपयुक्तपात्राणि च स्थानमनतिक्रम्य यथास्थानं विन्यस्य, घृतमाज्यं तत् जुहुवुः । हु दानादनयोर्लिट् ॥ १७ ॥

---

१. 'चन्दनागुरु–'

**(सं.चं.)** अथाऽश्वमेधिकान् । प्रणीय मन्त्रपूर्वकं संस्कृत्य । 'ये त्वग्नयो नरेन्द्रस्य अग्न्यगाराद् बहिष्कृताः । ऋत्विग्भिर्याजकैश्चैव आह्रियन्त यथाविधि' (७६.१३) इति, 'तथा हुताशनं हुत्वा जेपुस्तस्य तमृत्विजः । जगुश्च ते यथाशास्त्रं तत्र सामानि सामगाः' (१८) इति च ॥ १७ ॥

**ततो भरतशत्रुघ्नौ पुरोहितमतेन तौ ।**
**चक्राते पितृसंस्कारं निघ्नन्तौ शोकमुत्थितम् ॥ १८ ॥**

**(भा.दी.) तत** इति । तौ भरतशत्रुघ्नौ, पुरोहितस्य वसिष्ठस्य मतं सम्मतिस्तेन, पितुः संस्कारो दहनादिरूपः तम्, उत्थितः उत्पन्नः तम्, शोकं निघ्नन्तौ ज्ञानेन नाशयन्तौ चक्राते ॥ १८ ॥

**(सं.चं.)** निघ्नन्तौ बलात् स्थगयन्तौ ॥ १८–२० ॥

**तौ विलापं विहायाथ दध्यतू रामसोदरौ ।**
**विवेकक्षाळिते चित्ते ज्योतिर्नारायणाह्वयम् ॥ १९ ॥**

**(भा.दी.) ताविति** । अथ श्रीरामस्य सोदरौ भ्रातरौ (तौ भरतशत्रुघ्नौ), विलापः परिदेवनं तं विहाय, विवेकेन ज्ञानेन क्षाळितं शोधितं तस्मिन् चित्ते, नारायण इति आह्वयो यस्य तत्तथोक्तं तत्, ज्योतिः दध्यतुः । ध्यै चिन्तायां लिट् ॥ १९ ॥

**सरयूसरितं प्राप्य [1]राघवावुदकाञ्जलिम् ।**
**विगाह्य पित्रे ददतुः पौरा जानपदा अपि ॥ २० ॥**

**(भा.दी.) सरय्विति** । राघवौ रघुगोत्रभवौ भरतशत्रुघ्नौ, सरयूश्चासौ सरिच्च तां प्राप्य, विगाह्य स्नात्वा, उदकाञ्जलिरुदकदानम्, तं पित्रे ददतुः, उदकक्रियां चक्रतुरित्यर्थः । पुरि विद्यमानाः पौराः जनाः, जनपदेषु राष्ट्रेषु विद्यमाना जानपदा जनाश्च उदकाञ्जलिं ददुरिति सम्बन्धः ॥ २० ॥

**राज्ञा रामेण च त्यक्तां भरतः प्रेक्ष्य तां पुरीम् ।**
**नैच्छत् प्रवेष्टुं श्रेयोऽत्र[2] मेने प्रायोपवेशनम् ॥ २१ ॥**

---

१. '**राघवायोदका–**'

२. '**अत्रास्मिन्नवसरे, सरयूतीरे वा**' इति का.श्री. ।

**(भा.दी.) राज्ञेति** । भरतः राज्ञा दशरथेन श्रीरामेण च त्यक्तां तां पुरीं प्रेक्ष्य प्रवेष्टुं नैच्छत् । इषु इच्छायां लङ् । अत्र बहिःप्रदेश एव, एतस्मिन्नेव सरयूतीर इति वा, प्रायेण अनशनेन उपवेशनं यावज्जीवमवस्थानं तत् । 'प्रायो वयसि बाहुल्ये तुल्यानशनमृत्युषु' इति वैजयन्ती । श्रेयः अत्यन्तप्रशस्तं मेने निरूपितवान् । मन ज्ञाने लिट् ॥ २१ ॥

**(सं.चं.)** मरणान्त उपवासः प्रायोपवेशनम् । 'प्रायो मरणानशने' इति मेदिनी । प्रायेण प्रायाय वोपवेशनम्, एकत्रावस्थानम् ॥ २१ ॥

**विप्रस्तं धर्म्मपालाख्यो[१] राजामात्योऽन्वबोधयत्[२] ।**
**प्रविवेश पुरीं कृच्छ्रादयोद्ध्यां भरतस्ततः ॥ २२ ॥**

**(भा.दी.) विप्र** इति । धर्मपाल इति आख्या यस्य स तथोक्तः राज्ञो दशरथस्य अमात्यः मन्त्री विप्रः (तं भरतं) न्यबोधयत् । अयोध्यामवश्यं प्रविशेत्यादि[३] भरतं प्रति बोधयामास । बुधिर् बोधने लङ् । ततः तेन बोधनानन्तरम्, (भरतः) अयोध्यां पुरीं कृच्छ्रं निर्बन्धस्तस्मात् प्रविवेश ॥ २२ ॥

**(सं.चं.)** धर्मपालाख्यो राजामात्यः । इदमपि रामायणेऽनुदितम् । वसिष्ठस्तं बोधयामासेति तु रामायणे–'ततः प्रकृतिमान् वैद्यः पितुरेषां पुरोहितः । वसिष्ठो भरतं वाक्यमुत्थाप्य तमुवाच ह' (७७.२१) इति । वसिष्ठमनु धर्मपालोऽबोधयत् ॥ २२ ॥

**अथाऽशौचात्यये वीरश्चक्रे श्राद्धानि भक्तिमान् ।**
**प्रादाद् द्विजेभ्यो ग्रामाग्र्यान् धनं जीवधनं बहु ॥ २३ ॥**

**(भा.दी.) अथेति** । भक्तिमान् वीरः भरतः, आशौचस्य सूतकस्य[४] अत्ययोऽपगमस्तस्मिन् सति, श्राद्धानि चक्रे । द्विजेभ्यः ग्रामाग्र्यान्, बहु बहळं धनं स्वर्णादि, जीवधनं गवाश्वादि (प्रादात्) प्रददौ ॥ २३ ॥

**(सं.चं.)** अशुचेर्भाव आशौचम् । मृतिनिमित्तमशुचित्वम्, मृतकम् । जीवधनं गवादिकम् । 'बास्तिकं बहु शुक्लं च गाश्चापि शतशस्तदा । दासीर्दासांश्च यानानि वेश्मानि सुमहान्ति च । ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्ध्वदैहिकम्' (७७.२३) इति ॥ २३ ॥

---

१. **'विप्रः सुधर्मपालाख्यो–'** २. **'राजामात्यो न्यबोधयत्'** इति वि.ती. पाठ इति भाति । ३. **'अयोध्याऽवश्यं प्रवेश्येति'**

४. 'यद्यपि सूतकमिति जाताशौचमुच्यते । तेन मृतकस्येति वक्तव्यम् । अथाप्युपचारत उभयत्रापि सूतकपदं लौकिकाः प्रयुञ्जते । तदनुसारी चायं प्रयोगः । अत एव का.श्री. टीकायां विद्यभूषणीये चैवमेवोक्तम्–**'आशोचात्यये सूतकापगमे'** इति ।

**अराजकमिदं राज्यं राजनन्दन नश्यति ।**
**अभिषिच्यस्व हन्तेति[१] प्रोचुः प्रकृतयोऽथ तम् ॥ २४ ॥**

**(भा.दी.) अराजकमि**ति । अथ अमात्यादिप्रकृतयः, हे राजनन्दन भरत, न विद्यते राजा यस्य तत्तथोक्तं तत्, इदं राज्यं नश्यति । नश अदर्शने लट् । त्वं अभिषिच्यस्व अभिषेकं प्राप्नुहि । षिच सेचने लोट् । इति तं प्रोचुः (हन्त) ॥ २४ ॥

**(सं.चं.)** अभिषिच्यस्व । 'अभिषेचय चाऽत्मानं पाहि चास्मान्नरर्षभ' (७९.५) इति च। हन्तेति सम्बोधने । हन्त अङ्ग भरत । 'सम्बोधने ननु प्याट् पाट् हे है भो अङ्ग हन्त च' इति यादवप्रकाशः । हर्षोद्गारश्चायम् । 'हन्त हर्षविषादयोः' इति च ॥ २४ ॥

**इत्युक्त ऊचे भरतः सत्यमस्त्वभिषेचनम् ।**
**किन्तु ज्येष्ठस्य रामस्य गुणश्रेष्ठस्य[२] सर्वतः ॥ २५ ॥**

**(भा.दी.) इती**ति । प्रकृतिभिः इत्युक्तः भरतः, अभिषेचनं सत्यं यथा भवति तथा अस्तु । तर्हि किं विळम्ब इत्यत आह– **किन्त्विति** । मम न, किन्तु सर्वतः सर्वस्मात् ब्रह्मादेः ज्येष्ठस्य ज्यायसः, गुणैः ज्येष्ठस्य श्रीरामस्य भवतु, इति ऊचे इति सम्बन्धः ॥ २५ ॥

**(सं.चं.)** सर्वस्मादपि जगतः गुणैः श्रेष्ठस्य मम ज्येष्ठस्य रामस्याभिषेचनमस्तु ॥ २५ ॥

**रामार्थं तस्य शिष्योऽहं चरिष्यामि व्रतं वने ।**
**सकामा स्यान्न कैकेयी राज्यकामातुरा खला ॥ २६ ॥**

**(भा.दी.) रामे**ति । तस्य श्रीरामस्य शिष्यः अहम्, श्रीरामायेति रामार्थम्, वने व्रतम्, चतुर्दशवर्षेषु वनवासलक्षणं व्रतम्, तत् चरिष्यामि करिष्यामि । चर गतिभक्षणयोर्लृट् । राज्ये यः काम इच्छा तेन आतुरा पीडिता, खला दुष्टा कैकेयी, कामेन अभीष्टेन सहिता सकामा न स्यात् ॥ २६ ॥

**(सं.चं.)** रामस्य वनवासो विहितः । तत् कथं त्वं चरिष्यसीत्यत आह– रामशिष्योऽहमिति । लोकशास्त्रसिद्ध-मेतत्–'यद् गुरोः कार्यं शिष्यः करोति । पितुः कार्यं पुत्रः करोति । राज्यस्य कामेन कामनया आतुरा रोग-

---

१. **'हन्त प्रजासु दयया त्वभिषिच्यस्व राजा भव'** इति का.श्री । २. **'गुणैर्ज्येष्ठस्य'** इति **'गुणज्येष्ठस्य'** इति वा वि.ती.पाठः स्यात् ।

ग्रस्तेव । 'राज्यकामा आतुरा' इति भिन्ने वा पदे । आतुरा भरतं राजासनगतं द्रष्टुमतित्वरमाणेत्यर्थः । राज्याधिकारभोगरोगग्रस्ता वा ॥ २६ ॥

**एवं ब्रुवाणं भरतं सर्वे प्रोचुः प्रहर्षिताः ।**
**रामभक्तस्य ते वत्स सम्पदः सन्तु साध्विति ॥ २७ ॥**

**(भा.दी.) एवमि**ति । प्रहर्षिताः भरतवचनेन सन्तुष्टाः सर्वे जनाः, एवं ब्रुवाणं वदन्तं भरतं प्रति, हे वत्स, रामभक्तस्य ते तव सम्पदः साधु सम्यक् यथा भवति तथा सन्तु इति प्रोचुः ॥ २७ ॥

**(सं.चं.)** भरतवचनश्रवणेन प्रहर्षिताः प्रभूतं हर्षं प्रापिताः सन्तोषिताः ॥ २७ ॥

**रामपादान्तिकं गन्तुं सह पौरैः ससैनिकैः[१] ।**
**शिल्पिभिः खनकैश्चाथ मार्ग्गं[२] सोऽचीकरद् द्रुतम् ॥ २८ ॥**

**(भा.दी.) रामे**ति । अथ सः भरतः सङ्गतैः मिळितैः, पुरि विद्यमानाः पौरास्ते च सेनायां भवा सैनिकास्ते च तैः सह, श्रीरामस्य यौ पादौ तयोरन्तिकं समीपं तत् गन्तुम्, शिल्पिभिः कार्वादिभिः खनकैः खनन-कारिभिश्च, मार्गो राजमार्गस्तं द्रुतं यथा भवति तथा अचीकरत् कारयामास ॥ २८ ॥

**(सं.चं.)** शिल्पिभिः तन्त्रज्ञैः । अचीकरत् । कारयतेर्लुङि रूपम् । अकारयत् । ससैनिकैः पौरैः सह गन्तुम् । 'क्रियतां शिल्पिभिः पन्थाः समानि विषमाणि च' (७९.१३) इति, 'निर्जलेषु च देशेषु खानयामासुरुत्त-मान् । उदपानान् बहुविधान् वेदिकापरिमण्डितान्' (८०.१२) इति च ॥ २८ ॥

**समातृकं च भरतं निर्य्यान्तं[३] परिवार्य्य ते ।**
**पौराः सर्वे प्रभुं जग्मुर्निम्नमापइव स्वयम्[४] ॥ २९ ॥**

**(भा.दी.) समातृकमि**ति । सर्वे ते पौराः जनाः, मातृभिः सहितः समातृकस्तम्, अयोध्याया निर्यान्तं निर्गच्छन्तम्, भरतं परिवार्य, प्रभुं श्रीरामं प्रति, निम्नं निम्नस्थलं तत् स्वयं स्वभावतः आप इव जलानीव, जग्मुः ॥ २९ ॥

---

१. **'गन्तुं सङ्गतैः पौरसैनिकैः'** इति वि.ती.पाठः । **'सह तैः पौरसैनिकैः'** इति च क्वचित् ।

२. **'वनवृक्षादिकान् छित्वा सुखेन गन्तुं मार्गं कारयामास'** इति का.श्री. । ३. **'निर्यातम्'**

४. **'यस्य प्रसन्नो भगवान् गुणैर्मैत्र्यादिभिर्हरिः । तस्मै नमन्ति भूतानि निम्नमाप इव स्वयमिति भागवतोक्तदृष्टान्त उक्तः'** इति का.श्री. ।

**(सं.चं.)** निम्नं प्रदेशमाप इव । 'ताः प्रजाः सर्वाः प्रभुं जग्मुः' इति पाठः स्वरसः ॥ २९ ॥

**अयुतेभं लक्षहयं सरथाष्टसहस्रकम् ।**
**ययावसङ्ख्यपादातं सैन्यं रामदिदृक्षया ॥ ३० ॥**

**(भा.दी.) अयुते**ति । अयुतं दशसहस्रसङ्ख्याका इभा गजा यस्मिन् तत्तथोक्तम्, लक्षं लक्षसङ्ख्याका ये हया अश्वा यस्मिन् तत्तथा, रथानां अष्टौ च तानि सहस्राणि च अष्टसहस्राणि, तैः सहितं सरथाष्टसहस्रकम्, न विद्यते सङ्ख्या येषां ते तथा तादृशाः पादाताः पत्तयो यस्मिन् तत्तथा, सैन्यं श्रीरामस्य दिदृक्षया दर्शनेच्छया ययौ ॥ ३० ॥

**(सं.चं.)** अयुतेभम् । गजानां दश सहस्राणि । अश्वानां लक्षं शतं सहस्राणि । रथानामष्टसहस्रकेन सहितम् । सम्प्रति रामायणे किञ्चिदिवान्यथा पठ्यते–'नव नागसहस्राणि कल्पितानि यथाविधि । अन्वयुर्भरतं यान्तमिक्ष्वाकुकुलनन्दनम् । षष्टी रथसहस्राणि धन्विनो विविधायुधाः । अन्वयुर्भरतं यान्तं राजपुत्रं यशस्विनम् । शतं सहस्राण्यश्वानां समारूढानि राघवम् । अन्वयुर्भरतं यान्तं सत्यसन्धं जितेन्द्रियम्' (८३.३–५) इति । अथ चायमत्र ग्रन्थकृत्सम्मतो रामायणपाठः–'नव नागसहस्राणि' इत्यत्र 'दश नागसहस्राणि' इति, 'षष्टी रथसहस्राणि' इत्यत्र 'अष्टौ रथसहस्राणि' इति च । पादाताः पदातयः । ननु रामदिदृक्षया भरतः प्रस्थितः, न युयुत्सया । तत् कुतोऽयं सैन्यसन्नाहः? आह– ययौ सैन्यं रामदिदृक्षया । सैन्यमपि रामदिदृक्षया स्वयं ययौ । न युयुत्सया । राजविभूत्या रामः समानेय इति भरतोऽपि सैन्ययानं संयोजयामास ॥ ३० ॥

**अबला अपि बालाश्च वृद्धाश्च किमुतापरे ।**
**अहं प्रागित्युपाजग्मू रामपाददिदृक्षया ॥ ३१ ॥**

**(भा.दी.) अबला** इति । अबलाः स्त्रियः । 'अबला महिळा ललना' इति हलायुधः । बालाश्च वृद्धाश्च, श्रीरामस्य यौ पादौ तयोर्दिदृक्षा द्रष्टुमिच्छा तया, अहं प्राक् पूर्वं गच्छामि इति मनोरथेन उपाजग्मुः । अपरे गमने शक्ता जना जग्मुरिति किमुत? किमु वक्तव्यम्? ॥ ३१ ॥

**(सं.चं.)** अबला नार्यः । एवं वृद्धाश्च बालाश्च स्वयमबला अशक्ता अपि । अहं प्रागिति । अहम्पूर्वमहम्पूर्वमित्यहमहमिकया ॥ ३१ ॥

**मेघश्यामं मेघघोषं मेघवत् तापहारिणम् ।**
**द्रक्ष्यामो राममित्युच्चैः प्रहृष्टाः प्राद्रवन् वनम् ॥ ३२ ॥**

**(भा.दी.) मेघे**ति । मेघवच्छ्यामः श्यामळस्तम्, मेघस्य घोष इव घोषो यस्य स तथा तम्, मेघ इव तापं हर्तुं शीलमस्यास्तीति तथा तं श्रीरामं द्रक्ष्यामः । इति अभिप्रायेण उच्चैः सम्यक् प्रहृष्टाः सन्तः वनं प्रति प्राद्रवन् ॥ ३२ ॥

**(सं.चं.)** रामदिदृक्षाजनितसम्भ्रमेण प्रकटं हृष्टाः हृष्टरोमाणः । पुलकितसर्वाङ्गाः । विस्मिता वा । 'हृषेर्लोमसु' (७.२.२९) इति पाणिनिः । 'विस्मितप्रतिघातयोश्चेति वक्तव्यम्' इति तत्रैव वार्तिकम् ॥ ३२ ॥

**गङ्गायां सैन्यमाश्वास्य रामं रामानुजः स्मरन् ।**
**वसिष्ठाद्यैः परिवृतश्चकार पितृतर्प्पणम् ॥ ३३ ॥**

**(भा.दी.) गङ्गायामि**ति । रामानुजः भरतः, गङ्गायां सैन्यं सेना तत् आश्वास्य, विश्रमणं कारयित्वा, श्रीरामं स्मरन् सन्, वसिष्ठ आद्यो येषां ते तथा तैः परिवृतः सन्, पितॄणां तर्पणं तत् चकार ॥ ३३ ॥

**(सं.चं.)** आश्वास्य विश्रान्त्यर्थं निवेश्यतामिति सान्त्वयित्वा । गङ्गातीरे सैन्यमाश्वास्य गङ्गायां पितृतर्पणं चकार ॥ ३३ ॥

**भरतः श्रीमदान्धोऽयं रामं प्रत्यवतिष्ठते[१] ।**
**रोत्स्यामीमं रामभक्त्या गुहस्तत्रेत्यमन्यत ॥ ३४ ॥**

**(भा.दी.) भरत** इति । श्रियः सम्पदो यो मदस्तेन अन्ध इवान्धः अयं भरतः श्रीरामं प्रत्यवतिष्ठते हन्तुमुद्युक्ततयाऽऽगच्छति । इमं भरतम्, श्रीरामे या भक्तिस्तया, रोत्स्यामि रुद्धं करिष्यामि । रुधिर् आवरणे लृट् । इति गुहः गुहनामको निषादाधिपः, तत्र गङ्गातटे अमन्यत । मन ज्ञाने लङ् ॥ ३४ ॥

**(सं.चं.)** प्रत्यवतिष्ठते विरोधप्रकटनेनावमन्तुं शत्रोरभिमुखं प्रस्थानं प्रत्यवस्थानम् । प्रतिराभिमुख्ये । 'समवप्रविभ्यः स्थः' (अ.सू.१.३.२२) इत्यात्मनेभाषा । प्रतियोगे द्वितीया । इत्यमन्यत । मन्यतिरत्र शङ्कायाम् । कुतोऽमन्यत? रामभक्त्या हेतुभूतया भरतं शत्रुमाशङ्कत ॥ ३४ ॥

**गुहः सोपायनो दृष्ट्वा भरतं कृतसङ्कथः[२] ।**
**तं शुद्धबुद्धिं विज्ञाय पूजयामास सादरम् ॥ ३५ ॥**

---

१. **'प्रत्यवतिष्ठते प्रतिभटत्वेनाऽगच्छति । विरोधं करोतीति यावत्'** इति का.श्री. ।

२. **'कृतसत्कथः'** इति वि.ती.पाठः ।

**(भा.दी.) गुह** इति । उपायनेन करद्रव्येण सहितः सोपायनः, भरतस्याभिप्रायविज्ञप्त्यै भरतनिकटं प्रत्यागमनसमये मांसाद्युपायनद्रव्यसहित इत्यर्थः, गुहः भरतं दृष्ट्वा, कृता सती कथा श्रीरामकथा येन स तथा सन्, तं भरतं शुद्धा बुद्धिर्यस्य स तथोक्तस्तं विज्ञाय, आदरेण सत्कारेण सहितं यथा भवति तथा सादरं पूजयामास । पूज पूजायां लिट् ॥ ३५ ॥

**(सं.चं.)** सङ्कथा परस्परं वार्ताविनिमयः । 'सङ्कथाऽन्योन्यसङ्गीतिः' इत्यभिधानम् । उपायनं यदतिथये उपह्रियते । '**ಉಡುಗೊರೆ**' इति भाषायाम् ॥ ३५ ॥

**कुत्राऽसितं[१] ससीतेन वने नः स्वामिना[२] गुह ।**
**किमत्र लक्ष्मणश्चक्र इत्यपृच्छदसौ गुहम् ॥ ३६ ॥**

**(भा.दी.) कुत्रे**ति । हे गुह, ससीतेन नः अस्माकं स्वामिना श्रीरामेण वने कुत्र कस्मिन् स्थळे आसितं आस्थितम्? अत्र वने लक्ष्मणः किं चक्रे? असौ भरतः गुहं प्रति इति अपृच्छत् ॥ ३६ ॥

**(सं.चं.)** नः सर्वेषां स्वामिना रामेण ॥ ३६ ॥

**रामस्य वार्तामार्ताय भरतायोक्तवान् गुहः ।**
**वनवासाच्च[३] रामस्य सौमित्रेः परिदेवनम् ॥ ३७ ॥**

**(भा.दी.) रामस्ये**ति । गुहः श्रीरामस्य वार्तां आर्ताय श्रीरामवियोगेन दुःखिताय भरताय उक्तवान् । श्रीरामस्य वने यो वासस्तस्मात् सौमित्रेर्लक्ष्मणस्य परिदेवनं विलापस्तच्च उक्तवान् ॥ ३७ ॥

**(सं.चं.)** 'विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः । काक्वावर्णनमुल्लापो विलापः परिदेवनम्' इति यादवप्रकाशः ॥ ३७–८ ॥

**फलमूलाम्बुभिर्वृत्तिं जटावलयबन्धनम्[४] ।**
**श्रुत्वा सर्वमिदं शोकाद् भरतो मूर्च्छितोऽपतत् ॥ ३८ ॥**

---

१. 'कुत्र स्थितम्' २. 'वने मे स्वामिना' ३. 'वनवासं च रामस्य'

४. 'फलाम्बुभिश्च तां वृत्तिं जटावल्कलबन्धनम्' । इति, 'सफलाम्बुमितां वृत्तिं जटावलयबन्धनम्' इति च ।

**(भा.दी.) फलेति** । भरतः, फलानि च मूलानि अम्बूनि च तैः वृत्तिं जीवनम्, जटानां वलयं मण्डलं तस्य बन्धनं तत्, इदं अत्र वने प्रवृत्तम्, सर्वं समस्तं पर्णशय्यादिकं श्रुत्वा, शोकः शुक् तस्मान्मूर्च्छितः सन्अपतत् ॥ ३८ ॥

**आर्त्तोऽधिकं मुहूर्त्तेन सञ्ज्ञामाप्य[१] विलप्य च ।**
**इङ्गुदीवृक्षमागम्य[२] स्मरन् राममभाषत ॥ ३९ ॥**

**(भा.दी.) आर्त** इति । अधिकं यथा भवति तथा आर्तः भरतः, मुहूर्तो मुहूर्तकालस्तेन सञ्ज्ञां आप्य प्राप्य, विलप्य विलापं कृत्वा च, पूर्वं श्रीरामाधिष्ठितो य इङ्गुदीवृक्षस्तं आनम्य, श्रीरामं स्मरन् सन् अभाषत ॥३९॥

**(सं.चं.)** इङ्गुदीवृक्षमागम्य यन्मूले रामः स्थितः ॥ ३९ ॥

**ईदृशः पर्ण्णपर्य्यङ्कः फलमूलोपजीवनम् ।**
**जगन्नाथस्य नाथस्य कथं न[३] भविता पुनः ॥ ४० ॥**

**(भा.दी.) ईदृश** इति । जगन्नाथस्य, नाथस्य मे स्वामिनः श्रीरामस्य, ईदृशः एवंविधः पर्णमयः पर्यङ्कः, फलं मूलं च ताभ्यां उपजीवनं च, पुनः कथं न भविता न भविष्यति, इत्यभाषतेति सम्बन्धः ॥ ४० ॥

**(सं.चं.)** कथं न भविता पुनः, तथा मया करणीयम् ॥ ४० ॥

**वन्यैर्ज्जलैश्च वर्त्तिष्ये शयिष्ये स्थण्डिलेष्वहम् ।**
**अद्यप्रभृति गुर्वर्त्थं सत्यमेतत् प्रतिश्रुतम् ॥ ४१ ॥**

**(भा.दी.)** स्वोक्तार्थे स्वाभिप्रेतमुपायमाह– **वन्यैरिति** । अहं वने भवानि वन्यानि तैः फलादिभिः, वने भवानि यानि जलानि तैश्च, अद्यप्रभृति (एतद्दिनम्) आरभ्य, गुरवे ज्येष्ठायेति गुर्वर्थं वर्तिष्ये । स्थण्डिलानि केवलभूस्थलानि तेषु शयिष्ये । शीङ्धातोर्लृट् । एतत् कृतं प्रतिश्रुतं प्रतिज्ञा सत्यम् ॥ ४१ ॥

**(सं.चं.)** तदर्थमहं वन्यैः फलमूलैः, वन्यैरेव च जलैः, नतु कृत्रिमकूपादिभिराहतानि वर्तिष्ये जीवनं निर्वक्ष्ये ॥ ४१ ॥

---

१. **'सञ्ज्ञां प्राप्य'** २. **'–वृक्षमानम्य'** इति वि.ती.पाठ इति भाति । ३. **'कथं नु भविता'**

**लक्ष्मणार्त्थं[1] च शत्रुघ्नः कार्य्यमेवं करिष्यति ।**
**आर्य्याभ्यां नगरे स्थेयं दैवं तत्रानुमोदताम् ॥ ४२ ॥**

**(भा.दी.) लक्ष्मणे**ति । शत्रुघ्नश्च, लक्ष्मणार्थं लक्ष्मणेन क्रियमाणवनवासाद्यर्थमित्यर्थः, एवं कार्यं करिष्यति । आर्याभ्यां ज्येष्ठाभ्याम्, नगरं पुरं तस्मिन्, स्थेयं स्थातव्यम् । तत्र एतस्मिन् कार्ये दैवं अनुमोदतां आनुकूल्यं करोतु । मुद हर्षे लोट् ॥ ४२ ॥

**(सं.चं.)** दैवं विधिः । 'विधौ दैवं दिष्टभाग्ये विपाको भवितव्यता' इति यादवप्रकाशः । मम दैवं रामस्तत्रानुमोदतामिति हृदयम् । तथाऽस्त्वित्यनुमोदताम् ॥ ४२ ॥

**एवं रामकथामग्नो निशां तामत्यवर्त्तयत् ।**
**सशत्रुघ्नोऽथ भरतो मातृभिः परिवारितः ॥ ४३ ॥**

**(भा.दी.) एवमि**ति । अथ एवं श्रीरामस्य या कथा तस्यां मग्नः आसक्तः सशत्रुघ्नः शत्रुघ्नसहितः मातृभिः परिवारितः भरतः तां निशां अत्यवर्तयत् गमयामास ॥ ४३ ॥

**प्रातः सन्ध्यामुपास्याथ गङ्गां स भरतोऽतरत् ।**
**चतुरङ्गं च तत्सैन्यं प्लवैर्न्नौभिश्च तारकैः ॥ ४४ ॥**

**(भा.दी.)** अथ सः भरतः, प्रातः प्रातःकाले, सन्ध्यां उपास्य गङ्गां अतरत् । तॄ प्लवनतरणयोः लङ् । चत्वारि अङ्गानि रथादीनि यस्य तत्तथा तत्, तत्सैन्यं तस्य भरतस्य सैन्यं च, प्लवा उडुपास्तैः, नावस्तर्यस्ताभिः, तारकैः तारकपुरुषैः, अतरदित्यन्वयः ॥ ४४ ॥

**(सं.चं.)** प्लवैर्नौभिश्च । प्लवाः 'ತೆಪ್ಪ' इति भाषायाम् । 'तल्पं स्यादुडुपः प्लवः' इत्यभिधानम् । विशालाः समतळाः प्लवाः । मध्ये नता दीर्घायता नावः । 'ದೋಣಿ' इति भाषायाम् । तारकैर्नाविकैः । 'नावश्चाऽरुरुहुस्त्वन्ये प्लवैस्तेरुस्तथाऽपरे' (८९.१०) इति च ।गजास्तु गजारोहैः प्रचोदिताः स्वयमतरन् । 'सवैजयन्तास्तु गजा गजारोहैः प्रचोदिताः । तरन्तः स्म प्रकाशन्ते सपक्षा इव पर्वताः'(८९.१९) इति च ॥ ४४ ॥

**दाशैर्ग्गुहनियुक्तैस्तां सन्तीर्य्य भरतो नदीम् ।**
**गुहाभिहितमार्ग्गेण जननीभिः समं ययौ ॥ ४५ ॥**

---

१. 'लक्ष्मणार्थे च' । 'लक्ष्मणार्थं लक्ष्मणेन कार्यव्रतकरणार्थम्' इति का.श्री. ।

**(भा.दी.) दाशैरि**ति । भरतः गुहेन नियुक्ता आज्ञप्तास्तैः दाशैः तां नदीं गङ्गां सन्तीर्य, गुहेन अभिहितो यो मार्गस्तेन, जननीभिः समं साकं ययौ ॥ ४५ ॥

**(सं.चं.)** 'कैवर्तो धीवरो दाशो नौजीवी जालिमार्गरौ' इति यादवप्रकाशः । **'ಬೆಸ್ತ, ಮೀನುಗಾರ'** इति भाषायाम् ॥ ४५ ॥

**प्रयागं प्राप्य तत् सैन्यं नियम्याऽरात् ससोदरः ।**
**भरतोऽथ भरद्वाजं प्राप्तवानभ्यवन्दत ॥ ४६ ॥**

**(भा.दी.) प्रयाग**मिति । अथ भरतः, प्रयागः प्रयागक्षेत्रम्, तं प्राप्य, तत् स्वकीयं सैन्यं आरात् दूरे नियम्य आज्ञया स्थापयित्वा, सोदरेण भ्रात्रा शत्रुघ्नेन सहितः सन्, भरद्वाजमृषिं प्राप्तवान् सन् अभ्यवन्दत ॥४६॥

**(सं.चं.)** आरात् भरद्वाजाश्रमात् किञ्चिद्दूरे । नियम्य स्थीयतामित्याज्ञाप्य । प्रयागं प्रयागाख्यं वनम्, यत्र भरद्वाजाश्रमम् । सादरं वन्दनमभिवन्दम् ॥ ४६ ॥

**रामं राज्यात् परित्याज्य[1] त्रैलोक्यस्यैकनायकम् ।**
**किं विधत्से[2] ससैन्योऽथ त्वमित्याह स्म तं मुनिः ॥ ४७ ॥**

**(भा.दी.) राम**मिति । मुनिः भरद्वाजः, हे भरत, त्वम्, त्रयश्च ते लोकाश्च त्रिलोकास्त एव त्रैलोक्यम्, तस्य एको मुख्यो यो नायकः स्वामी तम्, श्रीरामं राज्यं साम्राज्यं तस्मात् परित्याज्य बहिर्वासयित्वा, अथ ससैन्यः सन् त्वं किं कार्यं विधत्से कर्तुमिच्छसि? इति तं आह स्म अवदत् ॥ ४७ ॥

**(सं.चं.)** किं विधत्से विदधासि? वर्तमानसामीप्ये वर्तमानव्यपदेशः । किं करिष्यति? चिकीर्षसीति पर्यवसितम् ॥ ४७–९ ॥

**अनुतप्तोऽस्मि दुष्टायाः कैकेय्याः कैतवान्मुने ।**
**पुरं नेष्यामि मे नाथमिति तं भरतोऽब्रवीत् ॥ ४८ ॥**

---

१. **'परित्यज्य'** । **'परित्यज्य, अन्तर्नीतणिच्, बहिर्वासयित्वा'** इति का.श्री. । **'परित्याज्य बहिर्वासयित्वा'** इति वि.भू. ।

२. **'किं विधित्से'** इति प्रामादिकः पाठः । **'कर्तुमिच्छसि'** इति टीकामूलश्चायं प्रमादः । इच्छसीति व्याख्यानात्, रूपसादृश्याच्च धाञः सनि रूपमिदमिति पाश्चात्या अपक्वव्याकरणा अव्युत्पन्ना निरचेषत । सत्यम् । **'विधित्से'** सनि रूपं भवति । न मध्यमपुरुषे । किन्तु उत्तमपुरुषे–**'विधित्से विधित्सावहे विधित्सामहे'** इति । तेन विधित्से=कर्तुमिच्छामीत्यर्थः स्यात् । 'कर्तुमिच्छसि' इत्यर्थे तु **'विधित्ससे'** इति रूपं स्यात् । तेन सर्वमिदमव्युत्पन्नानां भ्रान्तिविलसितं कपिचापलम् । तस्मात् **'विधत्से'** इत्येव साधुः पाठः । तथैव च पठ्यते सर्वत्र तौळवमूलकोशेषु ।

**(भा.दी.) अनुतप्त** इति। हे मुने, दुष्टायाः कैकेय्याः कैतवं कापट्यं तस्मात् अनुतप्तः अनुतापं प्राप्तः अस्मि। मे नाथं श्रीरामं पुरं नगरं तत्प्रति नेष्यामि आनेष्यामि, इति भरतः तं मुनिं अब्रवीत् ॥ ४८ ॥

**रामानुजोऽसि धन्योऽसि स्वस्ति तेऽस्त्वित्यथाब्रवीत्[1] ।**
**ससैन्यं तं भरद्वाज आतित्थ्याय न्यमन्त्रयत् ॥ ४९ ॥**

**(भा.दी.) रामे**ति। अथ भरद्वाजः, हे भरत, त्वं रामानुजः असि। धन्यः कृतार्थः असि। ते तुभ्यं स्वस्ति शोभनं अस्तु। इति तं भरतं प्रति अब्रवीत्। ससैन्यं सैन्यसहितं तं भरतम्, आतिथ्यं अतिथिसत्कारः तस्मै, न्यमन्त्रयत् निमन्त्रणं कृतवान्। मत्रि गुप्तपरिभाषणे लङ् ॥ ४९ ॥

**आहूय विश्वकर्म्मादीन् कारयन् विश्वसम्पदः[2] ।**
**वासुदेवप्रसादेन स्वर्ग्गभोगान् व्यधान्मुनिः ॥ ५० ॥**

**(भा.दी.) आहूये**ति। वासुदेवस्य श्रीहरेः प्रसादोऽनुग्रहस्तेन, विश्वाः समस्ताः सम्पदः राज्योपभोग्यपदार्थास्ताः कारयन् मुनिः भरद्वाजः, विश्वकर्मा देववर्धकिरादिर्येषां ते तान्, कामधेनुप्रभृतीनित्यर्थः, आहूय, स्वर्गे भुज्यन्त इति स्वर्गभोगास्तान्, अलौकिकान्नादीनित्यर्थः, व्यधात् ॥ ५० ॥

**(सं.चं.)** आहूय विश्वकर्मादीन्। 'आतिथ्यस्य क्रियाहेतोर्विश्वकर्माणमाह्वयत्' (९१.११) इति च। आदिना त्रयो लोकपाला देवा नदीदेवता गन्धर्वाप्सरसश्च। 'आह्वये विश्वकर्माणमहं त्वष्टारमेव च' (९१.१२) इति, 'आह्वये लोकपालांस्त्रीन् देवान् शक्रमुखांस्तथा' (१३) इति, 'प्राक्स्रोतसश्च या नद्यः प्रत्यक्स्रोतस एवच' (१४) इति, 'आह्वये देवगन्धर्वान् विश्वावसुहहाहुहून्। तथैवाऽप्सरसो देवीर्गन्धर्वीश्चापि सर्वशः' (१६) इति च। त्रयो लोकपाला यमवरुणकुबेराः। शक्रस्य पृथङ् निर्देशात् ॥ ५० ॥

**यद्यदिच्छति योयोऽत्र[3] भरतानुव्रतो[4] जनः ।**
**तं तेन तर्प्पयामास रामभक्त्या द्विजर्षभः ॥ ५१ ॥**

**(भा.दी.)** भरतमनुव्रतोऽनुगतः यःयः जनः, अत्र स्वाश्रमे, यत्यत् वस्तु इच्छति, द्विजेषु ऋषभः श्रेष्ठः भरद्वाजः, तेन वस्तुना तं जनं रामभक्त्या तर्पयामास। तृप प्रीणने लिट् ॥ ५१ ॥

---

१. 'तेऽस्त्वित्यथ ब्रुवन्'
२. 'कारयन् सर्वसम्पदः'
३. 'यो यत्र'
४. 'भरतानुगतो–' इति, 'भरतानुव्रजो' इति च।

**(सं.चं.)** रामभक्तिमहिम्ना । भक्तिजनितया तपःसिद्ध्या । अथ च रामभक्त्या, एते रामभक्ता इति रामानुजं तदनुव्रतं च जनगणं तर्पयामास । अनेन रामस्तृप्यतीति ॥ ५१–५ ॥

**प्रभाते भरतो गन्तुमवन्दत[१] महामुनिम् ।**
**अवन्दन्त क्रमेणाथ कौसल्याद्याश्च ताः स्त्रियः ॥ ५२ ॥**

**(भा.दी.) प्रभात** इति । (भरतः), प्रभातः प्रातःकालस्तस्मिन्, श्रीरामनिकटं गन्तुम्, महान् यो मुनिस्तं भरद्वाजं अवन्दत । अथ कौसल्या आद्या यासां तास्तथा, ताः समागताः, स्त्रियश्च दशरथभार्याश्च, क्रमः ज्येष्ठकनिष्ठादिक्रमस्तेन अवन्दन्त ॥ ५२ ॥

**आसां विवेकमाचक्ष्व मातॄणां ते नृपात्मज ।**
**भरद्वाजेन भरत इत्युक्तः प्रत्यभाषत ॥ ५३ ॥**

**(भा.दी.) आसामि**ति । हे नृपात्मज भरत, ते मातॄणां आसां स्त्रीणाम्, विवेकः इयं कौसल्या इयं सुमित्रेत्यादिविभेदः, तं आचक्ष्व । चक्षिङ्धातोर्लोट् । भरद्वाजेन इति उक्तः भरतः प्रत्यभाषत ॥ ५३ ॥

**या पूर्वं वन्दितवती देवीयं देवतोपमा ।**
**रामविश्लेषतो दीना राममातेति[२] विद्धि ताम् ॥ ५४ ॥**

**(भा.दी.)** येति । देवतायाः देवस्त्रियाः उपमा यस्याः सा तथा, श्रीरामस्य विश्लेषो वियोगस्तस्मादिति ततः, दीना दुःखिता, या इयं देवी राजभार्या, पूर्वं वन्दितवती त्वां नमस्कृतवती, तां रामस्य माता इति विद्धि । विदेर्लोट् ॥ ५४ ॥

**तस्या उपान्ते तिष्ठन्ती[३] सुमित्रेयं तपोधन[४] ।**
**पुत्रौ लक्ष्मणशत्रुघ्नावेषाऽसूत शुभव्रता ॥ ५५ ॥**

---

१. **'गन्तुं ववन्दे तम्'**

२. **'राममातरमिति वाच्ये राममातेति प्रथमाविभक्तिस्तु यथा तिङ्कृत्तद्धितसमासैरभिहिते कर्मणि प्रथमा तथेतिशब्देनाभिहिते कर्मणि प्रथमेत्यभिप्रायः । अत एवोक्तं माघकाव्ये–'नारद इत्यबोधि'** इति, इति का.श्री ।

३. **'तदुपान्तेऽनुतिष्ठन्ती'** इति वि.ती.पाठः ।

४. **'तपोधना'**

**(भा.दी.) तस्या** इति । तप एव धनं यस्य स तथा तत्सम्बुद्धिः, हे भरद्वाज, तस्याः कौसल्यायाः उपान्तं समीपं तस्मिन्, अनुतिष्ठन्ती अनुसृत्य तिष्ठन्ती, इयं राजभार्या, सुमित्रा सुमित्रानाम्नी । शुभं व्रतं यस्याः सा तथोक्ता, एषा सुमित्रा, लक्ष्मणश्च शत्रुघ्नश्च तौ पुत्रौ असूत प्रसूतवती । षूञ् प्राणिगर्भविमोचने लङ् ॥ ५५ ॥

**लज्जयाऽधोमुखी याऽत्र दुष्टा[1] रामप्रवासिनी ।**
**कैकेयी मम मातेयमित्येतं[2] भरतोऽब्रवीत् ॥ ५६ ॥**

**(भा.दी.) लज्जये**ति । अत्र आसां मध्ये, स्वकृतश्रीरामाभिषेकविघातनिमित्तलज्जया अधः मुखं यस्याः सा तथा, दुष्टा, अत एव रामप्रवासिनी श्रीरामप्रवासकारणीभूता, कैकेयीनाम्नी या इयं राजभार्या मम माता इति एतं भरद्वाजं प्रति भरतः अब्रवीत् ॥ ५६ ॥

**(सं.चं.)** रामं प्रवासयतीति रामप्रवासिनी रामप्रवासकारणम् । अत एव दुष्टा दुष्टबुद्धिः ॥ ५६–९ ॥

**निमित्तमात्रं कैकेयी वनवासे जगत्प्रभोः ।**
**देवकार्य्याय यातोऽयमिति तं मुनिरब्रवीत् ॥ ५७ ॥**

**(भा.दी.) निमित्ते**ति । जगतः प्रभोः श्रीरामस्य वने यो वासस्तस्मिन्, कैकेयी केवलं निमित्तं निमित्तमात्रम्, न मुख्यकारणमित्यर्थः । तर्हि मुख्यहेतुः क इत्यत आह– **देवे**ति । अयं श्रीरामः, देवानां यत्कार्यं राक्षसहननलक्षणं तस्मै, यातः वनं गतः इति तं भरतं मुनिः अब्रवीत् ॥ ५७ ॥

**(सं.चं.)** सम्प्रति वनं यातोऽयम् । तदर्थमेव च यातो जातः, अवतीर्णोऽयम् । श्लेषे यजयोरभेदात् ॥ ५७–८ ॥

**प्राप्यानुज्ञां भरद्वाजाच्छ्रुत्वा रामाश्रमं ततः ।**
**स ययौ यमुनां तीर्त्त्वा चित्रकूटं च सानुगः ॥ ५८ ॥**

**(भा.दी.) प्राप्ये**ति । सः भरतः भरद्वाजात् अनुज्ञां प्राप्य, ततः भरद्वाजात् श्रीरामस्य य आश्रमस्तं श्रुत्वा, यमुनां तीर्त्वा, अनुगैः भृत्यैः सहितः सन्, चित्रकूटः चित्रकूटाख्यपर्वतस्तं (च) ययौ ॥ ५८ ॥

---

१. 'याऽत्र दृष्टा' २. 'मातेयमित्येवम्'

**नियम्याऽरात् स[१] सैन्यानि सहितः स्वपुरोहितैः ।**
**तद् विवेशाऽश्रमपदं रामं पृच्छन् मुनीनिह ॥ ५९ ॥**

**(भा.दी.) नियम्ये**ति । सः भरतः, स्वसैन्यानि आरात् दूरे नियम्य आज्ञया स्थापयित्वा, स्वस्य ये पुरोहिताः वसिष्ठादयस्तैः सहितः सन्, इह आश्रमे मुनीन् प्रति श्रीरामं पृच्छन् सन्, तत् आश्रमपदं आश्रमलक्षणं स्थानं विवेश ॥ ५९ ॥

**(सं.चं.)** इह चित्रकूटस्थाश्रमेषु वसतो मुनीन् रामं तद्वासस्थानं पृच्छन् । द्विकर्मको हि पृच्छतिः । तद् यथा– माणवकं पन्थानं पृच्छति ॥ ५९ ॥

**दृष्ट्वा सैन्यरजोराजिं[२] सालमारुह्य लक्ष्मणः ।**
**कोविदारध्वजं प्राप्तं ज्ञात्वा कोपमुपाददे ॥ ६० ॥**

**(भा.दी.) दृष्ट्वे**ति । लक्ष्मणः, सैन्यानां यानि रजांसि तेषां या राजिः पङ्क्तिस्तां दृष्ट्वा, सालो सर्जवृक्षस्तम्, 'सालं सर्जं च सूरयः' इति हलायुधः, आरुह्य, कुं भुवं दारयतीति कोविदारश्चमरिवृक्षः, स एव ध्वजो यस्य भरतस्य स तथा तम्, 'कोविदारश्चमरिकः[३] कुद्दालो युगपत्रकः' इत्यमरः, भरतं प्राप्तं ज्ञात्वा, कोपः क्रोधस्तं उपाददे चक्रे ॥ ६० ॥

**(सं.चं.)** अश्वादीनां पदहतिभिरुत्थितां रजोराजिं धूळिसन्ततिम् । सालं कञ्चनोन्नतमभ्रङ्कषं वृक्षम् । सालाख्यं वृक्षविशेषं वा । कोविदारः, **'ಕಂಚಿನಾಳದ ಮರ'** इति भाषायाम् । स यस्य ध्वजे चिह्नभूतस्तं भरतम् ॥ ६०–१ ॥

**कैकेयीतनयं दृप्तं ससैन्यं प्रत्युपस्थितम्[४] ।**
**अनुज्ञां देहि मे हन्तुमिति सौमित्रिरब्रवीत् ॥ ६१ ॥**

**(भा.दी.) कैकेयी**ति । सौमित्रिः लक्ष्मणः, दृप्तं श्रीमदान्धम्, ससैन्यं सैन्येन सहितम्, प्रत्युपस्थितं युद्धार्थ-मागतम्, कैकेय्याः तनयं भरतं हन्तुं मे मह्यं अनुज्ञां देहि इति अब्रवीत् ॥ ६१ ॥

---

१. **'स्वसैन्यानि सहितः स पुरोहितैः ।'**
२. **'सैन्यरजोराशिम्'**
३. **'कोविदारे चमरिकः'** इति साम्प्रतः पाठः ।
४. **'प्रत्यवस्थितम्'** । **'प्रत्यवस्थितं अस्मद्विरोधित्वेन प्राप्तम्'** इति का.श्री. ।

**शान्तो न दृप्तो भरतः शान्तस्त्वं भव लक्ष्मण ।**
**अस्मान् द्रष्टुमवाप्तोऽसाविति[१] रामोऽब्रवीत् स्मितः[२] ॥ ६२ ॥**

**(भा.दी.) शान्त** इति । हे लक्ष्मण, भरतः शान्तः शमोपेतः । दृप्तः मदोन्मत्तः न । त्वं शान्तः शमोपेतः भव । तर्हि किमर्थमत्र प्राप्त इत्यत आह– **अस्मानि**ति । असौ भरतः अस्मान् द्रष्टुं अवाप्तः प्राप्तः इति श्रीरामः, स्मितं मन्दहासोऽस्यास्तीति स्मितः, अर्शआदित्वात् मत्वर्थे अच्, मन्दहासी सन्नित्यर्थः, अब्रवीत् ॥६२॥

**(सं.चं.)** तस्मात् त्वमपि शान्तकोपो भव । स्मितः स्मययुतः । ईषद्धसन् । स्मिङ् ईषद्धसने ॥ ६२ ॥

**भरतो भगवत्पार्श्वमेतस्मिन्नन्तरे गतः ।**
**पर्ण्णशालां विशालां तामपश्यत् त्रिदिवोपमाम् ॥ ६३ ॥**

**(भा.दी.) भरत** इति । भगवतः श्रीरामस्य पार्श्वं तत्, एतस्मिन् अन्तरं मध्यं तस्मिन्, एवं सम्भाषणसमय इत्यर्थः, गतः भरतः, विशालां विस्तीर्णाम्, त्रिदिवस्य स्वर्गस्य उपमा यस्याः सा तथा, ताम् श्रीराम-सम्बन्धिनीम्, पर्णैं रचिता शाला पर्णशाला तां अपश्यत् ॥ ६३ ॥

**(सं.चं.)** त्रिदिवोपमां स्वर्गतुल्याम् । 'त्रिदशावासस्त्रिविष्टपं त्रिदिवम्' इत्यभिधानम् ॥ ६३ ॥

**[३]हेमचित्रप्रहरणैस्तनुत्रैश्चोपशोभिताम् ।**
**अरिसङ्घैरनाधृष्यां मृगैः सिंहगुहामिव ॥ ६४ ॥**

**(भा.दी.)** तामेव वर्णयति– **हेमेत्यादि**ना । हेम्ना सुवर्णेन चित्राणि मिश्राणि, बद्धानीति यावत्, यानि प्रहरणानि खड्गा(द्या)युधानि तैः । 'चित्रमालेख्यमिश्रयोः' इति वैजयन्ती । हेमरचितानीति वा । तनुत्राणि कवचानि तैश्चोपशोभितम्, (मृगैरनाधृष्यां) सिंहगुहामिव अरीणां सङ्घाः समूहास्तैः अनाधृष्याम्, धर्षयितुमशक्याम्, तां शालां अपश्यदिति पूर्वेण सम्बन्धः ॥ ६४ ॥

**(सं.चं.)** हेम्ना चित्रैः शबळैः । सुवर्णखचितैः । प्रहरणैरायुधैः । तनुत्रैः कवचैः । मृगैरनाधृष्या गुहा । अरिसङ्घैरनाधृष्या पर्णशाला । एतेन पुरुषसिंहस्य रामस्य पुरतः राक्षसाः क्षद्रमृगाइवेत्याह ॥ ६४ ॥

---

१. 'द्रष्टुमसौ प्राप्त इति' २. 'रामोऽब्रवीत् ततः' ३. 'हेमचित्रैः प्रहरणै–'

**प्रागुदक्प्रवणे देशे वेदिं[1] वेदविदां गुरोः ।**
**जाज्वल्यमानज्वलनां[2] भरतो मुहुरैक्षत ॥ ६५ ॥**

**(भा.दी.) प्रागि**ति । भरतः प्रागुदक्प्रवणे प्राक् च उदक् च प्रागुदञ्चौ प्रागुत्तरदिशावित्यर्थः, तयोः प्रवणः किञ्चिन्निम्नस्तस्मिन् देशे, प्रदेशे वेदान् विदन्तीति वेदविदस्तेषां ब्रह्मादीनां गुरोः श्रीरामस्य, जाज्वल्यमानः पुनःपुनःरतिशयेन प्रज्वलन् ज्वलनोऽग्निर्यस्याः सा तथा तां वेदीं मुहुः ऐक्षत ॥ ६५ ॥

**(सं.चं.)** प्राक् चोदक् च प्रवणे निम्ने यत्र तादृशे आश्रमप्रदेशे । वेदिं यज्ञवेदिकाम् । अथवा वेदिः वितर्दिका । 'ଓଟାଳ' इति भाषायाम् ॥ ६५ ॥

**तत्रोटजे जटामौलिं चारुचीरमवैक्षत ।**
**ससीतालक्ष्मणं रामं परमानन्दमन्दिरम् ॥ ६६ ॥**

**(भा.दी.) तत्रे**ति । तत्र आश्रमे, उटजः पर्णशाला तस्मिन्, जटा मौलौ शिरसि यस्य स तथा तम्, चारु मनोहरं चीरं वासो यस्य स तथा तम्, सीता च लक्ष्मणश्च ताभ्यां सहितम्, परम उत्तमो य आनन्दस्तस्य मन्दिरमिव मन्दिरम्, आश्रयमित्यर्थः, श्रीरामं अवैक्षत ॥ ६६ ॥

**(सं.चं.)** उटस्तृणपर्णादिः । तेन जातमुटजमुटजो वा । पर्णशाला ॥ ६६ ॥

**न तृप्यति स्म तं दृष्ट्वा भरतो नैतदद्भुतम् ।**
**अनन्तकालं पश्यन्तो यं न तृप्यन्ति योगिनः[3] ॥ ६७ ॥**

**(भा.दी.) ने**ति । भरतः तं श्रीरामं दृष्ट्वा न तृप्यति स्म, तृप्तिं नागच्छत् । तृप प्रीणने लट् । यत् यस्मात्[4] कारणात्, योगो मनोयोगो भगवति एषामस्तीति तथोक्ताः ऋजुयोगिप्रभृतयः, अनन्तो यः कालस्तम्, निरन्तरानन्तकाल इत्यर्थः, यं श्रीरामं पश्यन्तः सन्तः न तृप्यन्ति, तस्मात् एतद्भरतस्य श्रीरामं दृष्ट्वाऽप्यप्रीणनं अद्भुतं न ॥ ६७ ॥

**(सं.चं.)** तृप्तिरलम्बुद्धिः । योगिनः ब्रह्मणि मनोयोगयुक्ताः ॥ ६७–७२ ॥

१. **'वेदीं वेदविदाम्'** इति वि.ती.पाठ इति भाति । **'वेदवेदविदाम्'** इति क्वचित् । २. **'जाज्वल्यमानं ज्वलनम्'**

३. **'योगिनः ब्रह्मादयः' इति का.श्री.** ।

४. **'यन्न तृप्यन्ति'** इति मूलं **'यत् न'** इति, **'यं न'** इति च द्वेधा विभज्येदं व्याख्यानं प्रवृत्तमिति भाति–**'यत् यस्मात् कारणात्'** इति, **'यं श्रीरामम्'** इति ।

पादपद्मे निपतितं सन्तप्तं मातृहेळनात् ।
आशिश्लेषाथ भरतं [1]भक्तं तं भक्तवत्सलः ॥ ६८ ॥

**(भा.दी.) पादे**ति । अथ भक्तवत्सलः भक्तप्रियः श्रीरामः, पादौ पद्ममिव तस्मिन्निपतितम्, अष्टाङ्गप्रणामरूपत्वेन पतितम्, मातुः कैकेय्याः हेळनमवज्ञा तस्मात् सन्तप्तम्, भक्तं तं भरतं आशिश्लेष अलिङ्गितवान् । श्लिष आलिङ्गने लिट् ॥ ६८ ॥

स सर्वज्ञोऽपि[2] सर्वेशः पप्रच्छ कुशलं पितुः ।
अन्यांश्च विविधानर्थान् लोकवृत्तिं विडम्बयन् ॥ ६९ ॥

**(भा.दी.) स** इति । सर्वेशः (सः) श्रीरामः सर्वज्ञोऽपि, लोकस्य मानुषजनस्य वृत्तिर्वर्तनं तां विडम्बयन् अनुकुर्वन् सन्, पितुः दशरथस्य कुशलं क्षेमं तत्, अन्यान् विविधान् अर्थान् राज्यकोशाद्यर्थांश्च पप्रच्छ ॥ ६९ ॥

प्रोवाच प्राञ्जलिर्दीनः प्ररुदन् भरतोऽग्रजम् ।
स्वर्ग्गतो नः पिता नाथ रामरामेति कीर्त्तयन् ॥ ७० ॥

**(भा.दी.) प्रोवाचे**ति । श्रीरामवचः श्रुत्वा प्ररुदन्, दीनः दुःखितः, भरतः प्राञ्जलिः सन्, हे नाथ श्रीराम, नः पिता रामराम इति कीर्तयन् सन् स्वर्गतः, स्वः स्वर्गं प्रति गतः प्राप्तः, इति अग्रजं श्रीरामं प्रति प्रोवाच ॥ ७० ॥

उदकं दीयतां तस्मै प्रियैर्दत्तं प्रियं भवेत् ।
सर्वेषां सर्वतः प्रेष्ठ त्वया [3]दत्तं तु किम्पुनः ॥ ७१ ॥

**(भा.दी.) उदकमि**ति । सर्वेषां भक्तजनानां सर्वतः पुत्रमित्रकळत्रादेः प्रेष्ठ अतिशयेन प्रिय श्रीराम, तस्मै पित्रे उदकं जलं तत् दीयताम् । त्वया दत्तत्वान्मया पुनः किमर्थं देयमित्यत आह– **प्रियैरि**ति । यस्मात्

१. **'भरतं तं भक्तं भक्त–'**

२. **'सर्वज्ञोऽपि स्वपरगताशेषविशेषविषयकज्ञानवानपि लोकवृत्तिमज्ञजनव्यापारं विडम्बयन् अनुकुर्वन् सन्, अजानन्निवेति यावत्'** इति का.श्री.।

३. **'दत्तं च किम्पुनः'** । **'प्रेष्ठस्त्वया दत्तं च'** इति कचित् ।

प्रियैः पुरुषैर्दत्तं उदकं मृतानां प्रियं प्रीतिविषयः भवेत् । त्वया सर्वेषां प्रियतमेन दत्तं तु प्रियमिति पुनः किं वक्तव्यम्? ॥ ७१ ॥

**आकर्ण्य राज्ञो मरणं सदा सर्वप्रवर्त्तकः ।**
**अशोकलेशोऽपि विभुर्विललाप विडम्बयन् ॥ ७२ ॥**

**(भा.दी.) आकर्ण्येति** । सदा सर्वस्य रमाब्रह्मादेः प्रवर्तकः नियामकः, विभुः श्रीरामः, शोकस्य लव[१] एकदेशः, न विद्यते शोकलवो यस्य स तथाऽपि, राज्ञः मरणं मृतिस्तत् आकर्ण्य, विडम्बयन् पितृमरणं श्रुत्वा लोको यथा रोदिति तदनुकुर्वन्, विललाप ॥ ७२ ॥

**सीतापतिरुपागम्य सीतालक्ष्मणसंयुतः ।**
**मन्दाकिनीं विगाह्याऽत्र जनकायोदकं ददौ ॥ ७३ ॥**

**(भा.दी.) सीतेति** । सीता च लक्ष्मणश्च ताभ्यां संयुतः, सीतापतिः श्रीरामः, मन्दाकिनीं गङ्गां उपागम्य, अत्र गङ्गायां विगाह्य निमज्ज्य, जनकाय पित्रे उदकं जलं तत् ददौ ॥ ७३ ॥

**(सं.चं.)** नेयं मन्दाकिनी गङ्गा । किन्त्वन्यैव काचिन्नदीत्युक्तम् । नहि चित्रकूटे गङ्गा प्रवहति । किन्तु चित्रकूटं परिगतां वाहिनीमद्यापि मन्दाकिनीत्याचक्षते । पयस्विनीति केचित् । 'पैशुनी' इति तत्रत्या व्याहरन्ति । माल्यवतीति रामायणे पूर्वमुक्तम् । मालिनीति सङ्ग्रहे । 'ततो मन्दाकिनीतीरं प्रत्युत्तीर्य स राघवः । पितुश्चकार तेजस्वी निवापं भ्रातृभिः सह' (१०३.२८) इति च ॥ ७३ ॥

**दर्भेष्विङ्गुदपिण्याकं पित्रे तं न्यस्तवान्[२] विभुः ।**
**पितृदेवान् पुमान् स्वान्नैः पूजयेदिति दर्शयन् ॥ ७४ ॥**

**(भा.दी.) दर्भेष्विति** । अथ विभुः श्रीरामः, दर्भाः कुशास्तेषु, इङ्गुदपिण्याकम्, इङ्गुदस्य इङ्गुदीवृक्षस्य पिण्याकः पक्वफलात्मको यः पिण्डस्तम्, पुमान् पुरुषः, पितरश्च ते देवाश्च तान्, स्वस्य यान्यन्नानि तैः पूजयेत्, इति दर्शयन्, वनवासे श्राद्धार्थं ग्राम्यान्नादि न भवतीति धर्मं शिक्षयन्नित्यर्थः, पित्रे दशरथाय न्यस्तवान् ॥ ७४ ॥

---

१. सम्पातायातमिदम् । **'शोकस्य लेशः'** इति वक्तव्यम् । उत्तरत्रापि–**'न विद्यते शोकलेशो यस्य'** इति । २. **'पित्रेऽथ न्युप्तवान्'**

**(सं.चं.)** इङ्गुदस्य बीजानि पिष्ट्वा चूर्णयित्वा तैर्निष्पन्नः पिण्ड इङ्गुदपिण्याकः। पुमान् पितॄन् देवांश्च स्वान्नैः पूजयेदिति लोकाचारं दर्शयन्। 'यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः' (१०२.३०) इति च ॥ ७४–५ ॥

**तत्र प्रकृतयः सर्वाः सेनाः पौराश्च[१] सत्वरम्।**
**प्राप्य लोकेशमालोक्य यान्ति स्म कृतकृत्यताम् ॥ ७५ ॥**

**(भा.दी.) तत्रे**ति। तत्र आश्रमे, सर्वाः प्रकृतयः अमात्यादिप्रकृतयः, पुरे भवाः पौराः जनाः, सेनाश्च, सत्वरं त्वरया सहितं यथा भवति तथा श्रीरामसमीपं प्राप्य, लोकेशं श्रीरामं आलोक्य, कृतं कृत्यं प्रयोजनं यैस्ते तथा तेषां भावस्तत्ता ताम्, यान्ति स्म अगच्छन् ॥ ७५ ॥

**कौसल्याऽप्यथ कल्याणी शोकेन परिशोषिता।**
**समं राज्ञीभिरन्याभिर्देवं सन्दृश्य निर्वृता ॥ ७६ ॥**

**(भा.दी.) कौसल्ये**ति। अथ कल्याणी शोभनगुणा, शोकः श्रीरामवियोगजनितशोकः, तेन परिशोषिता कृशीकृता कौसल्या (अपि), अन्याभिः राज्ञीभिः चतुर्दशशतसङ्ख्याकदशरथभार्याभिः समं साकम्, देवं श्रीरामं सन्दृश्य, सम्यक् दृष्ट्वा, निर्वृता सन्तुष्टा अभवत् ॥ ७६ ॥

**(सं.चं.)** राज्ञीभिः सप्तशतानामर्धेन कैकेय्या सुमित्रया च समं कौसल्या। निर्वृता तृप्ता। निर्वृतिः **'ನೆಮ್ಮದಿ'** इति भाषायाम् ॥ ७६ ॥

**मातॄः सप्रेमबाष्पास्ता[२] जगद्गुरुरवन्दत[३]।**
**जानकी लक्ष्मणश्चाथ ताश्चाऽशीर्भिरपूरयन्[४] ॥ ७७ ॥**

**(भा.दी.)** मातॄरिति। अथ श्रीरामः, प्रेम च बाष्पं च प्रेमबाष्पे ताभ्यां सहिताः सप्रेमबाष्पास्ताः मातॄः कौसल्याद्याः प्रभुः अवन्दत। वन्दतेर्लङ्। जानकी च मुहुरवन्दत लक्ष्मणश्च मुहुरवन्दत। ताः मातरः आशिषः शुभवाक्यानि ताभिः अपूजयन् ॥ ७७ ॥

---

१. **'सर्वाः पौराः सेनाश्च'** इति वि.ती.पाठः स्यात्। **'सेना पौराश्च'** इति क्वचित्। २. **'सप्रेमबाष्पाक्षीः'**

३. **'मुहुः प्रभुरवन्दत'** इति वि.ती.पाठः।

४. **'ताश्चाऽशीर्भिरपूजयन्'** इति वि.ती. पाठः। **'ताः आशीर्भि–' इति वा।**

**(सं.चं.)** प्रेमजनितं बाष्पं प्रेमबाष्पम्, बाष्पो वा । 'बाष्पोऽश्रुण्यम्बुधूमे च' इति यादवप्रकाशः । अथ जानकी लक्ष्मणश्चावन्देताम् ॥ ७७ ॥

**तमःशोकाभिभूतां तामतीत्य रजनीं तदा ।**
**भानुर्नभसि भाति स्म राघवो जनसंसदि ॥ ७८ ॥**

**(भा.दी.) तम** इति । तमश्च शोकश्च ताभ्यां अभिभूतामभिव्याप्तां तां रजनीं रात्रिं अतीत्य भानुः सूर्यः नभसि भाति स्म । भा दीप्तौ लट् । (तदा) राघवः श्रीरामः, जनानां संसत् सभा तस्यां भाति स्मेति सम्बन्धः ॥ ७८ ॥

**(सं.चं.)** तमोभिभूतां रजनीमतीत्य भानुर्नभसीव शोकाभिभूतां रजनीमतीत्य रामो जनसंसदि बभौ ॥७८॥

**किं नु वक्त्येष भरतः प्रतिवक्ष्यति किं प्रभुः ।**
**इति स्थिते जने जोषं भरतो राममब्रवीत् ॥ ७९ ॥**

**(भा.दी.) किं न्विति** । एषः भरतः किं नु किं वा वचः वक्ति? प्रभुः श्रीरामः किं वचः प्रतिवक्ष्यति, प्रत्युत्तरं वदिष्यति? जने इति अनेनाभिप्रायेण जोषं तूष्णीं स्थिते सति भरतः श्रीरामं अब्रवीत् ॥ ७९ ॥

**(सं.चं.)** किं नु । 'प्रश्ने विकल्पे नु स्विच्च' इति यादवप्रकाशः । नु इदानीमित्येके । 'तूष्णीं जोषं भवेन्मौने' इत्यभिधानम् ॥ ७९–८१ ॥

**अनुग्रहाय नः स्वामिन् स्वामयोद्ध्यां वनाद् व्रज ।**
**इमामनाथां धरणीं विश्वपालक पालय ॥ ८० ॥**

**(भा.दी.) अनुग्रहायेति** । हे स्वामिन्, नः अनुग्रहः प्रसादस्तस्मै, अस्मास्वनुग्रहं कर्तुमित्यर्थः, वनात् स्वां अयोध्यां व्रज गच्छ । विश्वस्य पालक रक्षक श्रीराम, न विद्यते नाथो यस्याः सा तथा ताम्, अराजकामित्यर्थः, इमां धरणीं पालय ॥ ८० ॥

**इत्युक्तो भगवानूचे पितुराज्ञाकरा वयम् ।**
**सद्धिताय वसामोऽत्र त्वं पालय धरामिति ॥ ८१ ॥**

**(भा.दी.)** इतीति । इति उक्तः भरतेनाभिहितः भगवान् श्रीरामः, वयं पितुः आज्ञां कुर्वन्तीत्याज्ञाकराः सन्तः, सतां मुन्यादीनां यद्धितं तस्मै, अत्र वने वसामः, त्वं धरां पालय इति भरतं ऊचे ॥ ८१ ॥

**प्रणामाञ्जलिबाष्पाणि कुर्वाणो भरतस्तदा ।**
**क्रियासमभिहारेण रामं प्रोचे सगद्गदम् ॥ ८२ ॥**

**(भा.दी.) प्रणामे**ति । तदा प्रणामाश्च, अञ्जलयश्च, बाष्पाणि अश्रूणि च तानि, क्रियायाः समभिहार आवृत्तिस्तेन, पुनःपुनरित्यर्थः, कुर्वाणः भरतः श्रीरामं प्रति गद्गदेन स्खलद्वचनेन सहितं यथा भवति तथा सगद्गदं प्रोचे ॥ ८२ ॥

**(सं.चं.)** क्रियासमभिहारेण पौनःपुनिकतया । प्रणामान् कुर्वाणः । अञ्जलीन् कुर्वाणः बध्नन् । बाष्पाणि कुर्वाणो मोचयन् । गद्गदं कम्पयुक्तं वचनं प्रोचे । गद्गदं यथा भवति तथेति क्रियाविशेषणं वा । गद्गदेन अस्फुटध्वनिना सहितं सगद्गदं वच इति समस्तं वा । क्रियाविशेषणं वा । 'गद्गदः स मनाक् स्फुटः' इति यादवप्रकाशः ॥ ८२ ॥

**त्वां तु त्यक्त्वा पतिं हत्वा दत्वा मे परितापिताम् ।**
**कृत्वा सर्वजगद्दुःखं माता सर्वङ्कषा मम ॥ ८३ ॥**

**(भा.दी.) त्वां त्वि**ति । मम माता कैकेयी, त्वां त्यक्त्वा वियोजयित्वा, पतिं भर्तारं हत्वा, मे मह्यं परितापोऽस्यास्तीति परितापी, तस्य भावस्तत्ता, तां दत्वा, सर्वं स्थिरचरात्मकं यज्जगत्, तस्य दुःखं तत् कृत्वा, सर्वं कषति नाशयतीति सर्वङ्कषा, सर्वानर्थकारिणीत्यर्थः ॥ ८३ ॥

**(सं.चं.)** परितापिनो भावः परितापिता, ताम्, परितापं दत्वा । सर्वजगतः दुःखं कृत्वा । सर्वं कषति हिन-स्तीति सर्वङ्कषा सर्वानिष्टनिदानम् । 'सर्वकूलाभ्रकरीषेषु कषः' (अ.सू.३.२.४२) इति खच् ॥ ८३ ॥

**चिकर्त्तिषुं शिरस्तस्या भुजं मे खड्गलम्पटम्[१] ।**
**प्रतिभा वारितवती त्वत्प्रीतिक्षतिशङ्किनी ॥ ८४ ॥**

**(भा.दी.) चिकर्तिषुमि**ति । तस्याः कैकेय्याः शिरः चिकर्तिषुम्, कर्तितुमिच्छतीति चिकर्तिषति, चिकर्तिषतीति चिकर्तिषुस्तम् खण्डयितुमिच्छावन्तमित्यर्थः, खड्गे लम्पट आसक्तस्तं मे भुजम्, तव या मयि प्रीतिस्तस्याः क्षतिर्भङ्गस्तां शङ्कितुं शीलमस्या अस्तीति तथोक्ता, प्रतिभा बुद्धिः वारितवती । स्त्रीवधे कृते सति राजर्षिधर्मेण भवताऽहं परित्यक्तः स्यामिति भिया तूष्णीं स्थीयत इति भावः ॥ ८४ ॥

१. 'चिकर्त्तिषू शिरस्तस्या भुजौ मे खड्गलम्पटौ ।'

**(सं.चं.)** चिकर्तिषुं कर्तितुं च्छेत्तुमिच्छुं मे भुजम् । आत्मनिष्ठामिच्छां भुजगतामाह । कवीनामालङ्कारिकी भणितिरियम् । एवं खड्गलम्पटमित्यपि । चेतनधर्माणामचेतनेष्वारोपं हि रूपकमुशन्ति । तेन तव प्रीतेः क्षतिः स्यादिति शङ्कमाना मे प्रतिभा प्रज्ञा ॥ ८४ ॥

**अयि नाथ जगन्नाथ भक्तस्याऽगः क्षमस्व मे ।**
**भक्तवत्सल भक्तानां नन्वात्मानं दिशेद् भवान्**[1] **॥ ८५ ॥**

**(भा.दी.)** **अयी**ति । अयि नाथ, जगतां नाथ, भक्तेषु वत्सल स्निग्ध श्रीराम, भक्तस्य मे आगः अपराधस्तत् क्षमस्व । क्षमूष् सहने लोट् । भवान् भक्तानां आत्मानं स्वसारूप्यलक्षणं स्वरूपमपि दिशेन्ननु । दिश अतिसर्जने लिङ् ॥ ८५ ॥

**(सं.चं.)** आगोऽपराधं क्षमस्व । मातुरपराधो मन्निमित्त इति ममैव ननु । भक्तानां स्वात्मानमेव दिशेन्ननु भवान् । 'अहं भक्तपराधीनः' इति हि भगवद्वचनम् ॥ ८५ ॥

**स्त्रीषु नासत्यदोषोऽस्ति पिता नो न विवेद तत् ।**
**राजर्षिर्न्न मया दूष्यो ममैवेदमघं महत्**[2] **॥ ८६ ॥**

**(भा.दी.)** स्त्रीष्विति । स्त्रीषु असत्येन असत्यवचसा दोषो न नास्ति । इति नः पिता दशरथः न विवेद न वेत्ति स्म । विदेर्लिट् । 'स्त्रीषु नर्मविवाहेषु वृत्त्यर्थे प्राणसङ्कटे । गोब्राह्मणानां हिंसायां नानृतं स्याज्जुगुप्सितम्' इति स्मृत्युक्तधर्मं नाऽश्रितवानित्यर्थः । राजा चासौ ऋषिश्च राजर्षिः पिता मया दूष्यः न । तत् पित्रा कृतम्, इदं कैकेय्यै वरदानलक्षणं अघमपराधः ममैव । मन्निमित्तं कैकेय्या वरयाचनात् तेन च तत्प्रदानादिति भावः ॥ ८६ ॥

**(सं.चं.)** स्त्रीषु नासत्यदोषोऽस्ति । 'न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन् न विवाहकाले । प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि' इति हि स्मरन्ति । प्रायस्तदेतत् पिता न विवेद न विजज्ञौ । अत एवास्मिन् महति सङ्कटगर्ते निममज्ज । अथवा न स मया दूष्यः । ममैवायं दोषः । मदर्थं हि माता वरं वव्रे ॥ ८६ ॥

---

१. **'स्वस्वरूपमपि भक्ताधीनं कुर्वतस्तव मम याच्ञापालनं नासुकरमिति भावः'** इति का.श्री। २. **'ममैवेदमघं च तत्'** इति वि.ती.पाठः।

**भूर्दत्ता भूभृता चेन्मे[१] दासस्तेऽर्पितवानहम् ।**
**लोकन्याय्यं च लोकेश तस्मात्ते राज्यपालनम्[२] ॥ ८७ ॥**

**(भा.दी.) भूरि**ति । चेद्यदि भूभृता राज्ञा मे मह्यं भूर्दत्ता तर्हि ते दासः अहं ते तुभ्यं अर्पितवानस्मि । हे लोकेश श्रीराम, तस्मात् मया समर्पितत्वात् ते तव राज्यस्य पालनम्, लोकन्याय्यं च, लोके न्याय्यं युक्तं च । सर्वलोकेशत्वाद्भूस्तव केनापि न देयैव । लौकिकानुसरणं च मया प्रदानत एव जायत इत्यतोऽवश्यं राज्यपालनं कुर्विति भावः ॥ ८७ ॥

**(सं.चं.)** भूभृता भूर्मे दत्ता चेदपि । तां भुवं तवैवार्पितवान् । यतस्ते दासोऽहम् । यस्मान्मया दत्तं तस्माल्लोकदृष्ट्याऽपि तवैव राज्यपालनं न्याय्यम् ॥ ८७–९ ॥

**न यास्यसि पुरं चेत् त्वं नाहं यास्यामि सर्वथा[३] ।**
**योगिमृग्यं[४] पदाब्जं ते सेवे सौमित्रिवत् सदा ॥ ८८ ॥**

**(भा.दी.) ने**ति । चेद्यदि हे ईश्वर, त्वं पुरमयोध्यापुरं तत् न यास्यसि, तर्हि अहं सर्वथा सर्वप्रकारेणापि न यास्यामि । अहं योगिभिः सनकादिभिः मृग्यमन्वेषणीयं तत् ते पदाब्जं सौमित्रिवत् लक्ष्मणवत् सदा सेवे ॥ ८८ ॥

**एवं ब्रुवाणे भरते सर्वाः प्रकृतयः प्रभुम् ।**
**मुनयो मातरश्चैव सबाष्पाक्षा ययाचिरे ॥ ८९ ॥**

**(भा.दी.) एवमि**ति । भरते एवं ब्रुवाणे वदति सति, बाष्पेण अश्रुणा सहितानि सबाष्पाणि तादृशानि अक्षीणि यासां तास्तथा, सर्वाः प्रकृतयः अमात्यादयः, वसिष्ठादिमुनयश्च, मातर एवच, प्रभुं श्रीरामं ययाचिरे, अयोध्यां प्रत्यागन्तुं प्रार्थनां चक्रुः । याचृ याच्ञायां लिट् ॥ ८९ ॥

**भरतं भगवानूचे शत्रुघ्नेन पुरीं व्रज ।**
**सलक्ष्मणः सतां प्रीत्यै व्रजेयं दण्डकानिति ॥ ९० ॥**

---

१. **'भूर्दत्ता यदि राज्ञा मे'** इति, **'भूर्दत्ता भूभृता यन्मे'** इति च ।

२. **'यस्मान्मया राज्यं तुभ्यं दत्तं तस्मात् ते तव राज्यपालनं लोकन्याय्यं लोकन्यायतः प्राप्तम् । 'शिष्यस्यार्थः स्वीय एव' इत्युक्तेश्च'** इति का.श्री. ।
३. **'त्वं न यास्यामीति सर्वथा'**
४. **'योगिभिः ब्रह्मादिभिः मृग्यम्'** इति का.श्री. ।

**(भा.दी.) भरतमि**ति । भगवान् श्रीरामः भरतम्, शत्रुघ्नेन सह पुरीं व्रज गच्छ, अहं सलक्ष्मणः सन्, दण्डकान् दण्डकारण्यानि, सतामगस्त्यादिमुनीनां प्रीत्यै व्रजेयम्, इति भरतं प्रति ऊचे ॥ ९० ॥

**(सं.चं.)** शत्रुघ्नेन सह पुरीं व्रज, पालय च मेदिनीम् । अहं लक्ष्मणेन सीतया च सह दण्डकान् अरण्यभागान् व्रजेयम्, सतां मुनीनां प्रीत्यै, असतामसुराणां हत्यै च ॥ ९० ॥

**क्व गुर्वाज्ञा सर्वगुरोर्द्धर्म्मः कोऽसङ्गिनस्तव ।**
**गच्छ देव पुरीं शीघ्रमिति जाबालिरब्रवीत् ॥ ९१ ॥**

**(भा.दी.) क्वे**ति । सर्वेषां ब्रह्मरुद्रादीनां गुरोः तव, गुरोः पितुराज्ञा क्व? न सङ्गोऽसङ्गः, सोऽस्यास्तीति तथा तस्य, कर्मलेपरहितस्येत्यर्थः, तव धर्मः कः? हे देव, पुरीं अयोध्यां प्रति शीघ्रं यथा भवति तथा गच्छ, इति जाबाल्याख्यो मुनिरब्रवीत् ॥ ९१ ॥

**(सं.चं.)** क ते गुरूणामपि गुरोः गुरुः ? यस्त्वामाज्ञापयति । यस्य पुण्यपापसङ्गः तस्य किल धर्मविधानम् । असङ्गिनः को धर्मः? 'असङ्गो ह्ययं पुरुषः' इति श्रुतिः । एतेन जाबालिकृतो नास्तिक्यवादोऽपि लोकविडम्बनमेवेत्युक्तं भवति ॥ ९१ ॥

**गुरुदेवार्च्चनं धर्म्मो ननु वेदविनिश्चितः[१] ।**
**इति क्रुद्धइव प्रोचे रामो लोकं विडम्बयन्[२] ॥ ९२ ॥**

**(भा.दी.) गुर्वि**ति । श्रीरामः, लोको जगत् तं विडम्बयन् अनुकुर्वन् सन्, गुरवश्च देवाश्च तेषामर्चनं वेदेषु निश्चितः धर्मः ननु, इति वचः, क्रुद्धइव, जाबालिवचनं वेदविरुद्धमित्यभिप्रायेण क्रुद्ध इव, प्रोचे ॥ ९२ ॥

**(सं.चं.)** स्वयं जाबालिः नाटकं जानन्नन्तः प्रीयमाणोऽपि बहिस्तस्मै क्रुद्धइव ॥ ९२ ॥

**अनुतिष्ठसि धर्म्मं चेद् राजन् राज्यमराजकम् ।**
**पूर्वजैः पालितं पाल्यमिति ब्रह्मसुतोऽब्रवीत् ॥ ९३ ॥**

**(भा.दी.) अन्वि**ति । हे राजन् श्रीराम, चेद्यदि पूर्वाचरितो यो धर्मस्तम्, अनुतिष्ठसि अनुसृत्य वर्तसे, तर्हि न विद्यते राजा यस्य तत् तथा, पूर्वजा इक्ष्वाकुप्रभृतयस्तैः पालितं राज्यं पाल्यं पालनीयम्, इति ब्रह्मसुतश्चतुर्मुखसुतो वसिष्ठोऽब्रवीत् ॥ ९३ ॥

---

१. **'वेदेषु निश्चितः'** इति वि.ती.पाठः स्यात् । **'देवविनिश्चितः'** इति कचित् । २. **'लोकान् विडम्बयन्'**

**(सं.चं.)** पितृवचनपालनाख्यं धर्मम् । पूर्वजैः पालितमराजकं राज्यं पाल्यमिति च राज्ञां परमो धर्म एव हि । ब्रह्मसुतो वसिष्ठः ॥ ९३ ॥

**मुनीनामुत मातॄणां पौराणामपि याचनम् ।**
**रामे[१] नगणयत्येव भरतो दुःखितोऽब्रवीत् ॥ ९४ ॥**

**(भा.दी.) मुनीनामि**ति । मुनीनां वसिष्ठादीनाम्, उत मातॄणां कौसल्यादीनाम्, उत पुरि भवाः पौराः तेषां जनानां (अपि), याचनं प्रार्थनं तत्, श्रीरामे नगणयति सति, अविचारयति सतीत्यर्थः, नसमासोऽयम्, दुःखितः भरतः अब्रवीत् ॥ ९४ ॥

**(सं.चं.)** नगणयति सत्येव । सर्वथा नगणयति, न लक्षयति, मनसि न कुर्वति, निराकुर्वति च सति । भरतोऽब्रवीत् ॥ ९४ ॥

**[२]आर्य्यं प्रत्युपवत्स्यामि[३] यावन्मे सम्प्रसीदति ।**
**शयिष्येऽहं निराहारः पुरं यावद् व्रजेत् प्रभुः ॥ ९५ ॥**

**(भा.दी.) आर्ये**ति । हे आर्य स्वामिन् श्रीराम, त्वं मे मम यावत्कालं सम्प्रसीदसि, सम्यक् प्रसन्नो भवसि, तावत्पर्यन्तं अहं प्रत्युपवेक्ष्यामि उपवासं करिष्यामि । विश प्रवेशने लृट् । यावत्कालं प्रभुः श्रीरामः पुरमयोध्यापुरं तत् व्रजेत्, तावत्कालपर्यन्तं (अहं) निराहरः सन् शयिष्ये, समीप एव स्थास्यामि, सर्वथाऽपि न गमिष्यामीत्यर्थः । शीङ् स्वप्ने लृट् ॥ ९५ ॥

**(सं.चं.)** आर्यं प्रत्यहमप्युपवत्स्यामि उपोषणं करिष्यामि । कियत्पर्यन्तम्? यावन्मे सम्प्रसीदति ॥ ९५ ॥

**सर्वथा करणीया चेद् गुर्वाज्ञा ते जगद्गुरो[४] ।**
**भवद्दासः[५] करोम्येनां भवांस्तु नगरीं व्रजेत् ॥ ९६ ॥**

**(भा.दी.) सर्वथे**ति । हे जगद्गुरो श्रीराम, ते तव गुरोः पितुराज्ञा, चेद्यदि सर्वथा करणीया, तर्हि भवतो दासः भृत्यः अहम्, एनां तवाऽदिष्टां गुर्वाज्ञाम्, करोमि । भवांस्तु नगरीं व्रजेत् ॥ ९६ ॥

---

१. **'रामो न गणयत्येव'** । **'रामे नगणयत्येवम्'** इति क्वचित् । २. **'आर्य प्रत्युपवेक्ष्यामि यावन्मे सम्प्रसीदसि'** इति वि.ती.पाठः ।

३. **'प्रत्युपवेक्ष्यामि'** । **'उपवत्स्यामि उप समीप एव स्थास्यामि'** इति का.श्री. ।

४. **'जगद्गुरोः'** ५. **'तावद् दासः'**

**(सं.चं.)** भवत्प्रतिनिधितया भवद्दासोऽहं करोमि ॥ ९६ ॥

**इति ब्रुवाणमास्तीर्य्य कुशान् स्थण्डिलमण्डले ।**
**स्मित्वा कारुणिकः प्रोचे भरतं भरताग्रजः ॥ ९७ ॥**

**(भा.दी.) इतीति** । स्थण्डिलस्य मण्डलं प्रदेशस्तस्मिन्, कुशान् आस्तीर्य, इति ब्रुवाणं भरतम्, कारुणिकः दयाशीलः भरताग्रजः श्रीरामः, स्मित्वा मन्दहासं कृत्वा, प्रोचे ॥ ९७ ॥

**(सं.चं.)** स्थण्डिलं परिष्कृता भूमिः । मण्डलं तळम् । उपवेशनार्थं कुशानास्तीर्य । भरताग्रज इति रामस्य तस्मिन् प्रीत्यतिशयमाह ॥ ९७ ॥

**चतुर्दशे वत्सरेऽहं वत्स यास्यामि नः पुरीम् ।**
**सत्यमित्युदितोऽपीशं ययाचे भरतः पुनः ॥ ९८ ॥**

**(भा.दी.) चतुरिति** । हे वत्स भरत, चतुरधिका दश चतुर्दश, चतुर्दशत्वसङ्ख्यापूरणश्चतुर्दशस्तस्मिन्, वत्सरः संवत्सरस्तस्मिन्, अहं नः पुरीं अयोध्यां यास्यामि गमिष्यामि । इदं वचः सत्यम् । इति उदितोऽपि भरतः पुनः ईशं श्रीरामं ययाचे । याचृ याच्ञायां लिट् ॥ ९८ ॥

**(सं.चं.)** पुनःपुनः ययाचे ॥ ९८ ॥

**एतस्मिन्नन्तरे रामं सम्प्रापुः परमर्षयः ।**
**देवोपदेवैः सम्मन्त्र्य दशग्रीववधार्त्थिनः ॥ ९९ ॥**

**(भा.दी.) एतस्मिन्निति** । परमाश्च ते ऋषयश्च परमर्षयः अगस्त्यादयः, देवाश्च, उपदेवा गन्धर्वादयस्ते च, तैः सम्मन्त्र्य आलोच्य, दश ग्रीवाः कण्ठा यस्य स तथा तस्य, वधं संहारमर्थयितुं शीलमेषाम-स्तीति तथा सन्तः, एतस्मिन्नन्तरं मध्यं तस्मिन्, श्रीरामेण भरतं प्रति सम्भाषणसमय इत्यर्थः, श्रीरामं सम्प्रापुः ॥ ९९ ॥

**(सं.चं.)** उपदेवा गन्धर्वाः । 'एतावदुक्त्वा वचनं गन्धर्वाः समहर्षयः । राजर्षयश्चैव तथा सर्वे स्वास्वां गतिं गताः' (११२.७) इति च ॥ ९९ ॥

**ते प्रोचुर्भरतं तत्र नेदानीं पुरमेत्ययम् ।**
**कृतकार्य्यविशेषस्तु पुरीं रामो व्रजेदिति ॥ १०० ॥**

**(भा.दी.) त** इति । तत्र चित्रकूटे ते ऋषयः भरतं प्रति, अयं श्रीरामः इदानीम्, पुरमयोध्यापुरं तत्, न एति प्राप्नोति, कृतः कार्यविशेषः राक्षसहननादिलक्षणो येन स तथा सन्, पुरीं व्रजेत्, इति प्रोचुः ॥१००॥

**(सं.चं.)** 'ततस्त्वृषिगणाः क्षिप्रं दशग्रीववधैषिणः । भरतं राजशार्दूलमित्यूचुः सङ्गता वचः' (११२.४) इति, 'ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे'(५) इति च ॥ १००–८ ॥

**भरतं राज्यभारार्त्तं लोठन्तं[१] धरणीतळे ।**
**याचमानं पुनर्दृष्ट्वा वसिष्ठो राममब्रवीत् ॥ १०१ ॥**

**(भा.दी.) भरतमि**ति । वसिष्ठः, राज्यमेव भारस्तेन आर्तं दुःखितम्, धरण्याः तळं तस्मिन् लोठन्तं परि-भ्रमन्तम्, पुनश्च याचमानम्, पुरं प्रत्यागन्तव्यमिति याचन्तम्, भरतं दृष्ट्वा, श्रीरामं प्रति अब्रवीत् ॥१०१॥

**भक्ताय भरताय त्वं देव देहि स्वपादुके ।**
**पादुके नित्यमावन्द्य पालयेद् भरतो भुवम् ॥ १०२ ॥**

**(भा.दी.) भक्ताये**ति । हे देव, त्वं भक्ताय भरताय स्वस्य पादुके पादपीठे ते देहि । भरतः पादुके त्वदीयपादपीठे नित्यं सर्वदा आवन्द्य भुवं भूमिं पालयेत् ॥ १०२ ॥

**वसिष्ठवाक्यमाकर्ण्य्य वैकुण्ठः पादुके ददौ ।**
**सौवर्ण्णे ते दधन्मूर्ध्नि प्राञ्जलिर्भरतोऽब्रवीत् ॥ १०३ ॥**

**(भा.दी.) वसिष्ठे**ति । वैकुण्ठः श्रीरामः वसिष्ठस्य यद् वाक्यं तत् आकर्ण्य पादुके ददौ । भरतः, सौवर्णे सुवर्णमये, ते श्रीरामदत्ते पादुके, मूर्धा शिरस्तस्मिन्, दधत् दधानः सन्, प्रकृष्टः अञ्जलिर्यस्य स तथा सन् अब्रवीत् ॥ १०३ ॥

**नगरं न प्रवेक्ष्यामि यावदागमनं तव ।**
**प्रवेक्ष्याम्यग्निमप्रेक्ष्य वत्सरे त्वां चतुर्द्दशे ॥ १०४ ॥**

---

१. **'राज्यभर्तारं लोटन्तम्'** । **'राज्यभर्तारं राज्यरक्षकं याचमानं प्रार्थयमानम्'** इति का.श्री. । **'राज्यकर्तारम्'** इति कश्चित् ।

**(भा.दी.) नगरमि**ति । हे राम, यावत्कालं तव आगमनं तावत्पर्यन्तम्, नगरं अयोध्यापुरं तत्, न प्रवेक्ष्यामि । विश प्रवेशने लृट् । चतुर्दशो वत्सरः संवत्सरः तस्मिन्, त्वां अप्रेक्ष्य अदृष्ट्वा अग्निं प्रवेक्ष्यामि ॥ १०४ ॥

**इति प्रतिश्रवौ कृत्वा प्रणम्य च जगत्प्रभुम् ।**
**मातृभिर्बाष्पनेत्राभिर्भरतः सानुगो ययौ[१] ॥ १०५ ॥**

**(भा.दी.) इती**ति । भरतः इति प्रतिश्रवौ प्रतिज्ञे कृत्वा, जगत्प्रभुं श्रीरामं प्रणम्य च, बाष्पयुक्तानि नेत्राणि यासां ताः तथा ताभिः मातृभिः सह, सानुगः अनुगैर्भृत्यैः सहितः सन् ययौ ॥ १०५ ॥

**भरद्वाजं समामन्त्र्य भरतस्त्वरितो गतः ।**
**गङ्गामतीत्य सम्प्राप्तः स्वपुरीं[२] रहितां श्रिया ॥ १०६ ॥**

**(भा.दी.) भरद्वाजमि**ति । चित्रकूटाद्गतः भरतः, भरद्वाजं समामन्त्र्य आपृच्छ्य, गङ्गामतीत्य, त्वरितः वेगितः सन्, श्रिया सम्पदा रहितां स्वपुरीं अयोध्यां प्रति सम्प्राप्तः, अयोध्यानिकटं प्रापेत्यर्थः ॥ १०६ ॥

**प्रवेश्य मातॄर्न्नगरीं नन्दिग्राममवाप्य[३] सः ।**
**सशत्रुघ्नो वसंस्तत्र[४] पालयामास मेदिनीम् ॥ १०७ ॥**

**(भा.दी.) प्रवेश्ये**ति । सशत्रुघ्नः, शत्रुघ्नेन सहितः, सः भरतः मातॄः नगरीं अयोध्यां प्रवेश्य, स्वयं नन्दिनामको यो ग्रामस्तं अवाप्य तत्र अवसत् । मेदिनीं पालयामास ॥ १०७ ॥

**रामस्य पादुकायुग्मं तत्र सिंहासनेऽर्प्पितम् ।**
**सितातपत्रव्यजनैरुपास्त भरतो व्रती ॥ १०८ ॥**

**(भा.दी.) रामस्ये**ति । तत्र नन्दिग्रामे, सिंहासनं भद्रासनं तस्मिन् अर्पितम्, श्रीरामस्य पादुकयोः युग्मं युगळं तत्, भरतः, व्रतमस्यास्तीति व्रती, फलाहारादिनियमवान् सन् । सितं यदातपत्रं छत्रं तच्च, व्यजनानि तालवृन्तानि तानि च, तैः उपास्त सेवितवान् ॥ १०८ ॥

---

१. **'सानुजो ययौ'**
२. **'स्वां पुरीम्'**
३. **'–मवाप सः'**
४. **'सशत्रुघ्नोऽवसत् तत्र'** इति वि.ती.पाठः ।

**रममाणेन रामेण रमण्या रमणीयया ।**
**वनेषु पुष्पपूर्णेषु शैलेन्द्रे सुखमासितम्[1] ॥ १०९ ॥**

**(भा.दी.) रममाणेने**ति । पुष्पैः पूर्णानि तेषु वनेषु, रमणीयया मनोहरया, रमण्या भार्यया सीतया सह रममाणेन क्रीडता श्रीरामेण, शैलानामिन्द्रस्तस्मिन् चित्रकूटे, सुखं यथा भवति तथा, आसितम्, आस्थितम् ॥ १०९ ॥

**(सं.चं.)** अथ चित्रकूटे रामवृत्तान्तमाह– रममाणेन ॥ १०९ ॥

**तिलकं लोकतिलकः प्रियाया व्यधिताळिके ।**
**पूरयामास पुष्पैश्च कबरीं कमलेक्षणः ॥ ११० ॥**

**(भा.दी.) तिलकमि**ति । लोकेषु तिलकः श्रेष्ठः श्रीरामः, प्रियायाः भार्यायाः अळिकं ललाटं तस्मिन्, तिलकं पुण्ड्रं व्यधित चकार । धाञो लुङ् । कमलवदीक्षणे यस्य स तथा, श्रीरामः, पुष्पाणि चम्पकादिपुष्पाणि तैः कबरीं केशभारं पूरयामास । पूरी आप्यायने[2] लिट् ॥ ११० ॥

**(सं.चं.)** अळिके ललाटे तिलकं व्यधित । 'चकार तिलकं तस्या ललाटे रुचिरं तदा' (९६.१८) इति, 'केसरस्य च पुष्पाणि करेणाऽमृद्य राघवः । अलकं पूरयामास मैथिल्याः प्रीतमानसः' (२०) इति च । एतेनैतमध्यायं प्रक्षिप्तं वदन्तो भ्रान्ता इति सिद्धम् ॥ ११०–१ ॥

**वनमालाविलसितौ लीलाकुवलयान्वितौ ।**
**आनन्दतां यथाकामं[3] दम्पती तौ वनेवने ॥ १११ ॥**

**(भा.दी.) वने**ति । वनमालया विलसितौ विशेषेण शोभमानौ, लीलार्थं क्रीडार्थं ये कुवलये नीलोत्पले ताभ्यामन्वितौ युक्तौ, जाया च पतिश्च दम्पती भार्याभर्तारौ (तौ सीतारामौ), सन् आनन्दो यस्य स तथा

१. **'सुखमास्थितम्'**

२. पूरी आप्यायने इत्यस्य णिचि लिटि रूपम्– **पूरयामासेति** । पॄ पालनपूरणयोरिति धातुपाठं पठन् का.श्री. बभ्राम ।

३. **'अवन्दतां सदानन्दम्'** इति वि.ती.पाठ इति भाति । सन्दिग्धार्थमेतत् । अवन्दतामिति च न स्वरसम् । वन्दतेरात्मनेभाषत्वात् **'अवन्देताम्'** इति पठनीयम् । अथापि न स्वरसोऽर्थः । **'आनन्देतां यथाकामम्'** इति पठन्तोऽपि विभ्रान्ताः । **'अवदेतां यथाकामम्'** इति का.श्री.पाठः । **'अवदेतां स्पष्टमवोचताम् । वद व्यक्तायां वाचि लङि प्रथमपुरुषद्विवचनम् । 'भासमानोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः'** (अ.सू. १.३.४७) **इति भासमानार्थे आत्मनेपदम्'** इति च का.श्री.टीका ।

तं हरिम्, वनेवने अवन्दतां लीलया अस्तुवताम्, वदि अभिवादनस्तुत्योर्लङ् । सन् आनन्दो यथा भवति तथा लीलया अवन्दतां परस्परमस्तुवतामिति वा ॥ १११ ॥

**सदा विनिद्रे देवेशे योगनिद्रामुपेयुषि ।**
**कदाचिदाययौ तत्र वायसो वासवात्मजः ॥ ११२ ॥**

**(भा.दी.) सदे**ति । सदा विगता निद्रा यस्मात् स तथा तस्मिन्, देवेशे श्रीरामे, कदाचित् योगनिद्रां उपेयुषि प्राप्ते सति, तत्र चित्रकूटे, वायसः काकात्मकः, वासवस्य इन्द्रस्य आत्मजः पुत्रः जयन्तनामकः आययौ ॥ ११२ ॥

**(सं.चं.)** योगनिद्रा लीलानिद्रा । वायसरूपो वासवात्मजो जयन्तः ॥ ११२ ॥

**आसुरं भावमाश्रित्य भासुरं जानकीस्तनम् ।**
**तुण्डेन चण्डः पस्पर्श बलिभुग् बलिमाद्य सः ॥ ११३ ॥**

**(भा.दी.) आसुरमि**ति । चण्डः क्रूरः सः बलिभुक् वायसः, बलिर्बलिहरणान्नम्, तं आद्य भक्षयित्वा, असुराणां सम्बन्धी आसुरस्तं भावः स्वभावस्तम्, परदारधर्षणलक्षणमित्यर्थः, आश्रित्य, तुण्डं वदनं तेन, भासुरं प्रकाशशीलम्,जानक्याः स्तनः कुचस्तं पस्पर्श । स्पृश आमर्शने लिट् ॥ ११३ ॥

**(सं.चं.)** बलिभुग् वायसः । बलिं भूतबल्यर्थं बहिर्निक्षिप्तमन्नं आद्य जग्ध्वा । पस्पर्श ददंश ॥११३–५॥

**विभीष्यमाणोऽपि यदा न मुमोच स मैथिलीम्[१] ।**
**तदा तस्मै तृणं किञ्चित् पक्षिणे प्राक्षिपत् प्रभुः ॥ ११४ ॥**

**(भा.दी.) विभीष्ये**ति । प्रभुः श्रीरामः यदा मैथिलीं सः काकः विभीष्यमाणोऽपि न मुमोच, तदा तस्मै पक्षिणे, किञ्चित् तृणं तत्, प्राक्षिपत् चिक्षेप । क्षिप प्रेरणे लङ् ॥ ११४ ॥

**तेन जाज्वल्यमानेन तृणेनासावनुद्रुतः ।**
**त्रिलोकीं विद्रुतः[२] काकः शरणार्थी भयातुरः ॥ ११५ ॥**

१. 'न मुमोच स्तनं बली'
२. 'त्रिलोकीं पर्यगात् काकः'

(**भा.दी.**) **तेने**ति । पुनःपुनरतिशयेन ज्वलतीति जाज्वल्यमानं तेन, तेन तृणेन अनुद्रुतः अनुगतः, अत एव भयातुरः भयेन खिन्नः, असौ काकः, शरणं रक्षणमर्थयितुं शीलमस्यास्तीति तथा सन्, त्रयाणां लोकानां समाहार-स्त्रीलोकी तां विद्रुतः ॥ ११५ ॥

**रामाय नम इत्युक्त्वा ब्रह्मरुद्रादिभिः सुरैः ।**
**कालितः स्वालयात् काको रामविक्रमभीरुभिः ॥ ११६ ॥**

(**भा.दी.**) **रामाये**ति । श्रीरामस्य यो विक्रमः पराक्रमः तस्मात् भीरुभिर्भयशीलैः, ब्रह्मा रुद्रश्च तौ आदी येषां ते तथा तैः, सुरैः श्रीरामाय नम इति उक्त्वा, काकः स्वेषां य आलयो मन्दिरं तस्मात् कालितः निष्कासितः ॥ ११६ ॥

(**सं.चं.**) कालितः निरस्तः ॥ ११६–७ ॥

**नाविन्दच्छरणं[1] दीनस्त्रैलोक्ये ससुरासुरे ।**
**जिजीविषुर्जीवनार्थं[2] तमेव शरणं ययौ ॥ ११७ ॥**

(**भा.दी.**) **ने**ति । दीनः, जीवितुमिच्छति जिजीविषति, जिजीविषतीति जिजीविषुः काकः, सुराश्च असुराश्च तैः सहिते, त्रयश्च ते लोकाश्च त्रिलोकाः, त्रिलोका एव त्रैलोक्यं तस्मिन्, शरणं रक्षकं पुरुषं नाविन्दत् न प्राप्तवान् । विदॢ लाभे लङ् । जीवनायेति जीवनार्थं तमेव श्रीराममेव शरणमरणं तत् ययौ ॥ ११७ ॥

**देवैर्दत्तवरः पक्षी धरान्तरचरः पुरा ।**
**दीनं मां पाहि देवेति पपात हरिपादयोः ॥ ११८ ॥**

(**भा.दी.**) ब्रह्मरुद्रादिलोकगमने मध्ये अमरणे निमित्तं कथयन् शरणागतिप्रकारमाह– **देवैरि**ति । देवैः दत्तः वरः अवध्यत्वादिलक्षणो यस्य स तथा, धराया भूमेर्यदन्तरं मध्यं तत्र चरतीति तथोक्तः, अत एव धरान्तरचरनामकः पक्षी, हे देव, दीनं मां पाहि इति वदन् सन्, हरेः श्रीरामस्य यौ पादौ तयोः पुरा पुरतः पपात ॥ ११८ ॥

(**सं.चं.**) जयन्ते आविष्टोऽसुरः देवैर्दत्तवरः पुरा । 'स वायसानामसुरोऽखिलानां वरादुमेशस्य बभूव चाक्षिगः' इति निर्णयवचनान्मुख्यतो रुद्रदत्तवरः । ननु तर्हि 'शिवदत्तवरः' इत्येव वक्तव्यम् । किमिति 'देवैर्दत्तवरः'

---

१. 'अविन्दन् शरणम्' २. '–विषुर्जीवितार्थम्'

इत्याह? रामायणसङ्गमनार्थमित्यवेहि। तथा हि रामायणे–'देवैर्दत्तवरः पक्षी धरान्तरचरो लघुः' (९६.४५) इति। तेन देवाः शिवश्च समेत्य तस्याखिलवायसानामक्षिगतत्वं वरं ददुरिति ज्ञायते। अत्र 'हरान्तर-चरो लघुः' इति रामायणपाठं पठन्तो भ्रान्ताः। उपरिष्टात् सुन्दरकाण्डेऽपि–'पुत्रः किल स शक्रस्य वायसः पततां वरः। धरान्तरं गतः शीघ्रं पवनस्य गतौ समः' (३८.२७) इति स्वर्गलोकाद् धरान्तरं गत इत्यर्थः। स एव धरान्तरे चरन् धरान्तरचर उक्तः। 'धरान्तरचरनामक' इत्यपि वदन्ति। किम्मूलं तद्वचनमिति मृग्यम् ॥ ११८ ॥

**न जघान दयालुस्तं तस्य[१] नेत्रमशातयत्।**
**ततः प्रभृति[२] सर्वेऽपि काका एकाक्षतां ययुः ॥ ११९ ॥**

**(भा.दी.)** नेति। दयालुः दयाशीलः श्रीरामः तं काकं न जघान। हन हिंसागत्योर्लिट्। तस्य काकस्य नेत्रं चक्षुस्तत् अशातयत् अपातयत्। शो तनूकरणे लङ्[३]। ततश्चक्षुर्निपातनात् प्रभृति आरभ्य, सर्वेऽपि काकाः, एकं अक्षि यस्य स एकाक्षस्तस्य भावस्तत्ता, तां ययुः। श्रीरामः वर्तमानकाकस्याक्षिपातेन भविष्यत्-काकानामप्यक्षि कुरङ्गनामकदैत्यस्याऽवासस्थानभूतं मा भूदिति भविष्यतामप्येकाक्षत्वमचिन्त्यशक्त्या चकारेति भावः ॥ ११९ ॥

**(सं.चं.)** एकं नेत्रमशातयत् नाशयामास। 'शद्लृ शातने' इत्यस्य णिचि दस्य तकारादेशे रूपम् ॥११९॥

**खलावलेपखण्डनस्थिरावतारविभ्रमः।**
**अवेक्षते स्म जानकीमुखेन्दुमिन्दिरापतिः ॥ १२० ॥**

**(भा.दी.)** खलेति। खलावलेपखण्डनस्थिरावतारविभ्रमः। खलानां दुष्टानामवलेपो गर्वस्तस्य खण्डनं तस्मिन् स्थिरः अवतारस्य विभ्रमो विलासो यस्य स तथा, इन्दिरापतिः श्रीरामः, जानक्या यन्मुखं तदेवेन्दुस्तं अवेक्षते स्म ऐक्षत। ईक्ष दर्शनाङ्कनयोर्लट् ॥ १२० ॥

**(सं.चं.)** अथ प्रमाणिकया काकाक्षिपातनकथामुपसंहरति। खलस्य काकासुरस्य सर्वेषां वा खलानां योऽव-लेपोऽहङ्कारस्तस्य खण्डने स्थिरोऽवतारविभ्रमो यस्य ॥ १२० ॥

१. **'दयालुस्तमस्य'** २. **'तदाप्रभृति'**। **'तदा स काल एव प्रभृतिरादिर्यस्मिन् कर्मणि तत् तदाप्रभृतिः'** इति का.श्री.।

३. **'शो तनूकरणे'** इत्यस्य णिचि लङि **'अशाययत्'** इति रूपं मन्यन्ते पाणिनीयाः। **'शा-च्छा-सा-ह्वा-व्या-वे-पां युक्'** (अ.सू.७.३.३७) इति शयतेर्णौ युगागममाह हि पाणिनिः। तेन **'शद्लृ शातने'** इत्यस्येदं रूपमिति पाणिनिनये स्थितम् **'शदेरगतौ तः'** (७.३.४२) इति।

सीतामुखाब्जस्मितभानुभानुः सत्कैरवानन्दनचन्द्रभानुः[१] ।
रक्षस्तृणौघक्षपणस्फुलिङ्गो रराज रामस्य कटाक्षमोक्षः ॥ १२१ ॥

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**अयोद्ध्याकाण्डे द्वादशः सर्गः ॥**

—०—

**(भा.दी.) सीते**ति । सीताया यन्मुखम्, तदेवाब्जम्, तस्य स्मितं विकासः, तत्करणे भानोः सूर्यस्य भानुरिव किरण इव भानुः, किरणायित इत्यर्थः । सन्तः सज्जना एव कैरवाणि उत्पलानि, तेषां आनन्दनं सन्तोषकरणं तस्मिन्, चन्द्रस्य भानुरिव मरीचिरिव भानुः, चन्द्रिकायित इत्यर्थः । रक्षांसि तृणानीव तेषां ओघः समूहः, तस्य क्षपणं विनाशः, तस्मिन् स्फुलिङ्गइव स्फुलिङ्गः, वह्निकणायित इत्यर्थः । श्रीरामस्य कटाक्षोऽपाङ्गदर्शनम्, तस्य मोक्षः विकासः रराज विरेजे । राजृ दीप्तौ लिट् ॥ १२१ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां**
**भावार्थदीपिकायामयोध्याकाण्डे द्वादशः सर्गः ॥**

—०—

**(सं.चं.)** उपजात्याऽयोध्याकाण्डकथामुपसंहरति– **सीते**ति । सीतामुखाब्जविकसने भानोः सूर्यस्य भानुः किरण इव । सन्तः कैरवाणि कुमुदानीव । 'ನೈದಿಲೆ' इति भाषायाम् । तेषामानन्दने चन्द्रकिरण इव । रक्षांसि तृणौघा इव । तेषां क्षपणे स्फुलिङ्गोऽग्निकण इव रामस्य कटाक्षमोक्षः ॥ १२१ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामयोध्याकाण्डे**
**द्वादशसर्गविवरणम् ॥**

—०—

## अयोध्याकाण्डं समाप्तम्

[आदितः श्लोकाः– १००३+१२१=११२४]

[अयोध्याकाण्डे श्लोकाः– ७०२]

---

१. '–वानन्ददचन्द्रभानुः'

## प्रथमः सर्ग्गः

**पुरा पुलस्त्यः परमेष्ठिपुत्रस्तन्वंस्तपो मेरुगिरेः समीपे ।**
**विलोभयन्तीर्म्मुहुरेत्य कन्या[१] विलोक्य किञ्चित् कुपितो बभाषे ॥ १ ॥**

**(भा.दी.)** श्रीरामचन्द्रस्य रावणहन्तृत्वादिगुणवर्णनोपयुक्तत्वेन रावणोत्पत्त्यादिकं वक्तुं पीठिकामारचयति– **पुरा पुलस्त्य** इत्यादिना । पुरा, मेरुश्चासौ गिरिश्च, तस्य समीपं पार्श्वं तस्मिन्, तपः तन्वन् कुर्वाणः, परमेष्ठिनश्चतुर्मुखस्य पुत्रः पुलस्त्यः, मुहुः एत्य स्वसमीपमागत्य, विलोभयन्तीः विलोभनं कुर्वन्तीः, मनश्चाञ्चल्यं कुर्वन्तीरित्यर्थः, कन्याः विलोक्य किञ्चित् कुपितः सन् बभाषे ॥ १ ॥

**(सं.चं.)** अथारण्यकाण्डकथा प्रकृता । तत्र प्रथमं प्रसक्तां रामायणस्योत्तरकाण्डे कथितां रावणकथां प्रथमसर्गे प्रस्तौति–**पुरेति** । कुपितइव बभाषे, यथा ताः कन्यकाः श्रूयासुः । श्रुत्वा च पुनर्नेयासुः । 'पुरा कृतयुगे राम प्रजापतिसमः प्रभुः । पुलस्त्यो नाम ब्रह्मर्षिः साक्षादिव पितामहः'(उ.कां.२.४) इति, 'स तु धर्मप्रसङ्गेन मेरोः पार्श्वे महागिरेः । तृणबिन्द्वाश्रमं गत्वा न्यवसन्मुनिपुङ्गवः' (६) इति च । कथं पुलस्त्यः? सदा पुरे हृदये स्त्यायति भगवानस्येति । तमिमं पुरस्त्यं सन्तं पुलस्त्यमाचक्षते परोक्षप्रियाः । मुहुर्मुहुरेत्य विलोभयन्तीः । 'देवपन्नगकन्याश्च राजर्षितनयाश्च याः । क्रीडन्त्योऽप्सरसश्चैव तं देशमुपपेदिरे' (९) इति च । उत्तरार्धे द्वितीयाक्षरप्रासः उपजातिप्रायः सर्गः । यत्र विशेषस्तत्रोच्यते ॥ १ ॥

**या कन्यका मामवलोकयेत सा गर्भिणी स्यादिति वाक्यबाणात् ।**
**कन्या न भीताः[२] पुनरत्र जग्मुर्विवेद नेदं तृणबिन्दुपुत्री ॥ २ ॥**

---

१. **'विलोभयन्तीं मुहुरेत्य कन्याम्'**

२. **'गर्भिणीत्वे पुनरन्यपारिग्रहो नस्यादिति भीताः'** इति का.श्री. ।

**(भा.दी.)** येति। या कन्यका मां अवलोकयेत पश्येत्। लोकृ दर्शने लिङ्। सा कन्या, गर्भोऽस्या अस्तीति गर्भिणी स्यात्, इति वाक्यमेव बाणस्तस्मात् भीताः कन्याः, अत्र अस्मिन्नाश्रमे पुनः न जग्मुः। तृणबिन्दोः तृणबिन्दुनामकस्य राज्ञः पुत्री, इदं एवं शापप्रदानम्, न विवेद न वेत्ति स्म ॥ २ ॥

**(सं.चं.)** वाक्यबाणात्, कामबाणादप्युग्रात्, भीताः कन्या न पुनरत्र जग्मुः। यस्येदमाश्रमपदं तस्य तृणबिन्दो राज्ञः पुत्री तु तथा भवितव्यतया नेदं विवेद विदाञ्चकार। वेदेति लट्। विवेदेति लिट्। कथं तृणबिन्दुः? क्लेदनशीलो बिन्दुरुच्यते। 'विन्दुरिच्छुः' (अ.सू.३.२.१६९) इति हि पाणिनिः। तृणमपि तमृते न चलतीति तृणेऽपि भगवद्वेदनशीलस्तृणविन्दुः। तमिमं तृणविन्दुं सन्तं तृणबिन्दुमाचक्षते परोक्षप्रियाः ॥ २ ॥

**सा शुद्धभावाऽपि नरेन्द्रकन्या[1] दृष्ट्वा कदाचिन्मुनिमाप गर्भम्।**
**प्रसाद्य तं प्राप्य च तत्प्रियात्वं सूते स्म सा विश्रवसं कुमारम् ॥ ३ ॥**

**(भा.दी.)** सेति। नरेन्द्रस्य तृणबिन्दोः कन्या सा, शुद्धः भावः स्वभावो यस्याः सा तथाऽपि, कदाचित् मुनिं पुलस्त्यं दृष्ट्वा गर्भं आप। तस्य पुलस्त्यस्य प्रिया भार्या तस्या भावस्तत्त्वं तत् प्राप्य, पितृप्रदानपूर्वकमाप्य, सा तं पुलस्त्यं सेवया प्रसाद्य प्रसन्नीकृत्य, विश्रवसं विश्रवोनामकं कुमारं पुत्रं सूते स्म प्रसूतवती। षूञ् प्राणिगर्भविमोचने लट्। तृणबिन्दुर्हि स्वपुत्रीं गर्भिणीं दृष्ट्वा किमिदमिति पृष्टे सति मयाऽत्र निमित्तं न ज्ञायते किन्तु सखीजनमन्वेष्टुं पुलस्त्याश्रमं प्रति गताऽस्मीत्युक्ते समाधिना तच्छापं ज्ञात्वा तदाश्रमं प्रति गत्वा तनयां तस्मा एव प्रदत्तवानिति हि रामायणे प्रसिद्धम् ॥ ३ ॥

**(सं.चं.)** नरेन्द्रो राजर्षिस्तृणबिन्दुः। मुनिं पुलस्त्यं दृष्ट्वा। तृणबिन्दुद्वारा तं प्रसाद्य। भागवते त्वन्यथा पठ्यते–'तृणबिन्दुर्महीपतिः। यं भेजेऽलम्बुसा देवी भजनीयगुणालयम्। वराप्सरा यतः पुत्राः कन्या चैळिबिळाऽभवत्। यस्यामुत्पादयामास विश्रवाश्च धनाधिपम्' (९.३.३०–२) इति। चतुर्थे च– 'पुलस्त्योऽजनयत् पत्न्यामगस्त्यं च हविर्भुजि। सोऽन्यजन्मनि दभ्रोऽग्निर्विश्रवाश्च महातपाः। तस्य यक्षपतिर्देवः कुबेरस्त्विळाबिलासुतः' (४.१.३६–७) इति। तदेतत् सर्वमधरोत्तरम्। यद् भागवतानुसारेण तृणबिन्दुतनया विश्रवसो जननी। रामायणानुसारेण भार्या। कथमिदं सङ्गम्यते? किमिळिबिळा माता कुबेरस्य? आहोस्वित् पितामही? अत्र त्रयी गतिः- कल्पभेदेन व्यवस्थेत्येका। मन्वन्तरभेदेनेत्यपरा। मोहनाय पुंव्यत्यासेन कथावैरूप्यमिति तृतीया। तदुक्तं भागवततात्पर्ये–'सृष्टिभेदाद् विरूपं च तथा पञ्चोत्तरं शतम्। वैरूप्यमन्यद्

१. 'नरेन्द्रपुत्री'

विज्ञेयं तात्पर्यान्मोहनाय वा' (४.१.३३) इति । 'कल्पादिभेदतः । कथाभेदस्तु विज्ञेयः' इति च तत्रैव । सृष्टिभेदादिति । मन्वन्तरभेदेन कल्पभेदेन च द्विविधः सृष्टिभेदः । अत्र पुनर्वैवस्वतमन्वन्तरीयैव कथोच्यत इति न मन्वन्तरभेदात् कथावैरूप्यम् । स्यादपि कल्पभेदात् । किन्तु कल्पनामात्रमेतद् । गुह्यभाषामयं शतस्य रीतीनां मध्ये रीत्यन्तरमिदमिति तु युक्तं भाति । तथाचायं भागवतार्थः यस्यामिति जन्यत्वं सप्तम्यर्थः । सीतायां कुशलवौ बभूवतुरितिवत् । यस्यां जात इत्येतत् । तथाच यस्यामिळिबिळायां जातः विश्रवाः धनाधिपमुत्पादयामासेत्यर्थः । मोहनाय चेदृशी कथनरीतिः पुराणेषु भवति । पूर्वम्–'कुबेरस्त्विळिबिळासुतः' इत्यत्रापि सुतस्य सुतः प्रीत्यतिशयात् सुत इत्युपचर्यते । अत एव कुबेर ऐळिबिळ इत्युच्यते, यथा रावणः पौलस्त्य इति । भारद्वाजपुत्र्या अपि इळिबिळेति नामान्तरं वा । कथं विश्रवाः? विशिष्टं वेदश्रवणं मातुर्येन सः । तथाहि पुलस्त्यवचनं रामायणे–'यस्मात्तु विश्रुतो वेदस्त्वयेहाध्ययतो मम । तस्मात् स विश्रवा नाम भविष्यति न संशयः' (२.३२) इति । तथाच विश्रवण एव विश्रवाः । विश्रवणस्यापत्यं वैश्रवणः कुबेरः । विश्रवसोऽपत्यमिति विग्रहणे सस्य णः ॥ ३ ॥

**तस्मात् सुतं वैश्रवणं च[१] भारद्वाजस्य पुत्री सुषुवे सुगात्री ।**
**ब्रह्मप्रसादाद् दिगधीश्वरत्वं यः पुष्पकाख्यं च विमानमाप ॥ ४ ॥**

**(भा.दी.) तस्मा**दिति । सु शोभनं गात्रं शरीरं यस्याः सा तथा, भारद्वाजस्य भारद्वाजनामकस्य ऋषेः पुत्री, तस्मात् विश्रवसः वैश्रवणं वैश्रवणनामकं सुतं सुषुवे । यः वैश्रवणः ब्रह्मणः प्रसादोऽनुग्रहस्तस्मात् दिशोऽधीश्वरो दिगधीश्वरस्तस्य भावस्तत्त्वं तत्, उत्तरदिक्पालकत्वमित्यर्थः, पुष्पकमिति आख्या यस्य तत्तथोक्तं तत् विमानं च चतुर्मुखात् आप । आप्लृ व्याप्तौ लिट् । ननु भागवते पुलस्त्यभार्यायां हविर्भुजि विश्रवा उत्पन्नस्तस्माच्च तृणबिन्दुपुत्र्यामिळिविळायां वैश्रवण उत्पन्न इति प्रतिपादनाद् विरोध इति चेन्न । अस्य ग्रन्थस्य वाल्मीकीयरामायाणानुसारेण प्रवृत्तत्वेनाविरोधात् । मुनिमतयोः परस्परविरोधेनाप्रामाण्यस्य वक्तुमनुचितत्वादेव कल्पभेदादिकमनुसृत्य विरोधः परिहरणीयः । यद्वा 'सृष्टिभेदाद् विरूपं तु कथापञ्चोत्तरं शतम् । वैरूप्यमन्यद् विज्ञेयं तात्पर्यान्मोहनाय हि' इत्याचार्योक्त्यनुसारेणैव विरोधःपरिहरणीयइति ॥ ४ ॥

**(सं.चं.)** वैश्रवणं कुबेरम् । भारद्वाजस्य पुत्री देववर्णिनी । तथाहि रामायणे–'ज्ञात्वा तस्य तु तद्वृत्तं भारद्वाजो महामुनिः । ददौ विश्रवसे भार्यां स्वसुतां देववर्णिनीम्' (उ.का.३.३) इति । सुगात्री । 'अङ्गगात्रकण्ठेभ्य

१. **'–वणं तु भार–'**

इति वक्तव्यम्' इति वार्तिकम् (अ.सू.४.१.५४)। तेन सुगात्री सुगात्रा वा। तपसा तोषितस्य ब्रह्मणः प्रसादात्। इन्द्रवज्रा छन्दः ॥ ४ ॥

**हेतेर्विधात्रा विहितस्य विद्युत्केशः सुतस्तस्य सुकेश आसीत्।**
**त्रयोऽस्य[१] पुत्राः किल माल्यवांश्च सुमालिमाल्याह्वयकौ च घोराः ॥ ५ ॥**

**(भा.दी.) हेतेरि**ति। विधात्रा ब्रह्मणा विहितस्य निर्मितस्य हेतेः हेतिनामकस्य राक्षसस्य विद्युत्केशः विद्युत्केशनामकः सुतः आसीत्। तस्य विद्युत्केशस्य सुकेशः सुकेशनामकः सुतः आसीत्। अस्य सुकेशस्य माल्यवान् माल्यवान्नामकश्च सुमालीति मालीति च आह्वयौ नामनी ययोस्तौ तथोक्तौ इति त्रयः घोराः पुत्राः आसन् किल ॥ ५ ॥

**(सं.चं.)** विधात्रा विहितस्य सृष्टस्य हेतेः। 'मनोर्वैवस्वतस्यादावथर्वा ब्रह्मणोऽजनि। मित्रश्च वरुणश्चाथो प्रहेतिर्हेतिरेव च' इति ब्रह्माण्डवचनमाथर्वणभाष्ये। 'प्रहेतिर्हेतिश्चेति राक्षसौ। यौ सूर्यस्य रथचक्रपथप्रेरणया नक्षत्रतिथीनां वृद्धिह्रासनिमित्तभूतौ' इति वामनपण्डितः। सोऽयं हेती रविस्थितेन नारायणेन प्रेरितः कीचकं निपातयामास विराटसभायाम्। तस्य भार्यायां कालभगिन्यां विद्युत्केशः सुत आसीत्। स सन्ध्यातनयां सालकटङ्कटामुपयेमे। तस्यामस्य सुकेशः सुत आसीत्। ग्रामणीर्नाम गन्धर्वः स्वतनयां देववतीं सुकेशाय ददौ। देववत्यां सुकेशस्य त्रयः पुत्रा बभूवुः– माल्यवान् सुमाली माली चेति। त्रयोऽपि घोराः। 'त्रयो मन्त्रा इवात्युग्रास्त्रयो घोरा इवाऽमयाः' (उ.कां.५.८८) इति च ॥ ५ ॥

**ब्रह्माहितैर्ब्रह्मवरादवध्यैर्लङ्कालयैरुत्कटपुत्रपूगैः।**
**त्रिभिस्त्रिलोकीक्षपणैः प्रभग्नाः प्रायन्त शर्वं शरणं सुरेन्द्राः ॥ ६ ॥**

**(भा.दी.) ब्रह्मे**ति। ब्रह्मणां ब्राह्मणानां अहितैरत्यन्तं वैरिभिः, ब्रह्मणश्चतुर्मुखस्य यो वरस्तस्मात् अवध्यैः, लङ्का आलय आवास येषां ते तथा तैः, उत्कटाः मत्ताः पुत्राणां पूगाः समूहा येषां ते तथा तैः। 'उत्कटो मत्त उद्भटे' इति वैजयन्ती। त्रिलोक्याः क्षपणा विनाशकास्तैः। त्रिभिः माल्यवत्सुमालिमालिभिः प्रभग्नाः पराजिताः सुरेन्द्राः देवश्रेष्ठाः इन्द्रादयः शर्वं रुद्रं शरणमरणं तत् प्रायन्त प्रापुः। अय गतौ लङ् ॥ ६ ॥

**(सं.चं.)** तपस्तप्त्वा तोषितस्य ब्रह्मणो वरादवध्यैः, ब्रह्माहितैर्ब्रह्मद्वेषिभिः, ब्रह्मेति वेदा वेदज्ञाश्च। मयदत्तलङ्कालयैः, स्वपुत्रपूगयुक्तैः। नर्मदा नाम गन्धर्वी बभूव। तस्यास्तिस्रः पुत्र्य आसुः– सुन्दरी केतुमती

१. 'त्रयोऽत्र पुत्राः'

वसुधा चेति । वसुदेति क्वचित् । माल्यवान् सुन्दरीमुपयेमे । सुमाली केतुमतीम् । माली च वसुधाम् । सुन्दर्यां सप्त माल्यवतः पुत्राः– वज्रमुष्टिर्विरूपाक्षः दुर्मुखः सुप्तघ्नो यज्ञकोपः मत्त उन्मत्तश्च । एका च पुत्री– अनला नाम । केतुमत्यां सुमालिनो दश पुत्राः– प्रहस्तः अकम्पनः विकटः कालकार्मुकः (कालिकामुख इति क्वचित्) धूम्राक्षः दण्डः सुपार्श्वः संह्रादिः प्रघसः भासकर्णश्चेति । तिस्रः कन्याः– राका, पुष्पोत्कटापराख्या कैकसी, कुम्भीनस्यपराख्या मालिनी च । वसुधायां मालिनश्चत्वारः पुत्राः– अनलः अनिलः हरिः सम्पातिश्चेति । एते चत्वारोऽपि विभीषणामात्या अभवन् । अन्ये उत्कटाः क्रूरस्वभावाः । तदेतदाह– उत्कटपुत्रपूगैरिति । पुत्र्यश्च पुत्राश्च पुत्राः । तेषां पूगैः ॥ ६ ॥

**तानब्रवीत् सुस्मितमिन्दुमौलिर्म्मया न वद्ध्या रजनीचरास्ते ।**
**विष्णुं शरण्यं शरणं व्रजामः[१] स्वामी[२] स नः शर्म्म विधास्यतीति ॥ ७ ॥**

**(भा.दी.) तानि**ति । इन्दुर्मौलौ यस्य स तथा रुद्रः, रजन्यां रात्रौ चरन्तीति रजनीचरा राक्षसा इत्यर्थः, ते माल्यवत्प्रभृतयः, मया वध्याः वधार्हाः न, शरण्यं शरणार्हं विष्णुं शरणमरणं व्रजामः, नः स्वामी सः हरिः, शर्म सुखम्, विधास्यति करिष्यति इति । तान् सुरेन्द्रान् सुशोभनं स्मितं यथा भवति तथा अब्रवीत् ॥ ७ ॥

**(सं.चं.)** तानब्रवीत् । 'अहं तान्न हनिष्यामि मयाऽवध्या हि तेऽसुराः । गच्छध्वं शरणं विष्णुं हनिष्यति स तान् प्रभुः' (६.११०,११) इति च । मया न वध्याः । ब्रह्मवरादवध्या हि ते ॥ ७ ॥

**दुग्धाब्धिशय्यं शरणं प्रपन्नाः प्रोचुः सुराः प्राञ्जलयः प्रणम्य ।**
**सुकेशसूनून् दमयायि नाथ[३] लोकान् सपालान् परिपालयेति ॥ ८ ॥**

**(भा.दी.) दुग्धाब्धी**ति । दुग्धाब्धिः शय्या यस्य स तथा तं श्रीहरिं शरणमरणं तत् प्रपन्नाः प्राप्ताः सुराः रुद्रादयः श्रीहरिं प्रणम्य प्राञ्जलयः सन्तः, अयि नाथ, हे नाथ श्रीहरे, सुकेशसूनून् माल्यवत्प्रभृतीन् दमय

१. **'शरणं प्रयामः'**

२. **'स्वामी हि नः' । 'स्वं (ऐश्वर्यं) अस्यास्तीति स्वामी । 'स्वामिन्नैश्वर्ये'** (अ.सू.५.२.१२६) **इति निपातनात् साधुः । तस्य स्वामित्वादस्माकं भृत्यत्वात् अस्मदापत्परिहरणं तेन कर्तव्यम् । 'स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखी भवति' इत्यभियुक्तोक्तेः'** इति का.श्री. ।

३. **'दमयाधिनाथ'**

विनाशाय । दमु उपशमे लोट् । पालयन्तीति पालाः इन्द्रादयः, तैः सहितान् लोकान् परिपालय । इति प्रोचुः ॥ ८ ॥

**(सं.चं.)** शय्यतेऽत्रेति शय्या शयनस्थानम् । सुकेशसूनून् सानुबन्धान् दमय । दमयित्वा लोकान् लोकपालांश्च परिपालयेति प्रोचुः ॥ ८ ॥

**निरीक्ष्य[१] देवव्यसनं[२] स देवो युयुत्सुरायाद् विहगेन्द्रवाहः ।**
**ते राक्षसा रूक्षगणा[३] अवापुस्तं सिन्धुरेन्द्राइव सिंहराजम् ॥ ९ ॥**

**(भा.दी.)** **निरीक्ष्ये**ति । सः देवः श्रीहरिः देवानां व्यसनं विपत् तत् । 'व्यसनं रक्तिविपदोः' इति वैजयन्ती । निरीक्ष्य, योद्धुमिच्छति युयुत्सति, युयुत्सतीति युयुत्सुः सन्, विहगेन्द्रः गरुडः, सः वाहो वाहनं यस्य स तथा सन्, आयात् युद्धार्थं आजगाम । रूक्षः क्रूरो गणः सैन्यसमूहो येषां ते तथा ते राक्षसाः, तं श्रीनारायणम्, सिंहानां राजा सिंहराजस्तम्, सिंहश्रेष्ठमित्यर्थः, सिन्धुराणां गजानामिन्द्रा इव, 'वारणेभरदिनः सामोद्भवः सिन्धुरः' इति हलायुधः, अवापुः ॥ ९ ॥

**(सं.चं.)** रूक्षगणा रूक्षसेनाः । सिन्धुरेन्द्राः गजेन्द्राः । 'कुम्भी कुञ्जरवारणेभरदिनः सामोद्भवः सिन्धुरः' इत्यभिधानम् । 'सिंहेन द्विरदा यथा' (७.२०) इति च ॥ ९ ॥

**स शङ्खचक्री विबभौ विहङ्गे पिशङ्गवासाः प्रविकृष्टशार्ङ्गः ।**
**गोवर्षवानिन्दुरवी दधानो[४] गिरौ तटित्वानिव सेन्द्रचापः ॥ १० ॥**

**(भा.दी.)** **स** इति । शङ्खश्च चक्रं च ते अस्य स्त इति तथोक्तः, पिशङ्गं पीतं वासो यस्य स तथा, प्रविकृष्टं शार्ङ्गं यस्य स तथा, गवां शराणां यद्वर्षं तदस्यास्तीति तथा, सः श्रीनारायणः, विहङ्गे गरुडे, इन्दुरवी चन्द्रसूर्यौ दधानः, गोवर्षवान् जलवर्षवान्, इन्द्रचापेन सहितः, गिरौ मेरुपर्वते तटित्वानिव मेघ इव विबभौ । गरुडस्य मेरोश्च सुवर्णवर्णत्वात्, श्रीहरेः मेघस्य च श्यामळवर्णत्वात्, सूर्यचन्द्रेन्द्रचापानां चक्रशङ्खशार्ङ्गानाम्, तटितः पीतवाससश्च सादृश्यादिति भावः ॥ १० ॥

---

१. 'समीक्ष्य देव–'
२. 'देवव्यसनं देवविपदम्, स्थानभ्रंशे वा । 'व्यसनं विपदि भ्रंशे' इत्यमरः' इति का.श्री. ।
३. 'रूक्षगुणा–'
४. 'अभूतोपमेयम् । एकदा इन्दुरव्योः मेघस्योपरि अवस्थानासम्भवात् । 'उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम्' इतिवत् । 'सहोदयेतामुदयाद्रिशृङ्गे रवी यदि द्वौ' इतिवत्' इति का.श्री. ।

**(सं.चं.)** भगवान् तटित्वानिव सनीरनीरद इव विबभौ । विहङ्गो गरुडो गिरिरिव । पिशङ्गं ईषद्रक्तपीतं कनकवर्णं वासः पीताम्बरं तटिदिव । प्रविकृष्टं कृतज्याबन्धं शार्ङ्गं चापः इन्द्रचाप इव । गवां बाणानां वर्षो निरन्तरक्षेपः गवां जलानां धारासम्पातइव । स्वयं भगवान् नीलमेघइव । 'गौर्नाऽऽदित्ये बलीवर्दे किरण-क्रतुभेदयोः । स्त्री तु स्याद् दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बा-णलोमसु' इति केशवः । अथचाभूतोपमानमाह– शङ्खचक्री शङ्खचक्राभ्यां सहितः स हरिः इन्दुरवी दधानो मेघ इव विचित्रं बभाविति । पाञ्चजन्य इन्दुरिव । सुदर्शनो रविरिव । 'सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ' इति हि तं स्तुवन्ति । 'सुपर्णं गिरिसङ्काशं वैनतेयमथाऽस्थितः । राक्षसानामभावाय ययौ तूर्णतरं प्रभुः । सुपर्णपृष्ठे स बभौ श्यामः पीताम्बरो हरिः । काञ्चनस्य गिरेः पृष्ठे सतटित् तोयदो यथा' (६.६६–७) इति च ॥ १० ॥

**अवाप्य नेशुः शलभा यथाऽग्निं[1] यथाऽग्नयः पूर्णमहो महाब्धिम् ।**
**यथाऽब्धयः सम्प्रळयार्कतापं तथा महेशं पिशिताशिनस्ते[2] ॥ ११ ॥**

**(भा.दी.) अवाप्येति** । पिशितं मांसमत्तुं शीलमेषामस्तीति पिशिताशिनः राक्षसाः, ते माल्यवत्प्रभृतयः, महांश्चासौ ईशश्च महेशः, तं श्रीनारायणं अवाप्य, अग्निं प्राप्य शलभाः पतङ्गास्त इव, पूर्णं महांश्चासौ अब्धिश्च तं प्राप्य अग्नयः यथा, अब्धयः सम्प्रळये महाप्रळये ये अर्काः[3] द्वादशादित्यास्तेषां यस्तापस्तं प्राप्य यथा तथा नेशुः नष्टा बभूवुः । णश अदर्शने लिट् । उपेन्द्रवज्रा च्छन्दः ॥ ११ ॥

**(सं.चं.)** महेशं नारायणमवाप्य ते पिशिताशिनो नेशुः । ये पिशितं मांसमश्नन्ति राक्षसाः । 'पिशितं मांसं पिशिता मांसिका' इति हैमः । यथाऽग्निमवाप्य शलभाः पतङ्गा नश्यन्ति । यथा पूर्णमुद्वेलं महाब्धि-मवाप्याग्नयो नश्यन्ति । यथा प्रळयकालीनस्यार्कस्य शोषकं तापमवाप्याब्धयोऽपि नश्यन्ति शुष्यन्ति । मालोपमेयम् । अहो इति भगवतो दुष्टसंहारलीलां स्मरन् विस्मयते । उपेन्द्रवज्रा छन्दः ॥ ११ ॥

---

१. **'शलभा इवाग्निम्'** इत्यपि वि.ती.पाठः स्यात् ।

२. **'पिशिताशनास्ते' 'शलभतुल्याः केचन पिशिताशनाः राक्षसाः अग्नितुल्यं महेशमवाप्य नेशुः । अग्नितुल्याः केचन पूर्णमहाब्धितुल्यं महेशमवाप्य नेशुः । अब्धितुल्याः केचन प्रळयार्कतापतुल्यं महेशमवाप्य नेशुः । महेशोऽपि तत्तद्बलानुसारेण स्वबलं प्रकटितवानिति भावः'** इति का.श्री ।

३. चिन्त्यमिदम् । आदित्या अदितिपुत्रा द्वादश भवन्ति । तेषु अर्कः भास्वानेकः । न ह्यर्काः क्वापि द्वादश भवन्ति ।

**माली बली माधवमभ्युपेत्य विक्रान्तिमाक्रान्तसुरां ततान ।**
**अपातयत् तालसमस्य तस्य च्छित्त्वा[१] शिरः पक्वफलं यथेशः ॥ १२ ॥**

**(भा.दी.) माली**ति । बलमस्यास्तीति बली मालिनामकः माधवं श्रीहरिं अभ्युपेत्य, आक्रान्ताः निराकृताः सुराः यया सा तथोक्ता, तां विक्रान्तिं विक्रमं ततान चकार । तनु विस्तारे लिट् । ईशः श्रीहरिः तालस्य तालवृक्षस्य समः तस्य, अत्युन्नतस्येत्यर्थः, तस्य मालिनः शिरः, पक्वं च तत् फलं च तत् यथा तथा, च्छित्वा अपातयत् ॥ १२ ॥

**(सं.चं.)** तालसमस्य तस्य पक्वतालफलसमं शिरः चक्रेण च्छित्वा ॥ १२ ॥

**सुमालिना माल्यवता च साकं पराद्रुतान् वीक्ष्य परान् परात्मा ।**
**सुरामृताब्धिं[२] प्रतिभासुरं तं मुखेन्दुनाऽऽनन्दयदिन्दिरेशः ॥ १३ ॥**

**(भा.दी.) सुमालिने**ति । परश्चासौ आत्मा परात्मा सर्वोत्तमः, इन्दिरेशः श्रीहरिः, सुमालिना सुमालिनामकेन, माल्यवता माल्यवन्नामकेन च साकं सार्धम्, परान् शत्रून् राक्षसान् पराद्रुतान् वीक्ष्य, प्रतिभासुरं भासनशीलं तम्, सुरा एवामृताब्धिस्तम्, सुराख्यक्षीरसमुद्रमित्यर्थः, मुखमेवेन्दुस्तेन, आनन्दयत् सन्तोषयामास ॥१३॥

**(सं.चं.)** घोरं प्रयुध्य पराजितेन सुमालिना माल्यवता च साकं पराद्रुतान् परान् वीक्ष्य इन्दिरेशः, प्रतिभासुरं विजयश्रिया प्रतिष्ठया नृत्यत्तरङ्गमुदधिमिव । भासमानं सुराख्यममृताब्धिं मुखाख्येनेन्दुनाऽऽनन्दयत् । उपेन्द्रवज्रा च्छन्दः ॥ १३ ॥

**ततः सुमाली सुरसूदनः स्याद् दौहित्र इत्युग्रमनोरथेन ।**
**रसातळात् प्राप्य रसां निनाय पुलस्त्यपुत्रान्तिकमात्मपुत्रीम्॥ १४ ॥**

**(भा.दी.) तत** इति । ततः पराभवानन्तरं सुमाली सुमालिनामकः, सुरान् सूदयतीति सुरसूदनः, देवविनाशक इत्यर्थः, दुहितुः पुत्र्या अपत्यं पुमान् दौहित्रः, स्याद् भवेत्, इति उग्रः क्रूरो मनोरथस्तेन रसातळं रसातळलोकस्तस्मात् रसां भूमिम् । 'रसा विश्वम्भरा स्थिरा' इत्यमरः । प्राप्य, आत्मनः पुत्रीम्, पुलस्त्यस्य पुत्रो विश्रवाः, तस्यान्तिकं समीपं तत् निनाय प्रेषितवान् ॥ १४ ॥

---

१. **'तस्य कृत्त्वा शिरः'** । **'कृत्त्वा छित्वा'** इति वि.भू. । कृती छेदने इति धातोः क्त्वायोगे कर्तित्वेति रूपम् । न कृत्त्वेति ।

२. **'–ताब्धिं परिभासुरस्तम्'** । **'परिभासुरः षोडशकलोपेतचन्द्रवत् प्रकाशमानः'** इति का.श्री. ।

**(सं.चं.)** सुरसूदनो देवानामन्तकः । विष्णुना पराजितास्ते लङ्कां त्यक्त्वा रसातळे न्यूषुः । 'अशक्नुवन्तस्ते विष्णुं प्रतियोद्धुं भयार्दिताः । त्यक्त्वा लङ्कां गता वस्तुं पाताळं सहपत्नयः'(८.२२) इति च । पाताळमिति अधोभुवनस्य सामान्यं नाम । विशिष्य सप्तमस्य । रसातळमिति च समष्ट्याऽधोभुवनमात्रमुच्यते । रसाया भूमेस्तळमधोभाग इति । व्यष्ट्या तु षष्ठम्–अतळं वितळं सुतळं तळातळं महातळं रसातळमिति । सोऽयमसुराणां निवासः । तथाहि भागवते–'रसातळे दैतेया दानवा पणयो नाम निवातकवचाः कालकेया हिरण्यपुरवासिन इति विबुधप्रत्यनीका निवसन्ति' (५.२३.३०) इति । रसां पृथिवीं प्राप्य आत्मपुत्रीं कैकसीं पुलस्त्यपुत्रस्य विश्रवसोऽन्तिकं निनाय ॥ १४ ॥

**लावण्यपण्येन मनो महर्षेः क्रीत्वा[१] सुतानाप च कैकसी सा ।**
**दशाननं प्रागथ कुम्भकर्ण्णं विभीषणं शूर्प्पणखामुपान्त्याम्[२] ॥ १५ ॥**

**(भा.दी.) लावण्ये**ति । कैकसी कैकसीनाम्नी सा सुमालिपुत्री, महर्षेः विश्रवसः मनः, लावण्यं सौन्दर्यमेव पण्यं विक्रयसाधनं द्रव्यं तेन, क्रीत्वा विक्रयणं कृत्वा, स्वाधीनं कृत्वेत्यर्थः, प्राक् प्रथमतः, दश आननानि यस्य स तथा तम्, रावणमित्यर्थः, अथ कुम्भकर्णं कुम्भकर्णनामकम्, विभीषणं विभीषणनामकम्, उपान्ते जाता उपान्त्या ताम्, कनिष्ठामित्यर्थः[३], शूर्पणखां शूर्पणखानाम्नीम् । 'नखमुखात् सञ्ज्ञायाम्' (अ.सू.४.१.५८) इति ङीषोऽभावः । इति सुतान् आप लब्धवती ॥ १५ ॥

**(सं.चं.)** लावण्यमेव पण्यं विक्रेयं तेन । यथा कश्चिद् गां दत्वा धान्यं क्रीणाति, एवं कैकसी स्वलावण्यं तस्मै भोगार्थमर्पयित्वा तस्य मनश्चिक्राय । सुता च सुताश्च सुतास्तान् । प्राक् प्रथमं दशाननमाप । अथ द्वितीयं कुम्भकर्णमाप । विभीषणं चरमम् । ततः पूर्वं सुतामाप । का सा? शूर्पणखामुपान्त्याम् । अन्त्यस्योप निकटे विद्यमानम्, अन्त्यादव्यवहितं पूर्वमुपान्त्यमुच्यते । यदा रूढं नाम तदा शूर्पणखा । यदा गौणं तदा शूर्पणखी । 'दशग्रीवः प्रसूतोऽयं दशग्रीवो भविष्यति । तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः । प्रमाणा-द्यस्य विपुलं प्रमाणं नेह विद्यते । ततः शूर्पणखा नाम सञ्जज्ञे विकृतानना । विभीषणश्च धर्मात्मा कैकस्याः पश्चिमः सुतः' (९.३३–५) इति च । भीषणो न भवतीति विभीषणः । तद् यथा विमुक्त इत्यमुक्त उच्यते ॥ १५ ॥

---

१. **'अनेन सा राक्षसीस्वरूपमाच्छाद्य सुन्दररूपेण तत्समीपं गतेत्युक्तं भवति'** इति का.श्री. ।

२. **'शूर्पनखीमुपान्त्याम्' । 'उपान्त्याम्, अन्त्यात् विभीषणात् पूर्वम्, कुम्भकर्णादनन्तरं शूर्पनखीं कन्यामाप'** इति का.श्री. ।

३. चिन्त्यमिदम् । कनिष्ठो हि विभीषणः ।

**विलोक्य धन्यं धनदं सपत्न्याः सुतं स्वमात्रा प्रतिचोदितास्ते ।**
**तपस्यतिष्ठन्नतनिष्ठवीर्य्याः सहोदरा दिव्यसमायुतं च ॥ १६ ॥**

**(भा.दी.) विलोक्ये**ति । समाना च सा पत्नी च सपत्नी, तस्याः भारद्वाजपुत्र्याः सुतं धनदं कुबेरं धन्यं स्तुत्यगुणैः समर्थं विलोक्य स्वेषां मात्रा कैकस्या प्रतिचोदिताः वैश्रवणवत् सौभाग्यार्थं तपः कर्तव्यमिति प्रेरिताः अतनिष्ठवीर्याः अतनिष्ठमतिबहु वीर्यं येषां ते तथा सहोदराः भ्रातरः ते रावणादयः दिव्याः देवानां सम्बन्धिन्यो याः समाः वत्सरास्तासामयुतं दशसहस्रं तत् । तपसि अतिष्ठंश्च आस्थिताश्च । उपेन्द्रवज्रा च्छन्दः ॥ १६ ॥

**(सं.चं.)** समानः पतिरस्या इति सपत्नी । 'ꣳꣳ इति भाषायाम् । विश्रवसः प्रथमभार्या धनदजननी । 'निरपेक्षो गुणैः पूर्णो धन्य इत्युच्यते' । धनं लब्धा धन्य इति पाणिनिः–'धनगणं लब्धा' (अ.सू.४. ४.८४) । धनशब्दः सम्पद्वचनः । सर्वाः सम्पदस्तमनुगच्छन्ति यो गुणैः पूर्णो निरपेक्षश्च । स्वेषां मात्रा स्वया स्वकीयया वा मात्रा कैकस्या । अतितमां तनुस्तनिष्ठः, अल्पतमः । अतनिष्ठमनल्पं वीर्यं तेषाम् । सहोदरास्त्रयोऽपि । दिव्या याः समाः तासामयुतम् । मानुषमानेन ३६००००० वर्षाणि । ननु तर्हि तपस्येव बहूनि युगान्यतीतानि । सत्यम् । बहुयुगजीविनो हि रावणादयः । तथाहि द्वादश्यां त्रेतायां रावणादीनां जननम् । चतुर्विंश्यां त्रेतायां रामावतारः । तत्रैव रावणकुम्भकर्णयोर्वधश्च । विभीषणस्तु चिरजीवी । तपस्यतिष्ठन् गोकर्णमण्डले चतुराननं प्रति । सम्प्रति रामायणे 'एवं वर्षसहस्राणि दश तस्यातिचक्रमुः' (१०.५) इत्यादि पठ्यते । 'दिव्यवर्षसहस्राणि' इत्येव प्राचीनपाठः सम्भाव्यते । ननु कथं तपसि तिष्ठन्ति? यतस्तपो विना न तिष्ठा सन्ति । तेन निष्ठा सप्तम्यर्थः । स्थितिरिति जीवनम्, तपस्यतिष्ठन् । तपोनिष्ठा अजीवन्नित्यर्थः । अथवा स्थितिरिति निष्ठा । तपसि तपोविषये अतिष्ठन् निष्ठिता अभवन् । नैष्ठिकं तप आचारन्नित्येतत् । उपेन्द्रवज्रा च्छन्दः ॥ १६ ॥

**आहारहीनः सततं दशास्यः [1]स्वसाहसादब्दसहस्रकान्ते ।**
**एकैकमुत्कृत्य शिरः शरीराज्ज्वाज्वल्यमाने ज्वलने जुहाव ॥ १७ ॥**

**(भा.दी.) आहारे**ति । सततं आहारेण यत्किञ्चिद्भक्षणेन हीनः रहितः दशास्यः, अब्दानां संवत्सराणां यत्सहस्रकं तस्यान्तोऽवसानं तस्मिन्, स्वस्य साहसं अकर्तव्यधैर्यं तस्मात्, सहो बलं तदनुसारित्वात्

१. **'स साहसा–' 'सः दशास्यः साहसात् सहनसामार्थ्यात्'** इति का.श्री ।

साहसमुपायो वा तस्मात्, शरीरं देहस्तस्मात्, शिरः एकं च एकं च एकैकं तत्, उत्कृत्य सञ्छिद्य, पुनःपुनरतिशयेन वा ज्वलतीति जाज्वल्यमानः, तस्मिन् ज्वलने जुहाव । हु दानादनयोर्लिट् । एकैकदिव्यसंवत्सरसंहस्रान्ते एकैकं शिरो जुहावेत्यर्थः ॥ १७ ॥

**(सं.चं.)** सिद्धिपर्यन्तं साधनपथादविचलनं साहसम् । अकार्यकरणेऽप्यह्रीकता, अविमृश्यकारिता च । दिव्याब्दसहस्रकान्ते । अनारतं सहस्रं सहस्रकम् । दशकं शतकमिति यथा । प्रत्यब्दसहस्रमेकैकं शिरः ॥१७॥

**पूर्ण्णे समानां दशमे सहस्रे चिकर्त्तिषुं तं दशमं शिरश्च ।**
**मामेति धाता विनिवार्य्य तात वरं वृणीष्वेति हसन् जगाद ॥ १८ ॥**

**(भा.दी.) पूर्ण** इति । समाः संवत्सराः, तासां दशसङ्ख्यापूरणं दशमम्, तस्मिन् सहस्रे पूर्णे सति, दशमं शिरश्च, कर्तितुमिच्छिति चिकर्तिषति, चिकर्तिषतीति चिकर्तिषुस्तम्, च्छेतुमिच्छन्तमित्यर्थः, तं धाता चतुर्मुखः, मामा इति, च्छेदनं मा कुरु मा कुर्विति विनिवार्य, हे तात, अभीप्सितो यो वरस्तं वृणीष्व इति हसन् जगाद ॥ १८ ॥

**(सं.चं.)** मामा साहसं कार्षीः । 'पूर्णे वर्षसहस्रे तु शिरश्चाग्नौ जुहाव सः । एवं वर्षसहस्राणि नव तस्यातिचक्रमुः । शिरांसि नव चाप्यस्य प्रविष्टानि हुताशनम् । अथ वर्षसहस्रे तु दशमे दशमं शिरः । छेत्तुकामे दशग्रीवे प्राप्तस्तत्र पितामहः' (१०.१०–२) इति च ॥ १८ ॥

**सुरासुरैरप्यहियक्षरक्षःपतत्रिभिः कैश्चिदवद्ध्यभावम् ।**
**ददौ प्ररोहं च हुताननानां स वीरवर्य्याय वरं विरिञ्चः ॥ १९ ॥**

**(भा.दी.) सुरे**ति । विरिञ्चः, सुराश्च असुराश्च तैः, अहयश्च यक्षाश्च रक्षांसि च, पतत्रिणः पक्षिणस्तैश्च, कैश्चिदपि एतदन्यदेवयोनिभिरपि, न वध्योऽवध्यस्तस्य भावः धर्मस्तम्, अवध्यत्वमित्यर्थः, वरम्, वीरेषु वर्यः श्रेष्ठस्तस्मै ददौ । हुतानि वह्नौ प्रक्षिप्तानि यानि आननानि तेषां प्ररोहः पुनरुद्भवस्तं च, युद्धे पुनःपुनर्निकृत्तानामप्युत्पत्तिं चेत्यर्थः, ददौ ॥ १९ ॥

**(सं.चं.)** रावणोऽमरत्वमवृणीत । 'न तच्छक्यम् । अन्यं वरं वरय' इत्याह ब्रह्मा । तेन वृतमन्यं वरं ददौ ब्रह्मा । कोऽसौ वरः? आह– सुरासुरैरित्यादि । 'सुपर्णनागयक्षाणां दैत्यदानवरक्षसाम् । अवध्योऽहं प्रजाध्यक्ष देवतानां च शाश्वत' (१०.१९) इति च । रावणापेक्षितं वरं दत्वा स्वयं प्रीतोऽपरं च वरं ददावित्याह– ददौ प्ररोहं च । इदमुपलक्षणम् । यथेष्टरूपधारणशक्तिं चापरं वरं ददौ । उपेन्द्रवज्रा च्छन्दः ॥ १९ ॥

**एकेन पादेन सदैव तिष्ठन्[१] दधन्मुकुन्दं हृदयारविन्दे ।**
**ततस्तपस्यन्[२] हरिधर्म्मनिष्ठां[३] विभीषणः प्राप वरं वरीयान् ॥ २० ॥**

**(भा.दी.) एकेने**ति । एकेन पादश्चरणस्तेन सदैव तिष्ठन्, हृदये यदरविन्दं तस्मिन् मुकुन्दं श्रीहरिं दधत्, ध्यायन्नित्यर्थः, तपस्यन् उक्तप्रकारेण तपः कुर्वन्, वरीयान् स्वरूपेण उत्तमः विभीषणः, हरेर्ये धर्मास्तेषु निष्ठा आसक्तिस्ताम्, भगवदाराधनादिधर्मेष्वासक्तिमित्यर्थः, वरं ततः चतुर्मुखात् प्राप ॥ २० ॥

**(सं.चं.)** एकेन पादेन । 'विभीषणस्तु धर्मात्मा नित्यं धर्मपरः शुचिः । पञ्चवर्षसहस्राणि पादेनैकेन तस्थिवान्' (१०.६) इति, 'पञ्चवर्षसहस्राणि सूर्यं चैवान्ववर्तत । तस्थौ चोर्ध्वशिरोबाहुः स्वाध्यायधृतमानसः' (१०) इति च । हृदयारविन्दे मुकुन्दं दधत् । तपश्चरति तपस्यति । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' (अ.सू.३.१.१५) इति क्यङ् । 'तपसः परस्मैपदं च' इति वार्तिकात् परस्मैपदम् । ब्रह्माणं प्रति तपश्च-रन्नपि मनसा ब्रह्मान्तर्यामिणं नारायणं दध्यावित्यर्थः । तदेतद् रामायणे सूचितम्– 'विभीषणस्तु धर्मात्मा' इति । धारकत्वाद् धर्मो भगवान् । तस्मिन्नात्मा मनोऽस्येति । 'स्वाध्यायधृतमानसः' इति च । स्वतन्त्रस्य नारायणस्याध्ययनं स्वाध्याय इति तु हृदयम् । रावणकुम्भकर्णौ स्वरूपतो वरावप्यसुरावेशतोऽवरौ । अयमसुरजन्माऽपि स्वरूपतो वरीयान् । हरिभक्ति-निष्ठां वरं प्राप । सहैव ब्रह्मास्त्रप्रतिभानं च । 'अशिक्षितं च ब्रह्मास्त्रं भगवन् प्रतिभातु मे' (१०.३१) इति च ॥ २० ॥

**द्वन्द्वाख्यदुःखं सहमान उग्रः स कुम्भकर्ण्णस्तपसा चिरेण ।**
**देव्या तदा भ्रंशितगीः सुरार्थं सुप्तिश्चिरायास्तु ममेत्यवोचत् ॥ २१ ॥**

**(भा.दी.) द्वन्द्वे**ति । द्वन्द्वमिति आख्या नाम यस्य तत्तथोक्तम्, तच्च तद्दुःखं च तत्, सहमानः सहनं कुर्वन्, उग्रः सः कुम्भकर्णः, देव्या सरस्वत्या, सुरेभ्य इति सुरार्थम्, देवानां लोकरक्षणलक्षणकार्यसिद्ध्यर्थमित्यर्थः, तदा वरणकाले भ्रंशिता अन्यथाप्रेरिता गीर्वाग्यस्य स तथा सन्, चिरेण बहुकालीनेन तपसा, चिराय चिरकाले, अव्ययमेतत्, सुप्तिः मम अस्तु इति अवोचत् । अतिस्थूलकायत्वादतिचण्डत्वाच्चायं स्वोदरपोषणार्थं सर्वं भक्षयेदित्यभिप्रायेणास्मै वरो न देय इति देवैरर्थितेन चतुर्मुखेन तपसो विनिवर्तनार्थमस्य वरदानकाले वाग-न्यथा प्रेर्येति प्रोक्ता सरस्वती सुदीर्घकालं निद्रां मे देहीति प्रेरितवतीति हि रामायणे प्रसिद्धम् ॥ २१ ॥

---

१. **'तिष्ठन् ध्यायन् मुकुन्दम्'** २. **'तपस्तपस्यन्'**

३. **'–धर्मनिष्ठो विभी-'**

**(सं.चं.)** उभौ तपसा लब्धफलौ कथितौ। अपरस्य तप एव निष्फलं बभूवेत्याह– द्वन्द्वाख्यदुःखम्। देव्या सुरार्थं भ्रंशितगीः। 'वरव्याजेन मोहोऽस्मै दीयताममितप्रभ' (१०.३९) इति सुरैः प्रार्थितेन ब्रह्मणा तेषां सुराणां कृते 'वाणि त्वं राक्षसेन्द्रास्ये भव या देवतेप्सिता' (१०.४३) इत्याज्ञप्तया वाग्देव्या भ्रंशितगीः। 'स्वप्तुं वर्षाण्यनेकानि ममेप्सितम्' (१०.४५) इत्यवोचत्॥ २१॥

**तथेत्युदाहृत्य गतेऽब्जयोनौ सभ्रातृकोऽसौ विचरन् दशास्यः।**
**नीत्या प्रहस्तस्य सुमालिनश्च लङ्कालयोऽभूद्धनदं प्रकाल्य[1] ॥ २२ ॥**

**(भा.दी.) तथे**ति। अब्जं योनिः कारणं यस्य स तथा तस्मिन् चतुर्मुखे, तथेति त्वदुक्तप्रकारेण भविष्यतीति, उदाहृत्य स्वलोकं प्रति गते सति, भ्रातृभ्यां कुम्भकर्णविभीषणाभ्यां सहितः विचरन् असौ दशास्यः, प्रहस्तस्य प्रहस्तनाम्नो राक्षसस्य, सुमालिनः सुमालिनाम्नो मातामहस्य च, नीत्या, धनदं प्रकाल्य, लङ्काया विद्राव्य, लङ्का आलयो निवासो यस्य स तथा अभूत्॥ २२॥

**(सं.चं.)** तथास्त्वित्युदाहृत्य गतेऽन्तर्हिते सति। आनन्तर्यं सप्तम्यर्थः। यदनन्तरं क्रियान्तरं भवति। 'यस्य च भावेन भावलक्षणम्' (अ.सू.२.३.३७) इति पाणिनिः। भावेन क्रियया क्रियान्तरं लक्ष्यते तत्र पूर्वक्रियावतः सप्तमी भवतीत्यर्थः। निरालयतया विचरम्। 'सौभ्रात्रं नास्ति शूराणां शृणु चेदं वचो मम' (११.१४) इत्यादिकया सुमालितनयस्य स्वमातुलस्य प्रहस्तस्य च दुर्नीत्या धनदं लङ्कातः प्रकाल्य निष्कास्य। कल द्रावणे॥ २२॥

**मण्डोदरी नाम मयस्य पुत्री बभूव भार्य्या दशकन्धरस्य।**
**या मेघनादं सुषुवे सुरारिं वीची महाब्धेरिव कालकूटम् ॥ २३ ॥**

**(भा.दी.) मण्डे**ति। मयस्य मयनामकस्य दैत्यस्य पुत्री, मण्डोदरी मण्डोदरीति नाम प्रसिद्धा, दश कन्धरा कण्ठा यस्य स तथोक्तस्य रावणस्य भार्या बभूव। या सुरारिं मेघनादम्, उत्पत्त्यनन्तरमेव मेघवन्नाद-करणात् मेघनादनामकं पुत्रम्, इन्द्रजयात् पूर्वं हीन्द्रजितो मेघनाद इति नाम, महांश्चासौ अब्धिश्च तस्य वीची तरङ्गः। 'ऊर्मिर्वा स्त्रियां वीचिः' इत्यमरः। कालकूटमिव विषमिव सुषुवे। षूञ् प्राणिगर्भविमोचने लिट्॥ २३॥

१. **'लङ्कालयैरुत्कटपुत्रपूगैनित्यनेन पूर्वं लङ्कायां सुकेशसूनवः स्थिता इति ज्ञायते। धनदं प्रकाल्येत्यनेन सुकेशसूनुमालिनाशानन्तरं लङ्कायां धनदोऽवस्थितः। इदानीं दशाननो धनदं द्रावयित्वा स्वयं लङ्कालयोऽभूदिति भावः'** इति का.श्री.।

**(सं.चं.)** मयस्य पुत्री हेमायामप्सरःस्त्रियां जाता । 'इयं ममाऽत्मजा राजन् हेमयाऽप्सरसा धृता । कन्या मण्डोदरी नाम पत्न्यर्थं प्रतिगृह्यताम्' (१२.१८) इति च । तनुतरतया समग्रस्य देहस्य मण्डनभूतमुदरमास तस्या इति मण्डोदरी । अर्वाचीनास्तां मन्दोदरीमाचक्षते । सा मेघनादं सुषुवे । 'ततो मण्डोदरी पुत्रं मेघनादमजीजनत् । स एष इन्द्रजिन्नाम युष्माभिरभिधीयते । जातमात्रेण हि पुरा तेन रावणसूनुना । रुदता सुमहान्मुक्तो नादो जलधरोपमः । जळीकृता च सा लङ्का तस्य नादेन राघव । पिता तस्याकरोन्नाम मेघनाद इति स्वयम्' (१२.२८–३०) इति च । सुराररिमिति वदता तस्य पाश्चात्यमिन्द्रजिदिति नाम चासूचि ॥ २३ ॥

**निद्रां विनिद्रां[1] समियाय विद्युज्जिह्वापतिस्तत्र स कुम्भकर्ण्णः ।**
**गन्धर्वपुत्रीं सरमामवाप्य विभीषणो भागवतोऽत्र रेमे ॥ २४ ॥**

**(भा.दी.) निद्रामि**ति । विद्युज्जिह्वायाः विद्युज्जिह्वानाम्न्याः स्त्रियाः पतिः भर्ता सः कुम्भकर्णः, विहता निद्रा पर्यवसितिर्यस्याः सा तथा ताम्, बहुकालीनामित्यर्थः, निद्रां तत्र लङ्कायां समियाय प्राप । भगवतो भक्तो भागवतः विभीषणः गन्धर्वपुत्रीं सरमां सरमानाम्नीं अवाप्य अत्र लङ्कायां रेमे ॥ २४ ॥

**(सं.चं.)** विनिद्रां सदा जागरूकां निद्रामानिनीं देवताम् । 'निद्रा समभवत् तीव्रा कुम्भकर्णस्य रूपिणी (१३.१) इति च । कुम्भकर्णजाया वज्रज्वालेति साम्प्रतिको रामायणपाठः–'वैरोचनस्य दौहित्रां वज्रज्वालेति नामतः । तां भार्यां कुम्भकर्णस्य रावणः समकल्पयत्' (१२.२३) इति । 'विद्युज्जिह्वेति नामतः' इत्येव रामायणमूलपाठः स्यात् । नामान्तरं वा स्यात् । 'शैलूषस्य महात्मनः । सरमां नाम धर्मज्ञां लेभे भार्यां विभीषणः' (२५) इति च । अत्र सरमायाम् । तस्या अपि भागवतत्वात् ॥ २४ ॥

**गोब्राह्मणानां वधबद्धदीक्षो जेष्यंस्त्रिलोकीं धनदं विजित्य ।**
**स यक्षलक्षाणि बहूनि हत्वा दशाननः पुष्पकमाजहार ॥ २५ ॥**

**(भा.दी.) गवि**ति । गावश्च ब्राह्मणाश्च तेषां वधे बद्धा सङ्कल्पिता दीक्षा व्रतसङ्ग्रहणं येन स तथा, त्रिलोकीं जेष्यन् सः दशाननः, धनदं विजित्य, बहूनि यक्षाणां लक्षाणि हत्वा, पुष्पकं पुष्पकाख्यं यद्विमानं तत् आजहार ॥ २५ ॥

---

१. **'विशेषनिद्राम् । यद्वा द्रा कुत्सायां गतौ, कुत्सितगतिम्, विगतसञ्ज्ञाम्, बहुकालिकामिति यावत् । निद्रां सुप्तिम्' इति का.श्री. ।**

**(सं.चं.)** वधे बद्धदीक्षः । त्रिलोकीं जेष्यन् विजिगीषन् प्रथमं स्वाग्रजं धनदं विजिग्ये । यक्षाः कुबेर-भृत्याः । तेषां बहूनि लक्षाणि हत्वा धनदं विजित्य पुष्पकं विमानमाजहार । द्विविधं विमानं भवति । मन्त्रचालितं यन्त्रचालितमिति । पुष्पकं मन्त्रचालितम् ॥ २५ ॥

**गर्वेण शर्वस्य स पर्वतेन्द्रमुद्धर्त्तुकामोऽथ तदङ्घ्रिभग्नः[1] ।**
**स्वां[2] रावणाख्यां रवणादवाप घोरः प्रजानामपि रावणत्वात् ॥ २६ ॥**

**(भा.दी.) गर्वेणे**ति । गर्वो मत्समो नास्तीत्यहङ्कारः, तेन शर्वस्य शिवस्य पर्वतेन्द्रं कैलासं उद्धर्तुं काम इच्छा यस्य स तथा, घोरः सः रावणः, अथ तस्य शिवस्य योऽङ्घ्रिस्तेन भग्नः सन्, रवणं आक्रोशनं तस्मात्, प्रजानामपि, रावयति आक्रोशयति इति रावणस्तस्य भावस्तत्त्वं तस्मात्, आक्रोशकारयितृत्वादित्यर्थः, स्वां स्वकीयां रावण इति आख्यां अवाप । वैश्रवणात्पुष्पकं हृत्वा तत्र स्थित्वा पर्यटनसमये कैलासनिकटगमनासमर्थं पुष्पकं दृष्ट्वा किन्निमित्तमिदं न गच्छतीति ततोऽवरुह्य पद्भ्यां कैलाससमीपं प्रति गमनसमये नन्दिना क्रीडत्यत्र रुद्रस्ततो न गन्तव्यः पर्वत इति वाचा निवारितोऽपि तमवज्ञाय गमनप्रतिबन्धकमिमं पर्वतमुद्धरिष्यामी-त्युद्धार । तदा कैलासे कम्पमाने भीतया पार्वत्याऽऽलिङ्गितो रुद्रः पादाङ्गुष्ठेन तं शैलं लीलया पीडया-मास । ततः शैलस्याधोगताः रावणभुजाः पीडिता आसन् । ततश्च रुद्रः परमकृपाकरः प्रीतः सन तस्य भुजान् मोचयित्वा यस्माद्वेदनार्तेन त्वया दारुणः स्वरो मुक्तो यस्माच्च सम्प्राप्तभयं लोकत्रयं रावितं तस्मात् त्वं नाम्ना रावणो भविष्यसीति रुद्रेण रावणनाम कृतमिति रामायणे प्रसिद्धम् ॥ २६ ॥

**(सं.चं.)** गर्वेण अहङ्कारेण भुजैरुद्धर्तुकामः । तस्य शर्वस्याङ्घ्रिणा भग्नः । 'एवमुक्त्वा ततो राम भुजान् विक्षिप्य पर्वते । तोलयामास तं शैलं स शैलः समकम्पत' (१६.२५) इति, 'ततो राम महादेवो देवानां प्रवरो हरः । पादाङ्गुष्ठेन तं शैलं पीडयामास लीलया' (२७) इति च । स्वयं भुजानां पीडया रवणात् लोकानां रावणाच्च । 'शैलाक्रान्तेन यो मुक्तस्त्वया रावः सुदारुणः । यस्माल्लोकत्रयं चैतद् रावितं भयमागतम् । तस्मात् त्वं रावणो नाम नाम्ना राजन् भविष्यसि' (१०.३६–७) इति, 'एवं त्वामभिधास्यन्ति रावणं लोकरावणम्' (३९) इति च । रौति रवीति वा रवणः । रवण एव रावणः । प्रजानां रावणत्वात् रवणहेतुत्वात् रावयतीति च रावणः । इन्द्रवज्रा च्छन्दः ॥ २६ ॥

---

१. 'तदङ्घ्रिभुग्नः' २. 'स्वाद् रावणाख्याम्'

**हिमालये वीक्ष्य स देवमायां कन्यां परां[१] वेदवतीं प्रगृह्य ।**
**शप्तस्तया त्वन्मृतये पुनः स्यामित्थं ज्वलन्तं ज्वलनं विशन्त्या ॥ २७ ॥**

**(भा.दी.) हिमे**ति । सः रावणः हिमालयो हिमवत्पर्वतः, तस्मिन् देवस्य श्रीहरेः मायां लक्ष्म्यवतारभूताम्, कन्यां कौमारब्रह्मचारिणीम्, परां उत्तमाम्, वेदवतीम्, वेदवतीनाम्नीं, प्रगृह्य कामातुरतया गृहीत्वा, ज्वलन्तं ज्वलनमग्निं स्वाचिन्त्यशक्त्या (सृष्टं) तद्ग्रहणनिमित्तात् विशन्त्या, तया वेदवत्या, अहं त्वन्मृतये त्वन्मरणार्थं पुनः सीतारूपेण अवतीर्णा स्यां इत्थं शप्तः ॥ २७ ॥

**(सं.चं.)** देवस्य मायां चित्प्रकृतिम् । परां सर्वजीवोत्तमाम् । केशेषु प्रगृह्य, अत एव तया योगबलेन सृष्टं ज्वलनं विशन्त्या शप्तः । सीतारूपेण पुनरागत्य त्वन्मृत्यवे स्यामिति । 'सैषा जनकराजस्य प्रसूता तनया प्रभो । तव भार्या महाबाहो विष्णुस्त्वं हि सनातनः' (१७.४०) इति, 'एषा वेदवती नाम पूर्वमासीत् कृते युगे । त्रेतायुगमनुप्राप्य वधार्थं तस्य रक्षसः । उत्पन्ना मैथिलकुले जनकस्य महात्मनः' (४४) इति च ॥ २७ ॥

**मरुत्तदुष्षन्तमुखान्[२] महीशान् पराजितोऽस्मीति स वादयित्वा ।**
**हन्ता हरिस्ते मम वंश्य इत्थं शप्तोऽनरण्येन निसूदयंस्तम्[३] ॥ २८ ॥**

**(भा.दी.) मरुत्ते**ति । मरुत्तश्च दुःषन्तश्च तौ मुखे मुख्यौ येषां ते तथा तान्, महीशान् राज्ञः, पराजितः त्वया पराभूतः अस्मि, इति वादयित्वा वाचयित्वा, तं तथा अवादिनं अनरण्यं निसूदयन् संहरन् सन्, रावणः अनरण्येन अनरण्यनामकेन राज्ञा, मम वंशे भवो वंश्यः, वंशेऽवतीर्ण इत्यर्थः, श्रीरामनामा हरिः ते त्वां 'कर्मण्यपीति केचित्' इति षष्ठी । हन्ता हनिष्यति । हन्तेर्लुट् । इत्थं शप्तः ॥ २८ ॥

**(सं.चं.)** मरुत्तदुःषन्तमुखान् । कदाचिन्मरुत्तो राजा यज्ञदीक्षित आस । रावणस्तमासाद्य युद्धं प्रयच्छेत्याजुहुवे । मरुत्तः क्रुद्धो युद्धाय निर्ययौ । तदा तत्पुरोहितः संवर्त ऊचे– 'दीक्षितस्य कुतो युद्धं क्रोधित्वं दीक्षिते कुतः । संशयश्च जये नित्यं राक्षसश्च सुदुर्जयः' (१८.१७) इति । गुरोर्वाक्याद् युद्धान्निवृत्तो मखमुखो बभूव । 'ततस्तं निर्जितं मत्वा घोषयामास वै शुकः । रावणो जयतीत्युच्चैर्हर्षान्नादं विमुक्तवान्' (१८.२०) इति । तथाच मरुत्तः पराजितोऽस्मीति नोवाच । दुष्षन्तमुखाः पराजिताः स्मः इत्यूचुः । तत्कथं

---

१. **'कन्यां वराम्'** २. दुष्षन्त इत्येव प्रतनं रूपम् । दुष्यन्त इति पाश्चात्यम् । ३. **'निषूदयंस्तम्'** इति पाठः प्रमादिकः ।

मरुत्तदुष्षन्तमुखान् पराजितोऽस्मीति वादयित्वा? स यथा मेघे वर्षति पथि पथिकाः पतन्तश्छत्रच्छन्ना यान्ति। तेष्वेकः स्वयमलक्षयन् वृष्टिमच्छत्रोऽनावृतो याति। अथाप्याहुः– छत्रिणो यान्तीति। एवमिह बहुभिः पराजिताः स्म इति वादयामास। उतापि नोवाद मरुत्तः पराजितोऽस्मीति। अथाप्याचक्षते मरुत्त दुःषन्तमुखान् पराजितोऽस्मीति वादयित्वेति। तेनेदं विश्लिष्यावगन्तव्यम्। दुष्षन्ते तद्गुणसंविज्ञानोऽप्ययं समासो मरुत्ते त्वतद्गुणसंविज्ञान इति। कथं मरुत्तः? मरुतस्तेनुरेनमिति। कथं दुष्षन्तः? दुष्टमपि सम्यक् तनोतीति। दुष्टानां दुःख तनोति, सतां सं सुखं तनोतीति वा। कथमनरण्यः? अरमणीयमरण्यमाचक्षते। स न भवतीत्य-नरण्यः। 'दुःषन्तः सुरथो गाधिर्गयो राजा पुरूरवाः। एते सर्वेऽब्रुवंस्तात निर्जिताः स्मेति पार्थिवाः' (१९.५) इति च। अथानरण्यमयोध्याधिपतिं प्राप्य युद्धं देहीत्याह। अनरण्योऽपि महता सैन्येन सन्नद्धो योद्धुं प्रययौ। रावणमासाद्य नश्यति स्मानरण्यबलं हव्यं हुतमिवानले। अथाप्यनरण्यस्तरसा शत्रून् द्रावयन् युयुधे। अन्ते रावणेन तळेन मूर्ध्न्यभिहतो रथान्निपपात। ततो मन्दासू राजा रावणमब्रवीत्– 'उत्पत्स्यते कुले ह्यस्मिन्निक्ष्वाकूणां महात्मनाम्। रामो दाशरथिर्नाम यस्ते प्राणान् हरिष्यति' (१९.३०) इति, भविष्यन् रामाभिधो हरिस्ते तव हन्ता, भविष्यतीति शेषः ॥ २८ ॥

**युध्वा स सप्ताहमपास्य कालं रसातळे नागकुलं विजित्य।**
**निवातवर्म्माख्यनिबद्धसख्यो जळीचकाराऽथ जलेशपुत्रान् ॥ २९ ॥**

**(भा.दी.)** **युध्वे**ति। सः रावणः सप्तानामह्नां समाहारः सप्ताहं तत्। 'राजाहःसखिभ्यश्टच्'(५.४.९१) इति टच्। युध्वा कालं यमम्, 'कालो मृत्यौ यमे' इति वैजयन्ती, अपास्य, 'मया दत्तवरोऽयं त्वया न हन्तव्यः' इति ब्रह्मवचसा यमेऽन्तर्हिते सति यमं परित्यज्य, रसातळं पाताळं तस्मिन्, नागानां कुलं समूहस्तत् विजित्य, निवातवर्माण इति निवातकवचा इति आख्या येषां ते तथा, तैरसुरैः निबद्धं सख्यं येन स तथा सन्, ब्रह्मवरेणाजेयत्वात् तेषां जयाशां परित्यज्य तैः सह सख्यं सम्पाद्येत्यर्थः, अथ जलेशस्य वरुणस्य पुत्रान्, वरुणलोकं प्रति गत्वा, जळीचकार युद्धे जळीभूतान् चकार ॥ २९ ॥

**(सं.चं.)** अथ नारद आगत्य तमाह– 'दैवतैरप्यवध्यस्त्वं किं वृथा मानुषान् विहन्सि' इति। 'अवश्यमेभिः सर्वैश्च गन्तव्यं यमसादनम्। तन्निगृह्णीष्व पौलस्त्य यमं परपुरञ्जय' (२०.१६) इति च। अथ रावणः प्रतस्थे यमपुरं प्रति। नारदः पूर्वमागत्य यमायैतां वार्तां श्रावयामास। ततो रावण आगतः। यमरावणयोर्महद् युद्धं प्रावर्तत। तदेतदाह– स सप्ताहं युध्वा कालं यममपास्येति। सप्तानामह्नां समाहारः सप्ताहः। सप्ताह-मित्येके। 'एवं नानाप्रहणैर्यमेनामित्रकर्शिना। सप्तरात्रं कृतः सङ्ख्ये विसञ्ज्ञो विमुखो रिपुः' (२२.१६) इति

च । रावणं दण्डेन प्रहर्तुकामं यमं ब्रह्मा वारयामास– 'मया दत्तवरोऽयम् । तस्मान्नायं दण्डेन हन्तव्यः' इति । ततो यमोऽन्तर्दधौ । रावणस्तं भयात् पलायितं मेने । तदेतदाह– कालमपास्येति । अत्र रसातळमिति अधोभुवनसामान्यवचनम् । तत्ररसातळे पताळे नागकुलं विजित्य, रसातळाख्ये षष्ठेऽधोलोके निवातकवचैर्निबद्धसख्यः । तथाहि भागवते–'रसातळे दैतेया दानवाः पणयो नाम निवातकवचाः कालकेयाः' (५.२३.३०) इति, 'ततोऽधस्तात् पाताळे नागलोकपतयो वासुकिप्रमुखाः शङ्खगुळिकमहाशङ्खश्वेतधनञ्जय-धृतराष्ट्रशङ्खचूडकम्बळाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसन्ति' (५.२३.३१) इति च । नागकुलं विजिग्ये । विजित्य च नागकुलं निवातकवचाख्यान् राक्षसानभिययौ । 'कृत्वा नागान् वशे हृष्टो ययौ मणिमयीं पुरीम् । निवातकवचास्तत्र दैत्या लब्धवराऽवसन्' (२३.५–६) इति च । ततो घोरः समरः समवर्तत । साग्रः संवत्सरो गतः । पुनः पितामह आगत्य निवातकवचानाह– 'नायं जेतुं शक्यः । तेन सख्यं कुरुत' इति । 'ततोऽग्निसाक्षिकं सख्यं कृतवांस्तत्र रावणः । निवातकवचैः सार्धं प्रीतिमानभवत् तदा' (२३.१४) इति च । तदेतदाह– निवातवर्माख्यैर्निबद्धसख्य इति । तत्र संवत्सरमुवास प्रीत्या । तेषां सविधे माया-विद्यामधिजगाम । एवं दशाननः शतमायो बभूव । अथ वरुणालयं ययौ । तत्र वरुणपुत्रान् जित्वा निश्चेष्टान् पातयामास । तदेतदाह– जळीचकाराथ जलेशपुत्रानिति । तदा वरुणस्य मन्त्री प्रभासो नाम रावणमुपेत्य विज्ञापयामास–'गतः खलु महाराजो ब्रह्मलोकं जलेश्वरः । गान्धर्वं वरुणः श्रोतुं यं त्वमाह्वयसे युधि' (२३.५२) इति । रावणस्तदा ततो निववृते ॥ २९ ॥

**अक्षोहिणीभिः सह राक्षसानां सकुम्भकर्ण्णः ससुतो दशास्यः ।**
**मधुं[1] पुरस्कृत्य महच्चकार महेन्द्रमुख्यैरमरैः सुयुद्धम्[2] ॥ ३० ॥**

**(भा.दी.) अक्षे**ति । सः दशास्यः रावणः, राक्षसानां अक्षोहिणीभिः सह, कुम्भकर्णेन सहितः सन्, सुतेन मेघनादेन सहितः सन्, मधुं मधुनामकं दैत्यं पुरस्कृत्य, महेन्द्रो मुख्यो येषां ते तथा तैः (अमरैः) सुरैः महत् सुयुद्धं[3] चकार ॥ ३० ॥

**(सं.चं.)** बहुभिरक्षोहिणीभिः । 'अक्षोहिणीसहस्राणि चत्वार्यग्र्याणि रक्षसाम्' (२५.३३) इति च । ससुतः समेघनादः । सोऽग्रतो जगाम । 'जगाम रावणो मध्ये कुम्भकर्णश्च पृष्ठतः' (२५.३५) । मधुं पुरस्कृत्येति ।

१. **'मधुकैटभौ प्रसिद्धौ । तत्र मधुम् । कार्यकारणयोरभेदोपचारात् मधुपुत्रो लवणासुरः मधुशब्देन गृह्यते । तं लवणासुरं पुरस्कृत्य पुरतः कृत्वा'** इति का.श्री. । व्याख्यानमसङ्गतं रामायणविरुद्धं चेत्युपेक्ष्यम् । अधिकं सं.चन्द्रिकायाम् ।

२. **'–रमरैः स युद्धम्'** १.

३. सन्दिग्धोऽत्र पाठः । **'सः दशास्यः'** इति प्रतीकग्रहणात् । **'स युद्धम्'** इत्यपि पाठः स्यात् ।

इयमत्र कथा– यदा रावणः पूर्वं दिग्विजयार्थं गतः, तदा मधुनामाऽसुरः लङ्कायां रावणस्यासन्निधानं विज्ञाय लङ्कामाजगाम। आगत्य च माल्यवतो दुहितुरनलाया दुहितरं कुम्भीनसीं नाम, धर्मतो रावणस्य स्वसारमन्तःपुरे सुप्तां बलादपजहार । दिग्विजयात् प्रत्यावृत्तो रावणः श्रुत्वैतां वार्तामवमानित इव क्रोधेन ज्वलन् कुम्भकर्णमुत्थाप्य सेनापरिवृतः सकुम्भकर्णमेघनादः स्वयं मधुपुरं प्रति प्रतस्थे । दिष्ट्या मधुर्न पुरत आस । कुम्भीनसी पुर आजगाम । दशाननः प्रथमं ददर्श भगिनीम् । सा च भीतभीता प्रह्वाञ्जली रावणं भ्रातरं प्रार्थयामास–'राजन् प्रसन्नो भव । न मे भर्तारं हन्तुमर्हसि' इति । 'भयानामपि सर्वेषां वैधव्यं व्यसनं महत्' (२५.४२) इति च । तदा दशानन आह– 'क्व चासौ तव भर्ता वै मम शीघ्रं निवेद्यताम् । सह तेन गमिष्यामि सुरलोकं जयावहै। तव कारुण्यसौहार्दान्निवृत्तोऽस्मि मधोर्वधात्' (२५.४५–६) इति। ततश्च मधुना सत्कृतः तेन सहैव सुरलोकविजयाय प्रास्थितेति । तदेतदाह– मधुं पुरस्कृत्यामरैः महद् सुयुद्धं चकारेति । जयफलकं युद्धं सुयुद्धम् । पूर्णाङ्गं सुसज्जितं च युद्धं सुयुद्धम् । यत्र कैकसीपिता सुमाली ममार । अत्र केचिद् व्याचक्षते– मधुशब्देन मधुपुत्रो लवणासुरो गृह्यत इति रामायणविरुद्धं वदन्तो भ्रान्ता इत्युपेक्ष्यास्ते ॥ ३० ॥

**महेश्वरस्याथ मखैर्म्महात्मा स मेघनादो युधि मेघवाहम् ।**
**बबन्ध नाम्नेन्द्रजिदास तस्माद् ब्रह्माज्ञयाऽमुञ्चदमुं च कृच्छ्रात् ॥ ३१ ॥**

**(भा.दी.) महे**ति । अथ महान् आत्मा धैर्यं यस्य स तथा । 'आत्मा जीवे धृतौ देहे' इति वैजयन्ती । सः मेघनादः महेश्वरस्य शिवस्य मखाः यज्ञास्तैः निमित्तभूतैः मेघवाहं इन्द्रम् । 'तुराषाट् मेघवाहनः' इत्यमरः । युध् युद्धं तस्यां बबन्ध । बन्ध बन्धने लिट् । तस्मात् युद्धे इन्द्रबन्धनाद्धेतोः नाम्ना इन्द्रजित् इन्द्रजिन्नामकः आस बभूव । अस गतिदीप्तादौ लिट्[१] । बह्माज्ञया अमुं इन्द्रं कृच्छ्रं बन्धनरूपमापत् तस्मादमुञ्चच्च। मुच्लृधातोर्लङ्। अस्मद्वरनिमित्तं हि भवतामिदं सामर्थ्यमत अयमिन्द्रो मोक्तव्य इत्यादिरूपया आज्ञया स्वर्गलोकाद् बध्वा लङ्कां प्रत्यानीतमिन्द्रं मुमोचेत्यर्थः ॥ ३१ ॥

**(सं.चं.)** तस्मिन् युधि मेघनादो मेघवाहमिन्द्रं बबन्ध । तदपि महेश्वरं मखैः प्रीणयित्वा तेन सञ्जातया महात्मतया । महानात्मा धृतिर्बलं वा यस्य स महात्मा । 'आत्मा कळेबरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च' इति धरणिः । महानात्मा परमात्मा यस्मिंस्तदा सन्निहितः । इन्द्रजयाय शक्त्याधानार्थमिति च । तस्मादिन्द्रबन्धनादेव कारणात् इन्द्रजिदिति नाम्ना ख्यात आस । 'माहेश्वरे प्रवृत्ते

१. बभूवेत्यर्थे आसेत्यव्ययमिति बहवः ।

तु यज्ञे पुम्भिः सुदुर्लभे । वरांस्ते लब्धवान् पुत्रः साक्षात् पशुपतेरिह' (२५.९) इति च । 'अयं च पुत्रोऽतिबलस्तव रावण वीर्यवान् । जगतीन्द्रजिदित्येव परिख्यातो भविष्यति । बलवान् दुर्जयश्चैव भविष्यत्येव राक्षसः । यं समाश्रित्य ते राजन् स्थापितास्त्रिदशा वशे । तन्मुच्यतां महाबाहो महेन्द्रः पाकशासनः' (३०.५–७) इति ब्रह्माज्ञयाऽमुं महेन्द्रं बन्धनरूपात् कृच्छ्रात् सङ्कटादमुञ्चच्च । 'अमुञ्चदमुं च' इति मधुरोऽनुप्रासः ॥ ३१ ॥

**विंशद्भुजः सोऽथ सहस्रहस्तं प्रत्युज्जगर्जार्जुनमभ्युपेत्य ।**
**विष्णोर्वरादप्रभविष्णुरेष[१] बबन्ध तं ब्रह्मवरादजेयम् ॥ ३२ ॥**

**(भा.दी.)** **विंशदिति** । अथ दिग्विजयानन्तरम्, विंशत् भुजा यस्य स तथा सः रावणः, सहस्रं हस्ता यस्य स तथा, तं अर्जुनं कार्तवीर्यार्जुनाख्यभूपं अभ्युपेत्य प्रत्युज्जगर्ज युद्धार्थितया सिंहनादं चक्रे । विष्णोर्दत्तात्रेयरूपिणः वरोऽनुग्रहस्तस्मात् प्रभवितुं पराभवितुं शीलमस्यास्तीति प्रभविष्णु, न प्रभविष्णुरप्रभविष्णुः, पराभवं प्रापयितुमशक्य इत्यर्थः, एषः अर्जुनः ब्रह्मणो यो वरस्तस्मात् अजेयं तं रावणं बबन्ध । बन्ध बन्धने लिट् । स्वप्रतिभटं कार्तवीर्यार्जुनं नारदाच्छ्रुत्वा तेन योद्धुं माहिष्मतीं प्रति गतस्तेन युद्धे पराजित्य निबद्ध्य षण्मासपर्यन्तं नर्तनागारे स्थापित इति पौराणिकी प्रसिद्धिः ॥ ३२ ॥

**(सं.चं.)** विंशद्भुजः विंशतिभुजः । प्रतना विपश्चितः विंशतिरितिवत् विंशदित्यपि प्रयुञ्जते ।अधिकं त्वस्मत्कृतायां निर्णयभावचन्द्रिकायां प्रत्नप्रयोगमीमांसायां च द्रष्टव्यम् । 'सहस्रबाहोस्तद्युद्धं विंशद्बाहोश्च दारुणम्' (३२.६०) इति च । सहस्रहस्तं सहस्रबाहुं कार्तवीर्यार्जुनमभ्युपेत्य प्रतिस्पर्धया उज्जगर्ज सिंहनादं ननाद । एषोऽर्जुनः ब्रह्मवरादजेयं तं रावणं स्वयं बद्धुमप्रभविष्णुः अप्रभुः केवलं विष्णोर्वरबलात् बबन्ध । यद्यपि भविष्णुरिति पाणिनीया लोके न मन्यन्ते । तथाहि जयादित्यः 'भुवश्च' (अ.सू.३.२.१३८) इति सूत्रव्याख्याने–'भवतेर्धातोः छन्दसि विषये तच्छीलादिष्विष्णुच् प्रत्ययो भवति । भविष्णुः' इति । क्षीरस्वामी त्वन्यथाऽऽह–'भुवश्च इतीष्णुच् । छान्दसत्वं नेष्टम् । भविष्णुः' इति । अत एव 'प्रभुता प्रभविष्णुता' इत्याह यादवप्रकाशः । उभयथाऽपि न नो दोषः । यतश्छान्दसप्रयोगप्रियो नः प्रबन्धा । 'स तं बाहुसहस्रेण बलाद् गृह्य दशाननम् । बबन्ध बलवान् राजा बलिं नारायणो यथा' (३२.६४) इति च ॥ ३२ ॥

१. **'विष्णोर्वरेणाप्रभविष्णुरेष–' । अत्र सर्वेऽपि व्याख्यातारो व्यभ्राम्यन् 'अप्रभविष्णुः, प्रभवं पराभवं प्रापयितुमशक्यः'** इति वि.भू. । **'प्रभवं पराजयं प्रापयितुमशक्यः'** इति का.श्री. । वि.ती.टीकायामपि तथा । न क्वापि प्रभवः पराभवः । नापि पराभवः प्रभवः । अशब्दार्थत्वात् । नहि पण्डिताचार्यः क्वापीदृशान् स्वप्रज्ञाकल्पितार्तानपशब्दान् प्रयुक्षीष्ट । **'विष्णोर्वरेणाप्रभविष्णुनैष–'** इति तु सर्वथाऽसङ्गतः पाठः ।

**पुलस्त्यवाचा पुनरर्ज्जुनेन मुक्तः स लीलामृगवद् दशास्यः ।**
**तथाऽप्यनिर्विण्णमतिर्बबाधे लोकान् यथा क्षुद्रमृगान् मृगारिः ॥ ३३ ॥**

**(भा.दी.) पुलस्त्येति** । अर्जुनेन, पुलस्त्यवाचा अयमस्मच्छरीरसम्बन्ध्यतो मोक्तव्य इति वाक्येन, लीलार्थं विद्यमानो यो मृगस्तद्वत् पुनः सः दशास्यः अर्जुनेन मुक्तः, तथाऽपि एतादृशीमवस्थां प्राप्तोऽपि, अनिर्विण्णा निर्वेदरहिता मतिर्यस्य स तथा रावणः, मृगारिः सिंहः क्षुद्रमृगान् शशान् यथा तथा लोकान् जनान् बबाधे । बाधृ विलोडने लिट् । रावणे कृतवीर्यात्मजेन बद्धे सति तन्मोक्षार्थिभिः प्रहस्तादिभिः पुलस्त्यनिकटं गत्वा तन्निवेद्य त्वयैवायं मोचनीयो नान्य उपायोऽस्तीति प्रार्थितेन तेनार्जुननिकटं गत्वा मृदुवचसा मोचित इति रामायणे प्रसिद्धम् ॥ ३३ ॥

**(सं.चं.)** तद् रावणबन्धनं देवैः पुलस्त्याय कथितम् । पुलस्त्यः पौत्रस्नेहात् तं मोचयितुं माहिष्मतीमागत्यार्जुनमुवाच– 'सोऽयं मृधे त्वया बद्धः पौत्रो मे रणदुर्जयः । मद्वाक्याद् याच्यमनोऽद्य मुञ्च वत्सं दशाननम्' (३३.१५–६) इति । मुक्तश्च पुलस्त्यवाचाऽर्जुनेन दशास्यः । यथा कश्चिद् बद्धं क्रीडामृगं लीलयैव मुञ्चति । तथाऽपि एवमनुभूतपराभवोऽपि अनिर्विण्णमतिः अनुपरतयुद्धश्रद्धः पुनरपि लोकान् बबाधे क्षुद्रमृगान् मृगारिः सिंह इव । क्षुद्रा इत्यल्पा दुर्बलाश्च । बाधनं प्रतिघातः ॥ ३३ ॥

**सान्ध्यं चतुःसिन्धुषु कर्म्म कुर्वन् निक्षिप्य कक्षे विजिगीषुमेनम् ।**
**वाली हरेर्भावबलात्[१] पपात विहङ्गभर्त्तेव भुजङ्गमाशु[२] ॥ ३४ ॥**

**(भा.दी.) सान्ध्यमिति** । चत्वारो ये सिन्धवः समुद्राः, तेषु सन्ध्यायाः सम्बन्धि सान्ध्यं अर्घ्यादिकर्म कुर्वन् वाली, विजेतुमिच्छति विजिगीषति, विजिगीषतीति विजिगीषुस्तम्, स्वात्मानं जेतुकाममित्यर्थः, एनं रावणम्, विहङ्गानां पक्षिणां भर्ता गरुडः, भुजङ्गमानां सर्पाणामिन्द्रमिव श्रेष्ठमिव, हरेः भावो भवनं आवेश इत्यर्थः, तस्य बलं तस्मात् । 'वालिसाम्बादयश्चैव किञ्चिदावेशिनो हरेः' इत्याद्युक्तेः । अनुग्रहातिशयबलादिति वा । कक्षो बाहुमूलं तस्मिन् । 'बाहुमूले उभे कक्षौ' इत्यमरः । निक्षिप्य, पपात समुद्रस्य तीराणि प्रति उत्पपात । प्रतिदिनमपि सन्ध्योपास्तिं चतुस्समुद्रेषु कुर्यामिति नियमवान् वाली कदाचित् दक्षिणसमुद्रतीरे सन्ध्योपास्ति-

---

१. **'हरेर्भावबलात् हर्यावेशबलात् हर्यनुग्रहातिशयबलाद् वाली रावणं जिगाय । तेन (पुरुहूतसुतः) कपित्वात्'** (म.भा.ता.नि.८.२३४) **इत्यत्र हरेर्भावबलादित्यपि पूरणीयम् । तथाच न सुग्रीवादौ व्यभिचार इत्युक्तं भवति'** इति का.श्री. । मूलहृदयमज्ञात्वैव व्याचख्यौ ।

२. **'भुजङ्गमेन्द्रम्'** इति वि.ती.पाठः । **'भुजङ्गमेशम्'** इति च क्वचित् ।

समये युद्धार्थिना समागतं रावणं कक्षे निक्षिप्य अन्यसमुद्रतीराणि गत्वा सन्ध्यामुपास्य किष्किन्धां प्रत्यागत्य तत्र चैनं मुमोच । अनन्तरं च विस्मितो दशास्यस्तेन सख्यं सम्पाद्य लङ्कां प्रत्यागत इति पौराणिकी प्रसिद्धिः ॥ ३४ ॥

**(सं.चं.)** प्रत्यहं चतुःसमुद्रेषु सान्ध्यं कर्म कुर्वन् वाली कदाचिद् दक्षिणसमुद्रतीरे सान्ध्यं वन्दनं कुर्वन्नास । रावणः शनैः पृष्ठत आगत्य तं निग्रहीतुं प्रयेते । एवमविधिना विजिगीषुमेनं वाली सहसा कक्षे निक्षिप्य समुद्रात् समुद्रं पतन् विहायसा जगाम । ततोऽवसितचतुःसिन्धुसन्ध्याकर्मा किष्किन्धामेत्य बन्धान्मुमोच । रावणस्तु– 'अहो बलमहो वीर्यमहो गाम्भीर्यमेव च । येनाहं पशुवद् गृह्य भ्रामितश्चतुरोऽर्णवान्' (३४.३७) इति विस्मयमानस्तेन सख्यसन्धानं विधाय तत्र मासमुषित्वा लङ्कां जगामेति । हरेर्भावबलात् हरेः कपेर्भावः कपित्वम् । तद्बलात् । तदुक्तं तात्पर्यनिर्णये–'पुरुहूतसुतः कपित्वात्' (८.२३४) इति । नहि कपिभिरवध्यत्वं रावणो वव्रे वरम् । न केवलं कपित्वात् । किन्तु हरेर्भावबलात् हरेर्भगवतो विशेषसन्निधान-बलाच्च । नहि कपित्वमात्रेण केनचिदितरेण कपिना स शक्यो निग्रहीतुम् । यथा विहङ्गभर्ता गरुडो भुजङ्गं स्वपादनखैर्गृहीत्वा पतति ॥ ३४ ॥

**बलिं जिगीषुं किल रावणं तं चिक्षेप दूरेऽयुतयोजनान्ते ।**
**पदाङ्गुलीमात्रत[१] एव देवो दौवारिकस्तस्य हरिर्दयालुः ॥ ३५ ॥**

**(भा.दी.) बलिमिति** । तस्य बलेः द्वारि नियुक्तो दौवारिकः, द्वारपालत्वेन स्थित इत्यर्थः, द्वारपालत्वे हेतुः दयालुरिति, दयालुः दयाशीलः देवो हरिः, बलिं बलिचक्रवर्तिनम्, जेतुमिच्छति जिगीषति, जिगीषतीति जिगीषुस्तम्, (तं) रावणं अयुतानि यानि योजनानि तेषामन्तोऽवसानं तस्मिन् दूरं दूरप्रदेशस्तस्मिन् पदस्य पादस्य केवलं अङ्गुली अङ्गुलीमात्रं तस्मादिति तत एव चिक्षेप । क्षिपु निरसने लिट् ॥ ३५ ॥

**(सं.चं.)** अथ बलिं विजिगीषू रावणः सुतळं जगाम । बलेर्भवने दयाळुर्वामनात्मा हरिर्दौवारिको बभूव । भवनान्तर्विविक्षन्तं रावणं वीक्ष्य भगवांस्तं पदाङ्गुल्यैवोत्क्षिप्य दशसहस्रयोजनान्ते चिक्षेप । सम्प्रति रामायणे त्रयोविंशादध्यायात् परमेकोऽध्यायः पठ्यते, यत्र बलिकथा, यं च वृथा प्रक्षिप्तमाहुर्व्याख्यातारः । बलि-कथाऽपि तत्र नातीव स्फुटा । तदर्थमाचार्यः स्फुटमाह निर्णये–'बलेर्द्वारस्थोऽहं वरमस्मै सम्प्रदाय पूर्वं तु । तेन मया रक्षोऽस्तं योजनमयुतं पदाङ्गुल्या' (८.२३६) इति ॥ ३५ ॥

---

१. 'पादाङ्गुलीमात्रत–'

**स वासुदेवः कपिलाभिधानो [१]मुष्टिप्रहारान्निरपातयत् तम् ।**
**युयुत्सुमम्भोधितटे दशास्यं त्रिकोटिरूपोऽस्य सुतश्च वायुः ॥ ३६ ॥**

**(भा.दी.) स** इति । कपिल इति अभिधानं नाम यस्य स तथोक्तः, कपिलावताररूप इत्यर्थः, सः वासुदेवः श्रीहरिः, अम्बोधेस्तटं तीरं तस्मिन्, योद्धुमिच्छति युयुत्सति, युयुत्सतीति युयुत्सुस्तम्, दशास्यं तं रावणं मुष्टिना यः प्रहारस्तस्मात् निरपातयत् न्यपातयत् । पतल् पतने लङ् । अस्य वासुदेवस्य सुतः, तिस्रः कोटयस्त्रिकोटयः, त्रिकोटिसङ्ख्याकानि रूपाणि यस्य स तथोक्तः वायुश्च युयुत्सुं एनं निरपातयदिति सम्बन्धः ॥ ३६ ॥

**(सं.चं.)** अथ कपिलवासुदेवस्तं पश्चिमोदधितटे द्वीपान्तरे मुष्टिना प्रहृत्य निरपातयत् । 'पश्चिमार्णवमागच्छत् सचिवैः सह राक्षसैः । द्वीपस्थो ददृशे तेन पुरुषः पावकप्रभः' इति, 'भगवान् कपिलो नाम द्वीपस्थो नर उच्यते' इति, 'तेन मुष्टिप्रहारेण स्वल्पमात्रेण लीलया । पाणिना ताडितं रक्षो निपपात महीतळे' इति च रामायणे । व्याख्यातार एतमप्यध्यायं प्रक्षिप्तं मन्यन्ते । अवैष्णवानां चापलमेतदिति नाऽदृत्यम् । आचार्यमध्वपरिगृहीतत्वाच्चैतदवसीयते । त्रिकोटिरूपोऽस्य सुतश्च वायुः तं निरपातयत् । 'दृश्यन्ते तत्र नृत्यन्त्यस्तिस्रः कोट्यो महात्मनाम् । नित्योत्सवाः शान्तभया विमलाः पावकप्रभाः' इति, 'ये तु नृत्यन्ति वै तत्र सुतास्ते तस्य धीमतः । तुल्यतेजःप्रभावास्ते कपिलस्य नरस्य वै' इति च । अस्फुटमेतद् वाल्मीकिवचनं भगवत्पादः स्फुटं व्यवृणीत– 'पुनश्च युद्धाय समाह्वयन्तं न्यपातयं रावणमेकमुष्टिना । महाबलोऽहं कपिलाख्यरूपस्त्रिकोटिरूपः पवनश्च मे सुतः' (८.२३७) इति ॥ ३६ ॥

**न रावणं हन्तुमलं जगत्यां विष्णुं विना कश्चन निश्चयोऽयम् ।**
**विना सहस्रांशुमलङ्घनीयं महान्धकारं धुनुयात् क एव ॥ ३७ ॥**

**(भा.दी.) ने**ति । जगत्यां पृथिव्यां विष्णुं विना रावणं हन्तुं कश्चन कोऽपि अलं समर्थः न, अयं अभिहितोऽर्थः, निश्चयः असन्दिग्धः । सहस्रं अंशवो यस्य स तथोक्तस्तं सूर्यं विना अलङ्घनीयं अनतिक्रमणीयं महान् योऽन्धकारस्तं क एव पुरुषः धुनुयात् विनाशयेत् । धूञ् कम्पने लिङ् ॥ ३७ ॥

**(सं.चं.)** न रावणं हन्तुमलं जगत्यां विष्णुं विना कश्चन । ब्रह्मवरगुप्तत्वात् । येऽपि तं विजिग्यिरे वालि-प्रमुखास्तेऽपि विष्णुबलाभिगुप्ताः । इत्ययं शास्त्रनिश्चयः ॥ ३७ ॥

---

१. **'मुष्टिप्रहारात् मुष्टिप्रहारं दत्वा'** इति वि.भू. । ल्यब्लोपनिमित्ता पञ्चमीत्यर्थः । ल्यबिति त्त्वाऽपि ।

**ववौ न वातोऽतितरां पुरोऽस्य बभौ न भानुः कटुकं कदाचित् ।**
**न वह्निरह्नाय ददाह हन्त [१]तद्भ्रूविजृम्भान्नियतं समस्तम् ॥ ३८ ॥**

**(भा.दी.)** एतदेवोपपादयति–**ववा**विति । अस्य रावणस्य पुरः पुरस्तात् वातः अतितरामत्यन्तं न ववौ । वातेर्लिट् । भानुः कदाचित् अस्य पुरः कटुकं तीक्ष्णं यथा भवति तथा न बभौ । वह्निः अह्नाय शीघ्रम्, अव्ययमेतत्, अस्य पुरः न ददाह । हन्त खेदे । समस्तं इतोऽतिरिक्तं सकलं जगत्, यस्य रावणस्य भ्रुवो विजृम्भो विभ्रमस्तस्मात् नियतं नियमितं आसीत् ॥ ३८ ॥

**(सं.चं.)** वातो भूतवायुर्मरीचिः, प्रवहो वा । 'अह्नाय सत्वरं च क्षिप्रं द्रुतमञ्जसा झटिति' इत्यभिधानम् । भ्रूविजृम्भात् । हेतौ पञ्चमी ॥ ३८ ॥

**स यक्षरक्षोमनुजाहिदैत्यगन्धर्वनारीः सह दानवीभिः ।**
**विभीषणेनैष[२] निवारितोऽपि जहार हा सत्कुलजाङ्गनाश्च[३] ॥ ३९ ॥**

**(भा.दी.) स** इति । स एषः रावणः, दानवीभिः दानवस्त्रीभिः सह, यक्षाश्च रक्षांसि च मनुजाश्च, अहयः सर्पास्ते च, दैत्याश्च गन्धर्वाश्च तेषां नार्य इति सप्त च तानि कुलानि च सप्तकुलानि, तेषामङ्गनाश्च विभीषणेन निवारितोऽपि, नायं धर्म इति वचसा वारितोऽपि, जहार । हा अद्भुते ॥ ३९ ॥

**(सं.चं.)** विभीषणेनैष निवारितोऽपि– 'तदेतत् कर्मणो ह्यस्य फलं पापस्य दुर्मते । अस्मिन्नेवाभिसम्प्राप्तं लोके विदितमस्तु ते' (२५.२८), 'ईदृशैस्त्वं समाचारैर्यशोर्थकुलनाशनैः । धर्षणं ज्ञातिनां ज्ञात्वा स्वमतेन विचेष्टसे' (२५.१८) इत्यादिहितवचनैर्निवारितोऽपि । 'एवं पन्नगकन्याश्च राक्षसासुरमानुषीः । यक्षदानवकन्याश्च विमाने सोऽध्यरोपयत्' (२४.३) इति च ॥ ३९ ॥

**घनस्तनीनां तनुमध्यमानां शुकालपानां शुभलोचनानाम् ।**
**चन्द्राननानां नयनाननेभ्यः श्वासाश्रुभिर्वह्निसमैर्बभूवे ॥ ४० ॥**

**(भा.दी.) घने**ति । घनौ दृढौ यौ स्तनौ तावासां स्त इति घनस्तन्यस्तासाम्, तनु सूक्ष्मं मध्यमं मध्यं यासां तथा तासाम्, शुकवदालपन्तीति शुकालपास्तासाम्, शुभलोचनानां सुन्दरलोचनानाम्, चन्द्रवत्

---

१. **'यद्भ्रूविजृम्भा–'** इति वि.ती.पाठः स्यात् । २. **'विभीषणेनैव निवा–'** ३. **'सप्तकुलाङ्गनाश्च'** इति वि.ती.पाठः ।

सुन्दराननानाम्, दानव्यादिसप्तकुलाङ्गनानां नयनानि च आननानि च तेभ्यः, निर्गतैरिति शेषः, वह्नेः समानि सदृशानि तैः, अत्युष्णैरित्यर्थः, श्वासाश्च अश्रूणि च तैः बभूवे, अभावि, भूतमित्यर्थः। भूधातोर्भावे लिट्॥ ४०॥

**(सं.चं.)** घनौ सान्द्रौ स्तनौ यासां ता घनस्तन्यः। 'स्वाङ्गाच्च–' (६.३.४०) इति वा ङीष्। 'घनं सान्द्रं घनं वाद्यं घनो मुस्तो घनोऽम्बुदः। घनः काठिन्यसङ्घातो विस्तारो लोहमुद्गरौ' इति धरणिः। नयनैरश्रूणि। आननेभ्यः श्वासाः। वह्निसमा अन्तस्तापकराः॥ ४०॥

**हा तात हा वल्लभ हा विधातर्देहान्तरं देह्यचिरान्न इत्थम्[1]।**
**सङ्क्रन्दितं तत्पुरि सुन्दरीणां नराशनानां च कृपां चकार[2] ॥ ४१ ॥**

**(भा.दी.) हे**ति। हा तात पितः, हा वल्लभ भर्तः, हा विधातः हा विधे, अस्माकं अन्यो देहो देहान्तरं तत्, न चिरमचिरं तस्मात्[3] देहि। इत्थं सुन्दरीणामपहृतस्त्रीणाम्, तस्य रावणस्य पूः पुरं तस्याम्, सङ्क्रन्दितं आक्रन्दः, नरा मनुष्या अशनं येषां ते तथा तेषां च, राक्षसानां चेत्यर्थः, कृपां चकार। अन्येषां दयां चकारेति किं वक्तव्यमित्यर्थः॥ ४१॥

**(सं.चं.)** विधातारं विशिष्य प्रार्थयन्ते– देहान्तरं देहीति। रावणस्पृष्टमिमं देहं विनाश्य देहान्तरं देहि। मरणं देहीति यावत्। तदप्यचिरात्। मा विलम्बिष्ठाः। एवं रावणापहृतानां सुन्दरीणां सङ्क्रन्दितमाक्रन्दनं नराशनानां रक्षसामपि कृपां जनयामास। नराशनानां सुन्दरीणामपीत्यपेशलं व्याख्यानम्॥ ४१॥

**सङ्क्रन्दतोर्हन्ति शिशूंश्च[4] पित्रोराश्लिष्टवत्यां तरुणं तरुण्याम्।**
**गामाग्निहोत्रीं यवसोपहूतां कोऽन्यो नृशंसो दशवक्त्रतुल्यः ॥ ४२ ॥**

**(भा.दी.) सम**िति। माता च पिता च पितरौ तयोः, सङ्क्रन्दतोः सतोः, आक्रोशनं कुर्वतोः सतोः, शिशून् पुत्रांश्च हन्ति। तरुण्यां भार्यायां तरुणं भर्तारं आश्लिष्टवत्यां आलिङ्गितवत्यां सत्यां तरुणं भर्तारं हन्ति। आग्निहोत्रीं अग्निहोत्रार्थं विद्यमानां गाम्, यवसं तृणं तस्मै तृणप्रदानार्थमित्यर्थः, उपहूतां आहूतां हन्ति। यस्मात् तस्मात् दशवक्त्रतुल्यः रावणसदृशः अन्यः नृशंसः क्रूरः कः पुरुषः? न कोऽपीत्यर्थः॥ ४२॥

१. **'–देह्यचिरात् त्वमित्थम्'**

२. **'नराशनानां राक्षसानां सुन्दरीणां स्त्रीणामपि कृपां दयां चकार उत्पादयामास'** इति का.श्री.। अस्वरसमेतद् विवरणं न मनो लगति।

३. **'अचिरात्'** इत्यव्ययमिति युक्तं वक्तुम्। ४. **'शिशून् स्वपित्रो–'**। **'शिशुं स्वपित्रो–'** इति च।

**(सं.चं.)** पित्रोः सङ्क्रन्दतोः सतोः पुरत एव तावनादृत्य शिशून् हन्ति । 'षष्ठी चानादरे' (अ.सू.२.३.३८) इति पाणिनिः । चकारात् सप्तमी च । पित्रोरिति का विभक्तिः? षष्ठी वा स्यात् । सप्तमी वा स्यात् । न स्यात् । सप्तम्येव । तरुण्यामिति संवादात् । अग्निहोत्रसम्बन्धिनीमाग्निहोत्रीं गाम् । 'घासस्तु यवसः प्रोक्तः' इत्यभिधानम् । ग्रासमुष्टिं प्रदर्श्य गां समीपमाहूय हन्ति । 'शरारुर्घातुको हिंस्रो नृशंसः क्रूरकर्मकृत्' इत्यभिधानम् । इन्द्रवज्रा च्छन्दः ॥ ४२ ॥

**एवं त्रिलोकीसरसीं विगाह्य सत्पद्मिनीं क्षोभयते खलाय ।**
**मत्ताय मांसाशिमतङ्गजाय चुकोप चण्डः किल रामसिंहः ॥ ४३ ॥**

**(भा.दी.) एवमिति** । एवमुक्तप्रकारेण, सन्त एव पद्मानि तानि अस्यां सन्तीति सत्पद्मिनी ताम्, त्रिलोक्येव सरसी सरः, तां विगाह्य निमज्य, अतिक्रम्येत्यर्थः, क्षोभयते आलोडितां कुर्वते, खलाय दुष्टाय, मत्ताय कुलादिमदेनोन्मत्ताय, मांसमशितुं शीलमस्यास्तीति मांसाशी राक्षसः, स एव मतङ्गजो गजस्तस्मै, रावणाख्यगजायेत्यर्थः, चण्डः दुष्टानामतिक्रूरः, श्रीराम एव सिंहः चुकोप किल । कुप क्रोधे लिट् । यथा समीचीनसरो विगाह्य लोडयन्तमुन्मत्तं गजं दृष्ट्वा सिंहः कुप्यति तद्वज्जगति विद्यमानसज्जनसमुदायस्य रावणतदनुबन्धिभ्यः पीडां श्रुत्वा श्रीरामश्चुकोपेति भावः ॥ ४३ ॥

**(सं.चं.)** सन्त एव पद्मानि । तद्वतीं त्रिलोकीसरसीम् । विगाह्य विलोड्य क्षोभयते मलिनयते मांसाशिने रावणाख्याय मतङ्गजाय मतङ्गजा न मांसाशिनः । अयं पुनरहो मांसाशी मतङ्गजो बभूव । तस्मै चुकोप । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' (अ.सू.१.४.३७) इति चतुर्थी । दुष्टेषु चण्डस्तीक्ष्णः रामसिंहः । सिंहस्तु स्वभावतश्चण्डः ॥ ४३ ॥

**स चित्रकूटे वसतो मुनीन्द्रानातङ्किनो रावणकिङ्करेभ्यः ।**
**सम्भ्रान्तचित्तान् द्रवतो विलोक्य दयां[1] दयालुर्विपुलां चकार ॥ ४४ ॥**

**(भा.दी.) स** इति । दयालुः दयाशीलः सः श्रीरामः, चित्रकूटश्चित्रकूटगिरिस्तस्मिन् वसन्तस्तान्, रावणस्य ये किङ्कराः खरप्रभृतयस्तेभ्यः आतङ्क एषामस्तीत्यातङ्किनः, भीतियुक्तानित्यर्थः, अत एव सम्भ्रान्तं कर्तव्यमूढतयाऽनवस्थितं चित्तं येषां ते तथा तान्, अत एव यत्रकुत्रचिद् द्रवतः मुनीन्द्रान् विलोक्य विपुलां भूयसीं दयां चकार ॥ ४४ ॥

---

१. **'दयां तद्दुःखनिवृत्तीच्छाम्'** इति का.श्री. ।

**(सं.चं.)** रावणः कथं रामस्य शत्रुः? आह– स चित्रकूटे । अपायशङ्का आतङ्कः, भयं वा । 'आतङ्को भयमाशङ्का' इत्यभिधानम् । रावणकिङ्करेभ्यः खरदूषणत्रिशिरःप्रमुखेभ्यः चतुर्दशभ्यश्चतुर्दशसहस्रेभ्यश्च । सम्भ्रान्तचित्तान् किङ्कर्तव्यमिति निश्चेतुमप्रभवतश्चलितचित्तान् । तं देशं विहायान्यत्र द्रवतो जिगमिषून् । इयमत्र पूर्वकथा– रावणजैत्रयात्रायां शूर्पणखाभर्ता विद्युज्जिह्वोऽपि सहचर आसीत् । कस्मिंश्चित् कदनेऽकस्माद् रावणस्तमावुत्तं परपक्षीय इति भ्रान्त्या निजघान । युद्धान्निवृत्तं तमेत्य शूर्पणखा जगर्हे–'ननु नाम त्वया रक्ष्यो जामाता समरेष्वपि । स त्वया निहतो युद्धे स्वयमेव न लज्जसे' (२४.३०) इति । स तु तां सान्त्वयन्नाह– 'नावगच्छामि युद्धेषु स्वान् परान् वाऽप्यहं शुभे' (२४.३३) । 'तस्माद् युद्धोन्मादजनितः प्रमादोऽयम् । तदिदानीं दानमानैस्त्वां प्रसादयामि । इतः परं दण्डकारण्यं तव राज्यम् । तत्र वस खरदूषणाभ्यां मातृष्वसेयाभ्यां यथेच्छं विहरन्ती । त्रिशिराश्च तयोः सहचरो भवति । चतुर्दश सेनाप्रमुखा राक्षसाः । चतुर्दश सहस्राणि च सैनिकाः । त्वमेव तत्र सम्राज्ञी' इति । तेन दक्षिणभारते स्वराज्यशाखां स्थापयामास रावणः । स्थापयित्वा च ऋषीन् बबाधे । तेन चुकोप राम इति ॥ ४४ ॥

**दशमुखवधनाट्यपूर्वरङ्गं खरमुखमूर्खकुलप्रमापणाख्यम् ।**
**भुवनरसकरं विधातुमायाद् द्रुतमथ दण्डकमण्डलं स रामः ॥ ४५ ॥**

**इति श्रीनारायणपण्डिताचार्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**अरण्यकाण्डे प्रथमः सर्गः ॥**

—०—

**(भा.दी.)** दशेति । अथ सः श्रीरामः, भुवने जगति यो रसः सारभूतं सुखं तं करोतीति तथा तम्, खरः खराख्यराक्षसः मुखं प्रधानो येषां ते तथोक्ताः, ते च ते मूर्खाश्च तेषां दूषणादीनां कुलं समूहः, तस्य प्रमापणं विनाशः, तदिति आख्या नाम यस्य स तथा तम्, दशमुखस्य रावणस्य यो वधः सः नाट्यमिव, तस्य यः पूर्वरङ्गः, आदौ क्रियमाणनर्तनं तम्, 'आदावेव च यन्नाट्यं पूर्वरङ्गः स उच्यते' इति हलायुधः । विधातुं द्रुतं शीघ्रं यथा भवति तथा, दण्डकस्य दण्डकारण्यस्य मण्डलं प्रदेशस्तत्, आयात् आगच्छत् । यथा करिष्यमाणातिविचित्रनर्तनाभिरुचिव्युत्पादनार्थं पूर्वरङ्गः क्रियते तद्वद् रावणादिवधे कारणभूतं खरादिसंहारं कर्तुं दण्डकारण्यं प्रति जगामेति भावः ॥ ४५ ॥

**इति श्रीविश्वपतितीर्थकृतायां श्रीसङ्ग्रहरामायणव्याख्यायां**
**भावार्थदीपिकायामरण्यकाण्डे प्रथमः सर्गः ॥**

**(सं.चं.)** पुष्पिताग्रया सर्गमुपसंहरति– दशमुखवधनाट्यपूर्वरङ्गम्। पूर्वरङ्गः प्रस्तावना। प्रधाननाट्यप्रारम्भात् पूर्वं यन्माङ्गलिकतायै नान्दीनाट्यं क्रियते सोऽपि पूर्वरङ्गः। 'आदावेव तु यन्नाट्यं पूर्वरङ्गः स उच्यते' इत्यभिधानम्। पूर्वरङ्गः प्रधाननाट्यावलोकनाय रसं रुचिं जनयतीति रसकरः। अयं च दशमुखवधाख्यनाट्यस्य खरादिवधाख्यः पूर्वरङ्गः त्रिभुवनस्य रसकरः सुखकरः। 'घातनं प्रशमनं प्रमापणम्' इत्यभिधानम्। दण्डकमण्डलं दण्डकारण्यप्रदेशम्, दक्षिणभारतभूमिभागम्। पुष्पिताग्रा च्छन्द इत्युक्तम्। तथाहि हलायुधः– 'यस्य प्रथमे पादे नकारौ रेफयकारौ च, द्वितीये नकारजकारौ जकाररेफौ गकारश्च तद् वृत्तं पुष्पिताग्रा नाम' इति। 'पुष्पिताग्रा नौ र्यौ न्जौ ज्रौ ग्' इति पिङ्गलसूत्रम्॥ ४५॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामरण्यकाण्डे प्रथमसर्गविवरणम्॥**

—०—

[आदितः श्लोकाः– ११२४+४५=११६९]

# द्वितीयः सर्ग्गः

**महर्षिष्वपयातेषु चित्रकूटाद् विनिर्ग्गतः ।**
**ससीतालक्ष्मणः प्रायादत्रेराश्रममश्रमः ॥ १ ॥**

**(भा.दी.)** श्रीरामस्य चित्रकूटाद् दण्डकारण्यं प्रत्यागमनक्रमं दर्शयति– **महर्षिष्वि**त्यादिना । महान्तश्च ते ऋषयश्च तेषु, राक्षसैः क्रियमाणपीडां श्रीरामं प्रति विज्ञाप्य, चित्रकूटात् स्वकीयाश्रमात्, अपयातेषु प्रतिगतेषु सत्सु, चित्रकूटात् विनिर्गतः, न विद्यते प्रवासनिमित्तश्रमो यस्य स तथा श्रीरामः, सीता च लक्ष्मणश्च ताभ्यां सहितः सन्, अत्रेः ऋषेः आश्रमो मुनिवासस्तं प्रति प्रायात् ॥ १ ॥

**(सं.चं.)** अथायोध्याकाण्डकथाशेषमाह– महर्षिषु । अपयातेषु स्वस्वमाश्रमम् । दण्डकारण्यमार्गे स्थित-मत्रेराश्रमम् ॥ १ ॥

**जगतां पितरौ पश्यन्नत्रिर्य्युक्तोऽनसूयया ।**
**सभाजयामास भृशं कृतार्त्थो भक्तिपूरितः ॥ २ ॥**

**(भा.दी.) जगतामि**ति । जगतां माता च पिता च पितरौ, सीतारामौ पश्यन्, अनसूयया अनसूयाख्यया भार्यया युक्तः, भक्त्या पूरितः पूर्णः, अत एव च कृतः अर्थः प्रयोजनं येन स तथा, श्रीरामदर्शनेन कृतार्थ इत्यर्थः, अत्रिः भृशं यथा भवति तथा, सभाजयामास सम्प्रीणयामास । सभाज प्रीतिसेवनयोः लिट् ॥२॥

**(सं.चं.)** सभाजयामास सत्कारैः सिषेवे । न बाधन्ते त्रीणि तमित्यत्रिः । कानि त्रीणि? अविद्याकाम-कर्माणि त्रीणि । कामक्रोधलोभाख्यानि नरकद्वाराणि त्रीणि । अकारवाच्यभगवद्विषयाण्येव त्रीणि तस्येति चात्रिः । कानि पुनरेतानि त्रीणि? ज्ञानभक्तिवैराग्याणि । भगवदर्थमन्यत्र वैराग्यम् ॥ २–३ ॥

**पृष्टाऽनसूयया तत्र प्रोवाच परमेश्वरी ।**
**आत्मस्वयम्बरकथां[१] रामवीर्य्यप्रकाशिनीम् ॥ ३ ॥**

**(भा.दी.) पृष्टेति** । तत्र आश्रमे अनसूयया पृष्टा, तव स्वयंवरः कथं निर्वृत्त इति विचारिता, परमाणामुत्तमानां ब्रह्मादीनामीश्वरी स्वामिनी सीता, श्रीरामस्य यद्वीर्यमीश्वरधनुःखण्डनादिरूपं तत्प्रकाशयितुं शीलमस्या अस्तीति तथा ताम्, आत्मनः स्वस्याः[२] यः स्वयंवरस्तस्य कथां प्रोवाच ॥ ३ ॥

**अत्रिपत्न्या तदा दत्तैः स्रगाकल्पानुलेपनैः[३] ।**
**अलङ्कृता रराजालं[४] देवी प्रकृतिशोभना ॥ ४ ॥**

**(भा.दी.) अत्रीति** । अत्रेः पत्नी तया अनसूयया तदा दत्तैः, स्रक् च, आकल्पा आभरणानि च, अनुलेपनानि चन्दनादीनि च तैः, अलङ्कृता, प्रकृत्या स्वभावेन शोभना मनोहरा, देवी सीता अलं सम्यक् रराज ॥४॥

**(सं.चं.)** स्रगाकल्पानुपलेपनैः । 'इदं दिव्यं वरं माल्यं वस्त्रमाभरणानि च । अङ्गरागं च वैदेहि महार्हं चानुलेपनम्' (अयो.कां.११८.१८) इति च ॥ ४–५ ॥

**तस्यां रात्र्यां व्यतीतायामापृच्छ्य मुनिपुङ्गवम् ।**
**प्राविशत् पुण्डरीकाक्षो दण्डकारण्यमण्डलम् ॥ ५ ॥**

**(भा.दी.) तस्यामिति** । पुण्डरीकवत् कमलवदक्षिणी यस्य स तथोक्तः श्रीरामः, तस्यां रात्र्यां व्यतीताया-मतीतायां सत्याम्, मुनिषु पुङ्गवः श्रेष्ठस्तं अत्रिं आपृच्छ्य, दण्डकारण्यस्य मण्डलं प्रदेशस्तत् प्राविशत् ॥५॥

**ज्ञानिनः कर्म्मिणश्चात्र वेदवेदाङ्गपारगाः[५] ।**
**ब्राह्मणा ब्रह्मणस्तातं प्रेक्षन्ते स्म सहस्रशः ॥ ६ ॥**

**(भा.दी.) ज्ञानीति** । अत्र दण्डकारण्ये, भगवद्विषयकं ज्ञानमेषामस्तीति ज्ञानिनः, सनकादिवत् ज्ञानप्रधाना इत्यर्थः, भगवदाराधनादिरूपं कर्म येषामस्तीति कर्मिणः, जनकादिवत् कर्मप्रधाना इत्यर्थः, वेदाश्च वेदाङ्गानि

---

१. **'स्वयंवरकथाम्'** २. **'स्वस्य'** इति युक्तम् । ३. **'स्रगाकल्पोपलेपनैः'**
४. **'अलङ्कृताऽराजदियं देवी'** ५. **'वेदवेदान्तपारगाः'**

च तेषां पारमवसानं गच्छन्तीति तथा, सहस्रशः सहस्रसङ्ख्याकाः ब्राह्मणाः, ब्रह्मणश्चतुर्मुखस्य तातं श्रीरामं प्रेक्षन्ते स्म अपश्यन् ॥ ६ ॥

**(सं.चं.)**सर्वेऽपि कर्मिणो ज्ञानिनः । सर्वेऽपि ज्ञानिनः कर्मिणः । नहि ज्ञानकर्मणोर्गोव्याघ्रयोरिव विरोध इति सर्वेऽपि विद्वांसो वेदमर्मज्ञा मन्यन्ते । तत् किमिदं ज्ञानिनः कर्मिण इति विभज्य कथ्यते । प्राधान्य-विवक्षयेदम् । ज्ञानयोगप्रधानाः कर्मिणो ज्ञानिन उच्यन्ते । न त्यक्तकर्माणः । कर्मयोगप्रधाना ज्ञानिनः कर्मिण उच्यन्ते । न त्यक्तज्ञानमार्गाः । ब्रह्मणस्तातं पितरम् । सहस्रशः 'ಸಾವಿರಾರು' इति भाषायाम् ॥ ६–८ ॥

**कमलानुगतं देवं कमलायतलोचनम् ।**
**बिम्बोष्ठं कम्बुकण्ठं तं दृष्ट्वा हृष्टा[१] महर्षयः ॥ ७ ॥**

**(भा.दी.) कमले**ति । महान्तश्च ते ऋषयश्च ते, कमलया महालक्ष्मीस्वरूपया अनुगतम्, कमलवदायते विशाले लोचने यस्य स तथा तम्, बिम्बवद् बिम्बपक्वफलवदोष्ठौ यस्य स तथा तम्, कम्बुवत् शङ्खवत् त्रिरेखान्वितः कण्ठो यस्य स तथा तम्, देवं श्रीरामं दृष्ट्वा, हृष्टाः सन्तुष्टाः आसन् ॥ ७ ॥

**सुकृतानां कृतानां नः सर्वेषां फलमागतम् ।**
**रामसन्दर्शनादित्थं मुनयोऽकथयन्मिथः ॥ ८ ॥**

**(भा.दी.) सुकृते**ति । सर्वेषां नः अस्माकं सुष्ठु कृतानि सुकृतानि तेषां कृतानां भगवदाराधनादि-कर्मणाम् – 'नपुंसके भावे क्तः' (अ.सू.३.३.११४) इति क्तः । श्रीरामस्य यत् सन्दर्शनं तस्मात्, परम-त्वरया कर्मासाध्येश्वरसाक्षात्कारद्वारा[२] सन्मोक्षलक्षणं फलं आगतं सम्प्राप्तम् । इत्थं मुनयः मिथः अकथ-यन् । कथ वाक्यप्रबन्धे लङ् । यद्वा रामसन्दर्शनात् निमित्तात् सर्वेषां नः कृतानां फलं दर्शनलक्षणं फलं आगतमिति वा योजना । अस्मत्सुकृतेन त्वद्दर्शनं जातमिति भावः ॥ ८ ॥

**सपर्य्यां सुरवर्य्यस्य विधाय विधिना ततः ।**
**विप्राः प्राञ्जलयः प्रोचुर्भक्तिगद्गदभाषिणः ॥ ९ ॥**

---

१. 'दृष्ट्वा तुष्टा–'

२. नातिस्फुटमिदं वाक्यम् ।

**(भा.दी.) सपर्यामि**ति । ततः विप्राः विधिना, सुरेषु वर्यस्य श्रेष्ठस्य श्रीरामस्य, सपर्यां अर्घ्यादिरूपपूजां विधाय, प्रकृष्टः अञ्जलिर्येषां ते तथा सन्तः, भक्त्या गद्गदं अस्पष्टाक्षरं यथा भवति तथा भाषितुं शील-मेषामस्तीति तथा सन्तः प्रोचुः ॥ ९ ॥

**(सं.चं.)** सपर्यां सत्कारम् ॥ ९ ॥

**लोकनाथ सनाथाः स्मो भवता करुणावता ।**
**संसारात् पालयन् लोकान् रावणादपि पालय ॥ १० ॥**

**(भा.दी.) लोके**ति । हे लोकनाथ श्रीराम, करुणा दया अस्यास्तीति तथा तेन भवता, सनाथाः स्मः भवामः । लोकान् सज्जनान्, संसारो जननमरणादिलक्षणस्तस्मात्, मोक्षदानेन पालयन् त्वं इदानीं रावणादपि पालय । पा रक्षणे लोट् ॥ १० ॥

**(सं.चं.)** ज्ञानिलोकान् संसारादुन्मुच्य मोक्षदानेन पालयसि । एवं साधुलोकानपि रावणपीडातः परि-पालय । 'न्यस्तदण्डा वयं राजन् जितक्रोधा जितेन्द्रियाः । रक्षितव्यास्त्वया शश्वद् गर्भभूतास्तपोधनाः' (अर.कां.१.२१) इति च ॥ १०–११ ॥

**इति तैरर्थितस्तत्र[१] तां निशामावसन्[२] प्रभुः ।**
**सदारसोदरः प्रायादुदारगुणवारिधिः ॥ ११ ॥**

**(भा.दी.) इती**ति । तत्र दण्डकारण्ये तैर्मुनिभिः इति अर्थितः, तां निशां आवसन् प्रभुः, उदारा महान्तो ये गुणास्तैर्वारिधिरिव वारिधिः श्रीरामः, दाराश्च सोदरश्च ताभ्यां सहितः सन्, सीतालक्ष्मणाभ्यां सहितः सन्नित्यर्थः, प्रायात् ॥ ११ ॥

**तत्रैव दण्डकारण्ये[३] स विवेशाऽश्रमान्तरम् ।**
**जीर्णाङ्गं शरभङ्गाख्यं तत्र प्रैक्षत तापसम् ॥ १२ ॥**

**(भा.दी.) तत्रे**ति । सः श्रीरामः, तत्रैव दण्डकारण्य एव, अन्य आश्रम आश्रमान्तरं तत् विवेश । तत्र शरभङ्गाश्रमे जीर्णं जराग्रस्तमङ्गं शरीरं यस्य स तथा तम्, शरभङ्ग इति आख्या यस्य स तथा तम्, तापसं मुनिं प्रैक्षत ॥ १२ ॥

---

१. **'तैरर्चितस्तत्र'** २. **'निशामावसत्'** इति, **'निशामवसत्'** इति च क्वचित् । ३. **'दण्डकवने स–'**

**(सं.चं.)** जीर्णाङ्गं जीर्णकायम् । 'अङ्गं वपुर्वर्ष्म पुरं च पिण्डम्' इत्यभिधानम् ॥ १२–४ ॥

**वानप्रस्थोऽसमर्थोसावग्निहोत्रप्रवर्त्तने ।**
**देहं जिहासुः[१] सम्पूज्य रामं[२] हृष्टोऽब्रवीदिदम् ॥ १३ ॥**

**(भा.दी.) वाने**ति । वानप्रस्थः वानप्रस्थाश्रमवान्, अग्निहोत्रस्य यत् प्रवर्तनं करणं तस्मिन् असमर्थः, अत एव देहः शरीरं तं हातुमिच्छति जिहासति, जिहासतीति जिहासुः, असौ शरभङ्गः, श्रीरामं सम्पूज्य हृष्टः सन् इदं वचः अब्रवीत् ॥ १३ ॥

**पुण्यश्लोक प्रसीद त्वं राम राजीवलोचन ।**
**मुहूर्त्तं स्थीयतामत्र भूयानयमनुग्रहः ॥ १४ ॥**

**(भा.दी.) पुण्ये**ति । पुण्यः श्लोकः कीर्तिर्यस्य तत्सम्बुद्धिः । राजीववत् कमलवल्लोचने यस्य तत्सम्बुद्धिः । श्रीराम, त्वं प्रसीद प्रसन्नो भव । अत्र मदीयाश्रमे मुहूर्तो मुहूर्तकालस्तम्, मुहूर्तकाल इत्यर्थः, स्थीयताम्, अयं भूयान् महान् अनुग्रहः ॥ १४ ॥

**इत्युक्त्वा [३]ज्वालयित्वाऽग्निं हुत्वा देहं प्रभोः पुरः ।**
**मन्त्रपूतं हविरिव प्रययौ स हरेः पदम् ॥ १५ ॥**

**(भा.दी.) इती**ति । सः शरभङ्गः इति उक्त्वा, प्रभोः श्रीरामस्य पुरः पुरस्तात् अग्निं ज्वालयित्वा, देहः स्वशरीरं तम्, मन्त्रेण पूतं पवित्रं तत् हविरिव हुत्वा, हरेः पदं वैकुण्ठं स्थानं तत् प्रययौ ॥ १५ ॥

**(सं.चं.)** ज्वालयित्वा । ज्वलतेर्णिचि चत्वारि रूपाणि– ज्वलयति ज्वलयते ज्वालयति ज्वालयते । तेन क्त्वायोगेऽपि रूपद्वयम्– ज्वलयित्वा ज्वालयित्वा । हरेः पदम्, हरेः स्थानम्, यद् विष्णोः परमं पदं मोक्षाख्यम् ॥ १५ ॥

**मङ्गलं शरभङ्गस्य कृत्वा मङ्गलकीर्त्तनः[४] ।**
**विजगाहेऽतिगहनं तथैव[५] विपिनान्तरम् ॥ १६ ॥**

---

१. **'अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः। भृग्वग्निजलसम्पातैर्मरणं प्रविधीयते'** इति स्मृतेर्देहं जिहासुरित्युक्तम्। भृगुसम्पातो नाम पर्वतात् पतनम्' इति का.श्री. ।
२. **'रामं दृष्ट्वाऽब्रवीदिदम्'**
३. **'ज्वलयित्वाऽग्निम्'**
४. **'मङ्गलं श्रोतॄणामुच्चारणं कुर्वतां वा मङ्गलकरं कीर्तनं राम इति यस्य स मङ्गलकीर्तनः'** इति का.श्री. ।
५. **'तत्रैव'**

**(भा.दी.) मङ्गलमि**ति । मङ्गलं कल्याणकरं कीर्तनं नाम यस्य स तथा श्रीरामः, शरभङ्गस्य मोक्षप्रदान-लक्षणं यन्मङ्गलं तत् कृत्वा, तथैव पूर्ववदेव, अत्यन्तं गहनमतिगहनम्, अन्यद्विपिनं विपिनान्तरं तत् विजगाहे विवेश । गाहू विलोडने लिट् ॥ १६ ॥

**(सं.चं.)** मङ्गलं नित्यसुखप्राप्तिरूपम् । मङ्गलं सुखसाधनं कीर्तनं यस्य । अतिगहनमतिदुर्गमम् । विजगाहे प्रविवेश । यद्यपि गाहनं जलान्तःप्रवेशः । गाहतेऽम्भः । अत्रान्तःप्रवेशमात्रं पदार्थः कवीनामेष स्वभावो यदन्यधर्मानन्दत्रारोप्य रमन्ते रमयन्ति च । केचिद् गाह प्रवेशने इति धातुं पठन्ति ॥ १६ ॥

**विराधं दृष्टवान् वीरो मुनिमांसाशिनं वने ।**
**अष्टौ सिंहान् विनिर्भिद्य शूलेनाऽक्रम्य च स्थितम् ॥ १७ ॥**

**(भा.दी.) विराधमि**ति । वीरः श्रीरामः, वने मुनीनां यानि मांसानि तानि अशितुं शीलमस्यास्तीति तथा तम्, अष्टौ सिंहान् शूलं शूलाख्यायुधं तेन विनिर्भिद्य आक्रम्य आरोप्य च स्थितम्, आक्रम्य मार्गं निरुध्यावस्थितमिति वा, विराधनामकं राक्षसं दृष्टवान् ॥ १७ ॥

**(सं.चं.)** विराधं दृष्टवान् । यद्यपि विराधप्रसङ्गानन्तरं शरभङ्गप्रसङ्गो रामायणे पठ्यते । अथाप्यत्र पाठ-क्रमादर्थक्रमो बलीयानिति व्यत्यस्य पपाठ । तथाहि तात्पर्यनिर्णये । शूलेन विनिर्भिद्य तान् शूलेनैवाऽक्रम्य अवसज्य च स्थितम् । यद्यपि रामायणे– 'त्रीन् सिंहांश्चतुरो व्याघ्रान् द्वौ वृकौ पृषतान् दश । सविषाणं वसादिग्धं गजस्य च शिरो महत्'(२.७) इति पठ्यते । 'अष्टौ सिंहान्' इति तु मूलरामायणादि-ग्रन्थान्तरोदितमिति भाति । रामायणं तु क्रौर्यातिशयोपलक्षणम् । एकदा सिंहानन्यदा व्याघ्रानवसज्येति व्याख्येयम् । रामदर्शनकाले त्वष्टौ सिंहान् ॥ १७ ॥

**शम्भोर्वरादवध्यो[१]ऽसौ राक्षसो रूक्षविग्रहः ।**
**उपद्रुत्य क्षणात् सीतामादायाऽकाशमापतत् ॥ १८ ॥**

**(भा.दी.) शम्भोरि**ति । शम्भोश्चतुर्मुखस्य यो वरस्तस्मात् अवध्यः, रूक्षो भयङ्करो विग्रहः शरीरं यस्य स तथा, असौ राक्षसः, क्षणकालस्तस्मात्, उपद्रुत्य समीपमागत्य, सीतां आदाय, आकाशो गगनम्, तं प्रति आपतत् जगाम । पत्लृ पतने लङ् ॥ १८ ॥

---

१. **'अवध्यः रामादन्येन हन्तुमशक्यः'** इति का.श्री. ।

**(सं.चं.)** शम्भोर्वरादवध्यः । 'तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च' (३.६) इति विराधवचनं वाल्मीकीये । 'नाम्ना विराधमपि शर्ववरादवध्यम्' (ता.नि.५.२०) इति भगवत्पादवचनं निर्णये । तदुभयसङ्गमनाय 'शम्भोर्वरात्' इति । शम्भुरिति ब्रह्मा । शम्भुरिति शर्वः । उभयोरपि वरादित्यर्थः । 'शम्भुः स्वयम्भूर्द्रुहिणश्चतुर्वक्त्रः प्रजापतिः' इति, 'शर्वः शम्भुरुमापतिः' इति चाभिधानम् । शस्त्रेणाभेद्यत्वं शर्वदत्तम् । अवध्यत्वं ब्रह्मदत्तम् । अधिकमस्मत्कृतनिर्णयभावचन्द्रिकायाम् । रूक्षविग्रहो घोरदर्शनः । उपद्रुत्य समीपमागत्य । क्षणात् । किं घटिष्यतीत्यालोचयितुमप्यदत्तावसरं सापद्यं क्षणशब्दार्थः । सीतामादाय । 'अङ्केनाऽदाय वैदेहीमपक्रम्य ततोऽब्रवीत्' (२.१०)इति च । अपक्रम्येति निर्गमनमुच्यते । नच तद्युक्तम् । अतस्तद्भावमाह– आकाशमापतदिति । 'ततः स्वबलवीर्येण खमुत्पत्य निशाचरः' (३.२४) इति चोपरि ॥ १८ ॥

**क्रूरक्रियं क्रूरवाचं क्रूरं[१] दृष्ट्वाऽथ राक्षसम् ।**
**शरैः शरीरं सौमित्रिस्तस्य शीघ्रमदारयत् ॥ १९ ॥**

**(भा.दी.)** **क्रूरे**ति । अथ सौमित्रिः लक्ष्मणः, क्रूरा क्रिया यस्य स तथा तम्, क्रूरा भयङ्करा वाक् यस्य स तथा तम्, क्रूरं राक्षसं दृष्ट्वा, तस्य राक्षसस्य शरीरं देहस्तत्, शराः सायकास्तैः, शीघ्रं यथा भवति तथा अदारयत् ॥ १९ ॥

**(सं.चं.)** स्वभावतश्च क्रूरम् । एतेन त्रिकरणक्रौर्यमाह । तेन दर्शनेऽपि क्रूरम् । बीभत्सदर्शनम् । भीरूणां भयजननम् । रूक्षदर्शनमित्यस्य विवरणमेतत् ॥ १९ ॥

**अविचिन्त्य शराञ् शूलं राक्षसः क्षिप्रमाक्षिपत् ।**
**लक्ष्मणायाथ तद् रामः शराभ्यां समशातयत् ॥ २० ॥**

**(भा.दी.)** **अविचिन्त्ये**ति । राक्षसः शरान् अविचिन्त्य अविगणय्य, शूलं शूलाख्यायुधम्, लक्ष्मणाय क्षिप्रं यथा भवति तथा आक्षिपत् चिक्षेप । क्षिप प्रहरणे लङ् । अथ श्रीरामः तत् शूलाख्यमायुधं तत्, शराभ्यां समशातयत् चिच्छेद । शो तनूकरणे लङ्[२] ॥ २० ॥

---

१. **'क्रूरं क्रूरशरीरम्'** इति का.श्री. ।
२. **'शद्लृ शातने'** इति युक्तः पाठ इत्युक्तम् ।

**(सं.चं.)**अशातयत् व्यनाशयत् । शद्लृ शातने । 'शदेरगतौ तः' (अ.सू.७.३.४२) इति पाणिनिः । 'शदेरङ्गस्यागतावर्थे वर्तमानस्य तकारादेशो भवति णौ परतः । पुष्पाणि शातयति । अगताविति किम्? गाः शादयति गोपालकः' इति वामनः ॥ २० ॥

**[१]स्वांसमारोपयत् सोऽत्तुं राघवौ राक्षसः क्षणात् ।**
**भ्रातरौ खड्गिनौ तस्य खण्डयामासतुर्भुजौ ॥ २१ ॥**

**(भा.दी.) स्वांसाविति** । सः राक्षसः राघवौ रामलक्ष्मणौ अत्तुम्, स्वस्य यौ अंसौ स्कन्धौ तौ, आरोपयत् आरोहयत् । रूप उपरिभावे लङ् । खड्गौ अनयोः स्त इति तथोक्तौ, भ्रातरौ श्रीरामलक्ष्मणौ, तस्य विराधस्य भुजौ, क्षणः क्षणमात्रं तस्मात्, खण्डयामासतुः चिच्छिदतुः । खडि भेदे लिट् ॥ २१ ॥

**(सं.चं.)** स्वांसमारोपयत् । 'तावारोप्य ततः स्कन्धं राघवौ रजनीचरः । विराधो विनदन् घोरं जगामाभिमुखो वनम्' (३.२५) इति च । खण्डयामासतुर्भुजौ । 'तस्य रौद्रस्य सौमित्रिर्बाहुं सव्यं बभञ्ज ह । रामस्तु दक्षिणं बाहुं तरसा तस्य रक्षसः' (४.५) इति च ॥ २१ ॥

**स रामशरसंविद्धो विराममवशो व्रजन्[२] ।**
**प्राञ्जलिः कञ्जपत्राक्षं संस्मृतिर्वाक्यमुक्तवान्[३] ॥ २२ ॥**

**(भा.दी.) स** इति । श्रीरामस्य ये शरास्तैः सम्यक् विद्धः सः विराधः, अवशः परवशः सन्, विरामो मरणम्, तं अव्रजत् जगाम । व्रजेर्लङ् । सम्यक् स्मृतिः पूर्वजन्मस्मरणं यस्य स तथा, सः प्राञ्जलिः सन्, कञ्जस्य कमलस्य ये पत्रे तद्वदक्षिणी यस्य स तथा, तं श्रीरामं प्रति वाक्यं वचस्तत् उक्तवान् ॥ २२ ॥

**(सं.चं.)** विरामं शापाद् विरामम्, प्रतिरोधशक्तिविरामम्, तस्माद् राक्षसदेहाच्च विरामम् । संस्मृतिः समागतस्मृतिः । 'सस्मृतिः' इति पाठः स्यादिति भाति ॥ २२–३ ॥

**जय देव[४] रमाकान्त जाने त्वां भक्तवत्सलम्[५] ।**
**तुम्बुरुस्तव दासोऽहं राक्षसीं योनिमागतः ॥ २३ ॥**

---

१. **'स्वांसावारोपयत्'** इति वि.ती.पाठः। २. **'विराममवशोऽव्रजत्'** इति वि.ती.पाठः। ३. **'संस्मृतिर्वाक्यमब्रवीत्'**
४. **'जय राम रमाकान्त'** ५. **'भक्तवत्सल'**

**(भा.दी.)** **जये**ति । रमाकान्त रमाभर्तः, देव श्रीराम, जय उत्कृष्टतया वर्तस्व, त्वां भक्तेषु वत्सलः प्रियः, तं जाने । ज्ञा अवबोधने लट् । रक्षसः राक्षसस्य सम्बन्धिनी राक्षसी, तां योनिं आगतः अहं तव दासः तुम्बुरुः, तुम्बुरुनामकगन्धर्वः अस्मि ॥ २३ ॥

**शप्तो वित्तेश्वरेणाहमुर्वशीसङ्गमागसः ।**
**[1]तद्दत्तः शापमोक्षश्च [2]तत्प्रसादोऽयमागतः ॥ २४ ॥**

**(भा.दी.)** राक्षसयोनिप्राप्तौ किं कारणमित्यत आह– **शप्त** इति । उर्वश्या यः सङ्गमः मिथुनीभावलक्षणः स एवाऽगः अपराधस्तस्मात्, अहं वित्तेश्वरेण वैश्रवणेन शप्तः देवैकोपभोग्यस्त्रीसम्भोगाद् राक्षसीं योनिं गच्छेति शप्तः अस्मि । तेन वैश्रवणेन दत्तः शापस्य मोक्षो यस्मात् स तथोक्तः अयं वधलक्षणः तत्प्रसादः आगतश्च । यदा दाशरथी रामस्त्वां वधिष्यति तदा निजं पदं प्राप्स्यसीति वैश्रवणेन तुम्बुरुप्रार्थनयोक्तत्वादिति भावः ॥ २४ ॥

**(सं.चं.)** उर्वशीसङ्गमरूपादागसः अपराधात् । रामायणे तु–'इति वैश्रवणो राजा रम्भासक्तं पुराऽनघ । अनुपस्थीयमानो मां सङ्क्रुद्धो व्याजहार ह' (४.१९) इति पठ्यते । निर्णये तु–'गन्धर्वमुर्वशिरतेरथ यातुधानीम् । प्राप्तं दशाम्–' (ता.नि.५.२०) इति पठ्यते । सङ्ग्रहकृदपि निर्णयवचनमनुसरन्–'उर्वशीसङ्गमागसः' इत्येवाऽह । अनिर्णये हि निर्णयेन निर्णीयते । निर्णयस्य बहुग्रन्थानुसारित्वात् । तर्हि वाल्मीकिवचनं किमप्रमाणम्? न भोः । उभयमपि वयं सङ्गमयामः । रम्भारतेरुर्वशीरतेश्च शापमापेति । प्रथमं रम्भासङ्गमः । तेन चुक्रोध धनदः । न सपदि शशाप । अत एव रामायणे 'रम्भासक्तं पुरा' इत्युदितम् । अथोर्वशीरतो बभूव । तदैव शापमाप । अत एव निर्णये–'सपदि यातुधानीं दशां प्राप्तम्' इत्युक्तम् । 'उर्वशिरतेरथ' इत्यथशब्दोऽप्येतमेवार्थं गमयति– अथ रम्भासम्भोगानन्तरं पुनरुर्वशिरतेरिति । 'यदा दाशरथी रामस्त्वां वधिष्यति संयुगे । तदा प्रकृतिमापन्नो भवान् स्वर्गं गमिष्यति' (४.१८) इति कुबेरेणैव दत्तशापमोक्षश्च । तत् तस्मादेव कारणात् भवद्दर्शनरूपः प्रसादोऽयमागत इति ॥ २४–६ ॥

**इति रामप्रसादेन गन्धर्वः स्वगतिं[3] गतः ।**
**रामानुजो रामवाक्यात् तद्देहं बिलगं व्यधात् ॥ २५ ॥**

१. **'शापमोक्षश्च तद्दत्तः'** इति, **'तद्दत्तशापमोक्षश्च'** इति वि.ती.पाठः । २. **'त्वत्प्रसादो–'**

३. **'स्वर्गतिं गतः'**

**(भा.दी.) इती**ति । इति रामस्य यः प्रसादोऽनुग्रहस्तेन, गन्धर्वः तुम्बुरुनामकः, स्वस्य या गतिः स्वलोकप्राप्तिलक्षणा, तां गतः प्राप्तः । श्रीरामस्यानुजो लक्ष्मणः, श्रीरामस्य यद्वाक्यं तस्मात्, तस्य विराधस्य यो देहस्तम्, स्वेन खातं यद्बिलं तद्गच्छतीति बिलगं व्यधात् चकार ॥ २५ ॥

**नानाश्रमपदेभ्योऽथ मुनयो राक्षसार्दिताः ।**
**शरण्यं सर्वभूतानां शार्ङ्गिणं शरणं[१] ययुः ॥ २६ ॥**

**(भा.दी.) नाने**ति । अथ विराधसंहारानन्तरम्, राक्षसैः अर्दिताः पीडिताः मुनयः (नानाश्रमपदेभ्यः आगताः सन्तः), सर्वे भूताः[२] प्राणिनस्तेषां शरण्यं शरणार्हम्, शार्ङ्गमस्यास्तीति शार्ङ्गी तम्, श्रीरामं शरणमरणं तत् ययुः ॥ २६ ॥

**वैखानसा वालखिल्याः पृश्नयो रश्मिपा अपि ।**
**वारिपा वायुपाः पत्रभोजना अश्मकुट्टकाः ॥ २७ ॥**

**दन्तोलूखलिनो दान्ताः खेशयाः स्थण्डिलेशयाः ।**
**अश्विताः[३] पञ्चतपसोऽपरे[४] दशतपोव्रताः[५] ॥ २८ ॥**

**(भा.दी.) वैखानसा** इति । वैखानसाः वैखानसनामकाः । वालखिल्याः वालखिल्यनामकाः । पृश्नयः पृश्निनामकाः । रश्मीन् पिबन्तीति रश्मिपाः, रश्मिपानमात्रेण तपश्चरणकर्तार इत्यर्थः । वारि पिबन्तीति वारिपाः, वारिपानमात्रेण तपस्विन इत्यर्थः । (वायुं पिबन्तीति वायुपाः, वायुपानमात्रेण तपःकर्तार इत्यर्थः ।) पत्राण्येव भोजनं येषां ते तथा । अश्मभिः कुट्टयन्तीत्यश्मकुट्टकाः, स्वभोक्तव्यं फलादिकमश्मभिरेव भित्वा भक्षणेन तपस्विन इत्यर्थः । दन्ता एवोलूखलानि तानि एषां सन्तीति दन्तोलूखलिनः, येषां फलादीनां त्वङ्मोक्षो दन्तैर्भवति दन्तैरेव तत्कृत्वा भक्षयित्वा तपस्विन इत्यर्थः । दान्ताः निगृहीतेन्द्रियाः । खे आकाशे शेरत इति खेशयाः, योगशक्त्या खे शयित्वा तपश्चरणकर्तार इत्यर्थः । स्थण्डिले शेरत इति तथोक्ताः । अश्विताः पूजिताः तीर्थयात्रावन्त इति वा[६] । पञ्चानामग्नीनां मध्ये तपो येषां ते तथा । अपरे अन्ये दश तपोव्रतानि

१. **'शरणं रक्षणमुद्दिश्य रामं ययुः'** इति का.श्री. ।
२. **'सर्वाणि भूतानि'** इति युक्तम् ।
३. **'अर्चिताः'**
४. **'पञ्च तपसः परे'**
५. **'दशतपसः दशव्रताः दशनियमाश्च'** इति का.श्री. ।
६. **'अश्वु गतिपूजनयोः'** इति धातुपाठानुसारेणेदमर्थद्वयम् । अश्वु पूजने–अश्विताः पूजिताः । अश्वु गतौ–अश्विताः गतिमन्तः, तीर्थगमनवन्त इत्यर्थः ।

आनृशंस्यादीनि येषां ते तथा– 'आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवम् । प्रीतिः प्रसादो माधुर्यमक्रोधश्च यमा दश । दानमिज्या तपो ध्यानं स्वाध्यायोपस्थनिग्रहौ । व्रतोपवासौ मौनं च स्नानं च नियमा दश' इति श्लोकद्वयोक्तरीत्या दशतपोव्रता इति भावः ॥ २७–८ ॥

**(सं.चं.)** 'वैखानसा मूलभक्षाः फलभक्षा उदुम्बराः । वालखिल्याः सर्वभक्षाः पेनपा वत्सफेनपाः' इति तत्वनिर्णयवचनं भागवततात्पर्ये (३.१३.४३) । 'भगवतो नखेभ्यो जाता वैखानसाः । लोमभ्यो जाता वालखिल्याः' इति केचित् । पृश्नयोऽल्पशरीरा वामनाः । 'पृश्निरल्पशरीरः स्यात्' इत्यभिधानम् । रश्मिपाः सूर्यचन्द्रकिरणपानेन वर्तयन्तः । वारिपा वायुपा इति स्फुटम् । 'और्वव्रती जलाहारः' इति 'वाताहारस्त्वहिव्रती' इति च यादवः । पत्रभोजना ये पर्णाशिनः । 'शीर्णकः शीर्णपर्णाशी' इति यादवः । स्वभोज्यं फलमूलादि-कमश्मभिः कुट्टयित्वा खादन्तोऽश्मकुट्टाः । 'अश्मभिरात्मानं कुट्टयन्तीत्यश्मकुट्टाः' इति गोविन्दराजः । 'अपक्वकङ्कन्नभक्षकाः' इत्यन्ये । 'अश्मनः कुट्टयित्वा भक्षयन्तोऽश्मकुट्टाः' इति माधवयोगी । 'कुट्ट च्छेदने' । दन्तव्यतिरिक्तस्वजीवनवस्त्ववहननसाधनरहिता दन्तोलूखलिनः' इति च । दमवन्तो निगृहीतेन्द्रिया दान्ताः । स्थण्डिले कुशाद्यावृते भूतळे ये शेरते ते स्थण्डिलेशयाः । खेशया येऽनावृते प्रदेशे शेरते । अभ्रावकाशिका इत्यर्थः । 'वर्षवातातपानङ्गे बिभ्रदभ्रावकाशिकः' इति यादवः । पञ्चतपसः पञ्चाग्निमध्यतपसः । दशविध-प्राणानग्नींश्च जित्वा ये तपस्यन्ति ते दशतपसः । प्राणापानव्यानोदानसमाना नागकूर्मकृकलदेवदत्तधनञ्जया दशप्राणाः । अग्नयश्च दोषेषु वातपित्तकफेषु दूष्येषु सप्तधातुषु च लीना दश । तन्नामानि च–'भ्राजको रञ्जकश्चैव क्लेदकः स्नेहकस्तथा । धारको रन्धकश्चैव द्रावकाख्यश्च सप्तमः । व्यापकः पावकश्चैव श्लेष्मको दशमः स्मृतः' इति । पञ्च यमाः, पञ्च नियमाश्चेत्याहत्य दशतपोव्रता वा ॥ २७–८ ॥

**वृक्षाग्रासक्तपादाग्रा न्यङ्मूर्द्धानस्तपस्विनः ।**
**सर्वे सर्वेश्वरं ब्रह्म ध्यायन्तो वेदपारगाः ॥ २९ ॥**

**(भा.दी.)** वृक्षाणां यानि अग्राणि तेषु आसक्तानि पादाग्राणि येषां ते तथोक्ताः । तपश्चरणकालेऽधः कृताः मूर्धानो येषां ते तथा । सर्वेषामीश्वरं ब्रह्म विष्ण्वाख्यं ध्यायन्तः, वेदानां पारमवसानं गतवन्त इति वेद-पारगाः, सर्वे तपस्विनः, शरणं ययुरिति पूर्वेण सम्बन्धः ॥ २९ ॥

**(सं.चं.)** न्यङ्मूर्धानः अधःशिरसः । वृक्षाग्रे पादावासज्याधोमुखाः सन्तस्तपस्यन्त इत्यर्थः । 'वैखानसा वालखिल्याः सम्प्रक्षाला मरीचिपाः । अश्मकुट्टाश्च बहवः पत्राहाराश्च धार्मिकाः । दन्तोलूखलिनश्चैव

तथैवोन्मज्जकाः परे । गात्रशय्या अशय्याश्च तथैवाभ्रावकाशकाः । मुनयः सलिलाहारा वायुभक्षास्तथाऽ-परे । आकाशनिलयाश्चैव तथा स्थण्डिलशायिनः । व्रतोपावासिनो दान्तास्तथाऽऽर्द्रपटवाससः । सजपाश्च तपोनित्यास्तथा पञ्चतपोन्विताः' (६.२–५) इति च ॥ २९ ॥

**जाज्वल्यमानास्तपसा ज्वलनादित्यवर्चसः[१] ।**
**अश्रुपूर्णेक्षणाः क्षामाः प्रणम्याऽहुः स्म राघवम् ॥ ३० ॥**

**(भा.दी.) जाज्वल्ये**ति । तपसा पुनःपुनरतिशयेन वा ज्वलन्तीति जाज्वल्यमानाः । ज्वलनोऽग्निः स च, आदित्यश्च, एतयोर्वर्च इव वर्चस्तेजो येषां ते तथा । अश्रुभिः पूर्णानि ईक्षणानि येषां ते तथा । क्षामाः तपःकृशाः मुनयः राघवं प्रणम्य आहुः स्म अवदन् ॥ ३० ॥

**(सं.चं.)** क्षामाः तपसा व्रतोपवासादिना च क्षीणदेहाः । रक्षोभयेन रामदर्शनानन्देन चाश्रुपूर्णेक्षणाः ॥ ३०–१ ॥

**लोकैकनाथे[२] श्रीनाथे त्वयि पृथ्वीं[३] गतेऽप्यहो ।**
**राक्षसैरर्दिताः स्मोऽथ[४] रावणौजःसमाश्रयैः[५] ॥ ३१ ॥**

**(भा.दी.) लोके**ति । लोकानामेको मुख्यो यो नाथस्तस्मिन्, श्रियः नाथः स्वामी तस्मिन्, त्वयि पृथ्वीं गतेऽपि प्राप्ते सत्यपि, रावणस्य यदोजः सामर्थ्यं समाश्रयो येषां ते तथा तैः, राक्षसैः अथ कात्स्न्र्येन, 'मङ्गळानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । अर्दिताः स्मः भवामः । अहो आश्चर्यम् ॥ ३१ ॥

**[६]मन्दाकिनीतीरजुषां पम्पातीरजुषां सताम् ।**
**प्रत्याश्रमं पश्य देहान् राम राक्षसभक्षितान् ॥ ३२ ॥**

**(भा.दी.) मन्दे**ति । मन्दाकिन्या गङ्गाया यत्तीरं तज्जुषन्ते सेवन्त इति तथा तेषाम्, पम्पायाः पम्पानद्याः यत्तीरं तज्जुषां च सेवमानानाम्, सतां उत्तमानां ऋषीणाम्, राक्षसैर्भक्षितान् देहान्, हे राम, त्वं आश्रममाश्रमं प्रति प्रत्याश्रमं पश्य ॥ ३२ ॥

---

१. **'केचन ज्वलनवर्चसः । अपरे आदित्यवर्चसः'** इति का.श्री. । २. **'लोकैकनाथ श्रीनाथ त्वयि पृथ्वीगतेऽप्यहो'**

३. **'पृथ्वीगते'** ४. **'राक्षसैर्भक्षिताः स्मोऽत्र'** ५. **'रावणाज्ञासमाश्रयैः'**

६. **'मन्दाकिनीति चित्रकूटसमीपोत्थिता काचन नदी । नतु गङ्गेति यथाश्रुतोऽर्थः ।'** इति, **'पम्पेति विरूपाक्षक्षेत्रे तुङ्गभद्राया दक्षिणतीरतटे किञ्चित् सरः'** इति च का.श्री. ।

**(सं.चं.)** 'पम्पानदीनिवासानामनु मन्दाकिनीमपि । चित्रकूटालयानां च क्रियते कदनं महत्' (३.६.१७) इति । नेयं मन्दाकिनी गङ्गेत्युक्तम् । चित्रकूटं परिगता काचिदन्यैव नदी । पम्पानदीति पम्पाभिधानं सरः । पवनोद्धूततरङ्गवती सरसी च नदीत्युच्यते । प्रत्याश्रमम्, सर्वेष्वाश्रमेष्वित्यर्थः ॥ ३२–३ ॥

**करुणाकर तस्मात् त्वं करुणां कुरु साधुषु ।**
**हर राक्षससन्दोहं तिमिरं मिहिरो यथा ॥ ३३ ॥**

**(भा.दी.) करुणे**ति । करुणाया आकर आश्रय श्रीराम, त्वं तस्मात् कारणात् साधुषु अस्मासु करुणां कुरु । राक्षसानां सन्दोहः समूहः, तं मिहिरः सूर्यः तिमिरं तमस्तत् यथा हरति तथा हर ॥ ३३ ॥

**इत्यर्थितोऽब्रवीत् देवो मेघगम्भीरया गिरा ।**
**खलान् निर्म्मूलयिष्यामि भयं वो मा भवेदिति ॥ ३४ ॥**

**(भा.दी.) इती**ति । इति मुनिभिः अर्थितः देवः श्रीरामः, अहं बलात्[१] खलान् राक्षसान् निर्मूलयिष्यामि । मूल रोहणे लृट् । वः भयं मा भवेत् । इति मेघवन्मेघगर्जनवत् गम्भीरया गिरा अब्रवीत् ॥ ३४ ॥

**(सं.चं.)** निर्मूलयिष्यामि । मूल प्रतिष्ठायाम् । णिचि निर्मूलयति अप्रतिष्ठान् करोति । उन्मूलयतीत्यर्थः ॥३४॥

**महर्षिभिर्वृतो[२] रामः सुतीक्ष्णस्याऽश्रमं ययौ ।**
**तां निशां सह वैदेह्या तेन सम्पूजितोऽवसत् ॥ ३५ ॥**

**(भा.दी.) महे**ति । महान्तश्च ते ऋषयश्च तैर्वृतः[३] युक्तः श्रीरामः सुतीक्ष्णस्य सुतीक्ष्णनामकस्य मुनेर्य आश्रमस्तं प्रति ययौ । तेन सुतीक्ष्णेन, वैदेह्या सीतया सह सम्पूजितः सन् तां निशां अवसत् । वस निवासे लङ् ॥ ३५ ॥

**(सं.चं.)** सुतीक्ष्णेन वैदेह्या सह सम्पूजितो रामः तां निशां वैदेह्या सह सुतीक्ष्णस्याऽश्रमेऽवसत् ॥ ३५–८ ॥

**गच्छतोर्म्मुनिभिः सार्द्धं लक्ष्मणेन च कानने[४] ।**
**जानकीजानकीभर्त्रोर्ल्लीलावादो[५]ऽन्ववर्त्तत ॥ ३६ ॥**

---

१. नेदं मूलगतं पदम् । २. **'महर्षिभिर्युतो रामः'** ३. **'तैर्युतः'**
४. **'काननम्'** ५. **'–भर्त्रोः क्रीडावादो–'**

**(भा.दी.)** **गच्छतोरि**ति । मुनिभिः लक्ष्मणेन च सार्धम्, काननं दण्डकारण्यं तस्मिन् गच्छतोः, जानकी च जानकीभर्ता च तयोः सीतारामयोः लीलया वादः परस्परं संवादः अन्ववर्तत ॥ ३६ ॥

**तापसस्त्यक्तराज्यस्त्वं न्यस्तदण्डोऽसि राघव ।**
**कथं रक्षोवधो धर्म्मस्तवेत्यूचेऽथ जानकी[१] ॥ ३७ ॥**

**(भा.दी.)** तमेव दर्शयति– **तापस** इति । अथ जानकी, हे राघव, त्वं त्यक्तं राज्यं येन स तथा, तापसः मुनिव्रतः, न्यस्तः उपरतः दण्डः प्राणिहिंसनं येन स तथा, 'दण्डोऽस्त्री शासने राज्ञां हिंसायाम्' इति वैजयन्ती, असि । तव रक्षसां वधः कथं धर्मः इति ऊचे ॥ ३७ ॥

**दहनं दहनस्येव राज्ञो दुर्ज्जननिग्रहः ।**
**सर्वावस्थासु धर्म्मः स्यादिति रामोऽभ्यभाषत ॥ ३८ ॥**

**(भा.दी.)** **दहनमि**ति । राज्ञः, दुष्टा ये जनास्तेषां निग्रहः संहरणम्, दहतीति दहनो वह्निः, तस्य दहनमिव भस्मीकरणमिव, सर्वा या अवस्थास्तासु, वनवासाद्यवस्थायामपीत्यर्थः, धर्मः स्यादिति श्रीरामः सीतां प्रति अभ्यभाषत । यथा वह्नेस्तृणादिभस्मीकरणं स्वाभाविकमेवं राज्ञो दुष्टनिग्रहः स्वाभाविकधर्म इत्यर्थः ॥ ३८ ॥

**अग्रतः प्रययौ रामो मद्ध्यतः सा सुमद्ध्यमा ।**
**लक्ष्मणः पृष्ठतस्तेषां पृष्ठतस्ते महर्षयः ॥ ३९ ॥**

**(भा.दी.)** मार्गेण गमनप्रकारमाह– **अग्रत** इति । श्रीरामः तेषां सर्वेषां अग्रतः पुरस्तात् प्रययौ । सु शोभनं मध्यं मध्यप्रदेशो यस्याः सा तथा सीता, मध्ये इति मध्यतः ययौ । लक्ष्मणः तयोः पृष्ठेनेति पृष्ठतः पश्चात् ययौ । ते महर्षयः पृष्ठतः लक्ष्मणपश्चाद्भागे ययुः ॥ ३९ ॥

**(सं.चं.)** पथि रक्षसां प्रतिरोधसम्भवाद् रामोऽग्रतः प्रययौ । तेषां सीतारामलक्ष्मणानां पृष्ठतस्ते महर्षयः प्रययुः । 'अग्रतः प्रययौ रामः सीता मध्ये सुमध्यमा । पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनु जगाम ह' (११.१) इति च ॥ ३९ ॥

---

१. **'धर्मस्तवेत्यूचे हि विस्मिता'** इति, **'–त्यूचे शुचिस्मिता'** इति च ।

**सरः पञ्चाप्सरो नाम प्रापुस्ते यत्र रेमिरे ।**
**पञ्चाग्र्याप्सरसोऽदृश्या[१] मुनिना मन्दकर्ण्णिना[२] ॥ ४० ॥**

**(भा.दी.) सर** इति । यत्र सरसि, दृश्याः मनोहराः, पञ्च अग्र्याः श्रेष्ठाः या अप्सरसः, मन्दकर्णिना मन्दकर्णिनामकमुनिना[३] सह रेमिरे । अत एव पञ्चाप्सर इति नाम यस्य तत्तथा तत् सरः ते श्रीरामादयः प्रापुः । मन्दकर्णितपोभीतैः[४] देवैस्तत्तपोविघातार्थं पञ्चाप्सरसः प्रेषितास्ताभिश्च सह रममाणः सन् तत्र तिष्ठतीत्यतः पञ्चाप्सर इति नामास्य सरसोऽभूदिति हि रामायणे प्रसिद्धम् ॥ ४० ॥

**(सं.चं.)** पञ्चाप्सरो नामेति । 'इदं पञ्चाप्सरो नाम तटाकं सार्वकालिकम् । निर्मितं तपसा राम मुनिना माण्डुकर्णिना' (११.११) इति च । माण्डुकर्णिरिति माण्डकर्णिरिति मन्दकर्णिरिति च बहुधा पाठ-भेदः । मन्दकर्णिनामा मुनिर्दशवर्षसहस्राणि तपस्तेपे । तत्तपोभीता देवास्तपोभङ्गार्थं प्रधानाः पञ्चाप्सरसः प्रेषयामासुः । ताभिर्मुनिर्मदनवश्यतां नीतः । ततः परं मुनिना सह रममाणास्ता अप्सरसो मनुष्याणामदृश्या अत्रैव न्यूषुरिति कथा । पञ्च अप्सरसो यत्र तत् पञ्चाप्सरः सरः ॥ ४० ॥

**मासं कुत्रचिदेकं द्वौ[५] क्वचित् त्रिचतुरान् प्रभुः ।**
**पञ्चषानथ सप्ताष्टानाश्रमेष्ववसत् सुखम्[६] ॥ ४१ ॥**

**(भा.दी.) मासानि**ति। प्रभुः श्रीरामः अथ कुत्रचिदाश्रमे, एको वा द्वौ वा मानं येषां ते एकद्वास्तान्, क्वचित् त्रयश्चत्वारो वा मानं येषां ते त्रिचतुरास्तान् मासान्, क्वचिदाश्रमे (अथ पञ्च वा षड् वा मानं येषां ते पञ्चषास्तान्,) सप्त वा अष्टौ वा मानं येषां ते सप्ताष्टास्तान्, 'बहुव्रीहौ सङ्ख्येये डजबहु-गणात्' (अ.सू. ५.४.७३) इति डच् । मासान्, एवं मुनीनां ये आश्रमास्तेषु, सुखमस्यास्तीति सुखी अवसत् ॥ ४१ ॥

---

१. **'अग्र्याप्सरसः दृश्याः'** इति वि.ती.पदपाठः ।

२. **'माण्डुकर्णिना'** इति, **'मदकर्णिना'** इति, **'माण्डकर्णिना'** इति च ।

३. **'माण्डुकर्णिनामकमुनिना'**

४. **'माण्डुकर्णितपोभीतैः'**

५. **'कुत्रचिदेकद्वान्'** इति वि.ती.पाठः । **'मासान् कुत्रचिदेकद्वान् क्वचित् त्रिचतुरान् प्रभुरिति क्वचित् पाठः । तत्र मासानिति बहुवचनान्तस्य विपरिणामेन क्वचिदेकं मासं क्वचिद् द्वौ मासावित्यन्वयो द्रष्टव्यः'** इति. का.श्री. ।

६. **'सुखी'** इति. वि.ती.पाठः ।

**(सं.चं.)** 'क्वचित् परिदशान् मासानेकं संवत्सरं क्वचित् । क्वचिच्च चतुरो मासान् पञ्च षट् चापरान् क्वचित् । अपरत्राधिकं मासमप्यर्धमधिकं क्वचित् । त्रीन् मासानष्टमासांश्च राघवो न्यवसत् सुखम्' (११.२६–७) इति च ॥ ४१ ॥

**सुन्दरीमिन्दिरामेनां स्वानन्दी[१] साधु नन्दयन् ।**
**ससौमित्रिर्नव समा निन्ये मुनिजनप्रियः[२] ॥ ४२ ॥**

**(भा.दी.)** **सुन्दरीमि**ति । सुन्दरीं इन्दिरां लक्ष्मीस्वरूपां एनां सीतां साधु सम्यक् यथा भवति तथा, नन्दयन् अपेक्षितदानेन सन्तोषयन्, ससौमित्रिः लक्ष्मणसहितः, मुनयश्च ते जनाश्च तेषां प्रियः श्रीरामः, (स्वानन्दी सन्), नव च ताः समाश्च ताः, नवसंवत्सरानित्यर्थः, निन्ये अतिक्रान्तवान् ॥ ४२ ॥

**(सं.चं.)** चतुर्दशसु वर्षेषु नव समा वर्षाणि निन्ये । रामायणे सम्प्रति– 'ययुः संवत्सरा दश' (२८) इति पठ्यते । 'ययुः संवत्सरा नव' इति ग्रन्थकृत्सम्मतः पाठः ॥ ४२ ॥

**प्रोचेऽनुजमथ प्राप्य सोऽगस्त्यभ्रातुराश्रमम् ।**
**अगस्त्यस्य तपोवीर्य्यं वातापील्वलसूदनम् ॥ ४३ ॥**

**(भा.दी.)** प्रेति । अथ सः श्रीरामः, अगस्त्यस्य भ्राता तस्य य आश्रमस्तं प्राप्य, वातापिश्च इल्वलश्च तयोः सूदनं विनाशो यस्मात् तथोक्तं तत्, अगस्त्यस्य तपसो वीर्यं सामर्थ्यं तत्, अनुजं लक्ष्मणं प्रति प्रोचे । इल्वलो हि मायया मेषरूपिणं वातापिं पक्त्वा ब्राह्मणान् श्राद्धार्थं निमन्त्र्य भोजयित्वा वातापे आगच्छेत्याह्वानमात्रेण जठरं निर्भिद्याऽगतवति तमेव ब्राह्मणं पक्त्वा भक्षयतोस्तयोः विनाशार्थमृषिभिरर्थितोऽगस्त्यो ब्राह्मणरूपिणेल्वलेन पूर्वं निमन्त्रितो वातापिं भक्षयित्वा जीर्णीचकार । तथाकृतं भ्रातरं दृष्ट्वा क्रोधेनागस्त्यवधार्थमागतमिल्वलं च स्वचक्षुस्तेजसा भस्मीचकारेति हि रामायणे प्रसिद्धम् ॥ ४३ ॥

**(सं.चं.)**अगस्त्यभ्रातुराश्रमं प्राप्य । अनुजं लक्ष्मणं प्रति । अगस्त्यस्य तपसो वीर्यं प्रोचे । किं तत्? वातापील्वलसूदनम् । 'इहैकदा किल क्रूरो वातापिरपि चेल्वलः । भ्रातरौ सहितावास्तां ब्राह्मणघ्नौ महासुरौ । धारयन् ब्राह्मणं रूपमिल्वलः संस्कृतं वदन् । आमन्त्रयति विप्रान् स्म श्राद्धमुद्दिश्य निर्घृणः । भ्रातरं संस्कृतं कृत्वा ततस्तं मेषरूपिणम् । तान् द्विजान् भोजयामास श्राद्धदृष्टेन कर्मणा । ततो भुक्तवतां तेषां

१. **'सानन्दः'**
२. **'मुनिजनोत्सवः'** इति, **'मुनिजनोत्सुकः'** इति च ।

विप्राणामिल्वलोऽब्रवीत् । वातापे निष्क्रमस्वेति स्वरेण महता वदन् । ततो भ्रातुर्वचः श्रुत्वा वातापिर्मेष-वन्नदन् । भित्त्वाभित्त्वा शरीराणि ब्राह्मणानां विनिष्पतत् । ब्राह्मणानां सहस्राणि तैरेवं कामरूपिभिः । विनाशितानि संहत्य नित्यशः पिशिताशनैः । अगस्त्येन तदा देवैः प्रार्थितेन महर्षिणा । अनुभूय किल श्राद्धे भक्षितः स महासुरः । ततः सम्पन्नमित्युक्त्वा दत्वा हस्तोदकं ततः । भ्रातरं निष्क्रमस्वेति चेल्वलः सोऽभ्यभाषत । स तं तथा भाषमाणं भ्रातरं विप्रघातिनम् । अब्रवीत् प्रहसन् धीमानगस्त्यो मुनिसत्तमः । कुतो निष्क्रमितुं शक्तिर्मया जीर्णस्य रक्षसः । भ्रातुस्ते मेषरूपस्य गतस्य यमसादनम् । अथ तस्य वचः श्रुत्वा भ्रातुर्निधनसंश्रयम् । प्रधर्षयितुमारेभे मुनिं क्रोधान्निशाचरः । सोऽभिद्रवन् मुनिश्रेष्ठं मुनिना दीप्त-तेजसा । चक्षुषाऽनलकल्पेन निर्दग्धो निधनं गतः' (११.५५–६६) इति च ॥ ४३–४ ॥

**अगस्त्यस्य स्वभक्तस्य प्रीत्यै प्रापाऽश्रमं प्रभुः ।**
**सदारसोदरं देवं सम्पूज्यासावभाषत ॥ ४४ ॥**

**(भा.दी.) अगस्त्यस्ये**ति । प्रभुः श्रीरामः, स्वस्य यो भक्तस्तस्य अगस्त्यस्य प्रीत्यै आश्रमं प्रति प्राप । असौ अगस्त्यः, दाराश्च सोदरश्च ताभ्यां सहितम्, सीतालक्ष्मणसहितमित्यर्थः, देवं श्रीरामं सम्पूज्य अभाषत ॥ ४४ ॥

**कोदण्डं कालदण्डाभं त्वद्दोर्दण्डैकमण्डनम् ।**
**वैष्णवं विष्णुमूर्त्ते त्वं गृहाणेन्द्रेण यापितम् ॥ ४५ ॥**

**(भा.दी.) कोदण्डमि**ति । विष्णोर्मूर्तिः स्वरूपं यस्य तत्सम्बुद्धिः, श्रीराम, त्वं कालस्य यमस्य दण्ड-स्तद्वदाभा कान्तिर्यस्य तत्तथा, तव दोषौ हस्तौ (दण्डाविव) तयोरेकं मुख्यं मण्डनमलङ्कारो यस्मात् तत्तथा तत्, विष्णोः सम्बन्धि वैष्णवम्, विष्णुना पूर्वं दैत्यनिग्रहे धृतमित्यर्थः । अत्र कथमागतमित्यत आह– इन्द्रेणेति । इन्द्रेण यापितं त्वदर्थं प्रेषितं कोदण्डं धनुः गृहाण ॥ ४५ ॥

**(सं.चं.)** विष्ण्वाख्या मूर्तिर्यस्य । केवलं त्वद्दोर्दण्डस्य मण्डनम् । अन्यैरधार्यम् । वैष्णवं धनुः परशुरामेण रामाय दत्तम् । रामेण वरुणाय प्रत्तम् । वरुणेनागस्त्यद्वारा रामायार्पयितुं पुनरिन्द्राय दत्तम् । इन्द्रेणा-गस्त्याय । सोऽयं महानगस्त्यानुग्रहः । कालदण्ड इवाभातीति कालदण्डाभम् । कालदण्डः आभा उपमा यस्येति वा ॥ ४५ ॥

**इत्युक्त्वा शार्ङ्गिणे शार्ङ्गं प्रददौ कुम्भसम्भवः[१] ।**
**इषुधी अक्षयेषू च[२] खड्गं च खलखण्डनम्[३] ॥ ४६ ॥**

**(भा.दी.) इती**ति । कुम्भात् सम्भव उत्पत्तिर्यस्य स तथोक्तः अगस्त्यः, इति उक्त्वा शार्ङ्गमस्यास्तीति तथा तस्मै श्रीरामाय, शार्ङ्गं शार्ङ्गसञ्ज्ञं धनुस्तत् प्रददौ । अक्षया इषवो ययोस्तौ इषुधी च ददौ । खलानां खण्डनं विनाशो येन स तथा तं खड्गं च ददौ ॥ ४६ ॥

**(सं.चं.)**शार्ङ्गधन्वने शार्ङ्गं धनुर्ददौ । तदिदं सरसः सलिलस्य सरसि निक्षेपः । इषुधी चेन्द्रदत्ते । खड्गं च प्रीत्या ददौ ॥ ४६ ॥

**तानि सङ्गृह्य भगवान् महर्षेरनुमान्य च[४] ।**
**अगस्त्योदितमार्ग्गेण ययौ पञ्चवटीं[५] प्रति ॥ ४७ ॥**

**(भा.दी.) तानी**ति । भगवान् तानि अगस्त्यदत्तायुधानि, महांश्चासौ ऋषिश्च तस्मात् अगस्त्यात्, सङ्गृह्य अनुमान्य च गमनमामन्त्र्य, अगस्त्येन उदितो यो मार्गस्तेन पञ्चवटीं पञ्चवटीनामकगोदावरीतटप्रदेशं प्रति ययौ ॥ ४७ ॥

**(सं.चं.)** महर्षेस्तानि सङ्गृह्य । तमनुमान्य च । समूह्य ग्रहणं सङ्ग्रहणम् । सन्तुष्य ग्रहणं सङ्ग्रहणम् । अनुगुणं माननमभिनन्दनम् ॥ ४७ ॥

**अप्रीयत प्रभुं प्रेक्ष्य[६] जटायुः पततां पतिः[७] ।**
**सखा दशरथस्याग्रे[८] दासोऽस्मीति ननाम च ॥ ४८ ॥**

---

१. **'सम्भवत्यस्मादिति सम्भवः । कुम्भः सम्भवः उत्पत्तिकारणं यस्य स कुम्भसम्भवः कुम्भाज्जातोऽगस्त्यः'** इति का.श्री. ।

२. **'इषधीरक्षयेषूश्च'** इति, **'इषुधीनक्षयेषूंश्च'** इति च क्वचित् ।

३. **'नन्वत्र अक्षेयेषू इषुधी अगस्त्येन दत्तावित्युच्यते । अयोध्याकाण्डे षष्ठसर्गे–'अभेद्यं कवचं हृद्यमक्षयेषू तथेषुधी । खड्गं चाऽनय–' (सं.रा.२.६.१५) इत्यत्रापि इषुध्योरुक्तत्वात्, आगमनसमय इषुध्योरानीतत्वात् एतयोर्वैयर्थ्यमिति चेन्न । इषुधीनामलौकिकत्वेन एकीभावसम्भवात्'** इति का.श्री. ।

४. **'महर्षेरनुगृह्य च'**

५. **'पञ्चानां वटानां समाहारः पञ्चवटी । गोदावर्या उत्पत्तिस्थानम्, नासिकात्रियम्बकमिति यावत्'** इति का.श्री. ।

६. **'प्रभुं दृष्ट्वा'** इति वि.ती.पाठः ।

७. **'पततां वरः'** इति वि.ती.पाठः ।

८. **'अग्रे रामस्य पुरतः ननाम'** इति का.श्री. ।

**(भा.दी.) अप्रीयते**ति । पततां पक्षिणाम्, 'पतत्पतत्रिपतग–'[1] इत्यमरः, वरः, अग्रं पूर्वं तस्मिन्, दशरथस्य सखा, जटायुनामकः पक्षिराजः प्रभुं श्रीरामं दृष्ट्वा, अप्रीयत प्रीतोऽभूत् । प्रीङ् प्रीणने लङ् । दासः भृत्यः अस्मीति च ननाम ॥ ४८ ॥

**(सं.चं.)**अग्रे पूर्वं दशरथस्य सखा । पततां पक्षिणां पतिः श्रेष्ठः । पञ्चवटीनिकटे प्रभुं रामं प्रेक्ष्याप्रीयत । दासोऽस्मीति ननाम च ॥ ४८ ॥

**विनतायां दक्षपुत्र्यां मारीचात् काश्यपात्[2] पुरा ।**
**सञ्जातादरुणाज्जन्म स्वस्योवाच विहङ्गमः ॥ ४९ ॥**

**(भा.दी.) विनते**ति । दक्षस्य दक्षप्रजेश्वरस्य पुत्र्यां विनतायाम्, मरीचेरपत्यं पुमान् मारीचः, तस्मात् काश्यपात् पुरा सञ्जातात् अरुणात्, विहङ्गमः पक्षी, स्वस्य जन्म उत्पत्तिं उवाच ॥ ४९ ॥

**(सं.चं.)** मरीचिपुत्रात् काश्यपात् विनतायां जातोऽरुणः सूर्यसूतः । तस्माज्जातो जटायुः ॥ ४९ ॥

**वैनतेयात्मजयुतो वैनतेयध्वजस्तदा ।**
**प्राप पञ्चवटीं रम्यामाराद् गोदावरीयुताम् ॥ ५० ॥**

**(भा.दी.) वैनतेये**ति । विनताया अपत्यं वैनतेयोऽरुणः, तस्यात्मजः पुत्रो जटायुः, तेन युतः, वैनतेयो गरुडो ध्वजो यस्य स तथा श्रीरामः, तदा आरात् समीपे गोदावरीयुताम्, गोदावरीतटस्थामित्यर्थः, रम्यां पञ्चवटीं पञ्चवट्याख्यां स्थळीं प्राप ॥ ५० ॥

**(सं.चं.)** वैनतेयस्यारुणस्याऽत्मजेन जटायुना युतः । आरात् अन्तिक एव प्रवहन्त्या गोदावर्या युताम् ॥ ५० ॥

**सालतालतमालांश्च नागपुन्नागचम्पकान् ।**
**चन्दनान्[3] स्यन्दनांश्चूतान् खर्जूरार्जुनकिंशुकान् ॥ ५१ ॥**
**बकुलान्[4] वञ्जुलाशोकान् पाटलानपरानपि ।**
**प्रैक्षताऽनम्रशिरसः पार्थिवान् पार्थिवाधिपः[5] ॥ ५२ ॥**

---

१. **'पतत्रिपत्रिपतगपतत्–'** इति सम्प्रति पठ्यते। २. **'कश्यपात्'** ३. **'चन्दनस्यन्दनांश्चूतान्'** इति वि.ती.पाठः। ४. **'वकुलान्'** ५. **'पार्थिवात्मजः'**

**पल्लवैः पवनोद्धूतैः कुर्वाणानञ्जलीनिव ।**
**निष्पतद्भिर्म्मुहुः पुष्पैः कुर्वाणांश्च बलीनिव[1] ॥ ५३ ॥**

**फलं निवेद्यदेशीयं नैकमर्प्पयतः पृथक् ।**
**आत्मनः स्तवनायैव कलकोकिलनिःस्वनान् ॥ ५४ ॥**

**चालितान् पवमानेन प्रहर्षादिव नृत्यतः ।**
**अभ्यनन्दन्मुकुन्दस्तान् भक्ताभान् भक्तवत्सलः ॥ ५५ ॥**

**(भा.दी.) सालेति** । पार्थिवानां राज्ञामधिपः श्रीरामः, सालाः सर्जवृक्षास्ते च, तालाश्च तमालाश्च तान्, नागाश्च पुन्नागाश्च चम्पकाश्च तान्, चन्दनाश्च स्यन्दनाश्च तान्, चूतान्, खर्जूराश्च अर्जुनाश्च किंशुकाश्च तान्, बकुळांश्च, वञ्जुलाश्च अशोकाश्च तान् । पाटलान् अपरान् देवदार्वादीन्, आनम्राणि फलपुष्पादिना नम्राणि शिरांसि अग्राणि येषां ते तथा तान्, पार्थिवान् वृक्षान् प्रैक्षत । तरुजन्मभाजो श्रीरामकृपाविषयत्वादिना भक्ता एव स्वारब्धकर्मपरिपाकाय भुवि जाता इति भावेन भक्तसाम्येन वर्णयति– पल्लवैरित्यादिना । पवनेन उद्धूता कम्पितास्तैः पल्लवैः, अञ्जलीनिव संहतकरानिव कुर्वाणान्, वाय्वागमनसमये पल्लवानां परस्परं संश्लेषादिति भावः । मुहुः नितरां पतन्ति निष्पतन्ति तैः पुष्पैः बलीनिव पूजोपहारानिव, 'बलिः पूजोपहारे च दैत्यभेदे' इति वैजयन्ती, कुर्वाणान् । एकं न भवति यथा तथा नैकं बहुविधमित्यर्थः । निवेद्यस्य समर्पणीयस्य सदृशं निवेद्यदेशीयं तत् । देशीयर्प्रत्ययान्तोऽयं शब्दः । फलं पृथक् अर्पयतः समर्पणं कुर्वतः । आत्मनः स्वस्वामिनः श्रीरामस्य स्तवनं स्तोत्रं तस्मा एव कला अव्यक्तमधुराः कोकिलानां निःस्वनाः येषां ते तथा तान्, पवमानेन वायुना चालितान्, अत एव प्रहर्षः सन्तोषस्तस्मात् नृत्यत इव नर्तनं कुर्वत इव स्थितान्, भक्तानामाभा कान्तिर्येषां ते तथा तान्, तान् वृक्षान्, भक्तेषु वत्सलः स्निग्धः श्रीरामः दृष्ट्वा अभ्यनन्दत् सन्तुष्टोऽभूत् । नदि हर्षे[2] लङ् ॥ ५१–५ ॥

**(सं.चं.)** सालः सर्जः । 'ಹೆಮ್ಮತ್ತಿ' इति भाषायाम् । तालस्तृणराजः । 'ತಾಳೆ' इति भाषायाम् । तमालस्तापिच्छः='ಹೊಂಗೆ', नागः='ನಾಗಸಂಪಿಗೆ', पुन्नागः='ಹೊನ್ನೆ ಸುರಗಿ', 'ಸರಗಿ', चम्पकः='ಸಂಪಿಗೆ', चन्दनः गन्धद्रुमः । स्यन्दनः= 'ಅತಿಮುಕ್ತ ಹುಲಿಗಿಲು', चूतः प्रसिद्धः । खर्जूरश्च । खर्जूरद्रुमः सम्प्रति भारते

१. **'कुर्वाणाश्चाञ्जलीनपि'** इति, **'कुर्वाणाश्चाञ्जलीनिव'** इति च । **'पुष्पैरञ्जलीन् पुष्पाञ्जलीन् कुर्वाणानिव च'** इति का.श्री. ।

२. **'टु नदि समृद्धौ'** इति धातुपारायणिकाः ।

दुर्लभः । पुराणेषु बहुधा पठ्यते । तेन ज्ञायते तदात्वे खर्जूरोऽपि भारते प्रचुर आसीदिति । अर्जुनः='ಮತ್ತಿ', किंशुकः पलाशः='ಮುತ್ತುಗ' । वकुलः='ಬಕುಳ', वञ्जुलः वेतसः='ಹಬ್ಬಮುತ್ತುಗ' । अशोकप्रभेदोऽपि वेदस इत्युच्यते शिंशपावत् । अशोकः='ಅಸುಗೆ' पाटलः='ಪಾದರಿ' । 'सालैस्तालैस्तमालैश्च खर्जूरपनसाम्रकैः । नीवारैस्तिनिशैश्चैव पुन्नागैश्चोपशोभिताः । चूतैरशोकैस्तिलकैश्चम्पकैः केतकैरपि । चन्दनैः स्यन्दनैर्नीपैः पर्णासैर्लिकुचैरपि । धवाश्वकर्णखदिरैः शमीकिंशुकपाटलैः' (१५.१६–८) इत्यादि च । पार्थिवान् वृक्षान् । पार्थिवाधिपः आनम्रशिरसः पार्थिवान् राज्ञ इवेति ध्वनिः । पवनोद्धूनेन संहतैः संहताङ्गुलिकल्पैः पल्लवैरञ्जलीनिव कुर्वाणान् बध्नतः । पुष्पैः बलीनुपहारानिव कुर्वाणानर्पयतः । नैकं फलमिति फलानि । निवेद्यं नैवेद्यं तत्कल्पम् । 'ईषदसमाप्तौ कल्पब्-देश्य-देशीयरः' (अ.सू.५.३.६७) इति पाणिनिः . ईषदसमाप्तं निवेद्यं निवेद्यदेशीयम् । अर्पयतः पार्थिवान् । आत्मनः स्वस्य, अन्तर्यामिणः परमात्मन इति ध्वनिः, रामस्य स्तवनायैव कोकिलानां कळनिस्वनवतः । कोकिलैर्मुखैः कळनिस्वनान् कुर्वाणानिति वा । चालितान्, अत एव हर्षोद्रेकान्नृत्यं कुर्वाणानिव । पार्थिवेषु राजत्वं निरूपितम् । सम्प्रति भक्तत्वं रूपयति । रूपारोपाद्धि रूपकं वदन्ति । अयं भक्तवत्सलः । ते भक्तवदाभान्तीति भक्ता इव ॥ ५१–५ ॥

**समे स्थले[१] पर्णशालामनुकूलजलाशये ।**
**रामवाक्याच्चकाराऽथ लक्ष्मणश्चारुलक्षणः　　　　॥ ५६ ॥**

**(भा.दी.) सम** इति । अथ चारूणि लक्षणानि अङ्गसम्पदो यस्य स तथोक्तः लक्ष्मणः, अनुकूलः जलाशयो जलाधारः क्रीडाद्यनुकूलः ह्रदादिर्यस्मिन् तथोक्तं तस्मिन्, समे एकप्रकारे स्थले, श्रीरामस्य यद्वाक्यं तस्मात्, पर्णमयी या शाला तां चकार ॥ ५६ ॥

**(सं.चं.)**पर्णशालाम् । 'ಎಲೆಮನೆ' इति भाषायाम् । अनुकूलजलाशये प्रागुदक्प्रवणे समे स्थले ॥ ५६ ॥

**ससौष्ठवां सत्वरितां सप्रहर्षामवेक्ष्य[२] ताम् ।**
**शुश्रूषां लक्ष्मणगुरुर्लक्ष्मणं परिरब्धवान्　　　　॥ ५७ ॥**

**(भा.दी.) से**ति । लक्ष्मणस्य गुरुः सः श्रीरामः, सौष्ठवेन सहितां ससौष्ठवाम्, त्वरितेन वेगेन सहिताम्, प्रहर्षेण सहिताम्, (तां) लक्ष्मणसम्बन्धिनीं शुश्रूषां अवेक्ष्य, लक्ष्मणं परिरब्धवान् आलिङ्गितवान् ॥ ५७ ॥

---

१. 'समस्थले'　　　　२. 'सप्रहर्षमवेक्ष्य'

**(सं.चं.)** कृतस्य कर्मणश्चारुता ह्लादजनकता च सौष्ठवम् । ' हा धिक्, मम दौर्भाग्येनेदं कर्तव्यमापतितम्' इति विषादेन शपता कर्मकरणमप्रहर्षः । तद्विरहोऽनिर्विण्णता नाम प्रहर्षः । त्वरितं त्वरा, तेन सहितां सत्वरिताम्, अविलम्बेन कृताम् । ईदृशीं तां लक्ष्मणकृतां शुश्रूषामवेक्ष्य लक्ष्मणगुरुः प्रीत्यतिशयं तस्मिन् प्रकटयन् लक्ष्मणं परिरब्धवान् परिरेभे ॥ ५७ ॥

**तां पर्ण्णशालां विमलां विशालां तापैस्त्रिभिर्न्नानुगतां कदाऽपि ।**
**अध्यास्त रम्यां रमया समेतो रामो मनीषामिव योगभाजाम् ॥ ५८ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणेऽरण्यकाण्डे द्वितीयः सर्ग्गः ॥**

—०—

**(भा.दी.) तामिति** । रमया लक्ष्मीस्वरूपया सीतया समेतः श्रीरामः, विमलां निर्मलाम्, विशालाम्, कदाऽपि कस्मिंश्चित्समयेऽपि, त्रिभिः आध्यात्मिकाधिभौतिकाधिदैविकाख्यैः, तापाः सन्तापाः, तैः अनुगता न भवतीति नानुगता ताम्, असंस्पृष्टामित्यर्थः । नसमासोऽयम् । रम्यां तां पर्णशालाम्, योगं भजन्तीति योगभाजः, तेषां सनकादीनां मनीषामिव बुद्धिमिव, अध्यास्त अध्युवास । विमलत्वादिगुणवतीं योगबुद्धिं यथाऽध्यास्ते तद्वत्तस्यां शालायामवस्थितोऽभूदित्यर्थः । आस उपशेवने लङ् ॥ ५८ ॥

**इति इति श्रीविश्वपतितीर्थकृतायां श्रीसङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायामरण्यकाण्डे द्वितीयः सर्गः ॥**

—०—

**(सं.चं.)** अथेन्द्रवज्रयोपसंहरति– तां पर्णशालाम् । योगिनां मनीषा विमला रागद्वेषादिदोषरहिता । पर्ण-शालाऽपि विमला लोष्टपङ्कादिरहिता । विशाला उदारा मनीषा । वासपाकशयनाद्यनुकूलता विशालता पर्णशालायाः । त्रिभिस्तापैरननुगता शाला च मनीषा च । आधिव्याधी आध्यात्मिकस्तापः । ईतिबाधा-दिराधिदैविकः । व्याळाद्युपद्रव आधिभौतिकः । मनीषां यथाऽध्यास्ते तथा शालामध्यास्त । 'अधिशीङ्स्थासां कर्म' (अ.सू.१.४.४६) इति द्वितीया ॥ ५८ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामरण्यकाण्डे द्वितीयसर्गविवरणम् ॥**

[आदितः श्लोकाः– ११६९+५८=१२२७]

# तृतीयः सर्गः

**वैकुण्ठस्येव वैकुण्ठे वने निवसतः सुखम् ।**
**सार्द्धास्त्रयोदशसमा[1] रामस्यैवं [2]समागमन्[3]** ॥ १ ॥

**(भा.दी.)** श्रीरामस्य दुष्टनिग्रहसमयः प्राप्त इत्याह– **वैकुण्ठस्ये**त्यादिना । वैकुण्ठो वैकुण्ठलोकस्तस्मिन् अर्धेन एकसंवत्सरार्धेन मासषट्केन सहिताः सार्धाः सत्य एव त्रयोदशसमाः । तादृशास्त्रयोदशसमा

---

१. **'सार्धात्रयोदशसमाः'** २. **'रामस्यैवमुपागमन्'** इति वि.ती.पाठः ।

३. अत्र बहुमुखानि व्याख्यानानि पूर्वैः कृतानि दृश्यन्ते । प्राय सर्वाण्यपि मूलभावाविष्करणे विफलानि । तथाहि विद्याभू.व्याख्यानम्–

**'सार्धाः अर्धेन सहिताः, मासषट्करूपमर्धं त्रयोदशवर्षपूर्त्यर्थं यदा भविष्यति तादृश्यस्त्रयोदशसमा इत्यर्थः । अयमर्थः कथं लभ्यत इत्याशङ्का न कार्या । एवमनङ्गीकारे बाधकसद्भावात् । तथाहि–'द्वादशे किल मासे मां घ्नन्त्येते दशमो ह्ययम्' इत्युपरि हनुमन्तं प्रति सीतावाक्यम् । 'चतुर्दशवत्सरसमनन्तरमेव रामः स्वपुरीमयोध्यां प्रति नाऽगमिष्यति चेदग्निप्रवेशमहं कुर्याम्' इति च भरतस्य प्रतिज्ञा । तत्र यदि 'सार्धास्त्रयोदशसमाः' इत्यत्र षण्मासाधिकत्रयोदशसमा इत्यर्थाङ्गीकारे परस्परं विरोधः स्यात् । तदुभयविरोधशान्त्यर्थं 'सार्धास्त्रयोदशसमाः' इति पदार्थघटनार्थं चोक्त एवार्थ उपपन्न इति न कोऽपि क्षुद्रोपद्रवः । आ समन्तात् सम्यक् ऋद्धमभिवृद्धमानन्दादिकमर्द्धम् । तेन सहिताः सार्धा इति वा । यद्वा सार्धाः अर्धेन सहिताः लोकदृष्ट्या सीतया सहिताः त्रयोदशं समा इति वा'** नैकोऽप्यर्थश्चित्ते लगति । न कवय एवं भाषन्ते येषां वाचमर्थोऽनुधावति । स्वकपोलकल्पितमप्रज्ञाविलसितमेतत् । विश्वपतितीर्थीयमपीतो नातिभिन्नम् ।

का.श्री. आचार्यस्तु पाठमेव व्यत्स्यस्य पपाठ– सार्धात्रयोदशसमाः' इति । तथाहि तद्व्याख्यानम्–

**'सार्धात्रयोदशसमाः मासषट्काधिकद्वादशवत्सराः सुखं यथा तथा समागमन् । ननु सार्धात्रयोदशसमा इत्यत्र पदैक्यमङ्गीकृत्य मासषट्काधिका द्वादश समा अगमन्नित्यर्थ उक्तः । सार्धाः मासषट्केन सहिताः त्रयोदश समा इति पदभेदमङ्गीकृत्य मासषट्काधिकत्रयोदशसमा अगमन्नित्यर्थाङ्गीकारे किं बाधकमिति चेत्, श्रूयतामवधानेन । 'प्रवेक्ष्याम्यग्निमप्रेक्ष्य वत्सरे त्वां चतुर्दशे' (अयो.१२.१०७) इति भरतस्य प्रतिज्ञावाक्येन रामस्य चतुर्दशसमा वनवासकाल इति तावदवगम्यते । पञ्चवट्यामेव मासषट्काधिकत्रयोदशसमा अगमन्नित्यङ्गीकारे मासषट्कमेवोर्वरितमित्यर्थः स्यात् । तदनुपपन्नम् । 'द्वादशे किल मासे मां घ्नन्त्येते दशमो ह्ययम्' इति हनूमन्तं प्रति सीतोक्तवाक्यात् सीताया रावणेनापहारानन्तरं हनुमद्दर्शनकालस्य दशमासत्वात् तद्विरोधः स्यात् । अत एकपदत्वमङ्गीकृत्य उक्त एवार्थः साधुः । नन्वयमर्थोऽक्षरतः कथं प्राप्त इति चेदुच्यते । अत्रयोदशेति नञः भिन्नार्थत्वेन त्रयोदशभिन्नाः चतुर्दशादयो द्वादशादयश्च भवन्ति । चतुर्दशादीनामङ्गीकारे भरतप्रतिज्ञाविरोधः । एकादशादीनामङ्गीकारे सीतावाक्यविरोधः । उभयान्यथानुपपत्त्या अत्रयोदशशब्देन त्रयोदशाव्यवहितपूर्ववर्तिद्वादशसङ्ख्यैव गृह्यत इति**

मासषट्काधिकद्वादशसंवत्सरा इत्युक्तं भवति । ननु सार्धास्त्रयोदशसमा इत्यस्य माषषट्काधिकत्रयोदशसमा इत्यर्थः कुतो न भवतीति शङ्का न कार्या । तथाङ्गीकारे बाधकसद्भावात् । तथाहि– 'द्वादशे किल मासे मां घ्नन्त्येते दशमो ह्ययम्' इत्युपरि हनुमन्तं प्रति सीतावाक्यम् । तेन च श्रीरामवियोगानन्तरं सीतायाः हनुमद्दर्शनसमये दशमासाः (अतीता इति) प्रतीयते । चतुर्दशसंवत्सरानन्तरमेव श्रीरामोऽयोध्यां प्रति नाऽगमिष्यति चेदग्निप्रवेशमेव कुर्यामिति च भरतस्य प्रतिज्ञा । एवं च सार्धास्त्रयोदशसमाः इत्यस्य यदि षण्मासमात्रावशेषेण (त्रयोदशवर्षेणेति नार्थस्तर्हि) 'द्वादशे किल मासे मां घ्नन्त्येते दशमो ह्ययम्' इति सीतावाक्यस्य भरतप्रतिज्ञायाश्च परस्परं विरोधः स्यात् । तदुभयविरोधशान्त्यर्थं सार्धास्त्रयोदशसमा इति वाक्यार्थघटनार्थं चोक्त एवार्थ इति ज्ञायते । किञ्च– 'श्वोभूते पुष्ययोगोऽयं चैत्रमासि च शस्यते । तत्राभिषेक्तुं सम्भारा आदिश्यन्तां यथाविधि' इति चैत्रमासे सङ्कल्पितयौवराज्याभिषेकविघाते सति श्रीरामस्य वनवासः प्रतीयते । 'एतस्मिन्नन्तरे पापा सम्प्राप्ता रावणानुजा' इति हेमन्तर्तौ शूर्पणख्याः श्रीरामसमीपागतिश्च श्रूयते । चैत्रे (वनं) गतस्य हेमन्तर्तोः पूर्वं षण्मासाधिकद्वादशसंवत्सराणामतीतत्वमेव युक्तम् । यद्वा 'यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य मानिनि' इति भार्यायां भर्तुरर्धत्वेन व्यपदेशादर्धेन स्वात्मार्धतुल्यया सहिताः सार्धाः, लोकदृष्ट्या सीतासाहित्येन प्रमिता इत्यर्थः । त्रयोदशसमाः त्रयोदशसङ्ख्याकाः समा इत्यर्थः । अत एव पाद्मे 'तस्मिन् त्रयोदशाब्दानि रामस्य समतिक्रमुः । गौतम्याश्च तटे पुण्ये पञ्चवट्यां मनोरमे' इत्युक्तिः । न चैवं सति चैत्रे वनं गतस्य कथं हेमन्तसमये त्रयोदशसंवत्सरपूर्तिरिति वाच्यम् । मासानां सौरचान्द्रादिभेदेन बहुत्वात् तन्मध्ये कयाचिद्विवक्षया तत्सम्भवान्न कश्चिद्विरोधः । उपागमन् अगच्छन् ॥ १ ॥

**(सं.चं.)** वैकुण्ठस्येव वैकुण्ठे । एतेन 'स्वर्गलोके यथाऽमरः' (१५.३१) इति रामायणवचनं गदितार्थम् । स्वर्गलोक इति वैकुण्ठ उच्यते । 'स्वर्गे लोके न भयं किञ्चनास्ति' इति श्रुतेः । अमर इत्यमरप्रभुर्नारायण इति । त्रयोदश समाः समागमन्, रामस्य वने निवसतः । अगमन्निति वक्तव्यम् । कथं समागमन्? न सङ्गताः । नाप्यागताः । गता एव केवलम् । सत्यमेतद् भौतिकानाम् । अध्यात्मवादिनां त्वन्य एव कश्चनार्थः स्फुरति । न केवलं वनदेवताः, दिनमानिन्यो मासमानिन्यो वत्सरमानिन्यश्च देवतास्तं समारिराधयिषवः सङ्गता आगमन्निति । अहो, एतावन्तमनेहसमनाविष्कृतकपाटमिदं पद्यम् । तथाहि –अथ रामायणेऽनुक्तं किञ्चिद् गणितकौतुकमातनोति पण्डिताचार्यः परीचिक्षिषमाण इवाधिजिगांसमानानां प्रज्ञाप्रकर्षम्– सार्द्धास्त्रयोदशसमा

---

**सम्प्रदायविदस्तु, 'सार्धाः त्रयोदशसमाः' इत्येव पदद्वयम् । सार्धा इत्यत्रार्धशब्दस्य अधिकार्थं न्यूनार्धं चेति अर्थद्वयं सम्भावितम् । तत्र अधिकार्धेन सहिताः सार्धा इत्युक्ते मासषट्कसहितत्रयोदशसमा इत्यर्थः स्यात् । स च पूर्वोत्तरविरुद्धः । अतः न्यूनार्धेन सहिताः सार्धा इत्युक्तौ मासषट्काधिकद्वादशसमा इत्यर्थः सम्पद्यते इत्याहुः' इति ।**

नितरामस्वरसमिदं व्याख्यानं साम्प्रदायिकादपि । न्यायशास्त्रे पटुरप्ययमाचार्यः साहित्यरसग्रहणे त्वपटुरेवेति स्वयमनेन प्रकटयामास ।

इति । प्रायतन्त च बहवो यथामतिविभवमुत्तरीतुमेतां गणितप्रहेलिकाम् । प्रायः सर्वेऽप्यनुत्तीर्णा एव बभूवुः । तथाहि केचिदाक्षत– रामस्य वने वसतो यावन्तो वर्षा अतीताः, ते सार्धाः वर्षार्धेन सहिताश्चेत् त्रयोदश वर्षा भवन्ति । एवञ्च सार्धद्वादशवर्षा इत्येवोक्तं भवतीति । आ+ऋद्धमर्द्धं समृद्धमानन्दादिकम् । तेन सहिताः सार्द्धास्त्रयोदश वर्षा इत्यपरे समगिरन्त । रामस्य वामार्धेन जानक्या सहितास्त्रयोदश वर्षा इत्येके । अन्ये पुनरन्यथैवामन्यन्त । तेषां मते विसर्गरहितः पाठः सार्धात्रयोदशसमा इति । तथाचार्थं वर्णयन्ति– त्रयोदशसमा न भवन्तीत्यत्रयोदश समाः । सार्धा अत्रयोदशसमा सार्धात्रयोदशसमाः । यद्यपि त्रयोदशभिन्नत्वं चतुर्दशादिष्वपि समानम् । अत्र त्वन्यथानुपपत्त्या त्रयोदशभिन्न इति अव्यवहितपूर्ववर्ती द्वादश एव वर्षो गृह्यत इति । पूर्वोदितेष्वर्थेषु केवलमर्थविप्लव एव । अत्र तु पाठविप्लवोऽपि । सर्वेऽपि कविहृदयमस्पृशन्तश्चस्खलुरिव । प्रादक्षिण्येन नासायामङ्गुलिन्यासोऽयम् । कवयो नैवं भाषन्ते । तर्हि केयं भाषा? कीदृशी भणितभङ्गी? पुराणभाषेयम् । गणितमयी भणितभङ्गीयम् । का पुराणभाषा? 'त्रयोदशाब्द-साहस्रम्' (९.९.१८) इति भागवतवचनं स्मरन् कविरिमं श्लोकं निबबन्धेति भागवती भाषेयम् । कामथ गणितमयीं भणितिभङ्गीमङ्गीचकार कविः? श्रूयताम् । यत्र वत्सरमानमपेक्षितादधिकमुच्यते तत्रेडावत्सरमानेन गणनीयमिति पौराणः सम्प्रदायः । तद् यथा– एकादशवर्षसहस्राणि रामो राज्यमकारयदिति सर्वत्रैक-कण्ठ्यम् । एवं स्थिते 'त्रयोदशाब्दसाहस्रम्' रामोऽग्निहोत्रमजुहोदिति भागवते । तत्र सप्तविंशतिदिनात्मकनाक्षत्र-मासगणनया विरोधपरिहार इति स्थितमाकरे । ३६० दिनात्मको वत्सरः । (२७x१२=)३२४ दिनात्मको नाक्षत्रो वत्सरः । यमिडावत्सर इत्याचक्षते । एवमत्रापि रामस्य वने वसतो वस्तुतस्त्रयोदशसमा अपि नातीयुः । अथापि सार्द्धास्त्रयोदश समाः समागमन्नित्याह । तेन स्फुटं विज्ञायतेऽत्रोक्ताः समा इडावत्सरा इति । तथाचायं गणितक्रमः– त्रयोदशसमा इति (३२४x१३=)४२१२दिनानि । समाया अर्द्धम् १६२ दिनानि । अर्धेन सहिताः सार्द्धास्त्रयोदश समाः (४२१२+१६२=) ४३७४ दिनानि । अथचेषां वत्सरत्वेन परिवर्तने–

$\frac{४३७४}{३६०} = १२\frac{५४}{३६०}$ द्वादशवत्सराः ५४दिनानि च

अथाप्यपर्याप्तमिदं प्रसङ्ग्यानं भवति । एवं गणने कृते किमायातम्? रामस्य वने वसतस्तदात्वे द्वादशसमाः किञ्चिन्न्यूनं मासद्वयं चातिययुरित्यायातम् । किञ्चिदत्र पूर्ववृत्तं स्मर्तव्यं भवति । रामः किल चैत्रमासे परिसप्ताष्टेषु दिनेष्वतीतेषु पुण्यनक्षत्रे वनं प्रति प्रातिष्ठत । ततश्च सार्द्धानां द्वादशसमानामत्ययो ज्येष्ठमासे भवति । नैतद् युक्तम् । यतो वर्षात्यये शरदि पञ्चवटीगमनम् । पञ्चवट्यां वासावसर एव सार्द्धद्वादशसमासमाप्तिरिति च

मूल एव स्फुटम् । तेनाऽश्विने मासीति साम्प्रतम् । तेनात्र सार्द्धा इति न समोंऽश उच्यते- अर्धमिति । किन्त्वनियतं कालखण्डमुच्यते–अर्द्ध इति । साधिकास्त्रयोदशसमा इत्येतदुक्तं भवति । का साऽधिकसङ्ख्या? वत्सरादर्वाक्तनी या काऽपि स्यात् । ततो यावदाश्विनमपेक्षणीयानि दिनान्यत्र सङ्कलनीयानि । तथाचात्र अर्ध इति न १६२ दिनानि । किन्तु २८८ दिनात्मकं समाशकलमुच्यते । ततश्च संहत्य (४२१२+२८८=)४५०० दिनान्यतीयुरिति पर्यवसितम् । तेषां वत्सरतया परिगणने सार्द्धा द्वादश वत्सरा एव सम्पद्यन्ते–

$\frac{४५००}{३६०} = १२\frac{१}{२}$ इति ।

सेयमपूर्वा गणितचातुरी पण्डिताचार्यस्य । अगणितज्ञोऽपि गणितज्ञः कविरिति ॥ १ ॥

**उत्थाय काल्ये[१] कल्याणं देवं गोदावरीं गतम्[२] ।**
**सीतां कृत्वाऽग्रतो बिभ्रत् कलशं लक्ष्मणोऽन्वगात् ॥ २ ॥**

**(भा.दी.) उत्थाये**ति । काल्ये उषःकाले । 'प्रत्यूषोऽहर्मुखं काल्यम्' इत्यमरः । उत्थाय गोदावरीं गतो गोदावरीगतस्तम्, कल्याणं नित्यमङ्गलं देवं श्रीरामम्, लक्ष्मणः कलशो घटस्तं बिभ्रत् दधत् सन्, सीतां अग्रे इत्यग्रतः कृत्वा, अन्वगात् अन्वगच्छत् । इण् गतौ लुङ् ॥ २ ॥

**(सं.चं.)** उत्थाय काल्ये । 'काल्यमुषः प्रत्यूषम्' इत्यभिधानम् । कलशं कमण्डलुं बिभ्रल्लक्ष्मणः, सीतामग्रतः कृत्वा, तत्पश्चात् स्वयं कल्याणं साधुगुणभरितं राममनुसरन् गोदावरीतीरमगात् ॥ २ ॥

**ऋतौ हेमन्त आलोक्य हिमानीपीडितं जगत् ।**
**प्राञ्जलिः कञ्जनाभं तं[३] सौमित्रिर्वाक्यमब्रवीत् ॥ ३ ॥**

**(भा.दी.) हेमन्त** इति । हेमन्तो हेमन्तसञ्ज्ञकस्तस्मिन् ऋतौ, हिमान्या हिमसंहत्या पीडितं जगत् आलोक्य, प्राञ्जलिः संहताञ्जलिः सन्, कञ्जं कमलं नाभौ यस्य स तथा तं श्रीरामं प्रति, सौमित्रिः वाक्यं वचस्तत् अब्रवीत् ॥ ३ ॥

**(सं.चं.)**पञ्चवट्यां वसतस्तस्य हेमन्तः समवर्तत । 'हिमसङ्घातो हिमानी च' इत्यभिधानम् ॥ ३ ॥

---

१. **'उत्थाय काले'** २. **'गोदावरीगतम्'** इति वि.ती.पाठः ।

३. **'कञ्जनाभं सः'** इति, **'कञ्जनाभाय'** इति च क्वचित् ।

**श्रीहानिदा हिमानीयमन्येषां[१] जाड्यकारणम्[२] ।**
**न मां त्वत्पादपार्श्वस्थमियं च प्रतिबाधते[३] ॥ ४ ॥**

**(भा.दी.) श्री**ति। श्रियः कान्तेर्या हानिस्तां ददातीति तथा। इयं हिमानी हिमसमूहः। 'हिमानी हिमसंहतिः' इत्यमरः । अन्येषां साधारणजनानां जाड्यस्य आलस्यस्य कारणम् । तव यौ पादौ तयोः, पार्श्वं समीपं तस्मिन्, तिष्ठतीति तथोक्तस्तं माम्, इयं हिमानी न प्रतिबाधते । बाधृ विलोडने लट् ॥ ४ ॥

**(सं.चं.)** श्रीः शोभा । तस्या हानिदा । निष्प्रभतां जानयन्ती । इयं जनानां जाड्यकारणमपि न मां प्रति जाड्येन बाधते । जाड्यमालस्यम् । कर्तव्यकर्मण्युत्साहविरहः ॥ ४ ॥

**इदानीं स्थण्डिलान्नूनमुत्थाय सरयूं गतः ।**
**त्वत्सङ्गमार्थी भरतः स हि धन्यतमो भुवि ॥ ५ ॥**

**(भा.दी.) इदानीमि**ति । तव यः सङ्गमः सहावस्थितिः, तमर्थयितुं शीलमस्यास्तीति तथोक्तः भरतः, इदानीमेतस्मिन् समये, स्थण्डिलं स्थण्डिलप्रदेशस्तस्मात् उत्थाय सरयूं स्नानार्थं गतः स्यात्, नूनम्, सः अस्यां भुवि धन्यतमो हि ॥ ५ ॥

**(सं.चं.)** स्थण्डिलशायी केवलभूमिशायी भरतः प्रगे स्थण्डिलादुत्थाय नूनं सरयूं गतः, यथाऽऽवां गोदावरीं गतौ, न तस्यापि हिमानी जाड्यकारणम् ॥ ५ ॥

**कष्टं कथं नु कैकेयी[४] भूत्वा दशरथप्रिया ।**
**सूत्वा च भरतं साधुं तदघं[५] कृतवत्यहो ॥ ६ ॥**

**(भा.दी.) कथमि**ति । कैकेयी दशरथस्य प्रिया भार्या भूत्वा, साधुं भरतं (च) सूत्वा प्रसूय, कष्टं दुष्टं तत् त्वद्राज्यविभ्रंशलक्षणं अघमपराधम्, कथं (नु) कथमेव कृतवती? अहो आश्चर्यम्। सत्कुलप्रसूतत्वादि-गुणविशिष्टाया एतादृशदुष्टकर्माचरणमत्याश्चर्यमिति भावः ॥ ६ ॥

**(सं.चं.)** भरतस्मरणेन कैकेयी च स्मृतिपथं गता । आह लक्ष्मणः– कष्टं कथं नु कैकेयी । नामग्रहणेन आक्रोशं व्यनक्ति । कीदृशस्य पुत्रस्य कीदृशी मातेति ॥ ६ ॥

---

१. **'हिमानीयं सर्वेषाम्'** इति, **'हिमानीयं जनानाम्'** इति च। २. **'जाड्यकारिणी'**

३. **'–मियं सा प्रतिबाधते'** इति, **'–मियं सम्प्रति बाधते'** इति च।

४. **'कथं कष्टं नु कैकेयी'** इति वि.ती.पाठः स्यात्। **'कष्टं कथं सा कैकेयी'** इति, **'कथं कथय कैकेयी'** इति च क्वचित्। ५. **'त्वदघम्'**

**इत्युक्त ऊचे भगवान् कार्य्यो नो रक्षसां वधः ।**
**तस्माद् वनप्रवेशोऽत्र[1] सा निमित्तमभूदिति ॥ ७ ॥**

**(भा.दी.)** **इतीति** । इति लक्ष्मणेनोक्तः भगवान् श्रीरामः, येन हेतुना, नःअस्माकं रक्षसां रावणादीनां वधः कार्यः, तस्मात् वनस्य प्रवेशः नः अभूत् । सा कैकेयी तु अत्र वनप्रवेशे निमित्तमभूत् इति ऊचे ॥ ७ ॥
**(सं.चं.)** रक्षसां वधः कार्यः । तदर्थं वनप्रवेशश्च कार्यः । तत्र सा निमित्तं बभूवेति कथमम्बा गर्हणीया? ॥ ७ ॥

**स्नात्वा शालामुपागम्य कृतपौर्वाह्णिकक्रियः ।**
**सानन्दं[2] सीतया साकमास्ते स्म जगदीश्वरः ॥ ८ ॥**

**(भा.दी.)** **स्वेति** । जगदीश्वरः श्रीरामः गोदावर्यां स्नात्वा, शालां प्रति उपागम्य, पूर्वाह्णे भवा पौर्वाह्णिकी सा च सा क्रिया च, कृता पौर्वाह्णिकक्रिया येन स तथा सन्, सीतया साकम्, आनन्देन सहितं यथा भवति तथा सानन्दम्, आस्ते स्म ॥ ८ ॥

**(सं.चं.)** 'कृत्वा पौर्वाह्णिकं कर्म पर्णशालामुपागमत्' (१७.२) इत्यस्याभिप्रायमाह– स्नात्वा शालामुपागम्य कृतपौर्वाह्णिकक्रिय इति । 'कर्तुं पौर्वाह्णिकं कर्म' इत्यपि रामायणमूलपाठः स्यात् । 'स्नात्वा कृतपौर्वाह्णिकक्रियः शालामुपागम्य' इति वाऽन्वयः । अह्नः पूर्वं पूर्वाह्णः । 'अह्नोऽह्न एतेभ्यः' (अ.सू.५.४.८८) इत्यहन्शब्दस्य अह्नादेशः । 'अह्नोऽदन्तात्' (८.४.७) इति नस्य णकारादेशः ॥ ८ ॥

**एतस्मिन्नन्तरे पापा सम्प्राप्ता रावणानुजा ।**
**पतिमन्विष्य धावन्ती त्रिलोक्यां[3] रावणाज्ञया ॥ ९ ॥**

**(भा.दी.)** **एतस्मिन्निति** । रावणाज्ञया त्रिलोक्यां पतिं स्वयोग्यभर्तारं अन्विष्य विचारं कृत्वा धावन्ती पर्यटन्ती पापा क्रूरा रावणानुजा सा शूर्पणखा, एतस्मिन्नन्तरं मध्यं तस्मिन्, वर्तमानप्रसङ्गसमय इत्यर्थः, वर्तमाने हेमन्तर्तुमध्ये इति वा । सम्प्राप्ता श्रीरामनिकटं प्रत्यागता ॥ ९ ॥
**(सं.चं.)** एतस्मिन्नन्तरे अवसरेऽवकाशे वा । सीतारामयोः सङ्कथामध्ये वा । '**ಈ ನಡುವೆ**' इति भाषायाम् । रावणानुजा शूर्पणखा । पतिमन्विष्य धावन्ती पत्युरन्वेषणार्थं त्वरमाणा सञ्चरन्ती ॥ ९ ॥

१. **'वनप्रवेशे च सा'** २. **'सानन्दः'** इति, **'ससुखः'** इति च । ३. **'त्रिलोकान् राव–'**

**परचक्रेण खचिते निहते निजभर्त्तरि ।**
**प्रमादाद् राक्षसेन्द्रेण ततः सा व्यचिनोत् पतिम्[१] ॥ १० ॥**

**(भा.दी.)** पत्युरन्वेषणे कारणमाह– **परे**ति । परेषां शत्रूणां चक्रं सैन्यं तेन, 'चक्रं सैन्यं जलावर्तः' इति वैजयन्ती । खचिते मिश्रीभूते । रावणेन दिग्विजये क्रियमाणे रावणस्य कालकेयैः सह युद्धसमये कालकेयसैन्यगत इत्यर्थः । निजः स्वकीयो भर्ता विद्युज्जिह्वनामकस्तस्मिन् । 'ददौ तां कालकेयाय दानवेन्द्राय राक्षसीम् । स्वसां शूर्पणखां नाम विद्युज्जिह्वाय नामतः' इत्युक्तेः । राक्षसेन्द्रेण रावणेन, प्रमादोऽनवधानं तस्मात्, अज्ञानादित्यर्थः, निहते सति, ततः तदनन्तरम्, सा पतिं व्याचिनोत् मार्गयामास ॥ १० ॥

**(सं.चं.)**परचक्रेण शत्रुसैन्येन खचिते सम्पृक्ते, परसैन्यमध्यगते निजभर्तरि विद्युज्जिह्वे राक्षसेन्द्रेण रावणेन प्रमादात् बुद्धेरनवधानात्, कश्चन शत्रुसैनिकेष्वेक इति भ्रान्त्या निहते । ततः राक्षसेन्द्रादेव, तदभ्यनुज्ञानादेव पतिं व्यचिनोत् मार्गमाणा बभूव ॥ १० ॥

**त्रैलोक्यसुन्दरं रामं प्राप्य[२] त्रैलोक्यदुर्भगा ।**
**शूर्प्पणख्यब्रवीदारादार्त्ता स्मरशराहता ॥ ११ ॥**

**(भा.दी.) त्रैलोक्ये**ति । त्रैलोक्ये दुष्टं भगो भाग्यं यस्याः सा तथा, स्वभावतोऽत्यन्तासौम्यरूपेत्यर्थः, आर्ता पतिवियोगदुःखिता, शूर्पणखी, त्रैलोक्ये सुन्दरं श्रीरामं आरात् प्राप्य, स्मरस्य कामस्य यः शरस्तेन आहता ताडिता सती, श्रीरामसौन्दर्यं दृष्ट्वा कामातुरेत्यर्थः, अब्रवीत् ॥ ११ ॥

**(सं.चं.)**दुर्भगा विकृतरूपा । आरात् समीपं प्राप्य । आराद् दूरादेव रामं दृष्ट्वा स्मरशराहता वा । शूर्पणखीति । अस्य साधुत्वमुक्तं पुरस्तात् । 'ततः शूर्पणखी दृष्ट्वा सहस्राणि चतुर्दश । हतान्येकेन रामेण–' (२१.१) इति च वाल्मीकिप्रयोगः । केचिदणकारमेव पदं पठन्ति– शूर्पनखीति ॥ ११ ॥

**कान्त कामयमानां मां कान्तां वह तवोचिताम् ।**
**[३]अल्पया सीतया किं ते नन्वहं रावणानुजा ॥ १२ ॥**

**(भा.दी.) कान्ते**ति । हे कान्त मनोहर श्रीराम, तव (उचितां कामयमानां कान्तां भार्यां मां वह ।) सौन्दर्यादिना मत्तः स्वल्पया सीतया ते किं प्रियोजनम्? अहं भाग्यादिनाऽतिमहतीत्याह– नन्विति । अहं रावणस्य अनुजा भगिनी ननु? इति अब्रवीदिति सम्बन्धः ॥ १२ ॥

---

१. **'व्याचिनोत् पतिम्'** इति वि.ती.पाठः स्यात् । २. **'रामं दृष्ट्वा'** इति, **'रामं प्रेक्ष्य'** इति च । ३. **'स्वल्पया'** इति वि.ती.पाठः ।

**(सं.चं.)** तवोचितां कान्तां भार्याम् । वह उद्वह । अल्पया कृशाङ्ग्या अल्पभाग्यया च । अहं सर्वथाऽ-नल्पा । कुतः? नन्वहं रावणानुजा ॥ १२ ॥

**इत्युक्त ऊचे भगवान् पश्यन् सीतामुखाम्बुजम् ।**
**अस्यां सक्तोऽस्म्यहं भद्रे[1] मद्भ्राता ते भवेदिति ॥ १३ ॥**

**(भा.दी.) इती**ति । इति शूर्पणखया उक्तः भगवान् श्रीरामः, सीताया यन्मुखं तदेवाम्बुजं तत् पश्यन् सन्, हे भद्रे शोभने शूर्पणखे, अहं अस्यां सीतायां सक्तः आसक्तः अस्मि, ते तव मम भ्राता लक्ष्मणः भवेत् , पतिरिति शेषः, इति ऊचे ॥ १३ ॥

**(सं.चं.)** मद्भ्राता तेऽनुरूपो भर्ता भवेदिति ॥ १३ ॥

**राक्षसी लक्ष्मणं प्राप्य प्रोचे मन्मथमोहिता ।**
**तरुण त्वमदारोऽसि[2] मम भर्त्ता भवेरिति ॥ १४ ॥**

**(भा.दी.) राक्षसी**ति । मन्मथेन कामेन मोहिता राक्षसी लक्ष्मणं प्राप्य, हे तरुण, त्वं उदारः उत्कृष्टः असि, मम भर्ता भवेः इति प्रोचे ॥ १४ ॥

**(सं.चं.)** अदारः अकृतदारः। 'श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान्' (१८.३) इति रामवचनं शूर्पणखां प्रति । तदेव सा लक्ष्मणपुरत आह–तरुण त्वमदारोऽसीति । त्वमदारः । अहं चापतिरिति दैवविहितमावयो-र्दाम्पत्यम् । 'उदारोऽसि' इति पाठे उदारो विदग्धः स्त्रीहृदयाभिज्ञोऽसीत्यर्थः ॥ १४ ॥

**अहं शुश्रूषुरार्य्यस्य गच्छाऽर्य्यं वरवर्ण्णिनि ।**
**त्वां विना कमनीया का स्यादित्थं लक्ष्मणोऽब्रवीत् ॥ १५ ॥**

**(भा.दी.) अहमि**ति । अहं आर्यस्य श्रेष्ठस्य, सेवितुमिच्छति शुश्रूषति, शुश्रूषतीति शुश्रूषुः अस्मि । अतो न विषयासक्त इति भावः । हे वरवर्णिनि अङ्गने शूर्पणखि, आर्यं श्रीराममेव गच्छ । त्वां विना का स्त्री कमनीया मनोहरा स्यात्? इयमपहासोक्तिः । लक्ष्मणः इत्थं अब्रवीत् ॥ १५ ॥

---

१. **'सक्तोऽस्मि भद्रेऽहम्'** २. **'त्वमुदारोऽसि'** इति वि.ती.पाठः ।

**(सं.चं.)** आर्यस्य अग्रजतया पूज्यस्य रामस्य । '७৩ु' इति भाषायाम् । त्वं पुनरार्यमेव गन्तुं योग्या । न सेवकं माम् । ननु त्वं रावणानुजा । कमनीया का? अकमनीया केति ध्वनिः ॥ १५–६ ॥

**तयोरिमां हास्यकथामजानन्ती स्मरार्दिता ।**
**राक्षसी विकृताकारा पुना राममुपागमत् ॥ १६ ॥**

**(भा.दी.) तयोरि**ति । तयोः श्रीरामलक्ष्मणयोः इमां हास्यकथां हास्यरूपां कथाम्, परिहासरूपसम्भाषणमित्यर्थः, अजानन्ती, स्मरेण कामेन अर्दिता राक्षसी, विकृतः कराळवक्त्रत्वादिविकारं प्राप्त आकारो यस्याः सा तथा सती, श्रीरामं पुनरुपागमत् । गमेर्लुङ् ॥ १६ ॥

**त्वमेव मम कान्तोऽसि सपत्नीयं स्थिता मम[1] ।**
**अदान्येनामिति क्रूरा सीतामभ्यद्रवद् द्रुतम् ॥ १७ ॥**

**(भा.दी.) त्वमि**ति । मम कान्तः भर्ता त्वमेव असि । त्वत्समीपे स्थिता इयं सीता मम सपत्नी । अतः एनां सीतां अदानि भक्षयाणि । अद भक्षणे लोट् । इति वदन्ती, क्रूरा भयङ्करी सती सीतां द्रुतं यथा भवति तथा अभ्यद्रवत् ॥ १७ ॥

**(सं.चं.)** अदानि भुनजै इति वदन्ती सीतामभ्यद्रवत् ॥ १७ ॥

**राघवस्य मतं ज्ञात्वा लाघवाद् राघवानुजः ।**
**चकर्त्त कर्णौ नासां च राक्षस्याः खड्गधारया ॥ १८ ॥**

**(भा.दी.) राघवे**ति । राघवानुजः लक्ष्मणः, राघवस्य श्रीरामस्य, मतमभिप्रायस्तत्, ज्ञात्वा राक्षस्याः कर्णौ नासां नासिकां च, खड्गधारया लाघवं शैघ्र्यं तस्मात् चकर्त । कृती च्छेदने लिट् ॥ १८ ॥

**(सं.चं.)** लाघवात्, लाघवं लघुत्वं शैघ्र्यम् । तदाश्रित्य । धारा निशितोऽग्रभागः ॥ १८–९ ॥

**विस्वरं विरुदन्ती[2] सा स्नाता रुधिरधारया ।**
**जगाम शरणं घोरा भ्रातरौ खरदूषणौ[3] ॥ १९ ॥**

---

१. **'सपत्नीयं मम स्थिता'** इति, **'सपत्नीयं यतः स्थिता'** इति च । २. **'विस्तरं प्ररुदन्ती'**

३. **'भ्रातरौ शूर्पणख्या मातृष्वसुः पुत्रौ खरदूषणनामकौ राक्षसौ शरणं कुरुतमिति जगाम'** इति का.श्री. ।

**(भा.दी.)** **विस्वरमि**ति । विविधः स्वरो यथा भवति तथा विस्वरं विरुदन्ती, रुधिरस्य धारया स्नाता, सा घोरा शूर्पणखा, भ्रातरौ खरश्च दूषणश्च तौ राक्षसौ, शरणमरणं तत् जगाम ॥ १९ ॥

**(सं.चं.)** विकृतस्वरं विकटं रुदन्ती । कैकसी शूर्पणखाया जननी । कैकयीस्वसा खरस्य जननीति स शूर्पणखाया भ्राता । दूषणः कैकसीस्वसुर्बलाकायास्तनय इति वदन्ति । राकाया एव बलाकेति नामान्तरं स्यादिति भाति । नहि बलाका नाम कैकसीस्वसा रामायणे पठ्यते ॥ १९ ॥

**कस्य पास्यन्ति रुधिरं कङ्कपत्रा ममाधुना ।**
**अजिता विजिता केन त्वमित्यूचे खरोऽथ ताम् ॥ २० ॥**

**(भा.दी.)** **कस्ये**ति । अथ खरः, मम कङ्कपत्राः शराः अधुना कस्य पुरुषस्य, रुधिरं रक्तं तत्, पास्यन्ति पानं करिष्यन्ति । पातेर्लृट् । अजिता केनाऽप्यजिता त्वं केन पुरुषेण विजिता पराजिता असि? इति तां ऊचे ॥ २० ॥

**(सं.चं.)** मम कङ्कपत्रा बाणाः । 'कङ्कपत्रशरमार्गणबाणाः' इत्यभिधानम् । केनाप्यजिता सम्प्रति केन विजिता? ॥ २० ॥

**तरुणौ तरुणीयुक्तौ वैरिणौ मे वनान्तरे ।**
**तयोः पिबेयं रक्तौघमिति राक्षस्यभाषत[1] ॥ २१ ॥**

**(भा.दी.)** **तरुणावि**ति । तरुणौ युवानौ, तरुण्या स्त्रिया युक्तौ, मे मम वैरिणौ, वनस्यान्तरं मध्यं तस्मिन्, तिष्ठतः । तयोः पुरुषयोः रक्तानामोघः समूहस्तं पिबेयम् । पा पाने लिङ् । इति राक्षसी खरं प्रति अभाषत ॥ २१ ॥

**(सं.चं.)** तरुणीयुक्तयोः तयोः पिबेयं रक्तौघं रुधिरधाराम् ॥ २१ ॥

**खरः खरानादिदेश चतुर्द्दश निशाचरान् ।**
**ते तया सार्द्धमाजग्मुर्य्यत्र रामो रमासखः ॥ २२ ॥**

**(भा.दी.)** **खर** इति । खरः खरनामकः राक्षसः, खरान् क्रूरान्, चतुर्दश चतुर्दशसङ्ख्याकान् निशाचरान्, श्रीरामं गन्तुमादिदेश । ते खरप्रेषिताः चतुर्दश राक्षसाः, तया शूर्पणखया सार्धम्, यत्र वने रमायाः सखा रमासखः श्रीरामस्तिष्ठति तत्र आजग्मुः आगताः ॥ २२ ॥

१. 'राक्षस्यवोचत' । 'अवोचत । ब्रूञ् व्यक्तायां वाचि लुङ् । ब्रुवो वचिः' इति का.श्री. ।

**(सं.चं.)** खरान् क्रूरान् । ते चतुर्दश निशाचराः । तया शूर्पणखया ॥ २२ ॥

**आदत्त दत्तारिभयं चापं चामीकरोज्ज्वलम् ।**
**आलोक्य लोकनाथस्तान् वचनं चेदमब्रवीत् ॥ २३ ॥**

**(भा.दी.)** **आदत्ते**ति । लोकनाथः श्रीरामः, तान् राक्षसान् आलोक्य, दत्तं अरीणां भयं येन स तथा तम्, चामीकरेण सुवर्णेन उज्वलं प्रकाशमानम्, चापं आदत्त आददे । इदं वचनं च अब्रवीत् ॥ २३ ॥

**(सं.चं.)** दत्तमरीणां भयं येन । कार्तस्वरमयम्, अत एवोज्ज्वलम् । 'जाम्बूनदं हिरण्यं कनकमहारजत-काञ्चनानि स्युः । कार्तस्वरचामीकरकर्बुरतपनीयनामानि' इत्यभिधानम् । चापश्चापं वा । 'अस्त्रियौ चापधनुषौ' इति यादवप्रकाशः । तान् शूर्पणखामुखान् राक्षसान् । इदं वक्ष्यमाणम् ॥ २३ ॥

**ब्रह्मद्रुहो वो वत्स्यामि[१] यदि मे तिष्ठथाग्रतः[२] ।**
**इत्युक्ता आक्षिपन्ति स्म राक्षसा रूक्षलक्षणाः ॥ २४ ॥**

**(भा.दी.)** **ब्रह्मे**ति । यदि मे अग्रे इत्यग्रतः यूयं तिष्ठथ, तर्हि ब्रह्म ब्राह्मणान् वेदान् वा द्रुह्यन्ति निन्दन्तीति वा ब्रह्मद्रुहस्तान् वः युष्मान् वत्स्यामि हनिष्यामि । वध संप्रहारे लृट् । इति श्रीरामेण उक्ताः, रूक्षाणां क्रूराणां लक्षणं चिह्नं येषां ते तथा, राक्षसाः, आक्षिपन्ति स्म श्रीराममकुत्सयन् ॥ २४ ॥

**(सं.चं.)** वत्स्यामि इति पठन्ति । हनिष्यामि इति व्याख्यान्ति । 'वध सम्प्रहारे' इति च धातुपाठं पठन्ति । न जानीमहे तेषामाशयमित्यवादिष्म । कश्चन लिपिकृत्प्रमादः सम्भाव्यते । 'योत्स्यामि' इति क्वचित् पाठः । स्यादपि । किन्तु पाणिनीया न सहेरन् । ते हि युधधातुमकर्मकमात्मनेभाषं च पठन्ति । 'वस्यामि' इत्यपि पाठः स्यादित्युक्तम् । अथापि नान्ततो हृदयमावर्जयति । हनिष्यामीत्यर्थतः सुन्दरम् । किन्तु हन-धातोर्लृटि वधादेशः, वधादेशेऽप्यनिट्त्वं च कथमिति चिन्त्यम् । आक्षिपन्ति स्म आचक्रमुः । आचिक्षि-पुश्चाऽयुधानि । रूक्षलक्षणाः रूक्षस्वभावाः ॥ २४ ॥

**शस्त्रास्त्रवृष्टिं दुर्द्धर्षां शरैश्छित्वाऽथ[३] रक्षसाम् ।**
**चतुर्द्दश शरांस्तीक्ष्णान् रुग्मपुङ्खानमुञ्चत ॥ २५ ॥**

---

१. **'योत्स्यामि'** २. **'तिष्ठताग्रतः'** इति पठन्तो भ्रान्ताः । **'तिष्ठत कोट् मध्यमपुरुषबहुवचनम्'** इति का.श्री. व्याख्यानं चिन्त्यम् ।

३. **'शरैश्छित्वा स रक्षसाम्'** इति, **'शरैश्छित्वा च'** इति, **'शरैश्छित्वा तु'** इति च क्वचित् ।

**(भा.दी.) शस्त्रे**ति । अथ श्रीरामः, दुर्धर्षामसह्याम्, रक्षसां शस्त्राणि च अस्त्राणि च तेषां वृष्टिम्, शराः सायकास्तैः छित्वा, रुग्ममयः स्वर्णमयः पुङ्खो येषां ते  तथा तान्, तीक्ष्णान् चतुर्दश च ते शराश्च तान् अमुञ्चत । मुच्लृ मोक्षणे लङ् ॥ २५ ॥

**(सं.चं.)** दुर्धर्षां सोढुमशक्यामन्यैः । पुङ्खः काण्डमूलम् ॥ २५ ॥

**शरास्तेऽथ[१] शरीराणि नृशरीराशिनां क्षणात् ।**
**भित्त्वा धरातळेऽमज्जन् राक्षसा निरयेऽशुचौ ॥ २६ ॥**

**(भा.दी.) शरा** इति । अथ ते शराः, नृणां शरीराणि अशितुं शीलमेषामस्तीति तथा तेषां राक्षसानाम्, शरीराणि क्षणः क्षणकालस्तस्मात्, भित्त्वा धरायास्तळं प्रदेशस्तस्मिन् अमज्जन् । टु मस्जो शुद्धौ लङ् । राक्षसाः, शुचिः न भवतीत्यशुचिस्तस्मिन् निरये नरकेऽमज्जन्, नरकं प्राप्ता इत्यर्थः ॥ २६ ॥

**(सं.चं.)** राक्षसा निरयेऽमज्जन् ॥ २६ ॥

**दुःखाच्छूर्प्पणखी गत्वा रुरोद खरसन्निधौ ।**
**क्लीबोऽसि त्वं मनुष्याभ्यां भीतः शेषे गृहेष्विति ॥ २७ ॥**

**(भा.दी.) दुःखादि**ति । शूर्पणखी, राक्षसवधजन्यं यद्दुःखं तस्मात्, गत्वा, खरस्य सन्निधिः समीपं तस्मिन्, रुरोद । यस्मात् मनुष्याभ्याम्, पञ्चमीयम्, भीतः सन् गृहेषु । 'गृहाः पुंसि च भूम्न्येव' इत्यमरः । शेषे शयनं करोषि (तस्मात् त्वं क्लीबोऽसि) इति रुरोद ॥ २७ ॥

**(सं.चं.)** क्लीबोऽसि विक्रमहीनोऽसि । 'क्लैब्यं मा स्म गमः पार्थ' इति च गीतासु ॥ २७ ॥

**अञ्जनाद्रिशरीराणां रक्षसां भीमकर्म्मणाम् ।**
**चतुर्द्दशसहस्राणि प्रातिष्ठन्त खराज्ञया ॥ २८ ॥**

**(भा.दी.) अञ्जने**ति । अञ्जनाद्रिवदतिकृष्णानि शरीराणि येषां तानि तथोक्तानि तेषाम्, भीमं भयङ्करं कर्म येषां तानि तेषाम्, रक्षसां चतुर्दश च तानि सहस्राणि च, खराज्ञया प्रातिष्ठन्त युद्धार्थमुत्थितानि ॥ २८ ॥

१. 'शरास्तेषां शरीराणि'

**(सं.चं.)** शूर्पणखीवचोविद्धः खरः चतुर्दश सहस्राणि रक्षसामाज्ञापयामास । खराज्ञया च तानि योद्धुं प्रातिष्ठन्त । 'समवप्रविभ्यः स्थः' (अ.सू.१.३.२२) इत्यात्मनेभाषता ॥ २८ ॥

**खरोऽद्रिशिखरप्रख्यं कार्त्तस्वरमयं रथम् ।**
**आरुह्य रक्षसां मद्ध्ये ययौ दूषणसंयुतः ॥ २९ ॥**

**(भा.दी.) खर** इति । खरः, अद्रेः शिखरं शृङ्गं तस्य प्रख्यः सदृशास्तम् । 'सदृशः सदृक्षः प्रख्यः प्रकाशः' इति हलायुधः । कार्तस्वरस्य सुवर्णस्य विकारः कार्तस्वरमयस्तं सुवर्णात्मकमित्यर्थः, रथं आरुह्य दूषणाख्येन स्वभ्रात्रा संयुतः सन्, रक्षसां मध्यं मध्यप्रदेशस्तस्मिन् ययौ ॥ २९ ॥

**(सं.चं.)** दूषणेन भ्रात्रा संयुतः ॥ २९ ॥

**दिव्यान् भौमांश्च शारीरानुत्पातानभिवीक्ष्य च ।**
**खरः प्रखरसंरम्भादनादृत्यैव तान् ययौ ॥ ३० ॥**

**(भा.दी.) दिव्यानि**ति । खरः, दिवि भवाः दिव्यास्तान् उल्कापातादीन् उत्पातान्, भूमौ भवाः भौमाः भूकम्पादयस्तान् उत्पातान्, शरीरे भवाः शारीरा वामाक्षिस्फुरणादयस्तान् उत्पातांश्च, अभिवीक्ष्य च युद्धार्थं गमनसमये दृष्ट्वाऽपि, प्रखरो यः संरम्भः तस्मात्, अतिप्रबलकोपादित्यर्थः, तानुत्पाताननादृत्यैव ययौ ॥ ३० ॥

**(सं.चं.)** दिव्यानुत्पातान्–'तस्मिन् याते जनस्थानादशिवं शोणितोदकम् । अभ्यवर्षन् महामेघास्तुमुलो गर्दभारुणाः' (२३.१) इत्यादि । भौमान्–'प्रचचाल मही सर्वा सशैलवनकानना' (२३.१६) इत्यादि । शारीरान्–'प्राकम्पत भुजः सव्यः स्वरश्चास्यावसज्जत । सास्रा सम्पद्यते दृष्टिः पश्यमानस्य सर्वतः' (२३.१७) इत्यादि च । प्रखरोऽदम्यः संरम्भो दर्पः ॥ ३०–२ ॥

**एतस्मिन्नन्तरे रामः सौमित्रिं प्रत्यभाषत ।**
**निमित्तैर्विद्धि युद्धं नः सौमित्रे[१] प्रत्युपस्थितम् ॥ ३१ ॥**

---

१. 'युद्धं नो लक्ष्मण प्रत्युप–'

**(भा.दी.) एतस्मिन्निति** । एतस्मिन्नन्तरं मध्यं तस्मिन्, शूर्पणखागमनानन्तरं खरागमनात्पूर्वकाल इत्यर्थः, श्रीरामः, हे सौमित्रे, निमित्तानि शकुनानि तैः (नः) युद्धं प्रत्युपस्थितं सम्प्राप्तं (विद्धि) विजानीहि[१] । इति सौमित्रिं लक्ष्मणं प्रति अभाषत ॥ ३१ ॥

**एष बाहुः[२] स्फुरति मे चापं चेदं विचेष्टते ।**
**बिलेऽस्मिन् तिष्ठ वैदेह्या सार्द्धं शरधनुर्द्धरः ॥ ३२ ॥**

**(भा.दी.) एष** इति । मे मम एषः बाहुः हस्तः स्फुरति चलति । स्फुर सञ्चलने लट् । इदं चापं च विचेष्टते स्वयमेव चलति । चेष्ट चेष्टायां लट् । त्वं शराश्च धनुश्च तानि धारयतीति तथोक्तः तथा सन्, वैदेह्या सार्धम्, अस्मिन् बिलं गुहा तस्मिन् तिष्ठ ॥ ३२ ॥

**एवमुक्तो भगवता तथा चक्रे स लक्ष्मणः ।**
**रामोऽप्यनाकुलस्तस्थौ सवर्म्मा धृतकार्म्मुकः[३] ॥ ३३ ॥**

**(भा.दी.) एवमिति** । भगवता श्रीरामेण एवं उक्तः सः लक्ष्मणः तथा उक्तरीत्या चक्रे । वर्मणा कवचेन सहितः सवर्मा, बद्धकवच इत्यर्थः, धृतं कार्मुकं येन स तथा श्रीरामोऽपि, आकुलो न भवतीत्यनाकुलः असम्भ्रान्तः सन् तस्थौ ॥ ३३ ॥

**(सं.चं.)** अनाकुलः अभीतः, असम्भ्रान्तः । सवर्म्मा सकवचः । सन्नद्धकार्मुकः ॥ ३३ ॥

**रक्षोगणः प्रक्षुभितो गत्वा भग्नजवोऽभवत् ।**
**आलोकसीमां रामस्य वेलामिव महोदधिः ॥ ३४ ॥**

**(भा.दी.) रक्ष** इति । प्रक्षुभितः क्रोधेन क्षुब्धः, रक्षसां गणः, श्रीरामस्य आलोक एव दर्शनमेव सीमा अवधिस्तां गत्वा, श्रीरामं दृष्ट्वेत्यर्थः, महान् य उदधिः समुद्रः, वेलां तीरं गत्वेव, भग्नः जवो यस्य सः तथा अभवत् ॥ ३४ ॥

---

१. **'जानीहि युद्धं सौमित्रे निमित्तैः प्रत्युपस्थितम्'** इत्यपि वि.ती.पाठः स्यात् ।

२. **'बाहुः वामबाहुः स्फुरति । नेत्रादिचलनमपि द्रष्टव्यम् । तेन निमित्तैरिति बहुवचनोपपत्तिः'** इति.का.श्री. ।

३. **'सवर्मोद्धृतकार्मुकः'**

**(सं.चं.)** गमनसमय एव प्रक्षुभितः भीतः, जये ससंशयः । गत्वा भग्नजवोऽभवत् । 'दरितश्चकितो भीतस्त्रस्तो भीरुश्च कातरः । क्षुभितः शङ्कितश्चेति नातिनानार्थवाचकाः' इत्यभिधानम् । क्षुभित उच्चलितो वा । महोदधिः क्षुभित उल्लोलकल्लोलः । सीमाऽवधिः । 'सीमा तु सीमा मर्यादा' इति यादवप्रकाशः । 'सीमसीमे तु कूलेऽपि' इति च । रामावलोकनावधिस्तेषां जव इत्यर्थः ॥ ३४ ॥

**अमर्षितः[1] खरः प्रागात्[2] परितस्तमथापरे[3] ।**
**श्येनगामी पृथुग्रीवो यज्ञशत्रुर्म्महाविषः ॥ ३५ ॥**

**दुर्ज्जयः करवीराक्षः परुषः कालकार्म्मुकः ।**
**मेघमाली महाबाहुर्म्महास्यो लोहिताम्बरः ॥ ३६ ॥**

**द्वादशैते महावीर्य्याः प्रेरयन्तश्चमूं ययुः[4] ।**
**अहं पूर्वमहं पूर्वमिति मत्ताः ससाहसाः[5] ॥ ३७ ॥**

**(भा.दी.) अमर्षित** इति । अमर्षितः कुपितः खरः युद्धार्थं प्रागात् । इण् गतौ लुङ् । अथ तं खरं परितः, श्येनवद्गन्तुं शीलमस्यास्तीति तथा, अत एव तन्नामा, पृथुः ग्रीवा यस्य स तथा, अत एव तन्नामकः, यज्ञस्य शत्रुः, महाविषः, महत् विषं यस्य स तथा, जेतुमशक्यो दुर्जयः, करवीरपुष्पवदक्षिणी यस्य स तथा, परुषो निष्ठुरः, तत एव तन्नामा, कालवत् कार्मुकं यस्य स तथा, मेघवन्नीलवर्णा माला यस्य स तथा, महान्तौ बाहू यस्य स तथा, महदास्यं मुखं यस्य स तथा, लोहितं रक्तमम्बरं यस्य स तथा, द्वादशसङ्ख्याकाः, महद्वीर्यं येषां ते तथा, चमूं प्रेरयन्तः, मत्ताः बलोन्मत्ताः, साहसेन प्रयत्नेन सहिताः एते राक्षसाः, अहं पूर्वं प्रथमतः योद्धुं गच्छामि अहं पूर्वं गच्छामीति वदन्तः सन्तः ययुः ॥ ३५–७ ॥

**(सं.चं.)** तं परितः परिवार्यापरे द्वादश चमूनाथाः । श्येनगामी पृथुग्रीव इत्यादि । सम्प्रति रामायणे किञ्चिदिवान्यथा पठ्यते–'श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहङ्गमः । दुर्जयः करवीराक्षः परुषः कालकार्मुकः । मेघमाली महामाली सर्पास्यो रुधिराशनः । द्वादशैते महावीर्या बलाध्यक्षाः ससैनिकाः' (२६.२६–७) इति । अत्र महाविषो विहङ्गमो बभूव । महाबाहुर्महामाली । महास्यः सर्पास्यः । लोहिताम्बरो रुधिरा-

---

१. 'अमर्षितः तितिक्षारहितः । कुपित इति यावत्' इति का.श्री. । २. 'प्रायात्'
३. 'परितस्तं तथाऽपरे' ४. 'प्रेषयन्तश्चमूर्ययुः' ५. 'साहसेन सहनशक्त्या सहिताः । शूरा इत्यर्थः' इति का.श्री. ।

शनः । दिष्ट्या लिकुचान्वयकृपया लब्धप्राचीनपाठाः सुकृतिनो वयम् । साहसमविमृश्यकारिता । 'ದುಡುಕು' इति भाषायम् ॥ ३५–८ ॥

**महाकपालः स्थूलाक्षः प्रमाथी त्रिशिरास्तथा ।**
**चत्वार एते सेनाग्रे वीरा दूषणमन्वगुः[1] ॥ ३८ ॥**

**(भा.दी.) महे**ति । महान् कपालो यस्य स तथा अत एव तत्सञ्ज्ञकः, स्थूले अक्षिणी यस्य स तथा, प्रमथ्नाति शत्रूनिति प्रमाथी, त्रीणि शिरांसि यस्य स तथा, इति चत्वारः वीराः, एते राक्षसाः, सेनाया अग्रं तस्मिन्, दूषणं दूषणनामकं खरभ्रातरं अन्वगुः । इण् गतौ लुङ् ॥ ३८ ॥

**धनुर्विष्फारयामास[2] दृष्ट्वा तान् दुष्टसूदनः ।**
**इषुध्योरिषवस्तस्य जाज्वल्यन्ते स्म वह्निवत् ॥ ३९ ॥**

**(भा.दी.) धनुरि**ति । दुष्टान् सूदयति नाशयतीति तथोक्तः श्रीरामः, तान् राक्षसान् दृष्ट्वा, धनुः विष्फारयामास ध्वनयामास । स्फुर चलने लिट् । तस्य श्रीरामस्य इषुध्योः, 'निषङ्ग इषुधिर्द्वयोः' इत्यमरः, इषवः शराः, वह्निवत् जाज्वल्यन्ते स्म अतिशयेन जज्वलुः । ज्वल दीप्तौ लट् ॥ ३९ ॥

**(सं.चं.)** 'विष्फारो धनुषः स्वानः' इति यादवप्रकाशः । 'स्फर स्फुल चलने' । 'स्फुर स्फुरणे । स्फर इत्येके' इति धातुप्रदीपे मैत्रेयरक्षितः । 'चिस्फुरोर्णौ' (अ.सू.६.१.५४) इति स्फुरतेर्विभाषा आकारादेशः । स्फारयामास स्फोरयामास । 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' (अ.सू.८.३.७६) इति विभाषा मूर्धन्यादेशः । विष्फारयामास विष्फोरयामास । अंसद्वयलग्नयोरिषुध्योर्गता इषवः ॥ ३९ ॥

**देवोपदेवा मुनयो[3] रामराक्षससङ्गरम् ।**
**दिदृक्षमाणा गगनं विमानाग्र्यैरपूरयन् ॥ ४० ॥**

**(भा.दी.) देवे**ति । देवाश्च उपदेवाश्च गन्धर्वादयस्ते च, मुनयश्च ते, रामश्च राक्षसाश्च तेषां यः सङ्गरः सङ्ग्रामः तम्, दिदृक्षमाणा द्रष्टुमिच्छावन्तः सन्तः, गगनमन्तरिक्षं तत्, विमानेषु अग्र्याणि श्रेष्ठानि तैः अपूरयन् । पॄ पालनपूरणयोः[4] लङ् ॥ ४० ॥

---

१. **'दूषणमन्वयुः'** २. **'धनुः विष्फारयामास'** ३. **'देवोपदेवमुनयो–'** । वि.ती.पाठोऽपि तथा स्यात् ।

४. पॄधातोर्णिचि लङि **'अपारयत्'** इति रूपमित्युक्तम् । **'पूरी आप्यायने'** इति युक्तम् ।

**(सं.चं.)** उपदेवा गन्धर्वाप्सरोविद्याधरादयः ॥ ४० ॥

**रामोऽयमृजुरेकाकी बहवो मायिनः परे ।**
**कथं नु स्वस्ति तस्येति[१] केचिदत्राऽचचक्षिरे ॥ ४१ ॥**

**(भा.दी.) राम** इति। अयं श्रीरामः ऋजुरवक्रः, मायायुद्धरहित इत्यर्थः, एकाकी, परे अन्ये राक्षसाः मायिनः कपटिनः बहवश्च, अतः अस्य श्रीरामस्य कथं नु कथं वा स्वस्ति क्षेमः स्यात् इति, अत्र अन्तरिक्षे, केचित् आचचक्षिरे अवदन् । चक्षिङ् व्यक्तायां वाचि लिट् ॥ ४१ ॥

**(सं.चं.)** कथं नु स्वस्ति स्यादिति ॥ ४१ ॥

**यद्भ्रूविभ्रममात्रेण विभ्रश्येद्[२] भुवनत्रयम् ।**
**तस्य किं राक्षसकुलं[३] रामस्येत्यपरेऽवदन्[४] ॥ ४२ ॥**

**(भा.दी.) यदिति** । भुवनानां त्रयम्, यस्य श्रीरामस्य भ्रुवोर्यद् विभ्रममात्रं चलनमात्रं तेन विभ्रश्येत् विनश्येत्, भ्रंशु अधःपतने लिङ् । तस्य तादृशसामर्थ्यवतः श्रीरामस्य, राक्षसानां कुलं समूहस्तत्, किं गणनीयमस्ति, न किमपि, इति अपरे उत्तमाधिकारिणः अवदन् ॥ ४२ ॥

**(सं.चं.)** विभ्रश्येत् अधःपतित्वा शकलशः विनश्येत् ॥ ४२–३ ॥

**स रक्षसां शस्त्रवृष्टिं निरस्य निशितैः शरैः ।**
**तान्यथ द्रावयामास क्षणेन कमलेक्षणः ॥ ४३ ॥**

**(भा.दी.) स** इति। अथ कमलवदीक्षणे यस्य स तथा सः श्रीरामः, रक्षसां शस्त्राणां या वृष्टिस्ताम्, निशिताः शाणोल्लीढास्तैः शरैः, निरस्य विनाश्य, तानि रक्षांसि, क्षणेन क्षणकालस्तेन, द्रावयामास ॥ ४३ ॥

**दूषणोज्झितमापाथ दूषणो विश्वभूषणम् ।**
**सा च सेना जगन्नाथमसेनं प्रत्यपद्यत ॥ ४४ ॥**

---

१. **'स्वस्त्यतोऽस्येति'** इति वि.ती.पाठः स्यात्।
१. **'विभ्रंश्येत्'** इति पठन्तो भ्रान्ताः।
३. **'राक्षसबलम्'**
४. **'–स्येति परेऽवदन्'**

**(भा.दी.) दूषणे**ति। अथ दूषणः, दूषणैर्दोषैरुज्झितं रहितम्, विश्वस्य भूषणमिव भूषणम्, अलङ्कारभूतमित्यर्थः, श्रीरामं आप। सा दूषणसम्बन्धिनी सेना च जगन्नाथम्, न विद्यते सेना यस्य स तथा तं श्रीरामं प्रत्यपद्यत। पद गतौ लङ् ॥ ४४ ॥

**(सं.चं.)** दूषणैरुज्झितं रामम्। असेनं सेनारहितमेकाकिनम्। इनेन सहितः सेनः। स न भवतीति च ध्वनिः। यतः सर्वस्य जगतोऽयं नाथः ॥ ४४ ॥

**[१]सालशैलशिलावर्षान् राक्षसान् विमुखान् व्यधात्।**
**दूषणं[२] चापि युद्ध्यन्तं सायकैर्लोकनायकः ॥ ४५ ॥**

**(भा.दी.) साले**ति। लोकानां नायकः स्वामी, अथ सालाः सर्जवृक्षाः ते च, तालाः तालवृक्षास्ते च, शिलाश्च तासां वर्षो येषां ते तथा तान् राक्षसांश्च, सायकाः शराः, तैः विमुखान् पराङ्मुखान् व्यधात् चक्रे। युद्ध्यन्तं दूषणं चापि, विपरीतं मुखं यस्य स तथा तम्, पराङ्मुखमित्यर्थः, व्यधात् चक्रे ॥ ४५ ॥

**(सं.चं.)** सालाः वृक्षाः। शैलाः गण्डशैलाः। दूषणं च विमुखं व्यधात्। युध्यन्तम्। पाणिनीया युधधातुमात्मनेभाषं भाषन्ते। पौराणिका-स्तूभयतोभाषम् ॥ ४५ ॥

**पुनरुद्यच्छतस्तस्य दूषणस्यारिभीषणः।**
**ध्वजं वाहांस्त्रिवेणूंश्च[३] सारथिं चाक्षिणोच्छरैः ॥ ४६ ॥**

**(भा.दी.) पुनरि**ति। अरीणां भीषणो भयङ्करः श्रीरामः, पुनः उद्यच्छतः युद्धार्थमुद्योगं कुर्वतः, तस्य दूषणस्य यो ध्वजस्तम्, वाहान् वाहनाश्वान्। 'वाजिवाहाश्वगन्धर्व–' इत्यमरः। त्रयश्च ते वेणवश्च रथावयवभूतत्रिवेण्वाख्ययष्टीरित्यर्थः, सारथिं च शरैरक्षिणोत् व्यनाशयत्। क्षिणु हिंसायां लङ् ॥ ४६ ॥

**(सं.चं.)** अश्वबन्धनदारुणो रथेन संयोजकास्त्रयो दण्डास्त्रिवेणव उच्यन्ते, दण्डस्त्रिवेणुभिर्बद्ध इति त्रिवेणुरप्युच्यते, यन्मूले सारथिरुपविशति ॥ ४६–७ ॥

**अच्छकीर्त्तिरथ च्छित्वा सर्वाण्यस्याऽयुधानि च।**
**तेन मुक्तां गदां गुर्वीं लीलयाऽदारयच्छरैः ॥ ४७ ॥**

---

१. **'सालतालशिला–'** इति वि.ती.पाठः। २. **'दूषणं चाथ युध्यन्तम्'** इत्यपि वि.ती.पाठः स्यात्। **'चाभियुध्यन्तम्'** इति च क्वचित्।
३. **'वाहांस्त्रिवेणुं स सारथिम्'**

**(भा.दी.) अच्छे**ति । अथ अच्छा निर्मला कीर्तिर्यस्य स तथा श्रीरामः, अस्य दूषणस्य सर्वाणि यान्यायुधानि तानि, च्छित्वा तेन दूषणेन मुक्तां गुर्वीं गदाम्, शरैर्लीलयाऽदारयत् । दृ विदारणे लङ् ॥ ४७ ॥

**रामेणाष्टेषुभिर्विद्धः परिघं परिगृह्य सः[१] ।**
**हतोऽसीत्यभ्ययाच्चण्डो[२] दण्डपाणिरिवान्तकः ॥ ४८ ॥**

**(भा.दी.) रामेणे**ति । श्रीरामेण, अष्टौ च ते इषवश्च तैर्विद्धः, चण्डः क्रूरः, सः दूषणः, परिघाख्यो य आयुधविशेषः तं परिगृह्य, हे राम, त्वं हतः असि, इति ब्रुवन्निति शेषः, दण्डः पाणौ यस्य स तथा, अन्तकइव यम इव अभ्ययात् ॥ ४८ ॥

**(सं.चं.)** परिघः अयोदण्डः । 'परिघोऽर्गलदण्डयोः' इति यादवप्रकाशः । **'ಲಾಳವಿಂಡಿಗೆ'** इति भाषायाम् ॥४८॥

**आपतन्तं तमालोक्य[३] पत्रिभ्यां पत्रिकेतनः[४] ।**
**राघवो लाघवात् तस्य च्छित्वा बाहू न्यपातयत् ॥ ४९ ॥**

**(भा.दी.) आपतन्तमि**ति । पत्री गरुडः केतने ध्वजे यस्य स तथोक्तः श्रीराघवः, आपतन्तं अभिमुख आगच्छन्तं तं दूषणं आलोक्य, पत्रिणौ शरौ ताभ्यां तस्य दूषणस्य बाहू लाघवं शैघ्र्यं तस्मात् छित्वा न्यपातयत्, दूषणमिति शेषः ॥ ४९ ॥

**(सं.चं.)** पत्रिकेतनः गरुडध्वजः ॥ ४९ ॥

**[५]दिवोऽभवन्निपतिते दूषणे विश्वभीषणे ।**
**जयशब्दो नमःशब्दः पुष्पवर्षश्च राघवे ॥ ५० ॥**

**(भा.दी.) दिव** इति । विश्वस्य भीषणो भयङ्करः तस्मिन् दूषणे निपतिते सति, द्यौः स्वर्गस्तस्याः जय इति शब्दो जयशब्दः अभूत् । नम इति शब्दो नमश्शब्दः अभूत् । पुष्पवर्षश्च श्रीराघवे अपतत् ॥ ५० ॥

**(सं.चं.)** दिवो जयशब्दो नमःशब्दश्च घोषितोऽभवत् । पुष्पवर्षश्च पतितोऽभवत् ॥ ५० ॥

---

१. **'परिगृह्य च'**          २. **'–त्यभ्यधाच्चण्डो-'**          ३. **'आपतन्तं समालोक्य'**          ४. **'पक्षिकेतनः'**

५. **'दिवोऽपतन्निपतिते'** इति वि.ती. पाठः स्यात् । **'दिवोऽपतन्निपतिते दूषणे विश्वभूषणे'** इति कश्चित् । तदा **'विश्वभूषणे राघवे'** इत्यन्वयः । अथाप्यस्वरसः पाठः ।

**जघान राघवो बाणैर्व्याकुलं रक्षसां कुलम् ।**
**अवशिष्टं ततोऽशिष्टं[1] परितः स्म पलायते ॥ ५१ ॥**

**(भा.दी.) जघाने**ति । श्रीराघवः, व्याकुलं सम्भ्रान्तम्, अशिष्टं दुष्टम्, रक्षसां कुलं समूहस्तत्, बाणाः सायकास्तैः जघान । हन्तेर्लिट् । तेभ्य इति ततः हतेभ्य इत्यर्थः, अवशिष्टं सैन्यम्, परितः पलायते स्म द्रवते स्म ॥ ५१ ॥

**(सं.चं.)** स्वनायकस्य दूषणस्य पतनेन व्याकुलं प्रतिकर्तुमप्रभवत्, किं तिष्ठाम्यहो पलाये इति द्वन्द्वक्रकचलग्नं विरतव्यापारम् । 'विहस्तो व्याकुलः प्रोक्तः' इत्यभिधानम् । 'ಕೈ ಚೆಲ್ಲು' इति भाषायाम् । प्रायो बाणैर्जघान । अथाप्यवशिष्टमशिष्टं परितः सर्वतोदिशं कान्दिशीकं पलायते स्म अपलायत ॥ ५१ ॥

**महाकपालः स्थूलाक्षः प्रमाथी चोद्यतायुधाः[2] ।**
**अभ्ययू राक्षसा रामं तान् जघान जगद्गुरुः[3] ॥ ५२ ॥**

**(भा.दी.) महे**ति । महाकपालः स्थूलाक्षः प्रमाथी उद्यतायुधः इत्येते चत्वारो राक्षसाः श्रीरामं अभ्ययुः । जगद्गुरुः श्रीरामः तान् जघान ॥ ५२ ॥

**(सं.चं.)** ततः महाकपालः स्थूलाक्षः प्रमाथी चेति त्रयः सेनाग्रण्यः । 'एतस्मिन्नन्तरे क्रुद्धास्त्रयः सेनाग्रयायिनः । संहत्याभ्यद्रवन् रामं मृत्युपाशावपाशिताः । महाकपालः स्थूलाक्षः प्रमाथी च महाबलः' (२६.१७–८) इति च । त्रयोऽप्युद्यतायुधाः ॥ ५२ ॥

**तुल्यं शरशतेनेशः शतं हन्ति स्म राक्षसान् ।**
**सहस्रेण सहस्रं च लीलया लोकवल्लभः[4] ॥ ५३ ॥**

**(भा.दी.) तुल्यमि**ति । लोकानां वल्लभः स्वामी, ईशः सर्वसमर्थः श्रीरामः, शराणां शतं तेन, तुल्यं युगपद् यथा भवति तथा, राक्षसानां शतं तत्, शराणां यत्सहस्रं तेन रक्षसां सहस्रं च, लीलया हन्ति स्म न्यहन् ॥ ५३ ॥

---

१. **'ततो दृष्टम्'** २. **'चोद्यतायुधः'** इति वि.ती.पाठः । रामायणाननुगुणमेतत् । **'एते चत्वारो राक्षसाः'** का.श्री.टीकाऽपि भ्रान्तिमूला ।
३. **'जघान शरैः प्रभुः'** ४. **'लोकवल्लभः लोकप्रियः'** इति का.श्री. ।

**(सं.चं.)** शराश्च शरहताश्च सङ्ख्यया तुल्या यथा स्युस्तथा । 'रक्षसां तु शतं रामः शतेनैकेन कर्णिना । सहस्रं च सहस्रेण जघान रणमूर्धनि' (२६.३१) इति च ॥ ५३ ॥

**एवं चतुर्दशसहस्रपलाशिराशिं**
**रामानलो विशिखनामशिखी[१] प्रदह्य ।**
**मुख्यं खराख्यपशुमप्युपयातमारात्[२]**
**प्रत्यैक्षत प्रमदयन् निखिलान् मखान्नान् ॥ ५४ ॥**

**इति श्रीनारायणपण्डिताचार्यविरचिते रामाङ्के सङ्ग्रहरामायणेऽरण्यकाण्डे तृतीयः सर्ग्गः ॥**

**(भा.दी.)** **एवमि**ति । विशिखा इति शरा इति नाम यासां ताः विशिखानाम्न्यस्ताश्च ताः शिखाश्च (ज्वालाश्च) ताः अस्य सन्तीति विशिखनामशिखी । व्रीह्यादित्वादिनिः । शराख्यज्वालवानित्यर्थः । श्रीरामानलः श्रीरामाख्याग्निः, चतुरधिका दश चतुर्दश, तानि च सहस्राणि च चतुर्दशसहस्राणि । पलं मांसमशितुं शीलमेषामस्तीति पलाशिनो राक्षसाः, चतुर्दशसहस्राणि च ते पलाशिनश्च तेषां राशिः समूहः, तं प्रदह्य भस्मीकृत्य, निखिलान्, मखस्य अन्नं येषां ते तथा तान्, क्रतुभुज इत्यर्थः, देवान् प्रमदयन् सन्तोषयन् सन्, आरात् समीपे उपयातं सम्प्राप्तम्, मुख्यम्, खर इति आख्या यस्य स तथोक्तः, स चासौ पशुश्च तमपि, प्रत्यैक्षत प्रतीक्ष्य स्थितोऽभूत् । यथा वनवह्निः पलाशिराशिं वृक्षसमूहं भस्मीकृत्य वनस्थमृगमपि भस्मीकर्तुमुपक्रमते तद्वदयमपि रक्षस्समूहं निहत्य खरमपि हन्तुमवस्थितोऽभूदिति भावः ॥ ५४ ॥

**इति श्रीविश्वपतितीर्थकृतायां श्रीसङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायामरण्यकाण्डे तृतीयः सर्गः॥**

**(सं.चं.)** वसन्ततिलकयोपसंहरति । पलं मांसमश्नन्तीति पलाशिनां क्रव्यादानां रक्षसां राशिं समूहम् । विशिखा बाणा एव शिखा ज्वाला अस्य । तादृशो रामाख्योऽनलः दवाग्निः । प्रदह्य निःशेषं दग्ध्वा । यथा पलाशानि पत्राण्यस्य सन्तीति पलाशिनां वृक्षाणां राशिं पूगं प्रदहति । अथच यज्ञाग्निः पलाशवृक्षसम्बन्धिनः पलाशिनः समिद्विशेषाः, तान् समिद्धोमेऽर्पितान्, प्रदह्य प्रथमं दग्ध्वा ततः पशुमेधे पशुं प्रतीक्षते । एवमत्रापि

१. **'विशिखिनामशिखी'** इति पठित्वा, **'विशिखिनः बाणाः'** इति व्याचख्यौ का.श्री. । सम्पातायातं स्यात् ।

२. **'–यान्तमारात्'**

रामाख्यो यज्ञियाग्निः इध्मस्थानीयान्, अमुख्यपशुकल्पान् वा राक्षसान् प्रथमं प्रमथ्य, अथाश्वमेधेऽश्वमिव खराख्यं प्रधानं पशुं प्रत्यैक्षत प्रतीक्षाञ्चक्रे। आरादुपयातं समीपमागच्छन्तमिति विशेषोक्तिः । यज्ञे पशवो नीयन्ते । अयं तु राक्षसपशुः पतङ्ग इवाऽगत्याग्नौ पिपतिषतीति । अनेन च राक्षसपशुहननकर्मणा महाध्वरेण मख एवान्नं येषां तान् यज्ञदत्तहविर्भुजो देवान् प्रमदयन्नानन्दयन् ॥ ५४ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामरण्यकाण्डे तृतीयसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १२२७+५४=१२८१]

## चतुर्थः सर्ग्गः

**निवार्य्य त्रिशिरा वीरो राघवाभिमुखं खरम् ।**
**ननाद स्वयमभ्येत्य[1] रामो धनुरघोषयत् ॥ १ ॥**

**(भा.दी.)** श्रीरामस्य खरादीनां च प्रवृत्तं युद्धं दर्शयति– **निवार्येत्या**दिना । वीरः त्रिशिराः, राघवं प्रति अभिमुखो यः स तथोक्तः, तं खरं निवार्य श्रीरामं प्रति स्वयं अभ्येत्य, ननाद सिंहनादं चक्रे । नद अव्यक्ते शब्दे लिट् । श्रीरामश्च धनुः अघोषयत् । घुषिर् विशब्दने लङ् ॥ १ ॥

**(सं.चं.)** अवशिष्टौ खरत्रिशिरसौ । खरदूषणयोः किंसम्बन्धोऽयं त्रिशिरा इति प्राचीनग्रन्थेषु न स्फुटम् । अथ त्रिशिरसो वधं प्रस्तौति– निवार्येत्यादिना ॥ १ ॥

**त्रिशिरास्त्रीञ्छरांस्तीक्ष्णान् मुमोच[2] मधुघातिने ।**
**त्रिशरोवक्षसि क्रुद्धो रामोऽमुञ्चच्चतुर्दश ॥ २ ॥**

**(भा.दी.)** **त्रिशिरा** इति । त्रिशिराः तीक्ष्णान् निशितान् त्रीन् शरान्, मधुं मधुनामकदैत्यं घातितवानिति मधुघाती, तस्मै श्रीरामाय मुमोच । मुच्लृधातोर्लिट् । क्रुद्धः श्रीरामः, त्रिशिरसो यद्वक्षस्तस्मिन्, चतुर्दश शरान् अमुञ्चत् । मुच्लृ धातोर्लङ् ॥ २ ॥

**(सं.चं.)** चतुर्दश शरानमुञ्चत् ॥ २ ॥

**सूताश्वध्वजविध्वंसं कृत्वा त्रिशिरसः[3] प्रभुः ।**
**हृदये चाष्टभिर्विध्वा शरैर्म्मूर्द्ध्नोऽच्छिनत् त्रिभिः ॥ ३ ॥**

---

१. **'ननाद राममभ्येत्य'** २. **'-स्तीक्ष्णानमुञ्चन्मधु–'** ३. **'त्रिशिरसं प्रभुः'**

**(भा.दी.) सूतेति** । प्रभुः श्रीरामः, त्रिशिरसः सूतश्च अश्वाश्च ध्वजश्च तेषां यो विध्वंसो नाशस्तं कृत्वा, हृदयं हृदयमण्डलं तस्मिन्, अष्टभिः शरैः विध्वा, त्रिभिः शरैः मूर्धानः शिरांसि तान् अच्छिनत् । च्छिदिर् द्वैधीकरणे लङ् ॥ ३ ॥

**(सं.चं.)** शरैस्त्रिभिस्त्रीन् मूर्ध्नोऽच्छिनत् ॥ ३ ॥

**[१]राक्षसक्षयमालक्ष्य राक्षसाधिपतिः खरः ।**
**रामं सम्प्राप्य नाराचैर्न्नभश्चक्रे निरन्तरम् ॥ ४ ॥**

**(भा.दी.) राक्षसेति** । राक्षसाधिपतिः खरः, राक्षसानां यः क्षयस्तं आलक्ष्य, श्रीरामं सम्प्राप्य, नाराचाः नाराचाख्यशरविशेषाः तैः, नभः निर्गतमन्तरमवकाशो यथा भवति तथा चक्रे ॥ ४ ॥

**(सं.चं.)** निरन्तरं निरवकाशम् । 'नाराच एषणश्चाऽयसे शरे' इति यादवप्रकाशः ॥ ४ ॥

**नभो निर्विवरं चक्रे रामोऽपि परितः खरम् ।**
**शरैरेवं[२] दिशश्छन्नास्तदद्भुतमभून्महत् ॥ ५ ॥**

**(भा.दी.) नभ** इति । श्रीरामोऽपि खरं परितः नभः शरैः निर्गतं विवरं च्छिद्रं यथा भवति तथा चक्रे । एवं दिशः च्छन्नाः शरैराच्छादिता आसन् । तद् दिशामाच्छादनं महत् अद्भुतं द्रष्टृणामाश्चर्यकरमभूत् ॥ ५ ॥

**(सं.चं.)** रामोऽपि खरं परितः नभो निर्विवरं चक्रे । यथा पुरोवर्ती खरोऽपि न दृश्यते बाण-खचितः ॥ ५–६ ॥

**धनुश्छित्वाऽच्छिनद् वर्म्म भूम्नः सप्तशरैः खरः ।**
**रामो विकवचो रेजे विधूम इव पावकः ॥ ६ ॥**

**(भा.दी.) धनुरिति** । खरः, सप्त च ते शराश्च तैः, भूम्नः पूर्णगुणस्य श्रीरामस्य, धनुः शार्ङ्गातिरिक्तं कार्मुकं च्छित्वा, वर्म चापरमेकं अच्छिनत् । च्छिदेर्लङ् । श्रीरामः विगतं कवचं यस्य स तथा सन् विधूमः पावक इव विरेजे । राजृ दीप्तौ लिट् ॥ ६ ॥

---

१. 'रक्षसः क्षय–' । 'रक्षसः क्षयं त्रिशिरोनाशं आलोक्य दृष्ट्वा' इति का.श्री. । २.'शरैरेव'

**शत्रुघ्नं दिव्यमच्छेद्यं शार्ङ्गं शार्ङ्गी प्रगृह्य सः ।**
**ध्वजं खरस्य चिच्छेद खरोऽमुञ्चच्चतुःशरान् ॥ ७ ॥**

**(भा.दी.) शत्रुघ्नमि**ति । शार्ङ्गमस्यास्तीति शार्ङ्गी सः श्रीरामः, शत्रून् हन्तीति शत्रुघ्नं तत्, दिव्यं अच्छेद्यं च्छेत्तुमशक्यं शार्ङ्गं धनुः प्रगृह्य, खरस्य यो ध्वजस्तं च्छिच्छेद । च्छिदेर्लिट् । खरः चत्वारो ये शरास्तान् श्रीरामे अमुञ्चच्च । मुचेर्लङ् ॥ ७ ॥

**(सं.चं.)** पूर्वं किञ्चिदन्यद्धनुर्जग्राह, यत् खरश्चिच्छेद । अथागस्त्यदत्तं शत्रुनाशनं शार्ङ्गं धनुः प्रगृह्य युयोध । 'सुमहद् वैष्णवं यत्तदतिसृष्टं महर्षिणा । वरं तद्धनुरुद्यम्य खरं समभिधावत' (२८.२१) इति च ॥ ७–८ ॥

**एकेन मूर्द्धि विव्याध खरं रामोऽथ पत्रिणा ।**
**द्वाभ्यां भुजौ त्रिभिर्देहं लीलया प्रहसन्निव ॥ ८ ॥**

**(भा.दी.) एकेने**ति । अथ श्रीरामः, प्रहसन्निव लीलया खरं एकेन, पत्री शरस्तेन, मूर्द्धा शिरस्तस्मिन् विव्याध । द्वाभ्यां भुजौ विव्याध, त्रिभिः शरैः खरस्य यो देहस्तं विव्याध ॥ ८ ॥

**युगाश्वसूताक्षधनुस्त्रिवेणूनक्षिणोच्छरैः[1] ।**
**खरं चैकेन विव्याध देवो देवान् प्रहर्षयन् ॥ ९ ॥**

**(भा.दी.) युगे**ति । देवः श्रीरामः, देवान् प्रहर्षयन् सन्, युगश्च बन्धनदारुविशेषः स च, अश्वाश्च, सूतश्च, अक्षाणि रथचक्राणि तानि च, धनुश्च, त्रिवेणवश्च, तान् शरैः अक्षिणोत् व्यनाशयत् । क्षिणु हिंसायां लङ् । खरं च एकेन शरेण विव्याध । व्यध ताडने लिट् ॥ ९ ॥

**(सं.चं.)**युगमश्वबन्धनदारु । '[illegible]' इति भाषायाम् । एकेन शरेण युगम् । चतुर्भिश्चतुरोऽश्वान् । एकेन सूतम् । द्वाभ्यामक्षं चक्रनाभिम् । त्रिभिस्त्रिवेणून् । द्वादशेन धनुः । त्रयोदशेन खरं विव्याध । 'ततोऽस्य युगमेकेन चतुर्भिश्चतुरो हयान् । षष्ठेन तु शिरः सङ्ख्ये खरस्य रथसारथेः । त्रिभिस्त्रिवेणून् बलवान् द्वाभ्यामक्षं महाबलः । द्वादशेन तु बाणेन खरस्य सशरं धनुः । छित्त्वा वज्रनिकाशेन राघवः प्रहसन्निव । त्रयोदशेनेन्द्रसमो बिभेद समरे खरम्' (२८.२९–३१) इति च ॥ ९–१० ॥

---

१. '**–धनुस्त्रिवेणूंश्चाक्षिणोच्छरैः**' इति, '**–स्त्रिवेणुं चाक्षि–**' इति च।

**मुनीनां न्यस्तदण्डानां दण्डकारण्यवासिनाम् ।**
**इदं ते भक्षणफलं पश्येत्यूचे खरं हरिः ॥ १० ॥**

**(भा.दी.) मुनीनामि**ति । स्मरणमात्रेण सर्वदोषान् हरतीति हरिः श्रीरामः, न्यस्त उपरतः दण्डः शिक्षा यैस्ते तथा तेषाम्, प्राणिहिंसाया उपरतानामित्यर्थः, दण्डकारण्ये वस्तुं शीलमेषामस्तीति तथा तेषाम्, मुनीनां भक्षणस्य फलं फलभूतं इदं त्वद्धननं पश्य । इति खरं प्रति ऊचे ॥ १० ॥

**विकत्थनं न शूराणां रक्षोहत्याप्रतिक्रियाम् ।**
**अनया गदया कुर्य्यामिति रामं खरोऽब्रवीत् ॥ ११ ॥**

**(भा.दी.) विकत्थनमि**ति । शूराणां विकत्थनं बहुभाषणं न नास्ति । किन्तु कर्मणा प्रदर्शनमेवेत्यर्थः । रक्षसां या हत्या संहारस्तस्याः प्रतिक्रियां अनया गदया कुर्याम्, इति श्रीरामं प्रति खरः अब्रवीत् ॥ ११ ॥

**(सं.चं.)** शूराणां न युक्तं विकत्थनम्, आत्मप्रशंसनम् । अतोऽनया गदया प्रतिक्रियां कुर्याम्, प्रत्युत्तरं दद्यामिति ॥ ११ ॥

**तेन मुक्तां गदां रामः[१] शरैर्भित्त्वाऽभ्यभाषत ।**
**भग्नं ते बलसर्वस्वं क्लीबोऽसि ब्रह्महन्निति ॥ १२ ॥**

**(भा.दी.) तेने**ति । श्रीरामः तेन खरेण मुक्तां गदां शरैर्भित्त्वा, ब्रह्म ब्राह्मणान् हतवानिति ब्रह्महा तत्सम्बुद्धिः, हे खर, ते तव बलस्य सर्वस्वं साकल्यम्, बललक्षणसर्वस्वमिति वा, भग्नं नष्टम्, त्वं क्लीबः असीति खरं प्रत्यभाषत ॥ १२ ॥

**(सं.चं.)** ब्रह्मेति ब्राह्मण्यमुच्यते । ब्रह्मेति वेदज्ञ उच्यते । ब्रह्मेति वेदा उच्यन्ते । 'बृह जातिजीवकमलासनशब्दराशिषु' इति स्मरणात् । ब्रह्म ब्रह्माणि ब्रह्मज्ञं वा जघानेति ब्रह्महा । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (अ.सू.३.२.८७) इति भूते क्विप् । अनेन, सत्यं त्वमाहथाः, गतमेतत् । नेतः परं हन्सि हनिष्यसि वेति ध्वनयति ॥ १२ ॥

**आद्रवत्[२] सालमुत्पाट्य खरवन्मुखरः खरः ।**
**विव्याधेषुसहस्रेण सालं सञ्चूर्ण्य्य राघवः ॥ १३ ॥**

१. 'शरैश्छित्वाऽभ्यभाषत'

२. 'आद्रवत् तालमु–'

**(भा.दी.) आद्रवदि**ति । खरवत् गर्दभवत् मुखरः वाचाटः खरः, सालं सर्जवृक्षं उत्पाट्य आद्रवत् । राघवः सालं सञ्चूर्ण्य, इषूणां सहस्रं तेन, विव्याध खरं ताडितवान् । व्यध ताडने लिट् ॥ १३ ॥

**(सं.चं.)** खरवद् गर्दभवन्मुखरः, विकृतवचनः । 'दुर्मुखो मुखरः स्मृतः' इत्यभिधानम् । सालं कश्चन वृक्षमुत्पाट्य । सालं सञ्चूर्ण्य इषुसहस्रेण खरं विव्याध ॥ १३ ॥

**गैरिकार्द्रमिवाद्रिं तं रुधिरार्द्रमभिद्रुतम् ।**
**शरेणापातयच्छार्ङ्गी वज्रेणेवाथ वज्रभृत् ॥ १४ ॥**

**(भा.दी.) गैरिके**ति । अथ शार्ङ्गी श्रीरामः, गैरिकेण धातुना आर्द्रः, तं अद्रिमिव, रुधिरेणाऽऽर्द्रं सिक्तम्, अभिद्रुतमभिमुखमाद्रवन्तं तं खरम्, वज्रभृदिन्द्रः, वज्रं कुलिशम्, तेनेव शरेण अपातयत् ॥ १४ ॥

**(सं.चं.)** गैरिकं धातुनिर्यासः । वज्रेणेवाथ वज्रभृत् । 'स वृत्रइव वज्रेण फेनेन नमुचिर्यथा । बलो वेन्द्राशनि-हतो निपपात हतः खरः' (३०.२८) इति च ॥ १४ ॥

**खरो नरकमापेदे राघवो धवळं[१] यशः ।**
**देवसङ्घो मनःस्वास्थ्यमृषिसङ्घः[२] स्वमाश्रमम् ॥ १५ ॥**

**(भा.दी.) खर** इति । खरः नरको निरयस्तं आपेदे । पद गतौ लिट् । श्रीराघवः धवळं शुभ्रम्, शुद्धमित्यर्थः, यशः आपेदे । देवानां सङ्घः समूहः मनसः स्वास्थ्यं तत् आपेदे । ऋषीणां सङ्घः स्वः स्वकीयस्तं आश्रमं आपेदे ॥ १५ ॥

**(सं.चं.)** राघवो धवलं यश आपेदे । देवसङ्घो मनःस्वास्थ्यमापेदे । ऋषिसङ्घः स्वमाश्रममापेदे । एतावन्तं कालमस्वमिव स्थितं सम्प्रति स्वत्वमापेति भावः । रामस्य राक्षसानां च सङ्गरदिदृक्षया समागतो गगनग ऋषिसङ्घश्च स्वंस्वमाश्रममापेदे ॥ १५ ॥

**पूजितो देवदेवीनां नेत्रैः पुष्पैश्च[३] शोभनैः ।**
**ऋषीणां परमाशीर्भिः प्रविवेशाऽऽश्रमं प्रभुः ॥ १६ ॥**

---

१. 'धवलम्' २. '–स्वास्थ्यं मुनिसङ्घः'

३. '–देवीनां पुष्पैर्नेत्रैश्च'

**(भा.दी.) पूजित** इति । देवाश्च देव्यश्च तासाम्, श्रीरामवीर्यदर्शनाद् विकसितानि यानि नेत्राणि तैः, शोभनैः पारिजातादीनां यानि पुष्पाणि तैश्च, ऋषीणां परमा या आशिषस्ताभिश्च पूजितः प्रभुः श्रीरामः स्वकीयो यः आश्रमस्तं प्रविवेश ॥ १६ ॥

**(सं.चं.)** देवानां देवीनां च पुष्पैश्च नेत्रैश्च । शोभनानि विकसितानि पुष्पाणि च नेत्राणि च ॥ १६–८ ॥

**गिरिदुर्ग्गाद् विनिष्क्रम्य सौमित्रिः सह सीतया ।**
**ववन्दे परमानन्दं मुनिभिः[1] परिवारितम् ॥ १७ ॥**

**(भा.दी.) गिरीति** । सौमित्रिः गिरेर्यद्दुर्गं गुहालक्षणदुर्गमप्रदेशस्तस्मात् । 'दुर्गो शब्दे वने दुर्गं दुर्गमे नगरे पुरे' इति वैजयन्ती । सीतया सह विनिष्क्रम्य, परम आनन्दो यस्य स तथा तम्, मुनिभिः परिवारितं रामं ववन्दे ॥ १७ ॥

**आर्य्यपुत्र जगन्नाथ पर्य्याप्तं ते महद् यशः ।**
**मुनीनां रक्षयेत्युक्त्वा परिरेभे पतिं सती ॥ १८ ॥**

**(भा.दी.) आर्येति** । आर्यस्य दशरथस्य पुत्र, जगन्नाथ श्रीराम, ते महद् यशः मुनीनां परिरक्षया पर्याप्तं जगति पूर्णं आसीत् । सती साध्वी पतिव्रता सीता इति उक्त्वा पतिं श्रीरामं परिरेभे । परिपूर्वः रेभृ शब्दे[2] लिट् ॥ १८ ॥

**पराक्रन्दपरा दृष्ट्वा राक्षसी रक्षसां क्षयम्[3] ।**
**लङ्कामभ्यद्रवत् क्रुद्धा कृत्तिकेव भयङ्करी ॥ १९ ॥**

**(भा.दी.) परेति** । पराक्रन्दे आक्रोशे परं तात्पर्यं यस्याः सा, सा तथा, कृत्तिकेव कृत्याख्यपिशाचीव, भयङ्करी सा राक्षसी शूर्पणखा, रक्षसां क्षयो विनाशस्तं दृष्ट्वा क्रुद्धा सती लङ्कां प्रति अभ्यद्रवत् ॥ १९ ॥

**(सं.चं.)** पराक्रन्दपरा । 'दूषणं च खरं चैव हतं त्रिशिरसा सह । दृष्ट्वा पुनर्महानादं ननाद जलदो यथा' (३२.२) इति च । कृत्तिकेव कृत्यामानिनीव भयङ्करी ॥ १९ ॥

---

१. **'परमानन्दो मुनीन्द्रैः परिवारितम्'** । **'–परमानन्दो–'** इति क्वचित् । **'–नन्दं मुनीन्द्रैः परिवारितः'** इति च ।

२. **'रभ राभस्ये'** इत्यस्य लिडिति युक्तम् । रेभतेर्लिटि **'परिरिरेभे'** इति रूपम् ।

३. **'रक्षसां वधम्'**

**दर्श सा दशमुखं[1] विमुखं धर्म्ममार्ग्गतः ।**
**मानोन्नतं विमानस्थमक्षयं च क्षये रतम् ॥ २० ॥**

**(भा.दी.) ददर्शे**ति । सा शूर्पणखा मानेन अभिमानेन उन्नतमुत्कृष्टम्, देहपरिमाणेन उन्नतमिति वा, विमाने पुष्पकविमाने तिष्ठतीति तथा तम्, न विद्यते क्षयो विनाशो ब्रह्मवराद् यस्य स तथा तम्, क्षये गृहे, 'निलयापचयौ क्षये' इत्यमरः । रतं आसक्तम् । यद्वा प्राणिनां नाशे रतमिति वा । धर्मस्य मार्गः तस्मादिति ततः, विमुखो पराङ्मुखस्तं दशमुखं रावणं ददर्श ॥ २० ॥

**(सं.चं.)** दशमुखमथापि विमुखं विगतमुखमिति विरोधाभासः । मानेनाहङ्कारेण उन्नतः । अथापि विगतमानस्तिष्ठतीति च । अक्षयमपि क्षये रतमिति च । धर्ममार्गतः पराङ्मुखम्, विमाने प्रासादे स्थितम्, ब्रह्मवरात् स्वयमक्षयमपि लोकक्षये रतमित्यविरोधः । 'विमानोऽस्त्री देवयाने सप्तभूमे च सद्मनि' इति यादवप्रकाशः । क्षये गृहे रतमित्यपि व्याचक्षते ॥ २०–१ ॥

**दीना पदे निपतिता रावणं रावणानुजा ।**
**उवाच वाचं परुषां राक्षसं कोपयन्त्यलम् ॥ २१ ॥**

**(भा.दी.) दीने**ति । दीना दुःखिता, पदं पादस्तस्मिन् निपतिता, रावणानुजा शूर्पणखी, राक्षसं रावणम्, अलं सम्यक् कोपयन्ती सती, परुषां निष्ठुरां वाचमुवाच ॥ २१ ॥

**मत्तः प्रमत्तः कामी त्वं विजित्यापि जगत्त्रयम् ।**
**राजलक्षणहीनोऽसि भयं प्राप्तं न बुद्ध्यसे ॥ २२ ॥**

**(भा.दी.) मत्त** इति । मत्तः मदयुक्तः, प्रमत्तः प्रमादवान्, कामी त्वं विषयाभिलाषी त्वम्, जगतां त्रयं तत् विजित्यापि, राज्ञां यल्लक्षणं प्रमादादिराहित्यं तेन हीनो रहितः असि । प्राप्तं यद् भयं तत् न बुद्ध्यसे न जानासि । बुध अवगमने लट् ॥ २२ ॥

**(सं.चं.)**मत्तः निरङ्कुशः । मदः, **'ಸೊಕ್ಕು'** इति भाषायाम् । प्रमत्तः कामभोगेषु । प्रमादः, **'ಮೈಮರೆವು'** इति भाषायाम् । कामी स्वैरवृत्तः । अत एव राजलक्षणहीनः । 'प्रमत्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः' (३३.२) इति, 'ज्ञातव्यं तु न जानीषे कथं राजा भविष्यसि' (३३.८) इत्यादि च ॥ २२ ॥

१. **'दशग्रीवम्'** । अस्वरसः पाठः ।

**जनस्थानेऽवधीद् रामस्त्रिशिरःखरदूषणान् ।**
**स विरूपितवान् मां च त्वं शेषे मृतकोपमः ॥ २३ ॥**

**(भा.दी.) जन** इति । सः श्रीरामः, जनस्थानं दण्डकारण्यं तस्मिन्, त्रिशिराश्च खरश्च दूषणश्च तान्, अवधीत् । हन हिंसागत्योः लुङ् । मां च विरूपितवान्, लक्ष्मणेन विरूपां कारितवान् । त्वं तु मृतकस्य शवस्य उपमा यस्य स तथा सन् शेषे तूष्णीं तिष्ठसि ॥ २३ ॥

**(सं.चं.)** अवधीत् । हनो वधादेशः । 'हनो वध लिङि' (अ.सू.२.४.४२), 'लुङि च' (४३) इति । मृतकोपमः कुणपवत् ॥ २३–४ ॥

**स्वसुरित्थं वचः श्रुत्वा दण्डाहत इवोरगः ।**
**क्रुद्धो दशास्यः पप्रच्छ कोऽयं रामो वदेरिति ॥ २४ ॥**

**(भा.दी.) स्वसुरिति** । स्वसुः भगिन्याः इत्थं वचः श्रुत्वा, दण्डाहतः उरगइव सर्पइव क्रुद्धः दशास्यः, अयं त्वयाऽभिहितः श्रीरामः, कः किञ्जातीयः, वदेः वद इति पप्रच्छ ॥ २४ ॥

**करौ भयेन धुन्वाना[१] प्रोचे शूर्पणखी वचः ।**
**[२]रूपेणाप्रतिमो रामो राजा दाशरथिः किल ॥ २५ ॥**

**(भा.दी.) करौविति** । करौ स्वनासाकृन्तननिमित्तं यद्भयं तेन धुन्वाना कम्पयन्ती शूर्पणखी, श्रीरामः रूपं सौन्दर्यं तेन न विद्यते प्रतिमा सादृश्यं यस्य स तथा, दशरथस्यापत्यं दाशरथिः (राजा) किल इति प्रोचे ॥ २५ ॥

**(सं.चं.)** करौ भयेन धुन्वाना कम्पयन्ती, कम्पितकरा । धुञ् कम्पने इति पठित्वाऽऽह क्षीरस्वामी–'धूञ् इतीहामुं शिवस्वामी दीर्घमाह– 'धूनोति धूनुते' इति । उभयथाऽपि प्रयोगदर्शनात् उभयथापि धातुरूपं प्रामाणिकं मन्यन्ते पदविदः । दाशरथिः किलेति वार्तायाम् । दशरथपुत्र इति वार्ता श्रूयत इति ॥ २५ ॥

**चतुर्दशसहस्राणि रक्षसां यो न्यपातयत् ।**
**धनुर्द्वितीयो यामेन तद्वीर्य्यं केन बुद्ध्यते ॥२६ ॥**

---

१. 'धून्वाना'
२. 'रूपेणानुपमो–'

**(भा.दी.) चतुरि**ति । धनुषा द्वितीयो धनुर्द्वितीयः, धनुरेव द्वितीयं यस्येति वा, धनुर्द्धर इत्यर्थः, यः रामः यामो याममात्रकालः, तेन रक्षसां चतुर्दश च तानि सहस्राणि च तानि न्यपातयत् । तद्वीर्यं (तस्य) श्रीरामस्य वीर्यं सामर्थ्यं केन पुरुषेण बुद्ध्यते ज्ञायते? बुध अवगमने लट् ॥ २६ ॥

**(सं.चं.)** यामः सार्धसप्तघटिकापरिमितः कालः । अह्नश्चतुर्थो भागः । रामायणे तु–'अर्धाधिकमुहूर्तेन' (३४.१०) इति पठ्यते । प्रौढिवादोऽयम् । अतोऽत्र मुहूर्तशब्देन पञ्चघटिकात्मकः कालविशेषो विवक्षितः । धनुर्द्वितीय इत्येकाकी । सहायान्तररहितः । केवलं धनुषा द्वितीयः ॥ २६ ॥

**लक्ष्मणाख्योऽनुजस्तस्य येनाङ्गाहं विरूपिता ।**
**रामस्य रामा सीताख्या मन्ये तामुचितां तव ॥ २७ ॥**

**(भा.दी.) लक्ष्मणे**ति । तस्य श्रीरामस्य अनुजः, लक्ष्मण इति आख्या यस्य स तथोक्तः, हे अङ्ग प्रिय, येन लक्ष्मणेन, अहं सञ्जातं विरूपमस्या इति विरूपिता अस्मि । श्रीरामस्य रामा स्त्री, भार्येत्यर्थः, सीतेति आख्या यस्याः सा तथा, तां तव उचितां मन्ये । मन ज्ञाने लट् ॥ २७ ॥

**(सं.चं.)** अङ्ग अग्रजेति प्रीत्या सम्बोध्याऽवर्जयति । 'अङ्गेत्यामन्त्रणे हंहो भोभो इति च कथ्यते' इत्यभिधानम् । तवैवोचितां न रामस्य ॥ २७–८ ॥

**यं संस्पृशति सा कान्ता सीता सर्वाङ्गशोभना ।**
**सुधाधारेव नैवास्य देहधर्म्मा जरादयः[१] ॥ २८ ॥**

**(भा.दी.)** तस्या अतिशयमाह– **यमि**ति । सर्वाणि यान्यङ्गानि अयवयवाः, तैः शोभना कान्ता मनोहरा सा सीता, सुधाया अमृतस्य धारेव, यं पुरुषं संस्पृशति । स्पृश आमर्शने लट् । अस्य पुरुषस्य, देहधर्माः जरा वृद्धत्वमादिर्येषां ते तथा, जरामरणादय इत्यर्थः, न भवन्त्येव ॥ २८ ॥

**उत्तिष्ठ पुरुषश्रेष्ठ व्याकुलं पाहि नः कुलम् ।**
**रामान्तकादुपासन्नादित्युक्त्वा विरराम सा ॥ २९ ॥**

---

१. **'अमृतपायिनो यथा जरादिरहिता भवन्ति तथा सीतास्पर्शवन्तोऽपि जरादिरहिता भवन्तीति भावः। अमृतपानेन जरादिराहित्यम्। सीतास्पर्शनमात्रेण जरादिराहित्यं भवतीति अमृतापेक्षया सीताया आधिक्योक्त्या रावणस्य इतरस्त्रीपरित्यागेन सीतापेक्षायां निमित्तमुक्तं भवति'** इति का.श्री. ।

**(भा.दी.) उत्तिष्ठेति** । हे पुरुषश्रेष्ठ रावण, उत्तिष्ठ सीताहरणार्थं गच्छ । उपासन्नात् समीपगतात्, राम एवान्तको मृत्युः तस्मात्, व्याकुलं सम्भ्रान्तं नः कुलं गोत्रं तत् पाहि । सा शूर्पणखी इति उक्त्वा विरराम तूष्णीं बभूव ॥ २९ ॥

**(सं.चं.)** व्याकुलं व्यापन्नं भयग्रस्तम् ॥ २९ ॥

**रामवीर्य्यमनुस्मृत्य कम्पितश्चाविकम्पनः ।**
**रावणाय प्रणम्याऽथ तमेवोदन्तमब्रवीत् ॥ ३० ॥**

**(भा.दी.) रामेति** । अथ श्रीरामवीर्यश्रवणानन्तरम्, श्रीरामस्य यद् वीर्यं बलं तत् अनुस्मृत्य भयेन कम्पितः, अविकम्पनश्च अविकम्पननामको रावणमन्त्री कश्चित्, रावणाय प्रणम्य, तमेव शूर्पणख्युक्तमेव उदन्तो वृत्तान्तस्तम्, श्रीरामेण खरादयो निहता इति वृत्तान्तमित्यर्थः, अब्रवीत् ॥ ३० ॥

**(सं.चं.)** कम्पितश्चाविकम्पनः, जनस्थानगतः कश्चित् खरभृत्यः, कथञ्चिद् रामबाणान्मुक्तो जनस्थानाल्लङ्कामागतः । रामायणे त्वकम्पनः इत्युक्तः–'त्वरमाणस्ततो गत्वा जनस्थानादकम्पनः । प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत्' (३१.१) इति । अकम्पन इति कश्चिद् रावणमन्त्री च पठ्यते । तद्व्यावृत्त्यै तात्पर्यनिर्णयानुसाराय चाविकम्पन इत्येवाऽह । यद्यपि रामायणेऽयं प्रसङ्गः पूर्वं पठितः । ततः शूर्पणखाप्रसङ्गः । अथापि ग्रन्थकारः मूलरामायणानुसारिणं तात्पर्यनिर्णयमेवानुसरन् व्यत्यस्य कथयामास कथाम् । रामायणेऽपि सूक्ष्मदृशां स्फुटमेतदवगम्यते । शूर्पणखाप्रसङ्गं पठतां तत्पूर्वतनः सर्गः, यत्राकम्पनप्रसङ्गः, अनन्वितइवासङ्गत इव च हि भासते । वाल्मीकिरप्येवं नः प्रज्ञां परीक्षमाणः क्रीडतीव ॥ ३०–१ ॥

**चिरं सञ्चिन्त्य निश्चित्य रावणोऽधिष्ठितो रथम् ।**
**तीरे [1]नदीनदपतेर्गोकर्ण्णं क्षेत्रमाप्तवान्[2] ॥ ३१ ॥**

**(भा.दी.) चिरमिति** । रावणः चिरं यथा भवति तथा कर्तव्यकार्योपायं सञ्चिन्त्य, बुद्ध्या अयं उपाय इति निश्चित्य, स्वकीयो यो रथस्तं अधिष्ठितः आरूढः सन्, नद्यश्च नदाश्च तेषां पतेः समुद्रस्य यत्तीरं तस्मिन्, पश्चिमसमुद्रतीर इत्यर्थः, गोकर्णं गोकर्णाख्यं क्षेत्रं आप्तवान् ॥ ३१ ॥

---

१. **'पूर्वप्रवाहा नद्यः' पश्चिमप्रवाहाः नदाः'** इति का.श्री. । अस्य मूलं मृग्यम् ।

२ **'–पतेर्गोकर्णक्षेत्रमाप्तवान्' । अनेन श्लोकेन '–जगाम तीरे । क्षेत्रं नदीनदपतेः श्रवणे धरित्र्याः' इति श्लोके धरित्र्याः श्रवणमित्यस्य गोकर्णक्षेत्रमित्यर्थ उक्तो भवति'** इति का.श्री. ।

**तपस्यन्तं तमस्यन्तं मारीचं तत्र दृष्टवान् ।**
**विधिना पूजितस्तेन रावणो वाक्यमब्रवीत् ॥ ३२ ॥**

**(भा.दी.) तपस्यन्तमि**ति । रावणः तत्र गोकर्णे तपस्यन्तं तपः कुर्वाणम्, तमसि तमोगुणे भवन् तमस्यन् तम्, तमोगुणस्वभावयुक्तमित्यर्थः, तं तादृशं मारीचं दृष्टवान् । तेन मारीचेन विधिना शास्त्रोक्तविधानेन पूजितः सन् वाक्यं वचस्तत् अब्रवीत् ॥ ३२ ॥

**(सं.चं.)** तं तपस्यं फाल्गुनं शैत्यातिरेकात् कथञ्चिदस्यन्तं तं मारीचम् । अत्र 'तपस्यम्+तम्+तम्+अस्य-न्तम्' इति प्रतृण्णम् । अथापि तपस्यन्तम्, तेन हिमसमयमस्यन्तं तं मारीचम् । अत्र 'तपस्यन्तम्+तम्+अस्यन्तम्' इति प्रतृण्णम् । अथ 'तपस्यन्तं तमस्यन्तम्' इति द्वे पदे । तपश्चरति तपस्यति । 'कर्मणा रोमन्थतपोभ्यां वर्तिचरोः' (अ.सू.३.१.१५) इति क्यङ् । 'तपसि परस्मैपदं च' इति च वार्तिकम् । तमस्यन्तमपि अन्धे तमसि अन्तोऽवसानं यस्य तादृशम् । तमः स्वभावयुक्तमित्यपि व्याचक्षते । तमसि लालसो भगवति तमस्यतीत्यर्थः । 'सर्वप्रातिपदिकेभ्यो लालसायामसुग् वक्तव्यः' इति 'सुग् वक्तव्यः' इति च वार्तिकं पठन्ति (अ.सू.७.१.५१) ॥ ३२ ॥

**मानवेनैव रामेण खराद्याः स्वजना हताः ।**
**तस्य भार्य्यां[१] हरिष्यामि तत्र मित्रं भवाङ्ग मे ॥ ३३ ॥**

**(भा.दी.) मानवेने**ति । हे अङ्ग प्रिय, मानवो मनुष्यस्तेनैव, नरमात्रेणेत्यर्थः, श्रीरामेण, खर आद्यो येषां ते तथा, स्वाः बन्धवो जनाः हताः । तन्निमित्तमहं तस्य श्रीरामस्य भार्यां सीतां हरिष्यामि । हृञो लृट् । त्वं तत्र सीताहरणे मे मम मित्रं सहायभूतः भव ॥ ३३ ॥

**(सं.चं.)** मित्रं भव सहायो भव । सहायं हि सखायमाहुः । तत्र हरणकर्मणि ॥ ३३ ॥

**त्वं सुवर्ण्णमृगो भूत्वा तत्र सीतां विलोभय ।**
**अनुधावति रामे त्वां सीतां नेष्याम्यहं सुखम् ॥ ३४ ॥**

**(भा.दी.)** मया किं कार्यमित्यत आह– **त्वमि**ति । त्वं तत्र श्रीरामाश्रमसमीपे, सुवर्णमयो मृगः कुरङ्गो भूत्वा सीतां विलोभय वञ्चय । लुभ गार्ध्ये लोट् । श्रीरामे च त्वां अनुधावति, सीतावाचा ग्रहीतुमनुधावनं कुर्वति सति, अहं सीतां सुखं यथा भवति तथा, निरोधकाभावादिति भावः, नेष्यामि ॥ ३४ ॥

१. 'तस्य जायाम्'

**(सं.चं.)** तत्र यत्र रामाश्रमः ॥ ३४ ॥

**इत्युक्त ऊचे मारीचो न रामं वेत्थ रावण ।**
**यस्यैकः[1] सायको हन्तुमलं सासुरराक्षसान् ॥ ३५ ॥**

**(भा.दी.)** **इती**ति । इति रावणेनोक्तो मारीचः, हे रावण, त्वं श्रीरामं न वेत्थ न जानासि, विदेर्लट्, यस्य श्रीरामस्य एकः सायकः, असुरैः सहिताः सासुरास्ते च ते राक्षसाश्च तान्, हन्तुं अलं समर्थः, इति ऊचे ॥ ३५ ॥

**(सं.चं.)** न वेत्थ न वेत्सि । 'विदो लटो वा' (अ.सू.३.४.८३) इति विकल्पेन लटो लिडादेशे तिपः स्थाने थलि वेत्थेति रूपम् ॥ ३५ ॥

**ऊनषोडशवर्षस्य विश्वामित्रार्त्थमीयुषः ।**
**सिद्धाश्रमेऽन्वभूवं हि तैक्ष्ण्यं रामस्य पत्रिणः ॥ ३६ ॥**

**(भा.दी.)** **ऊने**ति । षडधिका दश षोडश षोडश च तानि वर्षाणि षोडशवर्षाणि, ऊनानि न्यूनानि षोडशवर्षाणि यस्य स तथोक्तस्तस्य, विश्वामित्रायेति विश्वामित्रार्थम्, विश्वामित्रयज्ञरक्षणार्थमित्यर्थः, ईयुषः सिद्धाश्रमं प्राप्तवतः, सिद्धाश्रमः सिद्धाश्रमनामकविश्वामित्राश्रमः तस्मिन्, श्रीरामस्य पत्रिणः शरस्य, तीक्ष्णस्य भावस्तैक्ष्ण्यं तत् अन्वभूवम् अनुभूतवानस्मि ॥ ३६ ॥

**(सं.चं.)** ऊनषोडशवर्षस्य रामस्य । 'ऊनषोडशवर्षो मे रामो राजीवलोचनः' (बा.कां.२०.२) इति हि बालकाण्डे । विश्वामित्रार्थं विश्वामित्रेणार्थित इति हेतोः सिद्धाश्रममुपेयुषः ॥ ३६ ॥

**पुनश्चाहं गतो वैराद्[2] राक्षसाभ्यां मृगाकृतिः ।**
**दण्डके तौ हतौ तस्य शरैर्भग्नोऽहमागतः ॥ ३७ ॥**

**(भा.दी.)** **पुन**रिति । पुनश्च अहम्, मृगस्य आकृतिरिव आकृतिर्यस्य स तथोक्तः तथा सन्, राक्षसाभ्यां सह, वैरं विद्वेषस्तस्मात्, दण्डको दण्डकारण्यं तस्मिन्, गतः श्रीरामं हन्तुं प्राप्तः अस्मि । तस्य शरैः तौ मत्सहायभूतौ राक्षसौ तौ हतौ । अहं भग्नः सन् पराजितः सन् आगतः अस्मि ॥ ३७ ॥

---

१. 'यस्यैकसायको–' २. 'वैरी राक्ष–'

**(सं.चं.)** वैरात् पूर्ववैरमनुस्मृत्य । पुनश्च द्वाभ्यां सहचराभ्यां सह महर्षीणां जिहिंसिषया रामाश्रम-समीपं गतः, तौ मे सखायौ रामेण हतौ । अहं तु भावित्वात् कार्यस्य शरैर्भग्नोऽपि दिष्ट्या जीवन् गोकर्ण-मागतः ॥ ३७ ॥

**स्वपक्षक्षयकोपाच्च सीताकामाच्च मा स्म गाः ।**
**रामं त्वं जीवनार्थी चेत् प्रोच्येति विरराम सः ॥ ३८ ॥**

**(भा.दी.)** **स्वे**ति । हे रावण, त्वं चेद्यदि जीवनमर्थयितुं शीलमस्यास्तीति तथा, तर्हि स्वस्य यः पक्षः सहायभूतः खरादिस्तस्य य क्षयः तस्मात् यः कोपस्तस्माच्च, सीतायां यः कामः अभिलाषस्तस्माच्च, श्रीरामं मा स्म गाः सर्वथा न गच्छ । इण् गतौ लुङ् । 'न माङ्योगे' (अ.सू.६.४.७४) इत्यडभावः । सः मारीचः इति प्रोच्य विरराम ॥ ३८ ॥

**(सं.चं.)** मा स्म गाः । 'स्मोत्तरे लङ् च' (अ.सू.३.३.१७६) इति पाणिनिः । चकाराल्लुङ् च ॥३८॥

**विपक्षपक्षं[1] हन्यां त्वामाज्ञां मे न करोषि चेत् ।**
**इति ब्रुवन् निश्चकर्ष कोशात् खड्गं दशाननः ॥ ३९ ॥**

**(भा.दी.)** **विपक्षे**ति । चेद्यदि मम आज्ञां न करोषि तर्हि विपक्षस्य शत्रोः पक्षः सहायस्तं त्वां हन्याम् । हन्तेर्लिङ् । इति ब्रुवन् दशाननः, कोशोऽसिपिधानं तस्मात्, खण्डयति भिनत्ति शिर इति खड्गस्तं निश्चकर्ष उद्धृतवान् ॥ ३९ ॥

**(सं.चं.)** निश्चकर्ष बहिर्निर्गमयामास । कृष विलेखने । धातुरयं द्विः पठ्यते भ्यादौ च तुदादौ च । यद्यपि विलेखनं हलोत्किरणम् । अथापि भ्वादिराकर्षणेऽपि पठ्यते । निश्चकर्ष कोशान्निष्कास आ-चकर्षेत्यर्थः ॥ ३९ –४१ ॥

**मारीचो मरणाद् भीतः पापात्मा च निसर्गतः ।**
**रावणेन सहाऽरुह्य[2] तं रथं दण्डकान् ययौ ॥ ४० ॥**

---

१. 'विपक्षभक्तं हन्याम्' २. 'रावणेन समारुह्य'

**(भा.दी.) मारीच** इति । मरणं मृतिस्तस्मात् भीतः, प्रहर्तुमुद्यतं रावणासिं दृष्ट्वा मरणभीत इत्यर्थः, निसर्गादिति निसर्गतः स्वभावत इत्यर्थः, पाप आत्मा स्वरूपं यस्य स तथा, तमोयोग्य इत्यर्थः, मारीचः रावणेन सह तं रावणसम्बन्धिनं रथमारुह्य दण्डकान् दण्डकाख्यदेशान् ययौ ॥ ४० ॥

**अवरुह्य रथात् तस्माद् रावणेनाभिनन्दितः ।**
**मायामृगात्मा मारीचो रम्ये रामाश्रमेऽचरत् ॥ ४१ ॥**

**(भा.दी.) अवे**ति । रावणेन अभिनन्दितः सबहुमानवचसा सन्तोषितः मारीचः, तस्मात् आरूढात् रथात् अवरुह्य, मायया राक्षसानामौत्पत्तिक्या तामस्या शक्त्या, मृगस्य एणस्य आत्मा स्वरूपं यस्य स तथा सन्, रम्ये श्रीरामस्य यः आश्रमस्तस्मिन् बालतृणादिकं भक्षयन् अचरत् ॥ ४१ ॥

**मुक्ताप्रवाळप्रच्छन्नो हेमबिन्दुशतान्वितः[१] ।**
**शृङ्गारितश्चतुःशृङ्ग्या रौग्म्या मन्दं चचार सः ॥ ४२ ॥**

**(भा.दी.)** मुक्ताः मुक्तामणयः ताश्च, प्रवाळाश्च, तैः प्रच्छन्नः तत्र तत्र आच्छादितः, हेम्नो ये बिन्दवस्तेषां यच्छतं तेनान्वितो युक्तः, रौग्म्या स्वर्णमय्या, चतुर्णां शृङ्गाणां समाहारः चतुश्शृङ्गी, तया शृङ्गारितः अलङ्कृतः, सः मारीचः मन्दं चचार । चर गतिभक्षणयोर्लिट् ॥ ४२ ॥

**(सं.चं.)** मुक्ताप्रवाळाभ्यां प्रच्छन्नत्वक् । क्वचिन्मुक्ताभः, क्वचित् प्रवाळाभ इत्यर्थः । प्रवाळः=**'ಹವಳ, ಪಗಳ'** इति भाषायाम् । प्रवाळः पल्लवइव वाऽऽरक्तः । चतुःशृङ्ग्या शृङ्गारितः अलङ्कृतः चचार चखाद च तृणानि ॥ ४२ ॥

**मायामृगं प्रेक्ष्य देवी मायामानुषधर्म्मिणी[२] ।**
**मायामनुष्यस्य विभोर्म्मायास्मितमवैक्षत ॥ ४३ ॥**

**(भा.दी.)** मायेति । मायया स्वेच्छया मानुषस्य मनुष्यजातेर्धर्मः अस्या अस्तीति तथा, यद्वा मायया स्वेच्छया मानुषो मानुषाकारः श्रीरामः तस्य धर्मः अस्या अस्तीति तथा, श्रीरामनटनानुसारेण नटनादिकं कुर्वन्तीत्यर्थः, देवी, मायया तामस्या शक्त्या मृगं मृगरूपिणं मारीचं प्रेक्ष्य, मायया स्वेच्छया मनुष्यस्य मानुषाकारस्य विभोः श्रीरामस्य, मायया स्वेच्छया कृतं स्मितं मन्दहासः, तत् अवैक्षत ॥ ४३ ॥

---

१. **'शताश्चितः'** इति, **'शताङ्कितः'** इति च । २. **'मायामानवधर्मिणी'**

**(सं.चं.)** मायया मोहन्या कपटविद्यया धृतमृगरूपम् । मायया भगवदिच्छया मानुषधर्मिणी मनुष्यस्वभावमनुवर्तमाना । मायया स्वेच्छया स्वमहिम्ना वा धृतमनुष्यरूपस्य, मायया ज्ञानेन स्मितं मायास्मितम् । मृगरूपधरं मारीचं जानन्नेव रामः स्मितमुखो बभूवेत्यर्थः । सीता तत् स्मितं भाविकार्यावबोधकमिवावैक्षत ॥ ४३ ॥

**रक्षोलक्षकुलाभिचारमखिलत्रैलोक्यसौख्याकरं**
**[१]भ्राम्यन्मन्दमनीषमण्डलमनोमोहार्ण्णवोद्धूर्ण्णनम् ।**
**तत्वज्ञानजुषां विडम्बनमहानाट्याग्ररङ्गं[२] वचो**
**रामाणां परमा रमा स्वरमणं रामं बभाषे तदा ॥ ४४ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणेऽरण्यकाण्डे चतुर्त्थः सर्ग्गः ॥**

**(भा.दी.) रक्ष** इति । तदा मारीचसञ्चारसमये, रामाणां सरस्वत्यादिस्त्रीणां मध्ये परमा उत्तमा, रमा महालक्ष्मीस्वरूपा सीता, स्वस्य यो रमणो भर्ता तं श्रीरामं प्रति, रक्षसां लक्षाणि लक्षसङ्ख्याकानि यानि कुलानि समूहाः, तेषामभिचार इवाभिचारस्तम्, राक्षसानामनेककुलस्य मारणयोगमित्यर्थः । अखिलानि यानि त्रैलोक्यानि तेषां यत्सौख्यं सुखम्, तस्य आकारइव आकारस्तम्, समस्तत्रैलोक्यस्थितसात्विकजनसौख्योत्पत्तिस्थानभूतमित्यर्थः । भ्राम्यन्तः तत्वापरिज्ञानेन यत्किञ्चिद्भाषमाणाः, मन्दा मनीषा बुद्धिः सा एषामस्तीति मन्दमनीषिणः अज्ञानिनो विपरीतज्ञानिनश्च, तेषां यन्मण्डलं समूहः, तस्य यानि मनांसि तेषां यो मोहः स एवार्णवस्तस्य उद्धूर्णनमभिवृद्धिर्यस्मात् तथोक्तं तत्, अज्ञानिविपरीतज्ञानिनां मनस्सु वर्तमानाज्ञानविपरीतज्ञानात्मको यो मोहसमुद्रः तस्याभिवृद्धिहेतुमित्यर्थः । तेषां चित्तं विशेषतोऽमोहयदिति यावत् । तत्वानां परापरवस्तूनां यज्ज्ञानं तत् जुषन्ते सेवन्त इति तत्वज्ञानजुषः, तेषां समीचीनज्ञानिनां ब्रह्मादीनामित्यर्थः, लोकविडम्बनाख्यं यन्महन्नाटचं नर्तनम्, तस्य अग्ररङ्गइव पूर्वरङ्गइव तम्, वचः वाक्यं बभाषे । भाष व्यक्तायां वाचि लिट् ॥ ४४ ॥

**इति श्रीविश्वपतितीर्थकृतायां श्रीसङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायामरण्यकाण्डे चतुर्थः सर्गः समाप्तः ॥**

—०—

१. **'भ्राम्यन्मन्दमनीषिमण्डल–'** इति वि.ती.पाठः ।
४. **'अग्ररङ्गं प्रथमनृत्यस्थलम्'** इति का.श्री. ।

**(सं.चं.)** शार्दूलविक्रीडितेनोपसंहरति । मसजसततताः सगुरवः शार्दूलविक्रीडितम् । तदा यदा सीता मायामृगं ददर्श, राममायास्मितस्याऽशयं विदुषी रमा स्वरमणं, स्वयमेव रमणात् स्वरमणम्, अथापि स्वस्य रमणं रामं वक्ष्यमाणं वचो बभाषे । कीदृशं वचः? रक्षसां यानि लक्षाणि तेषां कुलस्याऽभिचारकर्मैव निःशेष-नाशनिदानम् । पुनः कीदृशम्? त्रैलोक्यस्य कण्टकापनयनेन सौख्यनिधानम् । पुनः कीदृशम्? भ्राम्यन्तो ये मन्दमनीषास्तेषां मण्डलस्य यो मोहः, सीताऽपि मुमोह, रामोऽपि बभ्रामेत्यादिः, स एवार्णवः, तस्योद्धूर्णनम्, उद्रेककारणम् । पुनः कीदृशम्? तत्वज्ञानिनां मतेन विडम्बनं लोकानुकरणमेव यद् भगवतो महानाट्यं तस्याग्ररङ्गं पूर्वरङ्गस्थलकल्पम् ॥ ४४ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामरण्यकाण्डे चतुर्थसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १२८१+५४=१३२५]

# पञ्चमः सर्गः

**क्रीडार्थं चित्रसारङ्गं देहीमं देवदेव मे ।**
**बृस्या[१] आस्तरणायात्र[२] विचित्रामस्य वा त्वचम् ॥ १ ॥**

**(भा.दी.)** श्रीरामस्य सीतायाश्च लोकानुकरणमेव दर्शयति– **क्रीडार्थमित्या**दिना । देवानां ब्रह्मादीनां देवस्तत्सम्बुद्धिः, श्रीराम, इमं चित्रः चित्रवर्णो यः सारङ्गस्तम्, क्रीडायै इति क्रीडार्थं मे मह्यं देहि । विचित्रां नानावर्णां अस्य एणस्य त्वचं वा चर्म वा अत्र आश्रमे बृस्याः ऋषीणामासनस्य । 'ऋषीणामासनं बृसी' इत्यमरः । आस्तरणमाच्छादनं तस्मै देहि ॥ १ ॥

**(सं.चं.)** चित्रं चित्रवर्णम् । अत एव विस्मयावहं च । सारङ्गं हरिणम् । आनीय देहि । यदि जीवन् नागृह्यत त्वचं वा देहि । किमर्थम्? बृस्या आसनस्योपरि आस्तरणाय । बृसी– **'ಮಲ್ಲಿಣಾಪೆ'** इति भाषायाम् । बुवन्तोऽस्यां सीदन्तीति बृसी (ब्रुवच्छब्दस्य बृ इत्ययमादेशः । 'पृषोदरादीनि यथोपदिष्टम्' (अ.सू.६.३.१०९) ॥ १ ॥

**इत्युक्तो देव[३] आदाय चापं चारु कलापवान्[४] ।**
**रक्ष लक्ष्मण सीतां त्वमित्युक्त्वा मृगमन्वगात् ॥ २ ॥**

**(भा.दी.) इतीति** । इति उक्तः सीतयाऽभिहितः श्रीरामः, चपस्य वेणोरयं विकारश्चापस्तं आदाय, चारू यौ कलापौ इषुधी तौ अस्य स्त इति तथा सन्, हे लक्ष्मण, त्वं सीतां रक्ष इति उक्त्वा मृगं अन्वगात् । इण् गतौ लुङ् ॥ २ ॥

---

१. **'बृश्या–'** इति पठन्तो भ्रान्ताः ।

२. **'विचित्रां नानावर्णोपेताम्, आश्चर्यकारणमिति वा'** इति का.श्री. ।

२. **'इत्युक्तो राम आदाय'** इति वि.ती.पाठः स्यात् ।

३. **'चापं चारुं कलापवान्'**

**(सं.चं.)** चारू बाणपूर्णौ कलापौ तूणीरावस्य स्त इति चारुकलापवान् यद्वा चारु चापम् । कलापस्य चारुत्वं मतुबैव बोध्यते । 'भूमनिन्दाप्रशंसासु–' इत्यादिस्मरणात् ॥ २–३ ॥

**दूरं दुद्राव दुष्टात्मा मारीचो वीक्ष्य[१] राघवम् ।**
**रामोऽपि तमनुद्रुत्य मुमोचान्तकरं शरम् ॥ ३ ॥**

**(भा.दी.)** **दूरमि**ति । दुष्ट आत्मा स्वभावो यस्य स तथोक्तः मारीचः राघवं वीक्ष्य दूरं यथा भवति तथा दुद्राव । द्रु गतौ लिट् । रावणेन नीयमानां सीतां श्रीरामो न पश्येदित्यभिप्रायेण दूरं जगामेति भावः । श्रीरामोऽपि तं अनुद्रुत्य, अन्तं नाशं करोतीति तथोक्तस्तं शरं मुमोच ॥ ३ ॥

**हा लक्ष्मणेति विक्रुश्य रावणस्यार्थसिद्धये ।**
**विद्धः[२] स्वरूपवान् पापो भुवमार ममार च ॥ ४ ॥**

**(भा.दी.)** **हे**ति । विद्धं यदेणस्वरूपं तदस्यास्तीति तथोक्तः, पापः मारीचः रावणस्य अर्थस्य सीता-हरणाख्यप्रयोजनस्य या सिद्धिस्तस्यै, हा लक्ष्मण इति विक्रुश्य आक्रोशनं कृत्वा, भुवं भूमिं आर प्राप । ऋ गतौ लिट् । भुवि पपातेत्यर्थः । ममार च । मृङ् प्राणत्यागे लिट् । हा लक्ष्मणेत्याक्रोशने कृते रामान्वेषणार्थं लक्ष्मण आयास्यति । तदा च रावणः सुखेन सीतां हरेदित्यभिप्रायेणाक्रोशनं कृत्वा ममारेति भावः ॥ ४ ॥

**(सं.चं.)** स्वं स्वकीयं राक्षसरूपम्, तद्वान् । मरणकाले मायाऽपि हि विनश्यति । भुवमार पपात ममार च । 'वमार ममार' इति मधुरोऽनुप्रासः ॥ ४–५ ॥

**[३]सर्वज्ञाऽप्यथ सर्वेशी कर्त्तुं रक्षःपरिक्षयम् ।**
**आर्त्तनादं तमाकर्ण्य लक्ष्मणं प्रत्यवोचत[४] ॥ ५ ॥**

**(भा.दी.)** **सर्वज्ञे**ति । अथ सर्वेषां ब्रह्मादीनां ईष्टे इति सर्वेशी सीता सर्वज्ञाऽपि, रक्षसां यः परिक्षयस्तं कर्तुम्, तं आर्तस्य नादो ध्वनिस्तं आकर्ण्य लक्ष्मणं प्रति अवोचत । ब्रूञो लुङ् ॥ ५ ॥

---

१. **'मारीचोऽन्वीक्ष्य'** २. **'विद्धस्वरूपवान्'** इति वि.ती. पाठः ।

३. **'सर्वज्ञाऽपि ईशादन्यत्र अनालोचनेऽपि सर्वविषयज्ञानवत्यपि । हा लक्ष्मणेति वाक्यं रामवाक्यं न भवति, किन्तु म्रियमाणमारीचवाक्यमिति जानन्त्यपि'** इति का.श्री. । ४. **'प्रत्यचोदयत्'**

**(सं.चं.)** 'अवोचत, वचेर्लुङ्' इति भ्रान्तं व्याख्यानम् । परस्मैभाषो हि वचिः । तेन 'अवोचत्' इति वचे रूपम् । ब्रूतेरात्मनेभाषायां लुङि 'अवोचत' इति । 'अचोदयत्' इति पाठे स्फुटोऽर्थः ॥ ५ ॥

**हा लक्ष्मणेत्यार्त्तनादो नूनं रामस्य लक्ष्मण ।**
**गच्छ तूर्ण्णं विजानीया इत्युक्तो लक्ष्मणोऽब्रवीत् ॥ ६ ॥**

**(भा.दी.)** हेति । हे लक्ष्मण, हा लक्ष्मण इति आर्तनादः रामस्य श्रीरामस्य सम्बन्धी नूनम् । तूर्णं यथा भवति तथा श्रीरामसमीपं गच्छ । श्रीरामप्रवृत्तिं विजानीयाः जानीहि । ज्ञा अवबोधने लिङ् । इति उक्तः लक्ष्मणः अब्रवीत् ॥ ६ ॥

**(सं.चं.)** रामस्य वार्तां विजानीयाः ॥ ६–७ ॥

**यद्भ्रूविभ्रममात्रेण सुरासुरनरादिकम् ।**
**विश्वं स्थितिलयोत्पत्तीर्य्याति तस्याम्ब किं[1] भयम् ॥ ७ ॥**

**(भा.दी.)** **यदिति** । हे अम्ब मातृतुल्ये सीते, 'अम्बार्थनद्योर्ह्रस्वः'(अ.सू.७.३.१०७) इति ह्रस्वः । सुराश्च असुराश्च नराश्च त आदयो यस्य तत्तथोक्तं विश्वं जगत्, यस्य श्रीरामस्य भ्रुवोर्विभ्रममात्रं चलनमात्रं तेन, स्थितिश्च लयश्च उत्पत्तिश्च ताः याति, तस्य भयं किं कस्मात्? सर्वस्य तदधीनत्वात् कुतोऽपि भयं नाऽशङ्क्यमित्यर्थः ॥ ७ ॥

**नाथो नारायणात्मा नो न शोच्यो देवि राघवः ।**
**माया मायाविनामेषा[2] स्यान्नूनं पिशिताशिनाम् ॥ ८ ॥**

**(भा.दी.)** मरणभयाभावाच्छोच्यताऽपि नास्तीत्याह– **नाथ** इति । हे देवि, नारायण आत्मा स्वरूपं यस्य स तथोक्तः नः अस्माकं नाथः राघवः शोच्यः न । माया तत्क्षणे वस्तुसर्जनसमर्था तामसी शक्तिरेषामस्तीति तथा तेषां पिशिताशिनां राक्षसानां एषा हा लक्ष्मणेत्यार्तध्वनिकारणीभूता माया तामसी शक्तिः स्यात् । नूनं सन्देहो न कार्य इत्यर्थः ॥ ८ ॥

**(सं.चं.)** नोऽस्माकं नाथो राघवः ॥ ८ ॥

---

१. 'तस्य च किम्' २. 'मायाविनामेषाम्'

**इत्युक्ता भगवत्यूचे सौहार्दं नास्ति ते कथम् ।**
**इच्छस्युपरते[1] देवे त्वं क्रूर शठ मामिति ॥ ९ ॥**

**(भा.दी.) इतीति** । इति लक्ष्मणेन उक्ता भगवती षड्गुणवती सीता, हे क्रूर लक्ष्मण, ते तव श्रीरामे सौहार्दं स्नेहः कथं नास्ति? हे शठ वक्रहृदय, त्वं देवे श्रीरामे उपरते मृते सति मां भोक्तुं इच्छसि । इषु इच्छायां लट् । इति ऊचे ॥ ९ ॥

**(सं.चं.)** कथं ते भ्रातरि सौहार्दं नास्ति? प्राय इदं स्यात् कारणम्– देवे रामे उपरते मृते प्रायस्त्वं मामिच्छसि । अत इयमुपेक्षा रामविषये ॥ ९ ॥

**श्रुत्वेति दुःश्रवं वाक्यं रुदन्नाचष्ट लक्ष्मणः ।**
**धिग्धिङ् महापातकिनं मामेवंवचनास्पदम् ॥ १० ॥**

**(भा.दी.) श्रुत्वेति** । लक्ष्मणः श्रोतुमनर्हं दुःश्रवं तत् इति वाक्यं श्रुत्वा रुदन् सन् आचष्ट । चक्षिङ् व्यक्तायां वाचि लङ् । एवम्प्रकारं वचनमेवंवचनं तस्य आस्पदो विषयस्तम्, महद् यत्पातकं तदस्यास्तीति तथा तम्, मां धिक्धिक् इति आचष्टेति ॥ १० ॥

**(सं.चं.)** एवमपवादरूपवचनस्याऽस्पदम् ॥ १० ॥

**आर्य्यस्याऽज्ञाविमोक्षोऽयमार्य्याया लङ्घनाल्लघुः ।**
**स्वस्ति तेऽस्तु गमिष्यामि मातस्त्वां पातु शार्ङ्गभृत् ॥ ११ ॥**

**(भा.दी.) आर्यस्येति** । आर्यस्य स्वामिनः श्रीरामस्य, आज्ञायाः सीतां संरक्षेत्याज्ञायाः, विमोक्षः परित्यागः, आर्यायाः सीतायाः स्वामिन्याः, आज्ञाया इति शेषः, लङ्घनमतिक्रमस्तस्मात् लघुः ह्रस्वः, इति निश्चित्य हे मातः, मातृतुल्ये सीते, ते तुभ्यं स्वस्ति मङ्गळं अस्तु । अहं श्रीरामनिकटं गमिष्यामि । त्वां शार्ङ्गं बिभर्तीति शार्ङ्गभृत् श्रीहरिः पातु ॥ ११ ॥

**(सं.चं.)** रक्ष सीतामित्यार्यस्य रामस्याऽज्ञाया विमोक्ष उल्लङ्घनम् । सीताया वचनोल्लङ्घनाद् वरम् । तत्र महद्वचनलङ्घनमात्रं दोषः । अत्र त्वाज्ञालङ्घनं वचनीयता चेति दोषद्वयम् ॥ ११–२ ॥

---

१. 'वाञ्छस्युपरते'

**इत्युक्त्वाऽन्वद्रवत्[१] तूर्णं राघवं राघवानुजः ।**
**देवी च देवकार्य्यं तत् कुर्वाणाऽत्राऽश्रमेऽवसत्[२] ॥ १२ ॥**

**(भा.दी.) इतीति** । राघवानुजः लक्ष्मणः इति सीतां प्रति उक्त्वा राघवं श्रीरामं तूर्णं यथा भवति तथा अन्वद्रवत् । द्रु गतौ लङ् । देवानां यत्कार्यं राक्षसहननलक्षणं यस्मात् तथोक्तं तत् तादृशं कर्म कुर्वाणा देवी च सीता च अत्र आश्रमो मुनिवासस्तस्मिन् अवसत् ॥ १२ ॥

**(सं.चं.)** देवानां हितार्थं करणीयं कार्यम्, स्वापहरणानुकूल्यसम्पादनायेव लक्ष्मणस्य तदाश्रमान्निर्याणरूपं कुर्वाणा ॥ १२ ॥

**राक्षसो भिक्षुवेषेण प्राप्तवान् राघवाश्रमम् ।**
**अकामयत तां देवीं श्रुतिं शूद्रइवावरः[३] ॥ १३ ॥**

**(भा.दी.) राक्षस** इति । राक्षसः रावणः भिक्षूणां सन्यासिनां यो वेषस्तेन राघवस्य य आश्रमस्तं प्राप्तवान् देवीं सीतां श्रुतिं वेदं अवरः वर्णतोऽधमः शूद्रइव अकामयत अपहर्तुमैच्छत । कमु कान्तौ लङ् ॥ १३ ॥

**(सं.चं.)** भिक्षुरूपेण परिव्राजकरूपेण । 'परिव्राजकरूपेण वैदेहीं समुपागमत्' (४६.४) इति च ॥१३॥

**का त्वं कान्तेऽनवद्याङ्गी[४] व्यक्तं देवी न मानवी ।**
**कस्मात् कान्तारमापन्नाऽसीति[५] तां रावणोऽब्रवीत् ॥ १४ ॥**

**(भा.दी.)** का त्वमिति । हे कान्ते मनोहरे, त्वं का कस्य भार्या असि? न विद्यते अवद्यमलक्षणं यस्य तदनवद्यम्, तादृशमङ्गं यस्याः सा तथोक्ता त्वं व्यक्तं स्पष्टं यथा भवति तथा देवी देवस्त्री । मानवी मानुषजात्युत्पन्ना स्त्री न । कस्मात् कारणात् कान्तारं वनं तत् आपन्ना असि, रावणः इति तां सीतां अब्रवीत् ॥ १४ ॥

---

१. '**इत्युक्त्वाऽभ्यद्रवत्**' २. '**कुर्वाणा स्वाश्रमेऽवसत्**'

३. '**शूद्रइवाशुभः**' इति, '**शूद्रइवापरः**' इति च क्वचित् । ४. '**कान्तेऽनवद्याङ्गि**'

५. '**–मापन्ना इति ताम्**' इति केचिद् विसन्धिं पाठं पठन्ति । '**पदे तु संहिता नित्या नित्या धातूपसर्गयोः । समासे च तथा वाक्ये सा विवक्षामपेक्षत इति शाब्दिकोक्तेः 'आपन्ना इति'** इत्यत्र सन्ध्यभावः' इति का.श्री. । नातिस्वरसमेतत् । '**कान्तारमापन्नमिति**' इति क्वचित् ।

**(सं.चं.)** दुर्गमं महावनं कान्तारः कान्तारं वा । 'कान्तार इक्षुभेदे ना नस्त्री व्यध्वमहावने' इति यादव-प्रकाशः । आपन्ना प्राप्ता ॥ १४–५ ॥

**राजा दाशरथी रामो वनं पित्राज्ञयाऽऽव्रजत् ।**
**तस्याहं दयिता पत्नी सीतेति[1] प्रत्यभाषत ॥ १५ ॥**

**(भा.दी.) राजे**ति । दशरथस्यापत्यं पुमान् दाशरथिः रामनामधेयः राजा पितुर्दशरथस्य आज्ञया वनमरण्यं तत् आव्रजत् । व्रज गतौ लङ् । अहं तस्य श्रीरामस्य दयिता प्रिया पत्नी भार्या सीता सीतानाम्नी अस्मि इति प्रत्यभाषत ॥ १५ ॥

**श्रुत्वा दृष्ट्वा च रम्यां त्वां कामार्त्तो रावणोऽस्म्यहम् ।**
**त्रैलोक्येशस्य मे प्रेष्ठा भवेति स्माऽह रावणः[2] ॥ १६ ॥**

**(भा.दी.) श्रुत्वे**ति । अहं त्वां रम्यां पूर्वं श्रुत्वा, इदानीं दृष्ट्वा च, कामार्तः कामपीडितः रावणःअस्मि । त्रैलोक्यस्य ईशस्तस्य मे प्रेष्ठा भार्या, 'वल्लभा प्रेयसी प्रेष्ठा रमणी दयिता प्रिया' इति धनञ्जयः, भव, रावणः इति आह स्म अवदत् ॥ १६ ॥

**(सं.चं.)** 'प्रेष्ठा प्रियतमा प्रेयसी भव' इति ह स्माऽह कामार्तो रावणः ॥ १६ ॥

**अप्रमेयप्रभावं त्वं न रामं वेत्थ राक्षस[3] ।**
**मत्कामाल्लप्स्यसे मृत्युमिति सीता तमब्रवीत् ॥ १७ ॥**

**(सं.चं.) अप्रमेये**ति । हे राक्षस, (त्वं) अप्रमेयः साकल्येन ज्ञातुमशक्यः प्रभावः सामर्थ्यं यस्य स तथोक्तस्तं श्रीरामं न वेत्थ न जानासि । विद ज्ञाने लट् । मयि यः कामोऽभिलाषस्तस्मात् मृत्युर्मरणं तं लप्स्यसे प्राप्नोषि । डु लभष् प्राप्तौ लृट् । इति सीता तं प्रति अब्रवीत् ॥ १७ ॥

**(सं.चं.)** अप्रमेयः, न प्रमातुं शक्यः, नापि परिमातुम् । मत्कामात् मां न लप्स्यसे, किन्तु मृत्युं लप्स्यसे ॥ १७ ॥

---

१. **'सीतेत्थं प्रत्य–'** २. **'स्माऽह राक्षसः'**

३. **'वेत्थ रावण'**

**सेन्द्रदेवविजिष्णोर्म्मे किं रामान्मानवाद् भयम् ।**
**इति स्वं घोरमाकारं गृहीत्वा रावणोऽभ्ययात् ॥ १८ ॥**

**(भा.दी.) सेन्द्रे**ति । इन्द्रेण सहिताः सेन्द्राः, ते च ते देवाश्च, तान् विजेतुं शीलमस्यास्तीति तथोक्तः, तस्य मे मानवात् मनुष्यात् श्रीरामात् भयं किम्? न किमपीत्यर्थः । इति उक्त्वेति शेषः । स्वः स्वकीयस्तं घोरं आकारः, दशाननत्वादिरूपो य आकारः, तं गृहीत्वा परिगृह्य रावणः अभ्ययात् ॥ १८ ॥

**(सं.चं.)** सेन्द्राणां देवानां विजिष्णोः । अभ्ययात् सीताभिमुखं ययौ ॥ १८–२० ॥

**अधृष्यशक्तिः शक्ताऽपि विक्षेप्तुं राक्षसेश्वरम् ।**
**विश्वेश्वरी तिरोऽभूत् सा सृष्ट्वा प्रतिकृतिं[1] निजाम् ॥ १९ ॥**

**(भा.दी.) अधृष्ये**ति । अधृष्या केनाप्यनुल्लङ्घ्या शक्तिः सामर्थ्यं यस्याः सा तथा । तत्र हेतुर्विश्वेश्वरीति । जगत ईश्वरी सा सीता राक्षसेश्वरं रावणं विक्षेप्तुं तिरस्कर्तुं शक्ताऽपि, निजां प्रतिकृतिं प्रतिरूपं सृष्ट्वा, तिरोऽभूत् अदृश्याऽभूत् ॥ १९–२१ ॥

**विज्ञाय रामस्य मतं सीता कैलासमाययौ ।**
**वन्द्यमानाऽवसत् तत्र शिवया च शिवेन च ॥ २० ॥**

**(भा.दी.)** अन्तर्हिता स्वयं कुत्र गतेत्यत आह– **विज्ञाये**ति । सीता श्रीरामस्य मतमभिप्रायस्तत् विज्ञाय कैलासः कैलासपर्वतस्तं आययौ । यातेर्लिट् । तत्र कैलासे शिवेन रुद्रेण शिवया पार्वत्या च वन्द्यमाना स्तूयमाना सती अवसत् । स्वप्रतिकृतिहरणं निमित्तीकृत्य रावणो हन्तव्य इति श्रीरामाभिप्रायं जानती सीता स्वप्रतिकृतिं सृष्ट्वा स्वयं कैलासं प्रति श्रीरामानुमत्यैव गतेत्यर्थः । नचात्र प्रमाणाभावः । 'सृष्ट्वा मायायमीं सीतां स रावणवधेप्सया । सीतामादाय धर्मिष्ठां पावकोऽन्तरधीयत । तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः । समादाय ययौ लङ्कां सागरान्तरसंस्थिताम्' इति कूर्मपुराणोक्तेः । तत्रैव च कैलासं प्रति गतेत्यत्र च– 'भवानीपार्श्वमानीता मया रावणकामिता । या नीता राक्षसेशेन सीता भगवती कृता' इति च ॥ २० ॥

**तां जानकीप्रतिकृतिं मन्वानो जानकीं खलः ।**
**तूर्णं स्यन्दनमारोप्य गगने गतवानथ ॥ २१ ॥**

---

१. **'तस्यास्तु तां प्रतिकृतिं प्रविवेश शक्रो देव्याश्च सन्निधियुता व्यवहारसिद्ध्या इत्युक्तेः प्रतिकृताविन्द्रप्रवेशादिकमस्तीति ज्ञेयम्'** इति का.श्री.।

**(भा.दी.)** **तामि**ति । अथ तां जानकीनिर्मितां जानक्याः प्रतिकृतिं प्रतिबिम्बं जानकीं सीतां मन्वानः खलः रावणः, तूर्णं यथा भवति तथा, स्यन्दनो रथस्तं आरोप्य, गच्छन्त्यत्र खगा इति गगनं तस्मिन् गतवान् ॥ २१ ॥

**(सं.चं.)** स्वकृतनाटकस्य देवैः कृतं प्रतिमानाटकमजानन् रावणः प्रतिकृतिमेव प्रकृतिं मन्वानः । माया-परिव्राजकस्य मायासीता लब्धेति सुन्दरं नाटकम् ॥ २१ ॥

**करुणं विललापाऽथ[1] च्छलसीता पुनःपुनः ।**
**हा राम रावणात् पाहि मां हा लक्ष्मण लक्षय[2] ॥ २२ ॥**

**(भा.दी.)** **करुणमि**ति । अथ च्छलेन व्याजेन सीता, ननु स्वतः सीतेत्यर्थः, हा राम, रावणात् मां पाहि, हा लक्ष्मण, मां लक्षय पश्य । लक्ष दर्शनाङ्कनयोर्लोट् । इति करुणं कृपास्पदं यथा भवति तथा पुनःपुनः विललाप । लप व्यक्तायां वाचि लिट् ॥ २२ ॥

**(सं.चं.)** लक्षय पश्य रावणेनापह्रियमाणाम् ॥ २२–४ ॥

**इमामवस्थां रामाय त्वं ब्रूहि वनदेवते ।**
**हाहा जटायो पक्षीन्द्र क्षिप्रं रामाय वेद्यताम् ॥ २३ ॥**

**(भा.दी.)** **इमामि**ति । हे वनदेवते वनाभिमानिदेवते, त्वं इमां मम अवस्थां श्रीरामाय ब्रूहि । पक्षिणा-मिन्द्र हाहा जटायो, क्षिप्रं यथा भवति तथा इयं मदीयावस्था श्रीरामाय वेद्यतां विज्ञाप्यतां । विद ज्ञाने लोट् ॥ २३ ॥

**इत्थं जटायुशब्दं[3] तं जटायुरभिशुश्रुवान् ।**
**पर्वतादुत्पपाताऽथ पर्वताग्र्यइवापरः ॥ २४ ॥**

**(भा.दी.)** इत्थमिति । अथ इत्थं तं सीतयाऽभिहितं जटायुशब्दम्, जटायुरिति यः शब्दस्तम्, अभि-शुश्रुवान् अभिश्रुतवान् जटायुः अपरः पर्वताग्र्यइव पर्वतश्रेष्ठइव, पर्वाणि सन्धयोऽस्य सन्तीति पर्वतस्तस्मात् उत्पपात ॥ २४ ॥

---

१. 'विललापाथो छलसीता' २. 'लक्ष्मण पालय' ३. 'जटायुःशब्दम्'

**नय मा राममहिषीं मयि जीवति राक्षस ।**
**शयिष्यसे रामबाणैरिति गृध्रोऽभ्यधादिमम् ॥ २५ ॥**

**(भा.दी.) नये**ति । हे राक्षस रावण, मयि जीवति राममहिषीं सीतां मा नय । नीतेर्लोट् । त्वं श्रीरामस्य बाणास्तैः शयिष्यसे, मृतः सन् शयनं करिष्यसि । शीङ् स्वप्ने लृट् । इति गृध्रः जटायुः इमं रावणं अभ्यधात् उवाच ॥ २५ ॥

**(सं.चं.)** रामबाणैर्हतः शयिष्यसे । 'शयिष्यसे हतो भूमौ यथा भ्राता खरस्तथा' (५१.३०) इति च ॥२५॥

**ततः[1] प्रववृते युद्धं पक्षिराक्षसराजयोः ।**
**नखतुण्डैश्च बाणैश्च परस्परवधैषिणोः ॥ २६ ॥**

**(भा.दी.) तत** इति । ततः परस्परं यो वधस्तमेष्टुं शीलमनयोरस्तीति तथोक्तौ तयोः, पक्षिणश्च राक्षसाश्च तेषां राजानौ तयोः, नखाश्च[2] तुण्डानि च तानि तैश्च, बाणयन्ति विरावयन्ति शत्रूनिति बाणास्तैश्च, युद्धं प्रववृते । वृतु वर्तने लिट् ॥ २६ ॥

**(सं.चं.)** पक्षिराजराक्षसराजयोः । नखैस्तुण्डेन च पक्षिराजस्य । बाणै राक्षसराजस्य ॥ २६ ॥

**राक्षसः क्षतगात्रोऽथ नखतुण्डैर्ज्जटायुषः ।**
**मुमोच गृध्रराजाय दशाऽशु निशिताञ्छरान् ॥ २७ ॥**

**(भा.दी.) राक्षस** इति । अथ जटायुषः नखाश्च तुण्डं च तैः क्षतं गात्रं यस्य स तथा राक्षसः, गृध्राणां राजा गृध्रराजस्तस्मै निशितान् दश शरान् आशु मुमोच ॥ २७ ॥

**(सं.चं.)** दश शरान् । 'अथ क्रोधाद् दशग्रीवो जग्राह दश मार्गणान्' (५१.८) इति च ॥ २७ ॥

**पक्षाभ्यामक्षिणोच्चापं सारथिं नखरैः खरैः ।**
**रथं छत्रं च वाहांश्च विहङ्गो भङ्गमानयत् ॥ २८ ॥**

---

१. 'तत्र प्रववृते'

२. 'तुण्डं च' इति युक्तम् । तथैव व्याख्यातं चोत्तरश्लोके ।

**(भा.दी.) पक्षे**ति । विहायसा गच्छतीति विहङ्गः जटायुः पक्षौ पतत्रे ताभ्याम्, चापो धनुस्तं अक्षिणोत् व्यनाशयत् । क्षिणु हिंसायां लङ् । खरैः नखरा नखास्तैः सारथिं अक्षिणोत् । रथः स्यन्दनस्तं च्छत्रं तत् वाहानश्वांश्च भङ्गो विनाशस्तं आनयत् । नीञो लङ् ॥ २८ ॥

**(सं.चं.)** विहायसा विहायसि वा गच्छतीति विहङ्गः । 'विहायसो विह च' इति वार्तिकेन(अ.सू.३.२.३८) विहायसशब्दस्य विहादेशः । 'गमश्च' (अ.सू.३.२.४७) इति खच्प्रत्यये खित्वात् मुमागमे च 'विहङ्गमः' इति रूपम् । पुनश्च 'खच्च डिद् वा वक्तव्यः' (अ.सू.३.२.३८) इति वार्तिकेन 'विहङ्गः' इति रूपसिद्धिः । खरैर्नखरैस्तुण्डेन च । पक्षाभ्यामक्षिणोच्चापम् । रामायणे तु–'ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् । चरणाभ्यां महातेजा बभञ्ज पतगेश्वरः' (५१.१०) इत्युच्यते । तेन विरोध इति मा शङ्कि । याभ्यां चरन्ति तौ किल चरणौ । पक्षिणः पक्षाभ्यां चरन्ति । न पादाभ्याम् । तेन चरणाभ्यामिति यदाह वाल्मीकिस्तदेव पक्षाभ्यामित्याह सङ्ग्रहकारः, उद्घाटयन्निह वाल्मीकिहृदयम् । 'चरणाभ्यां महातेजा बभञ्जास्य महद् धनुः' (१४) इत्युपरि-तनवचनस्याप्ययमेवार्थः । सारथिं च नखरैरक्षिणोत् अहिंसीत् । क्षिणित्वा तुण्डेनापातयत् । 'सारथेश्चास्य वेगेन तुण्डेनैव महच्छिरः । पुनर्न्यपातयत्–' (५१.१८) इति च । पक्षाभ्यां नखरैस्तुण्डेन च रथं ध्वजं च वाहांश्च पिशाचवदनान् खरान् ॥ २८ ॥

**खेचरैः स्तूयमानोऽसौ खेचरं वीक्ष्य रावणम् ।**
**आक्षिप्य परुषैर्वाक्यैरारुरोहाथ पृष्ठतः ॥ २९ ॥**

**(भा.दी.) ख** इति । अथ खे आकाशे चरन्तीति खेचरास्तैः । 'तत्पुरुषे कृति बहुलम्' (अ.सू.६.३.१४) इत्यलुक् । गन्धर्वादिभिः स्तूयमानः लाळ्यमानः असौ जटायुः खेचरं रावणं वीक्ष्य, परुषाणि निष्ठुराणि तैः वाक्यैः आक्षिप्य निर्भत्स्य पृष्ठतः पृष्ठभागे आरुरोह । रुह बीजजन्मनि प्रादुर्भावे लिट् ॥ २९ ॥

**(सं.चं.)** खेचरैः स्तूयमानोऽसौ । 'निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् । विददार नखैरस्य तुण्डं पृष्ठे समर्पयन् । केशांश्चोत्पाटयामास नखपक्षमुखायुधः' (५१.३३–५) इति च ॥ २९–३० ॥

**पृष्ठपीठं[1] चखानाथ नखैः पक्षी तु रक्षसः ।**
**विमोचनाय तन्वङ्ग्याः केशांश्चास्योदपाटयत्[2] ॥ ३० ॥**

१, 'पृष्ठमूलम्' २. 'केशांश्चास्योदमूलयत्'

**(भा.दी.) पृष्ठेति** । अथ पक्षी रक्षसः रावणस्य पृष्ठस्य पीठं मूलं तत् नखा नखरास्तैः चखान विददार, खनु अवदारणे लिट् । तनु कोमलमङ्गं शरीरं यस्याः सा तथा तस्याः सीतायाः, विमोचनं विमोक्षस्तस्मै, तादर्थ्ये चतुर्थी, अस्य रावणस्य केशांश्च उदपाटयत् लुलुञ्च । पट गतौ लङ् ॥ ३० ॥

**विमुच्य मृगशाबाक्षीं राक्षसः पक्षिविक्षतः[1] ।**
**अभ्यापतत् पतत्रीन्द्रं तौ मुहूर्त्तं न्ययुद्ध्यताम् ॥ ३१ ॥**

**(भा.दी.) विमुच्येति** । पक्षिणा विक्षतः राक्षसः, मृगस्य एणस्य यः शावः शिशुस्तस्य अक्षिणी इव अक्षिणी यस्याः सा तथा तां सीतां विमुच्य, पतत्रीन्द्रं जटायुषं अभ्यापतत् अभिययौ । तौ रावणजटायुषौ मुहूर्तो मुहूर्तकालस्तं न्ययुद्ध्यतां युयुधाते ॥ ३१ ॥

**(सं.चं.)** न्ययुद्ध्यतां न्ययुद्ध्येताम् । युद्ध्यतिमुभयतोभाषं मन्यन्ते कवय इत्युक्तम् । अथापि कथं नियुयुधाते? नियुद्धमिति बाहुयुद्धमुच्यते । रावणस्तु नियुद्ध्येत । कथमबाहुर्जटायुः? मैवमवक्ष्यथाः, यदि वागर्थाविध्यगीष्यथाः । निवृत्तायुधं हि युद्धं नियुद्धमुच्यते । निरायुधमित्येतत् । बाहुषाळिनावेव हि प्रायो युद्ध्येते । तेन नियुद्धं बाहुयुद्धमाचक्षते । अत्र तु निरायुधत्वं समानम् । रावणस्तु पक्षिपक्षक्षिप्तचापः क्षणं बाहुभ्यामेव युयुध इत्यर्थः । 'ततः क्रोधाद् दशग्रीवः सीतामुत्सृज्य रावणः । मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत्' (५१.४०) इति च ॥ ३१ ॥

**तस्य श्रान्तस्य वृद्धस्य षष्टिवर्षसहस्रिणः ।**
**पक्षौ पादौ च पाश्र्वे[2] च खड्गेनाखण्डयत् खलः ॥ ३२ ॥**

**(भा.दी.) तस्येति** । खलः श्रान्तस्य युद्धेन श्रमं गतस्य । तत्र हेतुः– **षष्टीति** । वर्षाणां सहस्राणि वर्षसहस्राणि, षष्टिः वर्षसहस्राणि अस्य सन्तीति तथोक्तः, तस्य, अत एव वृद्धस्य जटायुषः, पक्षौ पादौ च पाश्र्वे च, खण्ड्यतेऽनेनेति खड्गस्तेन अखण्डयत् ॥ ३२ ॥

**(सं.चं.)** 'तस्य व्यायच्छमानस्य रामस्यार्थे स रावणः । पक्षौ पाश्र्वौ च पादौ च खड्गमुद्धृत्य सोऽच्छिनत्' (५१.४३) इति च । उरसः पाश्र्वे पतत्रमूले इत्यर्थः ॥ ३२–४ ॥

---

१. **'पक्षविक्षतः'**

२. **'पाश्र्वे विद्यमानौ पक्षौ'** इति का.श्री. । रामायणाननुगुणमेतत् ।

**मन्दचेष्टं निपतितं राममित्रं पतत्रिणम् ।**
**मायासीता तमाश्लिष्य विललाप शुकालपा ॥ ३३ ॥**

**(भा.दी.) मन्देति** । शुकवदालपति सम्भाषणं करोतीति शुकालपा, मायासीता मायया च्छलेन सीता, सीताप्रतिकृतिरित्यर्थः, मन्दा स्वल्पा चेष्टा यस्य स तथा तम्, निपतितं श्रीरामस्य मित्रं तत्, तं पतत्रिणं आश्लिष्य विललाप ॥ ३३ ॥

**हठेन[1] कठिनात्मा स तामाकृष्य निशाचरः ।**
**गृहीत्वाऽऽकाशमाक्रम्य प्रययौ वायुवेगवान् ॥ ३४ ॥**

**(भा.दी.) हठेनेति** । कठिनः निर्दयः आत्मा मनो यस्य स तथोक्तः, सः निशाचरः, हठो बलात्कारस्तेन, तां सीतां आकृष्य गृहीत्वा, आ समन्तात् काशन्ते सूर्यादयोऽत्रेत्याकाशं तत् आक्रम्य, वायोर्वेग इव वेगोऽस्यास्तीति तथोक्तस्तथा सन् प्रययौ । रथस्य जटायुषा विनाशितत्वादाकाशमार्गेण जगामेति भावः ॥ ३४ ॥

**हृतायां रक्षसा तस्यां चुक्षोभेदं चराचरम्[2] ।**
**हिरण्याक्षेण दैत्येन क्षोण्यामिव गरीयसा ॥ ३५ ॥**

**(भा.दी.) हृतायामिति** । गरीयसा अतिस्थूलकायेन हिरण्याक्षेण हिरण्याक्षनामकेन दैत्येन क्षोण्यामिव पृथिव्यामिव, तस्यां सीतायां रक्षसा रावणेन हृतायां सत्याम्, इदं चराचरं जगत् चुक्षोभ क्षुब्धमभूत् । क्षुभ सञ्चलने लिट् ॥ ३५ ॥

**(सं.चं.)** क्षोण्यामिव हृतायाम्, आकृष्टिशक्तिविहापनेन ॥ ३५–८ ॥

**लोकनाथस्य कान्तां मां कालपाशायितां तव ।**
**मुञ्चमुञ्चेति सा तन्वी रुरोद करुणं मुहुः ॥ ३६ ॥**

**(भा.दी.) लोकेति** । तन्वी मनोहरा सीता, लोकनाथस्य श्रीरामस्य कान्तां भार्याम्, तव कालस्य यमस्य पाशवदाचरतीति कालपाशायिता तां मां मुञ्चमुञ्च इति करुणं कृपास्पदं यथा भवति तथा मुहुः रुरोद ॥३६॥

---

१. 'हस्तेन' २. 'चुक्षुभे सचराचरम्'

**पन्नगीमिव लोठन्तीं दीप्तां[1] वह्निशिखामिव ।**
**अङ्के लङ्केश्वरो बिभ्रत् स्वमृत्यै तां निनाय सः ॥ ३७ ॥**

**(भा.दी.) पन्नगीमि**ति । सः लङ्केश्वरः रावणः, पन्नगस्य स्त्री पन्नगी सर्पिणी, तामिव लोठन्तीं परिभ्रमन्तीम्, वह्निशिखामिव वह्निज्वालामिव दीप्तां क्रोधदीप्तां तां सीताम्, अङ्क ऊरुस्तस्मिन् बिभ्रत् सन्, स्वस्य मृतिर्मरणं तस्यै निनाय ॥ ३७ ॥

**वानरान् गिरिशृङ्गे सा पञ्च पञ्चास्यविक्रमान् ।**
**अवलोक्याऽक्षिपन्मध्ये तेषामात्मोत्तरीयकम् ॥ ३८ ॥**

**(भा.दी.) वानराने**ति । सा सीता गिरेर्यच्छृङ्गं तस्मिन्, पञ्चं विस्तृतं आस्यं यस्य स पञ्चास्यः सिंहस्तद्वद् विक्रमो येषां ते तथा तान्, पञ्च वानरान् सुग्रीवादीन् अवलोक्य, तेषां मध्यं मध्यप्रदेशस्तस्मिन्, आत्मन उत्तरीयमुत्तरीयवस्त्रं तत् आक्षिपत् चिक्षेप । क्षिपु निरसने लङ् ॥ ३८ ॥

**अग्निवर्ण्णान् निजाकल्पान् पातयामास तत्र सा ।**
**आत्मपूर्ण्णस्य कोपाग्नेः शेषानिव सुमद्ध्यमा ॥ ३९ ॥**

**(भा.दी.) अग्नी**ति । सु शोभनं मध्यमं मध्यं यस्याः सा तथोक्ता सा सीता, आत्मनि पूर्णस्तस्य, कोप एवाग्निस्तस्य शेषानिव अधिकभागानिव । 'शेषस्त्रिष्वन्यस्मिन्नुपयुक्ततः' इति वैजयन्ती । अग्निवद् वर्णो येषां ते तथा तान्, निजाः स्वकीया ये आकल्पा अभरणानि तान्, तत्र तेषां मध्ये पातयामास । कोपस्य प्रज्वलनात्मकत्वेनाग्निसदृशत्वादाभरणानां च सुवर्णमयत्वेन तच्छेषत्वोक्तिः । कोपोद्रेकात् स्वाभरणान्युत्कृत्य चिक्षेपेति भावः ॥ ३९ ॥

**(सं.चं.)** आत्मनि पूर्णस्य, अत एवान्तरमिमानस्य रोषाग्नेः बहिर्निःसृतान् शेषानिव ॥ ३९ ॥

**हनुमान्[2] वानरश्रेष्ठस्तत्र भागवताग्रणीः ।**
**जिघांसू रावणं गच्छन् वारितो रविसूनुना ॥ ४० ॥**

---

१. 'दीप्राम्' २. 'हनूमान्'

**(भा.दी.) हनुमानि**ति । तत्र तेषां मध्ये वानरेषु श्रेष्ठः, भागवतेषु भगवद्भक्तेषु अग्रणीः श्रेष्ठः, हनुमान् रावणं जिघांसुः हन्तुमिच्छावान् सन् गच्छन् रविसूनुना सुग्रीवेण वारितः । रावणेन नीयमानया स्त्रिया इदमाभरणादिकमस्मन्मध्ये निक्षिप्तमितीममुदन्तं श्रीरामं प्रति ज्ञापयिष्यतीत्यभिप्रायेण सुग्रीवेण वारितो रामेच्छयैव निवृत्तोऽभूदिति भावः ॥ ४० ॥

**(सं.चं.)** रविसूनुना सुग्रीवेण । रामायणेऽनुदितेयं कथा । 'मार्गे व्रजन्तमभियाय ततो हनूमान् संवारितो रविसुतेन च जानमानः । दैवं तु कार्यमथ कीर्तिमभीप्समानो रामस्य नैनमहनद् वचनाद्धरेश्च' (५.३९) इति हि तात्पर्यनिर्णये ॥ ४० ॥

**नगान् नदीरतिव्रज्य[१] नदीभर्त्तारमप्यथ ।**
**लङ्कां लङ्केश्वरः प्राप्य चिन्तयामास पापधीः ॥ ४१ ॥**

**(भा.दी.) नगानि**ति । (अथ) पापा धीर्यस्य स तथोक्तः लङ्केश्वरः, नगान् पर्वतान्, नदीः, नदीनां भर्ता समुद्रस्तमपि अतिव्रज्य अतिक्रम्य, लङ्कां प्राप्य चिन्तयामास । चिति स्मृत्यां लिट् । श्रीरामोऽत्र यथा नाऽयास्यति तथा तस्य निग्रहः कार्य इति निश्चिकायेत्यर्थः ॥ ४१ ॥

**(सं.चं.)** अथ रावणस्याविदिततयाऽऽकल्पानामुत्तरीयखण्डेन सह सीतया कपिलोके निक्षेपानन्तरम् । रावणः नदीभर्तारं सागरम् । लङ्कां प्राप्य । किमस्या रक्षायै कर्तव्यमिति चिन्तयामास । रामस्य का दशेदानीमिति च ॥ ४१ ॥

**रक्षोवरान् वरोत्सिक्तानष्टौ दुष्टः[२] समादिशत् ।**
**जनस्थाने हतस्थाने रामो विज्ञायतामिति ॥ ४२ ॥**

**(भा.दी.) रक्ष** इति । दुष्टः रावणः, वरेण उत्सिक्तानुद्धतान् अष्टौ रक्षस्सु वरान् श्रेष्ठान्, हतानां खर-प्रभृतीनां स्थानमाश्रयस्तस्मिन्, जनस्थानं दण्डकारण्यं तस्मिन्, श्रीरामः विज्ञायताम्, किं कार्यं करोतीति दृष्ट्वा स्थीयताम् । ज्ञा अवबोधने लोट् । इति समादिशत् । दिशतेर्लङ् ॥ ४२ ॥

**(सं.चं.)** हतस्थाने यत्र खरादयो हतास्तत्र जनस्थाने । अष्टौ रक्षोवरान् वरदानेन वरानप्यवरान् । 'ददर्शाष्टौ महावीर्यान् राक्षसान् पिशिताशनान् । स तान् दृष्ट्वा महावीर्यो वरदानेन मोहितान् । उवाचैतानिदं वाक्यं

१. **'नगान् नदीरनुव्रज्य'** २. **'दुष्टान् समा–'**

प्रशस्य बलवीर्यतः । नानाप्रहरणाः क्षिप्रमितो गच्छत सत्वराः । जनस्थानं हतस्थानं भूतपूर्वं खरालयम्' (५४.१८–२०) इति च । 'वरदानेन मोहितः' इति च साम्प्रतो रामायणपाठः । वरमत्ताः खरादयोऽपि येन हतास्तन्निग्रहाय कथमवराः प्रेष्यन्ते? अतो 'वरदानेन मोहितान्' इत्येव युक्तः पाठः । अत एव पण्डिताचार्योऽपि 'रक्षोवरान् वरोत्सिक्तान्' इत्येव पपाठ। रामो विज्ञायताम्। रामस्य वार्ता विज्ञायताम् ॥ ४२–४ ॥

**प्रविश्यान्तःपुरं तन्व्यै[1] दर्शयामास रावणः ।**
**सर्वसम्पत्समृद्धं तद् वचनं चेदमब्रवीत् ॥ ४३ ॥**

**(भा.दी.) प्रविश्ये**ति । रावणः सर्वा या सम्पत् तया समृद्धं तत् अन्तःपुरं प्रविश्य, तत् अन्तःपुरं तन्व्यै स्त्रियै सीतायै दर्शयामास । इदं वचनं च अब्रवीत् ॥ ४३ ॥

**आगन्तेदं कथं दुर्गं रामः किं वाऽत्र साधयेत् ।**
**निराशा भव रामे त्वं भार्य्या मे श्रीमतो भव ॥ ४४ ॥**

**(भा.दी.) आगन्ते**ति । श्रीरामः इदं दुर्गं समुद्रावृतत्वेन दुर्गप्रदेशं कथं आगन्ता आगमिष्यति? गम्लृ गतौ लुट्। अत्र लङ्कायां आगतो वा किं वा कार्यं साधयेत्? राध साध संसिद्धौ लिङ्। त्वं श्रीरामे निराशा, निर्गता आशा यस्याः सा तथा भव । श्रीमतः ऐश्वर्यवतः मम भार्या भव ॥ ४४ ॥

**इत्युक्ता साश्रुनेत्रोचे[2] कुत्र रामो न यास्यति ।**
**गुप्तं सुरासुरैश्च त्वां सूदयेद् भगवानिति ॥ ४५ ॥**

**(भा.दी.) इती**ति । इति रावणेन उक्ता, सु शोभने नेत्रे यस्याः सा तथा । अश्रुनेत्रेति क्वचित्पाठः । सा सीता, भगवान् पूर्णषड्गुणः श्रीरामः कुत्र प्रदेशे न यास्यति न गमिष्यति? सुराश्च असुराश्च तैः गुप्तमपि त्वां सूदयेत् संहरेत् । षूद क्षरणे लिङ् । इति ऊचे ॥ ४५ ॥

**(सं.चं.)** साश्रुणी अश्रुपूर्णे नेत्रे यस्याः । मायासीता हि सा ॥ ४५ ॥

---

१. 'तस्यै'    २. 'सा सुनेत्रोचे'

**ततो निर्भर्त्सयन् क्रुद्धो राक्षसीभिश्च तर्ज्जयन् ।**
**तन्वीमशोकवनिकां यापयामास[1] राक्षसः ॥ ४६ ॥**

**(भा.दी.) तत** इति । ततः सीतां निर्भर्त्सयन् कुत्सयन्, तर्जयन् भीषयन्, क्रुद्धः राक्षसः राक्षसीभिः सह तन्वीं पतिविरहेण कृशां सीताम्, अशोकानां अशोकवृक्षाणां वनिकां वनं प्रापयामास ॥ ४६ ॥

**(सं.चं.)** स्वयं निर्भर्त्सयन्, राक्षसीभिश्च तर्जयन् ॥ ४६ ॥

**हंसीव टिट्टिभीभिः सा काकैरिव च कोकिला ।**
**उवास शिंशपामूले[2] राक्षसीभिर्वितर्ज्जिता[3] ॥ ४७ ॥**

**(भा.दी.)** हंसीति । टिट्टिभीभिः टिट्टिभीनामिकाभिः पक्षिणीभिः हंसीव हंसस्त्रीव, काकैः कोकिलेव, राक्षसीभिः राक्षसस्त्रीभिः वितर्जिता भीषिता सा सीता, शिंशपायाः काळागरुवृक्षस्य यन्मूलं तस्मिन्नुवास । वस निवासे लिट् ॥ ४७ ॥

**(सं.चं.)** काकैरिव । 'काकीभिरिव कोकिला' इत्यपि पाठः स्यात् । शिंशपामूले । अशोकप्रभेदः शिंशपा । विविधं विकटं च तर्जिता ॥ ४७ ॥

**लक्ष्मीलक्ष्मीपती तावमितगुणगणौ सर्वदा सर्वदेशे**
**व्याप्तौ निर्द्दोषलेशौ सकलतनुभृतां प्रेरकौ लीलयैव ।**
**सीतारामाभिधानौ कथमथ विरहः[4] स्यात् तयोः शोकलेशः**
**कुत्र स्याच्छद्मनेदं प्रकटितमसुखं नाट्यवन्नाऽत्मरूपम् ॥ ४८ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणेऽरण्यकाण्डे**
**पञ्चमः सर्ग्गः ॥**

—०—

१. 'प्रापयामास' इति वि.ती.पाठः । २. 'शिंशुपामूले' इति पठन्तो भ्रान्ताः । ३. 'राक्षसीभिर्विभत्सिता'

४. 'कथमपि विरहः' । 'व्याप्तयोः विरहो न सम्भवति, पूर्णगुणयोः दोषरहितयोः दुःखं न सम्भवतीति भावः' इति का.श्री. ।

**(भा.दी.) लक्ष्मी**ति । सीतारामावित्यभिधाने नामनी ययोस्तौ तथोक्तौ, लक्ष्मीश्च लक्ष्मीपतिश्च तौ, लक्ष्मीनारायणावतारावित्यर्थः । अमिता ये गुणास्तेषां गणा ययोस्तौ तथोक्तौ । सर्वदा सर्वस्मिन् काले सर्वो यो देशस्तस्मिन् व्याप्तौ । दोषस्य लेशो दोषलेशः, निर्गतो दोषलेशो याभ्यां तौ तथोक्तौ । तनुं बिभ्रतीति तथोक्तास्तनुभृतः प्राणिनः, सकला ये तनुभृतस्तेषां ब्रह्मादीनां लीलयैव प्रेरकौ । इमानि च विशेषणानि वियोगशोकयोरभावे प्रत्येकं हेतुगर्भाणि । तयोः एतादृशयोः सीतारामयोः विरहः परस्परं वियोगः कुत्र देशे काले वा कथं स्यात्? न कथमपि । अस्तेर्लिङ् । शोकलेशो वा कथं स्यात्? तर्हि कथं तदानीन्तनजनानां तथा प्रतीतिरित्यत आह– **च्छद्मने**त्यादिना । ताभ्यां इदं मन्दानां प्रतीयमानमसुखं नटस्य भावो नाट्यं तद्वन्नाट्याचारवदित्यर्थः, च्छद्मना व्याजेन, लौकिकजनानुकरणेनेत्यर्थः, प्रकटितं प्रदर्शितम् । एवं दुखवत्त्वादिकं आत्मरूपम्, आत्मनोः स्वयोग्यभूतं स्वरूपभूतं स्वाभाविकं नेति सम्बन्धः ॥ ४८ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणटीकायां**
**भावार्थदीपिकायामरण्यकाण्डे पञ्चमः सर्गः ॥**

—०—

**(सं.चं.)** स्रग्धरयोपसंहरति–लक्ष्मीलक्ष्मीपती इति । मरभनैर्यत्रयैश्च हि स्रग्धरा । सर्वदा सर्वकाले अमितगुणगणौ । सर्वदेशे व्याप्तौ । दोषलेशादपि निष्क्रान्तौ रहितौ निर्दोषलेशौ । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति हि वार्तिकम् (अ.सू.२.२.१८) । कथमथ सर्वगतयोस्तयोर्विरहः? कथन्तरां विरहजः शोकलेशः? अथापि रामेण विरहजमसुखं प्रकटितम् । तदिदं नाट्ये नटकृतं विडम्बनमिव केवलं कपट-नाटकम् । नेदं दुःखं भगवत्स्वरूपम् । नापि सीताया वस्तुतो भगवद्विरहस्तन्निमित्तं दुःखं वा ॥ ४८ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायामरण्यकाण्डे**
**पञ्चमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १३२५+४८=१३७३]

## षष्ठः सर्ग्गः

**मारयित्वाऽथ मारीचं स्वाश्रमाभिमुखं[1] व्रजन् ।**
**ऊचे दृष्ट्वाऽभिधावन्तं लक्ष्मणं लक्ष्मणाग्रजः ॥ १ ॥**

**(भा.दी.)** श्रीरामो मारीचं हत्वा किं चकारेत्यत आह– **मारयित्वेति** । अथ मारीचं मारयित्वा संहृत्य, स्वस्य य आश्रमस्तदभिमुखं यथा भवति तथा व्रजन् लक्ष्मणाग्रजः श्रीरामः अभिधावन्तं लक्ष्मणं दृष्ट्वा ऊचे ॥ १ ॥

**(सं.चं.)** अभिधावन्तं स्वाभिमुखं धावन्धावमागच्छन्तम् ॥ १ ॥

**मायिनां रक्षसां स्थाने मुक्त्वा सीतां त्वमागतः[2] ।**
**निमित्तान्यप्यभद्राणि पश्येत्युक्त्वा ययौ प्रभुः ॥ २ ॥**

**(भा.दी.) मायिनामि**ति । माया अदृश्यत्वतात्कालिकसर्जनादिसमर्था तामसी शक्तिरेषामस्तीति तथा तेषां रक्षसां स्थानमाश्रयस्तस्मिन् आश्रमे सीतां मुक्त्वा मां प्रति आगतः असि । अभद्राणि निमित्तान्यपि पश्य । दृशिर् प्रेक्षणे लोट् । इति उक्त्वा प्रभुः श्रीरामः स्वाश्रमं प्रति ययौ ॥ २ ॥

**(सं.चं.)** स्थाने वासस्थाने जनस्थाने । अभद्राणि अशुभसूचकानि । 'क्रूरस्वनोऽथ गोमायुर्विननादास्य पृष्ठतः' (५७–२) इत्यादि । ययौ स्वाश्रमाभिमुखम् ॥ २ ॥

---

१. **'स्वाश्रमाभिमुखो व्रजन्'**

२. **'सीतां मुक्त्वाऽऽगतोऽसि माम्'** इति वि.ती.पाठः स्यात् । **'मायिनां लक्ष्मण स्थाने सीतां मुक्त्वाऽऽगतः कथम्'** इति का.श्री. पाठः स्यादिति भाति । तथाहि तद् व्याख्यानम्–**'हे लक्ष्मण, मायिनां कपटिनां स्थाने सीतां मुक्त्वा कथमागतः'** इति ।

**अश्रमः स्वाश्रमं प्राप्य सोऽपश्यन्निव मैथिलीम् ।**
**शोकाद् विचिन्वन्निव वा नाटयामास केवलम्[1] ॥ ३ ॥**

**(भा.दी.) अश्रम** इति । न विद्यते धावननिमित्तः श्रमो यस्य स तथा सः श्रीरामः, स्वस्य आश्रमस्तं प्राप्य, मैथिलीमपश्यन्निव, शोको दुःखं तस्मात् विचिन्वन्निव, तत्र तत्रान्वेषणं कुर्वन्निव (वा), केवलं नाटयामास अनुकरणं चकार । नट नृत्तौ लिट् । न तु स्वस्य दुःखं वाऽज्ञानं वेति भावः ॥ ३ ॥

**(सं.चं.)** नाटयामास । नट नृतौ । नृतिरभिनयः । 'नट नतौ । नटति । नटयति शाखाम् । नृतौ तु नाटयति' इति क्षीरस्वामी ॥ ३ ॥

**शुद्धां मान्यां सदा रक्ष्यां सीतामाज्ञां च मे समम् ।**
**त्यक्तवान् मित्र सौमित्रे त्वमित्थं राघवोऽब्रवीत् ॥ ४ ॥**

**(भा.दी.) शुद्धामि**ति । हे मित्र सौमित्रे, त्वं शुद्धां मान्यां सदा रक्ष्यां सीतां मे मम आज्ञां च, विशेषणत्रयमाज्ञायाश्च योज्यम्, समं युगपत् यथा भवति तथा त्यक्तवानसि इत्थं राघवः अब्रवीत् ॥ ४ ॥

**(सं.चं.)** इत्थं इति अब्रवीत् ॥ ४ ॥

**[2]शोकनिष्पन्नबाष्पाम्बुर्लक्ष्मणोऽप्यब्रवीच्छनैः ।**
**हालक्ष्मणेतिशब्दान्मां देवी गच्छेत्यचोदयत् ॥ ५ ॥**

**(भा.दी.) शोके**ति । शोकेन निष्पन्नं जातं बाष्पाम्बु अश्रुजलं यस्य स तथोक्तः लक्ष्मणोऽपि, हा लक्ष्मण इति यः शब्दस्तस्मात्, ल्यब्लोपनिमित्ता पञ्चमी, हा लक्ष्मणेति शब्दमाश्रुत्येत्यर्थः, देवी मां गच्छ इति अचोदयत् । चुद प्रेरणे लङ् । इति श्रीरामं प्रति शनैः अब्रवीत् ॥ ५ ॥

**(सं.चं.)** हालक्ष्मणेत्याक्रन्दनरूपाच्छब्दान्निमित्तादित्येकं पदम् । शब्दं श्रुत्वा वा ॥ ५ ॥

**पालकस्त्रिदशानां च देवि देवो[3] न संशयः ।**
**न तस्य व्यसनं शङ्क्यं मयेत्युक्तेऽप्युवाच सा ॥ ६ ॥**

---

१. **'नाटयामास केशवः'** इति, **'नटयामास केवलम्'** इति च । २. **'शोकान्निष्पन्न–'** ३. **'देवि रामो न'**

**(भा.दी.) पालक** इति । हे देवि सीते, देवः श्रीरामः त्रिदशानां देवानां च पालकः रक्षकः, अत्र संशयः न, तस्य एतादृशस्य श्रीरामस्य व्यसनमापत् शङ्क्यं न, इति वचसि मया उक्ते सत्यपि सा उवाच ॥ ६ ॥

**(सं.चं.)** व्यसनं किञ्चिदशुभमनिष्टं वा न शङ्क्यम्, शङ्कितुमशक्यम् । इति मयोक्तेऽपि मद्वचसि अजात-विस्रम्भेव सा कठोरमुवाच ॥ ६ ॥

**पाप ते पापरूपत्वान्मानसं मयि सङ्गतम् ।**
**तस्मादुपेक्षसे राममित्युक्तोऽहं विमोहितः ॥ ७ ॥**

**(भा.दी.) पापे**ति । हे पाप, लक्ष्मण, पापं रूपं स्वभावो यस्य स तथा तस्य भावस्तत्त्वं तस्मात्, ते मानसं मयि सङ्गतं संलग्नम्, तस्मात् श्रीरामं उपेक्षसे, तद्विचारे उपेक्षां करोषि, इति उक्तः अहं विमोहितः मूढः अस्मि ॥ ७ ॥

**(सं.चं.)** पापमेव रूपयति चिन्तयतीति पापरूपं मानसम् । पापरूपो वा लक्ष्मणः । विमोहितः किङ्कर्तव्यमूढः कान्दिशीकः सञ्जातः ॥ ७ ॥

**तेन वाक्यशरेणाऽहं विद्धो मृगइवाऽद्रुतः[१] ।**
**इत्युक्त्वा विरुरोदोच्चैर्म्मुक्तकण्ठोऽथ लक्ष्मणः ॥ ८ ॥**

**(भा.दी.) तेने**ति । अथ तेन सीताभिहितेन वाक्यमेव शरस्तेन विद्धः अहं मृगइव आद्रुतः अस्मि । लक्ष्मणः इति उक्त्वा, मुक्तो विभक्तः कण्ठो यस्य स तथा सन्, उच्चैः विरुरोद ॥ ८ ॥

**(सं.चं.)** आद्रुतः दुःखेन द्रवीभूतः, यथा मृगो भयेन रुधिरेण वाऽऽद्रुतः, धावन्निहाऽगतश्च । मुक्तः अनियन्त्रितः कण्ठनादो यस्य । विरुरोद विविधं विलपन् रुरोद ॥ ८ ॥

**सर्वभूतानि पप्रच्छ सर्वत्र विचिकाय च ।**
**सर्वभूतान्तरः[२] सीतां सर्वविच्चापि मूढवत्[३] ॥ ९ ॥**

१. **'मृगइवाऽहतः'** २. **'सर्वभूतान्तराम्'**

३. **'सर्वविच्च विडम्बयन्'** इति, **'सर्वविच्च विमूढवत्'** इति च ।

**(भा.दी.) सर्वे**ति । सर्वे भूताः[१] प्राणिनस्तेषामन्तर अन्तर्यामी श्रीरामः, सर्वं वेत्तीति सर्वविच्च, तथाऽपि मूढवत्, सर्वाणि यानि भूतानि तानि पप्रच्छ । सीता त्वया दृष्टा किमित्यादिरूपेण विचारितवान् । सर्वत्र देशे विचिकाय च मार्गयामास च । चिञ् चयने लिट् ॥ ९ ॥

**(सं.चं.)** सर्वभूतानि सीतां पप्रच्छ । द्विकर्मकः प्रच्छिः । अशोककदम्बबिल्वादीन् वृक्षानपि । गिरिनदी-तटाकादीनपि । हरिणगजशार्दूलादीन् वन्यमृगानपि । 'खादौ जन्तौ च भूतं क्ली' इति यादवप्रकाशः । यद्यपि सर्वभूतानामन्तः स्थित्वा रमणकृत् सर्वविच्च, अथापि मूढवदज्ञइव पप्रच्छ विचिकाय च । चिञ् चयने । 'विभाषा चेः' (अ.सू.७.३.५८) इति स्मरणात् लिटि विभाषा कवर्गादेशः । चिकाय चिचाय । कुत इयं पिपृच्छिषा विचिकीषा च? । असुराणां मोहाय, सतां शिक्षायै, आनन्दाय, क्वचिन्मोहाय च ॥ ९ ॥

**विरुरोद विचुक्रोश विललाप पुनःपुनः ।**
**हा सीते क्वासि हन्तेति धूतदुःखोऽपि दुःखिवत् ॥ १० ॥**

**(भा.दी.) विरुरोदे**ति । श्रीरामः धूतं निरस्तं दुःखं यस्मात् स तथाऽपि, दुःखमस्यास्तीति दुःखी तद्वत्, विरुरोद, विचुक्रोश, हे सीते, क्व गताऽसीत्यादिरूपेण उच्चैराह्वानं कृतवान् । क्रुश आह्वाने रोदने च लिट् । पुनःपुनः हा सीते त्वं क्व कुत्र असि हन्त इति विललाप ॥ १० ॥

**(सं.चं.)** 'क्व नु लक्ष्मण वैदेही कं वा देशमितो गता । केनाऽहृता वा सौमित्रे भक्षिता केन वा प्रिया' (६१.३) इत्यादि विलपन् रुरोद अश्रूणि वर्तयामास । रुदिर् अश्रुविमोचने । 'हा सीते, हा जानकि, हा प्रिये' इति विविधं चुक्रोश । नामग्राहं रुरोद । क्रुश आह्वाने रोदने च । हा सीते, क्वासि, हन्त कष्टात् कष्टतरमापतितमिति विललाप परिदेवयामास । न ममेति नमस्कारः । अहं तवेति हन्तकारः ॥ १० ॥

**श्रान्तवत् कामिवदपि स जिघत्सुपिपासुवत्[२] ।**
**[३]निर्द्वन्द्वदुःखोऽप्यद्वन्द्वश्चेष्टते स्मातिरुष्टवत्[४] ॥ ११ ॥**

**(भा.दी.) श्रान्तवदि**ति । न विद्यते द्वन्द्वं स्वसदृशं वस्तु यस्य स तथोक्तः सः श्रीरामः, द्वन्द्वात् शीतोष्णादेर्जातं दुःखं द्वन्द्वदुःखम्, निर्गतं द्वन्द्वदुःखं यस्मात् सः, तथाऽपि श्रान्तवत् कामिवदपि,

---

१. **'सर्वाणि भूतानि'** इति वक्तुमुचितम् । ३ . **'सञ्जिघत्सुपिपासुवत्'**

३. **'विधूतदुःखोऽप्यद्वन्द्वश्चेष्टते'** । **'न विद्यन्ते द्वन्द्वानि शीतोष्णसुखदुःखलाभालाभजयाजयरूपाणि यस्य सः अद्वन्द्वः । असदृश इति वा । विधूतदुःखः निरस्तदुःखः'** इति का.श्री. । **'निर्धूतदुःखोऽप्यद्वन्द्व–'** इति क्वचित् । ४. **'स्मापि रुष्टवत्'**

अत्तुमिच्छति जिघत्सति, जिघत्सतीति जिघत्सुः सः, पातुमिच्छति पिपासति, पिपासतीति पिपासुः स च तद्वत्, अतिरुष्टवत् अतिक्रुद्धवच्च, चेष्टते स्म स्वावस्थां व्यदर्शयत् किल । चेष्ट चेष्टायां लट् ॥ ११ ॥

**(सं.चं.)** द्वन्द्वदुःखात् निष्क्रान्तः निर्द्वन्द्वदुःखः । जिघत्सुवत् पिपासुवत् । क्वचिदतिरुष्टवत् । 'क्रुद्धो रामः समुद्रान्तां कम्पयन्निव मेदिनीम्' (६७.१३) इत्यादि । तदपि लीलाविडम्बनमेवेत्याह– चेष्टते स्मेति ॥११॥

**रजस्तमोमयैर्भावैः शोकाद्यैः प्रकृतेः परः ।**
**अस्पृष्टस्तत्र विस्पष्टं नैकं मानं विचक्षते[1] ॥ १२ ॥**

**(भा.दी.)** ननु मानुषशरीरसम्बन्धाच्छरीरे चाऽधिकं श्रमादिकं स्वाभाविकं किन्न स्यादित्यत आह– **रज** इति । प्रकृतेः बन्धकजडप्रकृतेः परो विलक्षणः, तत्सम्बन्धरहित इत्यर्थः, श्रीरामः, रजो रजोगुणः तच्च, तमस्तमोगुणः तच्च, तयोर्विकारा रजस्तमोमयाः तैः, शोक आद्यो येषां ते तथा तैः, भावैः श्रमकाम-शयनेच्छापानेष्छादुःखादिभिः, अस्पृष्टः अनाद्यनन्तकालेऽपि सम्बन्धरहितः । तथा च प्रकृतिविलक्षणत्वेन प्राकृतशरीराभावात् शरीरोपाधिकं च तत्र नाऽशङ्कितुमर्हमिति भावः । अत्र किं प्रमाणमित्यत आह– तत्रेति । तत्र श्रीरामस्य दुःखाज्ञानादिराहित्ये नैकं बहु मानं प्रमाणं विस्पष्टं यथा भवति तथा चक्षते आचक्षते । चक्षिञ् व्यक्तायां वाचि लट् ॥ १२ ॥

**(सं.चं.)** शोकाद्यैर्भावैरस्पृष्टः । यतः प्रकृतेः परः । 'आदित्यवर्णं तमसः परस्तात्' इति । अत्र विषये नैकमनेकं मानं विज्ञा विचक्षते । नैकमपि मानं विरुद्धं चक्षते ॥ १२ ॥

**सान्त्वयामास किल तं लक्ष्मणः शोककोपयोः ।**
**यत्पादपांसु संस्मृत्य[2] द्वन्द्वं च्छिन्दन्ति योगिनः ॥ १३ ॥**

**(भा.दी.)** **सान्त्वेति** । योगिनः सनकादयः, यस्य श्रीरामस्य यौ पादौ तयोः पांसवस्तेषां संस्मृतिस्तया, द्वन्द्वं शीतोष्णक्षुत्पिपासादिद्वन्द्वम्, तत् च्छिन्दन्ति नाशयन्ति । छिदिर् द्वैधीभावे लट् । तं श्रीरामं लक्ष्मणः, शोकश्च कोपश्च तौ तयोः सतोः, सान्त्वयामास किल शमयामास किल । अतो लक्ष्मणसान्त्ववचसा शोकादिकं गतमित्येतद् विडम्बनमात्रमिति भावः ॥ १३ ॥

१. **'मानं प्रचक्षते'**

२. **'यत्पादपांसुसंस्मृत्या'** इति वि.ती.पाठः ।

**(सं.चं.)** शोकस्थाने कोपस्थाने च तं रामं लक्ष्मणः सान्त्वयामास किल । किलेत्यलीकोक्तौ ॥ १३ ॥

**एतैर्दोषैः समं रामं मन्वाना मन्दचेतसः ।**
**आपदं स्म प्रपद्यन्ते सगरक्षीरपायिवत्[१] ॥ १४ ॥**

**(भा.दी.)** **एतैरि**ति । एतैः तदानीन्तनाज्ञजनप्रतीतैः, क्लेशादयो ये दोषास्तैः, समं सह श्रीरामं मन्वानाः जानन्तः, मन्दं चेतो येषां ते तथा, मिथ्याज्ञानिन इत्यर्थः, पुरुषाः, गरेण विषेण सहितं सगरं, तच्च तत् क्षीरं च तत् पातुं शीलमस्यास्तीति[२] तथोक्तः तद्वत्, अन्धन्तमःप्राप्तिलक्षणामापदं प्रपद्यन्ते स्म । पद गतौ लट् । क्लेशादिदोषसाहित्येन श्रीरामस्य यन्माहात्म्यज्ञानं तदपि नित्यनरकाद्यनिष्टसाधनमेव । नतु मोक्ष-साधनमिति भावः ॥ १४ ॥

**(सं.चं.)** दोषैः समम्, रामं दोषसहितं मन्वाना इत्यर्थः । मन्दचेतसः अल्पबुद्धयः बालिशाः । दोषैः समं रामगुणचिन्तनं गरेण समं क्षीरपानमिव ॥ १४–५ ॥

**स्वच्छं येऽनुभवन्तीमं[३] रामं दोषान् विहाय तान् ।**
**त्यक्त्वा नीरं यथा क्षीरं हंसास्ते सम्पदां पदम्[४] ॥ १५ ॥**

**(भा.दी.)** **स्वच्छमि**ति । ये पुरुषाः, तान् अज्ञप्रतीतान् दोषान् विहाय, स्वच्छं निर्मलं निर्दोषम्, इमं श्रीरामम्, हंसाः हंसपक्षिणः, नीरं जलम्, तत् त्यक्त्वा क्षीरं पयस्तत् यथा तथा अनुभवन्ति विजानते, ते पुरुषाः, सम्पदो धर्मादिपुरुषार्थाः, तासां पदं आश्रयभूताः । दोषलेशराहित्येन श्रीराममाहात्म्यज्ञानं मोक्षादिपुरुषार्थसाधनमिति भावः ॥ १५ ॥

**एवं बभौ सदसतां विवेकाय स राघवः ।**
**रजतानां च शुक्तीनां विवेकायेव पावकः ॥ १६ ॥**

---

१. **'सगरक्षीरपायिनो यथा आपदं मरणं प्रपद्यन्ते, स्म प्रत्यक्षसिद्धमेतत्, तथा ते सदोषं रामं मन्वानाः आपदं नरकाद्यनर्थं प्रपद्यन्ते प्राप्नुवन्ति । स्म श्रुतिस्मृतिसिद्धमेतत्'** इति का.श्री. ।

२. **'शीलमेषामस्तीति तथोक्ताः'** इति युक्तः पाठः ।

३. **'स्वच्छा येऽनुभवन्तीमम्'** इति, **'स्वच्छं येऽनुवदन्तीमम्'** इति च क्वचित् ।

४. **'तथा ये हंसाः निर्मलचित्ताः....ते पुरुषाः सम्पदां मोक्षादिपुरुषार्थानां पदं स्थानभूताः'** इति का.श्री. ।

**(भा.दी.)** स्वतन्त्रः श्रीरामो लोकानुकरणं च किमर्थं चकारेत्यत आह– **एवमि**ति । सः राघवः, रजतानि रूप्याणि तेषाम्, शुक्तीनाञ्च, इदं रजतमियं शुक्तिरिति यो विवेकः विवेचनं तस्मै पावकइव । अग्निसम्बन्धे हि स्फुटं तद्विवेचनं भवति । सन्तश्च असन्तश्च तेषां विवेकाय, लौकिकरीत्या नटने स्वेन कृते सत्यपि ये स्वस्मिन्निर्दोषत्वज्ञानिनस्ते मोक्षयोग्यजीवाः, ये च दोषीति ज्ञानिनस्ते तमोयोग्याः इति स्वभक्तानां विवेचनाय तथा नटनं चकारेति भावः । एवमुक्तरीत्या बभौ । भा दीप्तौ लिट् ॥ १६ ॥

**(सं.चं.)** एवमात्मानं दर्शयन् बभौ । नेदं नटनम्, किन्तु सत्यमिति विभ्रम्य ये दोषैः समं रामं चिन्तयन्ति, असन्तस्ते, सन्तोऽन्य इति । पावके निहितं रजतं हि द्रवति । न शुक्तिर्द्रवति ॥ १६–७ ॥

**सञ्चरन्नञ्चनीयाङ्घ्रिर्विचिन्वानइव प्रियाम् ।**
**जनस्थानवनप्रान्ते[1] जटायुषमवैक्षत ॥ १७ ॥**

**(भा.दी.)** **सञ्चरन्नि**ति । प्रियां भार्यां विचिन्वानइव मार्गमाणइव सञ्चरन्, अञ्चनीयौ ब्रह्मादिपूज्यौ अङ्घ्री यस्य स तथा श्रीरामः, जनस्थानस्य दण्डकारण्यस्य यद् वनं तस्य यत् प्रान्तं समीपं तस्मिन्, जटायुषं अवैक्षत ॥ १७ ॥

**छिन्नपक्षपदं दृष्ट्वा पतितं पर्वतोपमम् ।**
**सीतार्थेऽथ[2] ययौ तस्मिन् करुणां करुणाकरः ॥ १८ ॥**

**(भा.दी.)** **छिन्ने**ति । अथ करुणाकरः श्रीरामः, सीताया अर्थः प्रयोजनं तस्मिन्, तादर्थ्ये सप्तमी, पक्षौ च पदे च पक्षपदानि, च्छिन्नानि तानि यस्य स तथा तम्, पतितम्, पर्वतस्य उपमा यस्य स तथा तम्, दृष्ट्वा तस्मिन् करुणां ययौ ॥ १८ ॥

**(सं.चं.)** आदौ पक्षिरूपोऽयं सीताहन्ता राक्षस इति तस्मिन् क्रुद्ध इव नाटयन्, अथ जटायुमुखादेव सीता-वार्ताश्रवणानन्तरं समधिगततथ्य इव तस्मिन् जटायुषि करुणां ययौ कृपां प्राप, चकारेत्येतत् ॥ १८–१९ ॥

**आर्त्तो वार्त्तां विशालाक्ष्या निवेद्य जगदीशितुः ।**
**चरणाम्बुरुहं दृष्ट्वा मरणं प्राप पक्षिराट् ॥ १९ ॥**

१. 'जनस्थाने वनप्रान्ते' २. 'सीतार्थे प्रययौ'

**(भा.दी.) आर्त** इति। आर्तः पक्षिणां राट् राजा जटायुः, विशाले अक्षिणी यस्याः सा तथा, तस्याः सीतायाः वार्तां रावणेन नीतेत्यादिवार्ताम्, निवेद्य विज्ञाप्य, जगतामीशिता स्वामी, तस्य श्रीरामस्य चरणौ अम्बुरुहमिव (तत्), दृष्ट्वा मरणं तत् प्राप ॥ १९ ॥

**भक्ताय स्वगतिं[1] दत्वा तस्मै तस्य कळेबरम् ।**
**संस्कारयामास[2] विभुर्लक्ष्मणेन यथाविधि ॥ २० ॥**

**(भा.दी.) भक्तायेति** । विभुः श्रीरामः, भक्ताय तस्मै जटायुषे स्वर्गतिं दत्वा, तस्य कळेबरं शरीरम्, तत् लक्ष्मणेन विधिमनतिक्रम्य यथाविधि, संस्कारयामास दहनादिसंस्कारं कारितवान् ॥ २० ॥

**(सं.चं.)** स्वगतिं दत्वा । 'मृतं तमदहत् स्वगतिं तथाऽदात्' (५.४१) इति हि निर्णये ॥ २०–१ ॥

**गत्वा गोदावरीं वारि दत्वा तस्मै पतत्रिणे ।**
**जनस्थाने निशां नीत्वा पश्चिमां जग्मतुर्दिशम् ॥ २१ ॥**

**(भा.दी.) गत्वेति** । तौ रामलक्ष्मणौ गोदावरीं गत्वा, तस्मै पतत्रिणे वारि दत्वा, तां निशां जनस्थानं दण्डकारण्यम्, तस्मिन्नीत्वा पश्चिमां दिशं जग्मतुः ॥ २१ ॥

**तावतीत्याथ गच्छन्तौ गहनानि बहून्यपि ।**
**अपश्यतां कुक्षिगास्यं कवन्धं नाम राक्षसम् ॥ २२ ॥**

**(भा.दी.) ताविति** । अथ बहून्यपि गहनानि अतीत्य गच्छन्तौ तौ, कुक्षिं गच्छतीति कुक्षिगम्, तादृशमास्यं मुखं यस्य स तथा तम्, अत्यन्तलीनमुखमित्यर्थः, कवन्धं नाम कवन्ध इति प्रसिद्धं राक्षसं अपश्यताम् ॥२२॥

**(सं.चं.)** गहनानि वनानि । कवन्धं नाम । 'प्राप्तः करौ स सहसाऽथ कवन्धनाम्नः'(५.४२) इति हि निर्णये ॥ २२ ॥

**योजनायतबाहुभ्यां सिंहव्याळमृगान् बहून् ।**
**आकृष्य निक्षिपन्नास्ये राघवौ चाग्रहीदयम्[3] ॥ २३ ॥**

---

१. **'स्वर्गतिं दत्वा'** इति वि.ती.पाठः कोशेषु सर्वत्र।

२. **'सम्पर्युपेभ्यः करोतौ भूषणे'** (अ.सू.६.१.१३७) **इति सम्पूर्वकस्य कृञः सुडागमो वा, संस्कारशब्दात्- तत्करोति तदाचष्ट इति णिचि सति, 'कासुप्रत्ययात्...' इत्यापि सति सुब्धातुर्वा'** इति का.श्री।

३. **'राघवावग्रहीदयम्'** इति वि.ती.पाठः।

**(भा.दी.) योजने**ति । योजनमायतौ विशालौ बाहू ताभ्यां बहून् सिंहाश्च, व्याळाश्च गजाश्च, (मृगाश्च) तान् आकृष्य आस्यं मुखं तस्मिन् निक्षिपन् अयं कवन्धः राघवौ अग्रहीत् । ग्रह उपादाने लुङ् ॥ २३ ॥

**(सं.चं.)** योजनायतबाहुभ्याम् । 'भक्षयन्तं महाघोरमृक्षसिंहमृगद्विपान् । घोरौ भुजौ विकुर्वाणमुभौ योजन-मायतौ' (६९.३१) इति च । व्याळान् व्याघ्रादीन् । 'हिंस्रो व्याघ्रादिको व्याळः' इति यादवप्रकाशः । ननु सिंहोऽपि व्याळः । सत्यं सिंहोऽपि व्याळः । अथापि प्राधान्यात् पृथग् ग्रहणम् । 'सर्पो द्विरशनो व्यालः' इत्यभिधानाद् व्याळाः सर्पा इत्येके । व्याळा दुष्टगजा उच्यन्ते । अत्र गजसामान्यग्रहणमित्यन्ये । मृगाः अजिनयोनयः कृष्णसाराद्याः । आदिना श्वापदभिन्नाः हरिणजातिभिन्नाः शशमहिषादयः पक्षिगणाश्च । 'भक्षयन्तं महाघोरानृक्षसिंहमृगद्विपान्' (६९.३१) इति, 'कराभ्यां विविधान् गृह्य ऋक्षान् पक्षिगणान् मृगान्' (३२) इति च ॥ २३ ॥

**दक्षिणो दक्षिणं बाहुमक्षिणोत् खड्गधारया ।**
**रामो रामानुजश्चास्य[१] वामो वाममखण्डयत् ॥ २४ ॥**

**(भा.दी.) दक्षिण** इति । दक्षिणः समर्थः श्रीरामः, दक्षिणः सव्येतरः, तं बाहुं खड्गधारया अक्षिणोत् अखण्डयत् । क्षिणु हिंसायां लङ् । वामः चतुरः, तस्य शत्रुर्वा । 'वामो वल्गुप्रतीपयोः' इत्यमरः । रामानुजः लक्ष्मणश्च अस्य कवन्धस्य, वामो दक्षिणेतरो यो बाहुः, तं अखण्डयत् । खडि भेदे लङ् ॥ २४ ॥

**(सं.चं.)** दक्षिणो दक्षिणभागगतः । वामो वामभागगतः ॥ २४ ॥

**आ मूलतः कृत्तहस्तो रक्तो रुधिरधारया ।**
**पतितः परिपप्रच्छ वीराग्र्यौ कौ युवामिति ॥ २५ ॥**

**(भा.दी.) आमूलत** इति । मूलतः बाहुमूलादारभ्य आमूलतः कृत्तौ हस्तौ यस्य स तथा, रुधिरधारया रक्तः, पतितः कवन्धः, वीरेषु अग्र्यौ श्रेष्ठौ युवां कौ इति पप्रच्छ ॥ २५ ॥

**(सं.चं.)** पतितः। 'स पपात महाबाहुश्छिन्नबाहुर्महास्वनः'(७०.१०)इति च । परिचयं पप्रच्छ ॥२५-६॥

**सौमित्रिस्तमुवाचात्र[२] रामो दाशरथिर्हरिः ।**
**अयमस्यानुजश्चाहं को वा त्वं कथ्यतामिति ॥ २६ ॥**

---

१. 'रामानुजस्तस्य' २. '–स्तमुवाचाथ'

**(भा.दी.) सौमित्रिरि**ति । अत्र आवयोर्मध्ये अयं दशरथस्यापत्यं पुमान् दाशरथिः रामः रामाभिधः हरिः श्रीनारायणः । अहं च अस्य अनुजः । त्वं को वा कथ्यताम् । कथ वाक्यप्रबन्धे लोट् । इति सौमित्रिः तं कवन्धाख्यराक्षसमुवाच ॥ २६ ॥

**कवन्धः प्रत्युवाचाथ धन्योऽस्मि भवदीक्षया ।**
**नमो राम जगन्नाथ[1] शापमोक्षोऽयमागतः ॥ २७ ॥**

**(भा.दी.) कवन्ध** इति । अथ, अहं भवतोः ईक्षया दर्शनेन धन्यः अस्मि । हे राम तुभ्यं नमः अस्तु । वां भवद्भ्यां शापमोक्षः आगतः । इति कवन्धः प्रत्युवाच ॥ २७ ॥

**(सं.चं.)** भवदीक्षया तव दर्शनेन धन्योऽस्मि । स्थूलशिरसः शापस्य मोक्षकालोऽयमागतः ॥ २७ ॥

**दनुर्नामास्मि[2] गन्धर्वः शापाद् रक्षस्त्वमागतः ।**
**अवध्यो ब्रह्मवरतो वज्रपातेन कुञ्चितः ॥ २८ ॥**

**(भा.दी.) दनुरि**ति । स्थूलशिरा इति प्रसिद्धेन ऋषिणा दत्तो यः शापस्तस्मात् रक्षसो भावं रक्षस्त्वं आगतः । ब्रह्मणो यो वरस्तस्मादिति ततः अवध्यः । अवध्यत्वं लब्धम्, किमिन्द्रः करिष्यतीति मत्ते मयि इन्द्रेण युद्धसमये वज्रस्य यः पातस्तेन कुञ्चितः वक्रीकृतः, अहं दनुर्नाम दनुरिति प्रसिद्धः गन्धर्वः अस्मि । दनुनामगन्धर्वो हि घोरं रूपं गृहीत्वा मुनीनां धर्षणं चकार । तदा स्थूलशिराः कुपितस्तवैतादृशरूपमेवास्त्विति शशाप । तेन चाभ्यर्थितो मुनिर्यदा श्रीरामस्ते बाहू च्छित्वा दहेत् तदा निजं रूपमवाप्स्यसीति शापमोक्षं ददाविति हि रामायणे प्रसिद्धम् ॥ २८ ॥

**(सं.चं.)** दनुर्नामास्मि गन्धर्वः । सम्प्रति रामायणे तु–'श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण' (७१.७) इति पठ्यते । अपपाठोऽयम् । 'एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः' (७१.२०) इत्युत्तर-वचनविरोधात् । अत एव भवभूतिरपि दनुकवन्ध इत्येवाऽह । अतः–'दनुं त्वं विद्धि लक्ष्मण' इत्येव युक्तः पाठः । अतः साधूक्तम्–'दनुर्नामास्मि' इति । ऋषिशापाद् रक्षस्त्वमागतः प्राप्तः । तथाहि कथा रामायणे– 'सोऽहं रूपमिदं कृत्वा लोकवित्रासनं महत् । ऋषीन् वनगतान् राम त्रासयामि ततस्ततः । ततः स्थूलशिरा नाम महर्षिः कोपितो मया । सञ्चिन्वन् विविधं वन्यं रूपेणानेन धर्षितः । तेनाहमुक्तः प्रेक्ष्यैवं घोरशापाभि-

१. **'नमोऽस्तु राम तुभ्यं वाम्'** इति वि.ती.पाठः स्यात् । **'नमोऽस्तु ते जगन्नाथ'** इति का.श्री. पाठः स्यात् । २. **'दनुनामाऽस्मि'**

धायिना । एतदेव नृशंसं ते रूपमस्तु विगर्हितम् । स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति । अभिशापकृतस्येति तेनेदं भाषितं वचः । यदा छित्वा भुजौ रामस्त्वां दहेद् विजने वने । तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम्' (७१.२–६) इति च । अवध्यो ब्रह्मवरतः । 'अहं तु तपसोग्रेण पितामह-मतोषयम् । दीर्घमायुः स मे प्रादात्–' (७१.८) इति च । वज्रपातेन कुञ्चितः कुण्ठितः सङ्कुचितदेहः । कुञ्च गतिकौटिल्ये द्रव्याल्पत्वे च । 'दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति । इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् । तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा । सक्थिनी चैव मूर्धा च शरीरे सम्प्रवेशितम् । स मया याच्यमानः सन् नाऽनयद् यमसादनम् । पितामहवचः सत्यं तदस्त्विति ममाब्रवीत् । अनाहारः कथं शक्तो भग्नसक्थिशिरोधरः । वज्रेणा-भिहतः कालं सुदीर्घमपि जीवितुम् । एवमुक्तस्तु मे शक्रो बाहू योजन-मायतौ । प्रादादास्यं च मे कुक्षौ तीक्ष्ण-दंष्ट्रमकल्पयत् । सोऽहं भुजाभ्यां दीर्घाभ्यां विकृष्यास्मिन् वने चरान् । सिंहद्विपमृगव्याघ्रान् भक्षयामि समन्ततः । स तु मामब्रवीदिन्द्रो यदा रामः सलक्ष्मणः । च्छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि' (७१.९–१५) इत्यादि च ॥ २८ ॥

**नारायण प्रसीदेति स्वां तनुं विमुमोच सः[१] ।**
**रामाज्ञयाऽथ सौमित्रिस्तद्देहमदहद् बिले ॥ २९ ॥**

**(भा.दी.) नारायणे**ति । हे नारायणस्वरूपिन् श्रीराम, प्रसीद प्रसन्नो भव । षद्लृ विशरणगत्यवसादनेषु लोट् । इति वदन्निति शेषः । स कवन्धः स्वां तनुं विमुमोच । (अथ) सौमित्रिः रामाज्ञया तस्य कवन्धस्य यो देहस्तं बिलं गुहा तस्मिन्नदहत् । दह भस्मीकरणे लङ् ॥ २९ ॥

**(सं.चं.)** बिले निक्षिप्यादहत् ॥ २९ ॥

**[२]दनुः स्वरूपी प्रोवाच राम त्वद्भक्तिमान् कपिः ।**
**सुग्रीवो हनुमद्युक्तः सीतान्वेष्टा भवेदिति ॥ ३० ॥**

**(भा.दी.) दनुरि**ति । दनुः दनुनामा गन्धर्वः स्वरूपी स्वरूपवान् सन्, हे राम, त्वयि भक्तिरस्यास्तीति त्वद्भक्तिमान्, हनुमता युक्तः, सुग्रीवो नाम कपिः, सीतायाः अन्वेष्टा विचारयिता भवेत्, इति प्रोवाच ॥३०॥

**(सं.चं.)** स्वरूपी प्राप्तनिजगन्धर्वरूपः ॥ ३० ॥

---

१. **'तां तनुं प्रमुमोच सः'** इति, **'तां तनुं विमुमोच'** इति च । २ **'दनुस्स्वरूपी'**

**परिक्रम्य प्रणम्याथ दनुर्दनुजसूदनम् ।**
**स्वर्गं ययौ ययौ चेशो दनुनोक्तेन वर्त्मना ॥ ३१ ॥**

**(भा.दी.) परिक्रम्ये**ति । अथ दनुः दनुनामा गन्धर्वः, दनुजान् सूदयतीति तथोक्तस्तं श्रीरामं परिक्रम्य प्रदक्षिणीकृत्य प्रणम्य च स्वर्गः स्वर्गलोकस्तं ययौ । ईशः श्रीरामश्च दनुना उक्तेन वर्त्मना ययौ ॥३१॥

**(सं.चं.)** दनुनोक्तेन वर्त्मना चेशो रामोऽपि ययौ ॥ ३१ ॥

**तौ पम्पाभिमुखौ**[१] **यान्तौ पद्भ्यां प्राचीं दिशं तदा ।**
**नीत्वा निशां शैलपृष्ठे प्रभाते जग्मतुः पुनः ॥ ३२ ॥**

**(भा.दी.) तावि**ति । पम्पां प्रति अभिमुखं मुखं ययोस्तौ तथोक्तौ, पदे पादौ ताभ्यां यान्तौ तौ, प्राचीं पूर्वां दिशं तदा जग्मतुः । शैलस्य पृष्ठमुपरिभागस्तस्मिन् तां निशां नीत्वा, प्रभातः प्रातःकालस्तस्मिन् पुनः जग्मतुः ॥ ३२ ॥

**(सं.चं.)** पम्पाया अभिमुखौ प्राचीं दिशमिति । सम्प्रति रामायणे–'प्रतस्थतुर्दिशं गृह्य प्रतीचीं नृवरात्मजौ' (७४.१) इति पठ्यते । 'प्रतस्थतुर्दिशं गृह्य प्राचीं नृपवरात्मजौ' इत्येव साधुः पाठ इति भाति ॥ ३२ ॥

**मतङ्गस्याऽश्रमं चित्रं मत्तमातङ्गगामिनौ ।**
**पम्पायाः पश्चिमे तीरे वीरौ विविशतुः सुखम्**[२] **॥ ३३ ॥**

**(भा.दी.) मतङ्गस्ये**ति । मत्तो यो मातङ्गस्तद्वद्गन्तुं शीलमनयोरस्तीति तथोक्तौ, वीरौ रामलक्ष्मणौ, पम्पायाः पम्पानद्याः पश्चिमे पश्चिमभागस्थे तीरं तटं तस्मिन् चित्रं मतङ्गस्य मतङ्गनामकमुनेः य आश्रमस्तं सुखं यथा भवति तथा विविशतुः ॥ ३३ ॥

**(सं.चं.)** चित्रं विस्मयावहम् । तथाहि रामायणे–'उत्पलानि च फुल्लानि पङ्कजानि च राघव' (७३.२१), 'नच वै म्लानतां यान्ति न च शीर्यन्ति राघव' (२३) इति, 'ये प्रपेतुर्महीं तूर्णं शरीरात् स्वेदबिन्दवः । तानि जातानि माल्यानि मुनीनां तपसा तदा । स्वेदोबिन्दुसमुत्थानि न विनश्यन्ति राघव' (२४) इति, 'न तत्राऽक्रमितुं नागाः शक्नुवन्ति तमाश्रमम्' (२६) इत्यादि ॥ ३३–६ ॥

१. **'तौ पम्पाभिमुखौ यातौ'** इति, **'–भिमुखं यातौ'** इति च ।
२. **'विविशतुः शुभम्'**

**आलोक्य लोकनाथं तं सानुजं स्वाश्रमागतम्[1] ।**
**शबरी पूजयामास फलमूलैस्तपस्विनी ॥ ३४ ॥**

**(भा.दी.) आलोक्ये**ति । शबरी शबरीनाम्नी तपस्विनी, सानुजम्, स्वस्या य आश्रमस्तमागतम्, लोकनाथं (तं) श्रीरामं आलोक्य, फलानि च मूलानि च तैः पूजयामास । पूज पूजायां लिट् ॥ ३४ ॥

**अपि ते कुशलं भद्रे नियमेषु यमेषु च ।**
**इति पृष्टा भगवता तुष्टा योगिन्यभाषत ॥ ३५ ॥**

**(भा.दी.) अपी**ति । हे भद्रे, ते तव, 'आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवं । प्रीतिः प्रसादो माधुर्यमक्रोधश्च यमा दश' इत्युक्ता ये यमास्तेष्वपि । 'दानमिज्या तपो ध्यानं स्वाध्यायोपस्थनिग्रहौ । व्रतोपवासौ मौनं च स्नानं च नियमा दश' इत्युक्ता नियमास्तेषु च । (अपि) कुशलं क्षेमम्, इति भगवता श्रीरामेण पृष्टा, तुष्टा श्रीरामदर्शनात् तुष्टा, योगिनी भगवति मनोयोगवती, शबरी अभाषत ॥ ३५ ॥

**पद्मनाभ भवत्पादपद्मसद्ममनोळिनाम् ।**
**मुनीन्द्राणां प्रसादान्मे कुशलं कृपया तव[2] ॥ ३६ ॥**

**(भा.दी.)** पद्मेति । पद्मं नाभौ यस्य स तत्सम्बुद्धिः, श्रीराम, तव कृपया सञ्जातात्, भवतः यौ पादौ तावेव पद्मे ते एव सद्म गृहं तस्मिन् मन एवाळी भ्रमरः स येषां ते तथोक्ताः तेषां मुनीन्द्राणां प्रसादोऽनुग्रहस्तस्मात् कुशलं सर्वविषयेऽपि क्षेमम् ॥ ३६ ॥

**(सं.चं.)** भवतः पादौ पद्मेइव । तत्र कृतसद्मानि मुनीनां मनांसि अळिनो भ्रमराइव । 'भृङ्गे भ्रमरभृङ्गाणमधुलिण्मधुपालिनः' इति यादवः ॥ ३६ ॥

**मतङ्गवाक्यमुकुरे मतं[3] रूपमिदं तव ।**
**[4]अपरोक्षमवेक्षेऽहं परं ब्रह्म गुणार्णवम् ॥ ३७ ॥**

**(भा.दी.) मतङ्गे**ति । मतङ्गस्य मतङ्गनामकमुनेर्यद्वाक्यं तदेव मुकुरो दर्पणस्तस्मिन्, मतङ्गवचनेनेत्यर्थः, मतं परोक्षतः ज्ञातम्, परं सर्वविलक्षणम्, ब्रह्म ब्रह्मात्मकम्, गुणैरर्णव इव तत् तव इदं रूपं अपरोक्षमिव प्रत्यक्षमिव

---

१. **'स्वाश्रमं गतम्'**
२. **'मुनीन्द्राणां प्रसादात् अनुग्रहादुत्पन्नया तव कृपया मम कुशलम्'** इति का.श्री. ।
३. **'–मुकुरे गतम्'**
४. **'अपरोमिवेक्षेऽहं'** इति वि.ती.पाठः ।

ईक्षे । ईक्ष दर्शनाङ्कनयोर्लट् । यथा सर्वज्ञगुरूपदेशेन स्वयोग्यगुणविशिष्टभगवद्ध्याने कृते भगवदपरोक्षज्ञानं भवति तथा श्रीरामरूपी हरिरिममाश्रममायास्यतीति मतङ्गोपदेशात् अपरोक्षज्ञानमिव तव दर्शनं जातमिति भावः ॥ ३७ ॥

**(सं.चं.)** मतङ्गमुनेर्वाक्यमेव मुकुरो दर्पणः । तत्र मतं मननेन प्रतिफलितं तव रूपम् ॥ ३७–८ ॥

**अनुज्ञां देहि[१] यज्ञेश प्रसीदेत्यभिधाय सा ।**
**पश्यन्तीशं विवेशाथ ज्वलितं ज्वलनं सती ॥ ३८ ॥**

**(भा.दी.) अनुज्ञामि**ति । हे यज्ञानां फलदातृत्वेन ईश श्रीराम, परलोकगमनार्थमनुज्ञां देहि । प्रसीद मह्यं प्रसन्नो भव। इति अभिधाय सती निर्दुष्टा सा शबरी, ईशं श्रीरामं पश्यन्ती सती, (अथ) ज्वलितं ज्वलनमग्निं विवेश ॥ ३८ ॥

**अवैदिक्यै शबर्य्यै च दयालुः स्वगतिं ददौ[२] ।**
**तस्या भक्त्या भृशं प्रीतो भक्तिर्हि भवमोचिनी[३] ॥ ३९ ॥**

**(भा.दी.) अवैदिक्या** इति । तस्याः भक्त्या भृशं प्रीतः, दयालुः दयाशीलः श्रीरामः, हि यस्मात् भक्तिः हरिभक्तिः, भवं संसारं मोचयितुं शीलमस्या अस्तीति तथा, वैदिकी न भवतीत्यवैदिकी तस्यै, नीचजातित्वेन वेदवाक्यश्रवणानर्हाया इत्यर्थः, शबर्यै (च) स्वगतिं ददौ ॥ ३९ ॥

**(सं.चं.)** अवैदिक्यै । नहि वैदिकम्मन्याः सर्वे मुक्तिभाजः । वेदोक्तेन पथा यथावदुपासना हि मुक्ति-साधनी । तदभावे न वेदा मुक्तिं गमयन्ति । नापि केवलं ब्राह्मणयोनौ जन्म । 'नाहं वेदैर्न तपसा–' इत्यादि भगवद्वचनम् । 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन' इत्याद्या च श्रुतिः । 'विप्राद् द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम् । मन्ये तदर्पितमनोवचनात्मगेहप्राणः पुनाति सकलं नतु भूरिमानः' इति च भागवते प्रह्लादवचनम् ॥ ३९ ॥

**सौमित्रिणा सङ्कथयन् गच्छन्नच्छां स ऐक्षत ।**
**दासीमिवाच्छाम्बुवहां[४] पम्पां पङ्कजमालिनीम् ॥ ४० ॥**

---

१. **'अग्निं प्रवेष्टुमनुज्ञां देहि'** इति का.श्री. ।
२. **'स्वां गतिं ददौ'**
३. **'भवमोचनी'**
४. **'–मिवाच्छाम्बुवाहाम्'**

**(भा.दी.) सौमित्रिणे**ति । सौमित्रिणा सङ्कथयन् सम्भाषणं कुर्वन्, शबर्याश्रमाद् गच्छन्, सः श्रीरामः, अच्छं निर्मलं यदम्बु तद्वहतीति तथोक्तां ताम्, पङ्कजानां माला पङ्क्तिरस्यामस्तीति तथोक्ता ताम्, पम्पां अच्छां निर्मलां दासीमिव ऐक्षत ॥ ४० ॥

**(सं.चं.)** पम्पां नाम सरसीम् । दासी च अच्छा, पङ्कजमालिनी, भर्तृशुश्रूषार्थं कलशेनाच्छाम्बुवहा च ॥४०॥

**स्त्रीसङ्गिनामित्थममङ्गलावलिं प्रकाशयन् साधुषु मोहयन् परान् ।**
**नित्यं निजानन्दरसानुभूतिमान् निर्दुःखलेशोऽपि बभौ स दुःखिवत्[१] ॥ ४१ ॥**

**(भा.दी.) स्त्री**ति । नित्यं सर्वदा निजः स्वरूपभूतो य आनन्दरसः ज्ञानानन्दादिसारस्तस्य अनुभूतिरनुभवः सः अस्यास्तीति तथोक्तः, सः श्रीरामः, स्त्रीणां सङ्ग एषामस्तीति स्त्रीसङ्गिनस्तेषाम्, स्त्रैणानामित्यर्थः, इत्थं अमङ्गलानामशुभानामावलिः परम्परा तां साधुषु सज्जनेषु प्रकाशयन् सन्, परान् साधुभ्योऽन्यान् दुर्जनान् मोहयन् सन्, दुःखस्य लेशो दुःखलेशः, न विद्यते दुःखलेशो यस्य सः, तथाऽपि दुःखिवत् बभौ । भा दीप्तौ लिट् । अनेन सज्जनैः स्त्रैणैर्न भाव्यमिति सज्जनशिक्षणं दुर्जनविमोहनं च दुःखिवन्नटनस्य प्रयोजनं दर्शितम् ॥ ४१ ॥

**(सं.चं.)** 'स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार' इति भागवतवचनं स्मरन् वंशस्थेन्द्रवंशाभ्यामुपजात्योपसंहरति– **स्त्रीसङ्गिनामि**ति । तदपि कुतः? साधुशिक्षार्थं दुर्जनमोहार्थं च । शिक्षा हि द्विविधा भवति– एवं प्रवर्तितव्यमिति, एवं न वर्तितव्यमिति । दुर्जनाः शिक्षां विपरीतां गृह्णीयुः । शिक्षामशिक्षां मन्वाना भगवतो दौर्बल्यमिति मन्येरन् ॥ ४१ ॥

**सह निजसहजेन स्वैरमानन्दमूर्त्तिर्व्यलसदनलसोऽसौ तत्र पम्पातटान्ते ।**
**अनुपममनुरागं बिभ्रतीं भक्तमुख्ये हनुमति मतिदूतीं प्रेषयन् रामदेवः ॥ ४२ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्कै सङ्क्षहरामायणे**
**अरण्यकाण्डे षष्ठः सर्ग्गः ॥**

—०—

१. 'सुदुःखिवत्'

**(भा.दी.) सहे**ति । आनन्द एव मूर्तिः शरीरं यस्य स तथोक्तः, अलसो न भवतीत्यनलसः, आलस्यादिदोषरहित इत्यर्थः, असौ श्रीरामदेवः, भक्तेषु मुख्यस्तस्मिन् हनुमति, न विद्यते उपमा यस्य स तथोक्तस्तम्, अनुरागं स्नेहं बिभ्रतीं दधतीं मतिरेव दूती तां प्रेषयन् सन्, दनुवचसा हनुमत्समागमः कदा नु स्यादिति तं संस्मरन्नित्यर्थः, तत्र पम्पाया यत्तटं तस्य अन्तः अन्तिकं तस्मिन्, निजो यः सहजो लक्ष्मणस्तेन सह, स्वैरं यथा भवति तथा व्यलसत् अशोभत । लस श्लेषणक्रीडनयोर्लङ् ॥ ४२ ॥

**इति श्रीविश्वपतितीर्थकृतायां श्रीसङ्क्षहरामायणव्याख्यायां भावार्थदीपिकायामरण्यकाण्डे षष्ठः सर्गः ॥**

—०—

**(सं.चं.)** अथ मालिन्योपसंहरति– सह निजसहजेनेति । मूलरूपेऽपि निजः पर्यङ्कः । अवतारे सहजातोऽनुजः । यद्यप्येकोदरजननं नाम सहजननमत्र न विद्यते । अतः समानाधानकत्वमिह सहजननं विवक्षितम् । स्वैरं यथेच्छं व्यलसत् विजहार । हनुमति मतिदूतीं प्रेषयन् । पम्पातटप्रान्ते वसन् भाविकार्यसाधनाय हनूमन्तं सस्मारेत्यर्थः । हनुमते स्वात्मानं दर्शयामीत्यनुग्रहोन्मुखो बभूवेति यावत् ॥ ४२ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्क्षहरामायणटीकायां सङ्क्षहचन्द्रिकायामरण्यकाण्डे षष्ठसर्गविवरणम् ॥**

## अरण्यकाण्डं समाप्तम् ॥

[आदितः श्लोकाः– १३७३+४२=१४१५]

[अरण्यकाण्डे श्लोकाः– २९१]

# प्रथमः सर्ग्गः

**प्लवङ्गमानां गत आधिराज्यं प्लवङ्गमः केसरिनामधेयः ।**
**मेरावुवासाञ्जनया सुगात्र्या शच्या शचीकान्तइव द्युलोके ॥ १ ॥**

**(भा.दी.)** श्रीरामभक्ताग्रेसरस्य हनुमतोऽवतारादिकं वक्तुं पीठिकामारचयति– **प्लवङ्गमानामित्यादिना** । प्लवङ्गमाः कपयस्तेषाम्, अधिकश्चासौ राजा च अधिराजः, तस्य भावस्तत्त्वम्, अधिराजत्वमित्यर्थः, तत् गतः, केसरीति नामधेयं नाम यस्य स तथोक्तः, प्लवङ्गमः वानरः, शोभनं गात्रं यस्याः सा तथा तया, अञ्जनया अञ्जनाख्यया भार्यया सह, द्यौश्चासौ लोकश्च तस्मिन्, स्वर्गलोक इत्यर्थः, शच्या सह शचीकान्तइव इन्द्र इव, मेरौ मेरुपर्वते उवास ॥ १ ॥

(सं.चं.) वाल्मीकिनोत्तरकाण्डे निरूपितं हनूमच्चरितं प्रसक्तमित्यत्रैव प्रस्तौतीन्द्रवज्रोपेन्द्रवज्राभ्यां सङ्कीर्णेनोपजातिच्छन्दसा– प्लवङ्गमानामिति । यत्र केवलेन्द्रवज्रा, केवला वोपन्द्रवज्रा तत्र वक्ष्यते । मेरुगतानां प्लवङ्गमानामधिराजत्वं स्वामित्वं गतः । अञ्जनया भार्यया सुगात्र्या । यद्यपि 'स्वाङ्गाच्च–' (अ.सू.४.१.५४) इति प्राप्तो ङीष् 'असंयोगोपधात्' इति निवृत्तः । अथापि 'अङ्गगात्रकण्ठेभ्यः' इति वार्तिकेन प्रतिप्रसवाद् रूपद्वयमिष्यते–सुगात्री सुगात्रा ॥ १ ॥

**हन्तुं भरद्वाजमभिद्रवन्तं सिन्धोस्तटे सिन्धुरमुन्मदान्धम् ।**
**अवेक्ष्य दूरादपि तस्य कुम्भे स केसरी केसरिवत् पपात ॥ २ ॥**

**(भा.दी.) हन्तुमि**ति । सः केसरी, सिन्धुः[१] समुद्रस्तस्य तटं तीरं तस्मिन्, भरद्वाजं भरद्वाजनामकमृषिम्, हन्तुं अभिद्रवन्तम्, उत्कृष्टो यो मदस्तेनान्ध इवान्धस्तम्, सिन्धुरं गजम्, दूरं दूरप्रदेशस्तस्मादपि अवेक्ष्य तस्य गजस्य कुम्भः कुम्भस्थलं तस्मिन्, केसरिवत् सिंहवत् पपात ॥ २ ॥

**(सं.चं.)** सिन्धुनद्यास्तटे । सिन्धुरो गजः । उत्सिक्त उत्कटो वा मद उन्मदः । केसरी कपिरपि केसरिवत् सिंहवत् तस्य सिन्धुरस्य कुम्भे पपात ॥ २ ॥

**[२]तं शङ्खपूर्वं शबलं स हत्वा तीर्त्थं मुनीनामभयं चकार ।**
**महर्षिसङ्घः समवाप हर्षं वरं वृणीष्वेति च तं जगाद ॥ ३ ॥**

**(भा.दी.) तमि**ति । सः केसरिनामकः, शङ्ख इति पदं पूर्वं यस्य स तथोक्तस्तं शबलं[३] शबलनामकम्, शङ्खशबलनामकमित्यर्थः, तं गजं हत्वा, मुनीनां यत्तीर्थं तत् न विद्यते भयं यत्र तत् तथा, तच्चकार । महान्तो ये ऋषयस्तेषां सङ्घः हर्षः सन्तोषस्तं समवाप । तं वानरं प्रति वरोऽभीष्टं तं वृणीष्व इति जगाद च ॥३॥

**(सं.चं.)** शङ्खपूर्वं शबलं शङ्खशबलनामकम् । गजरूपं तन्नामकमसुरमित्यर्थः । अत एव केसरी तं जघान । तीर्थं स्नानार्थमवतरणस्थानम् । स्नानघट्टः । 'घट्टोऽवतारस्तीर्थोऽस्त्री' इति यादवप्रकाशः । हर्षं समवाप, ततः वरं वृणीष्वेति च तं केसरिणं जगाद महर्षिसङ्घः ॥ ३ ॥

**यदि प्रसन्ना भगवत्तमा मे सुतं वृणे सर्वगुणाभिरामम् ।**
**तस्मान्न मुख्योऽस्तु विना मुकुन्दमेवं स वव्रेऽथ वरं द्विजेभ्यः॥ ४ ॥**

**(भा.दी.) यदी**ति । अथ सः केसरी, अतिशयेन भगवन्तो भगवत्तमाः, हे पूज्यतमा इत्यर्थः, यूयं यदि मह्यं प्रसन्नाः तर्हि सर्वे ये गुणाः शौर्यादयस्तैरभिरामो मनोहरस्तं सुतं अहं वृणे वरयामि । वृञो लट् । मुकुन्दं श्रीहरिं विना तस्मात् पुत्रादन्यः मुख्यः श्रेष्ठः न अस्तु न भवतु । सः एवं वरं द्विजेभ्यः वव्रे ॥४॥

**(सं.चं.)** भगवत्तमाः पूज्यतमाः महर्षयो यदि मे विषये प्रसन्नाः । तस्मात् भवद्वरलब्धात् सुतादुत्तमः पुमान् मुकुन्दादन्यः कोऽपि नास्तु । रामायणेऽनुक्तेयं कथा । 'तीर्थविघ्नकरं दुष्टगजं हत्वा प्रतोषिताः । भरद्वाजादयो

---

१. **'सिन्धोः'** इति प्रायः सर्वे प्रतनव्याख्यातारः । नैतत् समीचीनमिति भाति । नहि मेरुं परितः समुद्रो भवति । नापि परितो भरद्वाजाश्रमम् । नच गजाः प्रायः समुद्रतीरे चरन्ति । ते गहनेषु गिरिदुर्गेषु चरन्ति । पिपासवो नद्यां विहरन्ति । भरद्वाजादयो मुनयश्च तीर्थयात्रार्थमटवीमटन्तः कस्मिंश्चित् तीर्थावतारे तेन व्याळरूपेण रक्षसा पीडिता इत्यवगम्यते ।

२. **'शङ्खंपूर्वं शबलम् । 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इतिवत्'** इति का.श्री. ।    ३. **'शबळं शबळनामकं शङ्खशबळ-'**

धन्यं पुत्रं केसरिणो ददुः' इति च प्रमाणान्तरं भावप्रकाशिकायाम् । तीर्थयात्रार्थं प्रस्थिता भरद्वाजादयः कस्मिंश्चिन्नदीजलावतारे विघ्नकरं दुष्टगजं हत्वेत्यर्थः ॥ ४ ॥

**ततः कदाचित् कमलायताक्षी स्नाता सुवस्त्राभरणाऽञ्जना सा ।**
**[१]रम्यान्तमाराममुपश्रयन्ती प्राणं प्रधानं ललितं[२] ददर्श ॥ ५ ॥**

**(भा.दी.) तत** इति । कमलवदायते अक्षिणी यस्याः सा तथा, स्नाता कृतर्तुस्नाना, वस्त्राणि च आभरणानि च शोभनानि तानि यस्याः सा तथा, सा केसरिभार्या अञ्जना, कदाचित् रम्यमन्तर्मध्यं यस्य स तथोक्तम्, आरामं उपवनम्, (उपश्रयन्ती) आश्रयन्ती सती, आरामे संस्थितेत्यर्थः, ललितं मनोहरं प्रधानं सर्वजीवश्रेष्ठं प्राणं मुख्यप्राणं ददर्श ॥ ५ ॥

**(सं.चं.)** कमलायताक्षी अञ्जना । 'बहुव्रीहौ सक्थ्यक्ष्णोः–' (अ.सू.५.४.११३) इति षच् । षित्त्वात् स्त्रियां ङीष् 'षिद्गौरादिभ्यश्च' (अ.सू.४.१.४१) इति । मेरौ कश्चन रम्यान्तं रम्यप्रदेशमुपवनमुपश्रयन्ती । भाविकार्यस्य उपपन्नं श्रयणमुपश्रयणम् । ललितं शृङ्गारविलासवन्तम् ॥ ५ ॥

**[३]संस्पर्शनं नस्तव देवि भूत्यै[४] प्रोच्येति बालामतिमात्रलज्जाम्[५] ।**
**श्रीमद्भुजाभ्यां परिरभ्य देवो व्यधत्त गर्भं भुवनप्रगल्भम् ॥ ६ ॥**

**(भा.दी.) समि**ति । देवः वायुः, हे देवि अञ्जने, (नः) तव संस्पर्शनं अङ्गाभिमर्शः तव भूत्यै स्यात् इति प्रोच्य, अतिमात्रा अत्यधिका लज्जा यस्याः सा तथा तां बालां स्त्रियम्, श्रीमन्तौ यौ भुजौ ताभ्यां परिरभ्य आलिङ्ग्य, भुवनेषु प्रगल्भः श्रेष्ठस्तं गर्भं व्यधत्त, गर्भाधानं चक्र इत्यर्थः । धाञो लङ् ॥ ६ ॥

**(सं.चं.)** स्तनोष्ठादेर्दृढस्पर्शनं संस्पर्शनम् । सम्भोगाय स्पर्शनमिति वा । तव नः संस्पर्शनं तव भूत्यै, सर्वलोकस्य च भूत्यै स्यादिति प्रोच्य प्रीत्योदीर्य । बालां मुग्धाम् । अनभिज्ञां सुरतव्यापारलीला-विधीनाम् । 'बालोऽज्ञे' इति ह्यभिदधति । अथापि ग्रहणधारणपटुर्गर्भस्य । यतस्तदात्व एवर्तुस्नाता । प्रायः प्रथममार्तवम् । अत एवानभिज्ञत्वादतिमात्रलज्जाम् । अतिमात्रं लज्जमानाम् । श्रीमद्भ्यां कान्तिम-द्भ्याम् । श्रीरिति भारती चोच्यते । तेन श्रीर्भारती अस्त्याश्लेषकर्मत्वेनानयोरिति श्रीमन्तौ भुजौ । याभ्यां

१. **'रम्या तमाराम–'** । नातिस्वरसः पाठः । २. **'ललिता ददर्श'**
३. **'संस्पर्शनं सम्भोगः तव भूत्यै सम्पदे भविष्यति' इति का.श्री.** । ४. **'नस्तव तन्वि भूत्यै'** ५. **'बालामतिवेललज्जाम्'**

भारतीं परिरेभे ताभ्यां भुजाभ्यामञ्जनां परिरेभे इति तस्या भाग्यातिशयमाह । अञ्जनायां भारतीसन्निधानं च । अत एव तां देवीत्याह । गर्भं व्यधत्त यथा काळ्यां पराशरः । प्रगल्भमनुपमप्रतिभायुक्तम् ॥ ६ ॥

**असूत सूनुं तमसा[१] विनाशं तमञ्जना सज्जनकञ्जबन्धुम् ।**
**[२]अनर्घमाणिक्यमणिप्रकाशं प्राचीव देवं जगदेकदीपम् ॥ ७ ॥**

**(भा.दी.) असूते**ति । अञ्जना तमसामघानां दुःखानामज्ञानानां वा, विनाशयतीति विनाशस्तम्, विनाशकर-मित्यर्थः । 'तमा राहुस्तमोऽघं शुक् स्वरूपेऽधस्तळोऽस्त्रियाम्'[३] इति वैजयन्ती । तमसां विनाशो यस्मात् स तमसां विनाश इत्यलुक्समासो वा । सज्जना एव कञ्जानि पद्मानि तेषां बन्धुम् । न विद्यतेऽर्घो मौल्यं यस्य सोऽनर्घः, स चासौ माणिक्यमणिश्च, तद्वत्प्रकाशो यस्य स तथा तं सूनुम्, जगत् एकतो मुख्यतो दीपयति प्रकाशयतीति जगदेकदीपः तं देवं सूर्यं प्राचीव पूर्वदिगिव असूत । षूङ् प्राणिगर्भविमोचने लङ् । यथा सूर्यस्य भगवदाज्ञाचरणार्थमभ्युदयः तथा हनुमतोऽपि श्रीहरिसेवार्थं प्रादुर्भावमात्रमेव जन्म, नतु गर्भवासजननादिनिमित्तक्लेशसंस्पर्श इति भावः ॥ ७ ॥

**(सं.चं.)** तमसामज्ञानानाम् । सूर्योऽन्धकाराणाम् । सज्जनाः कञ्जानि कमलानीव । तेषामयं बन्धुः सूर्य इव । 'सूर्यदत्तवरः स्वर्णः सुमेरुर्नाम पर्वतः । यत्र राज्यं प्रशास्त्यस्य केसरी नाम वै पिता । तस्य भार्या बभूवेष्टा अञ्जनेति परिश्रुता । जनयामास तस्यां वै वायुरात्मजमुत्तमम्' (उ.कां.३५.१९–२०) इति वाल्मीकिना सङ्क्षिप्योक्तं मूलरामायणाद्यनुसारेण किञ्चिद् विववार पण्डिताचार्यः ॥ ७ ॥

**प्राणात्मके प्राणसुते प्रजाते चूडामणौ भागवतोत्तमानाम् ।**
**ननन्द चेतः सुरसुन्दरीणां गर्भः पपातासुरसुन्दरीणाम् ॥ ८ ॥**

**(भा.दी.) प्राणात्मक** इति । प्राणस्य मुख्यप्राणस्य आत्मकः स्वरूपभूतस्तस्मिन्, भगवतः सम्बन्धिनो भागवताः, तेषु उत्तमाः, तेषां चूडामणौ शिरोरत्ने, श्रेष्ठ इत्यर्थः, प्राणस्य सुते हनुमति प्रजाते सति, सुरसुन्दरीणां देवस्त्रीणां चेतः ननन्द । नदि हर्षे लिट् । असुरसुन्दरीणां गर्भः पपात । पत्ऌ पतने लिट् ॥ ८ ॥

**(सं.चं.)** न केवलं प्राणसुतः । प्राण आत्मा स्वरूपमस्येति प्राणात्मकश्चायम् । आत्मानमेव प्राणः सुषुवे । यथा भीमः । प्रजाते । अयमेव प्रकर्षः यद् गर्भवासेऽपि दुःखादिविरहः । श्रुतिश्चात्र सर्वथाऽन्वर्था

१. **'तपसो विनाशम्'** २. **'अनर्घ्यमाणिक्य–'** ३. **'–तमोऽन्धं शुक्'** इति पार्यासम् । उत्तरार्धं नात्र सङ्गतम् ।

बभूव–'आत्मा वै पुत्रनामाऽसि' इति । भागवतोत्तमानां चूडामणिः शिरोरत्नमिव मूर्धन्यः । सुरसुन्दरीणां न केवलम् । सुराणामपि । सर्वेषामपि सताम् । अञ्जना किल सुरस्त्री प्राणं सुतं सुषुव इति विशेषतः सुरसुन्दरीणामानन्दः । असुरसुन्दरीणां गर्भः पपात । तेन तासां चासुराणां च, अन्ततः सर्वेषामसतां च चेतो दुःखितं बभूव । उत्तरार्धे लाटानुप्रासः ॥ ८ ॥

**सञ्जातमात्रं शिशुमद्भुताङ्गं बुभुक्षितं तं बलिनं विलोक्य ।**
**यावत् फलार्थं[1] जननी जगाम तावत् स बालः सहसोत्पपात ॥ ९ ॥**

**(भा.दी.) समि**ति । केवलं सञ्जातः सञ्जातमात्रस्तम्, अद्भुतमङ्गं शरीरं यस्य स तथा तम्, बलिनं तं शिशुम्, सञ्जाता बुभुक्षा यस्य स बुभुक्षितस्तं[2] विलोक्य, यावत् यदा जननी माताऽञ्जना फलार्थं फलानयनार्थं जगाम, तावत् तदा सः बालः सहसा उत्पपात ऊर्ध्वं जगाम ॥ ९ ॥

**(सं.चं.)** बुभुक्षितं तं बलिनम् । स्वस्तन्यमात्रेण नास्य बुभुक्षा निवर्तेतेति विलोक्य विचार्य । अद्भुताङ्गं युवानमिव प्रबुद्धाङ्गम् । 'फलान्याहर्तुकामा वै निष्क्रान्ता गहने वरा । एष मातुर्वियोगाच्च क्षुधया च भृशार्दितः । रुरोद शिशुरत्यर्थं शिशुः शरवणे यथा । तदोद्यन्तं विवस्वन्तं जपापुष्पोत्करोपमम् । ददर्श फललोभाच्च ह्युत्पपात रविं प्रति' (उ.कां.३५.२१–३) इति च । बुभुक्षितमिति बुभुक्षतेः क्तः, इतज् वा ॥ ९ ॥

**[3]उद्यद्दिनेशं ग्रसितुं प्रयान्तं तत्तेजसा लोहितमाशु राहुम् ।**
**प्रत्युद्ययौ नाम फलं[4] विचिन्वन् निसर्गतो दुष्टजनासहोऽसौ ॥ १० ॥**

**(भा.दी.) उद्यदि**ति । निसर्गादिति निसर्गतः, स्वभावत इत्यर्थः, दुष्टा ये जनास्तान् न सहत इति तथोक्तः, फलं विचिन्वन् विचारयन् असौ हनुमान्, उद्यन् यो दिनेशः सूर्यस्तं ग्रसितुं ग्रासं कर्तुं प्रयान्तम्, तस्य बालसूर्यस्य यत् तेजस्तेन लोहितं रक्तं राहुं आशु प्रत्युद्ययौ नाम अभिजगाम किल । यातेर्लिट् । निसर्गतः दुष्टजनासह इत्यनेन सूर्यमण्डलोपरागार्थमायान्तं राहुं दृष्ट्वा दुष्टजनशिक्षणस्वभावत्वात् तन्निग्रहार्थमेव फलव्याजेन तस्य गमनं नतु फलभ्रान्त्येति सूचितम् ॥ १० ॥

---

१. **'फलार्थे जननी'**

२. **'तदस्य सञ्जातं तारकादिभ्य इतच्'** (अ.सू.५.२.३६) इत्यत्र पठिते तारकादिगणे पिपासाशब्दवद् बुभुक्षाशब्दोऽपि पठनीय इत्याशयः ।

३. **'यस्मिन् दिनेऽञ्जनायां शिशुरुत्पन्नः तस्मिन् दिने सूर्योदयकाले सूर्योपरागः'** इति का.श्री. । चित्रापूर्णिमायां हनुमज्जननमिति तु सम्प्रदायः । कथं पूर्णिमायां सूर्योपरागः? जननात् पञ्चदशे दिने इति तु युक्तम् ।

४. **'नायमलम्'** । **'तत्र सूर्यमण्डले नाथं स्वामिनं विचिन्वन् विचारयन् सन्'** इति का.श्री. । नातिस्वरसं व्याख्यानम् ।

**(सं.चं.)** फलं विचिन्वन् सूर्यतेजसा लोहितं राहुमेव फलं मन्वान इव । प्रत्युद्ययौ नाम । नामेत्यलीके । प्रत्युद्ययौ किल । प्राकाश्ये वा । केवलं तथा प्रकाशयामास । वस्तुतस्तु राहोर्दुष्टस्य निग्रहणं चिकीर्षन्निवेत्याह– निसर्गतो दुष्टजनासह इति । 'यमेव दिवसं ह्येष ग्रहीतुं भास्करं प्लुतः । तमेव दिवसं राहुर्जिघृक्षति दिवाकरम् । अनेन च परामृष्टो राहुः सूर्यरथोपरि । अपक्रान्तस्ततस्त्रस्तो राहुश्चन्द्रार्कमर्दनः' (उ.कां.३५.३१–२) इति च ॥ १० ॥

**तमुत्पतन्तं हरिचक्रकल्पं विलोक्य लोकः [१]सकुतूहलोऽभूत् ।**
**सद्योऽस्य जातस्य सुतेज[२] ईदृग् यूनोऽप्रमेयं हि भविष्यतीति ॥ ११ ॥**

**(भा.दी.) तमि**ति । लोकः अन्तरिक्षचारी जनः, हरेर्यच्चक्रं तस्य कल्पः सदृशः हरिचक्रकल्पस्तम्, उत्पतन्तं तं अञ्जनासुतं विलोक्य, सद्यः जातस्य अस्य तेजः सामर्थ्यं ईदृक् एतादृशम्, यूनः यौवनावस्थां प्राप्तस्य तेजः अप्रमेयं अपरिमितं भविष्यति हि, इति कूतूहलेन सहितः अभूत् ॥ ११ ॥

**(सं.चं.)** हरिचक्रकल्पम् । ईषदसमाप्तं हरिचक्रं यः स हरिचक्रकल्पः । 'ईषदसमाप्तौ कल्पब्-देश्य-देशीयरः' (अ.सू.५.३.६७) इति कल्पप् । हरिचक्रं हि राहोः शिरश्चिच्छेद । सद्योजातस्य जातमात्रस्य ईदृशं सु समीचीनं प्रवृद्धेष्वपि अदृश्यमानं तेजः । प्रवृद्धस्य यूनः पुनरप्रमेयमपरिच्छेद्यं भविष्यतीति । कुतूहलं नाम कीदृशं स्यादिति विस्मयजनितो मनसः सम्भ्रमविशेषः । 'एतस्मिन् प्लवमाने तु शिशुभावे हनूमति । देवदानवयक्षाणां विस्मयः सुमहानभूत् । नाप्येव वेगवान् वायुर्गरुडो न मनस्तथा । यथाऽयं वायुपुत्रस्तु क्रमतेऽम्बरमुत्तमम् । यदि तावच्छिशोरस्य ईदृशो गतिविक्रमः । यौवनं बलमासाद्य कथं वेगो भविष्यति' (उ.कां.३५.२५–७) इति च ॥ ११ ॥

**राहुस्तु[३] शक्रं शरणं जगाम शक्रोऽपि वज्रं शिशवे मुमोच ।**
**अन्याभिसक्ताय नधर्म्मबुद्धिर्म्माद्यन् प्रमाद्येत्[४] सुजनोऽपि नूनम् ॥ १२ ॥**

**(भा.दी.) राहुरि**ति । राहुस्तु शक्रमिन्द्रं शरणमरणं तत् जगाम । मां ग्रहीतुमागच्छतोऽस्मात् पाहीति शरणं जगामेत्यर्थः । शक्रोऽपि, अन्यस्मिन् ऐरावते अभिसक्ताय आसक्ताय, राहुणा इन्द्रनिकटं प्रति गते तत्पृष्ठतो

---

१. **'लोकः सुकुतू-'** २. **'जातस्य च तेज ईदृक्'** इति वि.ती.पाठः स्यात् । ३. **'राहुः स शक्रम्'**

४. **'अन्यातिसक्ताय न धर्मबुद्धिर्माद्येत् प्रमाद्येत् सुजनोऽपि' । 'अतः इन्द्रस्य धर्मबुद्धिर्नास्ति । कुतो नास्तीत्यत आह–माद्येदिति । सुजनोऽपि सज्जनोऽपि माद्येत् मदयुक्तो भवेत् । प्रमाद्येत् प्रमादवान् भवेत् । नूनं निश्चयः । यद्वा नधर्मबुद्धिरित्येकं पदम् । धर्मभुद्धिरहितः इन्द्रोऽपि अन्यासक्ताय शिशवे वज्रं मुमोचेत्यन्वयः । धर्मबुद्धिराहित्यं कुत इत्यत उक्तम्–माद्येत्यादि'** इति का.श्री. ।

धावन्तं गजं दृष्ट्वा तद्ग्रहणे आसक्तायेत्यर्थः, शिशवे हनुमते वज्रं कुलिशं तत् मुमोच । इन्द्रेण दुष्कर्म कथं कृतमित्यत आह– न धर्मेति । माद्यन् ऐश्वर्यादिमदयुक्तः सुजनोऽपि न विद्यते धर्मबुद्धिर्यस्य स तथा सन् प्रमाद्येत् प्रमादं प्राप्नुयात् नूनम् ।। १२ ।।

**(सं.चं.)** शरणं त्रातारं जगाम शिशोः सकाशादात्मत्राणार्थम् । अन्यस्मिन् गजेन्द्रस्यैरावतस्य ग्रहणाख्ये कर्मणि सक्ताय शिशवे । 'ऐरावतं ततो दृष्ट्वा महत् तदिदमित्यपि । फलं तं हस्तिराजानमभिदुद्राव मारुतिः । तथाऽस्य धावतो रूपमैरावतजिघृक्षया । मुहूर्तमभवद् घोरमिन्द्राग्न्योरिव भास्वरम् । एवमाधावमानं तु नातिक्रुद्धः शचीपतिः । हस्तान्तादतिमुक्तेन कुलिशेनाभ्यताडयत्' (उ.कां.३५.४४–६) । वज्रं शिशवे मुमोच, ऐरावतरक्षार्थमुपायान्तरमपश्यन्, न धर्मबुद्धिर्मुमोच । शिशावस्मिन् वज्रपातनं धर्म इति बुद्ध्या न मुमोच । अत एवाऽह वाल्मीकिः–'नातिक्रुद्धः शचीपतिः' इति । अथापि किञ्चिदिव क्रुद्धः । सोऽपि ननु दोषायैव? सत्यमित्याह– नधर्मबुद्धिः । तदा इन्द्रः नधर्मे अधर्मे बुद्धिरस्येति तादृश आस । सहजमेतदित्यर्थान्तरन्यसनेन समर्थयते–सुजनोऽपि दुर्जनसहवासेन स्वार्थेन वा माद्यन् प्रमादमाचरेदेव हि । मदोऽवलोपः । अविमृश्यकारिता प्रमादः । इन्द्रवज्रा छन्दः । उत्तरयोरपि पद्ययोः ।। १२ ।।

**निस्ताडितोऽसौ निशितेन तेन शैलेन्द्रशृङ्गेऽथ शिशुः पपात ।**
**प्राणाधिनाथः प्रणयात् स्वपोतं जग्राह कुप्यन् कुलिशायुधाय ।। १३ ।।**

**(भा.दी.)** **निस्ताडित** इति । भूमिमवरोपयितुम्, निशितं तेन, तेन वज्रेण निस्ताडितः, असौ शिशुः शैलेन्द्रस्य मेरोः यच्छृङ्गं तस्मिन् पपात । अथ प्राणानां[१] सर्वजीवानामधिनाथः, 'प्राणस्तु प्रणवे जीवे जीविते परमात्मनि' इति वैजयन्ती, वायुः स्वस्य पोतः पुत्रस्तम्, प्रणयः स्नेहस्तस्मात्, कुलिशं वज्रमायुधं यस्य स तथा तस्मै इन्द्राय, कुप्यन् कोपं प्राप्नुवन्, जग्राह स्वाङ्के निक्षिप्तवान् ।। १३ ।।

**(सं.चं.)** निशितेन वज्रेण ऐरावतस्य राहोर्वा शिशुकेन ग्रहणनिषेधाय ताडितः । शैलेन्द्रस्य मेरोः शृङ्गे । अथ पपात, वज्रताडनादानन्तर्यमेव पतनस्य केवलम् । नतु कार्यकारणभाव इत्यर्थः । जग्राह स्वाङ्के चकार । 'चुक्रोधेन्द्राय पवनः प्रजानामहिताय सः' (उ.कां.३५.४८) इति च ।। १३ ।।

**तेनाऽगसा प्राणपतौ सकोपे चेलुर्न्न लोकाः शिवशक्रमुख्याः[२] ।**
**प्राणं विना प्राणिषु [३]नास्ति चेष्टा श्रेष्ठापराधा हि फलन्ति सद्यः[४] ।। १४ ।।**

---

१. **'प्राणानान्द्रियाणामधिनाथः'** । एतस्मिन् पाठे–**'जीविते परमात्मनि इन्द्रिये–'** इत्यन्तं कोशवचनं पठनीयम् ।

२. **'–शक्रपूर्वाः'** ३. **'प्राणिषु नो हि चेष्टा'** ४. **'श्रेष्ठापराधः फलतीह सद्यः'**

**(भा.दी.) तेने**ति । प्राणानां सर्वेन्द्रियाभिमानिदेवानां पतौ मुख्यप्राणे, तेन इन्द्रकृतेन आगसा अपराधेन सकोपे सति, हि यस्मात् प्राणं मुख्यप्राणं विना प्राणिषु चेष्टा स्वतो नास्ति तस्मात्, शिवश्च शक्रश्च तौ मुख्यौ श्रेष्ठौ येषां ते तथा लोकाः जनाः न चेलुः स्वास्थ्यं न जग्मुः । चल कम्पने लिट् । तथाहि श्रेष्ठेषु स्वोत्तमेषु य अपराधास्ते सद्यः फलन्ति हि । फलप्रदा भवन्ति हि । फल निष्पत्तौ लट् ॥ १४ ॥

**(सं.चं.)** तेनेन्द्रकृतेनाऽगसाऽपराधेन । उक्तमर्थमर्थान्तरन्यासेन समर्थयते–श्रेष्ठेति । 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते' इति हि स्मरन्ति ॥ १४ ॥

**यज्ञो न[1] नैवाध्ययनं न धर्म्मो नोच्छ्वासनिश्वासविधिः कुतोऽन्यः ।**
**लोकप्रणेतुः[2] कुपितेन लोके प्रजाः प्रजापं शरणं प्रजग्मुः ॥ १५ ॥**

**(भा.दी.) यज्ञ** इति । लोकानां प्राणानां प्रणेता प्रेरकस्तस्य वायोः कुपितं कोपस्तेन लोको भुवनं तस्मिन् यज्ञः न प्रवृत्तः । अध्ययनं नैव । धर्मः वर्णाश्रमधर्मो वा न । उच्छ्वासः ऊर्ध्वश्वासः स च निश्वासः अधःश्वासः स च तयोर्विधिः करणं न । अन्यः एतदन्यशरीरादिव्यापारः कुतः? न कुतोऽपि बभूव । तदा प्रजाः सुरादिजनाः प्रजाः पातीति प्रजापश्चतुर्मुखस्तं शरणमरणं तत् प्रजग्मुः ॥ १५ ॥

**(सं.चं.)** कुतोऽन्यः? उच्छ्वासनिःश्वासमूलो ह्यन्यः सर्वोऽपि व्यापारो भवति । तेनैव हेतुना, वाय्वनुग्रहेणैण कथञ्चिद् धृतप्राणाः प्रजाः प्रजापतिं शरणं प्रजग्मुः । 'ततः प्रजाः सगन्धर्वा सदेवासुरमानुषाः । प्रजापतिं समाधावन् दुःखिताश्च सुखेच्छया' (उ.कां.३५.५३) इति च ॥ १५ ॥

**ब्रह्माऽथ किञ्चित् कुपितो बभाषे कः स्वामिने द्रुह्यति जीवितेप्सुः[3] ।**
**ऐश्वर्य्यमत्तस्त्रिदशेश्वरोऽयं स्वस्य प्रजानां च चकार दुःखम् ॥ १६ ॥**

**(भा.दी.)** ब्रह्मेति । (अथ) किञ्चित् कुपितः, इन्द्रकृतकर्म श्रुत्वा कोपं प्राप्तः, ब्रह्माऽपि, जीवितमीप्सतीति जीवितेप्सुः कः पुरुषः स्वामिने जीवनस्वामिने वायवे द्रुह्यति द्रोहं करोति । द्रुह जिघांसायां लट् । ऐश्वर्येण मत्तः, अयं त्रिदशेश्वरः देवेन्द्रः, स्वस्य एतासां प्रजानां च दुःखं क्लेशस्तत् चकार, इति बभाषे ॥ १६ ॥

**(सं.चं.)** ब्रह्माऽथ । 'पुत्रस्तस्यामरेशेन इन्द्रेणाद्य निपातितः । राहोर्वचनमास्थाय ततः स कुपितोऽनिलः' (उ.कां.३५.५९–६०) इति च । अत्रापीन्द्रवज्रा छन्दः ॥ १६ ॥

---

१. **'यज्ञा न'** २. **'कुपितेन तेन' इति, लोकप्रणेत्रा कुपितेन तेन प्रजाः'** इति च । ३. **'जीवनेप्सुः'**

**श्रेष्ठं [1]श्रुतिर्ज्येष्ठमिमं पपाठ प्राणं तथोक्थं जगतां च सूत्रम् ।**
**न मद्वशोऽयं[2] न शिवादिकानां नाथोऽस्ति नारायण एव तस्य ॥ १७ ॥**

**(भा.दी.) श्रेष्ठेमि**ति । 'यो वै ज्येष्ठं च श्रेष्ठं च वेद' इति श्रुतिः । इमं प्राणं मुख्यप्राणं सर्वजीवेभ्यः श्रेष्ठं ज्येष्ठं च पपाठ । पठ पाठने लिट् । तथा 'उक्थमुक्थमिति वै प्रजा वदन्ति' इति श्रुतिः इमं उक्थं सर्वजगदुत्थापनशक्तिमन्तं पपाठ । तथा 'एतद्वै गौतम तत् सूत्रम्' इत्यादिश्रुतिः जगतां सूत्रं च पपाठ, आधारभूतं च प्रतिपादितवती । अयं प्राणः मद्वशः ममाधीनः न । शिव आदिर्येषां ते तेषां वशः न । तर्हि स्वतन्त्रः किमित्यत आह– नाथ इति । तस्य प्राणस्य नारायण एव नाथः स्वामी अस्ति ॥ १७ ॥

**(सं.चं.)** 'वायुर्वै ज्येष्ठश्च श्रेष्ठश्च' इति श्रुतिरिमं प्राणं श्रेष्ठं च ज्येष्ठं च पपाठ । गुणैः श्रेष्ठः प्रशस्यतमः । 'प्रशस्यस्य श्रः' (अ.सू.५.३.६०) । वयसा ज्येष्ठ । अतितमां वृद्धः । 'वृद्धस्य च' (अ.सू.५.३.६२) इति च । श्रुत्यनुसारेण–'ज्येष्ठं श्रुतिः श्रेष्ठमिमं पपाठ' इत्यपि मूलपाठः स्यात् । तथा 'उक्थमुक्थमिति वै प्रजा वदन्ति' इति श्रुतिः प्राणमिमं 'उक्थं' सर्वजगदुत्थापकं पपाठ । 'एतद् वै गौतम तत् सूत्रम्' इति श्रुतिः प्राणमिमं जगतां सूत्रं प्रतिष्ठापकं पपाठ । न मद्वशोऽयम् । यतो मत्समः । न शिवादिकानां च वशः । यतस्तेभ्य उत्तमः । तत उत्तम एको नारायण एव तस्य नाथोऽस्ति, नान्यः । 'शरीरं हि विना वायुं समतां याति दारुभिः । वायुः प्राणः सुखं वायुर्वायुः सर्वमिदं जगत्' (उ.कां.३५.६१) इति च ॥१७॥

**वाणीमुदाहृत्य तदेत्युदारां शम्भुः सशर्वः प्रययौ प्रजाभिः ।**
**आहूय देवानुपदेवयुक्तान् सपुत्रको यत्र स जीवदेवः ॥ १८ ॥**

**(भा.दी.) वाणीमि**ति । शम्भुश्चतुर्मुखः, 'शम्भुर्धातृहरार्हत्सु' इति वैजयन्ती, तदा इति उदारां उत्कृष्टां वाणीं वाचं उदाहृत्य, सशर्वः सन् रुद्रसहितः सन्, उपदेवा गन्धर्वादयः तैर्युक्तान् देवान् आहूय, प्रजाभिः सह, यत्र देशे जीवस्य प्राणधारकस्य देवः स्वामी[3] मुख्यप्राणः सपुत्रकः पुत्रसहितः सन् वर्तते तत्र प्रययौ ॥ १८ ॥

१. **'श्रेष्ठश्रुतिः' इति, 'ज्येष्ठश्रुतिः' इति, 'श्रेष्ठा श्रुतिः'** इति च क्वचित् । सर्वेऽपि भ्रान्ताः । **'श्रुतिः, 'यो हवै ज्येष्ठं च श्रेष्ठं च वेद' इति बृहदारण्यकश्रुतिः, इमं मुख्यम्, ज्येष्ठं सकलजीवोत्तमम्, श्रेष्ठं गुणैरुत्तमम्, पपाठ पठितवती । तथा–'प्राण उदक्रामत् प्राण उत्क्रान्तेऽपद्यत, प्राणः पाविशत् प्राणे प्रपन्ने' इत्यादिश्रुतिः, इमं प्राणं प्राणनामकं पपाठ । 'उक्थमुत्त्यमिति वै प्रजा वदन्ति' इति श्रुतिः इमं उत्थापनहेतुत्वात् उक्थे उक्थनामके पपाठ । तथा–'वायुना गोतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च सन्दब्धानि' इति श्रुतिः इमम्, स्यूतमस्मिन् जगदिति जगदाधारत्वात् सूत्रनामकं पपाठ'** इति का.श्री. ।

२. **'न मे वशोऽयम्'**

३. **'जीवदेवः जीवस्वामी' । 'जीवदेवः सकलजीवस्वामी'** इति .का.श्री. ।

**(सं.चं.)** शम्भुश्चतुराननः । तमेव हि प्रजाः शरणं जग्मुः । पृथग् ग्रहणाच्च शर्वस्य । देवा इन्द्रादयः । उपदेवा गन्धर्वादयः । 'ततः प्रजाभिः सहितः प्रजापतिः सदेवगन्धर्वभुजङ्गगुह्यकैः । जगाम तत्राऽस्यति यत्र मारुतः सुतं सुरेन्द्राभिहतं प्रगृह्य सः' (उ.कां.३५.६४) इति च । जीवदेवः जीवकलाभिमानी जीवानां व्यवहारप्रवर्तकश्च । दिवु व्यवहारे । देवयतीति देवः ॥ १८ ॥

**भ्रूभङ्गमात्रेण जगन्ति हन्तुं क्षमं क्षमायां क्षमया निषण्णम् ।**
**[१]ध्यायन्तमङ्कार्पितपुत्ररत्नं प्रियं सखायं भगवान् ददर्श ॥ १९ ॥**

**(भा.दी.) भ्रूभङ्गे**ति । भगवान् ब्रह्मा, भ्रुवोर्भङ्गश्चलनं भ्रूभङ्गः, केवलं भ्रूभङ्गः भ्रूभङ्गमात्रम्, तेन जगन्ति हन्तुं क्षमं समर्थम्, क्षमायां भूमौ क्षमया सहनशक्त्या निषण्णम्, ध्यायन्तं श्रीहरिध्यानं कुर्वन्तम्, अङ्कयोरर्पितं स्थापितं पुत्ररत्नं पुत्रश्रेष्ठं येन स तथा तम्, प्रियं सखायं मुख्यप्राणं ददर्श ॥ १९ ॥

**(सं.चं.)** हन्तुं क्षमम् । अथापि क्षमया क्षमायां निषण्णम् । क्षमासारा हि साधवः । भगवत्सङ्कल्पमेव ध्यायन्तम् । ब्रह्मणि सन्निधाय स्वसान्त्वनायाऽगच्छन्तं नारायणमेव च ध्यायन्तम् । भगवान् चतुर्मुखः ॥१९॥

**स वेदगर्भः करुणाकुलात्मा तूर्णं कराग्रेण सुधामयेन ।**
**व्यचीकसद् बालमथाभिमृश्य विशुद्धरूपं कुमुदं यथेन्दुः ॥ २० ॥**

**(भा.दी.) स** इति । करुणया आकुलः निबिड आत्मा मनो यस्य स तथोक्तः सः, वेदा गर्भे उदरे यस्य स तथोक्तश्चतुर्मुखः, सुधामयेन अमृतमयेन[२], करस्य यदग्रं तेन, कुमुदं कुमुदपुष्पं तत् इन्दुः यथा तथा विशुद्धं रूपं यस्य स तथा तं बालं हनुमन्तं अभिमृश्य तूर्णं यथा भवति तथा व्यचीकसत् विकासयामास । चकासृ दीप्तौ लुङ् । यथा कुमुदस्य इन्दोरपगमनेन सङ्कोच एव न दुःखम्, तत्किरणस्पर्शेन च विकास एव नतु मूर्च्छापगमस्तथा हनुमतोऽपि वज्रायुधस्यामोघत्वप्रकटनार्थं मूर्च्छितत‌ानुकरणमेव न तु दुःखम् । ब्रह्मकरस्पर्शेन विकास एवेति वाल्मीकीयतात्पर्यमुक्तं भवति ॥ २० ॥

**(सं.चं.)** करुणाकुलात्मा करुणापूर्णमनाः । विशुद्धरूपं बालम्, वस्तुतः पूर्वमपि न मूर्छामलिनम् । अथापि सूर्यभासा मुद्रितमिव कुमुदमात्मशक्तिं सङ्कुच्य मोहग्रस्तमिव स्थितम्, इन्दुरिव सुधामयेन स्वकराग्रेण व्यचीकसत् विचकासयामास । चकास्तेर्णिचि लुङि रूपम् ॥ २० ॥

---

१. '**ध्यायन्तं पुत्रस्य क्षेमं चिन्तयन्तम्**' इति का.श्री. ।
२. '**अमृतस्राविणेत्यर्थः**'

**नास्तीश्वराणां जगतीशितव्ये मन्युः पितॄणामिव पुत्त्रवर्गे ।**
**उक्त्वेत्युदस्थापयदाशु वायुं हस्तेन हस्तं प्रतिगृह्य[1] वेधाः ॥ २१ ॥**

**(भा.दी.) नास्ती**ति । ईश्वराणां पालकानां समर्थानां वा, ईशितव्ये शिक्षणीये पालनीये च जगति, मन्युः, पुत्राणां वर्गः समूहस्तस्मिन्, मातरश्च पितरश्च पितरस्तेषामिव, मातापितॄणामिवेत्यर्थः, 'पिता मात्रा' (अ.सू.१.२.७०) इत्येकशेषः । नास्ति न भवति । वेधाश्चतुर्मुखः इति मुख्यवायुं प्रति उक्त्वा, स्वकीयहस्तेन मुख्यवायोर्यो हस्तस्तं प्रतिगृह्य, वायुं आशु उदस्थापयत् उत्थापयामास ॥ २१ ॥

**(सं.चं.)** ईशितव्ये जगति । 'वायुमुत्थाप्य हस्तेन शिशुं तं परिमृष्टवान्' (उ.कां.३६.३) इति च । इन्द्रवज्रा छन्दः ॥ २१ ॥

**प्राणे प्रसन्ने वितते जगाम प्राणिव्रजोऽयं प्रकृतिं विपन्नः ।**
**निदाघसन्तप्त इवातिमात्रं जलागमे गाधजलेचरौघः[2] ॥ २२ ॥**

**(भा.दी.) प्राण** इति । विपन्नः पूर्वं निश्चेष्टतया पतितः, अयं प्राणिव्रजः, सुतस्योद्बोधनेन प्रसन्ने प्राणे वायौ वितते सर्वशक्तिप्रदत्वेन व्याप्ते सति, प्रकृतिं पूर्वस्वभावं जगाम । गमेर्लिट् । तत् कथमिव? अतिमात्रमत्यन्तं निदाघेन उष्णेन सन्तप्तः, अगाधं अतिनिम्नस्थलस्थितं यज्जलं तत्र चरन्तीति अगाधचलेचराः मत्स्यादयः, तेषामोघः समूहः । 'तत्पुरुषे कृति बहुलम्'(अ.सू.६.३.१४) इति सप्तम्या अलुक् । जलस्य आगमः प्राप्तिस्तस्मिन् सति यथा तथा प्रकृतिं जगामेत्यन्वयः ॥ २२ ॥

**(सं.चं.)** जगति वितते सति । सकलप्राणिव्रजे सन्निहिते सति । पूर्वं विपन्नः सम्प्रति प्रकृतिं सहज-स्थितिं जगाम । निदाघ इति ग्रीष्मकाल उच्यते । निदाघ इति ग्रीष्मताप उच्यते । निदाघ इति तापजः स्वद उच्यते । तेन निदाघे ग्रीष्मे यो निदाघो घर्मः, येन जलान्तरपि स्विद्यति, तेन अतिमात्रं सन्तप्तः । सर्वाङ्गव्यापी दुःखानुभवहेतुस्तापः । तस्यौत्कट्यं सन्तापः । मात्रामियत्तामतिक्रान्तोऽतिमात्रः सर्वात्मना दुःसहः

---

१. **'परिगृह्य'**

२. अत्र द्वेधा प्रतृण्णं दृश्यते । **'अगाधजलेचरौघः'** इति, **'गाधजलेचरौघः'** इति । प्रथमं विश्वपतितीर्थीये । **'अगाधं अतिनिम्नस्थलस्थितं जलम्'** इति तद्व्याख्यानात् । एवं भाति–लिपिकृत्प्रमादोऽयम् । **'गाधं अनिम्नस्थलस्थितम्'** इत्येव टीकापाठः स्यादिति । द्वितीयं वि.भू.टीकायां का.श्री. टीकायाम् । तथाहि–**'गाधजलेचरौघः अनिम्नस्थलस्थितमत्स्यसमूहः'** इति वि.भू. । **'गाधजलेचरौघः । गाधजलं स्वल्पजलम् । तथाचातिस्वल्पजलस्थलस्थितः जलेचरौघः मत्स्यादिजलजन्तुसमूहः'** इति का.श्री. ।

सन्तापः । तत्रापि गाधजले शुष्कप्राये जम्बालमलिनजले सरसि चराणां जलचराणां मत्स्यादीनामोघो निचयः जलागमे प्रावृषि अगाधजले सति सरसि यथा प्रकृतिं गच्छति । गाधजले इति पदसान्निध्यतः चरा इति जलचरा उच्यन्ते स्फुटम् ॥ २२ ॥

**भङ्गे प्रसक्तेऽपि न भङ्गमाप हनुः शिशोर्य्यद्धनुमानतोऽयम्[१] ।**
**उक्त्वेत्थमम्लानसरोजमालां दिव्यां महेन्द्रो निदधे[२] तदंसे ॥ २३ ॥**

**(भा.दी.)** भङ्ग इति । यत् यस्मात् भङ्गो नाशस्तस्मिन् वज्रपातेन प्रसक्ते सत्यपि, शिशोः वायुसूनोः, हन्ति चणकादिकमिति हनुः, वर्णोच्चारणकाले जिह्वामूलेन स्पृश्यमानोऽवयवविशेषः । 'कपोलौ तत्परो हनुः' इत्यमरः । भङ्गं भञ्जनं नाऽप । ततः अयं तव सुतः हनुमान् हनुमन्नामकः । महेन्द्रः इत्थं उक्त्वा दिव्यानि अम्लानानि यानि सरोजानि तेषां मालां तस्य हनुमतोंऽसः स्कन्धस्तस्मिन् निदधे समर्पितवान् ॥ २३ ॥

**(सं.चं.)** भङ्गे प्रसक्तेऽपि । 'ततः सहस्रनयनः प्रीतियुक्तः शुभाननः । कुशेशयमयीं मालामुत्क्षिप्येदं वचोऽब्रवीत् । मत्करोत्सृष्टवज्रेण हनुरस्य यथाऽहतः । नाम्ना वै कपिशार्दूलो भविता हनुमानिति' (उ.कां.३६.१०–११) इति च । वज्रपातेऽप्यभुग्नः प्रशस्तो हनुरस्येति हनुमान् ॥ २३ ॥

**प्राणाङ्कगं प्राणमिव द्वितीयं बालं च बालेतरसद्गुणाब्धिम् ।**
**सभा सुराणामथ भासुरं तं सभाजयामास सभाजनीयम् ॥ २४ ॥**

**(भा.दी.)** **प्राणे**ति । अथ सुराणां ब्रह्मणा सहाऽगतदेवानां सभा, प्राणस्याङ्कस्तद्गच्छतीति तथोक्तस्तम्, द्वितीयं प्राणमिव मुख्यप्राणमिव स्थितम्, बालश्च बालमपि बालादितरे येऽभिज्ञास्तेषां ये सद्गुणास्तैरब्धिरिव तम्, भासुरं प्रकाशमानं सभाजनीयं सम्भावनीयं तं हनुमन्तं सभाजयामास युद्धादावस्मदीयशस्त्रसंस्पर्शस्तव मा भूदित्यादिरूपेण वचसा मानयामास । सभाज प्रीतिदर्शनयोः लिट् । अनेन स्वाभिमन्यमानशस्त्रघातस्तव मा भूदिति देवैर्वरो दत्त इति वाल्मीकीयतात्पर्यमुक्तं भवति ॥ २४ ॥

**(सं.चं.)** बालेतर इव अबालिशो विदग्धः पुरुष इव सद्गुणानामयमब्धिः । सुराणां शर्वशक्रादीनां सभा समुदायः । ब्रह्मणा सह तत्राऽगतः । 'पशूनां समजोऽन्येषां समाजो धीमतां सभा' इति यादवप्रकाशः । भासुरं भासनशीलम् । भासतेर्घुरच् । सभाजनीयं प्रीत्याऽऽदरणीयम् । स्वेष्टवरदानेन सभाजयामास स्वप्रीतिं

१. **'–मांस्ततोऽयम्'** इति वि.ती.पाठः । २. **'निदधौ तदंसे'**

व्यानञ्ज । सभाज प्रीतिदर्शने । तथाहि–'इतः प्रभृति वज्रस्य ममावध्यो भविष्यति' (उ.कां.३६.१२) इतीन्द्रः । 'यदा च शास्त्राण्यध्येतुं शक्तिरस्य भविष्यति । तदाऽस्य शास्त्रं दास्यामि येन वाग्ग्मी भविष्यति । नचास्य भरिता कश्चित् सदृशः शास्त्रदर्शने' (१४) इत्यादित्यः । 'वरुणश्च वरं प्रादान्नास्य मृत्युर्भविष्यति । वर्षायुतशतेनापि मत्पाशादुदकादपि' (१५) इति । 'यमो दण्डादवध्यत्वमरोगत्वं च दत्तवान्' (१६) इति । 'वरं ददामि सन्तुष्ट अविषादं च संयुगे । गदेयं मामिका नैनं संयुगेषु वधिष्यति' (१७) इति धनदः । 'मत्तो मदायुधानां च अवध्योऽयं भविष्यति' (१८) इति शिवः । 'मत्कृतानि च शस्त्राणि यानि दिव्यानि तानि च । तैरवध्यत्व-मापन्नश्चिरजीवी भविष्यति' (२०) इति विश्वकर्मा । 'सर्वेषां ब्रह्मदण्डानामवध्योऽयं भविष्यति' (२१) इति चतुर्मुखः । यत् स्वयमेव स मारुतिरास तदेव देवाः स्ववचनैरुपबृंहयामासुरिति सर्वं सुन्दरम् । अत्र प्रथमपादे प्राणेति द्वितीये बालेति तृतीये भासुरेति तुरीये सभाजेत्यक्षराणामावृत्तेरपूर्वो वृत्त्यनुप्रासः ॥ २४ ॥

**[१]शस्त्रास्त्रसोढाऽखिलशत्रुहन्ता शास्त्रेषु सर्वेषु विदग्धबुद्धिः ।**
**ततो हनूमान् भगवत्प्रियाणां श्रेष्ठोऽयमित्यभ्यधिताब्जयोनिः ॥ २५ ॥**

**(भा.दी.) शस्त्रे**ति । अब्जं योनिः कारणं यस्य स तथोक्तः चतुर्मुखः, यतः अयं शस्त्राणि च अस्त्राणि च तेषां सोढा सहनशक्तिमान्, अखिला ये शत्रवस्तेषां हन्ता हननशीलः, सर्वेषु, ब्रह्ममीमांसादीनि यानि शास्त्राणि तेषु, विदग्धा कौशलोपेता बुद्धिर्यस्य स तथा, भगवतो हरेर्ये प्रियास्तेषां मध्ये श्रेष्ठः, ततः ज्ञानवत्त्वादिगुणवत्त्वात्, हनुशब्दस्य 'हनशब्दो ज्ञानवाची' इत्युक्तेः ज्ञानोपलक्षितसकलगुणवाचित्वात्, अयं हनूमान् हनूमच्छब्दवाच्यः इति अभ्यधित नाम चक्रे ॥ २५ ॥

**(सं.चं.)** शस्त्रास्त्रसोढा । शत्रूणां शस्त्रास्त्रघातं सहतेऽस्य हनुरिति हनुमान् । अखिलशत्रुहन्ता । शत्रूणां हनुर्हननम् । तद्वान् हनुमान् । हन हिंसागत्योः । शास्त्रेषु सर्वेषु हनुरवगतिः, स्वच्छन्दा गतिश्चास्येति हनुमान् । 'हनशब्दो ज्ञानवाची हनुमान् मतिशब्दितः' इति हि स्मरन्ति । स्वरूपभूतमतिमान् हनुमा-नित्यर्थः । 'यदीमुप ह्वरते साधते मतिः–' इति च श्रुतिः । हनुमानेव हनूमान् । आधिक्येऽधिकम् । 'शब्दादीनां च' (अ.सू.६.३.१२०) इति शरादिगणपठितत्वात् सञ्ज्ञायां दीर्घ इति पाणिनीयाः । 'ततः सुराणां तु वरैर्दृष्ट्वा ह्येनमलङ्कृतम् । चतुर्मुखस्तुष्टमना वायुमाह जगद्गुरुः । अमित्राणां भयकरो मित्राणामभयङ्करः । अजेयो

१. **'हनुशब्दस्य ज्ञानं हिंसा चेत्यर्थद्वयम् । तथाच हनुरस्यास्तीति हनुमान् ज्ञानवान् शत्रुहिंसकश्चेत्यर्थो भवति । शत्रुप्रक्षिप्तशस्त्रास्त्रसहनशक्त्यभावे शत्रुहन्तृत्वं न सम्भवतीत्यन्यथाऽनुपपत्त्या शास्त्रास्त्रसोढृत्वं लभ्यते'** इति का.श्री. ।

भविता पुत्रस्तव मारुत मारुतिः । कामरूपः कामचारी कामगः प्लवतां वरः । भवत्यव्याहतगतिः कीर्तिमांश्च भविष्यति' (उ.कां.३६.२२–४) इति च । अभ्यधित व्याजहार, अभिधानं चकार च ॥ २५ ॥

**सूर्य्यान्तिके व्याकरणाभियोगी सूर्य्याभिमुख्येन पतंश्च पश्चात् ।**
**प्राच्याद् गिरेरस्तगिरिं जगाम ग्रन्थं महान्तं हनुमान् दधानः ॥ २६ ॥**

**(भा.दी.)** **सूर्येति** । सूर्यस्य सूर्यमण्डलस्थनारायणस्य, अन्तिकं समीपं तस्मिन्, व्याकरणे मूलव्याकरणशास्त्रे अभियोग आग्रहः, सोऽस्यास्तीति तथोक्तः, मूलव्याकरणादिशास्त्रपाठाग्रहवानित्यर्थः, सूर्य अग्रत अभिमुखं यस्य स तथोक्तः तेन[१](?), पश्चात् पृष्ठतः प्लवमानः आपतन्, महान्तं ग्रन्थं दधानः हनुमान्, प्राच्यां भवः प्राच्यः तस्मात् गिरेः, उदयपर्वतादित्यर्थः, अस्ताख्यो यो गिरिस्तं जगाम ॥ २६ ॥

**(सं.चं.)** व्याकरणेऽभियोगोऽभिनिवेशः । सूर्याभिमुख्येन पश्चात् पृष्ठतःपृष्ठतो गच्छन् । व्याकरणमिति वेदार्थव्याकरणम्, न शब्दशास्त्रमात्रम् । महान्तं ग्रन्थं वेदराशिम् । वस्तुतः सर्वदा हृदये दधानः । 'असौ पुनर्व्याकरणं ग्रहीष्यन् सूर्योन्मुखः प्रष्टुमनाः कपीन्द्रः । उद्यद्गिरेरस्तगिरिं जगाम ग्रन्थं महद्धारयन्नप्रमेयः' (३६–४५) इति च । इन्द्रवज्रा छन्दः ॥ २६ ॥

**आनन्दभाजो हरिभक्तिराज्ये प्रवृद्धनानागुणरत्नराशेः[२] ।**
**तस्येन्द्रियारातिजयध्वजोऽभूत् [३]सद्ब्रह्मचर्य्यं भुवनाभिपूज्यम् ॥ २७ ॥**

**(भा.दी.)** **आनन्देति** । हरेर्या भक्तिः सैव राज्यं तस्मिन्, आनन्दं भजतीति तथोक्तस्तस्य, महासन्तोषयुक्तस्येत्यर्थः, प्रवृद्धा नानाविधा ये गुणास्ते रत्नानीव तेषां राशिः समूहो यस्य स तथोक्तस्तस्य, तस्य हनुमतः भुवने अभिपूज्यम्, सत् उत्तमं यद्ब्रह्मचर्यं समस्तेन्द्रियनिग्रहाख्यव्रतम्, इन्द्रियाण्येव अरातयः शत्रवस्तेषां यो जयस्तस्मिन् ध्वजइव अङ्कइव, 'अस्त्री मेढ्राङ्कयोर्ध्वजः' इति वैजयन्ती, अभूत् ॥ २७ ॥

**(सं.चं.)** नानागुणा एव रत्नानि । तेषां राशिः प्रवृद्धो यत्र । इन्द्रियाख्यारातिविजयस्य ध्वजायितं सत् निर्दुष्टं ब्रह्मचर्यम् । 'हनुमानिति महितमहापौरुषो बाहुशाळी ख्यातस्तेऽग्र्योऽवतारः सहित इह बहुब्रह्मचर्यादिधर्मैः' इति हि वायुस्तुतौ ॥ २७ ॥

---

१. अस्फुटमसङ्गतमिदं विवरणम् । मृग्यः शुद्धः पाठः । **'सूर्यः अग्रजः अभिमुखः यस्य सः'** इति पाठः स्यात् । अथच एतद्व्याख्यानुगुणतया– **'सूर्याग्रगः प्लवमानश्च पश्चात्'** इति टीकासम्मतः पाठ इति प्रतीयते । परन्तु पाठेऽस्मिन् छन्दः कुप्यति ।

२. **'गुणकोशराशेः'**

३. **'सुब्रह्मचर्यम्'** इति, **'सब्रह्मचर्यम्'** इति च ।

**चातुर्य्यमाधुर्य्यसुवीर्य्यशौर्य्यैरौदार्य्यधैर्य्यप्रवरैर्गुणैः[१] स्वैः ।**
**[२]सर्वज्ञतासर्वसमर्थताद्यैर्हनूमतः कोऽस्ति समस्त्रिलोक्याम् ॥ २८ ॥**

**(भा.दी.) चातुर्येति** । चतुरस्य दक्षस्य भावश्चातुर्यं तच्च, 'चतुरौ दक्षधीमन्तौ' इति वैजयन्ती, माधुर्यं मनोहरत्वं तच्च, सुवीर्यं शोभनबलं तच्च, 'वीर्यं बले प्रभावे च ' इत्यमरः, शौर्यं पराक्रमस्तच्च तैः, उदारस्य दातुर्भाव औदार्यं तच्च, 'उदारो दातृमहतोः' इति च, धैर्यं च ते प्रवरे श्रेष्ठे येषां ते तथा तैः, सर्वज्ञता च, सर्वेषु कार्येषु समर्थस्तस्य भावस्तत्ता सा च, ते आद्ये येषां ते तथोक्तास्तैः, स्वैः स्वरूपभूतैः सर्वैः गुणैः शुभधर्मैः, त्रिलोक्यां हनूमतः समः सदृशः कः पुरुषः अस्ति? न कोऽपीश्वरातिरिक्त इत्यर्थः ॥ २८ ॥

**(सं.चं.)** चातुर्येत्यादि । 'पराक्रमौदार्ययशःप्रतापैः सौजन्यमाधुर्यनयानयैश्च । गाम्भीर्यचातुर्यसुवीर्य-धैर्यैर्हनूमतः कोऽभ्यधिकस्त्रिलोक्याम्' (उ.कां.३६.४४) इति च । सपदि सङ्कटपारगमनं चातुर्यम् । प्रियंवदता माधुर्यम् । सुवीर्यमवार्यमन्तःसत्वम् । शौर्यं पराभिभवनशक्तिः । औदार्यं वदान्यता । धैर्यं सङ्कटेऽपि साध्वसविरहः ॥ २८ ॥

**असावसङ्गो[३] विविधेऽपि लोके सर्वत्र सर्वेश्वरमेव पश्यन् ।**
**चचार[४] योगानुगतान्तरात्मा मरुत्समानो मरुतस्तनूजः ॥ २९ ॥**

**(भा.दी.) असाविति** । न विद्यते सङ्गो विषयासक्तिर्यस्य स तथोक्तः, सर्वत्र जगति सर्वेश्वरं श्रीहरिं (एव) पश्यन् अपरोक्षीकुर्वन्, योगे भगवद्ध्याने अनुगत आसक्त अन्तरात्मा मनो यस्य स तथा, मरुतः वायोः तनुजः पुत्रः, असौ हनुमान्, विविधो नानाविधस्तस्मिन् लोके, अपिरभिव्याप्तौ, सर्वलोकेष्वपीत्यर्थः, मरुत्समानः सन् चचार । चर गतिभक्षणयोर्लिट् ॥ २९ ॥

**(सं.चं.)** 'स्रुग्भाण्डान्यग्निहोत्राणि वल्कलानां च सञ्चयान् । भग्नविच्छिन्नविध्वस्तान् संशान्तानां करोत्ययम्' (उ.कां.३६.३०) इति वाल्मीकिवचनस्य भावमाह– असावसङ्ग इति । तत्रापि निर्लिप्तः केवलं लीलया जनान् मोहयितुं तथा चकारेत्यर्थः । तदजानन्त ऋषय एनं प्रीत्या शेपुरिव । तस्मै देवानां वरदानमिव व्यर्थमृषीणां

१. **'–प्रमुखैर्गुणै–'**

२. **'सर्वज्ञता ईशादन्यत्राऽलोचने सर्वविषयज्ञानोपेतत्वम् । सर्वसमर्थता सर्वकार्येषु समर्थत्वम्'** इतिका.श्री. ।

३. **'असङ्गो लेपरहितः योग्यविषयैर्नहि लेपोऽस्ति वह्निवायुविवस्वतामित्युक्तेः'** इति च का.श्री. ।

४. **'चचाल योगा–'**

शापदानम्। नहि वरेण किञ्चिदाधीयत। नापि शापेनाहीयत। यो बाल एव सूर्यं प्रति पुप्लुवे तस्य समुद्रतरणं कियत्? भगवति भक्तियोगो योगः। यदयुक्तमिव करोति तत्रापि योगयुक्तं मन एव कारणम्। भगवत्सङ्कल्पं जानन् तदनुगुणं वर्तयंश्चचार। मरुत्समानः अवतारेऽपि मूलरूपादन्यूनगुणः ॥ २९ ॥

**सौख्याय सख्यं स्वयमाप तेन सुग्रीवनामा प्लवगप्रबर्हः।**
**श्रीमाननेकैः सचिवैर्युतोऽपि शतक्रतुर्य्यद्वदुरुक्रमेण ॥ ३० ॥**

**(भा.दी.) सौख्याये**ति। श्रीमान्, सुग्रीव इति नाम यस्य स तथोक्तः, प्लवगेषु कपिषु प्रबर्हः श्रेष्ठः, अनेके बहवस्तैः सचिवैः भृत्यैर्युतोऽपि, शतं क्रतवो यस्य स तथा इन्द्रः, उरुक्रमेण विष्णुना यद्वत् तद्वत्, तेन तादृशेन हनुमता, सख्युर्भावः सख्यं तत्, सुखमेव सौख्यं तस्मै स्वयं आप जगाम ॥ ३० ॥

**(सं.चं.)** सौख्याय सख्यम्। 'सुग्रीवेण समं त्वस्य अद्वैधं छिद्रवर्जितम्। आबाल्यं सख्यमभवदनिलस्याग्निना यथा' (उ.कां.३६.४०) इति च। उरुक्रमेण उपेन्द्रेण ॥ ३० ॥

**पम्पातटे फुल्लवने प्रकाश्य वियोगिनां शोकदशामशोकः।**
**सलक्ष्मणोऽसौ गत ऋश्यमूकं तौ वानरेन्द्रौ[१] भगवान् ददर्श ॥ ३१ ॥**

**(भा.दी.) पम्पे**ति। न विद्यते शोको यस्य स तथोक्तः, सलक्ष्मणः लक्ष्मणेन सहितः, भगवान् असौ श्रीरामः, फुल्लं विकसितं वनं यस्मिन् तत्तथोक्तं तस्मिन्, पम्पाया यत्तटं तस्मिन्, वियोग एषामस्तीति वियोगिनः तेषाम्, भार्यावियुक्तपुरुषाणामित्यर्थः, शोकस्य दशामवस्थां प्रकाश्य, ऋश्यमूकाख्यो गिरिस्तं गतः सन्, तौ वानरेन्द्रौ हनुमत्सुग्रीवौ ददर्श ॥ ३१ ॥

**(सं.चं.)** पम्पातटे फुल्लवने। फुल्लकुसुमवन्ति वनानि यत्र। कुसुमनिष्ठं फुल्लत्वं कुसुमवत्युपचर्यते। ञि फला विशरणे इत्यतः 'ञीतः क्तः' (अ.सू.३.२.१८७) इति वर्तमाने क्तः। 'स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम्। रामः सौमित्रिसहितो विललापाऽकुलेन्द्रियः'(कि.कां.१.१) इति च। ऋश्यो मृगविशेषः। 'रुरुर्महान् कृष्णसारः कुरङ्गो हरिणो महान्। रोहिद् ऋश्यो हरिणवन्मृदुशृङ्गः प्रतापसः' इति यादवप्रकाशः। ऋषीणां तपोभङ्गभिया ऋश्या अपि मूका यत्र स ऋश्यमूको गिरिः। 'ऋष्यमूकम्' इति पठन्तो भ्रान्ताः ॥ ३१ ॥

१. **'ऋष्यमूके तौ वानरेन्द्रौ'** इति, **'ऋष्यमूके द्वौ वानरेन्द्रौ'** इति कचित्।

**सिंहप्रभं पूरुषसिंहमेनं[1] निरीक्ष्य रक्तायतनेत्रमत्र ।**
**सबाणबाणासनपाणिमारात् स पुप्लुवे[2] सूर्य्यसुतः सहान्यैः ॥ ३२ ॥**

**(भा.दी.) सिंहेति** । सूर्यसुतः सः सुग्रीवः, अत्र ऋष्यमूके, सिंहवत्प्रभा यस्य स तथा तम्, पूरुषसिंहः (पुरुष)श्रेष्ठस्तम्, रक्ते विशाले आयते नेत्रे यस्य तम्, बाणसहितं यद् बाणासनं धनुः, तत् पाण्योर्यस्य तम्, एतं श्रीरामम्, आरात् दूरात् निरीक्ष्य, अन्यैर्नीलादिभिर्वानरैः सह पुप्लुवे । प्लुङ् गतौ लिट् ॥ ३२ ॥

**(सं.चं.)** आरादद्दूरे निरीक्ष्य अन्यैः हनुमदन्यैरनुगैः कपिभिः । आरात् सुदूरं पुप्लुवे पलायामास ॥ ३२ ॥

**अन्याद्रिसंस्थान्[3] भयकम्पिताङ्गान् प्रकम्पितागान्[4] प्लवगानवेक्ष्य ।**
**अप्राकृतात्मा पुरुषोत्तमोऽयं न वो भयायेत्यवदद्धनूमान् ॥ ३३ ॥**

**(भा.दी.) अन्येति** । ऋष्यमूकादन्यो योऽद्रिस्तत्र संस्थान् संस्थितान्[5], भयेन कम्पितं चलितं अङ्गं येषां ते तथा तान्, प्रकम्पिताः प्लवनवेगेन चलिता अगा वृक्षा यैस्ते तथोक्तान्, प्लवगान् सुग्रीवादिकपीन् अवेक्ष्य हनुमान्, अयं दृश्यमानः, अप्राकृत आत्मा स्वरूपं यस्य स तथोक्तः, पुरुषेभ्यो उत्तमः श्रीहरिः वः भयं भीतिस्तस्मै सम्प्राप्तः न इति अवदत् ॥ ३३ ॥

**(सं.चं.)** अन्याद्रिसंस्थान् अन्यशिखरसंस्थान् । प्रकम्पितागान् । अगः पर्वतः । अगा वृक्षा वा । 'एवमेकायनगताः प्लवमाना गिरेर्गिरिम् । प्रकम्पयन्तो वेगेन गिरीणां शिखराण्यपि । ततः शाखामृगाः सर्वे प्लवमाना महाबलाः । बभञ्जुश्च नगांस्तत्र पुष्पितान् दुर्गसंश्रितान्' (कि.कां.२.९–१०) इति च । न वो भयायेत्यवदत् । न युष्मान् भीषयितुमागतः, किन्त्वभयायेत्यवदत् । नवो नूतनोऽयमागतोऽस्माकमभयायेति च ॥ ३३ ॥

**सगद्गदं सूर्य्यसुतस्तमूचे नूनं सखे वालिहिताय वीरौ ।**
**इमौ जिघांसू मम पार्श्वमाप्तावेतौ परीक्षस्व विचक्षणेति ॥ ३४ ॥**

---

१. **'–सिंहमेतम्'** इति वि.ती.पाठः स्यात् । २. **'–मारात् प्रपुप्लुवे'** ३. **'अन्याद्रिसक्तान्'**

४. **'प्रकम्पिताङ्गान्' । 'पूर्वं वलिभीत्या कम्पिताङ्गान्, इदानीं रामदर्शनेन प्रकर्षेण कम्पिताङ्गान्'** इति का.श्री. । अस्वरसं व्याख्यानम् ।

५. **'सक्तान्'**

**(भा.दी.) सगद्गदमि**ति । हे सखे हनुमन्, वालिनो हितं तस्मै, मां हन्तुमिच्छतो जिघांसतः, जिघांसत इति जिघांसू, इमौ वीरौ मम पाश्वर्वं समीपं तत् आप्तौ नूनम्, हे विचक्षण कुशल, एतौ वीरौ परीक्षस्व, कौ किमर्थमागताविति विचारय । ईक्ष दर्शनाङ्कनयोर्लोट् । इति सूर्यपुत्रः, गद्गदेन भीतिवशात् स्खलद्वचनेन सहितं यथा भवति तथा सगद्गदम्, (तं) हनुमन्तं ऊचे ॥ ३४ ॥

**(सं.चं.)** वालिहिताय वीरौ । 'वालिप्रणिहितावेतौ शङ्केऽहं पुरुषोत्तमौ' (२.२१) इति च ॥ ३४ ॥

**स भिक्षुवेषो हनुमान् स्ववेषं विहाय विश्वेश्वरपाश्वर्वमाप्य ।**
**प्रणाममष्टाङ्गविशिष्टमस्मै चकार बिभ्रद् विनयं नयं च ॥ ३५ ॥**

**(भा.दी.) स** इति । स हनुमान् स्वस्य यो वेषः कपिवेषः, तं विहाय भिक्षोस्त्रिदण्डिनो वेषो यस्य स तथा सन् । मित्रशत्रुविवेकरूपपरीक्षार्थं गमने भिक्ष्वादिवेषस्य नीतिशास्त्रोक्तत्वादिति भावः । भिक्षुवेषं विधाय विश्वेश्वरस्य यत्पाश्वर्वं तत् आप्य, विनयः प्रश्रयस्तं च, नयो नीतिस्तमपि बिभ्रत् सन्, 'उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः' इत्युक्तानि यानि अष्टौ अङ्गानि अवयवाः, तैर्विशिष्टो युक्तस्तं प्रणामं अस्मै श्रीरामाय चकार ॥ ३५ ॥

**(सं.चं.)** सुग्रीवप्रार्थनया स्ववेषं कपिरूपं विहाय धृतभिक्षुवेषः । भिक्षुस्तापसः । उरः शिरो दृष्टिर्मनो वचः पादौ करौ जानुनी चेत्यष्टभिरङ्गैर्विशिष्टम् । भिक्षुभिरपि महात्मा गृहस्थोऽपि नन्तव्य इति नयं बिभ्रत् । अत्रोपेन्द्रवज्रा छन्दः ॥ ३५ ॥

**चरणतरुणपद्मपातिनं तं रघुतिलको[१] हनुमन्तमात्मदासम् ।**
**उदहरदथ चक्रलक्ष्मभाजा करकमलेन सुकोमलेन रामः ॥ ३६ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**किष्किन्धाकाण्डे प्रथमः सर्ग्गः ॥**

—०—

**(भा.दी.) चरणे**ति । अथ रघुषु तिलक इव तिलकः श्रेष्ठ इत्यर्थः, श्रीरामः चरणावेव तरुणे नूतने ये पद्मे तयोः पतितुं शीलमस्यास्तीति तथोक्तस्तम्, नमस्कारशीलमित्यर्थः, आत्मनः स्वस्य दासं तं हनुमन्तम्,

१. **'रघुकुलतिलको–'** इति छन्दोविरुद्धं पठन्तो भ्रान्ताः ।

चक्रस्य यल्लक्ष्म चिह्नं भजतीति तथोक्तं तेन, सुकोमलेन, कर एव कमलं तेन, उदहरत्, उत्थापयामास ॥ ३६ ॥

**इति श्रीविश्वपतितीर्थकृतायां श्रीसङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां किष्किन्धाकाण्डे प्रथमःसर्गः ॥**

**(सं.चं.)** चक्राङ्कितेन करकमलेनोदहरत्, उज्जहार, उद्धारेत्यर्थः। पुष्पिताग्रा छन्दः। नौ रयौ विषमपादयोः, नजजरगाः समयोर्हि पुष्पिताग्रा ॥ ३६ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां किष्किन्धाकाण्डे प्रथमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १४१५+३६=१४५१]

# द्वितीयः सर्ग्गः

**आञ्जनेयोऽञ्जलिं बध्वा कञ्जलोचनसन्निधौ ।**
**अञ्जसा वाक्यमादत्त मञ्जुलं चित्तरञ्जनम्  ॥ १ ॥**

**(भा.दी.)** श्रीरामस्य प्रणामानन्तरं हनुमान् किं चकारेत्यत आह– **आञ्जनेय** इत्यादिना । अञ्जनाया अपत्यं पुमानाञ्जनेयः हनुमान्, अञ्जलिं करसम्पुटं बध्वा, कञ्जवल्लोचने यस्य स तथा तस्य श्रीरामस्य सन्निधिस्तस्मिन्, अञ्जसा सम्यक् मञ्जुलं मनोहरम्, चित्तं रञ्जयतीति तथोक्तं तत्, वाक्यं आदत्त वक्तुमुपक्रान्तवान् ॥ १ ॥

**(सं.चं.)** आञ्जनेयः । 'स्त्रीभ्यो ठक्' (अ.सू.४.१.१२०) । कञ्जलोचनो नारायणात्मा रामः । 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति हि भगवतो लक्षणम् । अञ्जसा सपदि । मञ्जुलं अर्थतः शब्दतश्च रम्यम् । ललितपदबन्धम्, रमणीयार्थं च । मञ्जुलं मनोहरमिति व्याख्यानं चित्तरञ्जनमित्यनेन पुनरुक्तम् । अत एव चित्तरञ्जनम् । कर्णाटानां प्रियो द्वितीयाक्षरप्रासः ॥ १ ॥

**चोद्यस्यास्योत्तरं वीर प्रतिभा प्रतिभाषते ।**
**तथाऽपि चोद्यतेऽस्माभिर्भवदालापलोलुपैः  ॥ २ ॥**

**(भा.दी.)** **चोद्ये**ति । हे वीर श्रीराम, अस्य मद्बुद्धिस्थस्य, चोद्यस्य त्वं क इति प्रश्नस्य, उत्तरं प्रत्युत्तरं तत्, प्रतिभा स्वरूपप्रज्ञैव प्रतिभाषते प्रयच्छति । त्वं श्रीनारायण एव नान्य इति साक्षिरूपज्ञानमेव विषयीकरोति अतस्त्वं क इति प्रश्नस्यावकाशो नास्तीत्यर्थः । तथाऽपि भवता सह आलापो मिथः सम्भाषणम्, तत्र लोलुपैः लोलैः अस्माभिः चोद्यते त्वं क इत्यादिरूपेण पृच्छ्यते । चुद प्रेरणे लट् । अनेन श्रीरामं प्रत्युत्तरत्र क्रियमाणप्रश्नः संशयपूर्वको न भवतीत्युक्तं भवति ॥ २ ॥

**(सं.चं.)** मया क्रियमाणस्य चोद्यस्य मम प्रतिभैवोत्तरं प्रतिभाषते । स्वरूपप्रतिभयैवोत्तरं प्रतिभाति । तथाऽपि भवान् चोद्यते पृच्छ्यते प्रेर्यते वा । चुद सञ्चोदने । 'सञ्चोदनं प्रेरणम्' इति क्षीरस्वामी ॥ २ ॥

**को भवान् भुवनाश्चर्य्यं रूपमीदृशमुद्वहन् ।**
**नन्दने नन्दितुं योग्यः क्षुद्रं वनमिदं गतः ॥ ३ ॥**

**(भा.दी.) क** इति । भुवनेषु आश्चर्यं तत्, ईदृशं रूपं उद्वहन्, नन्दनं नन्दनाख्येन्द्रोद्यानं तस्मिन्, नन्दितुं योग्यः, क्षुद्रं अल्पं इदं वनं गतः भवान् कः? ॥ ३ ॥

**(सं.चं.)** को भवान्? नन्दितुं विहर्तुम् । कुतः क्षुद्रं वनमिदं गतः? क्षुद्रं निकृष्टम् ॥ ३ ॥

**जटाचीराक्षमालानां[1] त्वत्सङ्गममहोत्सवे ।**
**मौलिकौशेयवलयैः कुत्र यातं समत्सरैः ॥ ४ ॥**

**(भा.दी.) जटे**ति । जटाश्च, चीरं वृक्षत्वक् तच्च, अक्षमाल्यं जपमाला तच्च, तेषां त्वया सह यः सङ्गमः स एव महान् य उत्सवः, तस्मिन् समत्सरैः मत्सरेण सहितानीव तैः, मौलिः किरीटं स च, कौशेयं पीताम्बरं तच्च, वलयं करभूषणं तच्च, तैः कुत्र यातं गतम्? किरीटादिधारणयोग्यस्य तव जटादिधारणं किन्निमित्तमभूदिति भावः ॥ ४ ॥

**(सं.चं.)** मौलिं मकुटं जटाऽऽचक्राम । कौशेयं पीताम्बरं चीरं वल्कलमाचक्राम । वलयं कटकमक्ष-माला । तत्कुतः? ॥ ४ ॥

**बाणपूर्णे इमे तूणी पाणिः कोदण्डमण्डितः ।**
**अहो परिघबाहो त्वां[2] शंसन्ति खलखण्डनम् ॥ ५ ॥**

**(भा.दी.) बाण** इति । परिघवद् बाहू यस्य स तत्सम्बुद्धिः, श्रीराम, ते तव बाणपूर्णे इमे तूणी, कोदण्डमण्डितः पाणिः, इत्येते खलानां खण्डनं नाशः, तत् शंसन्ति निरूपयन्ति । शंसु स्तुतौ लट् । अहो आश्चर्यम् ॥ ५ ॥

**(सं.चं.)** तूणी च पाणिश्च शंसन्ति । परिघो दण्डाकार आयुधविशेषः । परिघाविव बाहू अस्य । अहो परिघबाहुताऽपि त्वां खलखण्डनं शंसति । खलान् खण्डयतीति खलखण्डनः ॥ ५ ॥

---

१. **'–माल्यानाम्'** इति वि.ती.पाठः ।
२. **'–बाहो ते शंसन्ति'** इति वि.ती.पाठः ।

**एषा खड्गलता श्यामा चण्डिकेवातिचण्डिका ।**
**केषां प्राणानहार्षीत् ते केषां प्राणान् हरिष्यति ॥ ६ ॥**

**(भा.दी.) एषेति** । चण्डिकेव भद्रकाळीव, अतिचण्डिका अतिक्रूरा, श्यामा ते तव एषा खड्गलता, केषां शत्रूणां प्राणान् अहार्षीत्, अपहृतवती? हृञ् हरणे लुङ् । केषां प्राणानुत्तरत्र हरिष्यति वा? ॥ ६ ॥

**(सं.चं.)** लतावल्लसन् खड्गः । श्यामा कृष्णवर्णा, खड्गलता च चण्डिका च । अतिचण्डिकाऽतिकोपना, निर्दया शत्रुमारणकर्मणि ॥ ६ ॥

**अन्वेष्टुमिव सन्त्यक्तं कृतकृत्यो भवन्[१] कुतः ।**
**अम्बुजाभे प्रतिस्तम्बं व्यापारयसि लोचने ॥ ७ ॥**

**(भा.दी.) अन्विति** । कृतं कृत्यं कार्यं येन स तथा भवन्, सन्त्यक्तं परित्यक्तं वस्तु, तत् अन्वेष्टुमिव मार्गयितुमिव, अम्बुजवदाभा कान्तिर्ययोस्ते तथोक्ते लोचने, स्तम्बं स्तम्बं प्रति प्रतिस्तम्बम्, प्रतिगुल्म-मित्यर्थः , कुतः कारणात् व्यापारयसि व्यापारयुक्ते करोषि? निरीक्षस इत्यर्थः । व्याङ्पूर्वकात् पार तीर समाप्तावित्यस्माल्लट् ॥ ७ ॥

**(सं.चं.)** सन्त्यक्तं समुज्झितम्, नतु नष्टम्, किमप्यन्वेष्टुमिव । कृतकृत्यो भवन् सन्नप्यकृतकृत्यइव । प्रतिस्तम्बं प्रतिगुल्मम् ॥ ७ ॥

**अनुगन्ताऽनुरूपात्मा कोऽयं ते पुरुषर्षभ[२] ।**
**चतुरङ्गं बलं[३] त्यक्त्वा परिवारं यमग्रहीः[४] ॥ ८ ॥**

**(भा.दी.) अन्विति** । हे पुरुषर्षभ, पुरुषेषु श्रेष्ठ श्रीराम, ते तव अनुगन्ता पृष्ठत आगन्ता, अनुरूप आत्मा स्वरूपं यस्य स तथा, अयं पुरुषः कः? चत्वारि अङ्गानि यस्य तत्तथोक्तम्, तद् बलं सैन्यम्, तत् त्यक्त्वा यं लक्ष्मणं परिवारं भृत्यजनं अग्रहीः परिगृहीतवानसि । ग्रह उपादाने लुङ् ॥ ८ ॥

**(सं.चं.)** समग्रं चतुरङ्गं बलं त्यक्त्वा तत्स्थाने यमेकं परिवारमग्रहीः ॥ ८ ॥

---

१. **'भवान् कुतः'** इति पाठे–**'व्यापारयति लोचने'** इत्युत्तरार्धपाठः । २. **'पुरुषर्षभः'**
३. **'चतुरङ्गबलं'** ४. **'परिवारत्वमग्रहीत्'**

**इदानीमन्यलोकेभ्यो मन्ये धन्यामिमां धराम् ।**
**पदपद्मभराक्रान्तां[1] युवयोः पद्मलोचन ॥ ९ ॥**

**(भा.दी.) इदानीमि**ति । पद्मवल्लोचने यस्य तत्सम्बुद्धिः, श्रीराम, युवयोः पदान्येव पद्मानि तैः समाक्रान्तां अङ्किताम्, इमां धराम्, इदानीं अन्ये ये लोकाः स्वर्गादयः, तेभ्यः धन्यां मन्ये । मन ज्ञाने लट् । प्रकटतया त्वत्पादसङ्गस्येदानीमन्यलोकेष्वभावादिति भावः ॥ ९ ॥

**(सं.चं.)** साक्षात् पदपद्मभराक्रान्ताम् । भरो गरिमा ॥ ९ ॥

**नरलोकानुरागेण नरनारायणावुभौ ।**
**अवतीर्य्य [2]महीपृष्ठे चरतः[3] प्रतिभाति मे ॥ १० ॥**

**(भा.दी.) नरे**ति । उभौ नरनारायणौ, नराणां यो लोकः, तस्मिन् योऽनुरागः अनुग्रहलक्षणस्तेन, नरलोकस्थभक्तजनानुग्रहेच्छयेत्यर्थः, मह्या यत्पृष्ठं तळं तस्मिन्, अवतीर्य चरतः सञ्चारं कुरुतः । चर गतिभक्षणयोर्लट् । इति मे प्रतिभाति प्रकाशते । भा दीप्तौ लट् ॥ १० ॥

**(सं.चं.)** नरनारायणौ चरत इति प्रतिभाति मे ॥ १० ॥

**वालिनो वानरेन्द्रस्य भ्राता भ्रातृव्यतां गतः ।**
**सुग्रीवो नाम तस्याहं सुसखा वायुनन्दनः ॥ ११ ॥**

**(भा.दी.)** स्वात्मानं विज्ञापयति– **वालिन** इति । वानरेन्द्रस्य वालिनः भ्राता, भ्रातृव्यतां वालिनः शत्रुतां गतः, यः सुग्रीवो नाम सुग्रीव इति प्रसिद्धो वानरः, अहं तस्य सुग्रीवस्य सुसखा । 'न पूजनात्' (अ.सू.५.४.६९) इति टजभावः । वायुनन्दनः अस्मि ॥ ११ ॥

**(सं.चं.)** वस्तुतः भ्राता । इदानीं भ्रातृव्यतां शत्रुतां गतः । सुसखा गुरुवत् पूजनीयः सखा । 'पूजायां स्वतिग्रहणं कर्तव्यम्' इति वार्त्तिकम् ॥ ११ ॥

---

१. **'पदपद्मसमाक्रन्ताम्'** इति वि.ती.पाठः । **'पादपद्मभराक्रान्ताम्'** इति कचित् । २. **'–र्यावनीपृष्ठे'**
३. **'चरथः प्रतिभाति'**

**अपूर्वपुरुषं दृष्ट्वा भवन्तं तेन बिभ्यता ।**
**जिज्ञासुना प्रेषितोऽहं[१] भिक्षुरूप उपागमम्[२] ॥ १२ ॥**

**(भा.दी.) अपूर्वे**ति । पूर्वमदृष्टोऽपूर्वः स चासौ पुरुषश्च तं भवन्तं दृष्ट्वा बिभ्यता, अत एव जिज्ञासुना, त्वत्स्वरूपं ज्ञातुमिच्छता तेन सुग्रीवेण प्रेषितः अहम्, भिक्षोः त्रिदण्डिनः रूपं यस्य स तथा सन् त्वत्समीपं उपागमं आगतोऽस्मि ॥ १२ ॥

**(सं.चं.)** स बिभाय । भीत्वा च भवन्तं जिज्ञासते । अतस्तदर्थमहं भिक्षुरूप उपागमम्, त्वत्समीपमागमम् । भिक्षुरिति तापसः, ब्रह्मचारी वानप्रस्थो वा मानुषः । न यतिः ॥ १२ ॥

**श्रुत्वा वाक्यं हनुमतो रामो लक्ष्मणमब्रवीत् ।**
**अमित्राणाममित्रोऽयं[३] सौमित्रे मित्रमेष नः[४] ॥ १३ ॥**

**(भा.दी.) श्रुत्वे**ति । श्रीरामः हनुमतः इति यद्वाक्यं तत् श्रुत्वा, हे सौमित्रे, अयं नः अमित्राणां शत्रूणां अमित्रः शत्रुः । एषः नः मित्रं मित्रभूतः इति लक्ष्मणं अब्रवीत् ॥ १३ ॥

**(सं.चं.)** 'एतच्छ्रुत्वा वचस्तस्य रामो लक्ष्मणमब्रवीत्' (३.२५) इति च । सीतापहारणाद् रावणोऽमित्रः, तेन सख्यप्रतिज्ञानाद् वाली च । योऽमित्राणाममित्रः स मित्रमिति राजनीतिः । तेनायं मित्रमेव नः ॥१३॥

**व्यक्तं व्याकरणं कृत्स्नमनेन बहुधा मतम् ।**
**बहु व्याहरताऽनेन न किञ्चिदपशब्दितम् ॥ १४ ॥**

**(भा.दी.) व्यक्तमि**ति । अनेन वायुपुत्रेण, कृत्स्नं व्याकरणं व्याकरणशास्त्रम्, व्यक्तं स्पष्टं यथा भवति तथा, बहुधा मतं ज्ञातम्, यतः बहु यथा भवति तथा व्याहरता, बहूनि वाक्यानि व्यवहरता, अनेन किञ्चिदपि पदं नापशब्दितम् अपशब्दतया न व्यवहृतम् ॥ १४ ॥

**(सं.चं.)** बहु वचो व्याहरता । अपशब्दः प्रयुज्यते अपशब्द्यते । नापशब्दितम् । नापशब्दः प्रयुक्त इत्यर्थः । इयमत्र वैयाकरणानां प्रक्रिया–'शब्द उपसर्गादाविष्कारे भाषणे च । अपशब्दयति अपशब्दं

१. **'प्रेरितोऽहम्'**

२. **'भिक्षुरूपमुपागमम्'** इति कश्चित् । **'भिक्षुरूपं कर्मन्दिवेषं उपागमं प्राप्तवानस्मि'** इति का.श्री. ।

३. **'–ममित्रो नः सौमित्रे'** । नातिस्वरसः ।

४. **'मित्रमेव नः'** इति मूलपाठः स्यादिति भाति ।

भाषते । कर्मणि अपशब्द्यते । 'अपशब्दितमिति तारकादितच्' इति वदन्तो भ्रान्ताः । 'नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् । बहु व्याहरताऽनेन न किञ्चिदपशब्दितम्'(३.२९) इति च ॥ १४ ॥

**काकुत्स्थेनेति कथिते चित्तवित् तस्य लक्ष्मणः ।**
**उदाहरदुदारात्मा मधुरं मारुतिं प्रति ॥ १५ ॥**

**(भा.दी.) काकुत्स्थेने**ति । काकुत्स्थेन श्रीरामेण इति वाक्ये कथिते उदिते सति, तस्य श्रीरामस्य चित्तं वेत्तीति चित्तवित्, एतद्वचनस्य प्रतिवचनं दातव्यमित्यभिप्रायज्ञ इत्यर्थः । तत्र हेतुमुदाहरति– उदारेति । उदार उत्कृष्ट आत्मा बुद्धिर्यस्य स तथोक्तः लक्ष्मणः, मधुरं मनोहरं वाक्यम्, क्रियाविशेषणं वा, मारुतस्यापत्यं पुमान् मारुतिस्तं प्रति उदाहरत् । हृञ् हरणे लङ् ॥ १५ ॥

**(सं.चं.)** मधुरमुदाहरत् व्याजहार । मरुत् मरुतः मारुत इति त्रीणि प्राणनामानि । 'मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुत्' इत्यभिदधति । मरुत एव मारुतः । मरुतस्य मारुतस्य वाऽपत्यं मारुतिः । 'अत इञ्' (अ.सू.४.१.९५) ॥ १५–६ ॥

**राज्ञो दशरथस्याङ्ग पुत्रोऽयं पुरुषर्षभः ।**
**रामो नाम रमाकान्तादन्यो[1] नास्य समो गुणैः ॥ १६ ॥**

**(भा.दी.) राज्ञ** इति । हे अङ्ग प्रिय, अयं पुरुषर्षभः रामो नाम राम इति प्रसिद्धः, राज्ञः दशरथस्य पुत्रः, रमायाः कान्तो भर्ता तस्मात् श्रीहरेः अन्यः पुरुषः, अस्य श्रीरामस्य ये गुणास्तैः समः सदृशो नेति मारुतिं प्रति उदाहरदिति पूर्वेणान्वयः ॥ १६ ॥

**किरीटं कीटवत् त्यक्त्वा[2] महाराज्यैकलक्षणम् ।**
**गुरोर्नियोगं शिरसा वहन् वनमुपाययौ[3] ॥ १७ ॥**

**(भा.दी.)** तर्हि वनं प्रति मुनिवेषेण किमर्थमागत इत्यत आह– **किरीटमि**ति । अयं महद् यद् राज्यं तस्य एकं मुख्यं यल्लक्षणं चिह्नभूतं किरीटं तत् कीटवत् क्षुद्रजन्तुवत् त्यक्त्वा गुरोः पितुर्दशरथस्य यो नियोग आज्ञा तं शिरसा वहन् सन् वनमरण्यं तत् उपाययौ ॥ १७ ॥

---

१. 'रमानाथादन्यो–' २. 'महाराजैक–' ३. 'वनमयं ययौ'

**(सं.चं.)** महतो राज्यस्य मुख्यं लक्षणम् । अन्ये क्षत्रियाः किरीटं शिरसा वहन्तः श्वयन्ति । अयं तु किरीटं कीटमिव शिरसि गतां यूकामिव त्यक्त्वा पितुर्नियोगमुवाह शिरसा ॥ १७–१९ ॥

**राकाचन्द्रं चन्द्रिकेव पतिमेनं पतिव्रता ।**
**अन्वयासीदनायासा जानकी जगतां पतिम्[१] ॥ १८ ॥**

**(भा.दी.) राके**ति । पतिव्रता, न विद्यते आयासो यस्याः सा तथा, जानकी जगतां पतिम्, (पतिं) एनं श्रीरामम्, राकायाः पूर्णिमायाश्चन्द्रस्तं चन्द्रिकेव ज्योत्स्नेव अन्वयासीत् अनुगताऽभूत् ॥ १८ ॥

**अस्य पादरजोदास्यं वरिष्ठं सर्वसम्पदः ।**
**वाञ्छन्नन्वागतो ज्येष्ठं नामतो लक्ष्मणोऽस्म्यहम् ॥ १९ ॥**

**(भा.दी.) अस्ये**ति । नाम्ना इति नामतः लक्ष्मणः अहम्, सर्वा या राज्यादिरूपा सम्पत् तस्याः वरिष्ठं श्रेष्ठम्, अस्य श्रीरामस्य पादयोर्यानि रजांसि तेषां दास्यं दासत्वं तत् वाञ्छन् सन्, ज्येष्ठं श्रीरामं अन्वागतोऽस्मि ॥ १९ ॥

**दुराचारेण चोरेण चोरिता रक्षसा वने ।**
**अस्य भार्य्या सती सीता शूद्रेणेव शुभा श्रुतिः ॥ २० ॥**

**(भा.दी.)** सीता क्व गतेत्यत आह– **दुरि**ति । दुष्ट आचारो यस्य स तथोक्तस्तेन, चोरेण रक्षसा रावणेन, वनं दण्डकारण्यं तस्मिन्, अस्य श्रीरामस्य भार्या सती पतिव्रता सीता, शुभा श्रुतिः वेदः शूद्रेणेव चोरिता कापट्येनापहृता ॥ २० ॥

**(सं.चं.)** वने चाक्षुषमन्वन्तरप्रळयेजले शुचा साधून् द्रावयतीति शूद्रज हयग्रीवासुरेण श्रुतिमानिनीं देवतेव चोरिता ॥ २० ॥

**सुग्रीवः किल साहाय्यं सीतां द्रष्टुं करिष्यति ।**
**प्रतीक्षते प्रभुर्य्युष्मान् सज्जनान् सज्जनप्रियः ॥ २१ ॥**

---

१. 'जगतां गतिम्'

**(भा.दी.) सुग्रीव** इति। सुग्रीवः सीतां द्रष्टुम्, सहायस्य भावः साहाय्यम्, तत् करिष्यति किल। दनुनामक-गन्धर्वोक्तस्य कथनमेतत्। सज्जनाः प्रियाः यस्य स तथोक्तः प्रभुः श्रीरामः सज्जनान् युष्मान् प्रतीक्षते। सर्वसमर्थोऽपि श्रीरामः सज्जनप्रियत्वादेव भवदनुग्रहवशात् स्वकार्यार्थं भवत्साहाय्यं प्रतीक्षत इत्यर्थः ॥२१॥

**(सं.चं.)** सुग्रीवः साहाय्यं करिष्यतीति दनुकवन्धाच्छ्रुतम्। सज्जनानामयं प्रियः। सज्जनाश्चास्य ॥ २१ ॥

**इत्युक्त ऊचे हनुमान् देव [1]दैवोपपादितम्।**
**सुग्रीवो वालिसन्त्रस्तस्त्वां राम शरणं गतः ॥ २२ ॥**

**(भा.दी.) इती**ति। इति लक्ष्मणेनोक्तः हनुमान्, हे देव श्रीराम, त्वत्साहाय्यकरणं दैवेन अस्मद्दिष्टेन उपपादितं सम्पादितम्। कुत इत्यत आह–**वाली**ति। वालिना सन्त्रस्तः सुग्रीवः त्वां शरणं गतः, इत्यूचे ॥ २२ ॥

**(सं.चं.)** अयि देव राम, दैवेन दिष्टेनोपपादितं त्वाम् ॥ २२ ॥

**पुरुषोत्तम ते सख्यं सौख्याय कपिरिच्छति।**
**स्वामिनस्तव कार्य्यं नः स्वकृत्यं साधयामहे ॥ २३ ॥**

**(भा.दी.) पुरुषे**ति। हे पुरुषोत्तम श्रीराम, ते सख्यं सखित्वम्, तत् कपिः सुग्रीवः सुखमेव सौख्यं तस्मै इच्छति। इषु इच्छायां लट्। स्वामिनः तव कार्यं प्रयोजनं तत् नः अस्माकं सम्बन्धि, अतः स्वकृत्यं स्वकार्यं यथा भवति तथा साधयामहे। राध साध संसिद्धौ लट् ॥ २३ ॥

**(सं.चं.)** तव कार्यं नः स्वकार्यमिति साधयामहे ॥ २३–४ ॥

**इत्युक्त्वा मारुती रामं सुस्मितास्यं सलक्ष्मणम्।**
**आरोपयामास तदा निजांसयुगलं द्रुतम् ॥ २४ ॥**

**(भा.दी.) इती**ति। मारुतस्य अपत्यं पुमान् मारुतिः हनुमान्, इति उक्त्वा, सुस्मितमास्यं यस्य स तथा, तम्, सलक्ष्मणं श्रीरामम्, निजौ यौ अंसौ स्कन्धौ तयोर्युगळम्, द्रुतं यथा भवति तथा आरोपयामास। रुह बीजजन्मनि प्रादुर्भावे च लिट्। 'रुहः पोऽन्यतरस्याम्' (अ.सू.७.३.४३) इति पः ॥ २४ ॥

---

१. 'देव देवोपपादितम्'

**ऋश्यमूकवनोद्देशान्मलयाद्रिं[1] व्रजन् हरिः ।**
**सरामलक्ष्मणो रेजे ससूर्य्येन्दुरिवाम्बुदः ॥ २५ ॥**

**(भा.दी.)** **ऋश्येति** । ऋश्यमूकस्य यो वनोद्देशो वनप्रदेशः, तस्मात् मलयनामको यः अद्रिस्तं व्रजन्, सरामलक्ष्मणः हरिः कपिः हनुमान् सूर्यश्च इन्दुश्च ताभ्यां सहितः अम्बुद इव रेजे ॥ २५ ॥

**(सं.चं.)** ससूर्येन्दुरित्यभूतोपमा ॥ २५ ॥

**सूर्य्यवंशध्वजे प्राप्ते सूर्य्यकोटिप्रभे प्रभौ[2] ।**
**सूर्य्यसूनुरभूत् फुल्लः सूर्य्ये आप्त इवाम्बुजम्[3] ॥ २६ ॥**

**(भा.दी.)** **सूर्येति** । सूर्यस्य यो वंशस्तस्य ध्वज इव ध्वजः, श्रेष्ठ इत्यर्थः, तस्मिन् सूर्याणां या कोटिस्तद्वत्प्रभा यस्य स तथा तस्मिन्, प्रभौ श्रीरामे प्राप्ते सति, सूर्यसूनुः सुग्रीवः, सूर्ये आप्ते सति उदिते सति, अम्बुजमिव फुल्लः विकसितः, सन्तुष्ट इत्यर्थः, अभूत् ॥ २६ ॥

**(सं.चं.)** सूर्ये आप्ते उदिते अम्बुजं फुल्लति । एवं राम आगते सूर्यसूनुः फुल्लोऽभूत् । विकसितवदनोऽभूत् । 'ञिफला विशरणे' इत्येतस्माद् धातोरुत्तरस्य निष्ठातकारस्य लकारः । आदेरुत्वमिडभावश्च । तेन फुल्ल इति क्तान्तं रूपम् । तथाहि पाणिनिः–'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' (अ.सू.८.२.५५) इति । फुल्लधातोस्तु फुल्लितं इति रूपम् । विशरणमत्र विदलनं विकसनजमित्येतत् । सूर्यवंशस्य ध्वज इवोन्नतः, वंशकीर्तिकरः । प्रथमद्वितीयाक्षरप्रासः ॥ २६ ॥

**उवाच वाचं हनुमान्[4] सुग्रीवमवलोकयन् ।**
**तात दाशरथिं रामं सानुजं पश्य नः पतिम् ॥ २७ ॥**

**(भा.दी.)** **उवाचेति** । हनुमान्, हे तात सुग्रीव, दाशरथिं दशरथपुत्रं सानुजं नः पतिं श्रीरामं पश्य इति सुग्रीवं अवलोकयन् सन् वाचं उवाच ॥ २७ ॥

**(सं.चं.)** सुग्रीवमवलोकयन्, तमुद्दिश्य उवाच ॥ २७ ॥

---

१. '–वनोद्देशान्माल्यवन्तं व्रजन्'
२. 'सूर्यकोटिसमप्रभे'
३. 'सूर्येऽम्बुजमिवोदिते'
४. 'उवाच हनुमांस्तत्र सुग्रीव–'

**कोटिजन्मार्ज्जितैः पुण्यैर्दुर्ल्लभं स्वयमागतम् ।**
**रामस्य दर्शनं[१] नोऽद्य कैवल्यमिव केवलम् ॥ २८ ॥**

**(भा.दी.) कोटी**ति । कोटिसङ्ख्याकानि यानि जन्मानि तेषु अर्जितानि, तैः पुण्यैः दुर्लभं श्रीरामस्य दर्शनं नः अस्माकं अद्य केवलं कैवल्यमिव मोक्षइव स्वयं प्रयत्नमन्तरा आगतं सम्प्राप्तम् ॥ २८ ॥

**(सं.चं.)** कोटिभिर्जन्मभिर्महता प्रयत्नेनार्जितैरपि पुण्यैर्दुर्लभं रामस्य दर्शनं स्वयमप्रयत्नेनाऽगतं लब्धम् । किमिव? केवलं कृत्स्नं निरवधिकम्, निश्चितं वा, कैवल्यममृतत्वमिव । 'केवलं निश्चिते क्लीबं वाच्यवत्त्वेककृत्स्नयोः' इति यादवप्रकाशः ॥ २८ ॥

**अनन्यशरणस्त्वं हि शरण्यं शरणं व्रज ।**
**रामं राजीवनयनमेष शोकाब्धिशोषणः ॥ २९ ॥**

**(भा.दी.) अनन्ये**ति । न विद्यते अन्यत्, शरणं रक्षको यस्य स तथोक्तस्त्वम्, शरण्यं शरणार्हम्, राजीववन्नयने यस्य स तथा तं श्रीरामं शरणमरणं तत् व्रज । व्रज गतौ लोट् । एषः श्रीरामः, शोक एवाब्धिस्तं शोषयतीति तथोक्तः (हि) ॥ २९ ॥

**(सं.चं.)** शरण्यं प्रपन्नत्रातारम् । शरणं व्रज त्वदीयोऽहमिति विश्वस्योपगच्छ ॥ २९ ॥

**भार्य्यामार्य्यस्य वैदेहीं द्रक्ष्यामो रक्षसा हृताम् ।**
**तत्र विश्वस्य मां वीर विश्वभर्त्तुः[२] सखा भव ॥ ३० ॥**

**(भा.दी.) भार्या**मिति । हे वीर सुग्रीव, आर्यस्य स्वामिनः श्रीरामस्य भार्यां रक्षसा रावणेन हृतां वैदेहीं सीतां द्रक्ष्यामः । दृशेर्लृट् । तत्र सीतादर्शनविषये मां विश्वस्य विश्वासं प्राप्य विश्वभर्तुः श्रीरामस्य सखा भव । सीतादर्शनादिश्रीरामकार्यसाधकत्वेन मयि तिष्ठति सति त्वं तु त्वत्कार्यमहं साधयामीति श्रीरामं प्रति प्रतिज्ञाय तत्सख्यं सम्पादयेति भावः ॥ ३० ॥

**(सं.चं.)** अन्विष्य द्रक्ष्यामः । तत्र सीतान्वेषणविषये मां विश्वस्य, सीतान्वेषणभारं मयि विन्यस्य ॥३०॥

**मारुतेर्वाक्यमाकर्ण्य राघवस्य[३] पदान्तिके ।**
**धन्योऽस्म्यनुगृहीतोऽस्मि दासोऽस्मीत्यपतत् कपिः ॥ ३१ ॥**

---

१. **'रामसन्दर्शनम्'** २. **'विश्वकर्तुः'** ३. **'माधवस्य'** इति वि.ती. पाठः स्यात् ।

**(भा.दी.) मारुतेरि**ति । कपिः सुग्रीवः मारुतेः वाक्यं वचः, तत् आकर्ण्य माधवस्य तस्य श्रीरामस्य पदयोरन्तिकं समीपं तस्मिन्, अहं धन्यः कृतार्थः अस्मि, त्वया अनुगृहीतः अनुग्रहविषयीकृतः अस्मि, दासः अस्मि, इति वदन्निति शेषः, अपतत् नमश्चकार ॥ ३१ ॥

**(सं.चं.)** इति वदन् पदान्तिकेऽपतत् प्रणनाम ॥ ३१ ॥

**नरेन्द्रो वानरेन्द्रं तमुत्थाप्याकथयन्मिथः[१] ।**
**त्वत्कार्य्यं मित्र मत्कार्य्यं मत्कार्य्यं तावकं त्विति ॥ ३२ ॥**

**(भा.दी.) नरे**ति । नरेन्द्रः श्रीरामः वानरेन्द्रं तं सुग्रीवं उत्थाप्य, हे मित्र सुग्रीव, त्वत्कार्यं तव कार्यं वालिनिग्रहादिकं तत् मत्कार्यं मम कार्यम्, मत्कार्यं सीतान्वेषणादिकं तु तावकं तव सम्बन्धि इति मिथः अकथयत् । कथ वाक्यप्रबन्धे लङ् ॥ ३२ ॥

**(सं.चं.)** मिथोऽन्योन्यमकथयत् सङ्कथां चकार । मिथो रहसि वा प्रतिजज्ञे । 'मिथोऽन्योन्यरहस्ययोः' इति यादवप्रकाशः ॥ ३२ ॥

**ज्वलनं ज्वलयामास[२] हनुमान् सख्यसाक्षिणम् ।**
**स्खलति क्वचिदापत्सु नहि नीतिमतां मतम्[३] ॥ ३३ ॥**

**(भा.दी.) ज्वलनमि**ति । हनुमान् सख्यसाक्षिणं ज्वलनं वह्निं ज्वालयामास । ज्वल दीप्तौ इत्यस्माल्लिट् । अग्निसाक्षिकं सख्यकरणे निमित्तमाह– **स्खलती**ति । नीतिरेषामस्तीति नीतिमन्तः, तेषां पुरुषाणां मतम् अभिमतम्, गृहीतपक्ष इत्यर्थः, आपदो विपदस्तासु, क्वचित्कालेऽपि न स्खलति हि न चलति हि । स्खल चलने लट् । अतः प्रगृहीतस्य सख्यस्य कदाचित् स्खलनं मा भूदिति नीतिमान् हनुमान् सख्यसाक्षित्वेन वह्निं ज्वालयामासेति भावः ॥ ३३ ॥

**(सं.चं.)** ज्वलनं ज्वलयामास । ज्वलतिर्घटादिषु पठितः । तेन 'घटादयो मितः' इति गणसूत्रेण मित्त्वं प्राप्तम् । 'मितां ह्रस्वः' (अ.सू.६.४.९१) इत्युपधाया णिचि ह्रस्वे सति ज्वलयामासेति रूपम् । अथ

१. **'–कथयत् स्मितः'** २. **'ज्वालयामास'** इति वि.ती.पाठः । **'ज्वालयामास हनूमान्'** इति का.श्री.पाठः ।

३. का.श्री.टीकायां रीत्यन्तरेण व्याख्यातम्–**'यद्यपि नीतिमतां नीतियुक्तानां मतं सम्मतम्, अङ्गीकृतमिति यावत्, आपत्सु सङ्कटेषु, प्राप्तासु सतीषु, क्वचित् काले देशे वा न स्खलति न नश्यति । हि प्रसिद्धम् । तथाऽपि हनूमान् सख्यसाक्षिणं सखित्वस्य साक्षाद्द्रष्टारं ज्वलनं वह्निं ज्वालयामास ज्वलनयुक्तमकरोत्'** इति । नातिस्वरसमेतत् । मूलवाक्ययोर्व्यत्यसनात्, अध्याहारसापेक्षत्वाच्च । पुनर्ज्वलने हेत्वनुक्तेश्च ।

पुनः–'ज्वल-ह्वल-ह्मल-पल-नमामनुपसर्गाद् वा' इति गणसूत्रेण विकल्पाम्नानात् ज्वालयामासेति च रूपम्। सोपसर्गस्य तु मित्त्वं नित्यम्। तेन प्रज्वलयामासेत्येव। सख्यसाक्षिणम्। अग्निसाक्षिकं हि विवाहमिव स्नेहमपि निर्वर्तयन्ति। नीतिशास्त्रविदां मतमाशयः न क्वचित् स्खलति प्रमाद्यति। नीतिमनुसृत्यैव प्रवर्तते। अतो नीत्यनुगुणमग्निसाक्षिकं सख्यं साधयामास ॥ ३३ ॥

**सुग्रीव मा विलम्बस्व स्वामिन्नवसरोऽधुना ।**
**इत्युक्तौ तौ हनुमता वह्नेरन्तिकमीयतुः ॥ ३४ ॥**

**(भा.दी.)** हे सुग्रीव, मा विलम्बस्व, सख्यकरणे विलम्बं मा कुरु। लबि अवस्रंसने लोट्। हे स्वामिन्, अधुना अवसरः सख्यकरणसमयः प्राप्तः। हनुमता इति उक्तौ तौ रामसुग्रीवौ वह्नेः अन्तिकं समीपं तत् ईयतुः आगच्छताम्। इण् गतौ लिट् ॥ ३४ ॥

**(सं.चं.)** मा विलम्बस्व वृथा कालहरणं मा कार्षीः। अलसो मा भूः। स्वामिन् राम, अयमवसरः सख्यस्थिरीकरणाय सूक्तः क्षणः ॥ ३४ ॥

**हरीन्द्रहस्तं हस्तेन चक्राङ्केन स चक्रभृत् ।**
**गृह्णन् [१]साप्तपदीनार्थं वह्निं चक्रे प्रदक्षिणम् ॥ ३५ ॥**

**(भा.दी.) हरीन्द्रेति**। चक्रं बिभर्तीति चक्रभृत् सः श्रीरामः, चक्रस्य अङ्कश्चिह्नं यस्य स तथा तेन हस्तेन, हरीणां कपीनामिन्द्रस्य सुग्रीवस्य यो हस्तस्तं गृह्णन् सन्, साप्तपदीनं सख्यं तदर्थम्, 'सख्यं साप्तपदीनं स्यात्' इत्यमरः, वह्निं प्रदक्षिणं दक्षिणीकृत्य परितः सञ्चरणं तत् चक्रे ॥ ३५ ॥

**(सं.चं.)** हरीन्द्रस्य कपीन्द्रस्य सुग्रीवस्य। साप्तपदीनार्थं सख्यस्थिरीकरणार्थम्। 'साप्तपदीनं सख्यम्' (अ.सू.५.२.२२) इति पाणिनिः। सप्तभिः पदैरवाप्यत इति साप्तपदीनम्। वह्निं स्वसञ्चरणे प्रदक्षिणं दक्षभागगतं चक्रे। प्रगतो दक्षिणं प्रदक्षिणमित्यव्ययीभावः। तथाहि पाणिनिः–'तिष्ठद्गुप्रभृतीनि च' (अ.सू. २.१.१७) इति। तिष्ठद्गुगणपठितमिदं पदम्। वह्नेर्वामभागगतौ परितः प्रदक्षिणं प्रजग्मतुरित्यर्थः ॥३५॥

**सचिवैः संवृतो राजा सम्मतेन हनूमतः ।**
**उपासितं लक्ष्मणेन सुग्रीवो राममब्रवीत्[२] ॥ ३६ ॥**

---

१. **'सख्यप्रत्ययार्थम्'** इति, **'सत्यप्रत्ययार्थम्'** इति च क्वचित्।

२. **'सुग्रीवो वाक्यमब्रवीत्'** इति वि.ती.पाठः।

**(भा.दी.) सचिवैरिति** । सचिवैः भृत्यैः संवृतः सहितः राजा सुग्रीवः, लक्ष्मणेन उपासितं श्रीरामं प्रति, हनूमतः सम्मतमनुमतिस्तेन वाक्यं वचस्तत् अब्रवीत् ॥ ३६ ॥

**(सं.चं.)** राजा सुग्रीवः । हनूमतः सम्मतेन हनुमदभिप्रायानुगुणम् ॥ ३६ ॥

**निवेदितं हनुमता कार्य्यं नन्वार्य्य तावकम् ।**
**तत्र किञ्चिदभिज्ञानं वक्ष्ये दैवोपपादितम्[१] ॥ ३७ ॥**

**(भा.दी.) निवेदितमिति** । हे आर्य स्वामिन् श्रीराम, तव सम्बन्धि तावकम्, सीतान्वेषणलक्षणं कार्यम्, हनुमता निवेदितं ननु, मां प्रति ज्ञापितमेव । तत्र तत्साधनविषये दैवेनोपपादितं सम्पादितं (किञ्चित्) अभिज्ञानं चिह्नं तत् वक्ष्ये ॥ ३७ ॥

**(सं.चं.)** दैवेन विधिना, कपीनां भाग्यविशेषेण, भवितव्यतयाऽकस्मादुपपादितं प्रापितम् । अभिज्ञानं चिह्नम् । '**ಗುರುತು**, **ಕುರುಹು**' इति भाषायाम् ॥ ३७ ॥

**चतुर्भिः सचिवैः सार्द्धमहं[२] शैलतटे स्थितः ।**
**अद्राक्षं राक्षसं रूक्षं दशग्रीवं वियद्गतम् ॥ ३८ ॥**

**(भा.दी.) चतुर्भिरिति** । चतुर्भिः सचिवैः हनुमदादिभिः सार्धम्, शैलस्य ऋश्यमूकगिरेः, यत् तटं तस्मिन् स्थितः अहम्, रूक्षं भयङ्करम्, वियत् गगनं गतस्तम्, आकाशमार्गेण गच्छन्तमित्यर्थः, दश ग्रीवा यस्य तथा तं राक्षसं अद्राक्षम् ॥ ३८ ॥

**(सं.चं.)** चतुर्भिः हनुमता नळेन नीलेन तारेण च । शैलस्य तटे प्रपाते । '**ಕಣಿವೆ**' इति भाषायाम् । शैलप्रान्ते वा । शैलपाद इत्येतत् ॥ ३८ ॥

**क्रन्दन्तीं[३] रामरामेति लक्ष्मणेति च सुस्वरम् ।**
**स्फुरन्तीं रावणोपान्ते प्रापश्यं लोकसुन्दरीम् ॥ ३९ ॥**

---

१. 'दैवोपसादितम्' २. 'साकमहम्'
३. 'क्रन्दतीम्'

**(भा.दी.)** **क्रन्दन्तीमि**ति । हे राम राम इति, हे लक्ष्मण इति च, सु सम्यक् स्वरो यथा भवति तथा क्रन्दन्तीं रुदन्तीम्, रावणस्य उपान्तं समीपं तस्मिन् स्फुरन्तीं क्रोधेन ज्वलन्तीम्, लोकेषु सुन्दरीं मनोहरां स्त्रियं प्रापश्यम् ॥ ३९ ॥

**(सं.चं.)** स्फुरन्तीं वेपमानाम् । पातिव्रत्यप्रभया ज्वलन्तीं वा प्रकटं स्फुटमपश्यम् ॥ ३९ ॥

**त्वां विना न हि कान्तोऽस्या न ते कान्ताऽस्ति तां विना ।**
**सम्बन्धस्त्वनुमेयोऽयं चन्द्रिकाचन्द्रयोरिव ॥ ४० ॥**

**(भा.दी.)** सा च सीतैव भवेदित्याह– **त्वामि**ति । त्वां विना तस्याः कान्तः भर्ता नास्ति हि । ते तव तां विना कान्ता भार्या नास्ति । इत्ययं नियतभार्याभर्तृभावलक्षणः सम्बन्धः, चन्द्रिकाचन्द्रयोः सम्बन्ध इव अनुमेयः ऊहनीयः ॥ ४० ॥

**(सं.चं.)** तदेव स्फुटमाह– त्वां विना । दर्शनमात्रेणानुमेयोऽयं युवयोः सम्बन्धः ॥ ४० ॥

**सोत्तरीयाणि[१] रम्याणि निजान्याभरणानि सा[२] ।**
**राक्षसक्षयबीजानि मध्येऽस्माकममुञ्चत ॥ ४१ ॥**

**(भा.दी.)** **से**ति । सा सीता, राक्षसस्य रावणस्य यः क्षयः तस्मिन् बीजानि कारणानि, रम्याणि उत्तरीयाणि उत्तरीयवस्त्राणि, निजानि आभरणानि च, अस्माकं यन्मध्यं तस्मिन् अमुञ्चत । मुच्लृ मोक्षणे लङ् । इमानि वस्त्राभरणादीन्येते वानराः श्रीरामाय प्रदास्यन्ति । तेन सीता रावणनीतेति विदित्वा रावणं हनिष्यतीत्यभिप्रायेण स्थापितवतीति भावः ॥ ४१ ॥

**(सं.चं.)** सोत्तरीयाणि उत्तरीये बध्वा पातितानि । राक्षसक्षयबीजानि । आभरणदर्शनेनैव हि राक्षसकुल-संहारबीजावापो बभूव ॥ ४१ ॥

**तानि प्रत्यभिजानीहि न्यस्तान्यस्मासु सीतया ।**
**इत्युक्त्वा स[३] गुहागेहात्[४] तान्यादायाभ्यदर्शयत्[५] ॥ ४२ ॥**

---

१. **'सा+उत्तरीयाणि'** इति वि.ती.सम्मतः पदपाठः । अर्थस्तु न स्वरसः । २. **'–भरणानि च'** इति वि.ती.पाठः ।
३. **'इत्युक्त्वाऽसौ'** ४. **'गुहैव गेहं तस्मात्'** इति का.श्री. । ५. **'तान्यादाय व्यदर्शयत्'**

**(भा.दी.) तानी**ति । तानि सीतया (अस्मासु न्यस्तानि) अस्मन्मध्ये स्थापितानि उत्तरीयादीनि प्रत्यभिजानीहि, तानीमानि सीताभरणादीन्यनुसन्धत्स्व । ज्ञा अवबोधने लोट् । इति उक्त्वा सः सुग्रीवः गुहायां विद्यमानं यद्गेहं तस्मात्, तानि आदाय अभ्यदर्शयत् । दृशिर् प्रेक्षणे लङ् ॥ ४२ ॥

**(सं.चं.)** प्रत्यभिजानीहि स्मृत्वा परिचिनु तानि वा, अन्यानिवेति । '**ಗುರುತು ಹಿಡಿ**' इति भाषायाम् ॥ ४२ ॥

**आकल्पानुपगूह्याथ[1] सीतायाः सोत्तरीयकान् ।**
**शोकं सन्दर्शयामास निःशोको जगतां पतिः[2] ॥ ४३ ॥**

**(भा.दी.) आकल्पानि**ति । अथ न विद्यते शोको यस्य स निश्शोकः, जगतां पतिः श्रीरामः, उत्तरीयकैः सहितान्, सीतायाः आकल्पान् आभरणानि, उपगूह्य आलिङ्ग्य सीतावियोगनिमित्तको यः शोकस्तं दर्शयामास । जगत्पतित्वेन शोकलेशरहितोऽपि दुःखिवदनुकरणं चकारेत्यर्थः । अज्ञजनमोहनार्थं शोकवानिव विडम्बनं चकारेति ॥ ४३ ॥

**(सं.चं.)** आकल्पानलङ्कारान् । सोत्तरीयकान् उत्तरीयेण सहितान् । 'अनुकम्पायाम्' (अ.सू.५.३.७६) इति कन् ॥ ४३ ॥

**अमन्दानन्दसन्दोहे रामे शोको भवेत् कथम् ।**
**मन्दाकिनीपयःपूरे ज्वलनः प्रज्वलेत् कथम् ॥ ४४ ॥**

**(भा.दी.)** कुत इत्यत आह– **अमन्दे**ति । अमन्दाः प्रत्येकं पूर्णाः आनन्दाः, तेषां सन्दोहः समूहरूपः, तस्मिन् श्रीरामे शोकः कथं भवेत्? अत्र दृष्टान्तमाह– **मन्दाकिनी**ति । मन्दाकिन्याः गङ्गायाः यानि पयांसि तेषां यः पूरः प्रवाहः, तस्मिन् ज्वलनः कथं प्रज्वलेत्? न कथमपीत्यर्थः । ज्वल दीप्तौ लिङ् ॥ ४४ ॥

**(सं.चं.)** हिमशीतले मन्दाकिनीपयःपूरे ॥ ४४ ॥

**प्लवगेन्द्रः किलोपेन्द्रं सान्त्वयामास सामभिः ।**
**राक्षसानपनेष्यामस्तामानेष्याम इत्यपि ॥ ४५ ॥**

---

१. '–नुपगृह्याथ' २. 'जगतां गतिः'

**(भा.दी.) प्लवगे**ति । प्लवगानां कपीनामिन्द्रः सुग्रीवः, उपेन्द्रं श्रीरामं प्रति, वयं राक्षसान् रावणादीन्, अपनेष्यामः विनाशयिष्यामः । नीञो लृट् । तां रावणापहृतां सीतामपि आनेष्यामः, इत्येवमादिप्रकारैः सामभिः सान्त्ववचनैः सान्त्वयामास किल । षान्त्व सामप्रयोगे लिट् ॥ ४५ ॥

**(सं.चं.)** राक्षसान् सीतापहरणहेतुं तदनुगाश्च । तां सीताम् ॥ ४५–६ ॥

**देवो विज्ञाय सुग्रीवं स्वभक्तं भक्तवत्सलः ।**
**दोर्भ्यामाश्लिष्य दीर्घाभ्यामाह स्म हसिताननः ॥ ४६ ॥**

**(भा.दी.) देव** इति । भक्तवत्सलः भक्तेषु प्रियः देवः श्रीरामः, सुग्रीवं स्वभक्तं विज्ञाय, दीर्घाभ्यां दोर्षौ हस्तौ ताभ्यां आश्लिष्य हसितं सञ्जातहासमाननं यस्य स तथा सन् आह स्म अवदत् ॥ ४६ ॥

**भक्तिमानसि वत्स त्वं देवैस्तदनुमोदितम्[१] ।**
**येन सङ्गतिमात्रेण[२] शुश्रूषेयं कृता मम ॥ ४७ ॥**

**(भा.दी.) भक्ती**ति । हे वत्स सुग्रीव, त्वं मयि भक्तिमानसि, येन कारणेन, केवलं सङ्गतिः सङ्गतिमात्रं तेन, समागममात्रेणेत्यर्थः, त्वया मम इयं शुश्रूषा शोकसान्त्वनलक्षणसेवा कृता, तेन कारणेन देवैः तत् आवयोः सख्यं अनुमोदितं अनुमतीकृतम् ॥ ४७ ॥

**(सं.चं.)** वत्सेति । यद्यपि सुग्रीवो वयसाऽधिकः । अथापि स्वस्य जगत्पतित्वं भक्तवत्सलत्वं च द्योतयन् वत्सेत्याह । सङ्गतिमात्रेण । स्नेहसम्बन्धस्याव्यवहितोत्तरक्षणे । शुश्रूषा अभिज्ञानदर्शनरूपा । तेन ज्ञायते देवैस्तदावयोः सख्यमनुमोदितमिति ॥ ४७ ॥

**यतस्वाऽयतनेत्राया दर्शने प्लवगोत्तम ।**
**ब्रूहि कार्य्यं च ते धृष्टं[३] सत्यं तत् साधयामहे ॥ ४८ ॥**

---

१. **'देवैस्तेनानुमोदितः' । 'तेन कारणेन देवैर्ब्रह्मादिभिः अनुमोदितः सन्तोषितः । भक्तिमत्त्वेनाङ्गीकृत इति च'** इति का.श्री. । नातिस्वरसं व्याख्यानम् ।

२. **'सङ्गममात्रेण'**

३. **'कार्यं च मे धृष्टम्'**

**(भा.दी.) यतस्वे**ति । हे प्लवगोत्तम सुग्रीव, आयते नेत्रे यस्याः सा तथा तस्याः, दर्शनं दृष्टिस्तस्मिन् यतस्व यत्नं कुरु । यती प्रयत्ने लोट् । ते यत्कार्यं मया कर्तुमर्हं प्रयोजनं तत् धृष्टं निस्संशयं यथा भवति तथा ब्रूहि । तत् त्वया प्रोक्तं कार्यं वयं साधयामहे, सत्यं यथार्थम् ॥ ४८ ॥

**(सं.चं.)** धृष्टं धैर्ययुक्तं यथा स्यात् तथा ब्रूहि ॥ ४८–५० ॥

**इति ब्रुवाणं तिष्ठन्तं दृष्ट्वा रामं सलक्ष्मणम् ।**
**हरीन्द्रहनुमन्तौ तौ शाखे चिच्छिदतुस्तरोः ॥ ४९ ॥**

**(भा.दी.) इती**ति । इति ब्रुवाणं सलक्ष्मणं श्रीरामं तिष्ठन्तं दृष्ट्वा तौ हरीन्द्रहनुमन्तौ तरोः शाखे आसनार्थं चिच्छिदतुः । छिदिर् द्वैधीभावे लिट् ॥ ४९ ॥

**ते पुष्पपर्ण्णबहुले शाखे ताभ्यां समास्तृते ।**
**अद्ध्यासामासतुस्तत्र सुस्मितौ[1] राजनन्दनौ ॥ ५० ॥**

**(भा.दी.) ते** इति । पुष्पाणि च पर्णानि च तैः बहुले, ते च्छिन्ने, शाखे ताभ्यां हनुमत्सुग्रीवाभ्यां समास्तृते भूमौ निक्षिप्ते । तत्र शाखयोः, सु शोभनं स्मितं ययोस्तौ तथोक्तौ, राज्ञो दशरथस्य नन्दनौ रामलक्ष्मणौ अध्यासामासतुः । आस उपवेशने लिट् ॥ ५० ॥

**(सं.चं.)** ते शाखे अध्यासामासतुः । 'अधि शीङ्स्थासां कर्म' (अ.सू.१.४.४६) इति द्वितीया । 'अध्यासामासतुस्तौ च' इति सम्भावितः प्राचीनपाठः । 'तत्र' इति पाठे, तत्र हरीन्द्रहनुमद्भ्यां प्रदर्शिते आतिथ्यविषये, वन्यामपूर्वामिमामासनव्यवस्थां च दृष्ट्वा सुस्मितौ ॥ ५० ॥

**रेजाते रघुकुलकेतनौ गिरीन्द्रे सञ्जाते हनुमदिनात्मजानुषङ्गे ।**
**धाम्नि स्वे विसरति रामलक्ष्मणौ तावर्केन्दू गुरुबुधसंयुतौ[2] यथा खे ॥ ५१ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**किष्किन्धाकाण्डे द्वितीयः सर्ग्गः ॥**

---

१. **'–स्तत्र सस्मितौ'**
२. **'–र्केन्दू बुधगुरुसंयुतौ'** इति वि.ती.पाठः ।

**(भा.दी.) रेजाते** इति । रघोः कुलं गोत्रं तस्मिन् केतनौ प्रधानावित्यर्थः, तौ रामलक्ष्मणौ, हनुमांश्च इनस्य सूर्यस्यात्मजः सुग्रीवः स च तयोर्योऽनुषङ्गोऽनुकूलः समागमस्तस्मिन्, सञ्जाते सम्यक् सम्भूते सति, स्वे स्वकीये धाम्नि तेजसि सामर्थ्ये वा, विसरति सति, मारीचविराधादिनिग्रहेण प्रख्यातिं गतवति सति, बुधश्च गुरुश्च ताभ्यां संयुतौ अन्वितौ, अर्कश्च इन्दुश्च तौ, खं गगनं तस्मिन् यथा तथा, गिरीन्द्रो मलयाद्रिस्तस्मिन् रेजाते । राजृ दीप्तौ लिट् ॥ ५१ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां किष्किन्धाकाण्डे द्वितीयः सर्गः ॥**

**(सं.चं.)** प्रहर्षिण्योपसंहरति– रेजाते । गिरीन्द्रे मलयाचले रेजाते रघुकुलकेतनौ रामलक्ष्मणौ । केतनौ निकेतनौ, आश्रयौ । हनुमदिनात्मजयोः अनुषङ्गे परिचये सञ्जाते सति । स्वे धाम्नि तेजसि विसरति सति । अर्केन्दूइव रामलक्ष्मणौ । गुरुबुधाविव हनुमदिनात्मजौ । खे आकाशे ते चत्वारो ग्रहा यथा तथेमे चत्वारो माल्यवद्गिरीन्द्रे । अभूतोपमा । अपूर्वोऽयं समागमश्चतुर्ग्रहयोगसदृश इत्यर्थः । मनजरगैः प्रहर्षिणी ॥ ५१ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां किष्किन्धाकाण्डे द्वितीयसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १४५१+५१=१५०२]

# तृतीयः सर्ग्गः

**सहाऽसीनो हनुमता हरी राघवसन्निधौ ।**
**[१]प्राञ्जलिर्निष्पतद्बाष्पः करुणं वाक्यमब्रवीत् ॥ १ ॥**

**(भा.दी.)** श्रीरामं प्रति सुग्रीवः स्वकार्यं विज्ञापयति– **सहेति** । राघवस्य सन्निधिस्तस्मिन् हनुमता सहाऽसीनः हरिर्वानरः सुग्रीवः, प्रकृष्ट अञ्जलिर्यस्य स तथा सन्, निष्पतन् बाष्पो यस्य स तथा सन्, करुणं कृपास्पदं तत् वाक्यं अब्रवीत् ॥ १ ॥

**(सं.चं.)** हरिः सुग्रीवः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (अ.सू.६.३.१११) । करुणमब्रवीत् ॥ १–२ ॥

**वाली ज्येष्ठो मम भ्राता बलज्येष्ठो जगत्त्रये ।**
**राज्यं मित्राणि वित्तं च ममापहृतवान् बलात् ॥ २ ॥**

**(भा.दी.)** **वालीति** । जगतां यत्त्रयं तस्मिन् बलेन ज्येष्ठः श्रेष्ठः, मम ज्येष्ठो भ्राता सहोदरः, वाली मम यद् राज्यं तत्, मम मित्राणि च, मम यद् वित्तं तच्च, बलं बलात्कारस्तस्मात् अपहृतवान् ॥ २ ॥

**इतोऽपि दुःसहं किञ्चित् कथं वक्ष्ये तवाग्रतः[२] ।**
**प्रियां मम प्रणयिनीं बलाद् भुङ्क्तेऽपकृष्य सः[३] ॥ ३ ॥**

**(भा.दी.)** **इत** इति । इतः राज्यहरणादपि दुःसहम्, किञ्चित् वालिकृतं कर्म, तव अग्रतः कथं वक्ष्ये । ब्रूञ् व्यक्तायां वाचि लृट् । सः वाली प्रणयिनीं मयि स्नेहशीलाम्, मम प्रियां भार्याम्, बलं बलात्कारस्तस्मात् अपकृष्य भुङ्क्ते । भुज पालनाभ्यव्यवहारयोर्लट् ॥ ३ ॥

**(सं.चं.)** प्रियां भार्याम् । अपकृष्य मत्तो वियोज्य ॥ ३ ॥

---

१. **'–लिर्निपत–'** २. **'कथं वक्ष्यामि तेऽग्रतः'** ३. **'भुङ्क्ते प्रकृष्य सः'** इति, **'भुङ्क्तेऽपहृत्य'** इति च क्वचित् ।

**प्रेषितास्तेन हरयो बहवो निहता मया ।**
**ममैको हनुमान् बन्धुर्म्मज्जतो[१] नौरिवाम्भसि ॥ ४ ॥**

**(भा.दी.) प्रेषिता** इति । तेन वालिना प्रेषिताः बहवः हरयः कपयः मया निहताः । बलवद्भिरोधं सम्पाद्य तवावस्थानं कस्य बलेनेत्यत आह– ममेति । अम्भसि मज्जतः पुरुषस्य नौरिव मम एकः हनुमान् बन्धुः ॥ ४ ॥

**(सं.चं.)** प्रेषितास्तेन । निहताः नितरां हिंसिताः पीडिता गताः । 'यत्नवांश्च सुदुष्टात्मा मद्विनाशाय राघव । बहवस्तत्प्रयुक्ताश्च वानरा निहता मया' (८.३४) इति च । एतेन 'मया प्रेषिता हरयस्तेन निहताः' इति विपरीतं व्याख्यान्तो निरस्ताः ॥ ४ ॥

**शरण्यानन्यशरणं दीनं दासमवाऽशु माम् ।**
**त्राता किल त्रिलोक्यास्त्वमवतीर्ण्णोऽवनीतळे[२] ॥ ५ ॥**

**(भा.दी.) शरण्ये**ति । हे शरण्य शरणार्ह श्रीराम, न विद्यतेऽन्यत् शरणं रक्षको यस्य स तथोक्तस्तम्, दीनं दुःखिनं दुःखशीलम्, दासं मां अव रक्ष । अव रक्षणे लोट् । अवन्या यत् तळं तस्मिन् अवतीर्णः त्वं आशु त्रिलोक्याः त्राता किल । त्रैङ् पालने लुट्[३] ॥ ५ ॥

**(सं.चं.)** दासं मामव, आशु विलम्बमकृत्वा । त्वं किल त्रिलोक्यास्त्राता त्रायकः । त्रातुमेव चावतीर्णः ॥५॥

**अद्रयः कन्दुकायन्ते सिन्धवस्तस्य चान्धवः ।**
**देवासुरास्तृणायन्ते वालिनो बलमीदृशम् ॥ ६ ॥**

**(भा.दी.)** तद्बलमाह– **अद्रय** इति । तस्य वालिनः अद्रयः कन्दुकायन्ते कन्दुकवदाचरन्ति । सिन्धवः समुद्राः अन्धवः पल्वलायिताः । देवासुरास्तृणायन्ते तृणवदाचरन्ति । वालिनः बलं ईदृशम् ॥ ६ ॥

**(सं.चं.)** कन्दुका इवाऽचरन्ति कन्दुकायन्ते । तृणानीवाऽचरन्ति तृणायन्ते । आचारार्थे क्यङ् । सिन्धवः सागरा अन्धवः कूपाइव । 'अन्धुरब्धः प्रहिः कूपः' इति यादवप्रकाशः । सिन्धवोऽप्यन्धवन्ति ॥ ६ ॥

---

१. **'बन्धुर्मज्जताम्'** २. **'–तीर्णो भुवस्तळे'**

३. त्राता रक्षक इति सुबन्तं पदमिति युक्तम् । अन्यथा त्रिलोकीं त्रातेति स्यात् । त्रायतेः सकर्मकत्वात् ।

**अल्पमागो मया चीर्णं चित्तपूर्वं[१] न चैव तत् ।**
**चण्डो दण्डः कृतस्तेन साक्षी तत्रैष[२] मारुतिः ॥ ७ ॥**

**(भा.दी.)** ज्येष्ठेन सह विरोधे किं कारणमित्यत आह– **अल्पमि**ति । मया अल्पं आगः अपराधः चीर्णं आचरितम्, तच्च आचरणं चित्तपूर्वं मनःपूर्वं यथा भवति तथा नैव । तेन वालिना दण्डः अपराधाननुसारित्वेन चण्डः क्रूरः सर्वस्वापहारलक्षणः कृतः । अत्र अल्पापराधस्य चण्डो दण्डः अकारीत्यत्र मारुतिर्हनुमान् साक्षी ॥ ७ ॥

**(सं.चं.)** अल्पं नगण्यम् । आगोऽपराधः । तदपि न चित्तपूर्वम्, न बुद्धिपूर्वम् । दण्डः शिक्षा तु चण्डः उग्रोऽनल्पः ॥ ७ ॥

**ताते नावृक्षशिरसि[३] राज्ञि लोकान्तरं गते ।**
**वाली वानरराजोऽभूद्यौवराज्ये च मां व्यधात् ॥ ८ ॥**

**(भा.दी.)** एतदेव सोपोद्धातमाह– **तात** इति । नौ आवयोः ताते पितरि ऋक्षशिरसि ऋक्षशिरोनामके[४] राज्ञि अन्यः लोकः लोकान्तरं तत् गते सति, मृते सतीत्यर्थः, वाली वानरराजः अभूत् । मां युवा चासौ राजा च युवराजस्तस्य भावस्तत्वं तस्मिंश्च, युवराजत्व इत्यर्थः, व्यधात् अकरोत् । धाञो लुङ् । वालिसुग्रीवयोः ऋक्षरजसः पुत्रत्वं चेत्थम्– ब्रह्मणो योगमभ्यस्यतोऽश्रुकणादृक्षरजा नाम वानरो जातः । स कदाचित् पर्यटन् ब्रह्मलोकेऽप्सरसो रूपकारिणि कस्मिंश्चित् सरसि दैवयोगान्निमज्ज्याप्सरोरूपमभजत । तामप्सरसं दृष्ट्वा काममोहिताविन्द्रादित्यौ हस्तयोर्युगपदगृह्णीताम् । तत्रान्तरे इन्द्रस्य स्खलितं रेतः तस्याः शिरसि वालेष्वपतत् । ततो वाल्यभवत् । इन्द्रः काञ्चनीं जरामरणापहारिणीं मालां च दत्तवान् । सूर्यस्य रेतः ग्रीवायामपतत् । ततः सुग्रीवोऽभवत् । सूर्यस्तु हनुमन्तं सुग्रीवाय मित्रत्वेन दत्तवान् । एवमुत्पन्नाभ्यां कुमाराभ्यां सहितं दृष्ट्वा प्रहस्य ब्रह्माऽप्सरोरूपधारिणमृक्षरजसं यथारूपप्राप्तये कुमाराविमौ गृहीत्वाऽन्यस्मिन् वानररूपकारिणि सरसि निमज्जेत्यवदत् । सोऽपि तथा कृत्वा कुमाराभ्यां सह वानरत्वमभजत् । पश्चाद् विश्वकर्मनिर्मितायां

---

१. **'वित्तिपूर्वम्'** २. **'साक्षी त्वत्रैष मारुतिः'** इति वि.ती.पाठः स्यात् । **'साक्षी तत्रैव'** इति च क्वचित् ।

३. **'नावृक्षशिरसि'** इति सार्वत्रिकः पाठः । ऋक्षरजा इति रामायणे पठ्यते । वि.ती. टीकायामपि पूर्वमृक्षशरसि इति प्रतीकमादाय पश्चात् कथानिरूपणे ऋक्षरजा इत्येव नामासकृदुदितम् । तेन तदप्यनिर्णायकम् ।

४. **'ऋक्षरजसि ऋक्षरजोनामके'** इत्येव पाठः स्यात् ।

किष्किन्धायां देवदूतं प्रेषयित्वा ऋक्षरजसं सर्ववानरराजत्वेनाभ्यषेचयत् । सदामधुफलं मधुवनं च दत्तवानिति ग्रन्थान्तरे प्रसिद्धम् । एवं तयोर्माता पिता स एव ऋक्षरजास्तस्मात् भ्रातराविति तातेति चाभिहितम् ॥८॥

**(सं.चं.)** नौ आवयोस्ताते पितरि । ऋक्षशिरसीति प्रचुरं पठन्ति । सम्प्रति रामायणे ऋक्षरजा इति तन्नाम पठ्यते, नर्क्षशिरा इति । प्राय ऋक्षशिरा इत्येव ग्रन्थकृत्सम्मतो रामायणपाठः ॥ ८ ॥

**मायावी नाम बलवान् दुन्दुभेः पूर्वजोऽसुरः ।**
**स्त्रीनिमित्तेन[१] वैरेण किष्किन्धां निश्युपागमत् ॥ ९ ॥**

**(भा.दी.) मायावी**ति । मायावी नाम मायावीति प्रसिद्धः, बलमस्यास्तीति बलवान्, दुन्दुभेः दुन्दुभिनामकासुरस्य पूर्वजः ज्येष्ठः असुरः, स्त्री निमित्तं कारणं यस्य स तथा तेन वैरेण, किष्किन्धां प्रति किष्किन्धाख्यवालिगुहां प्रति निट् निशा तस्यां उपागमत् ॥ ९ ॥

**(सं.चं.)** मायावी दुन्दुभेरग्रजः मयसुतः । मण्डोदरीभ्राता । 'मायावी प्रथमस्तात दुन्दुभिस्तदनन्तरः' (उ.कां.१२.१३) इति मयवचनमुत्तरत्र । स्त्रीनिमित्तेन वैरेणेति । 'तेन तस्य महद् वैरं स्त्रीकृतं विश्रुतं पुरा' (कि.कां.९.४) इति च । एतेन वालिनः स्त्रीलोलत्वं स्फुटम् । न केवलं रुमा । अन्या अपि अनिच्छन्त्योऽपि तेन बलाद् भुक्ता आसुः । तत्रैका मायाविप्रजयिनी । तयोर्द्वेषः सञ्जात इति । तदिदं तस्य स्त्रीलौल्यं च रामेण तन्निग्रहणे कारणं बभूवेति ॥ ९ ॥

**गुहाद्वारि महाबाहुर्म्मम[२] भ्रातरमाह्वयत् ।**
**वाली निवारितोऽस्माभिर्निष्पपात गुहागृहात् ॥ १० ॥**

**(भा.दी.) गुहे**ति । महान्तौ बाहू यस्य स तथोक्तः असुरः, गुहायाः द्वाः द्वारं तस्याम्, मम भ्रातरं वालिनं आह्वयत् । ह्वेञ् स्पर्धायां शब्दे च लङ् । तदा अस्माभिः मत्प्रभृतिभिः निशायां युद्धार्थं न गन्तव्यमिति निवारितः वाली गुहायां विद्यमानं यद्गृहं तस्मात् निष्पपात ॥ १० ॥

**(सं.चं.)** आह्वयदिति । 'स्पर्धायामाङः' (अ.सू.१.३.३१) इत्यात्मनेभाषत्वं नाऽश्रितम् । वालिनो दर्शनमात्रेण भीत्वा प्रद्रुतस्य का स्पर्धेति सूचयितुमिव । रात्रौ मा भूद् युद्धमिति निवारितोऽपि ॥ १० ॥

---

१. **'स्त्रीनिमित्तेनेत्यनेन वालिना मायाविस्त्रीभोगे कृते तन्निमित्तेन वैरेण मायाव्यागमदिति भाति'** इति का.श्री. ।

२. **'महाबाहुं मम'**

**अन्वगां प्रणयादेनं द्रावयन्तं महासुरम् ।**
**मायावी च पराद्रुत्य [1]पाताळतळमाविशत् ॥ ११ ॥**

**(भा.दी.) अन्वगामि**ति । अहं महासुरं द्रावयन्तम्, एनं वालिनं प्रणयः स्नेहस्तस्मात् अन्वगाम् । इण् गतौ लुङ् । माया अस्यास्तीति तथोक्तः दैत्यः पराद्रुत्य पाताळस्य तळं प्रदेशस्तत् आविशत् ॥ ११ ॥

**(सं.चं.)** मां च वालिनं च दृष्ट्वा भीत्या पराद्रुत्य पलाय्य । 'असुरो जातसन्त्रासः प्रदुद्राव ततो भृशम्' (९.९) इति च ॥ ११–२ ॥

**गुहाद्वारि प्रतीक्षस्व यावदागमनं मम ।**
**मामित्युक्त्वाऽविशद् वीरस्तरसा स रसातळम् ॥ १२ ॥**

**(भा.दी.) गुहे**ति । वीरः प्रारब्धकार्यपर्यवसायी सः वाली, मम यावत्पर्यन्तं आगमनं भविष्यति तावत्पर्यन्तं गुहायाः द्वाः द्वारं तस्यां प्रतीक्षस्व प्रतीक्ष्य सन्तिष्ठस्व । ईक्ष दर्शनाङ्कनयोर्लोट् । इति मां उक्त्वा तरसा वेगेन रसातळं पाताळं तत् आविशत् ॥ १२ ॥

**संवत्सरमहं ज्येष्ठं प्रतीक्ष्य बिलसम्मुखे ।**
**सफेनं रुधिरापूरं दृष्ट्वाऽश्रौषं महास्वनम् ॥ १३ ॥**

**(भा.दी.) समि**ति । अहं संवत्सरः संवत्सरकालः, तम्, ज्येष्ठं वालिनं प्रतीक्ष्य बिलस्य सम्मुखं तस्मिन्, सफेनं रुधिराणामापूरः प्रवाहस्तं दृष्ट्वा महान् यः स्वनस्तं अश्रौषम् । श्रु श्रवणे लुङ् ॥ १३ ॥

**(सं.चं.)** रुधिरस्याऽपूरम् । बिलस्य सम्मुखे पुरतः, बिलद्वारि । महास्वनमसुराणाम् । 'नर्दतामसुराणां च ध्वनिर्मे श्रोत्रमागतः' (९.१८) इति च ॥ १३ ॥

**अथ चामङ्गलाशङ्की शोकशङ्कुविदारितः ।**
**किञ्चिद् विलप्य शैलेन गुहाद्वारं प्यधामहम् ॥ १४ ॥**

**(भा.दी.)** अथेति । अथ अमङ्गलं मरणलक्षणमशुभमाशङ्कितुं शीलं यस्य स तथा अहं शोक एव शङ्कुः कीलं तेन विदारितः सन् । 'शङ्कुः पत्रसिराजाले कीलेऽस्त्रे मेढ्रसङ्ख्ययोः' इति वैजयन्ती । किञ्चित् विलप्य,

---

१. **'पातालतलं पातालोकादुपरि विद्यमानं रसातलमविशत्'** इति का.श्री. ।

शैलः पर्वतस्तेन गुहाया यद् द्वारं तत् पुनर्यथा दैत्यो नाऽयास्यति तथा प्यधां पिहितं कृतवानस्मि । धाञो लुङ् ॥ १४ ॥

**(सं.चं.)** अमङ्गलं भ्रातुर्मरणरूपम् । शोकाख्येन शङ्कुना विदारणास्त्रेण । प्यधाम्, अपेरल्लोपः, अपिहितमकार्षम्, यथा न मायावी पुनरागच्छेत् ॥ १४–५ ॥

**अनिच्छन्तं च साम्राज्यं भ्रातृशोकेन मन्त्रिणः ।**
**यावदत्राभ्यषिञ्चन् मां तावद् वाली समागमत्[१] ॥ १५ ॥**

**(भा.दी.) अनिच्छन्तमि**ति । भ्रातुर्मरणनिमित्तो यः शोकस्तेन साम्राज्यमधिराजत्वं तत् अनिच्छन्तं मां मन्त्रिणः यावत् यदा अत्र साम्राज्ये अभ्यषिञ्चन् । षिच सेचने लङ् । तावत् तदा वाली च दैत्यान् हत्वा समागमत् ॥ १५ ॥

**वत्सरं मृगयित्वोग्रं यथैव मृगयुर्म्मृगम् ।**
**हत्वा मायाविनं प्राप्तो बिलं पिहितमैक्षत ॥ १६ ॥**

**(भा.दी.) वत्सरमि**ति । उग्रं मायाविनं मायाविनामकं असुरम्, वत्सरो वत्सरकालस्तम्, वत्सरकाल इत्यर्थः, मृगयित्वा अन्वेषणं कृत्वा, मृगयुः लुब्धकः मृगं यथा तथा हत्वैव प्राप्तः वाली बिलं पिहितं पर्वताच्छादितं ऐक्षत ॥ १६ ॥

**(सं.चं.)** तमसि निलीनमसुरं वत्सरकालं मृगयित्वा ॥ १६ ॥

**सुग्रीवेत्याह्वयन्नुच्चैरलब्ध्वा च प्रतिस्वरम्[२] ।**
**बिलात्[३] कृच्छ्रेण निर्ग्गत्य[४] किष्किन्धायामदृश्यत ॥ १७ ॥**

**(भा.दी.) सुग्रीवे**ति । सुग्रीव इति उच्चैः आह्वयन् । वाली प्रतिस्वरः प्रतिध्वनिस्तं अलब्ध्वा, बलं बाहुबलं तस्मात् कृच्छ्रं कष्टं तस्मात् बिलात् निर्गत्य किष्किन्धायां अदृश्यत ॥ १७ ॥

**(सं.चं.)** कृच्छ्रेणातिप्रयासेन बिलमुद्घाट्य ॥ १७–८ ॥

---

१. **'वाली समागतः'** २. **'प्रतिस्वनम्'**

३. **'बलात् कृच्छ्रात् विनिर्गत्य'** इति वि.ती.पाठः स्यात् । ४. **'निर्गम्य'**

**क्रुधा[१] जाज्वल्यमानं तं पदेऽहं पतितोऽवदम् ।**
**रक्ष राज्यं क्षमस्वाऽर्य्य बालिशत्वं ममेत्यलम् ॥ १८ ॥**

**(भा.दी.)** क्रुधेति । पदं पादस्तस्मिन् पतितः अहम्, क्रुध् कोपस्तया, अतिशयेन ज्वलतीति जाज्वल्यमानस्तम्, तं वालिनं प्रति, हे आर्य स्वामिन्, राज्यं कपिराज्यं तत् त्वं रक्ष, मम बालिशत्वं बाल्यं तत् क्षमस्व, क्षमूष् सहने लोट् । इति अलं सम्यक् अवदम् ॥ १८ ॥

**उक्त्वा बहुविधं वैरात् परुषं पुरुषोत्तम ।**
**मामेकवाससं दीनं नगरान्निरयापयत्[२] ॥ १९ ॥**

**(भा.दी.)** उक्त्वेति । हे पुरुषोत्तम श्रीराम, वैरं विद्वेषस्तस्मात् बहुविधं परुषं क्रूरवाक्यं उक्त्वा, एकं वासो वस्त्रं यस्य स तथा तम्, दीनं माम्, नगरं किष्किन्धापुरं तस्मात् निरयापयत् । यातेर्लङ् ॥ १९ ॥

**(सं.चं.)** नगरात् किष्किन्धातः ॥ १९ ॥

**ऋश्यमूके वसाम्यस्य दुर्गमे कारणान्तरात् ।**
**सहजं तं [३]निहन्यास्त्वं महामयमिवाहितम् ॥ २० ॥**

**(भा.दी.)** ऋश्येति । अन्यत्कारणं कारणान्तरं तस्मात्, वक्ष्यमाणमतङ्गमुनेः शापादित्यर्थः, अस्य वालिनो दुर्गमे गन्तुमशक्ये, ऋश्यमूकनामको यः पर्वतस्तस्मिन् वसामि । मे मम सह जातः सहजस्तम्, सोदरमित्यर्थः, तं वालिनं अहितं महान् य आमयो रोगस्तमिव त्वं निहन्याः संहर । हन्तेर्लिङ् ॥ २० ॥

**(सं.चं.)** कारणान्तरात् मतङ्गमुनिशापरूपात् । अस्य वालिनः दुर्गमे । महान् शस्त्रचिकित्सां विनाऽनिवर्त्यो य आमयस्तमिव ॥ २० ॥

**परिदेवनमित्यस्य देवः श्रुत्वाऽब्रवीद् वचः ।**
**एकेषुणा हनिष्यामि तव दारापहारिणम् ॥ २१ ॥**

**(भा.दी.)** परीति । देवः श्रीरामः इति अस्य सुग्रीवस्य परिदेवनं विलापस्तत् श्रुत्वा, तव दारान् भार्यामपहर्तुं शीलमस्यास्तीति तथा तं वालिनम्, एको य इषुस्तेन हनिष्यामि, इति वचः अब्रवीत् ॥ २१ ॥

---

१. 'क्रोधाज्जाज्वल्य–' २. 'नगरान्निरयातयत्' ३. 'निहन्या मे महा–'

**(सं.चं.)** एकेषुणा । रामायणे–'अमोघाः सूर्यसङ्काशा ममैते निशिताः शराः । तस्मिन् वालिनि दुर्वृत्ते निष्पतिष्यन्ति वेगिताः' (१०.३२) इति त्वालङ्कारिकं वचः । न तत्र बहुवचने तात्पर्यम् । हनिष्यति चैकेषुणा । अथच 'तस्मिन् वालिनि दुर्वृत्ते तेष्वेको निपतिष्यति' इत्येव प्राचीनो रामायणपाठः स्यात् । व्याख्यातारो हि बहुधाऽपपाठं पठन्ति ॥ २१–२ ॥

**इति प्रतिज्ञां रामस्य श्रुत्वा रविसुतोऽब्रवीत् ।**
**कथमेकेषुणा नाथ वद्ध्यो वाली बलोद्धतः[१] ॥ २२ ॥**

**(भा.दी.) इती**ति । रविसुतः सुग्रीवः श्रीरामस्य इति प्रतिज्ञां श्रुत्वा, हे नाथ, त्वया बलेन उद्धतः क्रूरः वाली, एको य इषुस्तेन कथं वध्यः, इति अब्रवीत् ॥ २२ ॥

**यस्य चर्म्मापि[२] नाभिन्दन् महेन्द्राहितहेतयः ।**
**तमसाधारणं मन्ये प्रतिज्ञाविषयं तव ॥ २३ ॥**

**(भा.दी.) यस्ये**ति । महेन्द्रस्य पुरन्दरस्य अहिता दैत्याः, तेषां हेतयः आयुधानि, यस्य वालिनः चर्मापि त्वचमपि नाभिन्दन् । भिदेर्लङ् । तव प्रतिज्ञाविषयं तं वालिनम्, असाधारणं असाधारणपुरुषलक्षणम्, अतिबलिष्ठं एकेषुणा हन्तुमशक्यमिति वा मन्ये । मन ज्ञाने लट् ॥ २३ ॥

**(सं.चं.)** महेन्द्रस्याहिताः शत्रवो दैत्यास्तैः सम्प्रयुक्ता हेतयः ॥ २३ ॥

**एवं ब्रुवाणं सुग्रीवमाचचक्षे स लक्ष्मणः ।**
**सखे कथं ते विश्वासो वालिनः सूदने भवेत् ॥ २४ ॥**

**(भा.दी.) एवमि**ति । सलक्ष्मणः श्रीरामः[३] एवं ब्रुवाणं सुग्रीवं प्रति, हे सखे, वालिनः सूदनं विनाशस्तस्मिन् ते विश्वासः कथं केन प्रकारेण भवेत्, इति आचचक्षे ॥ २४ ॥

**(सं.चं.)** सः लक्ष्मणः आचचक्षे । 'तथा ब्रुवाणं सुग्रीवं प्रहसन् लक्ष्मणोऽब्रवीत् । कस्मिन् कर्मणि निर्वृत्ते श्रद्दध्या वालिनो वधम्' (११.६९) इति च ॥ २४ ॥

---

१. **'बलोल्बणः'**

२. **'अस्य चर्मापि'** । **'यस्य वर्मापि'** इति च ।

३. 'का.श्री. टीकायामपि–**'सलक्ष्मणः रामः'** इत्येव । रामायणाननुगुणमेतत् ।

**इत्युक्त ऊचे सुग्रीवो देवेदमवधारय ।**
**इन्द्रारिर्दुन्दुभिर्नाम दृप्तोऽब्धिं योद्धुमभ्ययात् ॥ २५ ॥**

**(भा.दी.) इती**ति । इति उक्तः सुग्रीवः ऊचे, हे देव श्रीराम, इदं वक्ष्यमाणं वचः अवधारय शृणु । धृञ् धारणे लोट् । इन्द्रारिः दुन्दुभिर्नाम दुन्दुभिरिति प्रसिद्धः दैत्यः, दृप्तः बलोन्मत्तः सन्, अब्धिः समुद्राभिमानी वरुणस्तं योद्धुमभ्ययात् ॥ २५ ॥

**(सं.चं.)** देवेति राममागूर्य लक्ष्मणमाह ॥ २५–६ ॥

**वरुणो मरणाद् भीतः प्रतिवीरं सुरद्विषः ।**
**हिमवन्तमुवाचाथ हिमवानपि वालिनम् ॥ २६ ॥**

**(भा.दी.) वरुण** इति । मरणं मृतिस्तस्मात् भीतः वरुणः, सुरान् द्वेष्टीति सुरद्विट् तस्य दुन्दुभेः, प्रतिवीरं प्रतिभटं हिमवन्तं हिमवत्पर्वतमुवाच। नाहं त्वया योद्धुं शक्तः, किं तर्हि हिमवान् प्रतिभट इत्युवाचेत्यर्थः । अथ हिमवानपि वालिनं प्रतिवीरं उवाच । वरुणवचसा हिमवन्निकटं गत्वा युद्धं देहीत्युक्ते सोऽपि मरणाद् भीतो वालिनं प्रतिभटमाहेत्यर्थः ॥ २६ ॥

**समुद्रमद्रिं चाऽक्षिप्य दुन्दुभिर्दुन्दुभिस्वनः ।**
**किष्किन्धाद्वारमासाद्य योद्धुं वालिनमाह्वयत् ॥ २७ ॥**

**(भा.दी.) समुद्रमि**ति । दुन्दुभेः भेर्याः स्वन इव स्वनो ध्वनिर्यस्य स तथोक्तः दुन्दुभिः, समुद्रं अद्रिं च आक्षिप्य तिरस्कृत्य, किष्किन्धाया यद् द्वारं तत् आसाद्य योद्धुं वालिनं आह्वयत् ॥ २७ ॥

**(सं.चं.)** आह्वयदिति। आह्वआनक्षण एव तस्य स्पर्धाबुद्धिर्गलितेति परस्मैभाषा। भ्रातुर्मायाविनः, आवुत्तस्य रवणस्य च निग्रहेण विदितवीर्यो हि वाली ॥ २७ ॥

**महिषाकारमसुरं प्रतिद्रुत्य[१] महाकपिः ।**
**निजघान घनप्रख्यं मातङ्गमिव केसरी ॥ २८ ॥**

---
१. 'परिद्रुत्य'

**(भा.दी.) महिषेति** । महाकपिः वाली, महिषस्य आकार इव आकारो यस्य स तथा तम्, घनस्य प्रख्यः समानः तम्, मेघवन्नीलमित्यर्थः, असुरं दुन्दुभिं प्रतिद्रुत्य केसरी मातङ्गमिव गजमिव निजघान । हन्तेर्लिट् ॥ २८ ॥

**(सं.चं.)** घनप्रख्यं मेघराशिमिव कृष्णवर्णम् । असुरस्य गजस्य च समानमेतत् । मातङ्गो गजः । माद्यतीति मातङ्ग इति वैयाकरणाः । माद्यन् तङ्गति गच्छतीति वा । तगि गतौ । सादृश्यसम्बन्धेन मतङ्गस्य मेघस्यायं मातङ्ग इत्यन्ये । इदमपि निर्वचनं सूचयामासेव मूले–'घनप्रख्यम्' इति विशेषणेन ॥ २८ ॥

**वीर उत्तोलयन्[1] देहं तस्य योजनमाक्षिपत् ।**
**तस्माद् देहादपासर्प्पन्[2] सान्द्रा रुधिरबिन्दवः ॥ २९ ॥**

**(भा.दी.) वीर** इति । तस्य दुन्दुभेर्यो देहस्तं उत्तोलयन् बाहुभ्यामुत्तोलितं कुर्वन् वीरः वाली, योजनं तत्, एकस्मिन् योजन इत्यर्थः, आक्षिपत् प्राक्षिपत् । क्षिप प्रेरणे लङ् । तस्मात् ततः देहात्, सान्द्रा रुधिरबिन्दवः अपासर्पन् निर्जग्मुः । सृप्लृ गतौ लङ् ॥ २९ ॥

**(सं.चं.)** उत्तोलयन् वेगोत्कर्षार्थमुपर्यधश्च चालयन् । 'तं तोलयित्वा बाहुभ्यां गतसत्वमचेतसम् । चिक्षेप बलवान् वाली वेगेनैकं तु योजनम् । तस्य वेगप्रविद्धस्य वक्त्रात् क्षतजबिन्दवः । प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याऽश्रमं प्रति' (११.४७–८) इति च ॥ २९–३० ॥

**ऋश्यमूकाश्रयो दृष्ट्वा स्वाश्रमं[3] रुधिरोक्षितम् ।**
**अमर्षितो महर्षिस्तं मतङ्गो नाम शप्तवान् ॥ ३० ॥**

**(भा.दी.) ऋश्येति** । ऋश्यमूक आश्रयो यस्य स तथोक्तः, मतङ्गो नाम मतङ्ग इति प्रसिद्धः महर्षिः, स्वस्य यः आश्रमस्तं रुधिरेणोक्षितं सिक्तं दृष्ट्वा अमर्षितः सन् तं वालिनं शप्तवान् ॥ ३० ॥

**यदेमं[4] देशमायासि तदा वध्यो भवेरिति ।**
**वालिनो मुनिशापोऽयं वरोऽभून्मम तद्रिपोः ॥ ३१ ॥**

१. **'उत्तोलयन् गुरुत्वपरीक्षां कुर्वन्'** इति का.श्री. ।
२. **'देहादुपासर्पन्'**
३. **'स्वपदं रुधि–'**
४. **'यदीमम्'** इति, **'यदैनम्'** इति च क्वचित् ।

**(भा.दी.) यदे**ति । यदा इमं देशम्, ऋश्यमूकपर्वतमित्यर्थः, आयासि आगच्छसि, तदा वध्यः भवेः । इति वालिनः अयं मुनिना मतङ्गेन दत्तः शापः, तस्य वालिनो रिपोर्मम वरः वरसदृश अभूत् ॥ ३१ ॥

**(सं.चं.)** तद्रिपोर्वालिशत्रोर्मम वरोऽभूत् ॥ ३१ ॥

**वालिना कालितस्येश त्रिलोक्यां नास्ति मे पदम् ।**
**इममाश्रममाश्रित्य स्वामिन् जीवामि दीनधीः ॥ ३२ ॥**

**(भा.दी.) वालिने**ति । हे ईश, वालिना कालितस्य द्रावितस्य मे त्रिलोक्यां पदं स्थानं नास्ति । अतः हे स्वामिन्, दीना खिन्ना धीर्यस्य स तथोक्तः, अहं इमं आश्रमं आश्रित्य जीवामि ॥ ३२ ॥

**(सं.चं.)** कालितस्य निरस्तस्य । पदं निलयः ॥ ३२–३ ॥

**यदि दैतेयदेहं तं दूरं क्षिपसि राघव ।**
**तर्हि यास्यामि विश्वासमित्युक्त्वा विरराम सः ॥ ३३ ॥**

**(भा.दी.) यदी**ति । हे राघव, त्वं यदि तं दैतेयस्य दुन्दुभेर्यो देहस्तम्, दूरं यथा भवति तथा क्षिपसि, वालिवत् तोलयित्वा निक्षिपसि, तर्हि एकेषुणा त्वया हन्तुं शक्य इति यो विश्वासस्तं यास्यामि । सः सुग्रीवः इति उक्त्वा विरराम तूष्णींबभूव । रमु क्रीडायां लिट् ॥ ३३ ॥

**पूर्वदेवस्य देहं[1] तं पर्वतोपममीश्वरः ।**
**[2]अङ्गुष्ठलीलयैवाऽराच्छतयोजनमाक्षिपत् ॥ ३४ ॥**

**(भा.दी.) पूर्वे**ति । ईश्वरः सर्वसमर्थः श्रीरामः, पूर्वदेवस्य दैत्यस्य दुन्दुभेः, 'पूर्वदेवाः सुरद्विषः' इत्यमरः, पर्वतस्य उपमा यस्य स तथा तम्, तं वालिनिक्षिप्तं देहम्, अङ्गुष्ठस्य या लीला तयैव आराद् दूरे, 'आराद्दूरसमीपयोः' इत्यमरः, शतानां योजनानां समाहारः शतयोजनं तत् आक्षिपत् ॥ ३४ ॥

**(सं.चं.)** पूर्वदेवस्य असुरस्य । आराद् दूरे चिक्षेप । कियद्दूरे? शतयोजनमाक्षिपत् । 'राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन लीलया । तोलयित्वा महाबाहुश्चिक्षेप शतयोजनम्' (११.४-५) इति च । अर्वाचीनास्तु रामेऽनुकम्पया वाल्मीकिवचनमेवान्यथा पठन्ति– 'चिक्षेप दशयोजनम्' इति ॥ ३४ ॥

---

१. **'–देहस्य तद्देहं पर्व–'** इति, **'तं देहम्–'** इति च क्वचित् । २. **'अङ्गुलीलयैव'**

**विदार्य्य भूमिं पाताळे देहोऽचूर्णयदासुरान्[१] ।**
**गर्वोद्धतान् [२]शर्ववराद् रामस्य बलवेगतः ॥ ३५ ॥**

**(भा.दी.) विदार्येति** । सः देहः, श्रीरामस्य बलस्य यो वेगस्तस्मादिति ततः, भूमिं विदार्य, पाताळमधोभुवनं तस्मिन्, शर्वस्य यो वरस्तस्मात्, गर्वेण अवध्या वयमित्यभिमानेन उद्धतान् प्रवृद्धान् असुरान् अचूर्णयत् । चूर्ण सङ्कोचने लङ् ॥ ३५ ॥

**(सं.चं.)** रामायणानुक्तं प्रमेयविशेषमाह– विदार्य । शर्ववराद् वयमवध्या इति गर्वोद्धतान् स देहोऽचूर्णयत् रामस्य बलवेगतः । देहं निमित्तीकृत्य रामोऽचूर्णयदित्यर्थः । 'सोऽसुरानप्यचूर्णयत्' इत्येव मूलपाठः स्यात् । सुन्दरोऽयं पाठः । असुरसङ्घवचनस्य चाऽसुरशब्दस्य बहुवचनेऽसुरानित्येव रूपम् आसुरः, आसुरौ असुराः– इत्यादि । 'पर्श्वादियौधेयादिभ्यामणञौ' (अ.सू.५.३.११७) इति पाणिनिः । पर्श्वादिगणपठितोऽयमसुरशब्दः । तद्राजसञ्ज्ञोऽयं प्रत्ययः । 'ञ्यादयस्तद्राजाः' (अ.सू.५.३.११९) इति वचनात् । तद्राजसञ्ज्ञस्य च प्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य हि लुग् भवति–'तद्राजस्य बहुषु तेनैवास्त्रियाम्' (२.४.६२) इति । 'देहोऽचूर्णयतासुरान्' इति वा पाठः स्यात् । शर्ववरादिति । 'शर्वप्रसादजबलाद् दितिजानवध्यान् (म.भा.ता.नि.६.५) इति निर्णये ॥ ३५ ॥

**अत्याशङ्की कपिः प्रोचे पुनश्च पुरुषोत्तमम् ।**
**स्वत्वाद् देवाथ वक्ष्यामि क्षम्यतां[३] नाथ चापलम् ॥ ३६ ॥**

**(भा.दी.) अतीति** । अत्यन्तमाशङ्कितुं शीलमस्यास्तीति तथोक्तः, वालिनः स्वेनानुभूतं महद् बलं स्मृत्वा श्रीरामस्यैतादृशबलं दृष्ट्वाऽपि तद्वधे समर्थः स्याद् वा नवेत्याशङ्कावानित्यर्थः, कपिः सुग्रीवः, पुनश्च पुरुषोत्तमं श्रीरामं प्रति, हे देव, अथ स्वस्य स्वकीयस्य भावः स्वत्वं तस्मात् वक्ष्यामि । हे नाथ, चापलं यच्चित्तचाञ्चल्यं तत् क्षम्यताम् इति प्रोचे ॥ ३६ ॥

**(सं.चं.)** तव स्वीयत्वात्, मम वा त्वदीयत्वात् ॥ ३६ ॥

---

१. **'सोऽसुरानप्यचूर्णयत्'** इति वि.ती.पाठः स्यादिति भाति । **'देहोऽचूर्णयतासुरान्'** इति क्वचित् । स्यात् तथाऽपि वि.ती.पाठः । का.श्री. पाठोऽपि तथेति भाति ।

२. **'शम्भुवराद्–'**

३. **'क्षम्यतां मम चा-'**

जेतुं चतुर्गुणबलो हन्तुं शतगुणाधिकः ।
वीरो[1] वीरं समर्थः स्यान्नान्यत्र नियमो भवेत् ॥ ३७ ॥

**(भा.दी.) जेतुमि**ति । वीरः भटः वीरं प्रतिभटं जेतुम्, चत्वारो गुणा आवृत्तयो यस्य तत् चतुर्गुणम्, तादृशं बलं यस्य स तथा सन् समर्थः स्यात् । वीरः वीरं भटं हन्तुम्, शतं गुणा यस्य तत् तथोक्तम्, तेन बलेन अधिकः सन् समर्थः स्यात् । अन्यत्र चतुर्गुणबलरहिते शतगुणबलरहिते वा पुरुषे, नियमः शत्रुत्वेनाभिमतस्य जयनियमो वा हनननियमो वा न । किन्तु यादृच्छिक एव तत्र विजयादिरिति स्वाभिप्रायं वक्तुं लोके सिद्धन्याय-कीर्तनम् ॥ ३७ ॥

**(सं.चं.)** जेतुं चतुर्गुणबल इति । 'जेतुं चतुर्गुणबलो हि पुमान् प्रभुः स्याद्धन्तुं शताधिकबलोऽतिबलं सुशक्तः' (६.७) इति च निर्णये । अन्यत्र जयेदेवेति हन्यादेवेति वा नियमो नास्ति ॥ ३७–८ ॥

वालिना योजनं क्षिप्तस्त्वया तु शतयोजनम् ।
कुणपः किन्तु गरिमा प्रागार्द्रस्य विशिष्यते ॥ ३८ ॥

**(भा.दी.) वालिने**ति । वालिना कुणपः दुन्दुभिशवः योजनमेकयोजनं तत् क्षिप्तः, त्वया तु शतानां योजनानां समाहारः शतयोजनं तत्, पूर्ववद् बहुव्रीहिर्वा । एवं तर्हि वालिबलाच्छतगुणाधिके बले सिद्धे सति किं विज्ञापनीयमस्तीत्यत आह– **किन्त्वि**ति । किन्तु गरिमा भारः, आर्द्रस्य अशुष्कस्य कुणपस्य, प्राक् विशिष्यते अतिरिच्यते । शिष अतिशये[2] लट् ॥ ३८ ॥

कुलिशाच्चातिकठिनाः सप्त साला[3] इहोद्गताः ।
चालयेत् तान् बलाद् वाली च्छेत्तुं[4] पत्राणि न प्रभुः ॥ ३९ ॥

**(भा.दी.) कुलिशादि**ति । कुलिशं वज्रं तस्मादपि अतिकठिनाः सप्त सालाः इह उद्गताः उत्पन्नाः । वाली तान् वृक्षान् बलं बाहुबलं तस्मात् चालयेत् । चल कम्पने लिङ् । पत्राणि च्छेत्तुं प्रभुः समर्थः न ॥३९॥

**(सं.चं.)** सप्त सालाः । 'इमे च विपुलाः सालाः सप्त शाखावलम्बिनः । यत्रैकं घटते वाली निष्पत्रयितुमोजसा' (११.६७) इति च । निष्पत्रयितुं घटत एव केवलम् । न प्रभवतीत्यर्थमभिप्रेत्याऽह– च्छेत्तुं पत्राणि न

---

१. **'परो वीरम्'** २. **'शिष्लृ विशेषणे'** इति प्रचलितो धातुपाठः ।

३. **'सप्त तालाः'** इति फठन्ति का.श्री.प्रभृतयः । रामायणाननुगुणमेतत् । म.भा.ता.नि.विरुद्धं च । ४. **'क्षेप्तुम्'**

प्रभुरिति । 'पत्राणि लोप्तुमपि चोत्सहते न शक्तः' (६.६) इति हि निर्णये । 'सप्त तालाः' इति पठन्तो भ्रान्ताः । रामायणतात्पर्यनिर्णयादिसर्वग्रन्थविरोधात् । सालः= 'ಮತ್ತಿ' इति भाषायम् ॥ ३९ ॥

**विष्वञ्चस्ते विभिद्यन्ते त्वया यद्येकपत्रिणा ।**
**शङ्काशङ्कुर्म्मम हृदस्तर्हि साधूद्धृतो भवेत् ॥ ४० ॥**

**(भा.दी.) विष्वञ्च** इति । त्वया यदि, एकश्चासौ पत्री च तेन, विष्वञ्चः परितः स्थिताः ते वृक्षाः विभिद्यन्ते । भिदिर् विदारणे लट् । तदा तर्हि, शङ्कैव शङ्कुः कीलः, मम हृदः हृदयात् साधु सम्यक् यथा भवति तथा उद्धृतः भवेत् ॥ ४० ॥

**(सं.चं.)** विष्वञ्चः समन्ताद् व्याप्य स्थिताः । एकेन पत्रिणा बाणेन । उद्धृतः उत्पाटितः ॥ ४० ॥

**पूष्णः पुत्रे वदत्येवं रामः कार्म्मुकमाददे ।**
**लक्ष्मणास्येन्दुमालोक्य सायकं चैकमाददे ॥ ४१ ॥**

**(भा.दी.) पूष्ण** इति । पूष्णः सूर्यस्य पुत्रे सुग्रीवे एवं वदति सति, श्रीरामः कार्मुकं धनुस्तत् आददे । दाञ् दाने लिट् । लक्ष्मणस्य यदास्यं तदेवेन्दुस्तं आलोक्य, एकं सायकः शरस्तं आददे च ॥ ४१ ॥

**(सं.चं.)** पूष्णः विवस्वतः पुत्रे सुग्रीवे । यद्यपि विवस्वानन्यः । पूषाऽन्यः । भ्रातौ तौ । विवस्वानर्यमा पूषा' इति स्मरणात् । अथापि अर्यमेति पूषेति सवितेति विवस्वन्नामा सूर्योऽप्युच्यते । विशेषविवक्षया भिन्नार्था एते सामान्यविवक्षायामेकार्थाः सूर्यमाचक्षते । 'अर्कः सूर्योऽर्यमा सूरः' इति, 'मार्तण्डः सविताभानुर्भातुः पूषा दिनप्रणीः' इति यादवप्रकाशः ॥ ४१–३ ॥

**विरिञ्चवरतोऽभेद्यान्[1] विरिञ्चपदमिच्छतः ।**
**असुरांस्तरुतां यातान् ज्ञात्वा तानमुचच्छरम्[2] ॥ ४२ ॥**

**(भा.दी.) विरिञ्चेति** । असौ श्रीरामः, विरिञ्चस्य यो वरस्तस्मादिति ततः, अच्छेद्यान्, विरिञ्चस्य यत् पदं स्थानं तत् इच्छतः, असुरान् तरुतां यातान् प्राप्तान्, ज्ञात्वा तं शरं अमुचत् । मुचेर्लुङ् ॥ ४२ ॥

---

१. **'–वरतोऽच्छेद्यान्'** इति वि.ती.पाठः ।

२. **'तममुचच्छरम्'** इति वि.ती. पाठः । **'ज्ञात्वाऽसावमु–'** इति कचित् । **'ज्ञात्वाऽमुञ्चच्छरं तरून्'** इति का.श्री. पाठ इति भाति । **'तरून् सालवृक्षान् असुरान् ज्ञात्वा शरममुञ्चत्'** इति तट्टीका ।

**(सं.चं.)** विरिश्चवरतः। 'धातुर्वरादखिलपुम्भिरभेद्यरूपान्' (६.८) इति निर्णये। विरिश्चपदं सत्यलोकाधिपत्यम् । 'ब्रह्मत्वमाप्तुमचलं तपसि प्रवृत्तान्' (६.८) इति च ॥ ४२–३ ॥

**राममुक्तशरो भित्त्वा सप्त सालांश्च सत्वरः ।**
**धराधरं धरां चाधः सप्तलोकानदारयत् ॥ ४३ ॥**

**(भा.दी.) रामे**ति। श्रीरामेण मुक्तः शरः, त्वरया वेगेन सहितः सन्, सप्त च ते सालाश्च तान् भित्वा, धराधरः पर्वतस्तम्, धरां भूमिं च, अधः विद्यमानान् सप्त च ते लोकाश्च तांश्च अदारयत्। दॄ दारणे लङ् ॥ ४३ ॥

**सोऽसुरेन्द्रान् कुमुदिनः पाताळान्ते न्यपातयत्[1] ।**
**बृंहितान् ब्रह्मवरतो रम्भास्तम्भानिव क्षणात् ॥ ४४ ॥**

**(भा.दी.) स** इति। सः शरः पाताळस्यान्तोऽवसानं तस्मिन्, अन्ते प्रदेश इति वा, अवस्थितान्, ब्रह्मणो यो वरस्तेनेति ततः बृंहितान् परिपूर्णान्, कुमुदिनः कुमुदिनामकान् असुरेन्द्रान्, क्षणः क्षणकालस्तस्मात्, रम्भाणां कदळीनां स्तम्भानिव दण्डानिव न्यपातयत् ॥ ४४ ॥

**(सं.चं.)** 'प्रविष्टश्च मुहूर्तेन रसां भित्त्वा महाजवः। निष्पत्य च पुनस्तूर्णं स्वतूणीं प्रविवेश ह' (१२.४) इति रामायणे सूचितां भगवत्पादोदितां कथामाह– सोऽसुरेन्द्रान्। नाम्ना कुमुदिनः। 'नाम्नाऽसुराः कुमुदिनोऽब्जजवाक्यरक्षाः' (६.१०) इति च। रम्भास्तम्भान् अतिपेलवान् कदळीकाण्डानिवानायासेन ॥ ४४ ॥

**पद्मापतेः पाणिपद्मं सहसा हंसरूपवान् ।**
**प्रायाद् वायुमयो[2] बाण एवं कृतपराक्रमः ॥ ४५ ॥**

**(भा.दी.) पद्मे**ति। एवं कृतः पराक्रमो येन स तथोक्तः, वायुमयः मुख्यप्राणात्मकः बाणः, पद्मायाः लक्ष्म्याः पतेः श्रीरामस्य पाणिरेव पद्मं तत्, हंसवत् सूर्यवद् रूपमस्यास्तीति तथा सन्, 'हंसोऽश्वेऽर्के हरे विष्णौ' इति वैजयन्ती, हंसवदिति वेगवत्त्वेन हंसपक्षिवद् रूपवानिति वा, सहसा शीघ्रं प्रायात् ॥ ४५ ॥

**(सं.चं.)** वायुमयो बाणः। 'पञ्चात्मको मारुत एव बाणाः' इति ह्युक्तम्। उच्छ्वासनिःश्वासनिरूपकतया नासापुटद्वयगतो हंसरूपवान् वायुः ॥ ४५–६ ॥

---

१. **'पाताळान्तेऽन्वपा–'**

२. **'वायुमयः मुख्यप्राणदेवताकः'** इति का.श्री.।

**लोके यथैक आलोको बहूनर्थान् प्रकाशयेत् ।**
**एवमेकं हरेः कर्म्म बहूनर्थान् हि साधयेत् ॥ ४६ ॥**

**(भा.दी.)** एकोद्देशेन कृतस्यापि श्रीरामकर्मणः अनेकार्थसाधकत्वं सदृष्टान्तमाह– **लोक** इति । लोको भुवनं तस्मिन्, एकः आलोकः सूर्यादिप्रकाशः यथा बहून् अर्थान् प्रकाशयेत् । काशृ दीप्तौ लिङ् । एवं एकं हरेः कर्म बहूनर्थान् प्रयोजनानि साधयेद्धि । साध संसिद्धौ लिङ् ॥ ४६ ॥

**निष्कग्रीवोऽस्य सुग्रीवो[१] निपत्याङ्घ्रावभाषत ।**
**अनन्तवीर्य्यानुपम प्रसीद पुरुषोत्तम ॥ ४७ ॥**

**(भा.दी.)** **निष्के**ति । निष्कं कण्ठाभरणं ग्रीवायां यस्य स तथोक्तः सुग्रीवः, अस्य श्रीरामस्य अङ्घ्रिः पादस्तस्मिन् निपात्य नमस्कृत्वा अभाषत । अनन्तं वीर्यं यस्य तत्सम्बुद्धिः, हे अनुपम, हे पुरुषोत्तम श्रीराम, प्रसीद । षदऌ विशरणगत्यवसादनेषु लोट् । मच्चित्तचापल्यलक्षणमपराधं क्षमस्वेत्यर्थः ॥ ४७ ॥

**(सं.चं.)** निष्कः सौवर्णं वक्षोविभूषणम् । अङ्घ्रावात्मानं निपात्य । 'निपत्य' इत्येव मूलपाठः स्यात् ॥४७॥

**तृणैरिवाऽवृतं कूपं भस्मनेवाग्निमावृतम् ।**
**त्वां स्वच्छं मायया[२] च्छन्नं नायं वेद जळो जनः[३] ॥ ४८ ॥**

**(भा.दी.)** **तृणै**रिति । तृणानि स्थूलतृणानि तैः आवृतं आच्छादितं तं कूपमिव, भस्मना आवृतं आच्छादितं अग्निमिव, अयं जळः मन्दः जनः, स्वच्छं अज्ञानादिदोषरहितम्, मायया अचिन्त्यशक्त्या च्छन्नं त्वां न वेद । विद ज्ञाने लट् ॥ ४८ ॥

**(सं.चं.)** नायं वेद जड इति स्वात्मन एव परोक्षनिर्देशः । अयमिति पामरलोकसामान्यवचनं वा ॥४८॥

**इदानीमेव मे मृत्युं वालिव्याजं निपातय ।**
**इमामेव निशामीश शये मरणनिर्भयः ॥ ४९ ॥**

---

१. **'निपात्यङ्घ्राव–'** इति वि.ती.पाठः इति भाति । **'अस्य रामस्य अङ्घ्रौ पादे निपत्य पतित्वा नमस्कृत्येति यावत्'** इति का.श्री. ।

२. 'मायया स्वेच्छया' इति वि.भू. । **'महामायेत्यविद्येति (नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं) तवेच्छाऽनन्त कथ्यत इति प्रमाणात् मायया स्वेच्छया छन्नमाच्छादितम्'** इति का.श्री. ।

३. जडमेव प्राचीना जळमाचक्षते । **'अग्निमीळे'** इति यथा । **'जनो जडः'** इति क्वचित् ।

**(भा.दी.)** **इदानीमि**ति । हे ईश श्रीराम, वालीति व्याजः सञ्ज्ञामात्रं यस्य स तथा तम्, मे मृत्युं इदानीमेव पातय । पत्लृ पतने लोट् । इमां निशामेव मरणान्निर्गतं भयं यस्मात् स तथा सन्, शये स्वापं करोमि । शीङ् स्वप्ने लट् ॥ ४९ ॥

**(सं.चं.)** वालिरिति व्याज उपदेशः । विहितं रूपं यस्य । व्याजः= **'ನೆಪ, ಹೆಸರು'** इति भाषायाम् । वालिरूपेणाऽत्मानं पिधाय मृत्युरवाऽगत इत्यर्थः ॥ ४८ ॥

**इत्थमर्त्थयता[१] साकमाञ्जनेयेन सौरिणा ।**
**रामः सलक्ष्मणः प्रायात् किष्किन्धां वालिपालिताम् ॥ ५० ॥**

**(भा.दी.)** **इत्थमि**ति । सलक्ष्मणः श्रीरामः, इत्थं अर्थयता सौरिणा सूर्यपुत्रेण सुग्रीवेण, आञ्जनेयेन अञ्जना-पुत्रेण हनुमता च साकं वालिपालितां किष्किन्धां प्रति प्रायात् । या प्रापणे लङ् ॥ ५० ॥

**(सं.चं.)** आञ्जनेयेन साकमित्थमर्थयता । किञ्चिमप्यपूर्वं धत्त इति किष्किन्धा गुहा कपीनां पुरी वा ॥५०॥

**रामः कपीनां नगरान्तिकेऽथ कान्तारकान्ते हरिभिः परीतः ।**
**तस्थौ हसन्[२] कार्म्मुकबाणपाणिः प्रतीक्ष्य कालं किल वालिकालः ॥ ५१ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्गहरामायणे**
**किष्किन्धाकाण्डे तृतीयः सर्ग्गः ॥**

—०—

**(भा.दी.)** **राम** इति । अथ श्रीरामः, कान्तारेण वनेन कान्ते मनोहरे, कपीनां नगरस्य यदन्तिकं तस्मिन्, हरिभिः सुग्रीवादिकपिभिः परीतः परिवृतः सन्, हसन् सन्, कार्मुकं च बाणश्च तौ पाण्योर्यस्य स तथा सन्, वालिनः कालः सन् मृत्युः सन्, कालः समयस्तं प्रतीक्ष्य, युद्धार्थं वाल्यागमनसमयं प्रतीक्ष्येत्यर्थः, तस्थौ किल ॥ ५१ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्गहरामायणव्याख्यायां भावार्थदीपिकायां**
**किष्किन्धाकाण्डे तृतीयः सर्गः ॥**

—०—

१. **'यद्यपि 'अर्थ उपयाच्ञायाम्' इत्यस्य धातोरनुदात्तत्वादर्थयमानेनेति वाच्यम् । तथाऽप्यनुदात्तत्वनिमित्तकमात्मनेपदमनित्यमिति । चक्षिङ् व्यक्तायां वाचीत्यत्र ङित्करणेन सूचितत्वादर्थयतेत्युक्तम्' अत एव 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादिप्रयोगश्च'** इति का.श्री. ।

२. **'हसन् भ्रात्रोर्विरोधः प्राप्त इति हासं कुर्वन्'** इति का.श्री. ।

**(सं.चं.)** इन्द्रोपेन्द्रवज्राभ्यामुपसंहरति– रामः कपीनाम् । हसन् । आपद्यपि अनपगतहासो हि महान् भवति । वालिनिधनोचितं कालं प्रतीक्ष्य । वालिनः कालोऽन्तक इव ॥ ५१ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां किष्किन्धाकाण्डे तृतीयसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १५०२+५१=१५५३]

# चतुर्थः सर्ग्गः

**अवलोक्य जगन्नाथः कपिनाथमभाषत ।**
**भ्रातृव्यं भ्रातरं ते त्वमाहवायाऽह्वयेत्यथ[1] ॥ १ ॥**

**(भा.दी.)** श्रीरामेणानन्तरं किमकारीत्यत आह– **अवलोक्ये**ति । अथ जगन्नाथः श्रीरामः, हे सुग्रीव, त्वं ते भ्रातृव्यं शत्रुम्, भ्रातरं वालिनम्, आहवो युद्धं तस्मै, आह्वय आह्वानं कुरु, इति कपिनाथं सुग्रीवं अवलोक्य अभाषत ॥ १ ॥

**(सं.चं.)** अथ सप्तसालभेदनानन्तरम् । सुग्रीवस्य रामसामर्थ्ये प्रत्ययजननानन्तरम् । 'भ्रातृव्यौ भातृजामित्रौ' इति यादवप्रकाशः । आह्वय शब्दापय ॥ १ ॥

**निर्ग्गम्य गहनात् तस्मान्नगरद्धारमागतः ।**
**सिंहग्रीवोऽथ सुग्रीवो भ्राता भ्रातरमाह्वयत् ॥ २ ॥**

**(भा.दी.)** **निर्गम्ये**ति । अथ तस्मात् गहनं वनं तस्मात्, 'गहनं काननं वनम्' इत्यमरः, निर्गम्य नगरस्य किष्किन्धाया यद् द्वारं तत् आगतः, सिंहस्य ग्रीवेव ग्रीवा यस्य स तथा, भ्राता सुग्रीवः, अत्र नगरद्धारे भ्रातरं वालिनं आह्वयत् ॥ २ ॥

**(सं.चं.)** सिंहइव केसरयुक्तग्रीवः सिंहग्रीवः । सिंहध्वनिर्वा । रामो हनिष्यतीति विश्वस्य स्वयमाह्वयत् । न जात्वहं जेष्यामीति स्पर्धाबुद्ध्या ॥ २–३ ॥

**आहूतमात्रो रिपुणा दण्डाहत इवोरगः ।**
**निष्पपात गुहागेहाद् वाली बलवतां वरः ॥ ३ ॥**

---

१. '–याऽह्वयेरिति'

**(भा.दी.) आहूतेति** । रिपुणा सुग्रीवेण केवलं आहूत आहूतमात्रः, बलमेषामस्तीति बलवन्तस्तेषां वरः श्रेष्ठः वाली, गुहैव गेहं गृहं तस्मात् दण्डाहतः उरगइव निष्पपात ॥ ३ ॥

**मुष्टिभिश्च तळैश्चोभौ निघ्नन्तावितरेतरम् ।**
**[1]अयुद्ध्यतां क्रमात् क्षीणः सूर्य्यसूनुः पराद्रवत् ॥ ४ ॥**

**(भा.दी.) मुष्टिभिरिति** । उभौ वालिसुग्रीवौ इतरेतरं परस्परम्, ये मुष्टयस्तैश्च, यानि हस्ततळानि तैश्च, निघ्नन्तौ अयुद्ध्यताम् । युध सम्प्रहारे लङ् । क्षीणः क्रमात् बलह्रासं प्राप्तः सूर्यसूनुः सुग्रीवः पराद्रवत् ॥ ४ ॥

**(सं.चं.)** अयुध्यताम् । अयुध्येताम् । क्षीणः क्षितबलतया दयनीयः । क्षि क्षये इत्यस्य दैन्ये गम्यमाने निष्ठायां दीर्घः–'वाऽऽक्रोशदैन्ययोः' (अ.सू.६.४.६१) इति । 'क्षियो दीर्घात्' (८.२.४६) इति दीर्घादुत्तरस्य निष्ठातकारस्य नकारः ॥ ४ ॥

**ऋश्यमूकं प्रतिद्रुत्य[2] यावद् भास्करिणा स्थितम् ।**
**तावदायातमत्रैव परेशेनापरैः सह[3] ॥ ५ ॥**

**(भा.दी.) ऋश्येति** । भास्करस्यापत्यं पुमान् भास्करिस्तेन, ऋश्यमूकं प्रतिद्रुत्य विद्रुत्य यावत् यदा स्थितम्, तावदेव परेशेन सर्वोत्तमेन श्रीरामेण, अपरैरन्यैर्हनुमदादिभिः वानरैः सह, अत्र ऋष्यमूके आयातं आगतम् ॥ ५ ॥

**(सं.चं.)** ऋश्यमूकं प्रतिद्रुत्य । 'एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन वालिना । अपश्यन् राघवं नाथमृश्यमूकं प्रदुद्रुवे' (१२.२१) इति च । तावदायातमत्रैव । 'राघवोऽपि सह, भ्रात्रा सह चैव हनूमता । तदेव वनमागच्छत् सुग्रीवो यत्र वानरः' (१२.२४) इति च ॥ ५–६ ॥

**रक्तद्रवैरार्द्रवपुः[4] कपीन्द्रोऽस्यापतत् पदे ।**
**करुणां वीर कस्मात् त्वं मयि नाऽयातवानिति[5] ॥ ६ ॥**

---

१ 'आयुध्यताम्' २. 'पराद्रुत्य' ३. 'परेशेन दयाळुना'
४. '–द्रवैराक्तवपुः' ५. 'नाऽगतवानिति' इति, 'मयि नाथ न यातवान्' इति च ।

**(भा.दी.) रक्तेति** । रक्तस्य द्रवाः सृतयस्तैः आर्द्रं वपुर्यस्य स तथोक्तः, कपीन्द्रः सुग्रीवः, हे वीर श्रीराम, त्वं कस्मात् करुणां मयि न आयातवान् न प्राप्तवान्, न कृतवानित्यर्थः, इति वदन्निति शेषः, अस्य श्रीरामस्य पदं पादस्तस्मिन् अपतत् ॥ ६ ॥

**भ्रातरौ समरूपौ स्थः समवेषौ समस्वनौ[1] ।**
**अविवेकान्न मुक्तेषुरिति [2]रामोऽब्रवीदिमम् ॥ ७ ॥**

**(भा.दी.) भ्रातराविति** । भ्रातरौ सोदरौ युवाम्, समं रूपं ययोस्तौ तथोक्तौ स्थः भवथः । समः वेषोऽलङ्कारो ययोस्तौ तथोक्तौ, समः सदृशः स्वनो ययोस्तौ तथोक्तौ स्थः । तस्मात्, अविवेकोऽविवेचनं तस्मात्, मया इषुः न मुक्ता । 'पत्री रोप इषुर्द्वयोः' इत्यमरः । इति श्रीरामः इमं सुग्रीवं प्रति अब्रवीत् ॥ ७ ॥

**(सं.चं.)** इषुर्न मुक्ता । 'इषुर्न षण्' इति यादवप्रकाशः । नाहं मुक्तेषुरिति वा । 'नमुक्तेषुरित्येकं वा पदम् ॥ ७ ॥

**भ्रात्रर्थे भ्रातरं रामः सहसा हतवानिति ।**
**परिहर्त्तुं परीवादं तदेशो न जघान तम् ॥ ८ ॥**

**(भा.दी.) भ्रात्रिति** । ईशः श्रीरामः, भ्रातुरर्थः प्रयोजनं तस्मिन् विषये, भ्रातरं वालिनं सहसा हतवान् इति परीवादोऽपवादस्तम् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (अ.सू.६.३.१२२) इति सूत्रेणोपसर्गस्य दीर्घः । परिहर्तुं तदा युद्धसमये वालिनं न जघान । हन हिंसागत्योर्लिट् । भ्रात्रर्थे भ्राता शीघ्रं न हन्तव्य इति नीतिप्रदर्शनार्थमेव न जघान । न भ्रात्रोः विवेचनसामर्थ्याभावादिति भावः ॥ ८ ॥

**(सं.चं.)** सहसेति सद्य इत्यर्थे विना कारणमविचार्येत्यर्थे चाव्ययम् । 'सद्योऽर्थे सहसा हेतुशून्ये' इति यादवप्रकाशः । परिवादो मिथ्याऽभिशंसनम् । शाश्वतः, लोकव्यापी च परिवादः परीवादः ॥ ८–९ ॥

**कराग्रे कन्दुकमिव योऽनन्तं जगदीक्षते ।**
**यश्च कर्त्ताऽखिलस्यास्य तस्य कुत्राविवेकिता[3] ॥ ९ ॥**

---

१. 'समस्वरौ' २. 'रामस्तमब्रवीत्' ३. 'कुत्राविवेकता' इति वि.ती.पाठः ।

**(भा.दी.)** अविवेकादित्युक्तिर्लोकविडम्बनार्थमिति किमर्थं वक्तव्यमित्यत आह– **करे**ति । यः श्रीरामः करस्य यदग्रं तस्मिन्, कन्दुकमिव, न विद्यतेऽन्तोऽवसितिः पर्यवसानं प्रवाहतः सङ्घातश्च यस्य तत्तथोक्तं तत् जगत्, ईक्षते सर्वदा साक्षात्करोति । यश्च अखिलस्यास्य जगतः कर्ता निर्माता, तस्य श्रीरामस्य, न विद्यते विवेको यस्य स तथोक्तस्तस्य भावस्तत्ता, वालिसुग्रीवयोः विविच्यादर्शनमित्यर्थः, कुत्र? न कुत्रापि विषय इत्यर्थः ॥ ९ ॥

**रजताभां सुवर्णाभे गजपुष्पमयीं स्रजम् ।**
**आमुमोचाथ सुग्रीवे हनुमान् रामशासनात् ॥ १० ॥**

**(भा.दी.) रजते**ति । अथ हनुमान् श्रीरामस्य यच्छासनमाज्ञा तस्मात्, रजतवदाभा कान्तिर्यस्याः सा तथा ताम्, गजस्य गजवृक्षस्य यानि पुष्पाणि तेषां विकारः तन्मयी ताम्, गजपुष्पनिर्मितामित्यर्थः, 'लतया विभक्ते' इति तात्पर्यनिर्णयोऽप्युक्तार्थे तात्पर्यवानित्यविरोधः, स्रजम्, सुवर्णवदाभा यस्य स तथा तस्मिन् सुग्रीवे, आमुमोच चिह्नार्थं समर्पितवान् । लोकविडम्बकेन श्रीरामेण वालिनः सुग्रीवस्य विवेकार्थं स्रजं बध्नीही-त्युक्ते तद्विद्वान् हनुमान् सुग्रीवं स्रजा युयोजेति भावः ॥ १० ॥

**(सं.चं.)** आमुमोचाथ सुग्रीवे हनुमान् । 'ततो गिरितटे जातामुत्पाट्य कुसुमाकुलाम् । लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे व्यसर्जयत्' (१२.४०) इति रामायणे लक्ष्मण इति लक्ष्मीवान् हनुमानुच्यते । अन्यथा भारतादिबहुग्रन्थविरोधः स्यादिति भावः । रामायणे गजपुष्पीति गजपुष्पमयी लतोच्यते–'रामाज्ञयैव लतया रविजे विभक्ते वायोः सुतेन' (६.१८) इति निर्णयवचनात् । लतामेव स्रजं मालां कृत्वाऽऽमुमोच । 'सुग्रीवस्य तथा मालां हनुमान् कण्ठ आसजत्' (वनप.२८१.३४) इति हि भारते । आमुमोच बबन्ध पिननाहेति यावत् । 'आबद्धः पुनरामुक्तः प्रतिमुक्तः पिनद्धवत्' इति यादवप्रकाशः ॥ १० ॥

**आलयं वालिनः प्रायात् सहितो हरिभिर्हरिः ।**
**मण्डितं कदळीषण्डैर्दृष्ट्वा [1]'सप्तजनाश्रमम्'[2] ॥ ११ ॥**

---

१. **'सप्तजनाश्रयम्'** । अत्र का.श्री.व्याख्यानम्–**'हरिः सुग्रीवः हरिभिः कपिभिः सहितः सन् सप्तजनाश्रयम्, अमात्यादिसप्तप्रकारोपेतजनाधारम्, कदळीषण्डैः रम्भासमूहैः, मण्डितमलङ्कृतं वालिनः आलयं गृहं दृष्ट्वा प्रायात् पुनर्युद्धाय गतः'** इति । अदृष्टरामायणोऽयं व्याख्याता सर्वमसङ्गतं व्याचष्ट । स्फुटं हि रामायणे–**'सप्तजना नाम मुनयः सप्त'** इति ।

२. इतः परम्– **'चिन्तयामास भगवान् कार्यमुत्तरभावि सः'** इत्यर्धमधिकं क्वचित् । न कैरपि प्राचीनैर्व्याख्यातम् ।

**(भा.दी.) आलयमि**ति । हरिभिः सहितः, हरिः श्रीरामः, कदळीनां षण्डाः समूहास्तैः मण्डितं अलङ्कृतम्, सप्तजनस्य सप्तजननामकस्य मुनेः[1] य आश्रमः, तं दृष्ट्वा वालिन आलय आवासस्तं प्रायात् ॥ ११ ॥

**(सं.चं.)** हरिभिः सुग्रीवादिभिः । हरिः रामः । 'अग्रतस्तु ययौ तस्य राघवस्य महात्मनः । सुग्रीवः संहत-ग्रीवो लक्ष्मणश्च महाबलः । पृष्ठतो हनुमान् वीरो नळो नीलश्च वानरः । तारश्चैव महातेजा हरियूथपयूथपः' ( १३.३-४) इति च । मध्येमार्गं सप्तजनाश्रमं दृष्ट्वा ततो वालिन आलयं प्रायात् । 'मेघसङ्घातविपुलं पर्यन्तकदळीवृतम् । किमेतज्ज्ञातुमिच्छामि सखे कौतूहलं हि मे' (१३.१४) इति, 'अत्र सप्तजना नाम मुनयः संशित-व्रताः । सप्तैवाऽऽसन्नधःशीर्षा नियतं जलशायिनः । सप्तरात्रकृताहारा वायुना वनवासिनः । दिवं वर्षशतैर्याताः सप्तभिः सकळेबराः' (१३.१८–९) इति च ॥ ११ ॥

**पश्येच्चेत् प्रणमेन्मह्यं वाली वद्ध्यो न सन्नतः[2] ।**
**प्रत्यज्ञायि वधश्चास्य प्रपन्नायार्कसूनवे ॥ १२ ॥**

**(भा.दी.) पश्येदि**ति । अनन्तः अन्तरहितः श्रीरामः, चेद् यदि वाली मां पश्येत्, तर्हि मह्यं प्रणमेत् । ततः किमित्यत आह– **सम**िति । सम्यक् भक्तिपूर्वकं नतः वध्यो न । तर्हि वध एव न कर्तव्य इत्यत आह– **प्रती**ति । अस्य वालिनः वधश्च, प्रपन्नाय पूर्वं शरणागताय, अर्कसूनवे सुग्रीवाय प्रत्यज्ञायि प्रतिज्ञातः । ज्ञा अवबोधने लुङ् ॥ १२ ॥

**(सं.चं.)** अथ भगवच्चिन्तनप्रकारमाह–पश्येच्चेत् । मह्यं मां प्रणमेत् । णमधातुयोगेऽपि चतुर्थी विभाषा भवति । 'रामाय शाश्वतसुविस्तृतषड्गुणाय नत्वा' इतिवत् । तेन रामं नमति, रामाय नमतीत्युभयमपि साधु । सन्नतः प्रणतः सर्वथा न वध्यः । अर्कसूनवे सुग्रीवाय, तदर्थं वधश्च वालिनः प्रत्यज्ञायि ॥ १२ ॥

**अनन्त इति सञ्चिन्त्य सालजाले निलीनवत् ।**
**स्थित्वा [3]प्रास्थापयत् पूष्णः पुत्रं वासविना युधे ॥ १३ ॥**

**(भा.दी.) अनन्तः** इति । अनन्तः इति सञ्चिन्त्य, सालानां सालवृक्षाणां यज्जालं समूहः तस्मिन्, निलीनवत् प्रच्छन्नपुरुषवत् स्थित्वा, पूष्णः सूर्यस्य पुत्रं सुग्रीवम्, वासवस्यापत्यं पुमान् वासविस्तेन वालिना, युध् युद्धं तस्यै, तादर्थ्ये चतुर्थी, प्रास्थापयत् प्रेषयामास ॥ १३ ॥

---

१. **'सप्तजनानां सप्तजननामकानां मुनीनाम्'** इति स्वरसः पाठः । २. **'सम्मतः'** इति भ्रान्तः पाठः । ३. **प्रायातयत्'**

**(सं.चं.)** सालजाले वृक्षषण्डे । 'वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने' (१४.१) इति च । पूष्णः पुत्रं सुग्रीवं वासविना सह युधे युद्धाय प्रास्थापयत् । 'सालो मत्स्ये वृक्षभेदे प्राकारद्रुममात्रयोः' इति यादव-प्रकाशः । अत्र तु द्रुममात्रे सालशब्दः । न द्रुमविशेषे ॥ १३ ॥

**सिंहनादं स विदधे सिंहसंहननो हरिः ।**
**किष्किन्धावासिनो येन सम्भ्रान्ता वालिना विना ॥ १४ ॥**

**(भा.दी.) सिंहेति** । सिंहवत् संहननं शरीरं यस्य स तथोक्तः, हरिः कपिः सः सुग्रीवः, सिंहनादो सिंहध्वनिस्तं विदधे, येन सिंहनादेन, किष्किन्धायां वस्तुं शीलमेषामस्तीति तथोक्ताः, वालिना विना, सम्भ्रान्ताः सम्मूढा अभवन्, तादृशसिंहनादं चक्र इत्यर्थः ॥ १४ ॥

**(सं.चं.)** सिंहसंहननः अस्थूलमांसलदेहः ॥ १४ ॥

**पुरादुदपतद् वाली सुन्दरीवृन्दसङ्कुलात् ।**
**विद्युल्लतापरिवृतान्मेघानीकादिवाशनिः[1] ॥ १५ ॥**

**(भा.दी.) पुरादिति** । वाली, सुन्दरीणां वृन्दं समूहः, तेन सङ्कुलं निबिडं तस्मात् पुरात्, विद्युतो या लताः ताभिः परिवृतं तस्मात्, घनानां यदनीकं समूहस्तस्मात्, अशनिरिव वज्रमिव उदपतत् ॥ १५ ॥

**(सं.चं.)** पुरादन्तःपुरात् । अशनिर्वज्रः, 'ଚଡ଼ଉ' इति भाषायाम् ॥ १५ ॥

**उत्पतन्तं पतिं वीक्ष्य तारा ताराधिपानना ।**
**शिरीषमालामञ्जुभ्यां दोर्भ्यां बध्वेदमब्रवीत् ॥ १६ ॥**

**(भा.दी.) उदिति** । ताराणां नक्षत्राणामधिपश्चन्द्रः, तद्वदाननं यस्याः सा तथा, तारा तारानाम्नी वालिभार्या, उत्पतन्तं युद्धार्थमागच्छन्तं पतिं वालिनं वीक्ष्य, शिरीषाणां शिरीषवृक्षपुष्पाणां या माला तद्वन्मनोहरौ ताभ्यां दोर्भ्यां बध्वा आलिङ्ग्य इदं वचः अब्रवीत् ॥ १६ ॥

**(सं.चं.)** ताराधिपानना चन्द्रानना । एतेन कपीनां स्वेच्छारूपत्वमुक्तम् । उत्साहेन उद्धृत्य पतन्तं पतिं वीक्ष्य ॥ १६ ॥

---

१. **'–वृताद् घनानीकादिवाशानिः'** इति वि.ती.पाठः स्यात् ।

**वदामि वार्णीं नाथेमां न कार्प्पण्यान्न चापलात् ।**
**भ्रातुस्ते प्रत्यवस्थानं विद्रुतस्य सकारणम् ॥ १७ ॥**

**(भा.दी.) वदामी**ति । हे नाथ भर्तः, इमां वार्णीं वाचं वदामि । विद्रुतस्य ते तव भ्रातुः सुग्रीवस्य प्रत्यवस्थानं पुनर्युद्धार्थमागमनम्, कृपणस्य भावः कार्पण्यं तस्मात् क्षुद्रपुरुषत्वात् न । क्षुद्रो हि पुरुषः पराजितोऽपि लज्जाहीनः पुनःपुनरायाति तद्वदिदं नेत्यर्थः । चापलं जयाशया चित्तचाञ्चल्यं तस्मादपि न । किन्तु सकारणं कारणविशेषेण सहितम् । यद्वा यां वार्णीं वदामि, सा वाणी कार्पण्यात् क्लैब्याद् वा न, स्त्रीचापल्याद्वा नेति योजना ॥ १७ ॥

**(सं.चं.)** नेयं वाणी कार्पण्यादुदिता, नापि स्त्रीचापलात् । कार्पण्यं दैन्यं भयग्रस्तता । अतो नात्रानादरः कार्यः । भयाद् विद्रुतस्य भ्रातुः ते पुनः प्रत्यवस्थानं सकारणम् । महत् तत्र कारणं भवितुमर्हति ॥ १७ ॥

**सुग्रीवस्याभवन्मित्रं रामो राक्षससूदनः ।**
**इत्यङ्गदेन [१]कथितं कुमारेण श्रुतं मया ॥ १८ ॥**

**(भा.दी.)** विद्रुतस्य भ्रातुः प्रत्यवस्थानं सकारणमित्युक्तम्, किं तत्कारणमित्यत आह– **सुग्रीवस्ये**ति । राक्षसान् सूदयतीति तथोक्तः श्रीरामः, सुग्रीवस्य मित्रं अभवत्, इति कुमारेण अङ्गदेन कथितं वचः मया श्रुतम् ॥ १८ ॥

**(सं.चं.)** किं तत्? सुग्रीवस्याभवन्मित्रम् । कुमारेणाङ्गदेन कथितं मया श्रुतम् ॥ १८ ॥

**न तेनोपकृतं[२] तस्य न त्वयाऽपकृतं पते[३] ।**
**लोकानां किल मित्रं स किं नो मित्रं न राघवः ॥ १९ ॥**

**(भा.दी.) ने**ति । तेन सुग्रीवेण न तस्य श्रीरामस्य उपकृतम्, कश्चनोपकारो न कृतः । हे पते वालिन्, त्वया तस्य श्रीरामस्य अपकृतं न, अपकारो वा न कृतः । सः राघवः श्रीरामः लोकानां सज्जनानां मित्रं किल । नः अस्माकं मित्रं न किम्? अस्माकमपि मित्रभूत एवेत्यर्थः ॥ १९ ॥

---

१. '–देव गदितम्' २. 'तेनावकृतम्' ३. '–पकृतं प्रभो'

**(सं.चं.)** तेन सुग्रीवेण तस्य रामस्य । नापि त्वया तस्यापकृतम् । लोकानां मित्रमपि नः किं न मित्रम्? ॥ १९ ॥

**अङ्गदो यातु सङ्गृह्य रमणीयतरान् मणीन् ।**
**रामं सलक्ष्मणं नेतुमेवं[1] सन्धिर्विधीयताम् ॥ २० ॥**

**(भा.दी.)** बलवत्सहायवतां शत्रूणां सन्धानं न्याय्यमित्याह– **अङ्गद** इति । अङ्गदः रमणीयतरान् मणीन् सङ्गृह्य सलक्ष्मणं श्रीरामं नन्तुं नमस्कर्तुं यातु । एवं उक्तरीत्या सन्धिः सुग्रीवेण सन्धानं विधीयताम् ॥ २० ॥

**(सं.चं.)** मणीनुपायनत्वेन समर्पयितुं गृहीत्वा । सन्धिः कलहविरहः, रामेण सुग्रीवे च ॥ २० ॥

**पराजितत्वाद् भ्रातृत्वाल्लोकनाथाश्रयत्वतः ।**
**भागार्हत्वाच्च सुग्रीवो यौवराज्येऽभिषिच्यताम्[2] ॥ २१ ॥**

**(भा.दी.)** सुग्रीवेण सन्धानं च युक्तमित्याह– **पराजितत्वादि**ति । पराजितत्वात्, भ्रातृत्वात्, लोकनाथः रामः आश्रयो यस्य तस्य भावो लोकनाथाश्रयत्वम्, तस्मादिति ततश्च, सुग्रीवः यौवराज्यं युवराजत्वं तस्मिन् अभिषिच्यताम् । षिच सेचने लोट् । अनर्हः कथमभिषिच्यतामित्यत आह– भागेति । भागे राज्यभागे अर्हो योग्यः, तस्य भावस्तत्वम्, तस्माच्च (अभिषिच्यताम्) ॥ २१ ॥

**(सं.चं.)** पराजितत्वात् क्षमामर्हति । भ्रातृत्वेन भागमर्हति । लोकनाथाश्रयत्वादुभयम् । न केवलं सुग्रीवस्याऽश्रयः । लोकनाथो हि रामः। तेनास्माकमपि । अथापि सम्प्रति सुग्रीवमाश्रित्य तिष्ठति ॥ २१ ॥

**एवमुक्तोऽवदद्[3] वीरः प्रिये नाहं नपुंसकः ।**
**आहूतो वैरिणा वाली न नमेन्न पराद्रवेत् ॥ २२ ॥**

---

१. **'नन्तुमेवम्'** इति वि.ती.पाठः ।

२. इतः परं क्वचित् कोशेष्वेकं पद्यमधिकं पठ्यते । व्याचख्यौ का.श्री.केवलम् । न व्याख्यातं विश्वपतितीर्थीये–
**'न चेद् वैरिणि सन्धिस्ते याम दूरं गुहान्तरम् । संहरेल्लोकमेवैको रामेषुस्त्वां तु किं पुनः'** इति ।

३. **'तयेत्युक्तोऽवदद्–'**

**(भा.दी.)** तदा वाली किमाहेत्याह – **एवमि**ति । तारया एवमुक्तो वीरो वाली तामवदत्, प्रिये, अहं न नपुंसकः । वैरिणा युद्धाय आहूतः वाली न नमेत् नापि पराद्रवेत् ॥ २२ ॥

**(सं.चं.)** आहूतो वैरिणा वालीति परोक्षवचनं दार्ढ्यार्थम् ॥ २२ ॥

**अनृशंसो जगन्नाथो न नृशंसत्वमेष्यति ।**
**अथवा रामबाणेन पूतो यास्यामि सद्गतिम् ॥ २३ ॥**

**(भा.दी.) (अनृशंस)** इति ।अनृशंसः अक्रूरः जगन्नाथो रामः नृशंसत्वं सुग्रीवेण युद्ध्यतो मम हननलक्षणं पापकर्मकृत्त्वं तत् । 'नृशंसः क्रूरकर्मकृत्' इति हलायुधः । नैष्यति न प्राप्स्यति । इण् गतौ लृट् । अथवा श्रीरामो हन्ति चेत् श्रीरामस्य यो बाणस्तेन पूतः शुद्धः सन्, सती या गतिस्तां यास्यामि ॥ २३ ॥

**(सं.चं.)** अनृशंसः दयाळुः । नृशंसत्वं निर्दयत्वं नैष्यति । 'क्रूरो नृशंसोऽप्यदये' इति यादवप्रकाशः ॥२३॥

**सौहृदं दर्शितं देवि युक्तमेतत् त्वयोदितम्[1] ।**
**निवर्त्तस्व सह स्त्रीभिः सत्यमेवाऽत्मना शपे ॥ २४ ॥**

**(भा.दी.) सौहृदमि**ति । हे देवि तारे, त्वया सौहृदं स्नेहः दर्शितम् । मयि स्नेहात् त्वया उदितं तव एतत् वचः युक्तमेव । स्त्रीभिः सह त्वं निवर्तस्व स्वमन्दिरं प्रति गच्छ । वृतु वर्तने लोट् । आत्मना स्वात्मना सत्यमेव शपे प्रतिजाने । शप आक्रोशे लट् ॥ २४ ॥

**(सं.चं.)** सुहृदो भावः सौहृदं मैत्री । सुहृच्छब्दस्य युवादित्वादण् । 'हायनान्तयुवादिभ्योऽण्' (अ.सू.५.१.१३०) इति । आत्मना शपे, '**ನನ್ನಾಣೆ**' इति भाषायाम् ॥ २४ ॥

**तमुत्पतन्तमित्युक्त्वा[2] पतिं कृत्वा प्रदक्षिणम् ।**
**स्वस्तीत्युक्त्वा सती[3] द्रष्टुं नाशक्नोद् बाष्पबाधिता ॥ २५ ॥**

**(भा.दी.) तमि**ति । इति उक्त्वा युद्धार्थं उत्पतन्तं तं पतिं सती तारा प्रदक्षिणं तत् कृत्वा, स्वस्ति मङ्गळं भूयात् इति उक्त्वा ययौ । बाष्पबाधिता सती वालिनं द्रष्टुं नाशक्नोत् । शक्लृ शक्तौ लङ् ॥ २५ ॥

**(सं.चं.)** बाष्पबाधिता, नेत्रयोर्बाष्पाकुलिततया द्रष्टुं नाशक्नोत् । भाव्यनर्थसूचनमिदम् ॥ २५ ॥

---

१. **'युक्तमेतत् तवोदितम्'** २. **'–मित्युक्ता पतिम्'** ३. **'पतिं द्रष्टुम्'**

**निर्गम्य परितः पश्यन् दृष्ट्वा तत्राग्रजोऽनुजम् ।**
**परिधाय दृढं वास आपतन्तं समापतत् ॥ २६ ॥**

**(भा.दी.) निरिति** । किष्किन्धायाः निर्गम्य परितः पश्यन् अग्रजः वाली तत्र बहिः अनुजं सुग्रीवं दृष्ट्वा दृढं यथा भवति तथा वासः वस्त्रं तत् परिधाय आपतन्तं सुग्रीवं समापतत् ॥ २६ ॥

**(सं.चं.)** परिधाय दृढं वासः । परिकरबन्धं विधाय । दृढबद्धकक्ष्य इत्येतत् ॥ २६ ॥

**निर्घाताविव निर्घोषौ सत्वरौ तौ शराविव ।**
**बलीन्द्राविव विक्रान्तौ कपीन्द्रौ प्रत्ययुद्ध्यताम् ॥ २७ ॥**

**(भा.दी.) निर्घाताविति** । निर्घाताविव अशनीइव निर्घोषौ नितरां घोषयुक्तौ, शराविव सत्वरौ वेगयुक्तौ, बलिश्च इन्द्रश्च ताविव विक्रान्तौ, तौ कपीन्द्रौ प्रत्ययुध्यताम् ॥ २७ ॥

**(सं.चं.)** निर्घातः वज्रपातः । बलीन्द्रौ दैत्यराजदेवराजाविव ॥ २७–८ ॥

**मुष्टिमुद्यम्य कुपितो वाली सुग्रीवमब्रवीत् ।**
**एष मुष्टिप्रहारस्ते प्राणानपहरेदिति ॥ २८ ॥**

**(भा.दी.) मुष्टिमिति** । कुपितः वाली, स्वस्य यो मुष्टिस्तं उद्यम्य, एषः मुष्टेः प्रहारः ते तव प्राणान् अपहरेत् इति सुग्रीवं प्रति अब्रवीत् ॥ २८ ॥

**तवैव प्राणहृन्मुष्टिरित्युक्त्वा रविनन्दनः ।**
**मुष्टिमुद्यम्य तन्मूर्ध्नि ताडयामास लाघवात् ॥ २९ ॥**

**(भा.दी.) तवेति** । रविनन्दनः सुग्रीवः, अयं मुष्टिः तवैव प्राणहृत् इति उक्त्वा, मुष्टिं उद्यम्य, तस्य वालिनो मूर्धा तस्मिन्, लाघवं हस्तलाघवं तस्मात् ताडयामास । तड आघाते लिट् ॥ २९ ॥

**(सं.चं.)** लाघवं क्षिप्रता । कदा मुष्टिमुदयच्छत्, कदा ताडयमासेति विवेकाक्षमता ॥ २९ ॥

**रुधिरोद्गारिणं दृष्ट्वा वासविं भास्करिर्द्रुतम् ।**
**[1]सालमुत्तालमुत्पाट्य तेन तं प्रजहार च ॥ ३० ॥**

---

१. **'तालमुत्ताल–'** इति वि.ती.पाठः ।

**(भा.दी.) रुधिरेणे**ति । भास्करिः सुग्रीवः, वासविं इन्द्रपुत्रं वालिनम्, रुधिरमुद्गिरति तच्छील इति रुधिरोद्गारी तं दृष्ट्वा, उत्तालमुन्नतम्, तालो तालवृक्षः, तम्, उत्पाट्य तेन वृक्षेण, द्रुतं यथा भवति तथा, तं वालिनं प्रजहार च तताड च ॥ ३० ॥

**(सं.चं.)** सालं कञ्चन वृक्षमेकम्, उत्तालं द्रुतमुत्पाट्य । 'उत्तालः कर्मणि द्रुतः' इति यादवप्रकाशः । उत्तालमुन्नतं सालमिति वा ॥ ३० ॥

**राघवेण समिद्धोजोलाघवेनार्कसूनुना ।**
**ताडितो भूतळे वाली निपपातातिविह्वलः ॥ ३१ ॥**

**(भा.दी.) राघवणे**ति । राघवेण श्रीरामानुग्रहेणेत्यर्थः । ओजः सहनशक्तिस्तच्च, लाघवं हस्तलाघवं तच्च, सम्यगिद्धे अभिवृद्धे ओजोलाघवे यस्य स तथा तेन, अर्कसूनुना सुग्रीवेण ताडितः वाली, अतिविह्वलः अत्यन्तं परवशः सन्, भुवो यत् तळं तस्मिन्निपपात ॥ ३१ ॥

**(सं.चं.)** राघवानुग्रहेण समिद्धम्, इन्धी दीप्तौ, सन्दीप्तं यदोजः बलम् । तेन यल्लाघवं क्षिप्रकारिता तेन । 'समिद्धोज–' इति उत्तमोजा इतिवत् । गुणोततामितिवत् ॥ ३१ ॥

**आर्त्तो मुहूर्त्तमाश्वास्य जज्वाल क्रोधवह्निना ।**
**शतमन्युसुतो भूयस्तयोर्य्युद्धमवर्त्तत ॥ ३२ ॥**

**(भा.दी.) आर्त** इति । मुहूर्तो मुहूर्तकालस्तम्, मुहूर्तकाल इत्यर्थः, आर्तः, शतं मन्यवो यज्ञा यस्य पुरन्द-रस्य स तथोक्तः, तस्य सुतः वाली आश्वास्य श्रमं परिहृत्य, क्रोध एव वह्निस्तेन जज्वाल । ज्वल दीप्तौ लिट् । भूयः तयोः वालिसुग्रीवयोः युद्धं अवर्तत ॥ ३२ ॥

**(सं.चं.)** आर्तः सालपातपीडितः ॥ ३२ ॥

**ग्रस्तमालोक्य लोकेशः[1] कनिष्ठं ज्येष्ठतेजसा ।**
**भाधिपं भानुभासेव शरमेकममुञ्चत ॥ ३३ ॥**

---
१. '–मालोक्य देवेशः'

**(भा.दी.) ग्रस्तमि**ति । लोकेशः श्रीरामः, कनिष्ठं अनुजं सुग्रीवम्, ज्येष्ठस्य वालिनो यत्तेजो बलं तेन, भानोर्या भाः प्रकाशस्तया, भानां नक्षत्राणामधिपश्चन्द्रः, तमिव ग्रस्तं आलोक्य, एको मुख्यस्तं शरं अमुञ्चत ।। ३३ ।।

**(सं.चं.)** भानुभासा ग्रस्तं भानां नक्षत्राणामधिपं चन्द्रमिव । शरमेकम् । 'एकेषुणा हनिष्यामि' इति हि प्रतिज्ञातम् ।। ३३ ।।

**वालिनो मरणं कुर्वन्नमृतं च प्रभोः शरः ।**
**शरीरं दारयन्नेव शिरोमद्ध्यमदारयत् ।। ३४ ।।**

**(भा.दी.) वालिन** इति । वालिनः मरणं मृतिस्तत्, अमृतं मोक्षस्तच्च, कुर्वन् प्रभोः श्रीरामस्य शरः, शरीरं देहस्तत् दारयन्नेव, शिरसो यन्मध्यं तत् अदारयत् ।। ३४ ।।

**(सं.चं.)** अमृतं सद्यः मृत्यभावं च कुर्वन् । अथ चेन्द्रस्य योंऽशो वाली बभूव तस्यापुनर्भवं च कुर्वन् । अत एव शिरोमध्यमदारयत् । वक्षसि निक्षिप्तः शरः शरीरं अर्थात् शरीरमध्यभागं विदारयन्नेव ब्रह्मनाडीनिर्गमाय शिरोमध्यमदारयत् ।। ३४ ।।

**मन्दचेष्टो महीं यातो वन्दमानोऽपि चेतसा ।**
**इन्द्रसूनुरुवाचेदमिन्दिरेशं पुरोगतम् ।। ३५ ।।**

**(भा.दी.) मन्दे**ति । मन्दा स्वल्पा चेष्टा यस्य स तथोक्तः, महीं यातः इन्द्रसूनुः वाली, चेतसा श्रीरामं वन्दमानोऽपि, पुरः पुरतः गतं स्थितं इन्दिरेशं श्रीरामं प्रति इदं वचः उवाच ।। ३५ ।।

**(सं.चं.)** चेतसा वन्दमानोऽपि मुखतः आक्षिपन्निव इदं वक्ष्यमाणमुवाच । ब्रूञो वचेर्वा लिट् । कर्णाटानां प्रियो द्वितीयाक्षरप्रासः ।। ३५ ।।

**राम राजर्षिवर्य्यस्त्वमन्यासक्तमनागसम् ।**
**वनौकसं पशुसमं कथं सूदितवानसि ।। ३६ ।।**

**(भा.दी.) रामे**ति । हे श्रीराम, राजर्षिषु वर्यः श्रेष्ठः त्वम्, अन्यस्मिन् सुग्रीवे आसक्तम्, न विद्यते आगः अपराधो यस्य स तथा तम्, वनमेव ओक आवासो यस्य स तथा तम्, पशुसमम्, एतानि विशेषणानि स्वस्याहिंस्यत्वे प्रत्येकं हेतुगर्भाणि । कथं सूदितवान् हिंसितवान् असि ।। ३६ ।।

**(सं.चं.)** अन्यस्मिन् कर्मण्यासक्तं कथं निलीनः सूदितवानसि । अन्यासक्तोऽपि सागा हन्तव्यः स्यात् । अहं त्वनागाः । नन्वनुजभार्यामपाहरः? सत्यं नागरिकाणामयं धर्मः । अहं तु वनौकाः । विवृता हि स्त्रीपुम्प्रसङ्गे वनौकसः पशवो भवन्ति । मनुष्यवद् राज्यव्यवहारादि कुर्वन् कथं भवान् पशुः । सत्यं न पशुः । अथापि मनुष्यदृष्ट्या पशुसमो हि वानरः । न तत्र मानुषं शासनं प्रवर्तते । अन्यो हि मनुष्यधर्मः, अन्यो वानराणामित्यात्मानं समर्थयते । ज्ञानिनं मां पशुसमं पशुतुल्यं यथा स्यात् तथा कथं सूदितवानसीति वा ॥३६॥

**पञ्च पञ्चनखा भक्ष्याः प्रशस्ताः शास्त्रवेदिभिः ।**
**शशकः शल्यको गोधा श्वावित्[१] कूर्म्मश्च पञ्चमः ॥ ३७ ॥**

**(भा.दी.)** का कथन्तेत्यतो हिंस्यपशून् गणयति– **पञ्चे**ति । शास्त्रं वेत्तुं शीलमेषामस्तीति तथोक्ताः, तैः सत्पुरुषैः प्रशस्ताः अनिषिद्धाः, पञ्च पञ्चसङ्ख्याकाः, पञ्च नखा येषां ते तथोक्ताः प्राणिनः भक्ष्याः भक्षणार्हाः । तानाह– **शशक** इत्यादिना । शशकः शशः, शल्यकः वराहजातौ कश्चिद् वराहविशेषः, गोधा सूक्ष्मशिंशुमारवत् स्थितः कश्चित् प्राणिविशेषः, श्वावित् आरण्यः त्रिरेखः, लोके यो रामसेतुबन्धनार्थं पांसून्नीतवानिति प्रसिद्धः क्षुद्रप्राणिविशेषः । नतु श्वाविदिति वृको वक्तुं युक्तः । प्रमाणान्तरविरोधात् । पञ्चमः कूर्मश्चेति पञ्च भक्ष्या इत्यन्वयः ॥ ३७ ॥

**(सं.चं.)** ननु मांसाद्यर्थं मनुष्याः पशून् घ्नन्ति? न तत्र न्यायसमीक्षा । नहि पशवः पृष्ट्वा हन्यन्ते–'अयि भोः मांसार्थं त्वां हन्मि' इति । अथाप्ययुक्तं कपिहननमित्याह– पञ्च पञ्चनखा भक्ष्या इति । के ते? शशकः । 'पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव । शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः' (१७.३८) इति । शशको मृदुरोमा । '**ಮೊಲ**' इति भाषायाम् । शल्यकः शललः । '**ಚಿಪ್ಪುಹಂದಿ**' इति भाषायाम् । खड्गमृग इत्येके । तथाहि रामायणतिलके–'शल्यकः खड्गी । शुक्तिकाकारशल्यावृतसर्वाङ्गो जन्तुविशेष इत्यन्ये' इति । चिन्त्यमिदम्-'श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा' इति मनुना पृथक्पाठात् । गोधा वनपल्ली । भाषायम्- '**ಉಡ**' इति प्रथितोऽयं प्राणिविशेष इति वदन्ति । 'गोधा निहाका मुसली' इति सरीसृपाध्याये यादवप्रकाशः । श्वाविदिति शल्यक एवोच्यते कोशकारैः । अत्र तु श्वाविध इति चुचुन्दरीप्रभेदो

१. **'श्वाविट् कूर्मश्च' । 'श्वाविद् अरण्यचरः, पृष्ठे त्रिरेखः, लोके यो रामेण सेतुबन्धनकाले पांसूनानीतवानिति प्रसिद्धः क्षुद्रप्राणी । नतु श्वाविडिति वृको वक्तुं युक्तः । शल्यक इत्यतो विरोधात्'** इति वि.भू. । **'शशकः=ಮೊಲ, शल्यकः वराहजातौ कश्चिद् वराहविशेषः=ಹಂದಿ, गोधा अरण्यपल्ली =ಉಡು, श्वाविट् पृष्ठे रेखात्रययुक्तः रामस्य सेतुबन्धनार्थं पांसूनानीतवानिति लोकप्रसिद्धः जन्तुर्विशेषः=ಅಳಿಲು,पञ्चमः पञ्चत्वसङ्ख्यापूरकः कूमश्च'** इति का.श्री. । सर्वेऽपि श्वाविदि(डि)ति चुचुन्दरीमाचक्षते । किम्मूलमेतदिति मृग्यम् ।

वन्यः कथ्यत इति वदन्ति । 'ಅಳಿಲು' इति भाषायाम् । वस्तुतस्त्वयमपि वराहप्रभेद एव 'ಮುಳ್ಳುಹಂದಿ'इति भाषायम् । 'कण्टकाकारदीर्घरोमभिः श्वानं विध्यतीति श्वाविधः' इति कतककारः शल्यकश्वाविधौ वराहविशेषौ' इति गोविन्दराजीयम् । श्वानं विध्यतीति श्वावित् । 'नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ' (अ.सू.६.३.११६) इति पूर्वपदस्य दीर्घः ॥ ३७ ॥

**न चर्म्म नास्थि नो मांसं संस्पृशन्ति मनीषिणः ।**
**यस्य सोऽहं कपिः कस्मात् त्वया पञ्चनखो हतः ॥ ३८ ॥**

**(भा.दी.)** अहं च तन्मध्ये कोऽपि न भवामीत्याह– **ने**ति । मनीषिणः ज्ञानिनः यस्य वानरस्य चर्म न संस्पृशन्ति, अस्थि न स्पृशन्ति, मांसं वा न स्पृशन्ति । स्पृश आमर्शने लट् । पञ्चनखः सः भक्ष्यत्वे निषिद्धः कपिः अहं त्वया कस्मात् कारणात् हतः? ॥ ३८ ॥

**(सं.चं.)** न चर्म । 'चर्म चास्थि च मे राजन् न स्पृशन्ति मनीषिणः । अभक्ष्याणि च मांसानि सोऽहं पञ्चनखो हतः' (१७.४०) इति च । मनीषा अस्त्येषामिति मनीषिणः । मनस ईशते वा ॥ ३८–९ ॥

**वालिनैवमुपालब्धो धर्म्मसूक्ष्ममपश्यता[१] ।**
**दत्तवान् भगवांस्तस्मै हसन्नुत्तरमुत्तमम् ॥ ३९ ॥**

**(भा.दी.) वालिने**ति । धर्मस्य यत् सूक्ष्मं रहस्यं तत् अपश्यता अविचारयता वालिना, एवं उपालब्ध आक्षिप्तः, भगवान् श्रीरामः, तस्मै हसन् सन् उत्तमं उत्तरं प्रत्युत्तरं तत् दत्तवान् ॥ ३९ ॥

**वागुरोपशयः पाशाः पूर्वक्लृप्ता[२] मृगद्रुहाम् ।**
**हतो मयोपशयिना सौम्य शाखामृगो ह्यसि ॥ ४० ॥**

**(भा.दी.) वागुरे**ति । मृगान्[३], द्रुह्यन्तीति तथोक्ताः, तेषां मृगहिंसकपुरुषाणामित्यर्थः, वागुरा जालम्, उपशयः निलीनतयाऽवस्थानम्, पाशाः मार्गादौ मृगवधार्थं यन्त्रेण निक्षिप्यमाणाः पाशविशेषाः, इत्येते हि यस्मात् ब्रह्मणा पूर्वक्लृप्ताः तस्मात् उपशयिना निलीनतया स्थितेन मया, हे सौम्य मनोहर वालिन्, शाखामृगः त्वं हतः असि ॥ ४० ॥

---

१. **'–सूक्ष्ममजानता'** २.**'पूर्वं क्लृप्ता–'** । **'पाशः पूर्वं क्लृप्तो–'** इति, **'पाशः पूर्वक्लृप्तो–'** इति च ।

३. द्रोहोऽत्र हिंसनम् । मृगान् द्रुह्यन्ति भक्षार्थम् । न कोपेन । तस्मान्न मृगेभ्य इति चतुर्थी ।

**(सं.चं.)** वागुरा मृगबन्धनी । ‘ಬಲೆ’ इति भाषायाम् । उपशयः समीपे निलीयावस्थानम् । ‘वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः । प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून् मृगान्’ (१८.३८) इति च ॥४०॥

**मृगं चामृगमात्मानं वेत्थ चेद्[1] धार्म्मिकत्वतः ।**
**कथं त्यक्तोऽनुजो भुक्ता तद्भार्य्या च स्नुषासमा ॥ ४१ ॥**

**(भा.दी.)** **मृगमि**ति । (चेत्) यदि त्वं मृगमपि आत्मानम्, धर्मं चरतीति धार्मिकस्तस्य भावस्तत्वं तस्मादिति ततः, अमृगं मृगभिन्नं वेत्थ । कपिवंशोत्पन्नोऽपि विशिष्टबुद्ध्यादिमत्त्वेन मनुष्यधर्माणमात्मानं जानीष इत्यर्थः । तर्हि अनुजः सुग्रीवः कथं त्यक्तः? स्नुषायाः पुत्रभार्यायाः समा तद्भार्या च तस्य सुग्रीवस्य भार्या च कथं भुक्ता अनुभूता? ॥ ४१ ॥

**(सं.चं.)** अथ धर्मनिष्ठत्वात्, मृगं सन्तमप्यात्मानममृगं मन्यसे तर्हि कथं त्यक्तोऽनुजः? अस्तु नामानुजत्यागमः । कथं च तद्भार्या स्नुषासमा भुक्ता । स्नुषा पुत्रभार्या । ‘ಸೊಸೆ’ इति भाषायाम् । ‘औरसीं भगिनीं वाऽपि भार्यां वाऽप्यनुजस्य यः । प्रचरेत नरः कामात् तस्य दण्डो वधः स्मृतः’ (१८.२२-३) इति च । ‘रुमायां वर्तसे कामात् स्नुषायां पापकर्मकृत्’ (१८.१९) इति च ॥ ४१ ॥

**अहं शास्ताऽस्मि दुष्टानां सतां चोत्पथगामिनाम् ।**
**तस्माद्धतोऽसि[2] कामं त्वां जीवयामि यदीच्छसि ॥ ४२ ॥**

**(भा.दी.)** मत्कृतं पापमनुभोक्ष्यामि, त्वया तु मद्धननं किमर्थं कृतमित्यत आह– **अहमि**ति । यस्मात् अहं दुष्टानां पुरुषाणाम्, उत्पथमधर्ममार्गं गन्तुं शीलमेषामस्तीति तथोक्ताः, तेषां सतां च शास्ता शिक्षिता अस्मि, तस्मात् कारणात् त्वं हतः । यदि जीवितुं इच्छसि, तर्हि कामः यथा भवति तथा कामं त्वां जीवयामि ॥ ४२ ॥

**(सं.चं.)** दुष्टानामसतां शास्ता न केवलम् । सतामप्युत्पथगामिनाम् । त्वं सन्नप्युत्पथमगाः । तस्माद्धतोऽसि । अथ पश्चात्तापेन शुद्धं ते मनः, यदि सतां पन्थानं पतितुमिच्छसि, तथा यदि जीवितुमिच्छसि तर्हि जीवयामि ॥ ४२ ॥

**रामवाणीसुधां प्राप्य रमणीयां प्रसन्नधीः ।**
**वाक्यमश्रुमुखो वाली भक्तिगद्गदमुक्तवान् ॥ ४३ ॥**

---

१. ‘**वेत्थ किं धार्मिकत्वतः**’

२. ‘**तस्माद्धतस्त्वम्**’ इति वि.ती.पाठः स्यात् ।

**(भा.दी.) रामे**ति । रमणीयाम्, श्रीरामस्य या वाणी सैव सुधा तां प्राप्य, प्रसन्ना धीरन्तःकरणं यस्य स तथोक्तः वाली, अश्रुयुक्तं मुखं यस्य स तथा सन्, वाक्यं वचस्तत्, भक्त्या गद्गदं स्खलद्वचनं यथा भवति तथा उक्तवान् ॥ ४३ ॥

**(सं.चं.)** अश्रुपूर्णमुखः ॥ ४३ ॥

**क्षमस्वाऽऽर्त्तगिरं स्वामिन् न मेऽसूयितुमर्हसि ।**
**पालयस्व शिशुं दासमङ्गदं कनकाङ्गदम् ॥ ४४ ॥**

**(भा.दी.) क्षमस्वे**ति । हे स्वामिन्, आर्तस्य मम या गीस्तां क्षमस्व । क्षमूष् सहने लोट् । आर्ता हि दुःखात् यत्किञ्चित् प्रलपन्ति, तद्वदुक्तं मद्वचनं क्षमस्वेति भावः । मे असूयितुं दुरुक्तमुक्तमित्यसूयां कर्तुं नार्हसि न योग्योऽसि । अर्ह पूजायां लट् । शिशुं तव दासम्, कनकमयमङ्गदं बाहुभूषणं यस्य स तथोक्तः, तं अङ्गदं पालयस्व । पा रक्षणे लोट् ॥ ४४ ॥

**(सं.चं.)** आर्तेन दुःखितेन किमपि प्रलपितमिति मत्वा मे गिरं क्षमस्व । मह्यमभ्यसूयितुं मयि दोषमारोपयितुं नार्हसि । 'असूया दोषदृग् गुणे' इति यादवप्रकाशः । 'तदयुक्तं मया पूर्वं प्रमादादुक्तमप्रियम् । तत्रापि खलु मे दोषं कर्तुं नार्हसि राघव' (१८.४६-७) इति च । तवैव शिशुमङ्गदं पालयस्व । स्वशिशुं पालयेति वा । कनकाङ्गदमिति तस्य सुखवर्धितत्वमाह ॥ ४४ ॥

**मृतौ यत्कीर्त्तनं कर्त्तुं तपोदानादि[1] कुर्वते ।**
**तं[2] त्वामवेक्ष्य मे मृत्युं मन्ये साक्षादनुग्रहम् ॥ ४५ ॥**

**(भा.दी.)** जीवनं किमर्थं नेच्छसीत्यत आह– **मृताव**िति । ज्ञानिनः मृतौ मरणे सत्याम्, यस्य श्रीरामस्य कीर्तनं नामोच्चारणम्, तत् कर्तुम्, तपश्च दानं च ते आदी यस्य तत्तथोक्तं सत्कर्म कुर्वते । तं तादृशगुणं त्वां अवेक्ष्य मे मृत्युम्, साक्षात् अनुग्रहः प्रसादरूपस्तं मन्ये । मन ज्ञाने लट् ॥ ४५ ॥

**(सं.चं.)** मृतिकाले यन्नामकीर्तनं कर्तुं समर्थाः स्यामेति समग्रे जीवितकाले तपोदानादि कुर्वते । साक्षादनुग्रहः प्रत्यक्षगोचरः प्रसादः । न फलानुमेयः ॥ ४५ ॥

१. **'तपो दानानि कुर्वते'**

२. **'तं सङ्कीर्तनमात्रेण मोक्षप्रदं त्वाम्'** इति का.श्री. ।

**उक्त्वेति मोहमापेदे वाली प्राणान् न मुक्तवान् ।**
**इन्द्रदत्तां दधन्मालां काञ्चनीं [1]मृतिनाशनीम्[2] ॥ ४६ ॥**

**(भा.दी.)** **उक्त्वेति** । वाली इति उक्त्वा मोहो मूर्छा तं आपेदे आप । पद गतौ लिट् । इन्द्रदत्ताम्, मृतिस्तां नाशयतीति तथोक्ता तां काञ्चनीं स्वर्णमयीं मालां दधत् सन् प्राणान्न मुक्तवान् ॥ ४६ ॥

**(सं.चं.)** मोहमापेदे । अथापि प्राणान् न मुक्तवान् । यतः मृतिनाशनीं मालां दधदास ॥ ४६ ॥

**धावन्तीं राजमहिषीं मुञ्चन्तीमश्रुसन्ततिम्[3] ।**
**दीर्घं श्वसन्तीं सम्प्रेक्ष्य प्रोचिरे वालिसेवकाः ॥ ४७ ॥**

**(भा.दी.)** **धावन्तीमि**ति । वालिसेवकाः वानराः, धावन्तीं पतिमरणं ज्ञात्वा किष्किन्धायाः आद्रवन्तीम्, अस्राणामश्रूणां सन्ततिं मुञ्चन्तीम्, दीर्घं यथा भवति तथा श्वसन्तीम्, राज्ञो वालिनो महिषीं तारां सम्प्रेक्ष्य प्रोचिरे ॥ ४७ ॥

**(सं.चं.)** राजमहिषीं ताराम् । वालिसेवका वानराः ॥ ४७ ॥

**वीरसूर्वीरपत्नी त्वं कुत्र [4]यास्यसि निर्भया ।**
**सुग्रीवराक्षसाद् बालं पालयामः प्रवासिनः ॥ ४८ ॥**

**(भा.दी.)** **वीरे**ति । वीरं सूतवतीति वीरसूः, अङ्गदं प्रसूतवतीत्यर्थः, वीरस्य वालिनः पत्नी त्वम्, निर्गतं भयं यस्याः सा तथा सती कुत्र यास्यसि । वयं प्रवास एषामस्तीति प्रवासिनः विदेशवासिनः इत्यर्थः, सुग्रीव एव राक्षसस्तस्मात्, ज्येष्ठमारकत्वेन राक्षससदृशसुग्रीवादित्यर्थः, बालमङ्गदं पालयामः ॥ ४८ ॥

**(सं.चं.)** वीरसूर्वीरमाता । 'वीरपत्नी वीरभार्या वीरमाता च वीरसूः' इति यादवप्रकाशः । कुत्र यास्यसि यत्र निर्भया स्याः । न क्वापि । सर्वत्रापि सुग्रीवराक्षसाद् भयमेव । अथच सुग्रीवाख्याद् राक्षसात् सम्प्रति बालोऽङ्गदः पालनीयः । अन्यथा भ्रातुर्हन्ता हन्तायं राक्षसस्तत्तनयमपि हन्यादेव । अतस्तं वयं

---

१. **'मृतिनाशिनीम्'** । **'मृतिनोदिनीम्'** इति च । **'मृतिनोदिनीमिति पाठे मरणमपाकुर्वाणाम्'** इति का.श्री. ।

२. इतः परं पद्यमेकमधिकं क्वचित्–**'स्वपतिं पतितं श्रुत्वा तारा तारस्वरा पुनः । विलपन्ती गुहात्तस्माद् यातुं मन उपादधे'** इति । नातिस्वरसम् । **'गुहात् तस्मात्'** इत्यसङ्गतम् । **'गृहात् तस्मात्'** इति स्यात् । अथापि न श्लिष्यति । न व्याख्यातं च प्रतनैः ।

३. **'मुञ्चन्तीमस्रसन्ततिम्'** इति वि.ती.पाठः । **'मुञ्चतीमश्रु–'** इति क्वचित् । ४. **'कुत्र धावसि'**

पालयामः । प्रवासिनः वालिपातनेन तदनुगा वयमपि देशभ्रष्टाः सञ्जाताः । तेन प्रवासिनः विदेशे क्वापि वसन्तस्तं पालयाम इति ॥ ४८ ॥

**इत्युक्त्वोत्पततो वीक्ष्य क्षुभ्यतो बिभ्यतः कपीन् ।**
**उवाच वचनं साध्वी देशकालबलोचितम् ॥ ४९ ॥**

**(भा.दी.) इती**ति । इति उक्त्वा उत्पततः, क्षुभ्यतः कर्तव्यमूढतया क्षोभं गच्छतः, बिभ्यतः कपीन् वीक्ष्य, साध्वी पतिव्रता तारा, देशश्च कालश्च बलं च तेषामुचितं योग्यं तत् वचनं उवाच ॥ ४९ ॥

**(सं.चं.)** वालिनं पतितं दृष्ट्वा क्षुभ्यतः किङ्कर्तव्यमूढान् । सकार्मुकं रामं दृष्ट्वा बिभ्यतः । देशकालोचितमात्मसामर्थ्योचितं च ॥ ४९ ॥

**अवधीद् भ्रातरं भ्राता राजानं राज्यकामुकः ।**
**भजताद्य[1] तमात्मेशं कपयः कुत्र यास्यथ ॥ ५० ॥**

**(भा.दी.) अवधीदि**ति । भ्राता सुग्रीवः, राज्यस्य कामुकः कामनाशीलः सन्, राजानं भ्रातरं वालिनं अवधीत् । हन हिंसागत्योर्लुङ् । अथ तं सुग्रीवं आत्मनां स्वेषां ईशं भजत । भज सेवायां लोट् । हे कपयः, कुत्र यास्यथ गमिष्यथ ॥ ५० ॥

**(सं.चं.)** राजानं भ्रातरं वालिनं राज्यकामुको भ्राता सुग्रीवः अवधीत् रामेण सहायेन । इदानीं सुग्रीवो भवतामीशः । तं भजत । तं विहाय कुत्र यास्यथ ॥ ५० ॥

**कुणपस्याङ्गदेनेव कृत्यं मेऽस्त्यङ्गदेन किम् ।**
**तं देवः पालयेदेव मन्नाथमनुयाम्यहम् ॥ ५१ ॥**

**(भा.दी.) कुणपस्ये**ति । कुणपः शवस्तस्य अङ्गदं बाहुभूषणं तेनेव, विधवात्वेन कुणपसदृशायाः मे अङ्गदेन पुत्रेण किं कृत्यं किं कार्यमस्ति? न किमपि । देवः श्रीरामः तं अङ्गदं पालयेदेव रक्षेदेव । अहं मम नाथं भर्तारं अनुयामि ॥ ५१ ॥

**(सं.चं.)** कुणपस्य शवस्याङ्गदेन बाहुभूषणेनेव मम हतधवाया अङ्गदेन पुत्रेण सम्प्रति किं प्रयोजनम्? देवो रामस्तं पालयेदेव । अहं तु मन्नाथमनुम्रिये ॥ ५१ ॥

---

१. **'भजताथ'** इति वि.ती.पाठः ।

**वदन्तीत्थं प्रसर्प्पन्ती[१] पतिं पतितमैक्षत ।**
**रक्तैराक्तं[२] रजोमिश्रं वीरशय्याशयं शुभा ॥ ५२ ॥**

**(भा.दी.) वदन्ती**ति । इत्थं वदन्ती, प्रसर्पन्ती धावन्ती, शुभा पतिव्रता तारा, पतितम्, रक्तानि शोणितानि तैः आक्तं आर्द्रम्, रजोमिश्रम्, वीराणां शय्या रणभूमिः, तस्यां शेत इति तथोक्तः, तं पतिं वालिनं ऐक्षत ॥ ५२ ॥

**(सं.चं.)** वीराणां या चरमा शय्या तत्र शयम् ॥ ५२ ॥

**पपात पत्युः पादान्ते हा नाथेति विराविणी ।**
**करीन्द्रेणेव कदळी शोकेनाभिहता सती ॥ ५३ ॥**

**(भा.दी.) पपाते**ति । हा नाथ इति विरावितुं विशेषेण रोदनं कर्तुं शीलमस्या अस्तीति तथोक्ता, सती सा तारा, करीन्द्रेण गजश्रेष्ठेन कदळीव, शोको दुःखं तेन अभिहता सती, दुःखपरवशेत्यर्थः, पत्युः पादयोरन्तं समीपं तस्मिन् पपात ॥ ५३ ॥

**(सं.चं.)** करीन्द्रेणाभिहता कदळीव ॥ ५३ ॥

**अङ्गदं चाग्रतः कृत्वा वानर्य्यो वालिवल्लभाः ।**
**विलेपुस्तं मृतं[३] प्राप्य ताडयन्त्योऽङ्गमात्मनः ॥ ५४ ॥**

**(भा.दी.) अङ्गदमि**ति । वालिनो वल्लभा भार्याः (वानर्यः), अङ्गदं अग्रतः कृत्वा, मृतं तं प्राप्य, आत्मनः स्वस्य अङ्गं शरीरं तत् ताडयन्त्यः सत्यः, विलेपुः परिदेवनं चक्रुः । लप व्यक्तायां वाचि लिट् ॥ ५४ ॥

**(सं.चं.)** मृगमिव निश्चेष्टम् । मृतं मन्वाना वा । 'तस्या विलपितं श्रुत्वा वानर्य्यः सर्वतश्च ताः । परिगृह्याङ्गदं दीना दुःखार्ता प्रतिचुक्रुशुः' (२०.२३) इति च ॥ ५४–५ ॥

**विकीर्ण्णकेशाः क्रोशन्त्यो विकीर्ण्णाभरणस्रजः ।**
**साश्रुधाराः[४] कृपां कस्य वालिवध्वो न चक्रिरे ॥ ५५ ॥**

---

१. **'वदन्ती प्रलपन्तीत्थम्'** इति का.श्री. पाठः स्यात् । तथाहि तद्व्याख्यानम्–**'इत्थं पूर्वोक्तप्रकारेण वदन्ती ब्रुवन्ती प्रलापं कुर्वाणा'** इति । एतदानुगुण्याय **'वदन्तीत्थं प्रलापन्ती'**, इति, **'वदन्तीत्थं लालपन्ती'** इत्यादिकमपपाठं पठन्तो मूलपाठं दूषयन्ति केचिद् वागर्थानभिज्ञाः ।

२. **'रक्तैराक्तरजोमिश्रम्'**

३. **'मृतं मृतप्रायं तं वालिनम्'** इति का.श्री. ।

४. **'सास्रधाराः'** इति वि.ती.पाठः ।

**(भा.दी.) विकीर्णे**ति । विकीर्णाः केशाः यासां तास्तथोक्ताः, क्रोशन्त्यः आक्रोशं कुर्वन्त्यः, विकीर्णा आभरणानि स्रजश्च यासां तास्तथोक्ताः, अस्राणां अश्रूणां धाराभिः सहिताः साश्रुधाराः, वालिवध्वः वालिनो भार्याः कस्य पुरुषस्य कृपां न चक्रिरे । तद्द्रष्टॄणां सर्वेषां च कृपा जातेत्यर्थः ॥ ५५ ॥

**क्रियासमभिहारेण ताडयन्ती निजां तनुम् ।**
**विललापाऽकुला बाला तारा पतिपरायणा ॥ ५६ ॥**

**(भा.दी.) क्रिये**ति । पतिरेव परायणं केवलमाश्रयो यस्याः सा तथोक्ता, आकुला व्याकुला, बाला तारा, क्रियासमभिहारः पौनःपुन्यं तेन, निजां तनुं शरीरं ताडयन्ती सती विललाप ॥ ५६ ॥

**(सं.चं.)** क्रियासमभिहारेण पौनःपुन्येन । बालेव बाला मुग्धा । अबाला प्रबुद्धा वा ॥ ५६ ॥

**आर्य्यपुत्र प्रबुद्ध्यस्व ताराऽस्मि तव वल्लभा ।**
**साध्वीमनागसं[1] नाथ कस्मान्मां नाभिनन्दसि ॥ ५७ ॥**

**(भा.दी.) आर्ये**ति । आर्यस्य त्रैलोक्यस्वामिन इन्द्रस्य पुत्र वालिन्, प्रबुद्ध्यस्व प्रबोधं प्राप्नुहि । बुध अवगमने लोट् । अहं तव वल्लभा प्रिया भार्या तारा अस्मि । हे नाथ, त्वं साध्वीम्, न विद्यते आगोऽपराधो यस्याः सा तथा ताम्, मां कस्मान्नाभिनन्दसि, प्रियभाषणादिना पूर्ववत् सन्तोषं न प्रापयसि ॥ ५७ ॥

**(सं.चं.)** आर्यपुत्रेति भर्ता सम्बोधनीय इति कविसमयः । गृहे वृद्धः श्वशुरो ह्यार्य उच्यते । अनागसं निरपराधिनीम् । 'अनागसीम्' इति पठन्ति । तदा तु च्छान्दसं रूपम् ॥ ५७ ॥

**प्राणप्रख्यः सुतस्तेऽयमङ्गदः समुपस्थितः ।**
**गाढं रोदिति दीनस्त्वमुत्तिष्ठ परिसान्त्वय ॥ ५८ ॥**

**(भा.दी.) प्राणे**ति । ते प्राणानां पञ्चप्राणानां प्रख्यः समानः, अत्यन्तं प्रिय इत्यर्थः, सुतः अयमङ्गदः समुपस्थितः समीपस्थितः सन्, दीनः सन्, गाढं दृढं भूयिष्ठं यथा भवति तथा रोदिति । रुदिर् अश्रुविमोचने लट् । त्वं उत्तिष्ठ उत्थितो भव । रुदन्तमङ्गदं परिसान्त्वय । षान्त्व सामप्रयोगे लोट् ॥ ५८ ॥

---

१. 'सतीमनागसीम्'

**(सं.चं.)** प्राणप्रख्यः जीवतुल्यः । 'प्राणस्तु प्रणवे जीवे जीविते परमात्मनि' इति यादवप्रकाशः । उत्तिष्ठ । उत्थाय तं परिसान्त्वय ॥ ५८–९ ॥

**लोकमन्यं गतोऽसि त्वं लोकपालपराक्रम ।**
**कृपां नैसर्ग्गिकीं त्यक्त्वा मां च सन्त्यक्तवानसि ॥ ५९ ॥**

**(भा.दी.) लोकमि**ति । लोकपालानामिन्द्रादीनां पराक्रम इव पराक्रमो यस्य स तथोक्तस्तत्सम्बुद्धिः, हे वालिन्, त्वं नैसर्गिकीं स्वाभाविकीं मयि कृपां त्यक्त्वा, अन्यो यः स्वर्गलोकस्तं गतः असि । मां च भूमावेव सन्त्यक्तवानसि ॥ ५९ ॥

**एकान्तेऽकथयः कान्त सर्वाभ्यः प्रेयसीं हि माम्[१] ।**
**कथं कितव तत् सत्यं प्राप्तोऽसि सुरसुन्दरीः ॥ ६० ॥**

**(भा.दी.) एकान्त** इति । हे कान्त भर्तः, एकान्तो रहस्यस्थळं तस्मिन्, सर्वाभ्यः स्त्रीभ्यः मां प्रेयसीमतिशयेन प्रियां अकथयः । कथ वाक्यप्रबन्धे लङ् । हे कितव कपटिन्, तत् कथनं कथं सत्यम्? हि यस्मात् मां विहाय सुराणां सुन्दरीः अप्सरस्त्रियः इत्यर्थः, प्राप्तः असि ॥ ६० ॥

**(सं.चं.)** कितव वञ्चक मिथ्यावादिन् । कथं तदेकान्तकथनं सत्यं स्यात् । यत इदानीं मां विहाय प्राप्तोऽसि सुरसुन्दरीः ॥ ६० ॥

**विरहानलसन्तप्तां लोठन्तीं विधवायिताम् ।**
**नय मामपि ते लोकं गृहदासी भवानि ते[२] ॥ ६१ ॥**

**(भा.दी.) विरहे**ति । विरह एवानलोऽग्निस्तेन सन्तप्ता (ताम्), लोठन्तीं भुवि परिभ्रमन्तीम्, विधवा-वत् चरतीति तथोक्ता ताम्, मामपि ते यो लोकस्तं प्रति नय । अहं ते गृहदासी भवानि भूयासम् ॥६१॥

**(सं.चं.)** विधवायितां विधवीकृताम् । तत्र यास्ते गृहाः दाराः सुरसुन्दर्यस्तासां दासी चेदपि । दासी भवानीति दैन्यातिशयः । 'पत्नी क्षेत्रं कळत्रं च गृहाः पुम्भूम्नि दारवत्' इति यादवः । गृहे सुरसद्मनि दासी, न चेद् भार्या, भवानीति वा । अदासी दासी सम्पद्यमाना भवानीति च्विप्रत्यये सत्येकं पदं वा ॥ ६१ ॥

---

१. 'प्रेयसीति माम्' २. 'भवामि ते'

**हा नाथ[1] कपिनाथ त्वं वैरिकक्षाशुशुक्षणिः ।**
**रामवारिनिधिं प्राप्य निर्वाणं गतवानसि ॥ ६२ ॥**

**(भा.दी.) हा नाथेति** । कपिनाथ, हे नाथ वालिन्, वैरिण एव कक्षाणि वनानि तेषामाशुशुक्षणिरग्निः त्वम्, राम एव वारिनिधिः समुद्रस्तं प्राप्य निर्वाणो विनाशस्तं गतवानसि ॥ ६२ ॥

**(सं.चं.)** वैरिकक्षस्य गुल्मस्य तृणस्य वा आशुशुक्षणिः । 'कक्षस्तु गुल्मे स्पर्धापदे तृणे' इति,'आशुशुक्षणिरर्केऽग्नौ' इति च यादवप्रकाशः । निर्वाणं विनाशं गतवानसि । 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति च ॥ ६२ ॥

**रामं व्रजाम[2] शरणं नाथमित्यर्थितं[3] मया ।**
**अभिमानज्वरात् तस्मिन् पथ्ये नाभूद् रुचिस्तव ॥ ६३ ॥**

**(भा.दी.) राममिति** । वयं नाथं श्रीरामं शरणमरणं तत् व्रजामः इति मया पूर्वं अर्थितं प्रार्थितम्, अभिमान एव ज्वरस्तस्मात्, 'आहूतो न निवर्तेय' इत्यभिमानादित्यर्थः, पथ्यं हितं तस्मिन्, तस्मिन् मद्वचसि, तव रुचिः प्रीतिः न अभूत् ॥ ६३ ॥

**(सं.चं.)** पथ्ये वचसि । यथा ज्वरिताय न पथ्यं रोचते ॥ ६३ ॥

**चारु चाटु च तेऽपाङ्गं मङ्गलं हसितं सितम् ।**
**भवान्तरेऽप्यहं वीक्षै[4] शुभं किञ्चिद् यदीश मे ॥ ६४ ॥**

**(भा.दी.) चार्विति** । हे ईश भर्तः, चाटु मनोहरं तव (चारु) वचस्तत्, 'चारु चित्रवचस्यपि' इति वैजयन्ती, ते मङ्गलः अपाङ्गो नेत्रान्तस्तं च, सितं धवळं हसितं हासस्तच्च, अहं अन्यो भवः भवान्तरं तस्मिन्, जन्मान्तर इत्यर्थः, यदि किञ्चिन्मे शुभं कर्म अस्ति तर्हि वीक्षै वीक्षमाणा भवानि ॥ ६४ ॥

**(सं.चं.)** तव चारु चाटुवचः चमत्कारि वचनम् । सितं निर्मलं हसितम् । वीक्षै साक्षात्करवाणि, अनुभवानि ॥ ६४ ॥

---

१. **'हे नाथ'**
२. **'व्रजामः शरणम्'** इति वि.ती.पाठः स्यात् ।
३. **'मित्यर्थितो मया'**
४. **'भवान्तरेऽपि वीक्षेऽहम्'**

**भुङ्क्ष्व सुग्रीव साम्राज्यं ज्येष्ठस्य रुधिरोक्षितम् ।**
**समं नो[१] राममाश्रित्य न हि सन्धिः कृतस्त्वया ॥ ६५ ॥**

**(भा.दी.) भुङ्क्ष्वेति** । हे सुग्रीव, हि यस्मात् त्वया श्रीरामं आश्रित्य नः बन्धुभूतानामस्माकं (समं) सह परस्परमित्यर्थः, सन्धिः न कृतः, किन्तु ज्येष्ठो वाली घातितः, तस्मात् ज्येष्ठस्य रुधिरेण रक्तेन उक्षितं सिक्तं तत् साम्राज्यं भुङ्क्ष्व अनुभव । भुज पालनाभ्यवहारयोर्लोट् ॥ ६५ ॥

**(सं.चं.)** रुधिरेण उक्षितम् । उक्ष सेचने । नः तव चास्माकं च समं समानं मित्रत्वे राममाश्रित्य सन्धिः करणीय आसीत् । अथापि नहि सन्धिः कृतस्त्वया । पुनः सन्धातुं लब्धमवकाशं व्यर्थमकरोः । 'सुमना राममाश्रित्य' इति पाठे राममाश्रित्य सुमनाः सन् साम्राज्यं भुङ्क्ष्व ॥ ६५ ॥

**अयि नाथ विधे कुर्य्याः करुणां करुणाकर ।**
**अर्द्धमेतद् वृथा क्लिष्टं कान्तेनार्द्धेन योज्यताम्[२] ॥ ६६ ॥**

**(भा.दी.) अयीति** । अयि नाथ हे स्वामिन्, करुणाया आकर आश्रय, विधे दैव, मयि करुणां कुर्याः । कर्तव्यकरुणामेव दर्शयति– **वृथेति** । वृथा क्लिष्टं क्लेशितं अर्धं पत्युः शरीरार्धभूतं इदं शरीरं अर्धेन अर्धभूतेन कान्तेन भर्त्रा योज्यताम्, ममापि मरणं कुर्वित्यर्थः ॥ ६६ ॥

**(सं.चं.)** मयि दयां कुर्याः । दम्पत्योरर्धमङ्गं मदाख्यं वृथा क्लेशभाजनं जातम् । तत् अन्येनार्धेन वालिरूपेण कान्तेन युज्यताम् । अक्लिष्टं स्याद् यद्यहमपि तेन सह म्रिये ॥ ६६–७ ॥

**विलपन्तीति करुणं सुस्वरा वालिवल्लभा ।**
**पत्युरङ्के शिरः कृत्वा मरणाय मनो दधे ॥ ६७ ॥**

**(भा.दी.) विलपन्तीति** । करुणं कृपास्पदं यथा भवति तथा इति विलपन्ती, सु सम्यक् स्वरो यस्याः सा तथा, वालिनो वल्लभा प्रिया तारा, पत्युः अङ्क ऊरुस्तस्मिन् शिरः कृत्वा, मरणं मृतिस्तस्मै मनो दधे ॥ ६७ ॥

**तस्या रुदितशब्देन कुमारस्याङ्गदस्य च ।**
**उद्बुद्धः किञ्चिदुन्मील्य वाली मन्दं वचोऽब्रवीत् ॥ ६८ ॥**

---

१. 'सुमना राम–' २. '–र्धेन युज्यताम्'

**(भा.दी.) तस्या** इति । तस्याः तारायाः, कुमारस्य अङ्गदस्य च, रुदितस्य रोदनस्य यः शब्दस्तेन, उद्बुद्धः प्रबोधं प्राप्तः वाली, किञ्चिन्नेत्रे उन्मील्य, मन्दं शनैः यथा भवति तथा वचः अब्रवीत् ॥ ६८ ॥

**(सं.चं.)** अङ्गदस्य च रुदितशब्देन किञ्चिदुद्बुद्धः ॥ ६८ ॥

**वत्स सुग्रीव मा वैरमनुसन्धत्स्व मूढवत् ।**
**कृतापकारोऽपि पुरा मया दिष्टानुवर्त्तिना ॥ ६९ ॥**

**(भा.दी.) वत्से**ति । हे वत्स सुग्रीव, दिष्टं दैवमनुवर्तितुं शीलमस्यास्तीति तथा तेन मया, पुरा कृत अपकारो राज्योच्चाटनादिर्यस्य स तथाऽपि, मूढवत् अज्ञवत् वैरं विरोधस्तत् मा अनुसन्धत्स्व मा स्मर ॥ ६९ ॥

**(सं.चं.)** दिष्टानुवर्तिना । विधिर्वैरं कारयामास । न तत्र तव मम वा स्वाच्छन्द्यम् । अकरणेऽप्यप्रभुतया त्वया वैरमकरवम् । तत् तन्माऽनुसन्धत्स्व माऽनुसन्धिथाः । माऽनुचिन्तयेत्यर्थः ॥ ६९ ॥

**अङ्गदं विद्धि ते पुत्रं शत्रुपुत्रं न जात्वपि[१] ।**
**भ्रातॄणामेकजातानामन्यपुत्रः स्वपुत्रकः ॥ ७० ॥**

**(भा.दी.) अङ्गदमि**ति । अङ्गदं ते पुत्रं विद्धि । विद ज्ञाने लोट् । जात्वपि कदाचिदपि शत्रोः पुत्रस्तं न विद्धि । यस्मात् एकस्मात् पितुर्जातानां भ्रातॄणां सहोदराणां अन्यस्य भ्रातुः पुत्रः स्वपुत्रकः स्वस्य पुत्र एव । तस्माच्छत्रुपुत्रं न विद्धीत्यन्वयः ॥ ७० ॥

**(सं.चं.)** एकजातानामेकपितृकाणां भ्रातॄणामेकस्य पुत्रोऽन्यस्यापि पुत्र एव । तस्मादङ्गदं स्वपुत्रं विद्धि, न कदाऽपि शत्रुपुत्रम् । अनुकम्पनीयः पुत्रः पुत्रकः ॥ ७० ॥

**भुङ्क्ष्व साम्राज्यमेतत् त्वं यौवराज्येऽङ्गदं कुरु ।**
**सुषेणतनयां तारां माऽवमंस्था महामतिम् ॥ ७१ ॥**

**(भा.दी.) भुङ्क्ष्वे**ति । एतत्साम्राज्यं त्वं भुङ्क्ष्व अनुभव । भुज पालनाभ्यवहारयोर्लोट् । अङ्गदं युवा चासौ राजा च युवराजः, तस्य भावस्तत्त्वम्, तस्मिन् कुरु । सुषेणस्य सुषेणनाम्नः कपेः तनयां पुत्रीम्, महती पूज्या मतिर्यस्याः सा तथा तां तारां मा अवमंस्थाः अवज्ञातां मा कुरु ॥ ७१ ॥

---

१. **'न जात्विति'**

**(सं.चं.)** महामतिं महाप्राज्ञाम्, या भाविनीमिमां दुर्दशां पूर्वमेव मे बोधयामास। 'नहि तारामतं किञ्चिदन्यथा परिवर्तते' (२२.१४) इति च ॥ ७१ ॥

**सदा रामस्य दासः स्याः सम्पदेऽत्र परत्र च ।**
**एष प्राणभृतां नाथः पुरुषः प्रकृतेः परः ॥ ७२ ॥**

**(भा.दी.) सदे**ति । अत्र अस्मिल्लोके, परत्र परस्मिन् लोके च, सम्पदे ऐश्वर्यार्थं सदा श्रीरामस्य दासः स्याः भवेः । तस्य महिमानमाह– **एष** इति । एषः श्रीरामः प्राणभृतां ब्रह्मादिजीवानां नाथः, पुरुषः पूर्णषड्गुणः, प्रकृतेः जडप्रकृतेः परः विलक्षणः, अनाद्यनन्तकालेऽपि तयाऽबद्ध इत्यर्थः । प्रकृतेः महालक्ष्म्याः पर उत्तम इति वा ॥ ७२ ॥

**(सं.चं.)** एष रामः प्राणभृतां ब्रह्मादीनां नाथः न केवलम् । प्रकृतेः श्रीतत्वादपि पर उत्तमः पुरुषः ॥ ७२ ॥

**रामकार्य्येषु वर्य्येषु न प्रमादी क्वचिद् भव ।**
**त्वमङ्गदानुवर्त्तस्व सुग्रीवं रामसम्मतम्[१] ॥ ७३ ॥**

**(भा.दी.) रामे**ति । वर्येषु श्रेष्ठेषु, श्रीरामस्य कार्याणि सीतान्वेषणादिकार्याणि तेषु, क्वचिदपि देशे काले च प्रमादोऽस्यास्तीति प्रमादी न भव । एवमनुजं प्रति साम्पराये स्वकीयं प्रतिवक्तव्यं हितोपदेशं कृत्वा स्वपुत्रस्य हितमुपदिशति– **त्वमि**ति । हे अङ्गद, (त्वं) श्रीरामस्य सम्मतं सुग्रीवम्, अनुवर्तस्व अनुसृत्य वर्तनं कुरु ॥ ७३ ॥

**(सं.चं.)** प्रमादी अनवहितः, आदररहितः । एवं सुग्रीवं सन्दिश्याथ तनयं बोधयति– त्वमङ्गदानुवर्तस्व । रामस्य सम्मतं यथा स्यात् ॥ ७३ ॥

**अयि नाथ[२] जगन्नाथ पुत्रोऽयं तेऽर्पितो मया ।**
**इयं च माला[३] भवता सुग्रीवाय प्रदीयताम् ॥ ७४ ॥**

१. **'रामसंयुतम्'** २. **'अयि राम'**
३. **'इयं च बाला'** इति. वि.ती.पाठः ।

**(भा.दी.) अयी**ति । अयि नाथ जगन्नाथ श्रीराम, मया पुत्रः अयमङ्गदः ते तव अर्पितः । भव्या शोभना बाला स्त्री इयं तारा भवता सुग्रीवाय प्रदीयताम् ॥ ७४ ॥

**(सं.चं.)** अथ रामं प्रार्थयते– अयि नाथ । पुत्रोऽयमङ्गदस्तेऽर्पितः । इयं चेन्द्रदत्ता मृतिनाशिनी माला । एतेन 'जग्राह सोऽभ्यनुज्ञातो मालां तां चैव काञ्चनीम्' (२२.१८) इति रामायणवचने 'अभ्यनुज्ञातः' इत्यस्य रामेणाभ्यनुज्ञात इत्यर्थ उक्तो भवति ॥ ७४ ॥

**प्रोच्येति मालामुन्मुच्य रामपादारविन्दयोः ।**
**सम्यगर्प्पितवान् वाली स्वात्मानं चाऽत्मवित्तमः ॥ ७५॥**

**(भा.दी.) प्रोच्ये**ति । आत्मानं परमात्मानमतिशयेनापरोक्षतो वेत्तीत्यात्मवित्तमः वाली, इति श्रीरामं प्रति प्रोच्य, युद्धतुष्टेन पुरन्दरेण दत्तां सुवर्णमयीं मालामुन्मुच्य, श्रीरामस्य यौ पादौ तावेवारविन्दे तयोः अर्पितवान्, स्वात्मानं च सम्यक् श्रीरामपादारविन्दयोः अर्पितवान् ॥ ७५ ॥

**(सं.चं.)** स्वात्मानं चार्पितवान् रामपादारविन्दयोः । प्राणान् जहावित्यर्थः ॥ ७५ ॥

**स इत्थमुक्त्वा परिमुक्तसङ्गो रामस्य रूपामृतमीक्षणाभ्याम् ।**
**[१]तदाऽऽत्मचेतःकलशे प्रगृह्य महेन्द्रजः प्राप महेन्द्रभावम् ॥ ७६ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**किष्किन्धाकाण्डे चतुर्त्थः सर्ग्गः ॥**

**(भा.दी.) स** इति । महेन्द्रजः महेन्द्रजातः सः वाली इत्थमुक्त्वा, परिमुक्तः सङ्गः पुत्रकळत्रराज्यादिष्वासक्तिर्येन स तथा सन्, श्रीरामस्य तत् श्रुतिवेद्यम्, रूपमेवामृतं तत्, ईक्षणे लोचने ताभ्यां लोचनाभ्याम्, आत्मनः स्वस्य यच्चेतस्तदेव कलशो घटस्तस्मिन् प्रगृह्य, श्रीरामस्य दिव्यं रूपमनिमिषचक्षुर्भ्यामवलोक्य मनसा संस्मरन्नित्यर्थः, महेन्द्रस्य भावो धर्मस्तं इन्द्रत्वमित्यर्थः, प्राप । आप्लृ व्याप्तौ लिट् ॥ ७६ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां**
**किष्किन्धाकाण्डे चतुर्थः सर्गः ॥**

---

१. **'तदा स्म चेतः–' 'तदा प्राणत्यागसमये'** इति का.श्री. । **'तत्+आत्मतेजःकलशे'** इति प्रतृण्णे वि.ती.पाठे ।

**(सं.चं.)** इन्द्रोपेन्द्रवज्राभ्यामुपसंहरति– स इत्थमुक्त्वा । ईक्षणाभ्यां पिबन् चेतःकलशे सङ्गृह्य भरमाणः । महेन्द्रजो वाली महेन्द्रभावं मूलरूपमाप ॥ ७६ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां**
**किष्किन्धाकाण्डे चतुर्थसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १५५३+७६=१६२९]

# पञ्चमः सर्ग्गः

[1]मरणं रमणस्याथ [2]विलपन्ती विलोक्य सा ।
परिरम्भपरा देहं सशरं चाभ्यपद्यत ॥ १ ॥

**(भा.दी.)** श्रीरामं प्रपन्नस्य सुग्रीवस्य साम्राज्यप्राप्त्यादिकं वक्तुमारभते– **मरणमिति** । (अथ) रमणस्य भर्तुः मरणं मृतिस्तत् विलोक्य विलपन्ती सा तारा, परिरम्भे आलिङ्गने परं तात्पर्यं यस्याः सा तथा सती, शरेण सहितः सशरः, तं देहं अभ्यपद्यत जगाम । पद गतौ लङ् ॥ १ ॥

**(सं.चं.)** परिरम्भे परा परिरब्धुमुद्युक्ता, परिरम्भबाधकेन शरेण कीलितं देहमभ्यपद्यत प्राप्तवती ॥ १ ॥

पश्यन्नश्रुमुखो देव्याः[3] साहसं सहसा ततः ।
नील उत्पाटयामास शरं वालिशरीरतः ॥ २ ॥

**(भा.दी.)** **पश्यन्निति** । देव्यास्तारायाः साहसमालिङ्गनेऽतिप्रयत्नः, तं पश्यन् अश्रु मुखे यस्य स तथोक्तः स नीलः (सहसा) ततः, वालिनो यच्छरीरं तस्मादिति ततः, राममुक्तो यः शरः, तं उत्पाटयामास उद्धृतवान् । पट गतौ लिट् ॥ २ ॥

**(सं.चं.)** सशरस्य देहस्य परिरम्भाख्यं साहसम् । '**ದುಡುಕು**' इति भाषायाम् । सहसा सद्यः । 'उद्बबर्ह शरं नीलस्तस्य गात्रगतं तदा' (२३.१७) इति च ॥ २ ॥

---

१. इतः पूर्वं क्वचिदेकः श्लोकः पठ्यते– **'मृतं तं भ्रातरं दृष्ट्वा सुग्रीवः सुस्वरं रुदन् । 'बहुलं विललापाथ अग्रजस्य पदे पतन्'** इति । अत्र तृतीयतुरीयचरणयोर्विसन्धिता दोषः । नैवं प्रयुञ्जते महाकवयः । न कैरपि व्याख्यातः । निश्चप्रचं प्रक्षिप्त श्लोकः ।

२. **'-स्याथ बहुधा विललाप सा'**

३. **'देव्यां साहसम्'**

**कान्ता[1] कान्ताङ्गमालिङ्ग्य रुधिरौघाभिषेकिणी ।**
**अभिवादय तातं ते यान्तं पुत्रेत्यभाषत ॥ ३ ॥**

**(भा.दी.) कान्ते**ति । कान्तस्य भर्तुर्यदङ्गं तत् आलिङ्ग्य, रुधिराणां ओघः प्रवाहः, तस्य योऽभिषेकः, सः अस्या अस्तीति तथोक्ता, कान्तदेहालिङ्गनेन कान्तदेहसम्बन्धिरुधिरेणार्द्रदेहेत्यर्थः, कान्ता भार्या तारा, हे पुत्र, यान्तं स्वर्गं प्रति गच्छन्तम्, ते तातं पितरं वालिनं अभिवादय नमस्कुरु इति अभाषत ॥ ३ ॥

**(सं.चं.)** वालिकान्ता कान्तस्याङ्गं कळेबरम् । 'क्षेत्रमङ्गं कळेबरम्' इति च । कान्ताङ्गलग्नरुधिरोघेणाऽप्लुता । पुत्र अङ्गद, परलोकं यान्तं तातमभिवादय ॥ ३ ॥

**उत्थाय तूर्णं पितरमभ्यवादयदङ्गदः ।**
**आलोक्य तं सास्रधारा[2] तारा पुनरभाषत ॥ ४ ॥**

**(भा.दी.) उत्थाये**ति । अङ्गदः तूर्णं यथा भवति तथा उत्थाय पितरं वालिनं अभ्यवादयत् । तं वालिनं आलोक्य अस्राणां धारया सहिता सास्रधारा तारा पुनः अभाषत ॥ ४ ॥

**(सं.चं.)** तं पितरमभिवादयन्तमङ्गदमालोक्य ॥ ४ ॥

**आयुष्मान् भव वत्सेति वत्समुक्त्वा पते व्रज[3] ।**
**सचिवान् किङ्करांश्चैताननुज्ञाप्य च सन्नतान्[4] ॥ ५ ॥**

**(भा.दी.) आयुष्मानि**ति । हे वत्स पुत्र अङ्गद, आयुरस्यास्तीति आयुष्मान्, सम्पूर्णायुष्यवान् भव, इति वत्सं अङ्गदं प्रति उक्त्वा, (सन्नतान्) समन्तात् नम्रान् सचिवान् मन्त्रिणः, 'मन्त्री बुद्धिसहायः स्यादमात्यः सचिवस्तथा' इति हलायुधः, एतान् किङ्करान् भृत्यजनांश्च अनुज्ञाप्य, हे पते वालिन्, त्वं स्वर्गं प्रति व्रज ॥ ५ ॥

**(सं.चं.)** वत्सं प्रणतमुक्त्वा आशिषा संयोज्य, सन्नतान् सचिवान् किङ्करांश्चाऽपृच्छ्य ततः प्रयाहि परलोकम् ॥ ५ ॥

---

१. **'कान्ता कान्तं समाश्लिष्य'** २. **'साश्रुधारा'**
३. **'पतिव्रता'**(?) ४. **'सङ्गतान्'**

**उत्तिष्ठ भूप भूपृष्ठाद् वल्लभा चेदहं तव ।**
**[१]वीरलक्षणसम्पन्ना न पृथिव्यां हि शेरते ॥ ६ ॥**

**(भा.दी.)** **उत्तिष्ठेति** । चेद् यदि अहं तव वल्लभा प्रिया तर्हि, हे भूप वालिन्, भुवः पृष्ठं तळं तस्मात् उत्तिष्ठ, वीराणां यल्लक्षणं तेन सम्पन्नाः युक्ताः पुरुषाः पृथिव्यां न शेरते मरणं न प्राप्नुवन्ति । शीङ् स्वप्ने लट् । त्वं च वीरलक्षणसम्पन्न इत्यतः शीघ्रमुत्तिष्ठेति भावः ॥ ६ ॥

**(सं.चं.)** मसृणे तल्पे हि शेरते न पृथिव्याम् ॥ ६ ॥

**सङ्ग्रामयज्ञावभृथे रामबाणाम्बुना तव ।**
**पत्नीं मामपि संयुङ्क्ष्व नापत्नीको भवान् व्रजेत् ॥ ७ ॥**

**(भा.दी.)** **सङ्ग्रामेति** । सङ्ग्रामाख्यो यो यज्ञस्तस्य, अवभ्रियते परिपूर्यतेऽनेन दीक्षाव्रतमित्यवभृथः, यागसमाप्तौ जलावगाहनेष्टिः, तस्मिन् रामस्य यो बाणः स एवाम्बु जलं तेन तव पत्नीं मामपि सयुङ्क्ष्व संयोजय । युजिर् योगे लोट् । न विद्यते पत्नी यस्य स तथा सन् भवान् न व्रजेत् ॥ ७ ॥

**(सं.चं.)** अवभृथो कर्मान्तस्नानम् । रामबाणाम्बुना निर्वर्त्येऽवभृथे । अत एव कर्णाटकभाषायाम् 'अम्बु' इति बाणमाचक्षते । नह्यपत्नीकः क्वापि यज्ञेष्वधिकृतो भवति । 'दृष्ट्वा सङ्ग्रामयज्ञेन रामप्रहरणाम्भसि । अस्मिन्नवभृथे स्नातः कथं पत्न्या मया विना' (२३.२७) इति च ॥ ७ ॥

**विषमालोड्य पास्यामि प्रवेक्ष्याम्यथवाऽनलम् ।**
**यावद् वीरधवां तां मां न स्पृशेद् विधवापदम् ॥ ८ ॥**

**(भा.दी.)** **विषमिति** । यावत् यतः पूर्वम्, वीरः वाली धवो भर्ता यस्याः सा तथा तां माम्, विधवा इति यत् पदं नाम तत् न स्पृशेत्, स्पृश आमर्शने लिङ्, तावत् ततः पूर्वमेव, विषं गरळं तत् आलोड्य पेयद्रव्येण सम्पाद्य पास्यामि । अथवा अनलमग्निं प्रवेक्ष्यामि ॥ ८ ॥

**(सं.चं.)** वीरधवां मां विधवां यावन्न वदेयुस्तावत् । आलोड्य अधश्चोर्ध्वं च सञ्चाल्य, तस्यौत्कट्यं सम्पाद्य ॥ ८ ॥

---

१. 'वीरा लक्षण–'

**कर्म्मणा मनसा वाचा यदागस्ते कृतं मया ।**
**क्षमानाथ क्षमस्व त्वं कान्ता ते[१] स्यां भवान्तरे ॥ ९ ॥**

**(भा.दी.) कर्मणे**ति । कर्मणा मनसा वाचा (ते) मया यदागः अपराधः कृतम्, क्षमायाः भूमेः नाथ, क्षमायाः सहनस्य नाथेति वा,(तत् त्वं) क्षमस्व । क्षमूष् सहने लोट् । अन्यो भवः भवान्तरं तस्मिन्, जन्मान्तर इत्यर्थः, ते कान्ता भार्या स्याम् । अस भुवि लिङ् ॥ ९ ॥

**(सं.चं.)** यद्यागः कृतं तत् सर्वं क्षमस्व । भवान्तरेऽपि तवैव कान्ता स्यामित्याशासे ॥ ९ ॥

**विलपन्तीं तथा बालां प्रजिहासुमसूनपि ।**
**वानर्य्यः सान्त्वयन्त्योऽपि[२] प्रकृतिं नेतुमक्षमाः ॥ १० ॥**

**(भा.दी.) विलपन्तीमि**ति । वानर्यः वानरस्त्रियः, तथा विलपन्तीम्, असूनपि प्रकर्षेण हातुमिच्छति प्रजिहासति प्रजिहासतीति प्रजिहासुस्ताम्, बालां भव्यां शोभनां तारां सान्त्वयन्त्योऽपि प्रकृतिं पूर्वस्वभावम्, पूर्वावस्थामिति यावत्, नेतुं अक्षमा असमर्थाः, आसन्निति शेषः ॥ १० ॥

**(सं.चं.)** बालां मुग्धाम् । अबालां प्रबुद्धां वा । प्राणानपि हातुमिच्छन्तीम् । प्रकृतिं दुःखोन्मादादुन्मुच्य सहजावस्थां प्रापयितुं क्षमा नाभवन् ॥ १० ॥

**अन्तःपुरचरो वृद्धः [३]प्राज्ञस्तत्रेदमब्रवीत् ।**
**[४]का कस्य कान्ता कः कान्तः कः पुत्रः कः पिता भवेत् ॥ ११ ॥**

**(भा.दी.) अन्तरि**ति । अन्तःपुरे चरतीत्यन्तःपुरचरः, प्रज्ञा अस्यास्तीति प्राज्ञः । 'प्रज्ञाश्रद्धा–' (अ.सू. ५.२.१०१) इत्यादिना मत्वर्थे णः । वृद्धः कश्चन वानरः, तत्र एतस्मिन्नवसरे, इदं वचः अब्रवीत् । कस्याः स्त्रियाः कान्तो भर्ता कः भवेत्? कस्य पुरुषस्य कान्ता भार्या का भवेत्? कस्य पुत्रः कः भवेत्? कस्य पिता कः भवेत्? न किञ्चिदप्यनादिसंसारे नियतमिति भावः ॥ ११ ॥

---

१. **'कान्ता स्यां ते भवा–'** २. **'–यान्त्योऽत्र प्रकृतिम्'** । **'सान्त्वयन्त्योऽथ'** इति च । ३. **'प्राज्ञस्तामिद–'**

४. **'कः कस्य कान्तः कान्ता का कः पुत्रः'** । **'कस्य स्त्रीजीवस्य कः कान्तः पतिः भवेत् । कस्य पुरुषस्य कान्ता स्त्री का भवेत्'** इति का.श्री. ।

**(सं.चं.)** अन्तःपुरचरो वृद्धः प्राज्ञः । कोऽयम्? वाल्मीकिस्तु हनुमानिति स्फुटमाह–'ततो निपतितां तारां च्युतां तारामिवाम्बरात् । शनैराश्वासयामास हनुमान् हरियूथपः' (२१.१) इति । 'शोच्या शोचसि कं शोच्यं दीनं दीनाऽनुकम्पसे । कस्य को वाऽनुशोच्योऽस्ति देहेऽस्मिन् बुद्बुदोपमे' (२१.३) इति च अयमन्यो वृद्धो न रामायणोदितः । नच हनुमानेव । ताराया अन्तःपुरचर इत्युक्तेः ॥ ११ ॥

**अस्थिरः सङ्गमो ह्येषां कान्तादीनां भवेभवे ।**
**ईश्वरेच्छानुवृत्तानां स्रवन्त्यामेधसामिव ॥ १२ ॥**

**(भा.दी.)** एतदेव विशदयति– **अस्थिर** इति । ईश्वरस्य या इच्छा तामनुवृत्ताः अनुसृत्य वर्तमानास्तेषाम्, कान्ता आदिर्येषां ते तथा तेषाम्, एषां बन्धूनाम्, भवः जन्म, तस्मिन् भवे जन्मनि सङ्गमः, स्रवन्त्यां नद्यां एधांसि काष्ठानि तेषामिव अस्थिरः । यथा प्रवाहेण उह्यमानानि तृणादीनि कुत्रचित् संयुज्यन्ते तथा वियुज्यन्ते च तद्वदेव भर्त्रादिसङ्गम इति भावः ॥ १२ ॥

**(सं.चं.)** भवेभवे जन्मनिजन्मनि । स्रवन्त्यामेधसां काष्ठानां सङ्गमइव यादृच्छिकः क्षणिकश्च ॥ १२ ॥

**त्वं तु नीतिमती तारे कथमेवं विषीदसि ।**
**तस्याऽत्मानं सुतं रक्ष प्रियं चेद् भर्त्तुरिच्छसि ॥ १३ ॥**

**(भा.दी.)** एवं संसारचक्रस्य स्थितिमुक्त्वा प्रशंसापूर्वकं हितमाह–त्वं त्विति । हे तारे, त्वं तु नीतिरस्या अस्तीति तथा, यतस्तत एवं कथं विषीदसि मुह्यसि । षद्लृ विशरणगत्यवसादनेषु लट् । चेद् यदि भर्तुः वालिनः प्रियं इष्टं कर्म कर्तुमिच्छसि, तर्हि तस्य वालिनः आत्मानं स्वरूपभूतम्, औरसमित्यर्थः, सुतमङ्गदं रक्ष ॥ १३ ॥

**(सं.चं.)** तस्याऽत्मानं सुतं रक्ष । 'आत्मा वै पुत्रनामाऽसि' इति हि श्रुतिः । 'अङ्गदस्तु कुमारोऽयं द्रष्टव्यो जीवपुत्रया । आयत्यां च विधेयानि समर्थान्यस्य चिन्तय' (२१.४) इति च ॥ १३ ॥

**तस्मिन्नेवं प्रवदति विलपन्तीषु तासु च ।**
**धृष्टमाचष्ट वचनं लक्ष्मणः शुभलक्षणः ॥ १४ ॥**

**(भा.दी.)** **तस्मिन्निति** । तस्मिन् वृद्धे वानरे एवं प्रवदति सति, तासु वानरीषु च विलम्पन्तीषु सतीषु, शुभानि लक्षणानि अङ्गसम्पदो यस्य स तथोक्तः लक्ष्मणः, धृष्टं धैर्ययुक्तं तत् वचनं आचष्ट ॥ १४ ॥

**(सं.चं.)** धृष्टं सन्दर्भोचितप्रागल्भ्ययुक्तं यथा स्यात् तथा आचष्ट उवाच ॥ १४ ॥

**सुग्रीव किमिदं दैन्यं तारां सान्त्वय सुव्रताम् ।**
**आरोप्य शिबिकां शीघ्रं देहो निर्ह्रियतामिति ॥ १५ ॥**

**(भा.दी.)** तदेव दर्शयति– **सुग्रीवे**ति । हे सुग्रीव, इदं दीनस्य भावो दैन्यं दुःखमित्यर्थः, किम्प्रयोजनम्? वालिमरणनिमित्तदुःखेन न किमपि प्रयोजनमित्यर्थः । शोभनं व्रतं यस्याः सा तथोक्ता तां तारां सान्त्वय । षान्त्व सामप्रयोगे लोट् । शिबिकां आन्दोळिकां शीघ्रं यथा भवति तथा आरोप्य देहः वालिशरीरं निर्ह्रियतां संस्क्रियताम् । (इति वचनमाचष्टेत्यन्वयः) ॥ १५ ॥

**(सं.चं.)** ऊर्ध्वसंस्कारार्थं हरणं निर्हरणम् ॥ १५–६ ॥

**हरयो हनुमन्नुन्ना घृतगन्धाद्युपानयन् ।**
**राज्ञो निर्हरणायाऽशु तारेण शिबिकाऽहृता ॥ १६ ॥**

**(भा.दी.)** **हरय** इति । हनुमता नुन्नाः प्रेरिताः हरयः नीलादिकपयः, घृतं च, गन्धः परिमळपदार्थः स च, तौ आदी यस्य तत्तथा तत्, राज्ञो वालिनो निर्हरणं संस्कारप्रयोजनं तस्मै आशु उपानयन् । णीञ् प्रापणे लङ् । तारेण अङ्गदमातुलेन शिबिका आहृता । वालिनो नयनार्थं किष्किन्धाया आनीता ॥ १६ ॥

**देहमङ्गदसुग्रीवावारोप्य शिबिकां शुभाम् ।**
**शिबिकावाहिभिर्भृत्यैर्निन्यतू राजभूतिभिः ॥ १७ ॥**

**(भा.दी.)** **देहमि**ति । अङ्गदसुग्रीवौ वालिनो यो देहस्तं शुभां शिबिकां आरोप्य, शिबिकां वोढुं शीलमेषा-मस्तीति शिबिकावाहिनस्तैः भृत्यैः, राज्ञो या विभूतयो च्छत्रचामरादिवैभवानि ताभिः सह निन्यतुः ॥१७॥

**(सं.चं.)** शुभां राजोचितालङ्कारयुक्ताम् । 'दिव्यां भद्रासनयुतां शिबिकां स्यन्दनोपमाम्' (२५.२१) इति च ॥ १७ ॥

**संवृतं विलपन्तीभिर्वानरीभिः प्रणीय तम् ।**
**द्वीपे नद्या[१] अदहतां नानालङ्कारभूषितम् ॥ १८ ॥**

---

१. **'नद्याः तुङ्गभद्रायाः द्वीपे मध्यभागे'** इति का.श्री. ।

**(भा.दी.) संवृतमि**ति । विलपन्तीभिः वानरीभिः संवृतम्, नानाविधा ये अलङ्काराः कटककुण्डलादयः तैर्भूषितः तम्, (तं) वालिनम्, प्रणीय रणाङ्कणान्नीत्वा, नद्याः पम्पायाः यो द्वीपस्तस्मिन् अदहताम् । दह भस्मीकरणे लङ् ॥ १८ ॥

**(सं.चं.)** गिरिनद्या जलेन संवृते द्वीपे । 'पुलिने गिरिनद्यास्तु विविक्ते जलसंवृते' (२५.३७) इति च ॥ १८–२१ ॥

**संस्कृत्य तं यथाशास्त्रं वालिनं वानरोत्तमाः ।**
**पम्पायामुदकं दत्वा रामपादान्तिकं ययुः ॥ १९ ॥**

**(भा.दी.) समि**ति । वानरोत्तमाः सुग्रीवादयः, तं वालिनम्, न्याय्यं शास्त्रविधिमनतिक्रम्य यथाशास्त्रं संस्कृत्य दग्ध्वा, पम्पायां उदकं जलं तत् दत्वा, श्रीरामस्य यौ पादौ तयोरन्तिकं तत् ययुः ॥ १९ ॥

**सुग्रीवाङ्गदपूर्वेषु कपिषु[1] प्रणतेष्वथ ।**
**हनुमान् प्राञ्जलिर्वाक्यं वाक्यज्ञो राममब्रवीत् ॥ २० ॥**

**(भा.दी.) सुग्रीवे**ति । अथ सुग्रीवश्च अङ्गदश्च तौ पूर्वौ येषां ते तथा तेषु, कपिषु प्रणतेषु सत्सु, वाक्यं जानतीति वाक्यज्ञः, तत्तत्काले वक्तव्यवाक्यकौशलज्ञ इत्यर्थः, हनुमान्, प्रकृष्टौ अञ्जली यस्य स तथा सन्, वाक्यं वचस्तत् रामं प्रति अब्रवीत् ॥ २० ॥

**अयमिच्छति सुग्रीवो निवासं स्वपुरे तव ।**
**त्वं हि नाथस्त्रिजगतामस्माकं तु विशेषतः ॥ २१ ॥**

**(भा.दी.) अयमि**ति । अयं सुग्रीवः स्वस्य यत्पुरं किष्किन्धाख्यं तस्मिन्, तव निवास अवस्थानं तं इच्छति । इषु इच्छायां लट् । कपिराज्यावस्थाने कोऽधिकार इत्यत आह–**त्वमि**ति । त्रीणि च तानि जगन्ति च तेषां नाथस्त्वं अस्माकं त्वद्भक्तानां विशेषतः नाथो हि । तस्मात् सुग्रीवस्तव निवासमिच्छतीत्यर्थः ॥ २१ ॥

---

१. **'–पूर्वेषु सर्वेषु प्रणतेष्वथ'**

**इत्युक्तो भगवानूचे किञ्चित् स्मित्वा मितं वचः ।**
**पुरग्रामेषु नो वासः पित्राज्ञां मे चिकीर्षतः ॥ २२ ॥**

**(भा.दी.)** **इती**ति । इति हनुमता उक्तः भगवान् श्रीरामः, किञ्चित् स्मित्वा, पितुर्या आज्ञा वने वस्तव्यमिति नियोगस्तां चिकीर्षतः, मे पुराणि च ग्रामाश्च तेषु वासः नो नास्ति इति मितं अल्पाक्षरं वचः ऊचे ॥२२॥

**(सं.चं.)** पुरेषु ग्रामेषु वा वासो नो, न युक्तः ॥ २२ ॥

**सुग्रीव भुङ्क्ष्व साम्राज्यं यौवराज्येऽङ्गदं कुरु ।**
**कार्य्यं नः कार्त्तिके मासि चिन्त्यतां श्रावणो ह्ययम् ॥ २३ ॥**

**(भा.दी.)** **सुग्रीवे**ति । हे सुग्रीव, साम्राज्यं सार्वभौमत्वं तत् त्वं भुङ्क्ष्व अनुभव । भुज पालनाभ्यवहारयोर्लोट् । यौवराज्यं श्वस्तनराजत्वं तस्मिन् अङ्गदं कुरु । नः कार्यं सीतान्वेषणादिलक्षणं कृत्तिकायोगः पौर्णमास्यामस्तीति कार्त्तिकस्तस्मिन् मासे चिन्त्यताम् । चिती संस्मृत्यां लोट् । अयं वर्तमानः मासः श्रावणो हि । तथा च मासचतुष्टयपर्यन्तं वार्षुककालत्वेन साम्प्रतं सीतान्वेषणस्यायुक्तत्वात् तदनन्तरं कर्तव्यमिति भावः ॥ २३ ॥

**(सं.चं.)** कार्यं नः । 'कार्त्तिके समनुप्राप्ते त्वं रावणवधे यत' (२६.१७) इति च ॥ २३–४ ॥

**इत्थमङ्गदसुग्रीवौ रामस्याज्ञां प्रगृह्य ताम् ।**
**दशाहं [१]दीक्षितौ राज्ञः पितृमेधं प्रचक्रतुः ॥ २४ ॥**

**(भा.दी.)** **इत्थमि**ति । इत्थं अङ्गदसुग्रीवौ श्रीरामस्य तां आज्ञां प्रगृह्य, दशानां अह्नां समाहारो दशाहं तत् दीक्षितौ व्रतग्रहणनियमवन्तौ सन्तौ, राज्ञो वालिनः पितृमेधो पितृयज्ञः तम्, श्राद्धमित्यर्थः, प्रचक्रतुः ॥ २४ ॥

**अथ प्रविश्य नगरीं गरीयोविभवां प्रभुः ।**
**विवेशान्तःपुरं भ्रातुर्वीक्षमाणः[२] स्वसम्पदः ॥ २५ ॥**

---

१. **'दश च तानि अहानि च दशाहम्। 'राजाहःसखिभ्यष्टच्'** (अ.सू.५.४.९१) । **अत्यन्तसंयोगे द्वितीया'** इति का.श्री. ।

२. **'भ्रातुः काङ्क्षमाणः'**(?)

**(भा.दी.) अथे**ति। (अथ) प्रभुः सुग्रीवः, गरीयान् ज्येष्ठो विभवः सम्पद् यस्यां सा तथा तां नगरीं प्रविश्य, स्वस्य याः सम्पदस्ताः वीक्षमाणः सन्, भ्रातुर्वालिनः यदन्तःपुरं तत् विवेश ॥ २५ ॥

**(सं.चं.)** नगरीं किष्किन्धाम्। सम्प्रति स्वीया जाताः सम्पदः ॥ २५–६ ॥

**सुग्रीवं हारवद्ग्रीवं [१]निर्य्यान्तमवरोधतः।**
**सर्वे ते वानरा नेमुर्ज्जयशब्दपुरःसरम् ॥ २६ ॥**

**(भा.दी.) सुग्रीवमि**ति। हारा अस्यां सन्तीति हारवती, तादृशी ग्रीवा यस्य स तथा तम्, अवरोधतः अन्तःपुरात् निर्यान्तं निस्सरन्तं सुग्रीवं सर्वे (ते) वानराः जयशब्दः पुरस्सरः पूर्वो यथा भवति तथा नेमुः ॥ २६ ॥

**(सं.चं.)** हारवद्ग्रीवम्, यो हारः पूर्वं वालिग्रीवायामासीदिन्द्रदत्तः ॥ २६ ॥

**[२]मतेनायं हनुमतः प्रकृतीरनुमान्य च।**
**प्रासादमारुरोहोच्चमभिषेकाय कल्पितम् ॥ २७ ॥**

**(भा.दी.) मतेने**ति। अयं सुग्रीवः हनुमतः मतं सम्मतिस्तेन, प्रकृतीः अमात्यादिजनान् अनुमान्य राज्याभिषेकसम्मतान् कारयित्वा, अभिषेको राज्याभिषेकस्तस्मै कल्पितं निर्मितम्, (उच्चम्) प्रासादो हर्म्यं तं आरुरोह ॥ २७ ॥

**(सं.चं.)** प्रकृतीराधिकारिकान् प्रजाश्च। अनुमान्य यथार्हं सत्कृत्याभिनन्द्य च ॥ २७ ॥

**आभिषेचनिकैर्द्रव्यैर्वानस्पत्यौषधादिभिः।**
**नानानदनदीतोयैर्ववृतेऽथाभिषेचनम् ॥ २८ ॥**

**(भा.दी.) आभिषेचनिकैरि**ति। अथ वनस्पतीनां वृक्षाणां सम्बन्धीनि वानस्पत्यानि तानि च, ओषधीनां सम्बन्धीनि औषधानि तानि च आदयो येषां तानि तथोक्तानि तैः, अभिषेचनार्थं विद्यमानानि आभिषेचनिकानि तैः द्रव्यैः, नानाविधाः नदा नद्यश्च तासां तोयानि उदकानि तैः अभिषेचनं ववृते ॥ २८ ॥

१. 'निर्यातमव–'
२. 'सम्मत्यायं हनूमतः'

**(सं.चं.)** 'वानस्पत्यः पुष्पफली फली त्वेव वनस्पतिः । ओषधिः फलपाकान्ता' इति च । औषधानीति भेषजानि च ॥ २८ ॥

**वाद्यमानेषु वाद्येषु तृप्ते ब्रह्मकुले धनैः ।**
**कन्याषोडशके प्राप्ते गीते सति मृगीदृशाम् ॥ २९ ॥**

**दीपलाजाक्षताद्येषु मङ्गलेष्वाहृतेष्विह[1] ।**
**वरासनस्थे सुग्रीवे नियोजयति मारुतौ ॥ ३० ॥**

**गजो गवाक्षो गवयो वृषभो गन्धमादनः ।**
**नळो मैन्दश्च विविदः सुषेणो जाम्बवानपि ॥ ३१ ॥**

**अभ्यषिञ्चन् रविसुतं ब्रह्मज्ञैर्ब्राह्मणैर्युताः[2] ।**
**शातकुम्भमयैः कुम्भैर्वसवो वासवं यथा ॥ ३२ ॥**

**(भा.दी.) वाद्येति** । वाद्यानि भेर्यादीनि तेषु वाद्यमानेषु सत्सु, ब्रह्मणां ब्राह्मणानां कुलं समूहस्तस्मिन् धनानि सुवर्णादीनि तैः तृप्ते सति, कन्यानां यच्छोडशकं षोडश तस्मिन् प्राप्ते सति, मृगीदृशां स्त्रीणां गीतं गानं तस्मिन् सति, दीपाश्च लाजाश्च अक्षताश्च ते आद्या येषां तानि तथोक्तानि तेषु, मङ्गलेषु मङ्गलद्रव्येषु इह आहृतेषु आनीतेषु सत्सु, सुग्रीवे वरमुत्तमं यदासनं तस्मिन् तिष्ठतीति तथोक्तः स तथा सति, मारुतौ हनुमति नियोजयति, अध्यक्षतया तत्तत्पुरुषान् प्रति कर्तव्यकार्याणां नियोगं कुर्वति सति, गजः गजनामको वानरः गवाक्षः गवयः वृषभः गन्धमादनः नळः मैन्दश्च विविदः सुषेणः जाम्बवानपि इत्येते वानराः ब्रह्म वेदं जानन्तीति ब्रह्मज्ञाः, तैः ब्राह्मणैर्युताः सन्तः, शातकुम्भमयाः स्वर्णमयाः, तैः कुम्भैः कलशैः, वसवः अष्टौ वसवः वासवमिन्द्रं यथा तथा रविसुतं सुग्रीवं अभ्यषिञ्चन् ॥ २९-३२ ॥

**(सं.चं.)** तृप्ते ब्रह्मकुले धनैः । 'रत्नैर्वस्त्रैश्च भक्षैश्च तोषयित्वा द्विजर्षभान्' (२६.२९) इति च । वने तपोनिरतान् ब्राह्मणान् धनदानेन सन्तर्प्येत्यर्थः । वानरजातीयद्विजर्षभा इत्यप्यहो केचिद् व्याचक्षते । अद्भुतं धर्मशास्त्रकौशलं तेषाम् । कन्याषोडशके प्राप्ते उपलेपनद्रव्यैः सह । 'समालम्भनमादाय रोचनां समनः-

---

१. '–ष्वाहृतेषु च' २. '–ब्राह्मणैर्वृताः'

शिलाम् । आजग्मुस्तत्र मुदिता वराः कन्यास्तु षोडश' (२६.२८) इति च । गजो गवाक्षः । 'गजो गवाक्षो गवयो वृषभो गन्ध-मादनः । मैन्दश्च विविदश्चैव हनुमान् जाम्बवान् नळः । अभ्यषिञ्चन्त सुग्रीवं प्रसन्नेन सुगन्धिना । सलिलेन सहस्राक्षं वसवो वासवं यथा' (२६.३४–५) इति च । वसवो देवा वासवमिन्द्रं यथा । वसव इति देवताविशेषवचनं सामान्यवचनं च । अत्र तु देवतासामान्यवचनम् । 'गवयः शरभः' इति पठन्तस्तात्पर्यनिर्णयविरोधादुपेक्ष्याः ॥२९–३२॥

**प्रक्रोशत्स्वथ वीरेषु पारमेष्ठ्यान्युपाहरन्[1] ।**
**पनसश्छत्रमादत्त[2] नळतारौ च चामरे ॥ ३३ ॥**

**(भा.दी.)** अथ वीरेषु प्रक्रोशत्सु सिंहनादं कुर्वत्सु, पारमेष्ठ्यानि राजविभूतयस्तानि उपाहरन् आनीतवन्तः । तदेव विशदयति– **पनस** इति । पनसः तन्नामकः च्छत्रं श्वेतच्छत्रं तत् आदत्त, नळतारौ (च) चामरे आददाताम् ॥ ३३ ॥

**(सं.चं.)** प्रक्रोशत्सु नन्दिघोषं कुर्वत्सु । 'प्रचुक्रुशुर्महात्मानो हृष्टास्तत्र सहस्रशः' (२६.३७) इति च । पारमेष्ठ्यानि राजचिह्नानि । परमे सिंहासने तिष्ठन् परमेष्ठी ॥ ३३–५ ॥

**रेजे राजाऽभिषेकान्ते[3] सर्वाभरणभूषितः ।**
**आप्यायितो हनुमता ब्रह्मणेव शतक्रतुः ॥ ३४ ॥**

**(भा.दी.) रेज** इति । सर्वाणि यान्याभरणानि तैः भूषितः, ब्रह्मणा चतुर्मुखेन शतक्रतुरिव, हनुमता आप्यायितः क्लेशं परिहृत्य सिद्धिं गमितः, राजा सुग्रीवः अभिषेकस्यान्तोऽवसानं तस्मिन् रेजे ॥ ३४ ॥

**रामाज्ञां संस्मरन् प्राज्ञो यौवराज्येऽभ्यषेचयत् ।**
**अङ्गदं कर्म्म तत् तस्य सर्वे साध्वित्यपूजयन् ॥ ३५ ॥**

**(भा.दी.) रामे**ति । श्रीरामस्य या आज्ञा, यौवराज्येऽङ्गदं कुर्वित्याज्ञा, तां संस्मरन् प्राज्ञः सुग्रीवः, अङ्गदं यौवराज्यं श्वस्तनराजत्वं तस्मिन् अभ्यषेचयत् । सर्वे कपयः तस्य सुग्रीवस्य तत् अभिषेचनरूपं कर्म साधु सम्यगिति अपूजयन् ॥ ३५ ॥

१. 'पारमेष्ठ्यान्युपानयन्' २. '–श्छत्रमाधत्त' ३. 'राज्याभिषेकान्ते'

**निवेद्य रामदेवाय तत् साम्राज्याभिषेचनम् ।**
**सर्वसम्पत्समृद्धां तां किष्किन्धामविशत्[1] कपिः ॥ ३६ ॥**

**(भा.दी.)** **निवेद्ये**ति । कपिः सुग्रीवः तत् सञ्जातं साम्राज्याभिषेचनं श्रीरामदेवाय निवेद्य, सर्वा या सम्पत् तया समृद्धां (तां) किष्किन्धां पुरीं आवसत् ॥ ३६ ॥

**(सं.चं.)** अभिषेचनवार्तां निवेद्य ॥ ३६ ॥

**तारया चारुरूपिण्या रुमया च स्वभार्य्यया ।**
**रामदासः पुरे रेमे बुद्ध्या मत्या यथा पुमान्[2] ॥ ३७ ॥**

**(भा.दी.)** **तारे**ति । रामदासः सुग्रीवः, चारु मनोहरं यद् रूपं तदस्या अस्तीति तथोक्ता तया तारया वालिभार्यया, स्वभार्यया रुमा रुमानाम्नी तया च, पुमान् बुद्ध्या अन्तःकरणेन मत्या ज्ञानेन च, यद्वा 'बुद्धिर्मेधा स्मृतिः' इत्युक्तेः उभे अन्तःकरणवृत्ती एव, ताभ्यां यथा तथा पुरं किष्किन्धा तस्मिन् रेमे । रमु क्रीडायां लिट् ॥ ३७ ॥

**(सं.चं.)** वालिना कृतस्य रुमाधर्षणस्य परिहारार्थं तारा स्वेच्छया सुग्रीवभार्या बभूव । अग्रजे मृतेऽग्रजभार्याऽनुजेन वोढव्येति च प्रतनः सम्प्रदायः । अत एव तं देवरमाचक्षते द्वितीयोऽयं वरः प्रजावत्या इति । तदेतदाह– तारया चारुरूपिण्या । बुद्ध्या मत्या च । मनोबुद्धिभ्यां पुमानिव । व्यवसायात्मिका बुद्धिरिव तारा । सङ्कल्पमयी मतिरिव रुमा ॥ ३७ ॥

**अनुजग्राह सुग्रीवं रामो हत्वेति वालिनम् ।**
**रूपान्तरेऽनुरूपं स करिष्यन् वाल्यनुग्रहम् ॥ ३८ ॥**

**(भा.दी.)** श्रीरामेण स्वरूपत[3] उभयोरपि वालिसुग्रीवयोः स्वभावानुकूलोऽनुग्रहः कुतो न कृत इत्यत आह– **अनुजग्राहे**ति । अन्यद्रूपं रूपान्तरं तस्मिन्, अर्जुने इत्यर्थः, अनुरूपं तत्स्वरूपयोग्यं वालिनि योऽनुग्रहस्तं करिष्यन् सः श्रीरामः, वालिनं हत्वा सुग्रीवं इति अनुजग्राह । अनुग्रहं कृतवान् । ग्रह आदाने लिट् ॥३८॥

---

१. **'किष्किन्धामावसत्'** इति वि.ती.पाठः । **'किष्किन्धामाविशत्'** इति च ।

२. **'बुद्ध्या तात्कालिकज्ञानेन, मत्या आगामिविषयज्ञानेन च । 'स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकीं प्रोक्ता मती(?) त्रैकालिकी स्मृता' इति प्रसिद्धेः'** इति का.श्री.

३. **'स्वरूपत उत्तमे वालिनि सुग्रीवादप्यनुग्राह्यत्वसेवनानुकूलोऽनुग्रहः'** ।

**(सं.चं.)** रूपान्तरे अर्जुनात्मना जातस्य वालिनोऽनुग्रहमनुरूपं कृष्णरूपेण सारथ्यरूपं सख्यरूपं च करिष्यन् ॥ ३८ ॥

**माल्यवत्कन्दरे देवो दिव्यकन्दफलाशनः ।**
**अनुकूलजलाधारे सानन्दं सानुजोऽवसत् ॥ ३९ ॥**

**(भा.दी.) माल्ये**ति । सानुजः देवः श्रीरामः, अनुकूलः स्नानाद्युपयोगी जलाधारः सरोवरं यस्मिन् स तथा तस्मिन्, माल्यवतः माल्यवत्पर्वतस्य यः कन्दरः गुहाप्रदेशः तस्मिन्, दिव्ये ये कन्दफले मूलफले ते अशनं अन्नं यस्य स तथा सन्, आनन्देन सहितं यथा भवति तथा अवसत् ॥ ३९ ॥

**(सं.चं.)** माल्यवतः प्रस्रवणापरनाम्नो गिरेः कन्दरे । दिव्यानि रस्यानि कन्दानि, **'ಗಡ್ಡೆ-ಗೆಣಸು'** इति भाषायाम् । फलानि चाश्नन् । अनुकूलस्य जलस्याऽधारे । अनुकूलो जलाधारो यत्र वा । 'जलाशया जलाधारास्ते त्वगाधजला ह्रदाः' इति च ॥ ३९ ॥

**आर्त्तवा विविधा भावा मन्दवायुधनं वनम्[1] ।**
**चन्द्रश्च नाप्यरामस्य रामस्य क्षोभमादधुः ॥ ४० ॥**

**(भा.दी.) आर्तवा** इति । ऋतुषु सञ्जाताः आर्तवाः, विविधाः भावाः पदार्थाः, मन्दवायुरेव धनं यस्मिन् तत्तथोक्तं वनम्, चन्द्रश्च इत्येते, न विद्यते रामा भार्या यस्य स तथोक्तः, तस्य श्रीरामस्य क्षोभो मन्मथनिमित्तमनःखेदः, तं नाऽदधुः न चक्रुः ॥ ४० ॥

**(सं.चं.)** आर्तवा ऋतुसम्भवा भावाः । कदम्बकुसुमादीनि । लोकदृष्ट्या अरामस्य रामया सीतया विरहितस्य रामस्य ॥ ४० ॥

**तथाऽप्यतुल्यवैक्लब्यं[2] दर्शयामास दर्शयन् ।**
**स्त्रीसङ्गिनाममाङ्गल्यं[3] मोहयन्नसुरानपि ॥ ४१ ॥**

---

१. **'मन्दवायुर्घनं वनम्' । मन्दवायुः मृदुवायुः । घनं निबिडं वनं काननं च'** इति का.श्री. ।

२. **'–प्युतुलवैक्लव्यम्'**

३. **'स्त्रीसङ्गिनाममङ्गल्यम्'**

(**भा.दी.**) **तथाऽपी**ति। तथाऽपि सीतानिमित्तकक्षोभरहितोऽपि, स्त्रीषु सङ्गः आसक्तिरेषामस्तीति तथोक्ताः, तेषां अमाङ्गल्यं स्त्रीवियोगेन अमङ्गलत्वं दर्शयन्, असुरान् जनानपि मोहयन्, श्रीरामः विक्लबस्य भावो वैक्लब्यम्, अतुल्यमसदृशं यद्वैक्लब्यं तत्, अत्यन्तकामपरवशतामित्यर्थः, दर्शयामास ॥ ४१ ॥

(**सं.चं.**) तथाऽपि दर्शयामास । वैक्लब्यं कामविह्वलता । कामेन चलितचित्तता । स्त्रीसङ्गिनां दशाया अमङ्गलत्वमशुभमयत्वं दर्शयन्, असुरान् मोहयन्नपि ॥ ४१–२ ॥

**मुनीनां सनकादीनां विषया हि तृणायिताः ।**
**यत्पादपांसुसंस्मृत्या[1] सोऽजितः स्त्रीजितः कथम् ॥ ४२ ॥**

(**भा.दी.**) वैक्लब्यं स्वाभाविकं किं न स्यादित्यत आह– **मुनीनामि**ति। सनकादीनां मुनीनाम्, यस्य श्रीरामस्य यौ पादौ तयोर्ये पांसवस्तेषां संस्मृत्या, विषयाः स्रगादयः तृणवदाचरन्तीति तृणायिताः, अजितः कामादिषड्वर्गेणापराजितः सः श्रीरामः कथं स्त्रीजितः स्त्रीकामेन पराजितः? सनकादीनां विषयजयोऽपि यस्य स्मृतिबलात् स चेत् स्त्रीजितः कथं तर्हि सनकादयः षड्वर्गविजयवन्तः स्युरिति भावः ॥ ४२ ॥

**सुन्दरे वसतोरस्मिन् कन्दरच्छलमन्दिरे ।**
**सङ्कथा विविधाश्चाऽसन्[2] रामरामानुजन्मनोः ॥ ४३ ॥**

(**भा.दी.**) **सुन्दर** इति। सुन्दरे अस्मिन् माल्यवच्छृङ्गसम्बन्धिनि, कन्दर इति गुहेति च्छलं यन्मन्दिरं तस्मिन्, वसतोः रामश्च रामानुजन्मा लक्ष्मणः स च तयोः विविधाः सङ्कथाश्च आसुः । अस भुवि लिट्[3] ॥४३॥

(**सं.चं.**) सङ्कथा ऋतुसम्बन्धनीः । आसन् । अस भुवि लङ् ॥ ४३ ॥

**आनयन्त्यो नवं वारि चलत्पीनपयोधराः ।**
**समित्कुशादीन् कुर्वाणा वर्षाः पर्य्यचरन् विभुम् ॥ ४४ ॥**

(**भा.दी.**). वर्षर्तुं वर्णयति– **आनयन्त्य** इति। नवं वारि आनयन्त्यः अभिवर्षन्त्य इत्यर्थः। चलन्तः पीनाः पुष्टाः पयोधराः मेघाः यासु तास्तथोक्ताः। स्त्रीपक्षे चलत्पीनस्तनवत्य इत्यर्थः। समिधश्च कुशाश्च ते आदयो

१. '**–पांसु संस्मृत्या**'

२. '**विविधाश्चाऽसुः**' इति इति वि.ती.पाठः।

३. पाणिनीयास्तु अस्तेर्लिटि '**बभूवुः**' इत्येव रूपं पठन्ति। न '**आसुः**' इति। तेन मतान्तरानुसारेणेदम्। सन्ति हि प्राचां प्रयोगाः आस आसतुः आसुरिति। '**अस गतिदीप्त्यादानेषु**' इत्यस्येदं रूपमित्येके।

येषां ते तथोक्ताः, तान् कुर्वाणा उत्पादयन्त्य इत्यर्थः । स्त्रीपक्षे तु आनीतान् कुर्वाणा इत्यर्थः । वर्षाः वर्षाकालाख्यस्त्रियः । 'वर्षोऽस्त्री भारताद्यब्दवृष्टिषु प्रावृषि स्त्रियः' इति वैजयन्ती । विभुं श्रीरामं पर्यचरन् असेवन्त । चर गतिभक्षणयोर्लङ् । यथा मुनिस्त्रियो जलसमित्कुशाद्यानयनेन मुनिसेवां कुर्वन्ति । तद्वन्मुनिवेषं श्रीरामं सेवितुमिव स्त्रीधर्मैः परिपूर्णा आसन्निति भावः ॥ ४४ ॥

**(सं.चं.)** वर्षा इति प्रावृषि बहुवचनान्तं स्त्रीलिङ्गं पदम् । वर्षाः स्त्रियइव विभुं रामं पर्यचरन् । समित्कुशादीनुत्पादयन्त्यो वर्षाः । आनयन्त्यः स्त्रिय इव । चलत्पीनकुचाः स्त्रियइव चलत्पीनमेघा वर्षाः । कलशेनेव वर्षणेन नवं वार्यानयन्त्यः ॥ ४४ ॥

**स्वच्छाम्बरा स्मिताब्जास्या विशुद्धाशावती शरत् ।**
**लक्ष्मणं बोधयामास जानकी मृग्यतामिति ॥ ४५ ॥**

**(भा.दी.)** शरदं वर्णयति– **स्वच्छे**ति । स्वच्छमम्बरमाकाशं यस्याः सा तथा । स्त्रीपक्षे स्वच्छवस्त्रवतीत्यर्थः । स्मितं विकसितं यदब्जं तदास्यमिव यस्याः सा तथोक्ता । स्त्रीपक्षे स्मितयुक्ताब्जसदृशास्यवतीत्यर्थः । मेघापगमनेन विशुद्धा आशा दिशोऽस्याः सन्तीति तथोक्ता । अन्यत्र विशुद्धाभिप्रायेत्यर्थः । शरत् शरदृत्वाख्यस्त्री, जानकी मृग्यतां विचार्यताम्, मृग अन्वेषणे लोट्, इति लक्ष्मणं बोधयामास । शरद्धर्मान् दृष्ट्वा सीतान्वेषणसमय आगत इति लक्ष्मणो बुबुध इति भावः ॥ ४५ ॥

**(सं.चं.)** अथापगता प्रावृट् । आगता च शरदित्याह– स्वच्छाम्बरा । स्वच्छाकाशा शरत् । स्वच्छवसना ललनेव । विकसितमब्जमेवाऽस्यमस्याः । विकसितमब्जमिवाऽस्यमन्यस्याः । विशुद्धा आशाः ककुभः । तद्वती शरत् । अनिषिद्धकामना कामिनीव ॥ ४५ ॥

**कर्प्पूरगौरी वितता जगत्यां सत्पद्मषण्डेषु पदं दधाना ।**
**अवाप लक्ष्मीमथ हंसमाला रामस्य जिष्णोरिव[1] कीर्त्तिमाला ॥ ४६ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्क्षेपरामायणे**
**किष्किन्धाकाण्डे पञ्चमः सर्ग्गः ॥**

—०—

१. 'रामस्य विष्णोरिव'

**(भा.दी.)** शरत्कालीनहंसमालां वर्णयति– **कर्पूरे**ति । कर्पूरवद्गौरी श्वेता, कीर्तिरपि श्वेततया कविभिर्वर्ण्यमानत्वात् कर्पूरगौरी, जगत्यां भूमौ वितता व्याप्ता, सन्तो ये पद्मानां षण्डाः समूहाः, तेषु पदं स्थितिः, तत् दधाना कुर्वाणा, कीर्तिमालापक्षे तु सात्विकपुरुषाख्यपद्मसमूहेषु पदं स्थितिं दधाना कुर्वाणा, तैस्सदा स्मर्यमाणत्वादित्यर्थः, हंसपक्षिणां माला पङ्क्तिः । अथ शरत्कालागमनानन्तरं जिष्णोः रावणादिजयशीलवतः श्रीरामस्य कीर्तिरिव माला कीर्तिमाला सा इव लक्ष्मीं कान्त्यतिशयं अवाप ॥ ४६ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां किष्किन्धाकाण्डे पञ्चमः सर्गः ॥**

**(सं.चं.)** अथेन्द्रोपेन्द्रवज्राभ्यामुपसंहरति– कर्पूरगौरी । रामस्य कीर्तिपङ्क्तिरिव शरदि हंसमालाऽपि लक्ष्मीं शोभातिशयमवाप । कीर्तिपक्षे सन्तः सज्जना एवाब्जषण्डाः । हंसपक्षे सन्तो निर्मला अब्जषण्डाः । 'पशूनां समजोऽन्येषां समाजो धीमतां सभा । उद्भिज्जानां तु षण्डोऽस्त्री' इति च ॥ ४६ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां किष्किन्धाकाण्डे पञ्चमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १६२९+४६=१६७५]

## षष्ठः सर्ग्गः

**अथ विज्ञाय सुग्रीवं सङ्क्लिश्य प्राप्तसम्पदम् ।**
**व्यक्तं स्त्रीभोगसंसक्तं [1]हनुमानिदमब्रवीत् ॥ १ ॥**

**(भा.दी.)** श्रीरामस्य कार्यसाधनकालज्ञो हनुमान् ऐश्वर्यमदेन तत्र प्रमादिनं सुग्रीवं प्रति प्रबोधनं चकारेत्याह– **अथेत्यादिना** । अथ हनुमान् सङ्क्लिश्य पूर्वं बहुकालं क्लेशमनुभूय, प्राप्ता सम्पद् येन स तथा तं सुग्रीवम्, स्त्रीणां यो भोगस्तत्र संसक्तम् व्यक्तं यथा भवति तथा विज्ञाय इदं वचः अब्रवीत् ॥ १ ॥

**(सं.चं.)** सङ्क्लिश्य आदौ क्लेशमनुभूय ततः प्राप्तसम्पदम् । व्यक्तं स्पष्टम् । निर्विचिकित्सं स्त्रभोग-संसक्तम् ॥ १–२ ॥

**प्राप्ता रामप्रसादेन राज्यं कोशः स्त्रियस्त्वया[2] ।**
**इदानीं भोगसंसक्तो[3] नाथं नो व्यस्मरः कथम् ॥ २ ॥**

**(भा.दी.)** **प्राप्ता** इति । हे सुग्रीव, त्वया श्रीरामस्य प्रसादोऽनुग्रहस्तेन, राज्यं च, कोशोऽर्थौघः स च, स्त्रियश्च ताः प्राप्ताः लब्धाः । इदानीं भोगसंसक्तः त्वं नः नाथं श्रीरामं कथं व्यस्मरः? तत्कार्यसाधने विस्मृतिं कथं प्राप्तोऽसीत्यर्थः । स्मृ आध्याने लङ् ॥ २ ॥

**सर्प्पवद् दर्प्पवन्तो ये विस्मरन्त्युपकारकम् ।**
**त्वादृशा मादृशैस्तेषां राजन् कार्य्यं हि शिक्षणम् ॥ ३ ॥**

---

१.'**हनूमानिद–**' २. '**राज्यकोशस्त्रियस्त्वया**' इति वि.ती.पाठः । '**राज्यकोशाः स्त्रियस्त्वया**' इति क्वचित् ।

२.'**भोगसक्तस्त्वं नाथम्**'

**(भा.दी.) सर्पवदि**ति । दर्पो गर्व एषामस्तीति तथा त्वादृशा ये पुरुषाः उपकारकं उपकारिणं पुरुषं सर्पवत् क्षुद्रसर्पवत् विस्मरन्ति, हे राजन् सुग्रीव, मादृशैः पुरुषैः तेषां शिक्षणं कार्यं हि ॥ ३ ॥

**(सं.चं.)** सर्पवदुपकारिणमेव ये दशन्ति । दर्पवन्तो दृप्ता वृथा गर्वोपेताः ॥ ३ ॥

**रामो नाम जगन्नाथस्तत्कार्य्यं नो विशेषतः ।**
**स्वकीयमेव कर्त्तव्यं तस्मात् प्रेषय वानरान् ॥ ४ ॥**

**(भा.दी.) राम** इति । श्रीरामो नाम श्रीराम इति प्रसिद्धः जगन्नाथः सर्वजगत्स्वामी हरिः, तस्य जगन्नाथस्य श्रीरामस्य कार्यं नः अस्माकं विशेषतः स्वकीयं कर्तव्यमेव यस्मात् तस्मात् वानरान् वानरमेळनार्थं प्रेषय । इष गतौ लोट् ॥ ४ ॥

**(सं.चं.)** तस्मात् सीतान्वेषणार्थं वानरान् प्रेषय । वानरानानेतुं वा । इष्यतेः, एषतेः, प्रेषतेर्वा गत्यर्थस्य णिचि रूपं प्रेषयेति ॥ ४ ॥

**हनुमद्वाक्यमाकर्ण्य हनुमन्तं प्रपूज्य सः[1] ।**
**आहूय नीलप्रभृतीन् सुग्रीवो वाक्यमब्रवीत् ॥ ५ ॥**

**(भा.दी.) हनुमदि**ति । सः सुग्रीवः हनुमतः वाक्यं वचस्तत् आकर्ण्य, हनुमन्तं प्रपूज्य, नीलः प्रभृतिरादिर्येषां ते तथा तान् आहूय वाक्यं अब्रवीत् ॥ ५ ॥

**(सं.चं.)** प्रपूज्य, काले प्रबोधनेन प्रहृष्टः सन् पूजयामासेत्यर्थः ॥ ५ ॥

**आनीयन्तां त्वया नील सर्ववानरयूथपाः[2] ।**
**पूज्यान् वानरवृद्धांस्त्वं साङ्गदः समुपानय ॥ ६ ॥**

**(भा.दी.) आनीयन्तामि**ति । हे नील त्वया, सर्ववानरेषु यूथपाः श्रेष्ठाः आनीयन्ताम् । दूतान् प्रेषयित्वा आकार्यन्तामित्यर्थः । त्वं पूज्यान् वानरवृद्धान् साङ्गदः अङ्गदेन सहितः सन् समुपानय आकारय ॥ ६ ॥

**(सं.चं.)** नील सेनापते, यूथं वृन्दं पान्तीति यूथपाः सयूथा आनीयन्ताम् । तत्रापि पूज्यान् वानरवृद्धान् साङ्गदस्त्वं समुपानय । स्वतः समाहूयाऽनय ॥ ६ ॥

---

१. '**हनुमन्तं प्रयुज्य सः**' (?) २. '**सर्वे वानरयूथपाः**' । '**सर्वे वानरयूथपाः सेनानायकाः**' इति का.श्री. ।

**पौर्ण्णमास्यामिहाऽयातु सेना सेनापतेऽखिला ।**
**प्राक् सप्तरात्रान्नागच्छन्[१] वानरो दण्ड्य एव मे ॥ ७ ॥**

**(भा.दी.) पौर्णे**ति । हे सेनापते नील, अखिला सेना पौर्णमास्यां इह आयातु । सप्तानां रात्रीणां समाहारः सप्तरात्रं तस्मात् प्राक् नागच्छन् नसमासोऽयम्, अनागत इत्यर्थः, वानरः मे दण्ड्य एव ॥ ७ ॥

**(सं.चं.)** कार्तिक्यां पौर्णास्याम् । प्राक् सप्तरात्रात् । सप्त च ता रात्रयश्च सप्तरात्रः । 'रात्राह्नाहाः पुंसि' (अ.सू.२.४.२९) । 'त्रिपञ्चरात्रादूर्ध्वं यः प्राप्नुयान्नेह वानरः । तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा' (२९.३२) इति च । पञ्चदशदिनादूर्ध्वमिति स्थूलं व्याख्यानम् ॥ ७ ॥

**सुग्रीवेणेति [२]सन्दिष्टान् नीलादीन् वानरोत्तमान् ।**
**प्रेषयामास हनुमान् राजाऽन्तःपुरमाविशत् ॥ ८ ॥**

**(भा.दी.) सुग्रीवेणे**ति । हनुमान् सुग्रीवेण इति सन्दिष्टान् नीलादीन् वानरोत्तमान् प्रेषयामास । इष गतौ लिट् । राजा सुग्रीवः अन्तःपुरमवरोधस्तत् आविशत् ॥ ८ ॥

**(सं.चं.)** राजा सुग्रीवः ॥ ८–९ ॥

**प्राप्तां शरदमालक्ष्य[३] रामो लक्ष्मणमब्रवीत् ।**
**याहि लक्ष्मण किष्किन्धां ब्रूहि तं वानराधिपम् ॥ ९ ॥**

**कार्य्यं नो विस्मरसि चेत् कार्य्यं स्वं प्राप्य[४] वानर ।**
**वालिघ्नमार्ग्गणेनैव वालिमार्ग्गं व्रजेरिति ॥ १० ॥**

**(भा.दी.) प्राप्ता**मिति । श्रीरामः शरत् शरदृतुस्तां प्राप्तां आलक्ष्य, हे लक्ष्मण, किष्किन्धां प्रति याहि । वानराधिपं तं सुग्रीवं प्रति, हे वानर सुग्रीव, त्वं स्वकीयं कार्यं प्रयोजनं तत् सम्प्राप्य चेत् नः अस्माकं कार्यं विस्मरसि न स्मरसि, तर्हि वालिनं हतवानिति वालिघ्नः स चासौ मार्गणः शरश्च तेन, वालिनो मार्गो वालिमार्गस्तम्, मरणमित्यर्थः, व्रजेः, इति ब्रूहि, इति लक्ष्मणमब्रवीत् ॥ ९-१० ॥

१. **'–रात्रान्नाऽगच्छेद् वानरो –'** २. **'सन्दिष्टे नीला–'** ३. **'शरदमालोक्य'**

४. **'कार्यं सम्प्राप्य'** इति वि.ती.पाठः स्यात् । **'स्वं स्वं स्वकीयं कार्यं कपिराज्यप्राप्तिलक्षणं प्राप्य'** इति का.श्री. ।

**(सं.चं.)** स्वं कार्यं सम्पाद्य नः कार्यं विस्मरसि चेत् । वालिघ्नेन मार्गणेनैव । 'न स सङ्कुचितः पन्था येन वाली हतो गतः । समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः' (३०.८८) इति च ॥ १०–१३ ॥

**रामस्य तद्वचः श्रुत्वा रामं रामानुजोऽभ्यधात्[1] ।**
**आर्य्याधुनाऽतिमर्य्यादं निहनिष्यामि तं कपिम् ॥ ११ ॥**

**(भा.दी.) रामस्येति** । रामानुजः लक्ष्मणः श्रीरामस्य तत् वचः श्रुत्वा, हे आर्य स्वामिन्, अतिक्रान्ता मर्यादा यस्य स तथा तं सुग्रीवं अधुना निहनिष्यामि, हन हिंसागत्योर्लृट्, इति श्रीरामं प्रति अभ्यधात् उवाच ॥

**(सं.चं.)** मर्यादामतिक्रान्तः अतिमर्यादः ॥ ११–१३ ॥

**अतिसक्ते दुराचारे कृतघ्ने[2] रविजे हते ।**
**विचिनोत्वङ्गदो राजा सीतां हनुमता सह ॥ १२ ॥**

**(भा.दी.) अतीति** । अत्यन्तं सक्तः अतिसक्तस्तस्मिन्, ज्येष्ठभार्याहरणेन दुष्ट आचारो यस्य स तथा तस्मिन्, त्वत्कृतोपकारविस्मरणेन कृतघ्ने, रविजे सुग्रीवे मया हते सति, राजा अङ्गदः हनुमता सह सीतां विचिनोतु मार्गयतु । चिञ् चयने लोट् ॥ ११ ॥

**अथवा वानरैः किं ते निजकार्य्यस्य साधने ।**
**त्वद्भ्रूभङ्गेन नियतं[3] ननु नाथ जगत्त्रयम् ॥ १३ ॥**

**(भा.दी.) अथेति** । अथवा हे नाथ, निजं यत्कार्यं तस्य साधनं सिद्धिस्तस्मिन् ते तव वानरैः किं प्रयोजनम्? यस्मात् जगत्त्रयं तव या भ्रूस्तस्याः भङ्गः सविलासं चलनं तेन नियतं ननु नियमितं ननु ॥ १३ ॥

**इति[4] ब्रुवाणं तं दृष्ट्वा क्रुद्धं कोदण्डधारिणम्[5] ।**
**मा तात साहसं[6] कार्षीरिति रामोऽब्रवीद्धसन् ॥ १४ ॥**

१. **'रामानुजोऽब्रवीत्'**
२. **'–चारे वालिघ्ने'**
३. **'–भङ्गेन हि नतम्'** इति, **'–भङ्गेण नियतम्'** इति च ।
४. **'एवं ब्रुवाणम्'**
५. **'कोदण्डपाणिनम्'** इति भ्रान्तः पाठः ।
६. **'साहसं सहसा अविचार्य क्रियमाणं कर्म'** इति का.श्री. ।

**(भा.दी.) इती**ति । इति ब्रुवाणं वदन्तं क्रुद्धं कोदण्डधारिणं तं लक्ष्मणं दृष्ट्वा, हे तात, साहसं हननेऽविचारितयत्नः तत् मा कार्षीः मा कुरु । तत्स्वभावं सम्यगविचार्य यत्किञ्चिच्छिक्षणं त्वया न कार्यमित्यर्थः । श्रीरामः हसन् इति अब्रवीत् ॥ १४ ॥

**(सं.चं.)** कोदण्डधारिणं क्रुद्धं दृष्ट्वा । साहसमविमृश्यकारिता । 'ದುಡುಕು' इति भाषायाम् ॥ १४ ॥

**गच्छन् पुरीं स सौमित्रिः स्मरन् सुग्रीवमन्दताम् ।**
**क्रुद्धः शिलाश्च सालांश्च पादपातैरचूर्णयत्[१] ॥ १५ ॥**

**(भा.दी.) गच्छन्नि**ति । पुरीं किष्किन्धां गच्छन्, सुग्रीवस्य मन्दतां मुग्धतां स्मरन्, सः सौमित्रिः क्रुद्धः सन्, शिलाश्च सालांश्च सालवृक्षांश्च पादस्य पातास्ताडनानि[२] तैः, अचूर्णयत् चूर्णनं कृतवान् । चूर्ण सङ्कोचने लङ् ॥ १५ ॥

**(सं.चं.)** मन्दतां मन्दगामिताम् । यद्भविष्योऽलसो मन्दः । मार्गमध्यगतान् सालान् वृक्षांश्च । वृक्षसामान्यवचनोऽयम् । 'सालो मत्स्ये वृक्षभेदे प्राकारद्रुममात्रयोः' इति यादवप्रकाशः ॥ १५ ॥

**किष्किन्धां प्रविशन्तं तं कोपेनान्तकसन्निभम् ।**
**गजलक्षबलाः प्रेक्ष्य कपयोऽथ पराद्रवन् ॥ १६ ॥**

**(भा.दी.) किष्किन्धामि**ति । अथ किष्किन्धां प्रविशन्तम्, कोपः क्रोधस्तेन अन्तकस्य यमस्य सन्निभं समानम्, तं लक्ष्मणं प्रेक्ष्य, गजानां यल्लक्षं तस्य बलमिव बलं येषां ते तथोक्ताः कपयः पराद्रवन् भयात् पलायनं चक्रुः । द्रु गतौ लङ् ॥ १६ ॥

**(सं.चं.)** अथ सामस्त्येन पराद्रवन् । अथ लक्ष्मणदर्शनसमनन्तरमेव वा ॥ १६ ॥

**सुरतोत्सवसंसक्तः कपिभिश्च निवेदितः ।**
**राघवप्रतिघं घोरं सुग्रीवो न विवेद तम् ॥ १७ ॥**

**(भा.दी.) सुरते**ति । सुरतलक्षणः स्त्रीभिः क्रीडालक्षणो य उत्सवस्तत्र संसक्तः आसक्तः, कपिभिः 'लक्ष्मणः क्रुद्धः सन् आयाति' इति निवेदितश्च विज्ञापितोऽपि सुग्रीवः, घोरं राघवस्य श्रीरामस्य प्रतिघं कोपम्, 'प्रतिघौ

१. 'पादघातैरचूर्णयत्' २. 'पादस्य घातास्ताडनानि'

रुट्प्रतीघातौ' इति वैजयन्ती, न विवेद न विज्ञातवान्। विद ज्ञाने लिट्। कोपकारणं स्वकृतमपराधं किमिति चिन्तयन्नपि न विवेदेत्यर्थः ॥ १७ ॥

**(सं.चं.)** कपिभिर्निवेदितोऽपि राघवस्य रामस्य लक्ष्मणस्य वा घोरं प्रतिघं रोषं न विवेद। रोषस्येयत्तां न विवेद। रोषकारणं च ॥ १७ ॥

**लक्ष्मणप्रेषितो भीतः प्राप्यान्तःपुरमङ्गदः।**
**तां वार्त्तामब्रवीत् पित्रे सोऽपि त्रस्तोऽन्वचिन्तयत् ॥ १८ ॥**

**(भा.दी.)** **लक्ष्मणे**ति। लक्ष्मणेन प्रेषितः, आगतं मां सुग्रीवं प्रति विज्ञापयेति प्रेषितः, भीतः अङ्गदः, अन्तः-पुरमवरोधस्तत् प्राप्य, पित्रे सुग्रीवाय तां वार्ता अब्रवीत्। सोऽपि त्रस्तः सन् अन्वचिन्तयत् ॥ १८ ॥

**(सं.चं.)** पितेव पिता। पित्रे पितृतुल्याय पितृव्याय सुग्रीवाय। सोऽपि सुग्रीवोऽपि ॥ १८–९ ॥

**रामं प्रति मया किञ्चिन्न दुरुक्तं न दुष्कृतम्।**
**तथाऽपि लक्ष्मणः क्रुद्धो विपरीतो हि मे विधिः ॥ १९ ॥**

**(भा.दी.)** चिन्तामेव दर्शयति– **रामम**िति। मया श्रीरामं प्रति किञ्चित् दुष्टं च तदुक्तं च, दुष्टवचनमित्यर्थः, नोक्तम्। दुष्टं च तत् कृतं च दुष्कृतम्, दुष्कर्मेत्यर्थः, श्रीरामं प्रति किञ्चित् न कृतम्। तथाऽपि यत्किञ्चदपराधाकरणेऽपि लक्ष्मणः क्रुद्धः, तस्मान्मे विधिरदृष्टं विपरीतो हि ॥ १९ ॥

**सुग्रीवमिति सन्तप्तं धीरो मारुतिरब्रवीत्।**
**अशुश्रूषापराधी त्वं लक्ष्मणं क्षमयेरिति ॥ २० ॥**

**(भा.दी.)** **सुग्रीवम**िति। इति सन्तप्तं सुग्रीवं प्रति धीरः मारुतिः, हे सुग्रीव, त्वं अशुश्रूषैवापराधः सोऽस्या-स्तीति तथोक्तः, तस्मात् लक्ष्मणं क्षमयेः, क्षान्तं कुरु। क्षमूष् सहने लिङ्। इति अब्रवीत् ॥ २० ॥

**(सं.चं.)** रामकार्यस्य कालेऽकरणादशुश्रूषया त्वमपराधी। अशुश्रूषैव वाऽपराधः। तदर्थं लक्ष्मणं क्षमयेः। क्षमु सहने। क्षमूष् सहने वा ॥ २० ॥

**दौवारिकाननादृत्य प्राविशल्लक्ष्मणः पुरीम् ।**
**मणिहेममयीं दिव्यां सप्तवप्रामवैक्षत[1] ॥ २१ ॥**

**(भा.दी.)** **दौवारिकान्**इति । लक्ष्मणः द्वारेषु नियुक्ताः दौवारिकास्तान्, द्वारपालानित्यर्थः, अनादृत्य पुरीं प्राविशत् । मणयश्च हेमानि च तैर्निर्मिता मणिहेममयी ताम्, दिव्याम्, सप्त वप्राणि प्राकारा यस्याः सा तथा तां अवैक्षत ॥ २१ ॥

**(सं.चं.)** प्रविश्य सप्तभिर्वप्रैः आवरणैर्गुप्तां पुरीमवैक्षत ॥ २१ ॥

**वानरीवानरगणैर्देवदेवीसमैर्य्युताम्[2] ।**
**सर्वाभरणसम्पन्नैः सर्वैः सर्वाङ्गसुन्दरैः ॥ २२ ॥**

**(भा.दी.)** **वानरी**ति । देवाश्च देव्यश्च ताभिः समैः, सर्वाणि यान्याभरणानि तैः सम्पन्नास्तैः, सर्वाणि यान्यङ्गानि अवयवाः, तैः सुन्दरैः, सर्वैः वानर्यश्च वानराश्च तेषां गणाः समूहास्तैः युतां पुरीं अवैक्षतेति सम्बन्धः ॥ २२ ॥

**(सं.चं.)** देवतास्त्रीसमैर्वानरीगणैः । देवसमैश्च वानरगणैः युतां पुरीमवैक्षत ॥ २२–३ ॥

**आरामगृहवापीभिः प्रासादायतनादिभिः ।**
**विश्वकर्म्मकृतैर्विश्वैर्विशेषैरुपशोभिताम् ॥ २३ ॥**

**(भा.दी.)** **आरामे**ति । आरामा उपवनानि ते च, गृहाणि च, वाप्यश्च ताभिः, प्रासादा राजहर्म्याणि ते च, आयतनानि देवस्थानानि तानि च, तानि आदयो येषां ते तथोक्तास्तैः । 'आयतनं देवानामन्येषां धनवतां हर्म्यम्' इति हलः । विश्वकर्मणा कृतास्तैः, विश्वैः समस्तैर्विशेषैः पदार्थविशेषैः उपशोभितां पुरीं अवैक्षत ॥ २३ ॥

**मद्ध्ये कपीन्द्रगेहानां सौमित्रिश्चित्रमैक्षत ।**
**महेन्द्रमन्दिरमिव महेन्द्रसुतमन्दिरम् ॥ २४ ॥**

---

१. '**–वप्रामथैक्षत**'

२. '**–समैवृताम्**' इति, '**–गणैर्देवीदेवसमैर्युताम्**' इति च ।

**(भा.दी.) मध्य** इति । सौमित्रिः लक्ष्मणः, कपीन्द्राणां नीलादीनां यानि गेहानि तेषां मध्यं मध्यप्रदेशः, तस्मिन् महेन्द्रमन्दिरमिव इन्द्रभवनमिव चित्रम्, महेन्द्रसुतस्य वालिनो यन्मन्दिरं तत् ऐक्षत ॥ २४ ॥

**(सं.चं.)** महेन्द्रसुतस्य वालिनो मन्दिरम् । सम्प्रति सुग्रीवेणाधिष्ठितम् ॥ २४ ॥

**[१]तारारुमाभ्यामाश्लिष्टं दिव्ये सिंहासने[२] स्थितम् ।**<br>
**रविजं रविसङ्काशं तत्र प्रैक्षत लक्ष्मणः ॥ २५ ॥**

**(भा.दी.) तारे**ति । लक्ष्मणः तत्र मन्दिरे, दिव्ये सिंहासनं सिंहाकारमासनं तस्मिन् स्थितम्, तारा च रुमा च ताभ्यां संश्लिष्टं सहितम्, रविवत्सङ्काशः प्रकाशो यस्य स तथा तं रविजं सुग्रीवं प्रैक्षत ॥ २५ ॥

**(सं.चं.)** संश्लिष्टमाश्लिष्टम् । सङ्काशः समानः । रवेः समानो रविसङ्काशः ॥ २५ ॥

**दोर्दण्डार्पितकोदण्डो दष्टोष्ठो भ्रुकुटीकटुः[३] ।**<br>
**रक्ताक्षस्त्र्यक्षवत् क्रुद्धः सोऽदर्शि रविसूनुना ॥ २६ ॥**

**(भा.दी.) दोरि**ति । रविसूनुना, दोषो हस्तस्य यो दण्डस्तत्रार्पितः स्थापितः कोदण्डो येन स तथोक्तः, संरम्भात् दष्टो य ओष्ठः स च, भ्रुकुटी च ताभ्यां कटुः कठोरः, द्रष्टुमशक्य इत्यर्थः, रक्ते अक्षिणी यस्य स तथा, त्रीणि अक्षीणि लोचनानि यस्य स तथा तद्वत्, रुद्रवदित्यर्थः, क्रुद्धः सः लक्ष्मणः अदर्शि । दृशिर् प्रेक्षणे लुङ् ॥ २६ ॥

**(सं.चं.)** दोरेव दण्डः । दष्टोष्ठः । 'ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्' इति वार्त्तिकम् (अ.सू.६.१.९४) इति । क्रोधेनाधरोष्ठं दष्ट्वा स्थितः । बद्धया भ्रुकुट्या कटुः क्रूर-दर्शनः । भ्रकुटिः, भ्रुकुटिः, भ्रूकुटिः, भ्रकुटी, भ्रुकुटी, भ्रूकुटी, भृकुटिः, भृकुटी चेत्यष्टौ रूपाणि । '**ಗಂಟಿಕ್ಕಿದ ಹುಬ್ಬು**' इति भाषायाम् । संहारार्थं क्रुद्धत्र्यक्षवददर्शि ॥ २६–७ ॥

**आसनात् तूर्णमुत्पत्य[४] पत्नीभ्यां सहितः कपिः ।**<br>
**प्राञ्जलिर्भयसम्भ्रान्तः स्वगृहं[५] समवेशयत् ॥ २७ ॥**

---

१. '**–रुमाभ्यां संश्लिष्टम्**' इति वि.ती.पाठः ।

२. '**दिव्यसिंहासने**' इति, '**वरसिंहासने**' इति च क्वचित् ।

३. '**दष्टोष्ठ(दष्टौष्ठ)भ्रुकुटीकटुः**' इति वि.ती.पाठः । '**भृकुटीकटुः**' इति च क्वचित् । '**भ्रु (भृ)कुट्या भ्रुवो वक्रतया कटुः क्रूरः**' इति का.श्री. ।

४. '**तूर्णमुत्थाय**'

५. '**–सम्भ्रान्तः स्वगेहम्**' इति, '**–सम्भ्रान्तस्तं गृहम्**' इति च ।

**(भा.दी.) आसनादि**ति । पत्नीभ्यां सहितः कपिः, आसनं सिंहासनं तस्मात् तूर्णं यथा भवति तथा उत्पत्य, भयसम्भ्रान्तः भयेनाऽकुलः सन्, प्राञ्जलिः सन्, स्वगृहं मन्दिरं तत् समवेशयत् प्रवेशयामास ॥ २७ ॥

**असहिष्णुः कृतघ्नस्य दर्प्पं तस्य श्रियोन्नतम् ।**
**क्रोधरूक्षाक्षरां प्रोचे लक्ष्मणो गां कपीश्वरम्[1] ॥ २८ ॥**

**(भा.दी.) असही**ति । कृतघ्नस्य तस्य सुग्रीवस्य, श्रिया सम्पदा उन्नतः अभिवृद्धः, तं दर्पं असहिष्णुः असहनशीलः लक्ष्मणः, कपीश्वरं सुग्रीवं प्रति, क्रोधेन रूक्षाणि क्रूराणि अक्षराणि यस्यां सा तथा तां गां वाचं प्रोचे ॥ २८ ॥

**(सं.चं.)** राज्यश्रिया उन्नतमुत्सिक्तं दर्पमसहमानः गां वाचं प्रोचे । ब्रूञ् व्यक्तायां वाचि । आर्धधातुके वचिरादेशः–'ब्रुवो वचिः' (अ.सू.२.४.५३) इति ॥ २८–९ ॥

**नन्वग्निसाक्षिकं[2] प्रोक्तस्त्वया वानर राघवः ।**
**मह्यं राज्ये त्वया दत्ते सीतां विचिनुयामिति ॥ २९ ॥**

**(भा.दी.) नन्वि**ति । हे वानर सुग्रीव, त्वया मह्यं यद्राज्यं तस्मिन् दत्ते सति सीतां विचिनुयां अन्वेषयामि इति श्रीराघवः, अग्निः साक्षी यथा भवति तथा अग्निसाक्षिकं त्वया प्रोक्तः ननु ॥ २९ ॥

**मदान्धः प्रमदासक्तः प्रमादं प्राप्तवानसि ।**
**रामकार्य्ये सुरैः पूज्ये यथा प्राकृतपूरुषः ॥ ३० ॥**

**(भा.दी.) मदे**ति । मदेन ऐश्वर्यमदेनान्ध इवान्धः, विवेकरहित इत्यर्थः, प्रमदासु आसक्तः त्वं सुरैः पूज्ये श्रीरामस्य यत्कार्यं सीतान्वेषणादि तस्मिन्, प्राकृतः पुरुषः पामरपुरुषः यथा तथा प्रमादोऽनवधानता तं प्राप्तवान् असि ॥ ३० ॥

**(सं.चं.)** श्रीमदान्धः । सत्यपि चक्षुषि नेक्षसे । प्रमदासक्तिर्हि प्रमादजननी । स्वधुरायां भरविधुरता प्रमादः । रामकार्ये प्रमादं प्राप्तवानसि । प्राकृतोऽज्ञश्चाविवेकी च ॥ ३० ॥

---

१. 'हरीश्वरम्'    २. **'अग्निः साक्षी प्रत्यक्षेण द्रष्टा यस्मिन् कर्मणि तदग्निसाक्षिकं यथा तथा प्रोक्तः'** इति का.श्री. ।

**अतीता बहवो मासा राज्यं प्राप्तवति त्वयि ।**
**सीता नाद्यापि विचिता सख्यं खण्डितवानसि ॥ ३१ ॥**

**(भा.दी.) अती**ति । यस्मात् त्वयि राज्यं तत् प्राप्तवति सति बहवः मासाः अतीताः । अद्यापि सीता न विचिता न विचारिता । सख्यं सखित्वं तत् खण्डितवान् असि ॥ ३१ ॥

**(सं.चं.)** न विचिता नान्विष्टा । खण्डितवान् दूषितवानथ च नाशितवानसि ॥ ३१–२ ॥

**देवा यद्दास्यमिच्छन्ति ब्रह्मरुद्रेन्द्रपूर्वकाः ।**
**देवदेवस्य तस्यास्य[1] किं सख्यं कपिना त्वया ॥ ३२ ॥**

**(भा.दी.) देवा** इति । ब्रह्मा च रुद्रश्च इन्द्रश्च ते पूर्वे येषां ते तथोक्ताः देवाः, यस्य श्रीरामस्य दास्यं दासत्वं तत् इच्छन्ति । इषु इच्छायां लट् । देवदेवस्य, तस्य ब्रह्मादिभिः सेव्यस्य, अस्य श्रीरामस्य कपिना त्वया सख्यं किं किम्प्रयोजनम्? न किमपि प्रयोजनवदित्यर्थः ॥ ३२ ॥

**ऋतेऽपि तव साहाय्यं सीतां प्राप्स्यति राघवः ।**
**ऋतेऽपि पल्वलपयः परिपूर्ण्णो महार्ण्णवः ॥ ३३ ॥**

**(भा.दी.) ऋत** इति । श्रीराघवः तव साहाय्यं सहायत्वं तत् ऋतेऽपि विनाऽपि सीतां प्राप्स्यति । आप्लृ व्याप्तौ लृट् । तत्र दृष्टान्तमाह– **ऋत** इति । महार्णवः पल्वलपयः क्षुद्रसरसः पयः (तत्) ऋतेऽपि परिपूर्णो हि ॥ ३३ ॥

**(सं.चं.)** क्षुद्रं सरः पल्वलः पल्वलं वा ॥ ३३–४ ॥

**चराचरगुरौ वक्रं यदेतद्धृदयं तव ।**
**अनार्य्य तद् विदार्य्यायं शरः पास्यति शोणितम् ॥ ३४ ॥**

**(भा.दी.) चरे**ति । हे अनार्य अधर्मचर, चराश्च अचराश्च तेषां गुरौ श्रीरामे (वक्रं) कुटिलम्, कुटिलमनस्क-मित्यर्थः, यदेतत् तव हृदयं हृदयप्रदेशः, तत् विदार्य अयं मत्करस्थः शरः शोणितं रक्तं तत् पास्यति ।

[1] 'तस्याऽप्य किम्'

पा पाने लृट् । यद्वा यस्मात् एतत् हृदयं मनः चराचरगुरौ वक्रं कुटिलं तत् तस्मात् अयं शरः त्वां विदार्य शोणितं पास्यतीति वा ॥ ३४ ॥

**एवं निर्भत्सयत्युच्चैः[1] कपीन्द्रं राघवानुजे ।**
**वानरेषु विषण्णेषु तारा सौमित्रिमब्रवीत् ॥ ३५ ॥**

**(भा.दी.)** **एवमिति** । राघवानुजे लक्ष्मणे, कपीन्द्रं उच्चैः सम्यक् एवं निर्भत्सयति सति, वानरेषु विषण्णेषु सत्सु, प्रत्युत्तरं वक्तुं भीतेषु सत्सु, तारा सौमित्रिं अब्रवीत् ॥ ३५ ॥

**(सं.चं.)** किं कार्यमित्यप्रतिभतया विषण्णेषु दुःखेनावनतशिरस्सु वानरेषु ॥ ३५ ॥

**नरदेवकुमार त्वं धार्म्मिकः[2] क्षन्तुमर्हसि ।**
**चिरं क्लिष्टः सुखं प्राप्य सत्यं सक्तः[3] कपीश्वरः ॥ ३६ ॥**

**(भा.दी.)** **नरेति** । नरदेवस्य दशरथस्य कुमार पुत्र, राजर्षिवंशोत्पन्नत्वादेव धार्मिकः त्वं क्षन्तुं क्षमां कर्तुं अर्हसि । अर्ह पूजायां लट् । याथातथ्येन पण्डितमिति न्यायेन लक्ष्मणमनुनयति– चिरमिति । चिरं राज्यादित्यागेन क्लिष्टः क्लेशितः कपीश्वरः सुखं तत् प्राप्य सक्तः आसक्तः, सत्यं यथार्थम् ॥ ३६ ॥

**(सं.चं.)** चिरं क्लिष्टः । अत इदानीं सुखं प्राप्य भोगे सक्तः इत्येतत् सत्यं न मृषा । अङ्गीक्रियते त्वदुक्तम् ॥ ३६–७ ॥

**किन्तु कार्य्याणि रामस्य न विस्मरति जात्वपि[4] ।**
**वानरान् मुक्तवान् क्षिप्रमानेतुं सर्ववानरान् ॥ ३७ ॥**

**(भा.दी.)** कृतघ्नता चास्मिन्नास्तीत्याह– **किन्त्विति** । किन्तु श्रीरामस्य यानि कार्याणि तानि जात्वपि कदाचिदपि न विस्मरति । सर्वे ये वानरास्तान् क्षिप्रं आनेतुं वानरान् नीलादीन् मुक्तवान् प्रेषितवान् ॥३७॥

**रावणो राममहिर्षीं[5] बहुकोटिबलोऽहरत् ।**
**तद्वधार्थं चमूर्नेया वालिनोक्तं श्रुतं मया ॥ ३८ ॥**

---

१. 'निर्भर्त्सयत्युच्चैः' २. 'धार्मिक क्षन्तु–' ३.'प्राप्य सुसंयुक्तः' (?)
४. 'जात्विति।' ५. 'रामरमणीं बहु–'

**(भा.दी.) रावण** इति । बह्व्यो याः कोटयः बहुकोटयः, बहुकोटिसङ्ख्याकानि बलानि सैन्यानि यस्य स तथोक्तः रावणः, राममहिषीं सीतां अहरत् इति वालिना उक्तं वचः मया श्रुतम् । तद्वधार्थं चमूः बह्वी तावती कपिसेना नेया । अतस्तन्मेळनार्थं वानरान् प्रेषयामासेति भावः ॥ ३८ ॥

**(सं.चं.)** बहुकोटिबलः । 'शतकोटिसहस्राणि लङ्कायां किल राक्षसाः' (३५.१५) इत्यादि च । तद्वधार्थं तादृशी बलिष्ठा बहुकोटिमिता चमूः सेना नेया । चमूरिति सेनाविशेषवचनः क्वचन । अत्र तु सामान्य-वचनः । तदेतद् वालिना पुरोक्तं मया श्रुतम् । 'एवमाख्यातवान् वाली स ह्यभिज्ञो हरीश्वरः' (३५.१८) इति च ॥ ३८ ॥

**ज्येष्ठवत् पूज्य एवाङ्ग सुग्रीवोऽस्य सखा तव[१] ।**
**सख्यं कथं खण्डनीयं हनूमति हि जीवति ॥ ३९ ॥**

**(भा.दी.) ज्येष्ठवद**िति । हे अङ्ग प्रिय लक्ष्मण, तव अस्य श्रीरामस्य सखा सुग्रीवः ज्येष्ठवत् श्रीरामवत् पूज्य एव । हनूमति जीवति सति सख्यं श्रीरामेण सख्यं सखित्वं तत् कथं खण्डनीयं खण्डितुमर्हम्? न कथमपीत्यर्थः ॥ ३९ ॥

**(सं.चं.)** ज्येष्ठोऽग्रजो रामस्तद्वत् अस्य ज्येष्ठस्य रामस्य सखा सुग्रीवोऽपि तव पूज्य एव । ज्येष्ठवज्ज्येष्ठ-सहायं च हि कनिष्ठाः पूजयेयुरज्येष्ठमपि । यथा गुहं भरतः । ननु भग्नं ज्येष्ठसख्यम्? नेत्याह– सख्यं कथं खण्डनीयम् ॥ ३९ ॥

**रामानुज प्रसीद त्वं पश्य दासीस्तवात्र नः ।**
**पौरस्त्यं[२] भयमाशङ्क्य दीना बाष्पमुखीः स्त्रियः ॥ ४० ॥**

**(भा.दी.) रामे**ति । हे रामानुज, त्वं प्रसीद प्रसन्नो भव । प्रपूर्वः षद्लृ विशरणगत्यवसादनेषु लोट् । पुरस्तादुत्तरतो भवं पौरस्त्यं भविष्यदित्यर्थः, भयं त्वत्क्रोधनिमित्तकभयं तत् । पौलस्त्यभयमिति क्वचित् पाठः । श्रीरामसाहाय्येन कपीनां रावणनिमित्तकभयमित्यर्थः । आशङ्क्य दीनाः दुःखोपाताः अत एव बाष्पयुक्तं मुखमासामस्तीति तथोक्ताः (तव दासीः) स्त्रियः (नः अत्र) पश्य ॥ ४० ॥

**(सं.चं.)** सम्प्राप्ते कपिराक्षससङ्ग्रामे पुरस्ताद् भवम्, भाविकालीनं भयमाशङ्क्यैव दीना भीताः ॥ ४० ॥

---

१. 'सखा त्वया' २. 'पौलस्त्यभयमाशङ्क्य'

**इति तारागिरा शान्तं लक्ष्मणं रविजोऽब्रवीत् ।**
**सखे ममाऽगः क्षन्तव्यं जनन्येव शिशोस्त्वया ॥ ४१ ॥**

**(भा.दी.) इतीति** । रविजः सुग्रीवः इति तारागिरा शान्तं लक्ष्मणं प्रति, हे सखे लक्ष्मण, त्वया मम आगः अपराधः शिशोः पुत्रस्य अपराधः जनन्येव मात्रेव क्षन्तव्यमिति अब्रवीत् ॥ ४१ ॥

**(सं.चं.)** जनन्या शिशोरागइव ॥ ४१ ॥

**शरो यस्यैक एवैतत् त्रैलोक्यमपि संहरेत् ।**
**नास्मत् कृत्यं प्रभोस्तस्य वयं स्वार्थं यतामहे ॥ ४२ ॥**

**(भा.दी.) शर** इति । यस्य श्रीरामस्य एक एव शरः एतत् त्रैलोक्यमपि संहरेत् । हृञ् हरणे लिङ् । प्रभोः तस्य श्रीरामस्य अस्मत् अस्मत्तः कृत्यं कार्यं न । तथाऽपि वयं स्वार्थं यतामहे यत्नं कुर्मः ॥ ४२ ॥

**(सं.चं.)** अस्माभिः कृत्यं प्रयोजनमस्मत्कृत्यं न किमपि तस्य । 'कार्यं कृत्यं प्रयोजनम्' इति यादवप्रकाशः । अस्मत् अस्मत्त इति वा । वयं तु न रामोपकारार्थं किन्तु स्वलाभार्थं यतामहे । 'सीतां प्राप्स्यति धर्मात्मा वधिष्यति च रावणम् । सहायमात्रेण मया राघवः स्वेन तेजसा' (३६.७) इति, 'सहायकृत्यं किं तस्य येन सप्त महाद्रुमाः । शैलश्च वसुधा चैव बाणेनैकेन दारिताः' (८) इति च ॥ ४२ ॥

**प्रसादितः सौरिणेति प्रसन्नो लक्ष्मणोऽब्रवीत् ।**
**कार्याग्रहात् सम्भ्रमोऽयं मित्र मे क्षम्यतामिति ॥ ४३ ॥**

**(भा.दी.)** प्रेति । सूरस्य सूर्यस्यापत्यं पुमान् सौरिः, तेन सुग्रीवेण इति प्रसादितः प्रसन्नः लक्ष्मणः, हे मित्र सुग्रीव, मे अयं सम्भ्रमः कार्ये आग्रहः अभियोगस्तस्मात्, अतः क्षम्यताम्, त्वयाऽपि मदुरुक्तं सह्यताम्, क्षमूष् सहने लोट् । इति अब्रवीत् ॥ ४३ ॥

**(सं.चं.)** सम्भ्रमस्त्वरा । आग्रहो निर्बन्धः । सम्पादनीयमेवेत्यभिनिवेशः ॥ ४३ ॥

**हरीन्द्रवचनात् प्रोचे हरींस्तु हनुमान् पुनः ।**
**विदिक्षु दिक्षु प्लवगानानेतुं गच्छत द्रुतम् ॥ ४४ ॥**

**(भा.दी.) हरी**ति । हनुमांस्तु हरीन्द्रस्य सुग्रीवस्य यद्वचनं तस्मात्, विदिशो आग्नेयादयः, तासु दिक्षु च विद्यमानान् प्लवगान् आनेतुं द्रुतं यथा भवति तथा गच्छत इति पुनः हरीन् कपीन् प्रोचे ॥ ४४ ॥

**(सं.चं.)** दिक्षु विदिक्षु स्थितान् ॥ ४४ ॥

**महेन्द्रमलयादिभ्यो द्वीपेभ्यश्च प्लवङ्गमाः ।**
**आयान्तु दशमाहात् प्राङ् नो चेद् दण्डो भविष्यति ॥ ४५ ॥**

**(भा.दी.) महेन्द्रे**ति । प्लवङ्गमाः कपयः, महेन्द्रश्च मलयश्च तौ आदी येषां ते तथा तेभ्यः पर्वतेभ्यः, प्लक्षादयो ये द्वीपास्तेभ्यश्च, दशमं च तदहश्च दशमाहस्तस्मात्, 'रात्राह्नाहाः पुंसि' (अ.सू.२.४.२९) । प्राक् आयान्तु, नो चेत् दण्डो भविष्यति । भूधातोर्लृट् ॥ ४५ ॥

**(सं.चं.)** महेन्द्रमलयादिभ्यः पर्वतेभ्यः । जम्बूद्वीपादन्यद्वीपेभ्यश्च । दशमाहात् प्राक् । 'अहोभिर्दशभिर्ये हि नाऽगच्छन्ति ममाऽज्ञया । हन्तव्यास्ते दुरात्मानो राजशासनदूषकाः' (३७.१२) इति च । सप्ताहादित्याह सुग्रीवः । दूरदेशगतानां कृपया दिनत्रयमधिकं ददौ हनुमान् ॥ ४५–६ ॥

**इति वायुसुतेनोक्ता वायुवेगाः प्लवङ्गमाः[१] ।**
**मार्ग्गज्ञाः[२] प्लवगान् सर्वानुर्वीगानानयन् द्रुतम् ॥ ४६ ॥**

**(भा.दी.) इती**ति । इति वायुसुतेन हनुमता उक्ताः, वायुवद् वेगो येषां ते तथा, मार्गान् जानन्तीति तथोक्ताः, तत्तत्प्रदेशविशेषान् प्रति गन्तुं मार्गज्ञा इत्यर्थः, प्लवङ्गमाः, उर्वीं गच्छन्तीति उर्वीगास्तान्, भूमिस्थानित्यर्थः, सर्वान् प्लवगान् द्रुतं यथा भवति तथा आनयन् ॥ ४६ ॥

**तैश्चोदितास्ततोऽस्ताद्रेः[३] कोट्यो हाटकसन्निभाः ।**
**दशागच्छन् प्लवङ्गानां तिस्रः कोट्योऽञ्जनप्रभाः ॥ ४७ ॥**

**(भा.दी.) तैरि**ति । ततः तैः सुग्रीवप्रेषितैः चोदिताः, हाटकसन्निभाः, सुवर्णसन्निभाः दश दशसङ्ख्याकाः कोट्यः, अञ्जनवत्प्रभा येषां ते तथोक्ताः, प्लवङ्गानां तिस्रः कोट्यश्च, अस्तनामको योऽद्रिस्तस्मात् आगच्छन् ॥ ४७ ॥

---

१. **'वायुवेगास्तु वानराः'** २. **'मार्गज्ञान्'**

३. **'तैश्चोदितास्तु तोताद्रेः'** । **'तोताद्रेस्तु तोताद्रिनामकात् पर्वतात्'** इति का.श्री. । रामायणविरोधाच्चिन्त्यमेतत् ।

**(सं.चं.)** अस्ताद्रेः कोटयो दश। 'अस्तं गच्छति यत्रार्कस्तस्मिन् गिरिवरे स्थिताः। तप्तहेममहाभासस्तस्मात् कोट्यो दश च्युताः' (३७.२१) इति च। तिस्रः कोटयोऽञ्जनप्रभाः अप्यस्ताद्रेरिति भाति। सम्प्रति रामायणे तु अञ्जनाद्रेरितीव भाति– 'ततस्तेऽञ्जनसङ्काशा गिरेस्तस्मान्महाजवाः। तिस्रः कोट्यः प्लवङ्गानां निर्ययुर्यत्र राघवः' (३७.२०) इति ॥ ४७ ॥

**कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् ।**
**सप्तकोटिसहस्राणि कपीनां राममाययुः ॥ ४८ ॥**

**(भा.दी.)** **कैलासे**ति । सिंहस्य केसराः तद्वद् वर्चो येषां ते तथोक्ताः, तेषां कपीनां सप्त कोट्यः सप्तकोटिसङ्ख्याकानि यानि सहस्राणि च, कैलासशिखरेभ्यः श्रीरामं आययुः ॥ ४८ ॥

**(सं.चं.)** सप्तकोटिसहस्राणि । 'कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् । ततः कोटिसहस्राणि वानराणामुपागमन्' (३७.२२) इति तु प्रचलितो रामायणपाठः ॥ ४८ ॥

**फलमूलरसज्ञानां हिमालयनिवासिनाम् ।**
**कपिकोटिसहस्राणां[१] सहस्रं राममाययौ ॥ ४९ ॥**

**(भा.दी.)** **फले**ति । फलानि च मूलानि च तेषां रसः, तं जानन्तीति तथोक्ताः तेषाम्, हिमालये हिमवत्पर्वते निवास एषामस्तीति तथा तेषाम्, कपीनां याः कोटयस्तासां यानि सहस्राणि तेषां सहस्रं श्रीरामं आययौ ॥ ४९ ॥

**(सं.चं.)** फलमूलरसज्ञानाम् । 'फलमूलेन जीवन्तो हिमवन्तमुपाश्रिताः । तेषां कोटिसहस्राणां सहस्रं समवर्तत' (३७.२३) इति च ॥ ४९ ॥

**अङ्गारसप्रभाङ्गानां विन्ध्याच्चावन्ध्यरंहसाम् ।**
**बहुकोटिसहस्राणि कपीनां[२] राममाययुः ॥ ५० ॥**

**(भा.दी.)** **अङ्गारे**ति । अङ्गारस्य सप्रभाणि समानकान्तिमन्ति अङ्गानि येषां ते तथोक्तास्तेषाम्, अतिरक्ताङ्गानामित्यर्थः, अवन्ध्यं अमोघं रंहो वेगो येषां ते तथा तेषाम्, अमोघव्यापाराणामित्यर्थः, कपीनां बहुकोटिसङ्ख्याकानि सहस्राणि, विन्ध्यो विन्ध्यगिरिस्तस्माच्च श्रीरामं आययुः ॥ ५० ॥

१. '–सहस्राणि सहस्रम्' २. 'हरीणां राम–'

**(सं.चं.)** अङ्गारसप्रभाङ्गानाम् । 'अङ्गारकसमानानां भीमानां भीमकर्मणाम् । विन्ध्याद् वानरकोटीनां सहस्राण्यापतन् द्रुतम्' (३७.२४) इति च ॥ ५० ॥

**पयोब्धिवेलानिलयास्तमालवनगन्धिनः[१] ।**
**वानरा नारिकेळाशा[२] असङ्ख्या आपतन्[३] विभुम् ॥ ५१ ॥**

**(भा.दी.) पय** इति । पयोब्धेः क्षीरसमुद्रस्य या वेला तीरं सैव निलय आवासस्थानं येषां ते तथा, तमालवृक्षाणां यद्वनं तस्य गन्धो एषामस्तीति तथोक्ताः, नारिकेळफलमश्नन्तीति [४]नारिकेळाशाः, असङ्ख्याः वानराः विभुं श्रीरामं प्रति आपतन् आययुः ॥ ५१ ॥

**(सं.चं.)** पयोब्धिवेलानिलयाः । 'क्षीरोदवेलानिलयास्तमालवनवासिनः । नारिकेळाशनाश्चैव तेषां सङ्ख्या न विद्यते'(३७.२५) इति च ॥ ५१ ॥

**नदीभ्यश्च[५] नदेभ्यश्च नानादिग्भ्यस्ततस्ततः ।**
**देवांशा वानराः सर्वे रामनाम्नि श्रुतेऽभ्यगुः ॥ ५२ ॥**

**(भा.दी.) नदीभ्य** इति । देवांशाः देवानामंशभूताः सर्वे वानराः, नदीभ्यः, नदाः शोणादयस्तेभ्यश्च, ततस्ततः नानाविधा या दिशस्ताभ्यश्च रामनाम्नि श्रुते सति अभ्यगुः । इण् गतौ लुङ् ॥ ५२ ॥

**(सं.चं.)** रामनाम्नि श्रुतेऽभ्यगुः । देवांशत्वात् ॥ ५२ ॥

**महेश्वरमखान्नेभ्यो जातमूलफलादिकम् ।**
**हिमाद्रावाप्य चापूर्वं दूता राज्ञे न्यवेदयन् ॥ ५३ ॥**

**(भा.दी.) महेश्वरेति** । दूताः सुग्रीवभृत्याः । महेश्वरस्य रुद्रस्य यो मखः, तस्य यानि अन्नानि तेभ्यः जातानि यानि मूलानि फलानि च, तानि आदिर्यस्य तत्तथोक्तम्, अपूर्वं वस्तु, हिमाद्रौ आप्य च, राज्ञे सुग्रीवाय न्यवेदयन्, उपायनत्वेन दत्तवन्तः । विद[६] चेतनाख्याननिवासनेषु लङ् ॥ ५३ ॥

---

१. **'–तमालवनवासिनः'** इत्युत्तरत्र (७.३९) व्याख्यात्रा समुद्धृतः पाठः ।
२. **'नारिकेलाशाः'**
३. **'असङ्ख्या अपतन्'**
४. **'नालिकेरफलमश्नन्तीति नालिकेराशाः'**
५. **'नदीभ्यः पूर्वप्रवाहाभ्यः, नदेभ्यः पश्चिमप्रवाहेभ्यः'** इति का.श्री. ।
६. 'अयमात्मनेभाष इत्युक्तम् । विद्लृ लाभे इति युक्तम् ।

**(सं.चं.)** महेश्वरमखान्नेभ्यः । इयमत्र कथा– 'ये तु त्वरयितुं याता वानराः सर्ववानरान् । ते वीरा हिमवच्छैलं ददृशुस्तं महाद्रुमम् । तस्मिन् गिरिवरे रम्ये यज्ञो माहेश्वरः पुरा । सर्वदेवमनस्तोषो बभौ दिव्यो मनोहरः । अन्ननिष्यन्दजातानि मूलानि च फलानि च । अमृतास्वादकल्पानि ददृशुस्तत्र वानराः । तदन्नसम्भवं दिव्यं फलं मूलं मनोहरम् । यः कश्चित् सकृदश्नाति मासं भवति तर्पितः । तानि मूलानि दिव्यानि फलानि च फलाशनाः । औषधानि च दिव्यानि जगृहुर्हरियूथपाः । तस्माच्च यज्ञायतनात् पुष्पाणि सुरभीणि च । आनिन्युर्वानरा गत्वा सुग्रीवप्रियकारणात्' (३७.२७–३२) इति च । उपायनत्वेन न्यवेदयन् । विद्लृ लाभे णिचि रूपम् ॥ ५३–४ ॥

**मणिमय्या शिबिकया स सुग्रीवः सलक्ष्मणः ।**
**गत्वा रामान्तिके[१] तूर्णमवतीर्णोऽपतत् पदे ॥ ५४ ॥**

**(भा.दी.)** **मणी**ति । सलक्ष्मणः लक्ष्मणसहितः सः सुग्रीवः, मणिमय्या रत्नमय्या शिबिकया आन्दोळिकया गत्वा, श्रीरामान्तिकं समीपं तस्मिन्, तूर्णं अवतीर्णः सन्, पदं पादः, तस्मिन् अपतत् नमश्चकार ॥ ५४ ॥

**प्रसीद मे नाथ कृतागसस्त्वं कृपाकरेत्याशु तमर्थयन्तम् ।**
**[२]रामोऽभिरामस्मितचन्द्रचारुरुत्थाप्य सुग्रीवमथाऽलिलिङ्गे ॥ ५५ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**किष्किन्धाकाण्डे षष्ठः सर्ग्गः ॥**

**(भा.दी.)** **प्रसीदे**ति । अथ हे नाथ, कृपाकर श्रीराम, कृतमागः अपराधो येन स तथा, तस्य मे प्रसीद प्रसन्नो भव । इति अर्थयन्तं तं सुग्रीवम्, अभिरामं मनोहरं यत् स्मितं तदेव चन्द्रस्तेन चारुः श्रीरामः आशु उत्थाप्य आलिलिङ्गे आलिङ्गनं चक्रे । लिगि गतौ लिट् ॥ ५५ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां**
**भावार्थदीपिकायां षष्ठः सर्गः ॥**

**(सं.चं.)** पुनरिन्द्रोपेन्द्रवज्राभ्यामुपसंहरति–प्रसीद मे नाथ । ममापराधविषये प्रसन्नो भव । क्षान्त्वाऽनु-गृहाण । रमणीयस्मितं वदनमेव चन्द्रस्तेन चारुः । स्मितमेव वा चन्द्रः । 'अभिरामः स्मितचन्द्रचारुः' इति

---

१. 'रामान्तिकं तूर्णम्'

२. 'रामोऽभिरामः स्मित–'

वा प्रतृण्णम् ।‘आलिलिङ्गे’ इति पठन्ति । ‘आलि-लिङ्ग’ इत्येव मूलपाठः स्यादिति भाति । प्रायः पाणिनीयमेव पन्थानं पतति पण्डिताचार्यः । अथवा क्वचित्क्वचित् कविश्छान्दसो भवति । तेनार्थयमानमिति वक्तव्ये अर्थयन्तमिति वक्ति । आलिलिङ्गेति वक्तव्य आलिलिङ्ग इति । लोकेऽपि सर्वस्मादुभयं पदमुशन्ति केचित् । पाणिनीया अपि–‘अर्थयतेः क्वचित् परस्मैपदत्वमपि’ इत्याहुः । ‘आङो लिगेरात्मेपदं वा’ इति च पूरणीयम् । प्रयोगशरणा हि वैयाकरणाः । नतु वैयाकरणशरणाः प्रयोगाः ॥ ५५ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीसङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां किष्किन्धाकाण्डे षष्ठसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १६७५+५५=१७३०]

# सप्तमः सर्ग्गः

**सिंहलक्षार्बुदबलाः सिंहसंहनना अथ ।**
**प्लवङ्गा[1] आप्लुता दिग्भ्यः पर्वताभा विभोः पुरः ॥ १ ॥**

**(भा.दी.)** श्रीरामसेवार्थमागतानां बलमाहात्म्यादिकं वर्णयति– **सिंहेत्या**दिना । अथ सिंहस्य संहननमिव शरीरमिव संहननं येषां ते, सिंहानां यल्लक्षमर्बुदं च तद्वद् बलं येषां ते तथा, पर्वतवदाभा कान्तिर्येषां ते तथा, प्लवङ्गाः दिग्भ्यः विभोः श्रीरामस्य पुरः पुरस्तात् आप्लुताः आगताः ॥ १ ॥

**(सं.चं.)** संहनने शरीरविन्यासे सिंहा इव । दृढाङ्गाः संश्लिष्टाङ्गाश्च । अर्बुदं दशकोटिः कोटिर्वा । लक्षसिंहबलाः दशकोटिसिंहबलाश्च । पर्वताभाः महागात्रतया पर्वततुल्याः । आप्लुताः आगत्य स्थिताः ॥ १ ॥

**तरुणार्कारुणाः केचिच्चन्द्रगौराश्च[2] वानराः ।**
**सरोजकेसराभाश्च प्रापुः श्यामाः सितासिताः[3] ॥ २ ॥**

**(भा.दी.)** **तरुणे**ति । केचित् तरुणो योऽर्कस्तद्वदरुणा रक्ताः वानराः । केचित् हारवद् गौराः श्वेताः । केचित् सरोजस्य केसरास्तद्वदाभा कान्तिर्येषां ते तथा सुवर्णाभा इत्यर्थः । केचित् श्यामाः कृष्णवर्णाः । 'त्रिषु श्यामौ हरित्कृष्णौ' इत्यमरः । केचित् सिताश्च असिताश्च सितासिताः श्यामळा इत्यर्थः । वानराः प्रापुः ॥ २ ॥

---

१. **'प्लवगा–'**

२. **'केचिद्धारगौराश्च'** इति वि.ती.पाठः । **'केचिच्छशिराश्च'** इति क्वचित् ।

३. **'सितासिताः कर्बुरवर्णा इत्यर्थः'** इति का.श्री. ।

**(सं.चं.)** तरुणेति। 'तरुणादित्यवर्णैश्च शशिगौरैश्च वानरैः। पद्मकेसरवर्णैश्च श्वेतैर्मेरुकृतालयैः' (३९.१३) इति च। केचित् श्यामा हरिद्वर्णाः। क्वचित् सिताः। क्वचिदसिताः केचित्॥ २॥

**कपिपद्मसहस्रेण कपिशङ्कुशतेन च।**
**वृतोऽङ्गदो राममाप्य जयेति प्राञ्जलिः स्थितः ॥ ३ ॥**

**(भा.दी.)** विविच्य दर्शयति– **कपी**ति। कपीनां पद्मानि पद्मनामकसङ्ख्याविशेषास्तेषां यत्सहस्रं तेन, कपीनां ये शङ्कवः शङ्क्वाख्यसङ्ख्याविशेषास्तेषां यच्छतं तेन च वृतः अङ्गदः श्रीरामं आप्य एत्य, जय उत्कृष्टतया वर्तस्व इति प्राञ्जलिः सन् स्थितः॥ ३॥

**(सं.चं.)** कपिपद्मसहस्रेण। 'ततः पद्मसहस्रेण वृतः शङ्कुशतेन च। युवराजोऽङ्गदः प्राप्तः पितृतुल्यपराक्रमः' (३९.२९) इति च। विभिन्नानि सङ्ख्यानामानि। केचिन्महापद्मं न पठन्ति। शङ्खः शङ्कुरिति चैकार्थम्। यादवप्रकाशस्त्वेवं पठति–'शतं सहस्रमयुतं नियुतं प्रयुतार्बुदे। न्यर्बुदं वृन्दखर्वे च निखर्वं शङ्खमम्बुजम्। समुद्रो मध्यमन्तं च परार्धं च यथाक्रमम्' इति। अयमप्येकः पन्थाः। तथाच गणनाक्रमः–

| | | | |
|---|---|---|---|
| १. शतम् | १०० | २. सहस्रम् | १००० |
| ३. अयुतम् | १०००० | ४. नियुतम् | १००००० |
| ५. प्रयुतम् | १०००००० | ६. अर्बुदम् | १००००००० |
| ७. न्यर्बुदम् | १०००००००० | ८. वृन्दम् | १००००००००० |
| ९. खर्वम् | १०००००००००० | १०. निखर्वम् | १००००००००००० |
| ११. शङ्खम् | १०००००००००००० | १२. पद्मम् | १००००००००००००० |

एवं परार्धान्तं गणनीयम्। रामायणे त्वन्यथोदितम्। तदपि ग्रन्थान्तरानुगुणतया योजनीयम्। अधिकं त्वस्मत्कृतायां भारततात्पर्यनिर्णयटीकायां निर्णयभावचन्द्रिकायां (८.१७९) द्रष्टव्यम्॥ ३॥

**ततो[१] नीलच्छविर्नीलो दशकोटिशतैर्वृतः[२]।**
**उग्राणां हरिवीराणामग्रतः प्रत्यदृश्यत ॥ ४ ॥**

**(भा.दी.)** **तत** इति। ततः नीला च्छविः द्युतिर्यस्य स तथोक्तः नीलः, कपीनां कोटयस्तासां यानि शतानि तैर्वृतः सन् उग्राणां हरिषु वीराणां तेषां अग्रतः प्रत्यदृश्यत॥ ४॥

१. **'नीलद्युतिर्नीलो–'** २. **'कपिकोटिशतैर्वृतः'** इति वि.ती. पाठः।

**(सं.चं.)** दशकोटिशतैर्वृतः । 'नीलाञ्जनचयाकारो नीलो नामाथ यूथपः । अदृश्यत महाकायः कोटिभि-र्दशभिर्वृतः' (३९.२२) इति तु साम्प्रतो रामायणपाठः । 'कोटिभिर्दशभिः शतैः' इति प्रतनपाठः स्यात् ॥ ४ ॥

**बहुलक्षैः [१]कपीनां तु कोटिभिश्च समन्वितः ।**
**तारातातः सुषेणोऽथ काञ्चनाद्रिरिवैक्ष्यत[२] ॥ ५ ॥**

**(भा.दी.) बह्विति** । अथ ताराया: तातः पिता सुषेणः, कपीनां बहूनि च तानि लक्षाणि च तानि तैः, कपीनां कोटिभिश्च समन्वितः सन्, काञ्चनमयो योऽद्रिः स इव, मेरुरिवेत्यर्थः, ऐक्ष्यत अदृश्यत ॥ ५ ॥

**(सं.चं.)** बहुलक्षैः । 'ततः काञ्चनशैलाभस्ताराया वीर्यवान् पिता । अनेकैर्दशसाहस्रैः कोटिभिः प्रत्यदृश्यत' (३९.१५) इति च । 'अनेकैः शतसाहस्रैः' इति मूलपाठः स्यात् ॥ ५ ॥

**[३]दशकोटिसहस्रैस्तु वृतः शतवलिर्बली ।**
**कोसलेन्द्रं ववन्देऽथ पनसो दशकोटिभिः ॥ ६ ॥**

**(भा.दी.) दशेति** । अथ बलमस्यास्तीति बली शतबलिः, कपीनां दशकोटिसङ्ख्याकानि यानि सहस्राणि तैः वृतः सन् कोसलेन्द्रं श्रीरामं ववन्दे । पनसस्तु दश च याः कोटयश्च ताभिः वृतः सन् कोसलवर्षाणामिन्द्रं श्रीरामं ववन्दे ॥ ६ ॥

**(सं.चं.)** दशकोटिसहस्रैस्तु । 'कोटीसहस्रैर्दशभिः श्रीमान् परिवृतस्तदा । वीरः शतवलिर्नाम वानरः प्रत्यदृश्यत' (३९.१४) इति च । पनसो दशकोटिभिः । 'महाचलनिभैर्घोरैः पनसो नाम यूथपः । आजगाम महावीर्यो दशभिः कोटिभिर्वृतः' (३९.२१) इति च । अर्वाचीनास्तु रामायणपाठं द्वेधा पठन्ति–'पञ्चभिः कोटिभिर्वृतः' इत्येके । 'तिसृभिः कोटिभिः' इत्यपरे ॥ ६ ॥

**पिता हनुमतः श्रीमान् [४]सर्ववानरसत्तमः ।**
**केसरी सूर्य्यदीप्तास्यः प्रायाद् बहुबलैर्वृतः[५] ॥ ७ ॥**

---

१. **'बहुलक्षैर्हरीणां तु'** २. **'–नाद्रिरिवैक्षत' । ऐक्षत राममपश्यत्'** इति का.श्री. ।
३. **'शतकोटिसहस्रैस्तु'** ४. **'श्रीमान् कान्तियुक्तः सम्पयुक्तश्च'** इति का.श्री. । ५. **'बहुबलैर्युतः'**

**(भा.दी.) पितेति** । श्रीमान्, सर्वे ये वानराः तेषु सत्तमः उत्तमः, सूर्यवद्दीप्तमास्यं यस्य स तथा, हनुमतः पिता, केसरी केसरिनामकः वानरः, बहूनि यानि बलानि सैन्यानि तैर्वृतः सन् श्रीरामं प्रायात् । यातेर्लङ् ॥ ७ ॥

**(सं.चं.)** पिता हनुमतः । 'अनेकैर्बहुसाहस्रैर्वानराणां समन्वितः । पिता हनुमतः श्रीमान् केसरी प्रत्यदृश्यत' (३९.१८) इति च ॥ ७ ॥

**गोलाङ्गूलो गवाक्षोऽथ प्राप्तः कोटिसहस्रवान् ।**
**धूम्रोऽदृश्यत धूम्राक्ष[1] ऋक्षकोटिसहस्रवान् ॥ ८ ॥**

**(भा.दी.) गोलेति** । (अथ) गोलाङ्गूलः कृष्णवर्णमुखमर्कटजातीयः, 'गोलाङ्गूल इति प्रोक्तः कृष्णवक्त्रस्तु मर्कटः' इति हलायुधः, गवाक्षः गवाक्षनामकः कोटिसङ्ख्याकानि यानि सहस्राणि तानि अस्य सन्तीति तथा सन् प्राप्तः । धूम्रा धूम्रवर्णा आभा यस्य स तथा धूम्रः धूम्रनामकः ऋक्षाणां कोटयस्तासां सहस्राणि अस्यास्तीति तथा सन् अदृश्यत ॥ ८ ॥

**(सं.चं.)** गोलाङ्गूलः । 'गोलाङ्गूलाधिपः श्रीमान् गवाक्षो भीमविक्रमः । वृतः कोटिसहस्रेण वानराणामदृश्यत' (३९.१९) इति च । गोलाङ्गूलोऽसिताननः । 'ಮುಜ್ಜು' इति भाषायाम् । गोरिव यस्य लाङ्गूलाग्रे लोमवृन्दं भासते । धूम्रोऽदृश्यत । 'ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिबर्हणः । वृतः कोटिसहस्राभ्यां द्वाभ्यां समभिवर्तत' (३९.२०) इति च । धूम्रे धूमले अक्षिणी अस्येति धूम्राक्षः । धूम्रनामा ऋक्षः ॥ ८ ॥

**गवयो गतवान् रामं वृतो द्वादशकोटिभिः ।**
**षष्टिकोटिवृतः प्राप[2] राघवं गन्धमादनः ॥ ९ ॥**

**(भा.दी.) गवय** इति । गवयः गवयनामकः द्वादश च ताः कोटयश्च ताभिः वृतः सन् श्रीरामं गतवान् । गन्धमादनः षष्टिसङ्ख्याकाश्च ताः कोटयश्च ताभिः वृतः सन् श्रीरामं प्राप । आप्लृ व्याप्तौ लिट् ॥९॥

**(सं.चं.)** गवयः । 'ततः काञ्चनशैलाभो गवयो नाम यूथपः । आजगाम महावीर्यः कोटिभिः पञ्चभिर्वृतः' (३९.२३) इति साम्प्रतो रामायणपाठः । 'कोटिद्वादशभिर्वृतः' इति मूलपाठः स्यात् । षष्टिकोटिवृतः । 'ततः

१. **'धूम्राभ–'** इति वि.ती.पाठः ।
२. **'प्रायाद् राघवम्'**

कोटिसहस्राणां सहस्रेण शतेन च । पृष्ठतोऽनुगतः प्राप्तो हरिभिर्गन्धमादनः' (३९.२८) ति साम्प्रतो रामायणपाठः । 'षष्टिसहस्राणां सहस्रेण' इति प्राचीनपाठ इति स्फुटम् ॥ ९ ॥

**गजश्च वृषभाख्यश्च शलभः शरभस्तथा ।**
**पृथक्पृथक् कोटियुताः[1] रामपादमुपासत[2] ॥ १० ॥**

**(भा.दी.) गज** इति । गजः, वृषभ इति आख्या यस्य स तथा, शलभः, तथा शरभश्च इत्येते पृथक्पृथक् कोटिसेनया युताः सन्तः श्रीरामस्य यः पादस्तं उपासत असेवन्त । आस उपवेशने लङ् ॥ १० ॥

**(सं.चं.)** गजश्च । 'गजश्च बलवान् वीरः कोटिभिस्तिसृभिर्वृतः' (३९.२६) इति साम्प्रतः पाठः ॥१०॥

**महान्तौ मैन्दविविदौ कोटीः सप्त दशाष्ट च ।**
**प्रकर्षन्तौ गतौ रामं रुमण्वान् कोटिसंवृतः ॥ ११ ॥**

**(भा.दी.) महे**ति । महान्तौ मैन्दविविदौ सप्तदश कोटीः अष्ट च ताः कोटीश्च प्रकर्षन्तौ सन्तौ श्रीरामं गतौ । रुमण्वान् रुमण्वन्नामकः कोटिसंवृतः सन् श्रीरामं गतः ॥ ११ ॥

**(सं.चं.)** महान्तौ मेन्दविविदौ कोटीः सप्तदशाष्ट च । पञ्चविंशतिकोटीः । साम्प्रतं तु रामायणे–'मैन्दश्च विविदश्चोभावश्विपुत्रौ महाबलौ । कोटिकोटिसहस्रेण वानराणामदृश्यताम्' (३९.२५) इति पठ्यते । 'कोटिसप्तदशाष्टभ्यः' इति प्राचीनपाठः स्यात् । रुमण्वान् कोटिसंवृतः । 'रुमण्वान् नाम विक्रान्तो वानरो वानरेश्वरम् । आययौ बलवांस्तूर्णं कोटीशतसमावृतः' (३९.२८) इति साम्प्रतः पाठः । 'कपिकोटिसमावृतः' इति प्राचीनपाठः स्यात् ॥ ११ ॥

**बृहस्पतिसमो नीत्या तारस्ताराधिपद्युतिः ।**
**वृतः कोटिसहस्रेण रामोपान्तमुपेयिवान् ॥ १२ ॥**

**(भा.दी.) बृहे**ति । नीत्या बृहस्पतिसमः, ताराधिपश्चन्द्रः, तद्वत् द्युतिर्यस्य स तथा तारः, कोटीनां सहस्रं तेन वृतः सन्, श्रीरामस्य उपान्तं समीपं तत् उपेयिवान् ॥ १२ ॥

**(सं.चं.)** बृहस्पतिसमः । 'तथाऽपरेण कोटीनां सहस्रेण समन्वितः । पिता रुमायाः सम्प्राप्तः सुग्रीव-श्वशुरो विभुः' (३९.१६) इति च । रामायणे पुनरपरश्च तारः पठ्यते– 'ततस्ताराद्युतिस्तारो हरिर्भीम-

१. **'कोटिवृताः'** २. **'रामपादमुपासते'**

पराक्रमः । पञ्चभिर्हरिकोटीभिर्दूरतः प्रत्यदृश्यत' (३९.३०) इति । प्रायः प्रक्षिप्तम् । अन्योऽयं तार इति व्याख्यतारः ॥ १२ ॥

**उपेन्द्रमापेन्द्रजानुः कपीनां पद्मकोटिभिः ।**
**वृतो दधिमुखः[१] प्राप देवं द्वादशकोटिभिः ॥ १३ ॥**

**(भा.दी.) उपे**ति । इन्द्रजानुः इन्द्रजानुनामकः, कपीनां पद्मानां कोटयस्ताभिः वृतः सन् देवं श्रीरामं आप । दधिमुखः द्वादश च ताः कोटयश्च ताभिः वृतः सन् देवं श्रीरामं प्राप ॥ १३ ॥

**(सं.चं.)** उपेन्द्रमापेन्द्रजानुः । 'इन्द्रजानुः कपिर्वीरो यूथपः प्रत्यदृश्यत । एकादशानां कोटीनामीश्वरस्तैश्च संवृतः' (३९.३२) इति साम्प्रतो रामायणपाठः । 'कोटीनां पद्मसङ्ख्यानाम्' इति प्राचीनपाठः स्यात् । वृतो दधिमुखः । 'ततो दधिमुखः श्रीमान् कोटिभिर्दशभिर्वृतः' (३९.३७) इति साम्प्रतः पाठः । 'कोटिद्वाद-शभिर्वृत्तः' इति प्राचीनपाठः स्यात् ॥ १३ ॥

**कपिखर्वसहस्रेण[२] कुमुदस्तममोदयत् ।**
**एकविंशतिकोटीभिरुदारश्च दरीमुखः ॥ १४ ॥**

**(भा.दी.) कपी**ति । कुमुदः कपीनां खर्वाणि सङ्ख्याविशेषास्तेषां यत्सहस्रं तेन तं श्रीरामं अमोदयत् । उदारः दानशूरः दरीमुखश्च दरीमुखनामको वानरः, एकविंशतयश्च ताः कोटयश्च ताभिः तं अमोदयत् ॥१४॥

**(सं.चं.)** कपिखर्वसहस्रेण । सम्प्रति कुमुदसेनासङ्ख्या रामायणे न पठ्यते । एकविंशतिकोटीभिः । 'दरी-मुखश्च बलवान् यूथपोऽभ्याययौ तदा । वृतः कोटिसहस्रेण सुग्रीवं समुपस्थितः' (३९.२४) इति साम्प्रतः पाठः । 'एकविंशतिकोटीभिः सुग्रीवं समुपस्थितः' इति प्राचीनपाठः स्यात् ॥ १४ ॥

**जाम्बवान् विनतो रम्भो भीमः सम्पातिनामकः ।**
**विजयश्च हरिस्तत्र वेगदर्शी महाहनुः ॥ १५ ॥**

**शरार्चिः शरगुल्मश्च सुहोत्रोल्कामुखौ तथा ।**
**ससङ्घाः[३] सङ्गताः सर्वे पुनरन्ये च वानराः ॥ १६ ॥**

---

१. **'दधिमुखः सुग्रीवमातुलः कपिः'** इति का.श्री. । २. **'कपिपद्मसहस्रेण'**

३. **'सङ्गताः सङ्घशः सर्वे'** इति, **'ससङ्घाः सहिताः सर्वे'** इति च ।

**(भा.दी.) जाम्बेति** । जाम्बवान्, विनतः तन्नामकः, रम्भः, भीमः, सम्पातिरिति नाम यस्य स तथा, विजयश्च विजयनामकश्च हरिः, कपिः, वेगदर्शी, महाहनुः, शरार्चिः, शरगुल्मश्च, तथा सुहोत्रश्च उल्कामुखश्च तौ, अन्ये सर्वे पुनः समस्ता एव वानराः । 'पुनरप्रथमे प्रश्ने व्यावृत्तावधारणे' इति च । सङ्घैः समूहैः सहिताः सन्तः श्रीरामसमीपे सङ्गताः मिलिताः आसन् ॥ १५–६ ॥

**(सं.चं.)** हरिरिति न नामान्तरम् । विजयाख्यश्च हरिः कपिः । सम्प्रति रामायणे नैतेऽत्र पठ्यन्ते । सर्व एते हनुमता सह दक्षिणां दिशमन्वेष्टुं गताः । अत्र जाम्बवानृक्षः । अन्ये कपयः ॥ १५–६ ॥

**एतैः सर्वैः परिवृतौ हनुमन्मिहिरात्मजौ ।**
**विश्वेश्वरमसेवेतां शम्भुशक्राविवामरैः ॥ १७ ॥**

**(भा.दी.) एतैरिति** । सर्वैः एतैः वानरैः परिवृतौ हनुमांश्च, मिहिरस्य सूर्यस्य आत्मजः सुग्रीवश्च तौ, अमरैः सह शम्भुशक्राविव ब्रह्मेन्द्राविव विश्वेश्वरं जगदीश्वरं श्रीरामं असेवेताम् । षेवृ सेवने लङ् ॥ १७ ॥

**(सं.चं.)** मिहिरात्मजः सूर्यात्मजः सुग्रीवः । 'मिहिरा वायुमेघार्काः' इति च । शम्भुः ब्रह्मा शिवो वा ॥

**आस्यतामिति तानुक्त्वा वन्दारून् वानरानथ ।**
**उवाच वाचं सुग्रीवः प्राञ्जलिः कञ्जलोचनम् ॥ १८ ॥**

**(भा.दी.) आस्यतामिति** । अथ सुग्रीवः वन्दारून् वन्दनशीलान् तान् आगतान् वानरान् आस्यतां स्थीयताम् इति उक्त्वा प्राञ्जलिः सन्, कञ्जे इव लोचने यस्य स तथा तं श्रीरामं वाचमुवाच ॥ १८ ॥

**(सं.चं.)** वन्दारूनभिवादकान् । कञ्जलोचनं कमलनयनं रामम् ॥ १८–९ ॥

**नियुज्यन्तां निजे कार्य्ये नाथ दासा अमी तव[1] ।**
**इत्युक्तो भगवानूचे त्वं नियुङ्क्ष्व हरीनिति ॥ १९ ॥**

**(भा.दी.) नियुज्यन्तामिति** । हे नाथ श्रीराम, हि यस्मात् अमी वानराः तव दासाः तस्मात् निजं स्वकीयं कार्यं सीतान्वेषणादिरूपं तस्मिन् नियुज्यन्तां आज्ञाप्यन्ताम् । युजिर् योगे लोट् । इति उक्तः भगवान् श्रीरामः

१. **'दासा ह्यमी तव'** इति वि.ती.पाठः ।

हरीन् कपीन् त्वं नियुङ्क्ष्व आज्ञापय, युजिर् योगे लोट्, इति ऊचे। भगवानित्यनेन सर्वसमर्थस्य ममैतेषामपेक्षा नास्त्येव । त्वत्कर्तव्यसेवार्थं त्वयैव नियोज्या इत्यर्थः (सूचितः) ॥ १९ ॥

**चतसृष्वप्यथो दिक्षु वानरान् वानराधिपः ।**
**विचेतुं तां सरोजाक्षीं वीरान् सन्दिदिशे क्रमात् ॥ २० ॥**

**(भा.दी.) चतसृष्विति** । अथो वानराधिपः सुग्रीवः, चतसृष्वपि दिक्षु, सरोजवदक्षिणी यस्याः सा तथा तां सीतां विचेतुं मार्गयितुम्, वीरान् वानरान् क्रमात् पूर्वादिर्यो दिक्क्रमस्तस्मात् सन्दिदिशे । दिश अतिसर्जने लिट् ॥ २० ॥

**(सं.चं.)** सरोजाक्षीं सीताम् । क्रमात् पूर्वादिक्रममनुसृत्य ॥ २०–५ ॥

**विनत त्वं हरिगणैः[१] साकमैन्द्रीं दिशं व्रज ।**
**मृग्यतां तत्र वैदेही त्वं हि मे सचिवः सदा ॥ २१ ॥**

**(भा.दी.) विनतेति** । हे विनत विनतनामक, त्वं हरीणां कपीनां गणास्तैः साकम्, ऐन्द्रीं शरावतीनद्याः सकाशं पूर्वां दिशं व्रज । तत्र पूर्वस्यां दिशि वैदेही मृग्यताम् । मृग अन्वेषणे लोट् । त्वं मे सदा सचिवो हि आप्तामात्यो हि ॥ २१ ॥

**यमुनोपवनं गत्वा यामुनं च महागिरिम्[२] ।**
**सीता विचीयतां गङ्गां सरयूं कौशिकीं तथा ॥ २२ ॥**

**(भा.दी.) यमुनेति** । यमुनाया यदुपवनं तत् । यमुनायाः सम्बन्धी यामुनस्तम्, अत एव यामुनाख्यं महागिरिं च गङ्गां तथा सरयूं कौशिकीं कौशिकाख्यां[३] नदीं च गत्वा सीता विचीयतां विचार्यताम् ॥ २२ ॥

**नर्म्मदां च नदं शोणं कावेरीं गोमतीमपि ।**
**पूर्वां सरस्वतीं भूयो मागधान् काशिकोसलान्[४] ॥ २३ ॥**

---

१. **'कपिगणैः'**
२. **'यामुनाख्यं महागिरिम्'** इति वि.ती.पाठः स्यात् ।
३. **'कौशिकाख्यनदीं च'**
४. **'काश्यकोसलान्'** इति वि.ती.पाठः ।

**(भा.दी.) नर्मदामि**ति। नर्मदां च, शोणः शोणाख्यनदस्तं नदं च, कावेरीमुत्तरकावेरीम्, अरण्यपर्वण्युत्तर-कावेरी च प्रसिद्धा, गोमतीमपि। पूर्वां सरस्वतीं गत्वा मागधान् मगधविषयान्, काश्याः काशीविषयास्ते च कोसलाश्च तान् गत्वा भूयः बहुवारं सीता विचीयताम् ॥ २३ ॥

**विदेहानथ[1] पुण्ड्राद्यांस्तिमिं च रजताकरम्।**
**मन्दरं तदधिष्ठानं किरातानां च मन्दिरम् ॥ २४ ॥**

**स्वर्ण्णाकरं स्वर्ण्णरूप्यं गत्वा सीता विमृग्यताम्।**
**जम्बूद्वीपमतिक्रम्य शिशिरं गिरिपुङ्गवम् ॥ २५ ॥**

**द्वीपानन्यानपि प्राप्य देवदेवी विमृग्यताम्।**
**आगम्यतां च मासान्ते[2] [3]सर्वैर्दण्डोऽन्यथा भवेत् ॥ २६ ॥**

**(भा.दी.) विदेहानि**ति। अथ विदेहान् विदेहविषयान्, पुण्ड्रा पुण्ड्राख्यविषयाः आद्या येषां ते तथा तान्, तिमिः, तिमिनामकपर्वतस्तं च, रजताकरं रजताकरनामकगिरिम्,..[4] स्वर्णरूप्यं स्वर्णरूप्याख्यगिरिं गत्वा सीता विमृग्यतां विचार्यताम्। **जम्ब्वि**ति। जम्ब्वाख्यो द्वीपो जम्बूद्वीपस्तं अतिक्रम्य, गिरिषु पुङ्गवः श्रेष्ठस्तं शिशिरं शिशिरनामानं गिरिं प्राप्य, अन्यानपि प्लक्षादिद्वीपान् प्राप्य, देवस्य क्रीडादिगुणवतः श्रीरामस्य देवी महिषी सीता विमृग्यताम्। **आगम्यतामि**ति। सर्वैः वानरैः मासस्यान्तोऽवसानं तस्मिन्, 'मासात् प्राक्' इति क्वचित् पाठः, आगम्यताम्। अन्यथा मासात्प्रागनागते दण्डः शिक्षा वधलक्षणशिक्षा भवेत् ॥ २४–६ ॥

**(सं.चं.)** यमुनोपवनमित्यादि। रजताकरं रजतोत्पत्तिस्थानं तिमिनामकं च पर्वतम्। 'नदीं भागीरथीं रम्यां सरयूं कौशिकीं तथा। कालिन्दीं यमुनां रम्यां यामुनं च महागिरिम्। सरस्वतीं च सिन्धुं च शोणं मणि-निभोदकम्। महीं कालमहीं चैव शैलकाननशोभिताम्। ब्रह्ममालान् विदेहांश्च मालवान् काशिकोसलान्। मागधांश्च महाग्रामान् पुण्ड्रान् वङ्गांस्तथैव च। पत्तनं कोशकाराणां भूमिं च रजताकराम्। सर्वमेतद् विचेतव्यं मार्गयद्भिस्ततस्ततः' (४०.२०–४) इति च। सङ्ग्रहवचनानुसारेण–'पट्टनं च किरातानां तिमिं च रजताकरम्'

---

१. **'पौण्ड्राद्यांस्तिमिम्'** इति, **'विदेहानपि पुण्ड्राद्यांस्तिमिम्'** इति च क्वचित्।
२. **'मासात्प्राक्'**
३. **'सर्वैर्दण्ड्योऽन्यथा'**
४. अत्र वाक्यं लुप्तम्। **'स्वर्णाकरं स्वर्णाकराख्यगिरिम्'** इति स्यात्।

इति रामायणपाठः स्यात् । तदधिष्ठानं मन्दरगतं किरातानां मन्दिरम् । कथमथ पूर्वादिविभागः? हिमाचलविन्ध्ययोर्मध्यगतस्य आर्यावर्तस्यापेक्षया प्राच्यादिविभागो विवक्षित इति सम्प्रदायविदः । अतः कावेरी च विन्ध्योत्तरवाहिन्येव काचिन्नदी विवक्षिता । गोमती अयोध्यापरिसरवाहिनी । पूर्वा सरस्वती प्रयागपरिसरवाहिनी । याऽद्य गुप्तवाहिनी जाता । रजताकरं तिमिं नाम देशविशेषम् । 'भूमिं च रजताकराम्' इत्येव वा पाठः स्यात् । रजतस्याऽकरमधिष्ठानं मन्दरं नामाचलम् । प्राग्ज्योतिषप्रान्ते किरातानां च मन्दिरम् । स्वर्णाकरं स्वर्णरूप्यं च गिरिप्रभेदनम् । गिरिपुङ्गवं शिशिरं चातिक्रम्य । देवस्य रामस्य देवी विमृग्यतामन्विष्यताम् । अन्यथाऽनागमने दण्डः शिक्षा भवेत् ॥ २२–६ ॥

**दक्षिणां हनुमन् गत्वा दक्षस्त्वं पश्य जानकीम् ।**
**गुरुः सखा च सचिवः शरणं च भवान् हि मे ॥ २७ ॥**

**(भा.दी.) दक्षिणामि**ति । दक्षः समर्थः, हनुमन्, त्वं शरावतीनद्याः दक्षिणां दिशं गत्वा जानकीं पश्य । त्वमन्यसाधारणो न भवसीत्याह– **गुरुरि**ति । हि यस्मात् भवान् मे गुरुः, सखा च, सचिवः मन्त्री च, शरणं रक्षकश्च ॥ २७ ॥

**(सं.चं.)** दक्षिणा हि रावणस्य दिक् । यत्र लङ्का । अतस्तत्र हनुमन्तं प्रेषयन्नाह– दक्षस्त्वं पश्य जानकीम् ॥ २७ ॥

**अङ्गदाद्या इमे वीरास्त्वामन्वायान्तु [1]नायकम् ।**
**मुख्यप्राणमिवाक्षाणि[2] त्वयि भारः समाहितः ॥ २८ ॥**

**(भा.दी.) अङ्गदे**ति । अङ्गद आद्यो येषां ते तथा इमे वीराः जाम्बवत्प्रभृतयः, नायकं स्वामिनं त्वाम्, अक्षाणि इन्द्रियाणि मुख्यप्राणमिव अन्वायान्तु अनुसृत्य यान्तु । यथा शरीरे मुख्यप्राणे सति चक्षुरादीन्द्रियाणि तिष्ठन्ति तद्गमने च देहान्निःसरन्ति तद्वदेव तेऽप्यनुयान्त्वित्यर्थः । या प्रापणे लोट् । भारः कार्यसिद्धिलक्षणभारः त्वयि समाहितः संस्थितः । अन्ये तु वानराः राजनीत्यर्थं तत्रतत्र प्रेषिता इत्यर्थः । श्रीरामकार्यं तु त्वयैव साधनीयमिति भावः ॥ २८ ॥

**(सं.चं.)** अक्षाणि सर्वेन्द्रियाणि । यद्यप्यन्येऽपि बहवोऽन्यत्रान्यत्र प्रेषिताः । तथाऽपि त्वयि भारः समाहितः ॥ २८ ॥

---

१. **'–मन्वायान्ति नायकम्'**

२. **'अक्षाणि चक्षुरादीन्द्रियाभिमानिनो देवाः'** इति का.श्री. ।

**यदि मे प्राणगोप्ताऽसि रामदासाग्रणीर्य्यदि ।**
**रावणस्याऽलयं [१]ज्ञात्वा सीतां चाऽगच्छ राघवम् ॥ २९ ॥**

**(भा.दी.)** कर्तव्यं निवेदयति– **यदी**ति । त्वं यदि मे प्राणानां गोप्ता असि, यदि श्रीरामदासेषु अग्रणीः श्रेष्ठः असि, तर्हि रावणस्य आलय आवासस्तं ज्ञात्वा, एतावद् दूरमस्तीति विज्ञाय, सीतां च तत्र ज्ञात्वा श्रीराघवं प्रति आगच्छ ॥ २९ ॥

**(सं.चं.)** प्रथमं रावणस्याऽलयं ज्ञात्वा तत्र सीतां च ज्ञात्वा ॥ २९ ॥

**चतुर्द्दशसु लोकेषु दशस्वपि हि दिक्षु ते ।**
**गतिर्न्न विहता क्वापि वायुनन्दन वायुवत्[२] ॥ ३० ॥**

**(भा.दी.)** **चतुरि**ति । हे वायुनन्दन हनुमन्, ते गतिः गमनम्, चत्वार अधिका दश चतुर्दश तेषु लोकेषु, दशसु दिक्ष्वपि, क्वापि देशे काले वा वायुवत् विहता प्रतिबद्धा न ॥ ३० ॥

**(सं.चं.)** गतिर्न विहता क्वापि । 'न भूमौ नान्तरिक्षे वा नाम्बरे नामरालये । नाप्सु वा गतिभङ्गं ते पश्यामि हरिपुङ्गव । सासुराः सहगन्धर्वाः सनागनरदेवताः । विदिताः सर्वलोकास्ते ससागरधराधराः । गतिर्वेगश्च तेजश्च लाघवं च महाकपे । पितुस्ते सदृशं वीर मारुतस्य महौजसः । तेजसा वाऽपि ते भूतं न समं भुवि विद्यते । तद् यथा लभ्यते सीता तत् त्वमेवानुचिन्तय । त्वय्येव हनुमन्नस्ति बलं बुद्धिः पराक्रमः । देशकालानुवृत्तिश्च नयश्च नयपण्डित' (४४.३–७) इति च ॥ ३० ॥

**[३]सहस्रशिखरं विन्ध्यमतिदुर्ग्गं जगत्त्रये ।**
**नर्म्मदाद्या नदीर्ग्गत्वा तत्र सीता विमृग्यताम् ॥ ३१ ॥**

**(भा.दी.)** **सहस्रे**ति । जगतां यत्त्रयं तस्मिन् अतिदुर्गं अत्यन्तं गन्तुमशक्यम्, सहस्रसङ्ख्यानि शिखराणि यस्मिन् स तथा तम्, विन्ध्यं विन्ध्यगिरिं गत्वा, नर्मदा आद्या यासां तास्तथा ताः नदीः गत्वा, तत्र नदीषु सीता विमृग्यताम् ॥ ३१ ॥

---

१. 'रावणस्याऽलये ज्ञात्वा' २. 'वायुवद् वायुनन्दन'

३. 'सहस्रशिरसम्'

**कलिङ्गाद्यांश्च विषयान् दण्डकारण्यमुद्धणम्[१] ।**
**गोदावरीं च कावेरीं सागस्त्यं मलयाचलम् ॥ ३२ ॥**

**अगस्त्यमाश्रमगतं[२] नत्वा तस्याभ्यनुज्ञया[३] ।**
**अतीत्य सिन्धून् द्वीपांश्च गत्वा सीता विमृग्यताम् ॥ ३३ ॥**

**(भा.दी.) कलिङ्गे**ति । कलिङ्गा आद्या येषां ते तथा तान् विषयान्, उद्धणं भयङ्करं दण्डकारण्यं च, गोदावरीं च कावेरीम्, अगस्त्येन सहितः सागस्त्यस्तं मलयाचलं च गत्वा, आश्रमं गत आश्रमगतस्तं पुलस्त्यं नत्वा, तस्य पुलस्त्यस्य अभ्यनुज्ञया सिन्धून् समुद्रान् द्वीपांश्च जम्बुप्लक्षादिद्वीपांश्च अतीत्य सीता विमृग्यताम् । मृग अन्वेषणे लोट् ॥ ३२–३ ॥

**(सं.चं.)** सहस्रशिरसम् । 'सहस्रशिरसं विन्ध्यं नानाद्रुमलतायुतम् । नर्मदां च नदीं दुर्गां महोरगनिषेविताम्' (४१.८) इति, 'अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम् । नदीं गोदावरीं चैव सर्वमेवानुपश्यत' (४१.१२) इति, 'ततस्तामापगां दिव्यां प्रसन्नसलिलां शिवाम् । तत्र द्रक्ष्यथ कावेरीं विहृतामप्सरोगणैः । तत्राऽ-सीनं नगस्याग्रे मलयस्य महौजसम् । द्रक्ष्यथाऽदित्यसङ्काशमगस्त्यमृषिसत्तमम् । ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना । ताम्रपर्णीं ग्राहजुष्टां तरिष्यथ महानदीम्' (४१.१४–७) इत्यादि च । 'अगस्त्यमा-श्रमगतम्' इत्यत्र 'पुलस्त्यामाश्रमगतम्' इति पठन्ति, तद् रामायणाननुगुणमिति भाति । मृग्यं भवति मूलम् ॥ ३१–३ ॥

**भवता श्वशुरेदानीं सुषेण वरुणोपम ।**
**कर्त्तव्यं बन्धुकृत्यं नः पश्चिमा गम्यतां हरित् ॥ ३४ ॥**

**(भा.दी.) भवते**ति । वरुणस्य उपमा यस्य स तथा तत्सम्बुद्धिः, श्वशुर मातुल(?), हे सुषेण, भवता नः बन्धुकृत्यम्, बन्धुभूतस्य श्रीरामस्य कृत्यं कार्यं यतः कर्तव्यं तस्मात् । इदानीं पश्चिमा शरावतीनद्याः पश्चिमा (हरित्) दिक् गम्यताम् । बन्धुभूतानामस्माकं कृत्यं बन्धुकृत्यमिति वा विग्रहः ॥ ३४ ॥

---

१. **'–रण्यमुल्बणम्'**
२. **'पुलस्त्यमाश्रमगतम्'** इति वि.ती.पाठ उपलब्धः । का.श्री.टीकायामपि तथा ।
३. **'नत्वाऽथ तदनुज्ञया'**

**(सं.चं.)** वरुणावतारत्वाद् वरुणोपमः सुषेणः । नः बन्धुकृत्यं त्वया कर्तव्यम् । बन्धुतानिबन्धनं कृत्यं बन्धुकृत्यम् । श्वशुरेण जामातुः कृत्यं निर्वोढव्यमित्येतत् । नः सर्वेषां बन्धो रामस्य कृत्यं वा । हरित् दिक् ॥ ३४ ॥

**युक्तेन कपिलक्षाभ्यां गत्वागत्वा विचीयताम्[1] ।**
**सीता रावणगेहं च[2] सम्यगेवाधुना त्वया ॥ ३५ ॥**

**(भा.दी.) युक्तेने**ति । (अधुना) कपीनां लक्षे ताभ्यां युक्तेन त्वया तत्तद्देशान् गत्वा सीता रावणगेहं रावणमन्दिरं तच्च (सम्यगेव) विचीयतां विमृग्यताम् । चिञ् चयने लोट् । तत्तद्देशान् विमृग्य इदं रावणगृहं अत्र च सीता तिष्ठतीति निश्चयः कर्तव्य इत्यर्थः ॥ ३५ ॥

**(सं.चं.)** युक्तेन कपिलक्षाभ्याम् । 'द्वाभ्यां शतसहस्राभ्यां कपीनां कपिसत्तमाः । सुषेणप्रमुखा यूयं वैदेहीं परिमार्गथ' (४२.६) इति च । सीता रावणगेहं च । 'तत्र सीतां च मार्गध्वं निलयं रावणस्य च' (४२.१२) इति च बहुनिलयो हि रावणः । तेन पश्चिमायामपि दिशि स्यात् । यद्यस्ति तत्र गत्वा विचीयताम् ॥ ३५ ॥

**बाह्लीकादीन् केकयादीन् विषयान् पट्टनानि च[3] ।**
**नानावनानि सरितः समुद्रोपान्तपर्वतान् ॥ ३६ ॥**

**(भा.दी.) बाह्लीके**ति । बाह्लीकाः बाह्लीकविषयाः आदयो येषां ते तथा तान्, केकया आदयो येषां ते तथा तान् विषयान्, पत्तनानि च नगराणि च, नानावनानि सरितः समुद्रोपान्ताश्च पर्वताश्च तान्, समुद्रोपान्तविद्यमानपर्वतांश्च गत्वा सीता विचीयतामिति सम्बन्धः ॥ ३६ ॥

**(सं.चं.)** बाह्लीकादीन् । 'सुराष्ट्रान् सहबाह्लीकान् शूरान् भीमांस्तथैव च' (४२.६) इति, 'राष्ट्राणि च विशालानि पट्टनानि ततस्ततः । सिन्धुसागरयोश्चैव सङ्गमे तत्र पर्वतः' (४२.१४) इत्यादि च ॥ ३६ ॥

**अपि पञ्चनदं तीर्त्थं[4] काश्मीरं प्राप्य[5] मृग्यताम् ।**
**गान्धारविषयं गत्वा पारियात्रं च पर्वतम् ॥ ३७ ॥**

---

१. **विमृग्यताम्'** २. **'रावणगेहे च'** । **'रावणेगेहं च गोकर्णक्षेत्रे मारीचाश्रमे विद्यमानिमिति भाति'** इति का.श्री. ।
३. **'पत्तनानि च'** इति वि.ती.पाठः स्यात् । ४. **पञ्चनदीतीर्थम्'** इति वि.ती.पाठः स्यात् । ५. **'चाऽप्य'**

**(भा.दी.) अपी**ति । पञ्चनदीनां यत्तीर्थं तत्, काश्मीरं काश्मीरदेशस्तदपि प्राप्य, गान्धाराणां विषयस्तं पारियात्रं पारियात्रनामकं पर्वतं च गत्वा सीता विमृग्यताम् ॥ ३७ ॥

**(सं.चं.)** अपि पञ्चनदं तीर्थं काश्मीरम् । नेदं सम्प्रति रामायणे पठ्यते । 'कोटिं तत्र समुद्रे तु काञ्चनीं शतयोजनाम् । दुर्दर्शां पारियात्रस्य गत्वा द्रक्ष्यथ वानराः' (४२.१९-२०) इति च ॥ ३७ ॥

**चक्रवन्तं गिरिं यत्र चक्रं विष्णोर्विनिर्म्मितम् ।**
**तं च देशं समुद्रान्ते पाञ्चजन्यो यतोऽभवत् ॥ ३८ ॥**

**(भा.दी.) चक्रे**ति । यत्र पर्वते विष्णोश्चक्रं विनिर्मितम्, विश्वकर्मणेति शेषः, तं चक्रवन्तं गिरिं प्राप्य, यतः प्रदेशात् पाञ्चजन्यः पाञ्चजन्याख्यः शङ्खः अभवत्, समुद्रान्तः समुद्रमध्यं तस्मिन् विद्यमानं तं च देशं गत्वा सीता विमृग्यताम् ॥ ३८ ॥

**(सं.चं.)** चक्रवन्तं गिरिम् । 'चतुर्भागे समुद्रस्य चक्रवान्नाम पर्वतः । तत्र चक्रं सहस्रारं निर्मितं विश्वकर्मणा । तत्र पञ्चजनं हत्वा हयग्रीवं च दानवम् । आजहार ततश्चक्रं शङ्खं च पुरुषोत्तमः' (४२.२७–८) इति च ॥ ३८ ॥

**परीतं बहुभिर्दुर्गैः[1] प्राप्य प्राग्ज्योतिषं पुरम् ।**
**सुमेघादीन् गिरीन् गत्वा[2] द्वीपानन्यांश्च मृग्यताम्[3] ॥ ३९ ॥**

**(भा.दी.) परीतमि**ति । बहुभिः दुर्गा राष्ट्राणि तैः, वनैरिति वा, दुर्गप्रदेशैरिति वा, 'दुर्गो राष्ट्रे वने दुर्गं दुर्गमे नरके पुरे' इति वैजयन्ती, परीतं परिवृतम्, प्राग्ज्योतिषं प्राग्ज्योतिषनामकं तत् पुरं प्राप्य, सुमेघः सुमेघनामकगिरिरादिर्येषां ते तथा तान् गिरींश्च प्राप्य, अन्यान् प्लक्षादिद्वीपांश्च गत्वा सीता विमृग्यताम् । अन्यान् द्वीपांश्चेत्यनेन तत्रतत्र गन्तुं तेषामनुकूलाः परिचिताः मार्गाः सन्ति । न तु तावद्दूरप्लवनम् । तथात्वे वक्ष्यमाणशक्तितारतम्यकथनविरोधात् । न चान्यान् द्वीपानित्यादौ प्लक्षादिसप्तद्वीपान् विहाय समीपवर्तिनामन्येषां ग्रहणं किन्न स्यादिति वाच्यम् । तथा सति 'पयोब्धिवेलानिलयास्तमालवनवासिनः'[4] इत्युक्ति-

---

१. **'बहुभिर्दुर्गैस्तथा प्राग्ज्योतिषम्'** २. **'गिरीन् प्राप्य'**

३. **'तत्रतत्र तेषामनुकूलः परिचिता मार्गाः सन्ति । नतु प्लवनादिना गमनम् । अन्यथोत्तरत्र लङ्कां प्रति गमने शक्त्यभावकथनविरोधः स्यात् । अत इमामाशङ्कां परिहर्तुं पूर्वमेव ग्रन्थकारः 'मार्गज्ञैः' इत्युक्तवान् । तस्मादन्यद्वीपगमनमपि तेषां युक्तमिति'** इति वि.भू । एतान्येव वाक्यानि का.श्री. टीकायामपि पठ्यन्ते ।

४. **'–तमालवनगन्धिनः'** इति पूर्वत्र (६.५१) पठितः पाठः ।

विरोधात् । न च तथा सति मार्गज्ञैः सर्वैर्वानरैः हनुमता सह लङ्कां कुतो न गतमिति वाच्यम् । लङ्कामार्गाणां प्रतिरुद्धत्वात् । अत एवोत्तरत्राङ्गदवचनं 'मार्गाः सर्वेऽपि सार्गळाः' (८.२) इति । तस्मात् प्लक्षादिद्वीपगमनं तेषां युक्तमेव ॥ ३९ ॥

**(सं.चं.)** परीतम् । 'तत्र प्राग्ज्योतिषं नाम जातरूपमयं पुरम् । यस्मिन् वसति दुष्टात्मा नरको नाम दानवः' (४२.३१) इति, 'यस्मिन् हरिहयः श्रीमान् महेन्द्रः पाकशासनः । अभिषिक्तः सुरै राजा सुमेघो नाम पर्वतः' (४२.३५) इति च ॥ ३९ ॥

**त्वया शतवले सार्द्धं त्रिभिर्वैवस्वतात्मजैः ।**
**देवी मृग्योत्तराशायां गत्वाऽन्यैरपि वानरैः ॥ ४० ॥**

**(भा.दी.)** **त्वयेति** । हे शतवले वानर, त्वया त्रिभिः वैवस्वतस्य यमस्याऽत्मजैः पुत्रैः कपिभिः सार्धम्, अन्यैः वानरैरपि सार्धं गत्वा उत्तराशायां शरावत्या उत्तरदिशि देवी मृग्या ॥ ४० ॥

**(सं.चं.)** त्वया शतवले । 'वृतः शतसहस्रेण त्वद्विधानां वनौकसाम् । वैवस्वतसुतैः सार्धं प्रतिष्ठस्व स्वमन्त्रिभिः' (४३.३) इति च । पण्डिताचार्यवचनानुसारेण 'पस्थितो मन्त्रिभिस्त्रिभिः' इत्यपि रामायणपाठः स्यात् ॥ ४० ॥

**मत्स्यादीञ्छूरसेनादीन् विषयाग्र्यान् कुरूनपि ।**
**मद्रकादीन् हिमाद्रिं च गत्वा सीता विमृग्यताम् ॥ ४१ ॥**

**(भा.दी.)** **मत्स्येति** । मत्स्या मत्स्यविषया आदयो येषां ते तथा तान्, शूरसेना शूरसेनाविषया आदयो येषां ते तथा तान्, विषयेषु देशेषु अग्र्यान् कुरूनपि कुरुविषयानपि, मद्रका आदयो येषां ते तथा तान्, तानपि हिमाद्रिः हिमवत्पर्वतस्तं च गत्वा सीता विमृग्यताम् ॥ ४१ ॥

**(सं.चं.)** मत्स्यादीन् । 'तत्र म्लेच्छान् पुलिन्दांश्च शूरसेनांस्तथैव च । प्रस्थलान् भरतांश्चैव कुरूंश्च सह मद्रकैः' (४३.११) इति च ॥ ४१ ॥

**भृगुतुण्डं काळगिरिं तथा ताम्राकरं[१] गिरिम् ।**
**सुदर्शनं देवसखं[२] कैलासमलकापुरीम्[३] ॥ ४२ ॥**

---

१. **'ताम्रातकं गिरिम्'** २. **देवसभम्'** इति. वि.ती. पाठः स्यात् । **'देवसभाम्'** इति क्वचित् । ३. **'-मलकां पुरीम्'**

**(भा.दी.) भृग्विति** । भृगुतुण्डं भृगुतुण्डगिरिम्, काळगिरिम्, तथा (ताम्रात)कनामकगिरिम्,[१] सुद-र्शनः सुदर्शननामकगिरिस्तम्, देवसभं देवसभनामकगिरिस्तम्, कैलासं अलकापुरीं च गत्वा सीता विमृग्यताम् ॥ ४२ ॥

**(सं.चं.)** भृगुतुण्डम् । 'कालं नाम महासानुं पर्वतं तं गमिष्यथ' (४३.१४) इति, 'ततः सुदर्शनं नाम पर्वतं गन्तुमर्हथ' (४३.१६) इति, 'ततो देवसखो नाम पर्वतः पतगालयः' (४३.१७) इति, 'कैलासं पाण्डुरं प्राप्य हृष्टा यूयं भविष्यथ । तत्र पाण्डुरमेघाभं जाम्बूनदपरिष्कृतम् । कुबेरभवनं रम्यं निर्मितं विश्वकर्मणा' (४३.२०–१) इति च ॥ ४२ ॥

**अद्रिं त्रिशिखरं क्रौञ्चं मैनाकं गन्धमादनम् ।**
**द्वीपानन्यानपि[२] प्राप्य रामरामा विमृग्यताम् ॥ ४३ ॥**

**(भा.दी.) अद्रिमिति** । त्रीणि शिखराणि यस्मिन् स तथा तम्, अत एव तन्नामानं गिरिम्[३], क्रोञ्चः क्रौञ्चगिरिस्तम्, मैनाकं मैनाकनामानं गिरिम्, अयमपि समुद्रनिमग्नादन्यः, गन्धमादनं च प्राप्य, अन्यान् द्वीपानपि प्राप्य रामरामा श्रीरामस्य स्त्री सीता विमृग्यताम् ॥ ४३ ॥

**(सं.चं.)** अद्रिं त्रिशिखरं क्रौञ्चम् । रामायणे 'क्रौञ्चस्य शिखरं चापि निरीक्ष्य च ततस्ततः' (४३.२८) इति पठ्यते । 'क्रौञ्चं त्रिशिखरं चाद्रिम्' इति प्राचीनः पाठः स्यात् । 'क्रौञ्चं तु गिरिमासाद्य बिलं तस्य सुदुर्गमम् । अप्रमत्तैः प्रवेष्टव्यं दुष्प्रवेशं हि तत् स्मृतम्' (४३.२५) इति, 'क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः' (४३.२९) इत्यादि च । रामस्य रामा सीता विमृग्यताम् ॥ ४३ ॥

**आगम्यतां च मासात् प्राक् सर्वैर्दण्डोऽन्यथा[४] भवेत् ।**
**सीतां वीक्षेत यो दक्षः स मे राज्यार्द्धमर्हति ॥ ४४ ॥**

**(भा.दी.) आगेति** । सर्वैः मासो मासकालस्तस्मात् प्राक् आगम्यताम् । अन्यथा दण्डः शिक्षा भवेत् । यः दक्षः समर्थः कपिः सीतां वीक्षेत सः वानरः मे राज्यस्य यदर्धं तत् अर्हति प्राप्तुं योग्यो भवति । अर्ह पूजायां लट् ॥ ४४ ॥

---

१. **'रम्यकनामकगिरिम्'** (?) इति सर्वत्र पाठ उपलभ्यते ।
२. **'द्वीपानन्यानथ प्राप्य'**
३. एतेन–**'गिरिं त्रिशिखरम्'** इत्यपि टीकासम्मतः पाठः स्यादिति भाति ।
४. **'सर्वैर्दण्ड्योऽन्यथा'**

**(सं.चं.)** सीतां वीक्षेत । 'यस्तु मासान्निवृत्तोऽग्रे सीता दृष्टेति वक्ष्यति । मत्तुल्यविभवो भोगैः सुखं स विहरिष्यति' (४१.४७) इति च ॥ ४४–५ ॥

**क्षेत्रेषु तत्रतत्रापि मुनीन् नमत पृच्छत ।**
**सीतायाः पदवीमन्यानपि जन्तून् पदेपदे ॥ ४५ ॥**

**(भा.दी.)** अन्वेषणोपायमुपदिशति–**क्षेत्रेष्विति** । तत्रतत्र विद्यमानानि यानि क्षेत्राणि तेषु मुनीन् नमत । सीतायाः पदवीं मार्गम्, सीता अनेन मार्गेण केनापि नीता किमित्येवं रूपेणेत्यर्थः, पृच्छत प्रश्नं कुरुत । अन्यान् जन्तूनपि, पदेपदे प्रतिपादप्रक्षेपमित्यर्थः, पृच्छतेति सम्बन्धः ॥ ४५ ॥

**दिशिदिश्येवमादिश्य प्रेषयामास शीघ्रगान् ।**
**बाढमित्युद्धतान् वीरान्[1] वानरान् वानराधिपः ॥ ४६ ॥**

**(भा.दी.)** **दिशी**ति । वानराधिपः सुग्रीवः दिशिदिशि एवं आदिश्य बाढमिति तथाऽस्त्विति उक्त्वा उद्धतान् अभिवृद्धान् शीघ्रगान् धीरान् वानरान् प्रेषयामास ॥ ४६ ॥

**(सं.चं.)** बाढमङ्गीकृतं त्वच्छासनमित्यभिधाय प्रस्थितान् ॥ ४६–८ ॥

**विनते गतवत्यैन्द्रीं सुषेणे पश्चिमामपि ।**
**उत्तराशां शतवलौ रामो मारुतिमब्रवीत् ॥ ४७ ॥**

**(भा.दी.)** **विनत** इति । विनते ऐन्द्रीं पूर्वां दिशं गतवति सति, सुषेणे च पश्चिमां दिशं गतवति सति, शतवलौ उत्तराशां उत्तरदिशं गतवति सति, श्रीरामः मारुतस्यापत्यं पुमान् मारुतिस्तं हनुमन्तं प्रति अब्रवीत् ॥ ४७ ॥

**तात कार्य्यमिदं कर्त्तुं त्वं प्रभुर्न्नापरे[2] क्वचित् ।**
**विहाय के[3] श्रीवराहमुद्धरेयुर्वसुन्धराम् ॥ ४८ ॥**

---

१. **'धीरान्'** इति वि.ती.पाठः स्यात् । २. **'प्रभुर्नापरः क्वचित्'** इति वि.ती.पाठः ।

३. **'के उदके हिरण्याक्षेण मज्जितां वसुन्धरां भूमिं श्रीवराहं विना के वा उद्धरेयुः'** इति का.श्री. ।

**(भा.दी.) तातेति** । हे तात, इदं सीतान्वेषणाख्यं कार्यं कर्तुं त्वं प्रभुः समर्थः । अपरः कश्चित् न । श्रीवराहं विहाय के पुरुषाः वसुन्धरां भुवं उद्धरेयुः ॥ ४८ ॥

**तस्मादेतैरुपेतस्त्वं गच्छ दक्षिण दक्षिणाम् ।**
**देहि देव्यै मदीयं त्वं प्रत्ययायाङ्गुलीयकम् ॥ ४९ ॥**

**(भा.दी.) तस्मादिति** । तस्मात् अन्यासाध्यत्वात् हे दक्षिण समर्थ, हे हनुमन्, त्वं एतैः अङ्गदादिभिः उपेतः सन् दक्षिणां दिशं गच्छ । देव्यै मदीयं अङ्गलीयकं अङ्गुलिमुद्रा तत्, प्रत्ययाय विश्वासहेतवे, 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः, देहि ॥ ४९ ॥

**(सं.चं.)** दक्षिणो विदग्धः । त्वं गच्छ, त्वं देहि इति तात्पर्याद् द्विरुक्तिः । अथ 'मदीयं तु' इत्यपि मूलपाठः स्यात् ॥ ४९ ॥

**इत्युक्त्वा स ददौ दीप्तं रत्नभासाऽङ्गुलीयकम् ।**
**मानितं मानसस्येव मण्डलं बालभानुना ॥ ५० ॥**

**(भा.दी.) इतीति** । सः श्रीरामः इति उक्त्वा, रत्नस्य भास्तया दीप्तम्, बालो यो भानुः सूर्यस्तेन मानसं मानससरोवरं तस्य मण्डलमिव मानितम्, श्रीरामेणेति शेषः, अङ्गुलीयकं अदात् ॥ ५० ॥

**(सं.चं.)** रत्नभासा दीप्तम् । अत एव बालसूर्येण मानितं भासितं मानससरोमण्डलमिव ॥ ५० ॥

**अञ्जलिभ्यां[१] तदादाय प्राञ्जलिः सोऽञ्जनासुतः ।**
**ओमित्युक्त्वा ययौ याम्यां तारजाम्बवदादिभिः ॥ ५१ ॥**

**(भा.दी.) अञ्जलीति** । अञ्जनासुतः सः प्राञ्जलिः सन्, ओमिति तथाऽस्त्विति उक्त्वा, तत् अङ्गुलीयकं अञ्जली हस्तौ ताभ्यां आदाय, तारश्च जाम्बवांश्च तौ आदी येषां ते तथा तैः वानरैः सह याम्यां दिशं प्रायात् ॥ ५१ ॥

**(सं.चं.)** अञ्जलिभ्यां अञ्जलिबद्धाभ्यां करपुटाभ्याम् ॥ ५१–२ ॥

---

१. **'यद्यपि 'पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान्' इत्यमरोक्त्या निकुब्जौ पाणी मिलितावञ्जलिरुच्यते । तथाऽपि विकुब्जपाण्योः प्रत्येकमञ्जलित्वविवक्षया 'अञ्जलिभ्याम्' इत्युक्तम्'** इति का.श्री. ।

**विनतश्च सुषेणश्च वीरः शतवलिस्तथा ।**
**मासान्ते सगणाः प्राप्य प्रोचुः प्राञ्जलयः पतिम्[1] ॥ ५२ ॥**

**(भा.दी.) विनत** इति । विनतश्च सुषेणश्च तथा वीरः शतवलिश्च इत्येते मासस्यान्तोऽवसानं तस्मिन् सगणाः कपिसमूहसहिताः सन्तः पतिं सुग्रीवं प्राप्य प्राञ्जलयः सन्तः प्रोचुः ॥ ५२ ॥

**देशांस्त्वयोक्तानन्यांश्च विचित्यातिप्रयत्नतः[2] ।**
**सीतागतिर्न्न विदिता तिसृष्वाशासु मानद ॥ ५३ ॥**

**(भा.दी.) देशानि**ति । हे मानद, सेवानुसारेण बहुमानकर्तः सुग्रीव, त्वया उक्तान् देशान् अन्यांश्च प्रयत्नतः विचित्य मार्गयित्वा, तिसृषु आशासु दिक्षु सीतायाः गतिः, सीता अत्र गता अत्र तिष्ठतीति प्रवृत्तिः, अस्माभिर्न विदिता ॥ ५३ ॥

**(सं.चं.)** विचित्यातिप्रयत्नतः । 'विचित्यापि प्रयत्नतः' इत्यपि पाठः स्यात् ॥ ५३–४ ॥

**अनूनविक्रमो नूनं हनूमंस्तामवेक्षते ।**
**दयितां देवदेवस्य हयग्रीवस्त्रयीमिव ॥ ५४ ॥**

**(भा.दी.) अनूने**ति । अनूनः पूर्णो विक्रमो यस्य स तथा हनुमान् देवदेवस्य श्रीरामस्य दयितां भार्यां (तां) सीताम्, त्रयीं वेदत्रयं हयग्रीव इव अवेक्षते नूनम् ॥ ५४ ॥

**इत्थमामन्त्रयद्भिस्तैर्म्मन्त्रिभिः सह सूर्य्यजः ।**
**प्रत्यैक्षत हनूमन्तं तितीर्षुरिव तारकम् ॥ ५५ ॥**

**(भा.दी.) इत्थमि**ति । सूर्यजः सुग्रीवः इत्थं आमन्त्रयद्भिरालोचयद्भिर्मन्त्रिभिस्तैर्वानरैः सह हनुमन्तं तारकं नदीतारकपुरुषं तितीर्षुरिव नदीतरणेच्छुरिव प्रत्यैक्षत ॥ ५५ ॥

**(सं.चं.)** नदीं तितीर्षुस्तारकं नाविकमिव । प्रत्यैक्षत तदागमनमेव प्रतीक्षमाणस्तस्थौ ॥ ५५–६ ॥

---

१. **'प्राञ्जलयो विभुम्'**

२. **'विचित्यापि प्रयत्नतः'** इति वि.ती.पाठः स्यात् ।

**हनूमान् हरिभिः सार्द्धं विचिन्वंस्तां सुमद्ध्यमाम् ।**
**चचार विन्ध्ये गहने गुहासु विपिनेषु च ॥ ५६ ॥**

**(भा.दी.)** **हनुमानि**ति । हरिभिः कपिभिः सार्धम्, सु शोभनं मध्यमं मध्यं यस्याः सा तथा तां सीतां विचिन्वन् विचारयन् हनुमान्, गहने विन्ध्यो विन्ध्यगिरिस्तस्मिन्, गुहासु, विपिनानि वनानि तेषु च चचार ॥ ५६ ॥

**महर्षेर्म्मृतपुत्रस्य [१]कण्डोश्चण्डस्य शापतः ।**
**निःसत्वे निस्तरौ देशे विचिक्युर्न्निर्ज्जलेऽथ ते ॥ ५७ ॥**

**(भा.दी.)** **महर्षे**रिति । अथ ते कपयः मृतः पुत्रो यस्य स तथा तस्य, चण्डस्य तपसा क्रूरस्य, कण्डोः कण्डुनामकमुनेः शापेन निर्गतानि सत्वानि प्राणिनो यस्मात् स तथा तस्मिन्, निर्गतास्तरवो यस्मात् स तथा तस्मिन्, निर्गतं जलं यस्मात् स तथा तस्मिन्, देशे विचिक्युः सीतां मार्गयामासुः । कण्डुर्हि तस्मिन् वने द्वादशवार्षिकं स्वपुत्रं[२] मृतं दृष्ट्वा तद्वनं निर्जलोदकसत्वं भूयादिति शप्तवानिति रामायणे प्रसिद्धम् ॥५७॥

**(सं.चं.)** चण्डस्य कोपनस्य नामतः कण्डोः शापतः । 'कण्डुर्नाम महाभागः सत्यवादी तपोधनः । महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः । तस्य तस्मिन् वने पुत्रो बालो द्वादशवार्षिकः । प्रनष्टो जीवितान्ताय क्रुद्धस्तेन महामुनिः । तेन धर्मात्मना शप्तं कृत्स्नं तत्र महद् वनम् । अशरण्यं दुराधर्षं मृगपक्षिविवर्जितम्' (४८.१२–५) इति च ॥ ५७ ॥

**गिरिगह्वरमाप्यान्यद् ददृशुः कञ्चनासुरम् ।**
**मारीचपुत्रमत्रस्तं रावणं तं शशङ्किरे ॥ ५८ ॥**

**(भा.दी.)** गिरीति । ते अन्यं गिरेर्गह्वरं गह्वरप्रदेशस्तत्, लतागुल्मादिना पिहितप्रदेशमित्यर्थः, आप्य कञ्चन असुरं ददृशुः । मरीचेरपत्यं मारीचः काश्यपस्तस्य पुत्रम्,[३] अत्रस्तं अभीतं तमसुरं रावणं शशङ्किरे । शकि शङ्कायाम् ॥ ५८ ॥

---

१. **'–पुत्रस्य चण्डेश्चण्डस्य'** । **'चण्डेः चण्डिनामकस्य । कण्डोरिति कचित् पाठः'** इति का.श्री. । वि.भू.टीकायामपि तथैव पाठः उपलब्धः- **'चण्डस्य चण्डिनामकस्य'** इति । रामायणे तु कण्डुरित्येव पठ्यते । न चण्डिरिति ।

२. सम्प्रति रामायणे त्रेधा पाठं पठन्ति–**'बालः षोडशवार्षिकः'** इति गोविन्दराजादयः । **'बालो द्वादशवार्षिकः'** इति माधवयोगी । **'बालको दशवार्षिकः'** इत्यपरे । **'बालो द्वादशवार्षिकः'** इति वि.ती.सम्मतः पाठः । ३. मारीचो यो मृगरूपो रामेण हतस्तस्य पुत्रमिति युक्तम् ।

**अङ्गदस्तमभिद्रुत्य तिष्ठतिष्ठेति निष्ठुरम्[1] ।**
**मुष्टिघातेन घोरेण जघानामरवैरिणम्[2] ॥ ५९ ॥**

**(भा.दी.) अङ्गद** इति । अङ्गदः निष्ठुरं तं दैत्यं तिष्ठतिष्ठ इति वदन् सन् अभिद्रुत्य घोरेण मुष्टेर्यो घातस्तेन अमरवैरिणं तं जघान ॥ ५९ ॥

**(सं.चं.)** अन्यद् गिरिगह्वरमाप्य गह्वरं कन्दरम् । कश्चनासुरम्– 'सोऽपि मारीचतनयो नष्टाः स्थेत्यब्रवीद् बली । अभ्यधावत सङ्क्रुद्धो मुष्टिमुद्यम्य दक्षिणम् । तमापतन्तं तरसा वालिपुत्रोऽङ्गदस्तदा । रावणोऽयमिति ज्ञात्वा तळेनाभिजघान ह' (४८.१९–२१) इति च ॥ ५८–९ ॥

**सन्नदन्तो रिपौ सन्ने तत्रतत्र विचित्य ते ।**
**सीतामदृष्ट्वा सीदन्तः[3] सालमूलमुपाविशन् ॥ ६० ॥**

**(भा.दी.) समिति** । रिपौ तस्मिन् दैत्ये सन्ने सति मृते सति, सन्नदन्तः ते तत्रतत्र प्रदेशेषु विचित्य विचार्य, तां सीतामदृष्ट्वा विषीदन्तः कार्यगौरवभीताः सन्तः, सालस्य सर्जवृक्षस्य मूलं तस्मिन्नुपाविशन् संस्थिताः । विशतेर्लङ् ॥ ६० ॥

**(सं.चं.)** सम्यगुच्चैर्नदन्तः । सीदन्तः श्रमखिन्नाः । सालमूलं वृक्षमूलम् ॥ ६० ॥

**श्रीमानुवाच हनुमान् तत्रेदं वानरान् प्रति ।**
**अविक्लबोऽक्लीबधीश्च परीक्षार्थं विचक्षणः ॥ ६१ ॥**

**(भा.दी.) श्रीमानि**ति । विक्लबो न भवतीत्यविक्लबः श्रमरहित इत्यर्थः, अक्लीबा धीर्यस्य स तथा, चोऽप्यर्थे, श्रमरहितोऽपीत्यर्थः, श्रीमान् विचक्षणः हनुमान्, वानरान् प्रति परीक्षार्थं मनःपरीक्षार्थं इदं वचः तत्र सालमूले अब्रवीत् ॥ ६१ ॥

**(सं.चं.)** अविक्लबः । अविह्वलोऽसम्भ्रान्तः, अश्रान्तो वा । क्लीबा अकार्यसाधनक्षमा दुर्बला धीर्नास्येत्य-क्लीबधीः । श्रीमान् प्रसन्नमुखः । इतरे कपयः सीता न लब्धेति विषीदत्सु स्वयमयमविषण्णस्तथौ । परीक्षार्थं कपीनामन्तरङ्गपरीक्षार्थम् ॥ ६१–२ ॥

---

१. **'निष्ठितम्'** २. **'जघान सुरवैरिणम्'** ३. **'तामदृष्ट्वा विषीदन्तः'** इति वि.ती.पाठः ।

**सुचिरं विचिता देवी न दृष्टा किं नु कुर्म्महे ।**
**इत्याकर्ण्याङ्गदः प्रोचे सर्वानाभाष्य वानरान् ॥ ६२ ॥**

**(भा.दी.) सुचिरमि**ति । देवी सीता सुचिरं यथा भवति तथा विचिता विचारिता, अथापि न दृष्टा, किं नु किं वा वयं कुर्महे? अङ्गद इति वचः आकर्ण्य सर्वान् वानरान् आभाष्य सम्बोध्य प्रोचे ॥ ६२ ॥

**कार्य्यत्वाद् रामसेवायाः राजदण्डस्य गौरवात् ।**
**यत्नस्य च फलान्तत्वात् पुनर्द्देवीं विचिन्महे[1] ॥ ६३ ॥**

**(भा.दी.) कार्ये**ति । रामसेवायाः कार्यत्वात् कर्तुमर्हत्वात्, राज्ञः सुग्रीवस्य यो दण्डस्तस्य गौरवं भूयस्त्वं तस्मात्, यत्नः प्रयत्नस्तस्य यत्फलमन्तेऽवसाने यस्य स तथा तस्य भावस्तत्वं तस्मात्, 'अनारम्भो मनुष्याणाम्' इति न्यायादिति भावः । पुनः देवीं विचिन्महे मार्गयामः ॥ ६३ ॥

**(सं.चं.)** कार्यत्वात् कर्तव्यत्वात् । राजदण्डस्य राजशासनस्य गौरवात्, अनुल्लङ्घ्यतयाऽऽदरणीयत्वात् । कार्याकरणे दण्डस्य शिक्षाया गुरुतरत्वादिति वा ॥ ६३ ॥

**अङ्गदेनेति गदिते गन्धमादनपूर्वकाः ।**
**उत्तस्थुः क्षुत्तृडार्त्ताश्च[2] साधुसाध्विति वानराः ॥ ६४ ॥**

**(भा.दी.) अङ्गदे**ति । अङ्गदेन इति वचसि गदिते सति, गन्धमादनः पूर्वो येषां ते तथा वानराः, क्षुच्च तृट् च ताभ्यां आर्ताश्च आर्ता अपि, साधुसाध्विति वचः वदन्तः सन्तः उत्तस्थुः प्रोत्थिताः ॥ ६४ ॥

**(सं.चं.)** क्षुत्तृडार्ता अपि कार्योत्साहेनोत्तस्थुः ॥ ६४ ॥

**विचिच्यिरेऽथ[3] रूप्याद्रौ रामकीर्त्तिशशिप्रभे ।**
**सप्तपर्ण्णैश्च लोध्रैश्च पुष्पितैरतिपाण्डुरे ॥ ६५ ॥**

---

१. **'लोपश्चास्यान्यतरस्यां म्वोः'** (अ.सू.६.४.१०७) इति विकल्पेन उनुप्रत्ययस्योकारस्य मात्रस्य लोपः' इति का.श्री. । तेन विचिनुमहे विचिन्महे इति रूपद्वयं भवतीत्यर्थः । २. **'क्षुत्तृषार्ताश्च'**

३. **'विचिन्विरेऽथ'** इति सर्वत्र ताळपत्रेषु पाठः व्याख्यानेषु च । चिनुधातोर्लिटि रूपद्वयं भवति–**'विचिक्यिरे'** इति, **'विचिच्यिरे'** इति । तेन **'विचिन्विरे'** इति लिपिकृतां प्रमाद एवायम् । बहुलं लिपिकृतः प्रमाद्यन्ति । न महान्तो विदितवेद्याः प्रबन्धारः । एवं वि.ती.टीकायामपि

**(भा.दी.) विचिन्विर**(?) इति । अथ ते वानराः श्रीरामस्य या कीर्तिः सैव शशी तद्वत्प्रभा यस्य स तथा तस्मिन्, सप्तपर्णाः सप्तपर्णाख्यवृक्षास्तैश्च, सञ्जातानि पुष्पाणि एष्विति पुष्पितास्तैः, तारकादित्वादितज्, लोध्रैश्च लोध्रनामकवृक्षविशेषैश्च, अतिपाण्डुरे अतिश्वेते रूप्याद्रौ च, विचिन्विरे(?), निमार्गयामासुः ।।६५।।

**(सं.चं.)** विचिच्यिरेऽथ रूप्याद्रौ । 'विचिन्विरे' इति पाठोऽसङ्गतः । रामकीर्तिवत् शशिवच्च धवळप्रभे । रूप्याद्रिरयं दक्षिणदेशगः कश्चन पर्वतभागः । सप्तपर्णैः– 'ಏಳೆಲೆ ಬಾಳೆ, 'ಹಾಲೆ' इति भाषायाम् । लोध्रः हैमर्तुभवः पुष्पविशेषः । 'ते शारदाभ्रप्रतिमं श्रीमद्रजतपर्वतम् । शृङ्गवन्तं दरीमन्तमाधिरुह्य च वानराः । तत्र लोध्रवनं रम्यं सप्तपर्णवनानि च । व्यचिन्वंस्ते कपिवराः सीतादर्शनकाङ्क्षिणः' (४९.१६–७) इति च ।। ६५–६ ।।

**विन्ध्याटव्यामटन्ति स्म कपयस्ते पुनःपुनः ।**
**समागमार्थं सङ्केतं कृत्वा तत्राथ सत्वराः[१] ।। ६६ ।।**

**(भा.दी.) विन्ध्ये**ति । ते कपयः समागमार्थं सम्मेळनार्थं सङ्केतं चिह्नविशेषस्तं कृत्वा, सत्वराः त्वरया सहिताः सन्तः, विन्ध्याटव्यां (पुनःपुनः)अटन्ति स्म चरन्ति स्म । अट गतौ लट् ।। ६६ ।।

**सम्प्राप्य गिरिदुर्गाणि गह्वराणि महागुहाः ।**
**रामभक्त्या व्यचिन्वंस्ते कपिराजभयादपि ।। ६७ ।।**

**(भा.दी.) समि**ति । ते कपयः गह्वराणि लतागुल्मादिना पिहितत्वेन गम्भीराणि गिरेर्दुर्गाणि दुर्गप्रदेशान्, महागुहाश्च सम्प्राप्य, रामभक्त्या, कपिराजस्य सुग्रीवस्य यद्भयं तस्मादपि, व्यचिन्वन् निमार्गितवन्तः ।।६७।।

**(सं.चं.)** गिरौ यानि दुर्गाणि दुर्गमाः प्रदेशा वनानि च । 'वने दुर्गं दुर्गमे' इति वैजयन्ती । गह्वराणि लतापिहितानि निकुञ्जानि । 'गह्वरस्तु गुहादम्भनिकुञ्जगहनेष्वपि' इति ह्यभिदधति । गहनेषु वरं गह्वरमतिगहनम् ।। ६७–८ ।।

---

लिपिकृत्प्रमादः सम्भाव्यते । यद्यपि का.श्री.टीकायां 'विचिन्विरे' इत्येव प्रतीकमादाय व्याख्यातम् । प्रायो लिपिकृत्प्रमादोऽयम् । तदिदमुत्तरवचनेभ्यः स्फुटम् । तथाहि–**'विभाषा चेः' (अ.सू.७.३.५८) इति कुत्वस्य विकल्पितत्वादभ्यासस्य कुत्वाभावः'** इति । तेनाभ्यासे सति, कुत्वाभावे च सति **'विचिच्यिरे'** इत्येव रूपम्, न **'विचिन्विरे'** इति । तेन **'विचिच्यिरे'** इत्येव साधुः पाठ इत्यवसीयते ।

१. **'कृत्वाकृत्वाऽतिसत्वराः'**, इति **'कृत्वाकृत्वा च सत्वराः'** इति च । **'अथ रूप्याद्रौ अन्वेषणानन्तरं ते कपयः समागमार्थं सङ्केतं यत्र क्वापि गतेनापि अत्रागन्तव्यमिति समयबन्धं कृत्वा विन्ध्याटव्यां विन्ध्यपर्वतसमीपवने सवेगाः सत्वसः सन्तः पुनःपुनः अटन्ति स्म'** इति का.श्री. ।

**सुधार्थमिव दुग्धाब्धिं सुरासुरवराः पुरा ।**
**अक्षोभयन् भूवलयं सीतार्थं वानरेश्वराः ॥ ६८ ॥**

**(भा.दी.) सुधेति** । वानरेश्वराः सीतार्थं भुवो वलयं मण्डलं तत्, सुरासुरवराः सुधार्थं अमृतार्थं पुरा दुग्धाब्धिमिव अक्षोभयन् । क्षुभ सञ्चलने लङ् ॥ ६८ ॥

**शैलानुदहरन् वीरा गण्डशैलानलोठयन्[१] ।**
**वनान्यधून्वन्नपरे गुहाः केचिज्जगाहिरे ॥ ६९ ॥**

**(भा.दी.) शैलेति** । अपरे वीराः शैलान् पर्वतान् उदहरन् उद्दध्रुः । हृञ् हरणे लङ् । केचिद् वीराः गण्डशैलान् पर्वतेभ्यो पतितपाषाणान् अलोठयन् बिभिदुः । लुठ गतौ लङ् । अपरे वीराः वनानि अधून्वन् कम्पयामासुः । धूञ् कम्पने लङ् । केचित् गुहाः जगाहिरे प्रविविशुः । गाहू विलोडने लिट् ॥ ६९ ॥

**(सं.चं.)** केचिद् वीराः उदहरन् अदधत । 'गण्डशैलास्तु पाषाणाः स्थूलाः प्रगळिता गिरेः' इति च । अलोठयन् स्वैरं प्रचिक्षिपुः । लुठ विलोडने । 'ಜಾಲಾಡಿಸು' इति भाषायाम् । अधून्वन् फलानि पुष्पाणि चावचित्य, शाखा विच्छिद्य क्षोभयामासुः । गुहाः जगाहिरे विलोळयामासुः ॥ ६९ ॥

**मत्तान् मतङ्गजान् सिंहान् तरक्षून् राक्षसानपि ।**
**आद्रुत्य[२] रावणोऽसीति[३] जघ्नुः केचन कोपिनः[४] ॥ ७० ॥**

**(भा.दी.) मत्तानिति** । कोप एषामस्तीति कोपिनः केचित् कपयः, मत्तान् मतङ्गजान् गजान्, सिंहान्, तरक्षून्, व्याघ्रान्, राक्षसानपि आद्रुत्य त्वं रावणः असि इति जघ्नुः । हन्तेर्लिट् ॥ ७० ॥

**(सं.चं.)** मतङ्गजान् गजान् । तरक्षून् मृगाजीवान् । 'ಶಿವಂಗಿ, ಕತ್ತೆಕಿರುಬ' इति भाषायाम् । सीताया अदर्शननिमित्तेन नैराश्येन सञ्जातकोपाः ॥ ७०–२ ॥

**कपीन् यूथपरिभ्रष्टानन्विष्यान्विष्य धावतः[५] ।**
**मेघगम्भीरनादेन [६]हनुमानाह्वयत् सुखम् ॥ ७१ ॥**

---

१. '–शैलानलोडयन्' २. 'आवृत्य' ३. 'त्वं रावणोऽसि किमित्युक्त्वा' इति का.श्री. ।
४. 'केचिच्च कोपिनः' इति वि.ती.पाठः स्यात् । ५. '–भ्रष्टानन्वीक्ष्यान्वीक्ष्य धावतः' ६. 'हनूमाना–'

**(भा.दी.) कपीनि**ति । हनुमान् यूथेभ्यः परिभ्रष्टान् अन्विष्यअन्विष्य स्वस्वयूथं विचार्यविचार्य धावतः कपीन् मेघवत् मेघगर्जनवद् गम्भीरो नादो ध्वनिस्तेन सुखं यथा भवति तथा आह्वयत् आह्वानं चक्रे ॥ ७१ ॥

**क्षुत्पिपासापरिश्रान्ताः शुष्ककण्ठाः श्रमातुराः ।**
**पानीयपानं वाञ्छन्तो ददृशुस्ते महागुहाम् ॥ ७२ ॥**

**(भा.दी.) क्षुदि**ति । क्षुच्च, पिपासा पानेच्छा, सा च ताभ्यां परिश्रान्ताः, अत एव शुष्काः कण्ठाः येषां ते, श्रमेण आतुराः अत्यन्तमर्दिताः, पानीयस्य उदकस्य यत्पानं तत् वाञ्छन्तः ते वानराः महागुहां ददृशुः ॥७२॥

**मिश्रैः पद्मपरागेण हंसाद्यैरार्द्रपक्षिभिः ।**
**गुहोत्थितैस्ते कपयो[१] नीरं तत्रानुमेनिरे ॥ ७३ ॥**

**(भा.दी.) मिश्रैरि**ति । ते कपयः पद्मानां परागो रजस्तेन मिश्रैः, आर्द्रा जलाक्ताः पक्षाः एषां सन्तीति तथोक्तास्तैः, गुहाया उत्थितैः, हंस आद्यो येषां ते तथा तैः पक्षिभिः तत्र गुहायां नीरं जलं तत् अनुमेनिरे ऊहितवन्तः । मनु अवबोधने लिट् ॥ ७३ ॥

**(सं.चं.)** पद्मपरागेण कमलरेणुना मिश्रैः, जलार्द्रपक्षोपलक्षितैः । गुहात आगतैः । 'अस्माच्चापि बिलाद्धंसाः क्रौञ्चाश्च सह सारसैः । जलार्द्राश्चक्रवाकाश्च निष्पतन्ति स्म सर्वतः' (५०.१५-६) इति च ॥ ७३ ॥

**अस्त्यधो वारिमान् देशः प्रविशाम पिबाम कम् ।**
**अन्विष्याम च वैदेहीमिति ते प्राविशन् गुहाम् ॥ ७४ ॥**

**(भा.दी.) अस्ती**ति । वारि अस्मिन्नस्तीति वारिमान् देशः, अधः गुहायाः अधरभागे अस्ति, वयं तत्र प्रविशाम, कमुदकं तत् पिबाम । वैदेहीं सीतां अन्विष्याम च निमार्गयाम च । इषु इच्छायां[२] लोट् । इति वदन्तः ते गुहां प्राविशन् । 'अन्विष्यामलवैदेहीम्' इति पाठे अमलवैदेहीं विमृश्य कं पिबाम इति सम्बन्धः ॥ ७४ ॥

**(सं.चं.)** कं जलं पिबाम । तेन समेधितप्राणा अन्विष्याम च वैदेहीम् । प्रथमं तत्रैव ॥ ७४ ॥

१. **'गुहोत्थितैस्ते हरयो नीरम्'**

२. **'इष गतौ'** इति वक्तव्यम् । दिवादिरयम् । **'इषु इच्छायाम्'** इत्यस्य तुदादेः 'अन्विच्छाम' इति रूपम् ।

**अन्योन्यहस्तग्राहेण भ्राम्यन्तो विन्ध्यकन्दरे ।**
**नाविन्दन्[१] निर्ग्गतेर्म्मार्ग्गं तमसा योजनायते ॥ ७५ ॥**

**(भा.दी.) अन्येति** । योजनं आयते विस्तीर्णे, विन्ध्यस्य कन्दरो गुहा तस्मिन्, अन्योन्यं परस्परं यो हस्तस्य ग्राहो ग्रहणं तेन भ्राम्यन्तः इतस्ततः सञ्चरन्तः, तमसा निमित्तेन निर्गतेः निर्गमनस्य यो मार्गस्तं नाविन्दन् न लब्धवन्तः । विदॢ लाभे लङ् ॥ ७५ ॥

**(सं.चं.)** योजनायते विन्ध्यस्य कन्दरे गुहायाम् । तमसा हेतुना निर्गममार्गं नाविन्दन्, नालभन्त ॥ ७५–६ ॥

**निराशा जीवने[२] दीनाः क्षुत्क्षामाः श्रमकर्शिताः ।**
**क्रन्दन्तो रामरामेति ददृशुर्द्देशमद्भुतम् ॥ ७६ ॥**

**(भा.दी.) निरिति** । जीवनं प्राणधारणं तस्मिन् निर्गता आशा येभ्यस्तथा, अत एव दीनाः, क्षुधा क्षामाः, श्रमकर्शिताः, (राम)राम इति क्रन्दन्तः क्रोशन्तः, अद्भुतं देशः प्रदेशस्तं ददृशुः ॥ ७६ ॥

**काञ्चन स्त्रीमवेक्ष्याऽथ काञ्चनश्रीमये वने ।**
**मुदा हनूमान् वचनमुदाहरदविक्लमः[३] ॥ ७७ ॥**

**(भा.दी.) काञ्चनेति** । अथ अविक्लमः श्रमरहितः हनूमान्, काञ्चनस्य श्रीः कान्तिस्तया प्रचुरं काञ्चनश्रीमयं तस्मिन् वने, काञ्चन कामपि स्त्रीं स्त्रियं अवेक्ष्य, मुत् सन्तोषस्तया वचनं वाक्यं तत् उदाहरत् उवाच ॥७७॥

**(सं.चं.)** उदाहरदुवाच । अविक्लमः ग्लानिरहितः । पादयोर्मधुरं यमकम् ॥ ७७–८० ॥

**का त्वं कञ्जपलाशाक्षि[४] तपसा जिततापसा ।**
**कस्येदं काञ्चनमयं सरोवनगुहादिकम्[५] ॥ ७८ ॥**

---

१. **'नाविदन्'** । **'नाविदन् नाजानन् । विद ज्ञाने'** इति का.श्री. ।
२. **'जीविते दीनाः'**
३. **'–हरदविक्लवः'** । **'अविक्लवः अज्ञानरहितः'** इति का.श्री. ।
४. **'–पलाशाक्षी'**
५. **'–वनगृहादिकम्'**

**(भा.दी.) केति** । कञ्जस्य कमलस्य पलाशं पत्रं तद्वदक्षिणी यस्याः, तत्सम्बुद्धिः । तपसा जिताः तापसाः मुनयो यया सा तथोक्ता त्वं का कस्य कुलोत्पन्ना? काञ्चनस्य विकारः काञ्चनमयम्, सरश्च, वनं तच्च, गुहाश्च ता आदयो यस्य तत्तथोक्तं इदं स्थलं कस्य सम्बन्धि? ॥ ७८ ॥

**रामो नाम रमाकान्तः कान्तो दशरथात्मजः ।**
**पितुर्न्नियोगादागच्छत् सभार्य्यः सानुजो वनम् ॥ ७९ ॥**

**(भा.दी.)** स्वस्वरूपमाह– **राम** इत्यादिना । रामो नाम श्रीराम इति प्रसिद्धः, कान्तः मनोहरः, दशरथात्मजः रमाकान्तः श्रीहरिः, पितुः दशरथस्य नियोग आज्ञा तस्मात्, सभार्यः सन्, सानुजः सन्, वनं तत् आगच्छत् ॥ ७९ ॥

**तस्य सुग्रीवमित्रस्य वयं भृत्या वरानने ।**
**[१]नष्टां भार्य्यां विचिन्वाना दैवादेतां[२] गुहां गताः[३] ॥ ८० ॥**

**(भा.दी.) तस्येति** । वरमुत्तममाननं यस्याः सा तथा, तत्सम्बुद्धिः, सुग्रीवस्य मित्रं तस्य, तस्य श्रीरामस्य भृत्याः वयम्, नष्टां अपहृतां भार्यां सीतां विचन्वानाः सन्तः मार्गमाणाः सन्तः, दैवमदृष्टं तस्मात् एतां गुहां श्रिताः ॥ ८० ॥

**मारुतेरिति गां श्रुत्वा[४] योगिनीदमभाषत ।**
**दुहिता मेरुसावर्ण्णेरहं नाम्ना स्वयम्प्रभा ॥ ८१ ॥**

**(भा.दी.) मारुतेरिति** । योगिनी तपस्विनी सा स्त्री मारुतेः हनुमतः इति गां वाचं श्रुत्वा इदं वचः अभाषत । मेरुसावर्णेः मेरुसावर्णिनामकस्य मनोः दुहिता तनया अहं नाम्ना स्वयम्प्रभा ॥ ८१ ॥

**(सं.चं.)** भविष्यतः द्वादशमन्वन्तरस्याधिपतिः मेरुसावर्णिः ॥ ८१–२ ॥

**उवासात्र चिरं पूर्वं निर्म्मायेमां मयो गुहाम् ।**
**अप्सरोवरया साकं हेमया हेमशोभया ॥ ८२ ॥**

१. **'तस्य भार्याम्'** २. **'दैवादेनाम्'**
३. **'गुहां श्रिताः'** इति वि.ती. पाठः स्यात् । ४. **'मारुतेनेरितं श्रुत्वा'**

**(भा.दी.) उवासे**ति । मयः मयनामको दैत्यवर्धकिः इमां गुहां निर्माय अप्सरःसु वरया, हेमशोभया हेमवत् शोभा यस्याः सा तथा तया, हेमया हेमानाम्न्या साकं अत्र गुहायां पूर्वं चिरं यथा भवति तथा उवास ॥ ८२ ॥

**हेमाया हे महाबाहो सखीं मां विद्धि तापसीम् ।**
**आमन्त्रयामि वः श्रान्तान् विश्रामायाऽश्रमागतान्[१] ॥ ८३ ॥**

**(भा.दी.) हेमाया** इति । महान्तौ बाहू यस्य तत्सम्बुद्धिः हे हनुमन्, तापसीं तपस्विनीं मां हेमायाः सखीं विद्धि । विद ज्ञाने लोट् । आश्रमागतान् (श्रान्तान्) वः युष्मान् विश्रामो विश्रमणं तस्मै, आमन्त्रयामि आतिथ्याय निमन्त्रयामि । मत्रि गुप्तभाषणे लट् ॥ ८३ ॥

**(सं.चं.)** आश्रममागताः श्रान्ता इति विश्रमणायाऽमन्त्रयामि ॥ ८३–५ ॥

**इत्युक्त्वा फलमूलैस्तान् बहुलैरमृतोपमैः ।**
**श्रान्तानाप्याययामास तर्प्पयित्वा तपस्विनी ॥ ८४ ॥**

**(भा.दी.) इती**ति । तपस्विनी स्वयम्प्रभा इति उक्त्वा, बहुलैः अमृतस्य उपमा येषां तानि तैः, फलानि च मूलानि च तैः, श्रान्तान् तान् वानरान् तर्पयित्वा आप्ययामास, ग्लानिं परिहृत्य बलादिना अभिवर्धयामास । प्यायी वृद्धौ लिट् ॥ ८४ ॥

**विश्रान्तानथ[२] सन्तुष्टानात्मानमभिनन्दतः[३] ।**
**बिलान्निर्ग्गममार्ग्गाज्ञान् कपीनूचे स्वयम्प्रभा ॥ ८५ ॥**

**(भा.दी.) विश्रान्तानि**ति । अथ स्वयम्प्रभा, विश्रान्तान् विगतश्रमान्, सन्तुष्टान्, आत्मानं च स्वां च अभिनन्दतः प्रशंसतः, बिलं गुहा तस्मात्, निर्गमस्य निर्गमनस्य यो मार्गस्तं न जानन्तीति तथा तान्, कपीन् प्रति ऊचे ॥ ८५ ॥

**विरिञ्चस्य वरादत्र जन्तूनां नोद्गमागमौ ।**
**योगाद् वो गमयिष्यामि निमीलयत लोचने ॥ ८६ ॥**

---

१. **'विश्रामायाऽश्रमं गतान्'** इति, **'विश्रमायाऽश्रमागतान्'** इति च ।

२. **'विश्रमानथ'** । अयमेव वि.ती.सम्मतः पाठोऽपि स्यात् । **'विगतश्रमान्'** इति व्याख्यानस्वारस्यात् ।

३. **'–त्मानं चाभिनन्दतः'** इति वि.ती.पाठः ।

**(भा.दी.) विरिञ्चस्ये**ति । विरिञ्चस्य चतुर्मुखस्य मयाय दत्तो यो वरस्तस्मात् अत्र गुहायां जन्तूनां प्राणिनां उद्गमागमौ गमनागमने न स्तः । तस्मात् वः युष्मान् योगो योगसामर्थ्यं तस्मात् गमयिष्यामि बहिः प्रापयिष्यामि, लोचने निमीलयत निमीलिते कुरुत । मील निमेषणे लोट् ॥ ८६ ॥

**(सं.चं.)** योगात् अणिमादिसिद्धिबलात् ॥ ८६–७ ॥

**तस्या इत्युपदेशेन निमीलितविलोचनाः[३] ।**
**क्षणेनाचक्षताऽत्मानं विन्ध्यपृष्ठे प्लवङ्गमाः ॥ ८७ ॥**

**(भा.दी.) तस्या** इति । तस्याः स्वयम्प्रभायाः इति य उपदेशस्तेन निमीलिते लोचने येषां ते तथोक्ताः, प्लवङ्गमाः क्षणः क्षणकालस्तेन विन्ध्यस्य यत्पृष्ठमुपरिभागः तस्मिन् आत्मानं स्वस्वदेहं अचक्षत दृष्टवन्तः । चक्षिङ् व्यक्तायां वाचि लङ् ॥ ८७ ॥

**हैमन्तिकैः प्रसूनैस्ते हेमन्तमृतुमागतम् ।**
**ज्ञात्वा सर्वे भयं भूयो भेजुः सुग्रीवदण्डतः ॥ ८८ ॥**

**(भा.दी.) हैमन्तिकै**रिति । ते सर्वे वानराः, हेमन्ते भवानि हैमन्तिकानि तैः प्रसूनैः ज्ञापकैः, हेमन्तो हेमन्तर्तुस्तं आगतं ज्ञात्वा, सुग्रीवस्य यो दण्डः शिक्षा तस्मादिति ततः भूयः बहु भयं भेजुः प्रापुः ॥८८॥

**(सं.चं.)** हैमन्तिकैः हेमन्तकालभवैः । रामायणे सम्प्रति 'द्रुमान् वासन्तिकान् दृष्ट्वा बभूवुर्भयशङ्किताः' (५३.४) इति पठ्यते । पुरा मार्गशीर्ष एव वसन्तागम आसीदित्यपि वदन्ति ॥ ८८–९ ॥

**चिन्ताकुले कपिकुले निषेदुषि धरातळे ।**
**अङ्गदो भङ्गदोऽरीणां धीरमेतद् वचोऽब्रवीत् ॥ ८९ ॥**

**(भा.दी.) चिन्ते**ति । चिन्तया कर्तव्यकार्यानिष्पत्तिचिन्तया आकुले व्याकुले, कपीनां कुलं समूहस्तस्मिन्, धरायास्तळं तस्मिन् निषेदुषि निषण्णे सति, अरीणां भङ्गं पराभवं ददातीत्यरिभङ्गदः अङ्गदः धीरं धैर्ययुक्तं यथा भवति तथा एतत् वक्ष्यमाणं वचः अब्रवीत् ॥ ८९ ॥

**कालो गतो नश्वरतां मयमायामये[१] बिले ।**
**सुग्रीवेण तु यः क्लृप्तः[२] कृत्यमत्र विचिन्त्यताम् ॥ ९० ॥**

१. 'नश्वरतामयं मायामये' २. 'यस्तु सुग्रीवसङ्क्लृप्तः'

**(भा.दी.) काल** इति । सुग्रीवेण क्लृप्तः एकमासात् पूर्वमागन्तव्यमित्याज्ञप्तः यः काल स तु मयस्य माया शक्तिस्तया निर्मितं मयमायामयं बिलं तस्मिन् बिले चरतां नः गतः । अत्रैवं सति कृत्यं कर्तुमर्हं कार्यं विचन्त्यतां आलोच्यताम् ॥ ९० ॥

**(सं.चं.)** सुग्रीवेण क्लृप्तः नियतः कालः गतः ॥ ९० ॥

**हनिष्यति हरीन्द्रोऽस्मान् ध्रुवं लङ्घितशासनान् ।**
**राजदण्डवधाच्छ्रेयो वृणे प्रायोपवेशनम् ॥ ९१ ॥**

**(भा.दी.) हनिष्यती**ति । हरीन्द्रः कपीन्द्रः सुग्रीवः, लङ्घितमतिक्रान्तं शासनमाज्ञा यैस्तथा तान् अस्मान् हनिष्यति ध्रुवम् । राज्ञो यो दण्डः शिक्षा तेन यो वधस्तस्मात् श्रेयः श्रेष्ठं प्रायेण अनशनव्रतेन उपवेशनमवस्थानं तत् वृणे वरयामि । वृञ् वरणे लट् ॥ ९१ ॥

**(सं.चं.)** प्रायाय आमरणोपवासाय एकत्रोपवेशनम् ॥ ९१–२ ॥

**युवराजवचः श्रुत्वा सबाष्पेषु हरिष्वथ ।**
**तारस्तारतरं वाक्यं वानरान् प्रत्यभाषत ॥ ९२ ॥**

**(भा.दी.) युवे**ति । अथ युवराजस्य अङ्गदस्य वचः श्रुत्वा हरिषु कपिषु सबाष्पेषु, तारः तारनामा वानरः तारतरं उच्चैस्तरं तत् वाक्यं वानरान् प्रति अभाषत ॥ ९२ ॥

**(सं.चं.)** सबाष्पेषु साश्रुनेत्रेषु । 'बाष्पोऽश्रुण्यम्बुधूमे च' इति च ॥ ९२ ॥

**अग्रजो येन तूग्रेण मारितो रामबन्धुना ।**
**भुज्यते ज्येष्ठपत्नी च स कथं नः क्षमी भवेत् ॥ ९३ ॥**

**(भा.दी.) अग्रज** इति । उग्रेण क्रूरहृदयेन, राम एव बन्धुर्यस्य स तथा तेन, येन सुग्रीवेण अग्रजः वाली मारितः । येन ज्येष्ठस्य वालिनः पत्नी च तारा भुज्यते । सः सुग्रीवः नः अस्माकं क्षमा अस्यास्तीति क्षमी कथं भवेत्? न कथमपीत्यर्थः ॥ ९३ ॥

**(सं.चं.)** रामेण बन्धुभूतेनाऽऽत्तबलः ॥ ९३ ॥

**न यास्यामोऽथ सुग्रीवं न हास्यामश्च नस्तनुम् ।**
**प्रवेक्ष्यामो गुहामेनां प्रयास्यामश्चिरं[1] सुखम् ॥ ९४ ॥**

**(भा.दी.)** **ने**ति । अथ इतोऽनन्तरं सुग्रीवं प्रति न यास्यामः । यातेर्लृट् । (नः) तनुः शरीरं तां च प्रायोपवेशेन न हास्यामः । ओ हाक् त्यागे लृट् । एनां गुहां प्रवेक्ष्यामः । विश प्रवेशने लृट् । चिरं यथा भवति तथा सुखं तत् प्रयास्यामः प्राप्स्यामः ॥ ९४ ॥

**(सं.चं.)** प्रायोपवेशेन न हास्यामश्च नस्तनुम् ॥ ९४ ॥

**वज्रिणाऽपि स्ववज्रेण किञ्चित् किल विदारिता ।**
**गुहेयं नात्र रामस्य विक्रमः सङ्क्रमिष्यति[2] ॥ ९५ ॥**

**(भा.दी.)** अत्रावस्थाने रामाद् भयं च नास्तीत्याह– **वज्रिणे**ति । वज्रमस्यास्तीति वज्री तेन इन्द्रेण स्वस्य यद्वज्रं तेनापि इयं गुहा किञ्चिद् विदारिता किल । नतु सर्वात्मना विदारणे समर्थोऽभूदित्यर्थः । अत्र गुहायां श्रीरामस्य विक्रमः न सङ्क्रमिष्यते । क्रमु पादविक्षेपे लृट् । श्रीरामोऽप्यत्रावस्थानं बाधितुं समर्थः न स्यादित्यर्थः ॥ ९५ ॥

**(सं.चं.)** न सङ्क्रमिष्यति न पादप्रसारणाय प्रभवति । 'सङ्क्रमिष्यते' इति पाठे सर्वस्मादुभयं पदम् ॥ ९५–६ ॥

**[3]वाचमाकर्ण्य तारस्य जाम्बवद्वालिजादिषु ।**
**वदत्सु बाढमित्येव[4] वाचमाचष्ट मारुतिः ॥ ९६ ॥**

**(भा.दी.)** **वाचमि**ति । जाम्बवांश्च, वालिजोऽङ्गदः स च, तौ आदी येषां ते तेषु तारस्य वाचं आकर्ण्य, बाढमित्येव तथाऽस्त्वित्येव, वदत्सु मारुतिर्हनुमान् वाचं आचष्ट प्रोक्तवान् ॥ ९६ ॥

**विदितेयं मया नीतिस्तारेण प्रतिपादिता ।**
**स्वजामेयस्य साम्राज्यं साधयामीति वाञ्छता ॥ ९७ ॥**

१. **'प्रवत्स्यामश्चिरम्' । 'प्रवत्स्यामः वासं करिष्यामः । वस निवासे लृट्'** इति का.श्री. ।

२. **'सङ्क्रमिष्यते'** इति सर्वत्र पठ्यते । कथमात्मनेपदत्वमिति मृग्यम् । **'न सङ्क्रमिष्यति न व्याप्स्यति'** इति का.श्री. ।

३. **'वाक्यमाकर्ण्य'** ४. **'बाढमित्येवम्'**

**(भा.दी.) विदिते**ति । स्वस्य जामेयः स्वस्वसुस्ताराया पुत्रस्तस्य अङ्गदस्य साम्राज्यं सार्वभौमत्वं तत् साध-यामि इति वाञ्छता इच्छता तारेण प्रतिपादिता सम्पादिता इयं नीतिः मया विदिता विज्ञाता ।।९७।।

**(सं.चं.)** स्वजामेयस्य । 'जामेयभागिनेयौ तु स्वस्रीयः' इति । 'जामिः स्वसृकुलस्त्रियोः' इति च ।।९७।।

**असहाये रविसुते सीतां तां द्रष्टुमक्षमे ।**
**खण्डितं रामसख्यं स्यादित्थमाशा विजृम्भते ॥ ९८ ॥**

**(भा.दी.)** तामेव नीतिं दर्शयति– **असहाय** इति । न विद्यते सहायो यस्य स तथा तस्मिन् रविसुते, तां सीतां द्रष्टुमक्षमेऽसमर्थे सति, रामस्य सख्यं सखित्वं तत् खण्डितं च्छिन्नं स्यात्, इत्थं आशा विजृम्भते प्रकाशते । जभि जृभि गात्रविनामे लट् ॥ ९८ ॥

**प्राज्ञम्मन्यानिहाप्राज्ञान् रामकार्य्याभ्युपेक्षिणः ।**
**चतुर्त्थेनाप्युपायेन[१] शिक्षयिष्याम्यहं हरीन् ॥ ९९ ॥**

**(भा.दी.) प्राज्ञमि**ति । इह कपिसमूहे, प्राज्ञम्मन्यानित्येकं पदम्, प्राज्ञा इति मन्यन्त इति प्राज्ञम्मन्यास्तान्, वयं प्राज्ञा इत्यभिमानवत इत्यर्थः, अप्राज्ञानप्रौढान्, श्रीरामस्य यत्कार्यं तस्मिन् अभ्युपेक्षा एषामस्तीति तथा तान्, हरीन् कपीन् चतुर्थेन सामभेददानदण्डानां मध्ये चतुर्थो दण्डाख्यस्तेन उपायेनापि शिक्षयिष्यामि, दण्डेन बाधितान् करिष्यामीत्यर्थः । शिक्ष विद्योपादाने लृट् ॥ ९९ ॥

**(सं.चं.)** प्राज्ञमात्मानं मन्यन्त इति प्राज्ञम्मन्याः । 'आत्ममाने खश् च' (अ.सू.३.२.८३) । चतुर्थेन दण्डाख्येनाप्युपायेन ॥ ९९ ॥

**शतक्रतोः शतगुणाः कुलिशाल्लक्ष्मणेषवः ।**
**आनयेयुस्तिलतुलां बिलं वः शुष्कपर्ण्णवत् ॥ १०० ॥**

**(भा.दी.) शते**ति । शतसङ्ख्याकाः क्रतवो यस्य स तथा तस्य इन्द्रस्य कुलिशं वज्रं तस्मात् शतं गुणा आवृत्तयो येषां ते तथा, शतावृत्तिश्रेष्ठा इत्यर्थः, लक्ष्मणेषवः, बिलं शुष्कपर्णवत् तिलानां तुला साम्यं आनयेयुः ॥ १०० ॥

---

१. **'चतुर्थेनाभ्युपायेन'**

**(सं.चं.)** शतक्रतोः कुलिशाद् वज्रादपि शतगुणाः । 'यां चेमां मन्यसे धात्रीमेतद् बिलमिति श्रुतम् । एतल्लक्ष्मणबाणानामीषत् कार्यं विदारणे । स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा । लक्ष्मणो निशितैर्बाणैर्भिन्द्यात् पत्रपुटं यथा' (५४.१३–२) इति च । तिलतुलामाननेयुः । तिलशश्चूर्णयेयुः ॥ १०० ॥

**[१]यस्य भ्रूभङ्गनियतं त्रैलोक्यं कोसलेशितुः ।**
**तस्यागम्यं किल बिलं बालिशैः किं न[२] कत्थ्यते ॥ १०१ ॥**

**(भा.दी.) यस्ये**ति । त्रैलोक्यं कोसलेशितुः यस्य श्रीरामस्य भ्रुवो भङ्गश्चलनं तेन नियतं नियमितं तस्य श्रीरामस्य बिलं अगम्यं किल? बालिशैः मन्दबुद्धिभिः एतैः किं न कथ्यते? सर्वमप्यसम्भावितं कथ्यत एव । कथ वाक्यप्रबन्धे लट् ॥ १०१ ॥

**(सं.चं.)** रामस्य बिलनिग्रहणे बाणापेक्षाऽपि नास्तीत्याह–यस्येति ॥ १०१–२ ॥

**यया नीत्या पुरा जज्ञे विरोधो रविजेन वः ।**
**साम्प्रतं सम्प्रवृत्ता सा विपदे नैव सम्पदे ॥ १०२ ॥**

**(भा.दी.) यये**ति । यया नीत्या वः युष्माकं रविजेन सुग्रीवेण सह विरोधः पुरा वालिकाले जज्ञे । जनी प्रादुर्भावे लिट् । साम्प्रतमिदानीं सम्प्रवृत्ता सा नीतिः विपदे भवति । सम्पदे सम्पदर्थं नैव न भवत्येव ॥ १०२ ॥

**नन्वङ्गद पितृव्यस्ते धर्म्मात्मा न तवाहितः ।**
**त्वन्मातुर्म्मतमालम्ब्य वर्त्तमानस्तु किम्पुनः ॥ १०३ ॥**

**(भा.दी.)** स्वदयापात्रभूतं युवराजमङ्गदं सान्त्ववचनेनैव वशयति– **नन्वि**ति । हे अङ्गद, धर्मे आत्मा मनो यस्य स तथा, ते पितृव्यः पितृभ्राता सुग्रीवः तव अहितः पूर्वमारभ्य न भवति ननु? त्वन्मातुः तारायाः मतं तत् आलम्ब्य वर्तमानस्तु पुनः तवाहितो न भवतीति किं वक्तव्यम्? ॥ १०३ ॥

---

१. **'नात्र रामस्य विक्रमः सङ्क्रमिष्यति' इत्यस्योत्तरमाह–यस्येति'** इति का.श्री. ।

२. **'किं नु कथ्यते'**

**(सं.चं.)** नन्वङ्गद पितृव्यस्ते । 'धर्मकामः पितृव्यस्ते प्रीतिकामो दृढव्रतः । शुचिः सत्यप्रतिज्ञश्च न त्वां जातु जिघांसति । प्रियकामश्च ते मातुस्तदर्थं चास्य जीवितम् । तस्यापत्यं च नास्त्यन्यत् तस्मादङ्गद गम्यताम्' (५४.२१–२) इति च ॥ १०३ ॥

**वदतीत्थं हनुमति वानरास्ते मुनिव्रताः ।**
**तमन्ववर्त्तन्त यथा नद्योघं नगनिम्नगाः ॥ १०४ ॥**

**(भा.दी.)** **वदती**ति । हनुमति इत्थं वदति सति, ते वानराः मुनेः व्रतं येषां ते तथा, तूष्णीम्भूताः सन्त इत्यर्थः, नगस्य निम्नगा नद्यः, क्षुद्रनद्यः इत्यर्थः, महानद्याः ओघः प्रवाहस्तं यथा तथा तं हनुमन्तं अन्ववर्तन्त अनुसृत्य वर्तनं चक्रुः । वृतु वर्तने लङ् ॥ १०४ ॥

**(सं.चं.)** महानद्योघं क्षुद्रनिम्नगाः ॥ १०४ ॥

**अलङ्घ्यमल्पैरवलोक्य तेऽत्रसन् महार्ण्णवं स्वं च मनोरथार्ण्णवम् ।**
**श्रमापनोदाय समाश्रयन्नमी वेलावनं रामपदं च पावनम् ॥ १०५ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे**
**किष्किन्धाकाण्डे सप्तमः सर्ग्गः ॥**

—०—

**(भा.दी.)** **अलङ्घ्ये**ति । ते वानराः, अल्पाः अल्पबलाः पुरुषाः, तैः अलङ्घ्यं लङ्घितुमशक्यं महान् योऽर्णवो दक्षिणसमुद्रस्तं अवलोक्य, स्वं स्वकीयम्, मनोरथः सीता(मार्गण)लक्षणो यो वाञ्छितार्थः स एवार्णवस्तं च अलङ्घ्यमसाध्यं अवलोक्य आलोच्य, अत्रसन् भीता बभूवुः । त्रसी उद्वेगे लङ् । अमी वानराः श्रमस्यापनोदः परिहारस्तस्मै वेलायां समुद्रतीरे विद्यमानं वनं तत्, पावनं पवित्रं श्रीरामस्य पदं पादः स्वरूपं वा तच्च समाश्रयन् । श्रीरामपादकमलमस्मरन्नित्यर्थः ॥ १०५ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां**
**किष्किन्धाकाण्डे सप्तमः सर्गः ॥**

—०—

**(सं.चं.)** अथ वंशस्थेन्द्रवंशाभ्यामुपजात्योपसंहरति– अलङ्घ्यमल्पैः । अल्पैरल्पसारैः, अल्पैश्च प्रयत्नैः । सीतान्वेषणाख्यं मनोरथार्णवं च । अत्रसन् । 'वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटि-लषः' (अ.सू.३.१.७०) इति विभाषा श्यन् । तेन रूपद्वयम्– त्रस्यति, त्रसति । त्रस्यतु, त्रसतु । अत्रस्यत्, अत्रसत् । त्रस्येत्, त्रसेत् इत्यादि ॥ १०५ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां किष्किन्धाकाण्डे सप्तमसर्गविवरणम् ॥**

—०—

[आदितः श्लोकाः– १७३०+१०५=१८३५]

# अष्टमः सर्ग्गः

**अथ दीर्घं विनिःश्वस्य [१]चिन्तातान्तान्ननोऽङ्गदः ।**
**कुलवृद्धान् कपिवरान् प्रणिपत्येदमब्रवीत् ॥ १ ॥**

**(भा.दी.)** श्रीरामदासाग्रणीरङ्गदः स्वाभिप्रायं निवेदयति– **अथे**ति । अथ वेलावनाश्रयणानन्तरम्, चिन्तया कार्यानिष्पत्तिचिन्तया तान्तं म्लानं आननं यस्य स तथोक्तः अङ्गदः, दीर्घं यथा भवति तथा विनिःश्वस्य कुलवृद्धान् कपिवरान् प्रणिपत्य इदं वचः अब्रवीत् ॥ १ ॥

**(सं.चं.)** बहिर्वृत्तः श्वासो निःश्वासः । विषादपूर्वो निःश्वासो विनिःश्वासः । कुलवृद्धान् तारादीन् ॥ १ ॥

**समयः समतीतो नः सीता नाधिगता क्वचित् ।**
**दुस्तरस्तोयराशिश्च मार्ग्गाः सर्वेऽपि सार्ग्गळाः[२] ॥ २ ॥**

**(भा.दी.) समय** इति । नः समयः सुग्रीवादिष्टः कालः समतीतः, सीता क्वचित् न अधिगता न ज्ञाता, तोयराशिः समुद्रश्च दुस्तरः तर्तुमशक्यः, इतः परं गन्तुं सर्वेऽपि मार्गाः सार्गळाः सबाधाः, इति अब्रवीदिति सम्बन्धः ॥ २ ॥

**(सं.चं.)** सार्गळाः सप्रतिबन्धाः । 'अर्गळं द्वारपटलम्' इति यादवप्रकाशः ॥ २ ॥

**रामदेवप्रसादेन यौवराज्यमभून्मम ।**
**हततातस्य[३] दीनस्य न सुग्रीवानुरागतः ॥ ३ ॥**

**(भा.दी.) रामे**ति । हतः तातः पिता यस्य स तथोक्तस्तस्य, अत एव दीनस्य मम, रामदेवस्य प्रसादस्तेन यौवराज्यं युवराजत्वमभूत् । सुग्रीवस्य मय्यनुरागः स्नेहः तस्मादिति ततः यौवराज्यं नाभूत् ॥ ३ ॥

---

१. 'चिन्ताक्रान्ताननो–' २. 'सार्गलाः' ३. 'मृततातस्य'

**(सं.चं.)** हततातस्य दीनस्य मम ॥ ३–६ ॥

**रामस्याऽनृण्यमप्राप्य किं फलं जीवितेन मे ।**
**सर्वे ममानुमोदध्वं वृद्धाः प्रायोपवेशनम् ॥ ४ ॥**

**(भा.दी.) रामस्ये**ति । श्रीरामस्य आनृण्यं ऋणरहितत्वं तत्, कृतकर्मणः प्रत्युपकारमित्यर्थः, अप्राप्य मे जीवितं जीवनं तेन फलं साध्यं किम्? न किमपीत्यर्थः । सर्वे वृद्धाः कपयः अत्र प्रायेण अनशनेन उपवेशनं तत् मम अनुमोदध्वं अनुमतिं कुरुध्वं । मुद हर्षे लोट् ॥ ४ ॥

**दीनां मे मातरं तारां तां[1] सान्त्वयत सामभिः ।**
**नूनं सा भर्त्तृशोकार्त्ता पुत्रशोके मरिष्यति ॥ ५ ॥**

**(भा.दी.) दीना**मिति । हे वृद्धाः, दीनां मे मातरं तां ताराम्, सामानि सान्त्ववचनानि तैः सान्त्वयत । षान्त्व सामप्रयोगे लोट् । भर्तुः यः शोकस्तेन आर्ता सा तारा, पुत्रमृतिनिमित्तो यः शोकः तस्मिन् सति, मरिष्यति नूनम् ॥ ५ ॥

**उक्त्वेति युवराजं तं कृतप्रायोपवेशनम् ।**
**अवलोक्यारुदन्नुच्चैः कपयः समसङ्कटाः ॥ ६ ॥**

**(भा.दी.) उक्त्वे**ति । इति उक्त्वा, कृतं प्रायोपवेशनं येन स तथा तं युवराजं अङ्गदं अवलोक्य, समं सङ्कटं प्रयासो येषां ते तथा कपयः, उच्चैः सम्यक् अरुदन् । रुदिर् अश्रुविमोचने लुङ् ॥ ६ ॥

**वानरा वार्य्युपस्पृश्य[2] सर्वे प्रायमुपाविशन् ।**
**दक्षिणाग्रेषु दर्भेषु कृत्वा चोत्तरतः शिरः ॥ ७ ॥**

**(भा.दी.) वानरा** इति । ते वानराः वारि उपस्पृश्य, दक्षिणस्यां दिश्यग्राणि येषां ते तथा तेषु दर्भेषु शिरः उत्तरस्यामित्युत्तरतः कृत्वा प्रायोऽनशनव्रतं तम्, 'अनशने पुमान् प्रायः' इत्यमरः, उपाविशन्, विश प्रवेशने लङ् । दक्षिणाभिमुखेषु दर्भेषु पूर्वाभिमुखतया उत्तरतः शिरःकृत्वा उपाविशन्नित्यर्थः ॥ ७ ॥

---

१. **'तारां प्रसान्त्वयत'**
२. **'वार्युपस्पृश्य तेऽथ प्रायमुपा–'** इति वि.ती.पाठः स्यात् ।

**(सं.चं.)** वार्युपस्पृश्य आचम्य । 'स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि' इति यादवप्रकाशः । प्रायमुपाविशन् अशिश्रियन् । उत्तरतः शिरः कृत्वा शयानाः ॥ ७ ॥

**[1]देहान् जिहासूंस्तान् दृष्ट्वा तुतोष पिशिताशनः ।**
**सम्पातिनामा पक्षीन्द्रो दग्धपक्षो बुभुक्षितः ॥ ८ ॥**

**(भा.दी.) देहान्**निति । पिशितं मांसमशनं यस्य स तथोक्तः, दग्धौ पक्षौ यस्य स तथोक्तः, बुभुक्षितः भोक्तुमिच्छावान्, सम्पातिरिति नाम यस्य स तथा पक्षीन्द्रः, देहान् जिहासून् हातुमिच्छावतः तान् वानरान् दृष्ट्वा तुतोष । तुष तुष्टौ लिट् । एतेषां प्राणत्यागानन्तरमेकैकं भोक्ष्यामीति तुष्टोऽभूदित्यर्थः ॥ ८ ॥

**(सं.चं.)** पिशिताशनः मांसाशनः । गृध्रा हि पिशिताशनाः ॥ ८ ॥

**अजामिळोऽप्यजन्मत्वं[2] यन्नामग्रहणाद् ययौ ।**
**ते कथां तस्य देवस्य प्रोचुः संसारहारिणीम् ॥ ९ ॥**

**(भा.दी.) अजे**ति । अजामिळोऽपि यस्य श्रीरामस्य नाम तस्य ग्रहणमुच्चारणं तस्मात्, न विद्यते जन्म यस्य स तथा तस्य भावस्तत्वं तत्, अपुनर्भवरूपमोक्षमित्यर्थः, ययौ, यातेर्लिट् । देवस्य तस्य श्रीरामस्य, संसारं हर्तुं शीलमस्यास्तीति तथा तां कथां ते कपयः प्रोचुः ॥ ९ ॥

**(सं.चं.)** अजामिळोऽपि त्यक्तसर्वधर्माऽपि । यस्य नारायणस्य नामग्रहणात् । तस्य नारायणावतारस्य देवस्य रामस्य ॥ ९ ॥

**त्रिधामा रामनामाऽभूदवन्यां रघुनन्दनः ।**
**अपीपलन्मुनेर्य्यज्ञं सीतां देवीमरीरमत् ॥ १० ॥**

**(भा.दी.) त्रिधामे**ति । त्रीणि धामानि मन्दिराणि यस्य स तथोक्तः श्रीहरिः, रघून् रघुगोत्रभवान् नन्दयतीति तथोक्तः, राम इति नाम यस्य स तथा सन्, अवन्यां भुवि अभूत् । मुनेर्विश्वामित्रस्य यज्ञो यागस्तं अपीपलत् । पा रक्षणे लुङ् । देवीं सीतां अरीरमत् रमयामास । रमु क्रीडायां लुङ् ॥ १० ॥

१. 'दृष्ट्वा देहान् जिहासूंस्तांस्तुतोष'

२. **'अजामिळोऽपि धन्यत्वम्'** इति कचित् । **'यस्य रामाभिन्नस्य हरेः नामग्रहणात् नारायण इति नामोच्चारणात् अजामिळनामको ब्राह्मणोऽपि, अपिशब्देन दोषदुष्टोऽपीति गम्यते, अजन्मत्वं जन्मराहित्यम्, मुक्तत्वमिति यावत्, प्राप'** इति का.श्री. ।

**(सं.चं.)** श्वेतद्वीपमनन्तासनं वैकुण्ठमिति त्रीणि धामानि । 'अमृतं क्षेममभयं त्रिधाम्नोऽधायि मूर्धसु' इति हि भागवते । रघूणां नन्दनस्तनयः सन् मुनेः विश्वामित्रस्य यज्ञं अपीपलत् पालयामास । पा रक्षणे । 'पातेर्णौ लुग् वक्तव्यः' इति णिचि लुगागमः । चुरादेः 'पाल रक्षणे' इत्यस्य वा लुङि रूपम् ॥ १०–१ ॥

**कैकेय्या वाक्यमात्रेण त्यक्तराज्यो वनं ययौ ।**
**चतुर्दशसहस्राणि रक्षांसि प्रभुरक्षिणोत् ॥ ११ ॥**

**(भा.दी.) कैकेय्या** इति । कैकेय्याः केवलं वाक्यं वाक्यमात्रं तेन, त्यक्तं राज्यं येन स तथा सन्, वनं तत् ययौ । प्रभुः श्रीरामः चतुर्दश च तानि सहस्राणि च तानि रक्षांसि अक्षिणोत् जघान । क्षिणु हिंसायां लङ् ॥ ११ ॥

**विजनेऽथ जनस्थाने रागरोगादचूचुरत् ।**
**रत्नमालामिव ध्वाङ्क्षो रावणो रामवल्लभाम् ॥ १२ ॥**

**(भा.दी.) विजन** इति । अथ विजने मनुष्यसम्बन्धरहिते, जनस्थानं दण्डकारण्यं तस्मिन्, रावणः रामस्य वल्लभां प्रियां सीताम्, रत्नमालां ध्वाङ्क्षइव काकइव, राग एव रोगस्तस्मात् कामोपद्रवादित्यर्थः, अचूचुरत् स्तैन्यं कृत्वा नीतवान् । चुर स्तेये लुङ् ॥ १२ ॥

**(सं.चं.)** अस्थानेऽनुरागाख्याद् रोगात् । 'ध्वाङ्क्षः स्याद् वायसे बके' इति च ॥ १२ ॥

**युयोध पक्षिराजस्तं जटायुः कूटयोधिनम् ।**
**रामभक्त्या स तत्याज मूर्त्तिं कीर्त्तिमुपाददे ॥ १३ ॥**

**(भा.दी.) युयोधेति** । पक्षिराजः जटायुः कूटेन कापट्येन योद्धुं शीलमस्यास्तीति तथा तं रावणं रामभक्त्या युयोध । सः जटायुः मूर्तिं देहं तत्याज । कीर्तिं श्रीरामसेवार्थत्वेन देहं त्यक्तवानिति कीर्तिं उपाददे लेभे ॥ १३ ॥

**(सं.चं.)** 'युयोध' इति पठन्ति । 'युयुधे' इति स्वरसम् । अकर्मकश्चायं धातुः । तेन 'तं प्रति युयोध' इत्यध्याहारेण योजनीयम् । कूटयोधिनम्, कपटेन युद्ध्यमानम् । मूर्तिं स्वकळेबरम् ॥ १३–४ ॥

**स हि धन्यतमः पक्षी रामार्थं जीवितं त्यजन् ।**
**अकृतार्था वयं हन्त मन्दभाग्या म्रियामहे ॥ १४ ॥**

**(भा.दी.) स** हीति । रामार्थं रामसेवार्थं जीवितं जीवनं तत् त्यजन् सः पक्षी धन्यतमः अत्यन्तं सुकृती (हि) । मन्दं स्वल्पं भाग्यं येषां ते तथा वयं अकृतः अनिष्पादितः अर्थः श्रीरामप्रयोजनं यैस्ते तथा सन्तः (हन्त) म्रियामहे मरणं प्राप्नुमः । मृङ् प्राणत्यागे लट् ॥ १४ ॥

**सकामा खलु कैकेयी सख्या मन्थरया सह ।**
**हत्वा पतिं शोकतप्तं वालिनं वानरांश्च नः ॥ १५ ॥**

**(भा.दी.) सकामे**ति । कैकेयी सख्या मन्थरया सह, शोकेन श्रीरामवियोगजेन दुःखेन तप्तं पतिं दशरथम्, वालिनम्, वानरान् नः अस्मांश्च हत्वा सकामा खलु अभीष्टसहिता खलु ॥ १५ ॥

**(सं.चं.)** वालिनं वानरांश्च हत्वा । कथं कैकेयी पुनरेतानहन्? अन्ततः सैव हि कारणम् । यदि कैकेयी न रामवनगमनवरमवरीष्यत न रामो वनमगमिष्यत्, न दशरथोऽमरिष्यत्, नतरां वाली, नतमां वानराः ॥१५॥

**अपि सुग्रीवमित्रं नः सौमित्रेरग्रजो विभुः ।**
**सीतान्वेषणसङ्खिन्नान् करुणः[1] संस्मरिष्यति ॥ १६ ॥**

**(भा.दी.) अपी**ति । सुग्रीवस्य मित्रं मित्रभूतः, सौमित्रेः लक्ष्मणस्य अग्रजः, विभुः श्रीरामः, सीतायाः यदन्वेषणं तेन सङ्खिन्नान् नः अस्मान्, करुणः सन् दयाशीलः सन्, संस्मरिष्यति अपि संस्मरिष्यति कच्चित्? स्मृ आध्याने लृट् ॥ १६ ॥

**(सं.चं.)** सुग्रीवमित्रं रामः । अपि संस्मरिष्यति सम्यक् अनुग्रहबुद्ध्या स्मरेद्वा? कर्मकारकस्य शेषत्वेनाविवक्षितत्वान्न षष्ठी । यदाह जयादित्यः–'कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति । मातुः स्मरति । शेष इति किम्? मातरं स्मरति' (अ.सू.२.३.५२) इति ॥ १६ ॥

**इत्थं कथान्तरे श्रुत्वा देहत्यागं जटायुषः ।**
**वृद्धो गृध्रपतिः प्रोचे रुदन् ज्येष्ठो जटायुषः[2] ॥ १७ ॥**

**(भा.दी.) इत्थमि**ति । जटायुषः ज्येष्ठः वृद्धः गृध्रपतिः सम्पातिः इत्थं कथाया यदन्तरं मध्यं तस्मिन् जटायुषः देहस्य त्यागस्तं श्रुत्वा रुदन् सन् प्रोचे ॥ १७ ॥

---

१. **'करुणा अस्यास्तीति करुणः । 'अर्शआदिभ्योऽच्'** (अ.सू.५.२.१२७) इति का.श्री. ।

२. **'ज्येष्ठो जटायुषः'** इत्येव वि.ती.पाठः । का.श्री पाठोऽपि तथैव । क्वचित्–**'ज्येष्ठो गतायुषः'** इति पाठान्तरम् ।

**(सं.चं.)** गतायुषः जटायुषः ज्येष्ठोऽग्रजः ॥ १७–२२ ॥

**मम प्राणसमो भ्राता रावणेन हतः कथम् ।**
**के यूयं केन दुःखेन प्राप्ताः प्रायोपवेशनम् ॥ १८ ॥**

**(भा.दी.) ममे**ति । प्राणैः समः मम भ्राता जटायुः रावणेन कथं हतः? यूयं के कस्य सम्बन्धिनः? केन दुःखं क्लेशस्तेन प्रायोपवेशनं तत् प्राप्ताः ॥ १८ ॥

**सम्पातिनेत्यभिहिताः प्रत्यूचुस्ते प्लवङ्गमाः ।**
**सौम्य दाशरथेर्भार्य्यां राक्षसो रावणोऽहरत् ॥ १९ ॥**

**(भा.दी.) सिमि**ति । सम्पातिना इति अभिहिताः ते प्लवङ्गमाः, हे सौम्य सम्पाते, दाशरथेः दशरथपुत्रस्य श्रीरामस्य भार्यां राक्षसः रावणः अहरत् इति प्रत्यूचुः ॥ १९ ॥

**पश्यंस्तं पथि गच्छन्तं पक्षीन्द्रो राघवप्रियः ।**
**निवारयन् हतस्तेन रामेण किल संस्कृतः ॥ २० ॥**

**(भा.दी.) पश्यन्नि**ति । राघवस्य श्रीरामस्य प्रियः, पथि गच्छन्तं तं रावणं पश्यन्, पक्षीन्द्रः जटायुः, रावणं निवारयन् सन्, तेन रावणेन हतः, श्रीरामेण संस्कृतः किल दहनादिसंस्कारं प्रापितः किल ॥ २० ॥

**रामसुग्रीवयोः सख्यमथाभूद्[१] वालिनो वधात् ।**
**वयं तयोर्न्नियोगेन तां देवीं मृगयामहे ॥ २१ ॥**

**(भा.दी.)** केन हत इत्यस्योत्तरमभिधाय के यूयमित्यस्योत्तरमाह– **रामेत्या**दिना । अथ वालिनो यो वधस्तस्मात् रामसुग्रीवयोः सख्यं सखित्वं तत् अभूत् । वयं तयोः रामसुग्रीवयोः नियोग आज्ञा तेन तां देवीं मृगयामहे । मृग अन्वेषणे लट् ॥ २१ ॥

**समतीतः स समयः सीतां नोपलभामहे ।**
**उत्कटात् सङ्कटात् तस्माद्[२] वयं प्रायमुपास्महे ॥ २२ ॥**

१. 'सख्यमथाऽसीत्' २. 'सङ्कटादस्मात्'

**(भा.दी.)** समिति । सः सुग्रीवाज्ञप्तः समयः समतीतः । सीतां न उपलभामहे न प्राप्नुमः । तस्मात् तन्निमित्तात् उत्कटं भूयिष्ठं तस्मात् सङ्कटात् प्रायोऽनशनव्रतं तं उपास्महे आश्रयामः ॥ २२ ॥

**पक्षिप्रवर कस्मात्ते पक्षयोः सङ्क्षयोऽभवत् ।**
**कच्चिज्जानासि सीतायाः पदवीं तात कुत्रचित् ॥ २३ ॥**

**(भा.दी.) पक्षी**ति । हे पक्षिप्रवर सम्पाते, ते यौ पक्षौ तयोः सङ्क्षयः कस्मात् कारणादभवत्? हे तात, सीतायाः पदवीं मार्गम्, अवस्थितिमिति यावत्, कुत्रचित् देशे जानासि कच्चित्? ॥ २३ ॥

**(सं.चं.)** जानासि कच्चित्? जानासि किम्? 'कच्चित् प्रश्ने कामवादे' इति च ॥ २३ ॥

**वर्ण्णितं तैस्तदाकर्ण्य[१] द्विजः शोकाकुलः शनैः ।**
**[२]कनिष्ठायोदकं दत्वा कपीन्द्रानिदमब्रवीत् ॥ २४ ॥**

**(भा.दी.) वर्णितमि**ति । तैः कपिभिः वर्णितं प्रोक्तं तत् वचः आकर्ण्य शोकाकुलः द्विजः पक्षी सम्पातिः कनिष्ठाय जटायुषे उदकं तत् दत्वा, उदकक्रियां कृत्वेत्यर्थः, कपीन्द्रान् प्रति शनैः इदं वचः अब्रवीत् । ब्रूञ् धातोर्लङ् ॥ २४ ॥

**(सं.चं.)** द्विजः पक्षी सम्पातिः । कनिष्ठायानुजाय जटायुषे । 'समुद्रं नेतुमिच्छामि भवद्भिर्वरुणालयम् । प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः' (५८.३५) इति च ॥ २४ ॥

**अरुणस्य सुतावावां तरुणत्वेऽतिगर्वितौ[३] ।**
**निजं राज्यं[४] पणं कृत्वा पर्य्यैक्षावहि वेगिताम् ॥ २५ ॥**

**(भा.दी.) अरुणे**ति । अरुणस्य अरुणनाम्नः सूर्यसारथेः सुतौ आवाम्, तरुणत्वं युवत्वं तस्मिन् अतिगर्वितौ, वेगविषये अतिगर्ववन्तौ सन्तौ, निजं यद्राज्यं तत् पणो ग्लहस्तम्, 'पणो मूल्ये ग्लहे माने' इति वैजयन्ती, कृत्वा वेगोऽस्यास्तीति वेगी तस्य भावस्तत्ता तां पर्यैक्षावहि परीक्षां अकुर्व ॥ २५ ॥

**(सं.चं.)** अरुणस्य सूर्यसूतस्य ॥ २५ ॥

---

१. **'वर्णितं तैरथाऽकर्ण्य'**
२. **'कनिष्ठस्योदकम्'**
१. **'तरुणत्वेन गर्वितौ'** इति, । **'गर्विणौ'** इति च क्वचित् ।
४. **'निजराज्यं पणम्'** इति, **'निजराज्यपणम्'** इति च क्वचित् ।

**कलिङ्गबलिभुक्क्रौश्चश्येनगृद्ध्रसितच्छदान् ।**
**सर्वानतीत्य नौ माग्गों डयनेनोत्तरोत्तरान्[1] ॥ २६ ॥**

**(भा.दी.) कलिङ्गे**ति । डयनं आकाशगमनं तेन उत्तरोत्तरानुत्तरस्मादुत्तरान्, उपर्युपरि सम्प्लवमानानित्यर्थः, कलिङ्गः धूम्राटः स च, बलिभुक् काकः स च, क्रौश्चश्च, श्यायते आशु गच्छतीति श्येनः स च, मांसं गृध्यति काङ्क्षत इति गृध्रः स च, सितौ च्छदौ पक्षौ यस्य स तथा हंस इत्यर्थः, स च, तान् सर्वान् पक्षिणः अतीत्य नौ आवयोः मार्गः अभवत् ॥ २६ ॥

**(सं.चं.)** कलिङ्गः कलविङ्कजातीयः पक्षिविशेषः । केचित् 'कुलिङ्ग' इति पठन्ति । बलिभुग् वायसः । कलविङ्क इत्यन्ये । क्रौश्चः क्रुङ् बकभेदः । 'ಕೊಂಗ್ರ' इति भाषायाम् । श्येनः 'ಗಿಡುಗ' इति भाषायाम् । गृध्रः 'ಹದ್ದು' इति भाषायाम् । सितच्छदो हंसः । अयं च पक्षिणां गतिभेदेन मार्गभेदेन च क्रमिको निर्देशः । तथाहि रामायणे–'आद्यः पन्थाः कुलिङ्गानां ये चान्ये धान्यजीविनः । द्वितीयो बलिपुष्टानां ये च वृक्षफलाशिनः । भासास्तृतीयं गच्छन्ति क्रौश्चाश्च कुररैः सह । श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम् । बलवीर्योपपन्नानां रूपयौवनशालिनाम् । षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा । वैनतेयाच्च नो जन्म सर्वेषां वानरर्षभाः' (५८.२४–६) इति ॥ २६ ॥

**आवामनुगतौ सूर्य्यमुदयन्तमथोदये ।**
**आ मद्ध्याह्नगतेः शौर्य्यात्[2] ततो मोहो महानभूत् ॥ २७ ॥**

**(भा.दी.) आवामि**ति । अथ उदय उदयपर्वतस्तस्मिन् उदयन्तं सूर्यम्, अह्नो मध्यं मध्याह्नस्तत्पर्यन्ता या गतिस्तस्याः आ पर्यन्तम्, वयं शौर्यं बलं तस्मात् अनुगतौ अनुसृत्य गतौ, ततः महान् मोहः मूर्छा अभूत् ॥ २७ ॥

**(सं.चं.)** उदयाचले उदयन्तं सूर्यमण्डलमनुगतौ शौर्यात् । ई गतौ । अयति । 'उदयति दिननाथो याति याति शीतांशुरस्तम्' इत्यादि च प्रयुञ्जते । यावद् मध्याह्नस्याऽगतिः । ततः सूर्यतापवशादावयोर्मोहो महा-नभूत् ॥ २७ ॥

---

१. **'प्लवनेनोत्तरोत्तरान्'**

२. **'–गते सूर्ये ततो–'** इति, **'–गतेः सौर्यात् ततो–'** इति च। **'ततः मध्याह्नपर्यन्तगमनानन्तरं सौर्यात् सूर्यमण्डलतेजसः सकाशात् महानधिकः मोहो मूर्छाऽभूत्'** इति का.श्री. ।

**भ्राता सन्तप्यमानो मे पक्षाभ्यां रक्षितो मया ।**
**दग्धपक्षोऽपतं पश्चात् क्षीणपुण्यइवाम्बरात् ॥ २८ ॥**

**(भा.दी.)** **भ्रातेति** । सूर्यतेजसा सन्तप्यमानः मे भ्राता जटायुः मया यौ पक्षौ ताभ्यां रक्षितः । यथा सूर्यकिरणसम्बन्धो न स्यात् तथा पक्षाभ्यामाच्छाद्य रक्षित इत्यर्थः । (पश्चात्) अहं च दग्धौ पक्षौ यस्य स तथा सन्, अम्बरमाकाशस्तस्मात्, क्षीणं पुण्यं यस्य स तथा सइव, स्वर्गीवित्यर्थः, अपतम् ॥ २८ ॥

**(सं.चं.)** सन्तप्यमानः मध्याह्नसूर्यस्य प्रखरतेजसा सन्दह्यमानो मे भ्राता मम पक्षाभ्यामाच्छाद्य रक्षितः । तेनाहं दग्धपक्षोऽपतम् । क्षीणपुण्यः स्वर्गात् पतन्निव ॥ २८ ॥

**सप्तमेऽह्नि गतः सञ्ज्ञां कथञ्चिद् देशकालवित् ।**
**अपक्षो मरणाकाङ्क्षी निषिद्धोऽहं महर्षिणा ॥ २९ ॥**

**(भा.दी.)** **सप्तम** इति । सप्तमे अहर्दिनं तस्मिन् कथञ्चित् सञ्ज्ञां गतः, देशश्च कालश्च तौ वेत्तीति तथोक्तः, आपत्काले कर्तव्यकार्यविदित्यर्थः, न विद्येते पक्षौ यस्य स तथोक्तः, अत एव मरणमाकाङ्क्षितुं शीलमस्यास्तीति तथोक्तः अहम्, महान् य ऋषिस्तेन निशाकरनामकेन (निषिद्धः) रुद्धः अस्मि ॥ २९ ॥

**(सं.चं.)** सप्तमेऽह्नि । 'लब्धसञ्ज्ञस्तु षड्रात्रात् विवशो विह्वलन्निव' (६०.५) इति च । देशकालवित्, पुरा किमासीत्, इदानीं क्वास्मि इत्यादि सर्वं विज्ञाय । 'हृष्टपक्षिगणाकीर्णः कन्दरोदरकूटवान् । दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति निश्चितः' (६०.७) इति, 'आसीच्चात्राऽश्रमं पुण्यं सुरैरपि सुपूजितम् । ऋषिर्निशाकरो नाम यस्मिन्ननुग्रतपाऽभवत्' (८) इति च ॥ २९ ॥

**भविष्यति त्वया कृत्यं रामकार्य्यं चिकीर्षताम् ।**
**रामप्रसादात् पक्षी स्या देहो[१] न त्यज्यतामिति ॥ ३० ॥**

**(भा.दी.)** मुनेर्निषेधप्रकारं दर्शयति– **भविष्यतीति** । श्रीरामस्य यत्कार्यं सीतान्वेषणलक्षणं तत् चिकीर्षतां कर्तुमिच्छतां रामदूतानां त्वया कृत्यं कार्यं तत् भविष्यति । त्वं रामस्य यः प्रसादस्तस्मात् पक्षौ अस्य स्त इति पक्षी स्याः । पक्षी स्यादिति पाठे देहः पक्षी स्यादिति योजना । त्वया देहः तस्मान्न त्यजताम् इति निषिद्ध इति सम्बन्धः ॥ ३० ॥

१. 'पक्षी स्याद् देहो–'

**(सं.चं.)** त्वया कर्तव्यं कृत्यं किञ्चिद् भविष्यति । पक्षी जातपक्षः स्याः इति महर्षिणा निषिद्धः । 'एष्यन्ति प्रेषितास्तत्र रामदूताः प्लवङ्गमाः । आख्येया राममहिषी त्वया तेभ्यो विहङ्गम । सर्वथा तु न गन्तव्यमीदृशः क्व गमिष्यसि । देशकालौ प्रतीक्षस्व पक्षौ त्वं प्रतिपत्स्यसे' (६२.११–२२) इति च ॥ ३० ॥

**निशाकरस्य मे सख्युर्म्मुनेर्वाचः[१] स्मरन्नहम् ।**
**निविष्टो गिरिरन्ध्रान्ते रामदूतप्रतीक्षया ॥ ३१ ॥**

**(भा.दी.) निशे**ति । मे सख्युः निशाकरस्य निशाकरनामकस्य मुनेः वाक् वाक्यं तस्याः (स्मरन्) अहं श्रीरामस्य ये दूतास्तेषां प्रतीक्षया दर्शनापेक्षया गिरेर्यद्रन्ध्रं गुहा तस्यान्तो मध्यं तस्मिन्निविष्टः उपविष्टः अस्मि ॥ ३१ ॥

**(सं.चं.)** इति निशाकरस्य मे सख्युः वाचः स्मरन् । 'अधीगर्थदयेशाम्–'(अ.सू.२.३.५२) इति षष्ठी । गिरिरन्ध्रान्ते गिरिगुहाप्रान्ते ॥ ३१ ॥

**हन्त राजा दशरथः सखा मे प्राणसम्मितः ।**
**ममापि पुत्रास्तत्पुत्राः स्नुषा तस्य मम स्नुषा ॥ ३२ ॥**

**(भा.दी.) हन्ते**ति । राजा दशरथः मे प्राणसम्मितः प्राणैः समानः सखा, हन्त हर्षे । तत्पुत्राः श्रीरामादयः ममापि पुत्राः पुत्रसदृशाः, तस्य दशरथस्य स्नुषा पुत्रभार्या सीता मम स्नुषा स्नुषासदृशी ॥ ३२ ॥

**(सं.चं.)** प्राणसम्मितः प्राणतुल्यः । तत्पुत्राः ममापि पुत्राः । तस्य स्नुषा ममापि स्नुषा ॥ ३२–३ ॥

**मम स्नुषाहरं चोरं मम भ्रातृनिसूदनम्[२] ।**
**रावणं हन्तुकामोऽपि न समर्त्थोऽस्मि वानराः ॥ ३३ ॥**

**(भा.दी.) ममे**ति । हे वानराः, मम स्नुषां स्नुषासदृशीं सीतां हरतीति तथा तम्, अत एव चोरम्, मम भ्रातरं जटायुषं निसूदितवानिति तथा तम्, रावणं हन्तुं कामो यस्य स तथाऽपि तद्धनने समर्थः नास्मि ॥३३॥

**अपक्षस्यामिषाकाङ्क्षी सुपार्श्वो मम नन्दनः ।**
**राक्षसं प्रैक्षत व्योम्नि हरन्तं रामवल्लभाम् ॥ ३४ ॥**

१. **'–र्वाचं स्मरन्नहम्'**
२. **'भ्रातृनिषूदनम्'** इति पठन्तो भ्रान्ताः ।

**(भा.दी.) अपक्षे**ति । न विद्येते पक्षौ यस्य स तथा तस्य मम भोजनार्थं आमिषं मांसमाकाङ्क्षितुं शीलमस्यास्तीति तथा, मांसमानेतुं गत इत्यर्थः, सुपार्श्वः सुपार्श्वनामकः मम नन्दनः सुतः रामवल्लभां सीतां हरन्तं राक्षसं रावणं व्योम्नि प्रैक्षत, आकाशमार्गेण गच्छन्तं ददर्शेत्यर्थः ॥ ३४ ॥

**(सं.चं.)** अपक्षस्य ममाऽहारार्थमामिषमाहर्तुमाकाङ्क्षन् सुपार्श्वनामा मम सुतः ॥ ३४ ॥

**हा राम राम नाथेति लक्ष्मणेति च सुस्वरम् ।**
**क्रन्दन्तीं सुन्दरीं तां च दृष्ट्वा तापमुपेयिवान् ॥ ३५ ॥**

**(भा.दी.) हे**ति । हा राम राम नाथ इति हा लक्ष्मण इति च सु सम्यक् स्वरो यथा भवति तथा क्रन्दन्तीं (सुन्दरीं) तां सीतां दृष्ट्वा तापः सन्तापस्तं उपेयिवान् प्राप्तवांश्च ॥ ३५ ॥

**(सं.चं.)** तापमुपेयिवान् सुपार्श्वः । प्रतिकर्तुमप्रभवन् ॥ ३५–७ ॥

**रामकार्य्यं मया कार्य्यं मनसा वचसाऽथवा[१] ।**
**तस्माद् वक्ष्याम्यहं वीरा दूरदर्शी स्वभावतः ॥ ३६ ॥**

**(भा.दी.) रामे**ति । हे वीराः वानराः, यस्मात् मया मनसा वचसा अथ कर्मणा, वा शब्दोऽनुक्तसमुच्चये, रामकार्यं तत् कार्यं कर्तुं योग्यम्, तस्मात् स्वभावतः दूरं द्रष्टुं शीलमस्यास्तीति तथा, दूरदर्शनसामर्थ्यवानित्यर्थः, अहं वक्ष्यामि ॥ ३६ ॥

**शतयोजनदूरस्था लङ्केयं लवणाम्भसि ।**
**उद्याने शिंशपामूले[२] तत्राऽस्ते जनकात्मजा ॥ ३७ ॥**

**(भा.दी.) शते**ति । लवणमयं यदम्भस्तस्मिन्, लवणसमुद्र इत्यर्थः, इयं दृश्यमाना लङ्का शतसङ्ख्याकानि योजनानि यस्य तच्छतयोजनं दूरं दूरप्रदेशस्तत्र तिष्ठतीति तथोक्ता, तत्र लङ्कायां यदुद्यानं तस्मिन् शिंशपायाः काळागरुवृक्षस्य यन्मूलं तस्मिन्, जनकात्मजा सीता आस्ते ॥ ३७ ॥

**राक्षसीभिः प्रदत्तानि सुरामांसान्यपास्यति ।**
**वासवेनोपनीतेन साऽमृतान्नेन वर्त्तते ॥ ३८ ॥**

१. 'वचसा तथा'

२. '**शिंशुपामूले**' इति भ्रान्तः पाठः ।

**(भा.दी.) राक्षसी**ति । सा सीता राक्षसीभिः राक्षसस्त्रीभिः प्रदत्तानि सुरामांसानि अपास्यति निराकरोति । असु क्षेपणे लट् । सा वासवेन इन्द्रेण उपनीतेन आनीतेन अमृतात्मकं यदन्नं तेन भोजनं कृत्वा वर्तते । वृतु वर्तने लट् ॥ ३८ ॥

**(सं.चं.)** सुरामांसानि अपास्यति निराकरोति । 'सा च कामैः प्रलोभ्यन्ती भक्ष्यैर्भोज्यैश्च मैथिली । न भोक्ष्यति महाभागा दुःखे मग्ना यशस्विनी' (६२.७) इति च । वासवेनोपनीतेन । 'परमान्नं तु वैदेह्या ज्ञात्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् । तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदं त्विति । अग्रमुद्धृत्य रामाय भूतळे निर्वपिष्यति । यदि जीवति मे भर्ता लक्ष्मणेन सह प्रभुः । देवत्वं गच्छतोर्वाऽपि तयोरन्नमिदं त्विति' (६२.८–१०) इति । केचिदिममध्यायं वृथा प्रक्षिप्तं मन्यन्ते । तन्निरासाय च विशिष्येदं जग्रन्थ ग्रन्थकारः ॥ ३८–४० ॥

**इदं रामाय देवाय देवराय भवेदिदम् ।**
**इत्यग्रभागौ विन्यस्य शेषमश्नाति शोभना ॥ ३९ ॥**

**(भा.दी.) इद**मिति । शोभना सीता, इदं देवाय श्रीरामाय भवेत्, इदं देवराय भर्तुरनुजाय लक्ष्मणाय भवेत्, इति अग्रौ भागौ विन्यस्य, शेषोऽतिरिक्तांशस्तं अश्नाति स्वीकरोति । अश भोजने लट् ॥ ३९ ॥

**रामप्रसादमाहात्म्यमहो पश्यत वानराः ।**
**रामस्य हि कथां[1] श्रुत्वा तनुर्म्मे तरुणीकृता ॥ ४० ॥**

**(भा.दी.) रामे**ति । हे वानराः, श्रीरामस्य यः प्रसादोऽनुग्रहस्तस्य माहात्म्यं तत् पश्यत, अहो आश्चर्यम्, श्रीरामस्य कथां श्रुत्वा मे तनुः शरीरम्, 'तनुः स्त्री त्वचि देहे च'' इति वैजयन्ती, तरुणीकृता नवीकृता हि ॥ ४० ॥

**दग्धौ पक्षाविमौ रूढौ जरा स्वयमजीर्य्यत[2] ।**
**[3]बलवेगावनुद्वेगौ यथा यूनस्तथाऽद्य मे ॥ ४१ ॥**

---

१. 'रामस्य तु कथाम्' २. 'जरा त्वियमजीर्यत'

३. 'यथेच्छकरणशक्तिर्बलम् । दूरगमनसामर्थ्यं वेगः । तौ अनुद्वेगौ उद्वेगरहितौ पूर्णौ बभूवतुः' इति का.श्री. ।

**(भा.दी.) दग्धाविति** । सूर्यतेजसा पूर्वं दग्धौ इमौ पक्षौ रूढौ अङ्कुरितौ, उत्पन्नावित्यर्थः, जरा च स्वयं अजीर्यत विनष्टाऽभूत् । जॄष् वयोहानौ लङ् । मे बलं च वेगश्च तौ, यूनः यथा तथा, न विद्यते उद्वेगः कम्पो ययोस्तौ तथोक्तौ, पूर्ववदनिवार्यावित्यर्थः, (अद्य) अभूताम् ॥ ४१ ॥

**(सं.चं.)** अजीर्यत जीर्णा अक्रियत । अनुद्वेगौ निरातङ्कौ ॥ ४१ ॥

**शतयोजनमत्येतुं[१] यः शक्तो विश्रमं विना ।**
**स सीतां द्रक्ष्यति श्रीमानिति मे दिव्यनिश्चयः[२] ॥ ४२ ॥**

**(भा.दी.) शतेति** । यः वानरः विश्रमः विश्रमणम्, मध्ये क्वचिदवस्थानमित्यर्थः, विना शतानां योजनानां समाहारः शतयोजनं तत्, शतं योजनानि यस्य प्रदेशस्य तमिति वा, अत्येतुं अतिक्रान्तुं शक्तः श्रीमान् स वानरः सीतां द्रक्ष्यति, इति मे दिव्यनिश्चयः, अन्यैरेवं ज्ञातुमशक्यत्वादिति भावः ॥ ४२ ॥

**(सं.चं.)** दिव्यनिश्चयः दिव्यदृष्टिलब्धो निश्चयः ॥ ४२–३ ॥

**[३]महेन्द्रमलयप्रान्तमारुह्य प्लवनं भवेत् ।**
**स्वस्ति वोऽस्तु गमिष्यामि हिमवन्तं ममाऽलयम् ॥ ४३ ॥**

**(भा.दी.) महेन्द्रेति** । महेन्द्रमलययोः महेन्द्रमलयपर्वतयोः यत्प्रान्तं समीपं तत् आरुह्य प्लवनं समुद्र-लङ्घनं तत् भवेत् । वः युष्मभ्यं स्वस्ति मङ्गळं अस्तु । अहं मम आलय आवासस्थानं (तं) हिमवन्तं गमिष्यामि ॥ ४३ ॥

**इत्युक्त्वा तं पतत्रीन्द्रं पतन्तमवलोक्य ते ।**
**राघवाय नमश्चक्रुर्विस्मयोत्फुल्ललोचनाः[४] ॥ ४४ ॥**

**(भा.दी.) इतीति** । ते वानराः इति उक्त्वा (पतन्तं) उत्पतन्तं तं पतत्रीन्द्रं सम्पातिं अवलोक्य विस्मयेन उत्फुल्लानि विकसितानि मानसानि येषां ते तथा सन्तः राघवाय नमश्चक्रुः । कृञ् धातोर्लिट् । श्रीरामकथा-श्रवणमहिम्नाऽस्य पक्षिणः पतत्रोत्पत्यादि जातमहो इति श्रीरामाय नमस्कारं चक्रुरित्यर्थः ॥ ४४ ॥

---

१. **'शतयोजनमभ्येतुम्'** २. **'इति मे निश्चिता मतिः'**
३. **'माहेन्द्र–'** ४. **'–त्फुल्लमानसाः'** इति वि.ती.पाठः।

**(सं.चं.)** उत्फुल्ल इति 'ञि फला विशरण' इत्यतः क्तान्तम् । 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' (अ.सू.८.२.५५) इति निष्ठातकारस्य लकारः । नन्वनुपसर्गादित्युक्तम् । सत्यमुक्तम् । तस्यापवादमाह वार्तिककारः–'उत्फुल्लसम्फुल्लयोरिति वक्तव्यम्' इति ॥ ४४–६ ॥

**कथयन्तोऽथ रामस्य[1] कथामाहात्म्यमद्भुतम् ।**
**दक्षिणाम्भोनिधिं प्रापुर्म्मलयानिलशीतलम् ॥ ४५ ॥**

**(भा.दी.) कथेति** । अथ श्रीरामस्य अद्भुतं कथाया माहात्म्यं महिमा तत् कथयन्तः सन्तः, मलयस्य योऽनिलस्तेन शीतलस्तं दक्षिणाम्भोनिधिं दक्षिणसमुद्रं प्रापुः ॥ ४५ ॥

**अम्भोनिधिं तं गम्भीरं वीक्षमाणान् विषादिनः ।**
**वानरानङ्गदः प्रोचे विषादस्त्यज्यतामिति ॥ ४६ ॥**

**(भा.दी.) अम्भ** इति । गम्भीरमगाधं तं दक्षिणं अम्भोनिधिं वीक्षमाणान्, अत एव कथमयं लङ्घनीय इति विषाद एषामस्तीति विषादिनः, दीनानित्यर्थः, वानरान् प्रति अङ्गदः विषादः भयं त्यज्यतां इति प्रोचे ॥ ४६ ॥

**यस्य या प्लवने शक्तिः स तां वदतु वानरः[2] ।**
**इति जाम्बवताऽऽदिष्टास्ते स्वशक्तिं न्यवेदयन् ॥ ४७ ॥**

**(भा.दी.) यस्येति** । यस्य वानरस्य प्लवनं लङ्घनं तस्मिन् विषये या यावती शक्तिस्तां शक्तिं (सः वानरः) वदतु । इति जाम्बवता आदिष्टाः अभिहिताः ते वानराः स्वशक्तिं न्यवेदयन् विज्ञापयाञ्चक्रुः ॥ ४७ ॥

**(सं.चं.)** इति जाम्बवताऽऽदिष्टाः । 'ब्रुवध्वं यस्य या शक्तिः प्लवने प्लवगर्षभाः' (६४.२२) इत्यङ्गदवचनमिति रामायणे । प्रथममङ्गदेन, ततो जाम्बवता च पृष्टा इत्यविरोधः । 'ततस्तु ते ब्रह्मसुतेन पृष्टा न्यवेदयन्नात्मबलं पृथक्पृथक्' (६.५२) इति हि निर्णये ॥ ४७ ॥

**योजनानि दश प्रोचे गजः प्लवनमात्मनः ।**
**विंशद्गवाक्षस्त्रिंशत्तु गवयो योजनान्यथ[3] ॥ ४८ ॥**

---

१. **'कथामाहात्म्यं कथाश्रवणसामर्थ्यम्'** इति का.श्री. । २. **'सत्यं वदतु वानरः'** इति, **'स तां वदतु वानराः'** इति च ।

३. **'–त्रिंशत्तु शरभो योजनान्यथ'** इति पठन्तः का.श्री. प्रभृतयो भ्रान्ताः ।

**(भा.दी.) योजने**ति । अथ गजः गजनामकः आत्मनः प्लवनं तत् दशयोजनानि प्रोचे । गवाक्षः विंशत् योजनानि प्रोचे । गवयः त्रिंशत् योजनानि प्रोचे । 'विंशत्यादिरानवतेः' इति सूत्राद् विंशत्त्रिंशदादयः सर्वेऽपि स्त्रीलिङ्गाः ॥ ४८ ॥

**(सं.चं.)** विंशत् विंशतिः । विंशदिति च बहुलं प्रतनाः प्रयुञ्जते । 'त्रिंशत्तु शरभः' इति केचित् पठन्ति । प्रामादिकमेतत् । 'त्रिंशत्तु गवयः' इति साधुः पाठः । 'गजो गवाक्षो गवयो वृषभो गन्धमादनः' (६५.२) इति रामायणोक्तः क्रमः । वृषभमेवार्वाचीनाः शरभमाहुः । इयमपि नामभ्रान्तिः ॥ ४८ ॥

**चत्वारिंशच्च वृषभः[१] पञ्चाशद्गन्धमादनः ।**
**मैन्दः षष्टिं सप्ततिं च विविदो वदति स्म तम् ॥ ४९ ॥**

**(भा.दी.) चत्वारिंशदि**ति । ऋषभः चत्वारिंशद् योजनानि प्रोचे । गन्धमादनश्च पञ्चाशत् योजनानि प्रोचे । मैन्दः षष्टिं योजनानि प्रोचे । विविदश्च सप्ततिं योजनानि तं जाम्बवन्तं प्रति वदति स्म अवदत् । मैन्दविविदयोः स्वरूपतः साम्येऽपीन्द्रावेशनिमित्तबलाधिक्यं मैन्दापेक्षया विविदस्येत्यत इयमुक्तिरुपपन्ना । एवमन्यस्यापि स्वरूपत अवरस्य प्लवनाधिक्यं निमित्तान्तरायत्तमिति द्रष्टव्यम् ॥ ४९ ॥

**(सं.चं.)** वदति स्म जाम्बवन्तम् । 'आबभाषे गजस्तत्र प्लवेयं दशयोजनम् । गवाक्षो योजनान्याह गमिष्यामीति विंशतिम् । गवयो वानरस्तत्र वानरांस्तानुवाच ह । त्रिंशतं तु गमिष्यामि योजनानां प्लवङ्गमाः । वृषभस्तानुवाचाथ वानरान् वानरर्षभः । चत्वारिंशद् गमिष्यामि योजनानां प्लवङ्गमाः । वानरांस्तु महातेजा अब्रवीद् गन्धमादनः । योजनानां गमिष्यामि पञ्चाशत्तु न संशयः । मैन्दस्तु वानरस्तत्र वानरांस्तानुवाच ह । योजनानां परं षष्टिमहं प्लवितुमुत्सहे । ततस्तत्र महातेजा विविदः प्रत्यभाषत । गमिष्यामि न सन्देहः सप्ततिं योजनान्यहम्' (६५.३–८) इति च ॥ ४९ ॥

**सुषेणसूनुश्चाशीतिं जाम्बवान् स्वयमब्रवीत्[२] ।**
**वृद्धं हसेयुस्तरुणा मां तथाऽपि ब्रवीम्यहम् ॥ ५० ॥**

**(भा.दी.) सुषेणे**ति । सुषेणसूनुः तारः अशीतिं योजनानि अब्रवीत् । स्वयं जाम्बवांश्च तरुणाः युवानः वृद्धं मां हसेयुः, वृद्धोऽयं किं वा लङ्घनं करिष्यतीति हासं कुर्युः, हसे हसने लिङ् । तथाऽपि अहं ब्रवीमि । इत्यब्रवीदिति सम्बन्धः ॥ ५० ॥

१. '–रिंशच्च ऋषभः' २. 'स्वयमभ्यधात्'

**(सं.चं.)** सुषेणसूनुश्चाशीतिम्। सुषेणसूनुस्तारः। ननु रामायणेऽन्यथा पठ्यते–'सुषेणस्तु हरिश्रेष्ठः प्रोक्तवान् कपिसत्तमम्। अशीतिं योजनानां तु प्लवेयं प्लवगेश्वराः' (६५.९) इति। तेन सुषेणोऽशीतिमाहेति वक्तव्यम्। तत् कथं सुषेणसूनुरिति। अयि रामायणपाठमुग्ध, शृणु तावद् वास्तवम्। सुग्रीवेण सुषेणः किल पश्चिमां दिशं प्रति प्रेषितः। स कथं सपदि पश्चिमां दिशं विहायात्राऽगच्छेत्। किं वाल्मीकिरपि स्वयं विसस्मार पूर्वोक्तम्। न हि महान्तो पूर्वोक्तं विस्मरन्ति; स्वव्याहतं वा भाषन्ते। तेन 'सुषेणस्तु हरिश्रेष्ठः' इत्यपपाठः। पूर्वोत्तरपाठक्लृप्तिविधुराणां किमपि चापलमेतत्। तर्हि कः शुद्धपाठः स्यात्? 'सुषेणजः कपिश्रेष्ठः' इति स्यात्। 'सुषेणतनयस्तारः' इति वा स्यात्। अत आह पण्डिताचार्यः–'सुषेणसूनुः' इतीति सर्वं सुन्दरम् ॥ ५० ॥

**त्रिविक्रमस्य क्रमणे कुर्वतो नन्दिघोषणम्[1] ।**
**त्रैलोक्ये भ्राम्यतो[2] मेऽभूज्जानु मेरुनिपीडितम् ॥ ५१ ॥**

**(भा.दी.)** **त्रिवी**ति। त्रिषु लोकेषु विक्रमाः पादविन्यासाः यस्य स तथा तस्य विष्णोः क्रमणं पादविन्यासस्तस्मिन् सति, नन्दिघोषणं तूर्यरावस्तत् कुर्वतः, बलेः त्रैलोक्यं त्रिविक्रमो जहारेत्युच्चैरुक्त्वोक्त्वा तूर्यघोषं कुर्वत इत्यर्थः, तदर्थं त्रयश्च ते लोकाश्च त्रिलोकास्त एव त्रैलोक्यं तस्मिन् भ्राम्यतः सञ्चारं कुर्वतः मे जानु मेरुणा निपीडितं अभूत् ॥ ५१ ॥

**(सं.चं.)** त्रिविक्रमस्य ब्रह्माण्डक्रमणे। नन्दिघोषम्, बलिविजयनिमित्तमानन्दवार्ताघोषणम्। तदर्थं त्रैलोक्ये भ्राम्यतः। जानु मेरुशिखरेण घट्टितं सत् पीडितं सवेदनमास। भगवत्पादेन स्फुटमुदितं रामायणे सूचितमेतत्– 'मया महाबलेश्चैव यज्ञे विष्णुः सनातनः। प्रदक्षिणीकृतः पूर्वं क्रममाणस्त्रिविक्रमः' (६५.१५) इति, 'त्रिविक्रमे मया तात सशैलवनकानना। त्रिःसप्तकृत्वः पृथिवी परिक्रान्ता प्रदक्षिणम्' (६६.३२) इति च ॥ ५१–२ ॥

**नवतिप्लव एवाहं ततः षण्णवतिप्लवः[3] ।**
**पुरस्तादित्यभिहिते ब्रह्मजेनाङ्गदोऽब्रवीत् ॥ ५२ ॥**

---

१. **'–घोषणाम्'** २. **'भ्रमतो–'**

३. **षण्णवतिः– 'अनाम् नवतिनगरीणामिति वक्तव्यम्'** (वा.८.४.४२) **इति णत्वम्'** इति का.श्री.।

**(भा.दी.) नवे**ति । ततः मेरुताडननिमित्तात् अहं इदानीं नवतिः नवतियोजनानि प्लवः प्लवनं यस्य स तथा चास्मि । पुरस्तात् पूर्वं तु षडधिका नवतिः षण्णवतिः, षण्णवतिः प्लवो यस्य स तथा अस्मि । ब्रह्मणो जातो ब्रह्मजस्तेन जाम्बवता इति अभिहिते सति अङ्गदः अब्रवीत् ॥ ५२ ॥

**योजनानां[१] शतं गन्तुं शक्तिं मे[२] निश्चिनोम्यहम् ।**
**न निश्चिनोमि विक्रम्य प्रत्यागन्तुं प्लवङ्गमाः ॥ ५३ ॥**

**(भा.दी.) योजने**ति । हे प्लवङ्गमाः वानराः, अहं योजनानि तेषां शतं तत् गन्तुं मे शक्तिं निश्चिनोमि । चिञ् चयने लट् । विक्रम्य समुद्रं विलङ्घ्य प्रत्यागन्तुं परावृत्याऽगन्तुं शक्तिं न निश्चिनोमि ॥ ५३ ॥

**(सं.चं.)** योजनानां शतं गन्तुम् । 'अहमेतद् गमिष्यामि योजनानां शतं महत् । निवर्तने तु मे शक्तिः स्यान्न वेति न निश्चिता' (६५.१९) इति च ॥ ५३ ॥

**इत्युक्ते[३] जाम्बवानूचे[४] गन्तव्यं न तु संशये ।**
**वत्स नः पालनीयेन किम्पुनर्भवता त्विति[५] ॥ ५४ ॥**

**(भा.दी.) इती**ति । इति अङ्गदेन उक्ते सति, जाम्बवान् कार्यसाधनसामर्थ्ये यः संशयः तस्मिन् सति येनकेनापि पुरुषेण न गन्तव्यं तु न गन्तव्यमेव । हे वत्स, नः अस्माकं युवराजत्वेन पालनीयेन रक्षणीयेन भवता तु संशये सति न गन्तव्यमिति पुनः किं वक्तव्यं इति ऊचे ॥ ५४ ॥

**(सं.चं.)** गमनशक्तिसंशये केनापि न गन्तव्यम् । किं पुनरस्माकं स्वामिना भवता ॥ ५४ ॥

**अथ वालिसुतोऽवादीत् को नु नः पालयिष्यति[६] ।**
**कस्तरिष्यति सिन्धुं को रामप्रेष्ठो भविष्यति[७] ॥ ५५ ॥**

**(भा.दी.) अथे**ति । अथ वालिसुतः अङ्गदः, नः अस्मान् को नु क एव पालयिष्यति रामकार्यकरणेन प्रायोपेशान्निवर्तनं कृत्वा रक्षिष्यति? पा रक्षणे लृट् । सिन्धुः समुद्रस्तं कः तरिष्यति? तॄ प्लवनतरणयोः लृट् । कः रामप्रेष्ठः श्रीरामस्यातिशयेन प्रियो भवेत्? इति अवादीत् ॥ ५५ ॥

१. **'योजनानि शतम्'** २. **'शक्तिर्मे'** ३. **'इत्युक्तो–'** ४. **जाम्बवान् प्रोचे'**

५. **'पालनीयेन भविता किम्पुनः शुचा'** इति का.श्री. पाठः स्यात् । तथाहि तद्व्याख्यानम्–**'नोऽस्माकं पालनीयेन, रक्षितुं योग्येन, रक्षकेनेति यावत् 'केनचिद् भविता भवितव्यम् । भावे लुट् । शोकेन किं पुनः किं प्रयोजनम्'** इति । पाठश्चास्वरसः । अर्थश्च ।

६. **'पालयेदिति'** ७. **'भवेदिति'** इति वि.ती.पाठः ।

**(सं.चं.)** अस्मात् सङ्कटात् तारयित्वा पालयिष्यति । पाल लक्षणे । तेन को रामस्य प्रियतमो भविष्यति? ॥ ५५ ॥

**प्लवनं कुर्वतोऽपि स्युरन्तरायाः किलान्तरे ।**
**प्राप्तं नोऽकृतकृत्यत्वात्[1] प्रायः प्रायोपवेशनम् ॥ ५६ ॥**

**(भा.दी.) प्लवनमि**ति । प्लवनं लङ्घनं तत् कुर्वतःअन्तरं मार्गमध्यं तस्मिन् अन्तरायाः विघ्नाः स्युः किल । अस्माकं अकृतं सीतादर्शनलक्षणं कृत्यं प्रयोजनं यैस्तथोक्तास्तेषां भावस्तत्वं तस्मात् प्रायः प्रायशः प्रायोऽनशनव्रतं तेन उपवेशनं प्राप्तम् ॥ ५६ ॥

**(सं.चं.)** अतः प्रायः प्रायोपवेशनेन मरणमेव शरणम् ॥ ५६–८ ॥

**इति खिन्नतरं प्रोचे जाम्बवानङ्गदं प्रति ।**
**कश्चिद् विपश्चिद् बलवान् कार्य्यं नः साधयेदिति ॥ ५७ ॥**

**(भा.दी.) इती**ति । जाम्बवान् इति खिन्नतरं अत्यन्तं खिन्नं अङ्गदं प्रति, बलमस्यास्तीति बलवान् कश्चित् विपश्चित् प्राज्ञचूडामणिः नः कार्यं तत् साधयेत् इति प्रोचे ॥ ५७ ॥

**एकान्ते कान्तिमन्तं तं हनूमन्तमवस्थितम् ।**
**आत्मारामं तदा रामप्रेष्ठं प्रोवाच जाम्बवान् ॥ ५८ ॥**

**(भा.दी.) एके**ति । जाम्बवान्, एकान्त एकान्तप्रदेशस्तस्मिन् अवस्थितम्, आत्मनि पूर्णे ब्रह्मणि आ अतिशयेन रमत इति आत्मारामस्तम्, भगवद्विषयगुणकर्मादिध्यानेन परिपूर्णमित्यर्थः, श्रीरामप्रेष्ठं श्रीरामस्यातिशयेन प्रियं कान्तिमन्तं तं हनूमन्तं प्रति तदा प्रोवाच ॥ ५८ ॥

**[2]सर्वशास्त्ररसाभिज्ञ सर्ववीर्य्यरसार्ण्णव ।**
**सर्वसद्गुणसम्पन्न हनूमन्[3] किं न भाषसे ॥ ५९ ॥**

---

१. '–कृत्यत्वात् पुनः प्रायोप–'

२. 'ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् । मूलरामायणं चैव शास्त्रमित्यभिधीयते । यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितमिति प्रमाणोक्तसर्वशास्त्रतात्पर्याभिज्ञ । सर्ववीर्यरसार्णव सर्वविषयकपराक्रमलक्षणोदकस्य समुद्र इव स्थित' इति का.श्री. । ३. 'हनुमन्'

**(भा.दी.) सर्वे**ति । सर्वाणि यानि शास्त्राणि ब्रह्मतर्कमूलरामायणादीनि तेषां रसः सारस्तं अभिजानातीति तथा, तत्सम्बुद्धिः । सर्वे ये वीर्यरसाः सामर्थ्यवरास्तैः अर्णव इव, तत्सम्बुद्धिः । सर्वे ये सन्तः श्रेष्ठा गुणा ज्ञानबलादयस्तैः सद्गुणैर्युक्त हे हनूमन्, किं किमर्थं न भाषसे । भाष व्यक्तायां वाचि लट् ॥ ५९ ॥

**(सं.चं.)** वीर्यं रसस्तोयमिव । तस्यायमर्णव इव ॥ ५९ ॥

**इमानि कपिलक्षाणि भयशोकमहानले ।**
**लोटन्ति[1] चावलोक्य त्वं करुणां न करोषि किम् ॥ ६० ॥**

**(भा.दी.) इमानी**ति । भयं च शोकश्च तावेव महान् योऽनलोऽग्निस्तस्मिन् लोटन्ति इतस्ततः परिभ्रमणं कुर्वन्ति (इमानि) कपिलक्षाणि अवलोक्य च त्वं करुणां किमर्थं न करोषि? ॥ ६० ॥

**(सं.चं.)** लोटन्ति विलुळितानि । लुट विलोडने । कपिलक्षाणि अवलोक्यापि स्वभावतः करुणालुस्त्वं किमिति न करुणां करोषि ॥ ६० ॥

**अञ्जनात्वेन सञ्जाता मञ्जुला पुञ्जिकस्थला[2] ।**
**तस्यां हि भवतो जन्म प्राणात् प्राणिप्रणायकात् ॥ ६१ ॥**

**(भा.दी.) अञ्जने**ति । मञ्जुला मनोहरा पुञ्जिकस्थला पुञ्जिकस्थला नामाप्सराः अञ्जनात्वेन सञ्जाता, तस्यां अञ्जनायां प्राणिनां प्रणायकः प्रेरकस्तस्मात् प्राणात् मुख्यप्राणात् भवतः जन्म उत्पत्तिर्हि ॥ ६१ ॥

**(सं.चं.)** अञ्जनात्वेन सञ्जाता । 'आसीदप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला । अञ्जनेति परिख्याता पत्नी केसरिणो हरेः । विख्याता त्रिषु लोकेषु रूपेणाप्रतिमा भुवि । अभिशापादभूत् तात वानरी कामरूपिणी' (६६.८–९) इति, 'स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः । मारुतस्यौरसः पुत्रस्तेजसा चापि तत्समः' (६६.२९–३०) इति च ॥ ६१ ॥

**भुवेव हैरण्यनिधिं भस्मनेवाग्निमावृतम् ।**
**लोकानुवृत्त्या गूढं त्वां वेदाहं बलदेवताम्[3] ॥ ६२ ॥**

१. 'लोठन्ति' २. 'पुञ्चकस्थली' ३. 'बलदैवतम्'

**(भा.दी.) भुवेति** । भुवा भूम्या आवृतं आच्छादितं हैरण्यो यो निधिः पिहितद्रव्यं तमिव, भस्मनाऽऽवृतं अग्निमिव, लोकस्य जनस्य योऽनुवृत्तिरनुकरणं तया गूढम्, लौकिकपुरुषानुकृतिं दृष्ट्वा लौकिकैः महाबलत्वेनाविदितमित्यर्थः, त्वां अहं बलस्य देवतामभिमानिनं मुख्यप्राणं वेद जानामि ॥ ६२ ॥

**(सं.चं.)** भुवा पिहितं हिरण्यसम्भृतं निधिमिव गूढं त्वाम् ॥ ६२ ॥

**गरुडो नानुगन्तुं त्वां समर्थः किमुतापरे ।**
**तात ते समतां यातुं तात एव प्रभुः स्वयम्[१] ॥ ६३ ॥**

**(भा.दी.) गरुड** इति । गरुडः त्वां अनुगन्तुं समर्थः न, अपरे देवाः अनुगन्तुं समर्था न भवन्तीति किं वक्तव्यम्? हे तात हनुमन्, ते समतां बलादिना साम्यं यातुं प्राप्तुं ते तव तातः पिता मुख्यप्राण एव (स्वयं) प्रभुः समर्थः ॥ ६३ ॥

**(सं.चं.)** गरुडः । तेन गरुडशेषरुद्रेभ्य उत्तमत्वमुक्तं भवति । मुख्यप्राणस्वरूपत्वं च । ते तव तातः प्रधानवायुः ॥ ६३–६ ॥

**उत्तिष्ठ पुरुषश्रेष्ठ[२] ज्ञातीनामथ[३] सम्पदे ।**
**तव त्रिविक्रमस्येव विक्रमावसरोऽधुना ॥ ६४ ॥**

**(भा.दी.) उत्तिष्ठेति** । अथ हे पुरुषश्रेष्ठ हनुमन्, ज्ञातीनां सगोत्राणामस्माकं सम्पत् विभूतिस्तस्यै उत्तिष्ठ । अधुना त्रिविक्रमस्येव तव विक्रमावसरः सम्प्राप्तः ॥ ६४ ॥

**ब्रह्मपुत्रे वदत्येवं वायुपुत्रोऽब्रवीद् वचः[४] ।**
**नन्दयञ्छोकसन्तप्तान् मन्दहासेन्दुना हरीन्[५] ॥ ६५ ॥**

**(भा.दी.) ब्रह्मेति** । ब्रह्मपुत्रे जाम्बवति एवं वदति सति, वायुपुत्रः हनुमान्, शोकसन्तप्तान् हरीन् मन्दहास एवेन्दुस्तेन नन्दयन् सन् (वचः) अब्रवीत् ॥ ६५ ॥

**अत्येतुं योजनशतं ममाऽयासो न विद्यते ।**
**सर्वत्राव्याहतगतेर्गरुडस्येव गोष्पदम् ॥ ६६ ॥**

---

१. 'प्रभुस्तव' २. 'पुरुषश्रेष्ठ सकलजीवोत्तम' इति का.श्री. । ३. 'ज्ञातीनामद्य सम्पदे '
४. 'वायुपुत्रोऽवदद् वचः' ५. '–हासेन्दुना कपीन्'

**(भा.दी.) अती**ति । सर्वत्र अव्याहता अप्रतिहता अप्रतिबद्धा गतिर्यस्य स तथा तस्य मम योजनानां शतं तत् अत्येतुं उल्लङ्घितुं तु गोः पदं तत् अत्येतुं गरुडस्येव आयासः न विद्यते ॥ ६६ ॥

**सहस्रवारं पर्य्यागां मेरुं प्रागेकपाततः[१] ।**
**आभिमुख्येन तीक्ष्णांशोरुदयादस्तमप्यगाम् ॥ ६७ ॥**

**(भा.दी.) सहस्रे**ति । अहं प्राक् पूर्वं एको यः पातस्तस्मादिति ततः, एकप्लवनेनेत्यर्थः, मेरुर्मेरुपर्वतस्तं सहस्रसङ्ख्याकं वारं गुणनं यथा भवति तथा पर्यागां परितः समागतवानभूवम् । प्राक् तीक्ष्णा अंशवो यस्य स तथा सूर्यस्य अभिमुखस्य भाव आभिमुख्यं तेन उदय उदयपर्वतस्तस्मात् अस्त अस्तपर्वतस्तमपि एकपातेन आगाम् ॥ ६७ ॥

**(सं.चं.)** सहस्रवारं पर्यागाम् । 'उत्सहेय हि विस्तीर्णमालिखन्तमिवाम्बरम् । मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः' (६७.११) इति, 'उदयात् प्रस्थितं वाऽपि ज्वलन्तं रश्मिमालिनम् । अनस्तमितमादित्यमभिगन्तुं समुत्सहे' (६७.१५) इति च ॥ ६७–८ ॥

**राघवस्य प्रसादेन लाघवं पौरुषं च मे ।**
**मत्पितुश्च प्रसादेन[२] भवेदेव विशेषतः ॥ ६८ ॥**

**(भा.दी.) राघवे**ति । मे मम लाघवं लघुत्वम्, पौरुषं पराक्रमश्च, राघवस्य यः प्रसादोऽनुग्रहस्तेन, मत्पितु-र्वायोश्च यः प्रसादस्तेन च विशेषतः भवेदेव । यत्कार्यसाधनार्थं यावद् बलं पौरुषादिकमपेक्षितं तावदभिव्यक्तं भवेदेव । 'इच्छाव्यक्तिः प्रायशो मारुतस्य' इत्युक्तेरिति भावः ॥ ६८ ॥

**भवन्तोऽत्रैव तिष्ठन्तु भवन्तो वीतसम्भ्रमाः ।**
**कृतकार्य्य उपेष्यामि कृतका विक्रमा न मे ॥ ६९ ॥**

**(भा.दी.) भवन्त** इति । भवन्तः वीतः अपगतः सम्भ्रम उद्वेगो येषां ते तथा भवन्तः सन्तः अत्रैव तिष्ठन्तु । अहं कृतं कार्यं येन स तथा सन् उपेष्यामि आगमिष्यामि । मे विक्रमाः कृतकाः प्राकृताः वरादिलब्धाः, आभासा इति यावत्, न भवन्ति ॥ ६९ ॥

---

१. **'एकपाततः एकवारपतनेनैव । मध्ये क्वचिदप्यस्थित्वेति यावत्'** इति का.श्री. ।
२. **'–तुश्च प्रभवेन'** (ण)

**(सं.चं.)** वीतसम्भ्रमाः सन्तः। कृतका मे न विक्रमाः, किन्तु औत्पत्तिकाः स्वभावसिद्धाः। पादादि-यमकम् ॥ ६९ ॥

**मम निष्पततो वीर्य्यं न सहेत महीतळम्।**
**पङ्कवत् परिदार्य्येत[१] प्लवेयास्मान्महीधरात् ॥ ७० ॥**

**(भा.दी.) ममे**ति। निष्पततः लङ्कां प्रति पततः मम वीर्यं बलं तत् महीतळं न सहेत। पङ्कवत् कर्दमप्रदेशवत् परिदार्येत विशीर्येत। दॄ विदारणे लिङ्। यस्मात् तस्मात् कारणात् महीधरो महेन्द्रस्तस्मात् प्लवेय प्लवनं कुर्याम्। प्लुङ् गतौ लिङ्॥ ७० ॥

**(सं.चं.)** यदा महीतळं पङ्कवद् परिदार्य सागरेणाप्लुता द्रवेत् तदाऽहं द्रवतोऽस्मान्महीधरात् प्लवेय। 'सागरं क्षोभयिष्यामि दारयिष्यामि मेदिनीम्' (६७.१७) इति ॥ ७०–२ ॥

**हनूमति ब्रुवत्येवं भूषयामासुरुद्धताः।**
**वनमालाङ्गदाद्यैस्तमङ्गदाद्याः प्लवङ्गमाः ॥ ७१ ॥**

**(भा.दी.) हनूमती**ति। हनूमति एवं ब्रुवति सति, उद्धताः सन्तोषातिशयेनाभिवृद्धा अङ्गदाद्याः प्लवङ्गमाः, तं हनुमन्तम्, वनमाला च अङ्गदं च ते आद्ये येषां तानि तैः आभरणैः भूषयामासुः ॥ ७१ ॥

**पालयन् वानरकुलं कालयन् रक्षसां कुलम्।**
**जय वीर जयेत्युच्चैः चुक्रुशुर्वानरेश्वराः ॥ ७२ ॥**

**(भा.दी.) पालयन्नि**ति। हे वीर हनुमन्, वानराणां कुलं समूहस्तत् पालयन् सन्, रक्षसां कुलं समूहस्तत् (कालयन्) संहरन्, जय जय इति उच्चैः वानरेश्वराः अङ्गदाद्याः चुक्रुशुः सिंहनादं चक्रुः ॥ ७२ ॥

**स्मितं हरीणां वदनारविन्दं कुर्वन् हनूमानधिकं चकाशे।**
**माहेन्द्रमारुह्य महीधरेन्द्रं यथोदयं भानुरुदारभानुः ॥ ७३ ॥**

**(भा.दी.) स्मितमि**ति। हनुमान् महीधरेन्द्रं पर्वतश्रेष्ठं माहेन्द्रो माहेन्द्रपर्वतस्तं आरुह्य, हरीणां कपीनां वदनारविन्दं तत्, जात्येकवचनमेतत्, स्मितं विकसितं कुर्वन्, उदारा भानवो यस्य स तथोक्तः भानुः सूर्यः, उदयः उदयपर्वतस्तमारुह्य यथा तथा अधिकं यथा भवति तथा चकाशे अत्यन्तं बभौ ॥ ७३ ॥

१. **'परिदीर्यैतत् प्लवेया–'**। **'अहं पङ्कवत् कर्दममिव एतत् महीतलं परिदीर्य भित्त्वा'** इति का.श्री.।

**(सं.चं.)** इन्द्रोपेन्द्रवज्राभ्यामुपसंहर्तुमुपक्रमते– स्मितम् हरीणाम् । स्मितं मन्दहासोपेतम् । उदयमुदयाचलम् । उदारा महाप्रकाशा भानवः किरणा अस्य । उदयाद्रिमारुह्य भानुररविन्दं स्मितं विकसितं करोति । हनुमान् कपीनां वदनारविन्दं स्मितं मन्दमहासोपेतं चकार ॥ ७३ ॥

**क्रतुमिव हरितुष्टयै विक्रमं कर्त्तुकामः**
**प्लवनमथ करिष्यन्[१] दीक्षणीयामिवेष्टिम् ।**
**रघुकुलतिलकं श्रीकान्तमेकान्तभक्तः**
**समनमदसमानं राममेकाभिरामम् ॥ ७४ ॥**

**इति श्रीनारायणपण्डिताचार्य्यविरचिते रामाङ्के सङ्ग्रहरामायणे किष्किन्धाकाण्डेऽष्टमः सर्ग्गः ॥**

—०—

**(भा.दी.)** **क्रतुमि**ति । अथ हरितुष्टयै क्रतुमिव क्रत्वाख्यप्रधानयज्ञमिव विक्रमः पराक्रमस्तं कर्तुं काम इच्छा यस्य स तथा, (अथ) विक्रमार्थं च दीक्षणीयाख्यां प्रधानक्रत्वङ्गभूतां इष्टिमिव इष्टयाख्ययागविशेषमिव प्लवनं तत् करिष्यन्, एकान्तभक्तः मुख्यभक्तः सः हनुमान्, न विद्यते समानो यस्य स तथा तं असदृशमित्यर्थः, एकतो मुख्यतोऽभिरामं मनोहरम्, रघूणां यत्कुलं तस्मिन् तिलकः श्रेष्ठः (तम्), श्रीकान्तं श्रियो भर्तारं श्रीरामं समनमत् नमश्चकार ॥ ७४ ॥

**इति श्रीविश्वपतितीर्थकृतायां सङ्ग्रहरामायणव्याख्यायां भावार्थदीपिकायां किष्किन्धाकाण्डेऽमष्टमः सर्ग्गः ॥**

—०—

**(सं.चं.)** अन्ते मालिन्योपसंहरति– **क्रतुमिव** । मुख्यक्रतोरादौ क्रत्वारम्भदीक्षारूपा दीक्षणीया नामेष्टिर्भवति । अत्रापि भगवत्प्रीत्यर्थं समुद्रतरणाख्यो विक्रमः क्रतुः । तस्य महेन्द्रादुत्प्लवनं दीक्षणीयेष्टिरिति । तामिष्टिं करिष्यन्, करिष्यमाणस्य कर्मणो निर्विघ्नतायै रामनमनरूपमङ्गलमाचचारेति ॥ ७४ ॥

**इत्याचार्यगोविन्दस्य कृतिषु सङ्ग्रहरामायणटीकायां सङ्ग्रहचन्द्रिकायां किष्किन्धाकाण्डे अष्टमसर्गविवरणम् ॥**

—०—

**॥ इति किष्किन्धाकाण्डं समाप्तम् ॥**

[आदितः श्लोकाः– १८३५+७४=१९०९]

[किष्किन्धाकाण्डे श्लोकः–४९४]

---

१. 'प्लुतिमथ स करिष्यन्'